विज्ञानालोकशून्ये घनतमतमसि स्फीतहिंस्रप्रचारे
दुर्लक्ष्यक्षेममार्गे प्रसरदुरुकलौ मानवे मण्डलेऽस्मिन् ।




श्रेयोमार्गं स्वगोभिः सपदि विशदयन्यः क्षितावाविरासीत्
यद्भासा भाति सर्वं स जयति भगवान्स्वामिनारायणोऽयम् ॥१॥



श्रीस्वामिनारायणो विजयतेतराम् ।

# भूमिका ।

यस्यैश्वर्यैकदेशेन विश्वमाद्यं व्यवस्थितम् ।
भगवान् सहजानन्दो जयताद्धर्मनन्दनः ॥ १ ॥
भवदावानलज्वालामालावलयजं भयम् ।
यदपाङ्गसुधाधारावर्षासेकात्प्रशाम्यति ॥ २ ॥
तस्य श्रीसहजानन्दस्वामिनश्चरितं मया ।
प्राचां निबन्धमालम्ब्य सुसङ्क्षिप्तमनूद्यते ॥ ३ ॥

इह खलु निबन्धमुखे यस्यायमादेशरूपो निबन्धः ( शिक्षापत्रीनाम्ना प्रथितः ) तस्य भगवतः सहजानन्दस्य चरितममानुपमतिपावनं निबोध्यमानं सहृदयाह्लादनाय स्यादित्यावेद्यते सङ्क्षेपतः ।

पुरा खलु द्वापरान्ते भगवति वासुदेवे भारतयुद्धापदेशेन भूभारमवतार्य, प्रतिष्ठाप्य च पृथिव्यां सुदृढं धर्मपदं, प्रदाय चार्जुनव्याजेन गीतामृतं सुमनोभ्यः, कृतावतरणकार्ये यथागतं स्वमेव धाम प्रविष्टे, सपदि च कलौ समुद्भूते, कालक्रमेणानेकवर्षसहस्रातिपातेन लुप्यमाने सदुपदेशालोके, समन्ततः समुपसर्पत्यविद्यान्धकारे, परितः प्रसर्पन्तीष्वसदुपदेशधारासु, रजस्तमोभ्यामापूर्यमाणासु सकलप्राणिदृष्टिषु, प्रणश्यति च मार्गामार्गविवेचनोपकरणे, परितः प्रवृद्धे च कलिगुरुदुर्दिने, उद्वेलतद्विलासेन समुच्छिन्ने सत्पथे, कुमतिकुतर्ककण्टकावृते च निःश्रेयसपथे, यथायथमितस्ततः परिभ्रम्यान्ततो निपत्य विषमविषयमहान्धकूपेषु सीदत्सु बहुषु भवाध्वगेषु पुरुषेषु, व्यपगते च पशुमानुषवैलक्षण्ये, मधुमांसप्राशनैकशेषेषु धर्माभासेषु दयमानमना भगवान्पुरुषोत्तमः सर्वमिमं क्षोभमपनीय धर्ममेव संस्थापयन् सत्यसङ्कल्पः कमपि शुभसङ्कल्पमकरोत्—परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवाम्यात्ममाययेति ।

मानुषं भावमास्थाय धर्मं संरक्षन्नात्मनोऽवतरणसमुचितसुकृतशालिनं पुरुषविशेषमाविर्भावावधिमिन्दोरिवोदयाचलमैक्षत कमपि ब्राह्मणकुले । यमैक्षत स चायं हरिप्रसादशर्मा सामः कौथुमीशाखाध्यायी सर्वर्यारव्यकुलोद्भवः । अयं च धर्मैकनिष्ठया धर्मदेव इत्यपरनाम्ना प्रसिद्धश्च । अस्य च पत्नी प्रेमवतीनाम्नी । इयं च श्रीकृष्णे भक्त्यतिशयेन भक्तिदेवीत्यपरनाम्ना प्रथिता । *तनयश्चैनयो रामप्रतापनामा गुणानामावासोऽद्वितीयोऽभूदलङ्कृतकौमारः ।*

आसीच्च धर्मदेवोऽयमनवरतमनुस्मर्यमाणपरमात्मस्वरूपः अनुदिनमनुष्ठीयमानस्ववर्णाश्रमानुगुणसदाचरणोऽप्रस्खलितो धर्मपथात् अद्वेष्टा सर्वभूतानाम् अद्रष्टा परदोषाणां शत्रूणामपि हितपरः । ये पुनर्गुणिषु साधुषु स्वभावतो बद्धवैरा मानुषयोनिमापन्ना आसुरप्रकृतयः कतिचन पापिनस्तैरसकृत्प्रपीड्यमानः, श्रीकृष्णनिध्यानेऽन्तरायमापतितमसहमानः सपदि स्वावासं छुप्पयाख्यं ग्रामं विहाय वृन्दावनमुपगम्य पत्न्या सह सद्धर्ममनुतिष्ठन् सदा स्वहृदयकमलसन्निहितश्रीकृष्णनिध्यानपरः कालेनाचिरेणास्तान्यभावेन चेतसा तमेव पश्यन् परमानन्दे निमग्नो बभूव । अथैवमवसरेऽक्षरपरव्योमनिलयो भगवान् श्रीकृष्णो यथासङ्कल्पमवतरणाय कृतनिश्चयः प्रादुर्भूयास्य पुरतः । तिरोदधे चास्य हृदयकमलात् । अथापश्यच्चायं हृदयकमले तं समुन्मीलितचक्षुषी । व्यलोकयच्च परमाश्चर्यं परमपुरुषम् । आह च भगवांस्तम्—जानाम्युपद्रवं परैः समुत्थितं

ते। सतां च तथा। विशेषतश्च समुपस्थितां जगति धर्मच्युतिमधर्माभिभवं च। तदहमचिरेणैव युवयोः पुत्रभावमुपगम्य संहृत्य चासुरान् पारमैकान्तिकं धर्मं प्रवर्तयिष्यामीति। एवमभिधाय सपदि तिरोदधे।

अथ मासेषु कतिपयेषु व्यतीतेषु समुपगते च स्वविभूतिभूते कुसुमाकरे प्रधाने सर्वर्तूनाम्, मासे च चैत्रे परमशोभने, आपूर्यमाणे च द्विजराजे कलाभिरमृतमयीभिस्तिथौ नवम्यां परमधार्मिकस्य हरिप्रसादशर्मणो धर्मदारेष्वाविर्बभूव (संवत् १८३७) भगवानखिललोकनायकः परमरवनिलयः परात्परः पुरुषोत्तमः श्रीकृष्णः। व्यराजत च तदानीं नभसि निर्मले सह ताराभिरमृतमयमयूखस्तारापतिः। व्यराजत च ततोऽप्यतिशयेन, सर्वातिशायिन्या रूपसम्पदा सम्पन्नस्यात्मसम्भवस्यालङ्कृतशैशवभावस्यावलोकनेन हर्षोत्फुल्लनयनायाः प्रेमवत्या मुखसुधाकरो धरित्र्याम्। बभूवुश्च दशापि दिशः प्रसन्नाः। दिशि दिशि तत्र तत्र वर्तमानानां स्वावासमात्रपवित्रीकृतधरित्रीकाणां सतां च चेतांसि। सिषेवे च तं देशं प्रशान्तानुकूलः पवनः। परिजनश्च परिमितस्तथाविधः।

अथ हरिप्रसादशर्माऽप्यवगत्यानन्यजनसामान्यमात्मनोऽभ्युदयमभ्युदयमूलं च जगतः समुदयं भगवतः स्वगृहे नन्दनात्मनाऽनवधिकानन्दसागरे निमग्नो बभूव। जानन्नप्येषमयं दैव्या भगवतो माययाऽपहृतस्मृतिः शिशुभावमेव तस्मिन्व्यतानीत्। तथैव जननी च। नैतदाश्चर्यं यद्रूपमात्मनः प्रदर्श्याप्यात्ममायया भगवान्व्यामोहयतीति। ब्रह्मादयोऽपि कदाचिदवबुध्यन्ते कदाचिद्व्यामुह्यन्ति च। अकरोच्चास्य यथाविधि जातकर्माख्यं संस्कारम्। आदृतशैशवस्याप्यस्याप्राकृते दिव्यतेजसि दीप इव शलभा निपत्य बालग्रहाः कतिचन व्यनश्यन्। कतिचन दूरत एव ततो न्यवर्तन्त। कयाऽप्यप्राकृतया लावण्यसम्पदा सकलमनोनयनहरणात् प्रेम्णाऽऽत्मानं पश्यतां सकलपापहरणाच्च हरिरिति, वपुषो वर्णेनैपत्कृष्णेन कृष्ण इति च, पदद्वयमेकीकृत्य गुणनिमित्तयोगपूर्वकं हरिकृष्ण इति नामास्य नामकरणसंस्कारसमये चकार पिता। अनुदिनमेधमानैरखिलमनुजनयनमनोहारिभिरमृतमयैरिवावयवैरतिमानुषीं कामपि कायकान्तिमावहतोऽस्य मानुषेऽप्यतिमानुषचरितस्य कल्याणाय लोकानामवतीर्णस्य, शैशवदिव्यलीलाविलासैरनवधिकानन्ददायिनः पित्रोः, द्वित्रहायनानि व्यतीयुः। अन्तरान्तरा समापतितानासुरोन्मेषानतिभयानकान् नीहारनिचयमिव गभस्तिमानालोकमात्रेणापोह्यात्मन्याहितातिशङ्कासम्भवं भयमपनिनाय पित्रोः।

अथ मानुषलीलया बालकेलिमभिनयन्नयं सवयस्यैः सह जातु सायं ग्रामाद्बहिर्विहर्तुमगात्। बालाश्च तत्र बहुतरुषण्डमण्डिते क्वचिदुपवने क्रीडनपरवशाः पतन्तमपि चरमगिरिनितम्बे न व्यजानन्त प्रशिथिलकरसहस्रं सहस्रकिरणम्। अथ सपदि सकलदिगन्तरालं रजोभिरापूरयन्, उद्वेलमुत्सर्पतस्तोयधेरिव प्रसर्पता सकलवनचरहृदयानि विदारयता महता घोषेण व्यनुनादयन्नभस्तलम्, परितः प्रसृतायतानेकशाखोपशाखासहस्रव्यापृतगगनाभोगान्महाद्रुमानप्यधिकतरमवधूनयन्नुदजृम्भत प्रचण्डतरः पवनः। तमनु घनगर्जितमतिभीषणम्। सकलगिरिगुहान्धकारविदारिण्यश्च विद्युतः। सपदि समपतच्चोपलधारेव वर्षधारा। एवमनुपदमापतितेन वातवर्षवेगेन समुपरुद्धगतयः समुद्भ्रान्तचेतसो बालाः सर्वे एवेतस्ततो धावमानास्तत्तद्वृक्षमूलमशिश्रियन् यथावसरम्। धर्मतनयश्च यदैव वृक्षमूलमास्थितस्ततो न विचचाल पदमात्रमपि। यो हि सकलभयप्रशमनो यतश्च भीतास्तपनपवनप्रमुखाः सर्वे एवामरा धावन्ति सततं तस्य कस्माद्भयम्। उपविवेश च तत्रैव विश्राम्यन्निव शनैः। इतरे च बालाः प्रवर्धमानगृहाभिगमनत्वरा अप्यनुक्षणमभिवर्धमानेन वृष्टिवेगेन समुपरुद्धास्तमसा चापूरितदृष्टयो नाशक्नुवन्पदात्पदं प्रचलितुम्। वर्षपातारवेणापूरितकर्णकुहराश्च मिथः सम्बोध्यमाना अप्युच्चस्वरेण न व्यजानन्त कः कमाह्वयतीति। अथैतस्मिन्नवसरे समुद्गतेन महता नभस्वता सपदि समुत्पाटितः स एष भगवताऽधिष्ठितमूलतलो महीयहो महान् अशनिपातारवदारुणेन विमर्दारवेण विदारयन्वनमृगहृदयानि न्यपतद्भूमौ प्रभग्नानेकविविधविहगपतयनिलयननीडविटपम्। यो नाम क्षणमात्रं विस्तृतच्छत्रभावमापद्यास्याहृतबालकेलेर्द्विजकुलसमाश्रयस्य तत्तदमिलषितसकलफलदस्य प्रेमवतीतनयस्य परिचरणपर इवाभवत्। निपतंश्चायं पादपः परिहरन्निवासोपमर्दं परितो भूप्रदेशे निखातानामिव स्कन्धस्तम्भानामन्तराले गृहाभ्यन्तर

वास्य बालस्य सुखोपवेशनोपयुक्तमवकाशं प्रयच्छन्नेव पपात। परिचरणपरेण ह्येवं भाव्यम्, दापद्यपि स्वामिनो हिताचरणम्। बालश्चायं समाधाविवाचलां स्थितिमापन्नो न विचकम्पे।

अथ भग्नपादपान्तरनिगूढं निगूढमिव हृदगुहायां प्रकटितबालवपुषं परमपुरुषमेनं जिघांसुश्चिरादवकाशं प्रतीक्षमाणोऽयमेवासन्नमनोरथसिद्धिसमय इति गृहीतुमेनं शाखान्तराले करं प्रसारितवान् सहसाऽसुरः कश्चित्। यस्य नाम कालीदत्त इति। यस्यैवास्य माया सकलमिदं वातवर्षादि। प्रसारिते च करे सपदि समुद्गतेन बालस्य चाक्षुषेण तेजःपुञ्जेन कालाहिदष्ट इव व्यसुः पपात। अथ क्रमेणोपरते च वर्षे व्यपगते च बलाहकमण्डले, सर्वे एवेतरे बालाः कथमप्येकीभूय तत्र तत्रान्विष्य प्रियवयस्यं धर्मनन्दनमप्राप्य शोकसंविग्नमानसाः, प्रविश्य ग्रामं भयव्याकुलचेतसः समीपमुपगम्य हरिप्रसादशर्मणो न्यवेदयन्—विजिहीर्षया ग्रामाद्बहिर्निर्गतानां हरिकृष्णसहायानां स्वेषां सायं वनोपान्ते वातवर्षाभ्यामुपस्थितं भयं, क्रमेण तन्निवृत्तिं, सुचिरमन्विष्याप्राप्य प्रियवयस्यं, महता खेदेन प्रत्यावृत्तिं, चात्मनाम्। स च समुपश्रुत्य बालानां वचनं, भयाशङ्किना मनसा सपदि निर्जगामान्वेष्टुमात्मसम्भवं, तत्समयसमुपस्थितेन प्रदीपसहायेन परिवृतो बन्धुमित्रवर्गेण। अपसार्यमाणे च तमसि प्रदीपप्रभाभिः, पथा प्रदर्श्यमानेन बालकैः, प्राविशत्तदेवोपवनम्। क्वचित्प्रभग्ननिपतिताभिः शाखाभिः, क्वचित्समूलमुत्पाट्य पतितैर्महाद्रुमैः, क्वचिन्निर्झरपातैरिवोग्रवेगैर्वर्षापूरैः, क्वचिदापूरवेगेन विदारितैर्भुवोऽन्तर्दुर्गमं तमुपवनोपान्तमवलोकयतो हरिप्रसादशर्मणश्चकम्पे हृदयम्। विविधश्च समुदभूदनिष्टसम्भावनोपष्टम्भस्तर्कः। संसरंश्चामानुषचरितमात्मजस्य पुनरवलम्बितधैर्यस्तत्र तत्रान्वेषणायात्मजस्य प्रायतत। तत्र तत्रान्विष्यान्विष्य तरुमूलात्तरुमूलान्तरमुपसर्पतोऽस्य चक्षुषः पथे व्यपतदपरो महीरुह इव पातितः। अथावहिततया दृष्ट्वा पश्यतो व्यसुरदृश्यताग्रमतिभीषणाकृतिः पुरुषः। अथ सपदि साशङ्कं समाहूय सर्वाननुयायिनः प्रज्वालितैः प्रदीपैर्गिरिशिखरसन्निभस्य महतो निपतितस्य भग्नपादपस्यान्तरेषु समन्ततः पश्यन्नपश्यदात्मनयननन्दनमात्मनन्दनमखिलमुनिजनमनोनयनानन्दनम्। तदानीं चायं बालो निद्रासुखमनुभवन्निव शयान आसीत्। प्रबोधयामास चैनं मृदुमधुरैः सम्बोधनैः पिता। अथ प्रबुध्यन्निव स्वापात् शनैरुन्मील्य नयने व्यपश्यदात्मनो बन्धुवर्गम्, पितरं च हर्षोत्फुल्लनयनम्, वयस्यांश्च तांस्तान्। अथ शाखान्तरालात् शनैःशनैर्बहिर्निःसार्य बालमवलोक्याम्लानगात्रमानन्दनिर्भरः पिता तमपृच्छत्कथमियं विपत्ते कश्चायं व्यसुः पतितः पार्श्वे इति। नाहमेनं जानामि, परमस्तमुपगच्छति भास्वति समुत्पतितेन महता पवनेन पीड्यमानेषु प्राणिषु वर्षोन्मुखे च मेघमण्डले परितो गगनतलं प्रवृद्धे, वयस्येषु चेतस्ततो व्यपगतेषु, इहैव वृक्षमूले क्रीडापरिश्रममपहरन्नुपाविशम्। अयं च महीरुहो वातवेगेन भग्नो निपतन्मम जीविताचकाशं कल्पयन्नेव निपपात। अनेनैव गृहाभ्यन्तरभावमुपगतेन भग्नवृक्षान्तरालेनापसारितवर्षवातादिपीडेन तत्कालसमागतनिद्रापरवशेन मया सुखमिहैवाशायि–अधुना चास्मि भवद्भिरुद्बोधित इति।

अथापगतभयाः सर्वे एव सह हरिकृष्णेन समाजग्मुर्ग्रामं प्रविविशुश्च स्वस्वगृहम्। तदैवास्य महानुभावस्य हरिप्रसादशर्मणो मुहुर्मुहुरेवं समापतता समुत्पातेनासुरेण निपीड्यमानस्य परित्यज्य स्वावासग्राममन्यत्रापजिगमिषा समुदभूत्। व्यचिन्तयच्च समुचितमात्मनः सत्त्ववृत्तेः, अनास्पदमासुरोन्मेषाणाम्, आश्रयं सत्त्वप्रचुराणाम्, अधिष्ठानमात्मदर्शिनाम्, आलयं परमभागवतानाम्, कमप्यावासम्। नातिदूरस्थमयोध्यानगरमध्युषितपूर्वमात्मना, रामकथानुरक्तेन स्वकुलदेवेन पवनतनयेन हनूमता चादृश्यरूपेणानवरतमधिष्ठितं तथाविधमवधार्य सह पुत्राभ्यां पत्न्या च सह प्रतस्थे। प्राप्य चायोध्यां प्राक्तने स्वनिकेतने सुखावासमकरोत्।

बालश्चायं तदानीं पञ्चवर्षीयोऽप्यनुदिनमुषसि सरयूं स्नानार्थमुपगच्छन्तौ पितरावनुगच्छन्यतनिष्ठ इवावधूय निद्रालस्यादि कृत्वा चावगाहनमनुगच्छन्पितरौ प्राप्य गृहं श्रीकृष्णनिध्यानपरो विस्मृताभ्यवहारादिव्यापारः, आहूयमानोऽप्यतद्रुचिः, सम्बोध्यमानोपि सवयोभिरुपेक्षितबालकेलिः, परं मुनिचर्यानिरत इव पित्रोः समधिकां मुदमावदद्युवास श्रीहरिकृष्णः। व्यतीयुश्चास्य कतिचन हायनास्तत्रानुदिनमनुष्ठीयमानपारमैकान्तिकधर्मस्य श्रीकृष्णनिध्यानपरा-

यणस्य धर्मदेवस्य सदारतनयवर्गस्य। अथाष्टमे वयसि यथाविध्युपनीयात्मसम्भवं श्रीहरिकृष्णं स्वयमध्यापयामास वेदांस्तदङ्गानि च नियमेन। ब्रह्मविद्यां च तां गुरोः समधिगतामुपादिशदस्मै प्रशान्तचेतसे। न्यवेदयच्च गुरोः सौराष्ट्रे निवासं प्रसङ्गेन। बालश्चायं पितुरधिगत्य वेदान्साङ्गानात्मविद्योपदेशं चाप्रस्खलितमनुपालयन्सूर्योपस्थानसमिदाधानाग्निपरिचरणादिब्रह्मचर्यव्रतमभिवर्धमानेन ब्रह्मवर्चसेन व्यराजताजिनदण्डमेखलादिभिर्ब्रह्मचर्यलिङ्गैश्च। अस्य चाबाल्यादनुवर्तमानविषयवैतृष्ण्यस्य परिजिहीर्षतोऽपि वेश्मनि वासमात्मैकजीवितयोः पित्रोः शुश्रूषणं परमधर्मतया समाकलयतस्तयोः सेवारसेन सदनमेव तपसो विविक्तं स्थानमिवाभवत्॥

अथ कतिपयेष्वहस्सु व्यतीतेषु स समयः समुपनतः, यः प्रेमवत्या मानुषभावस्य तदाहितवासनायाश्च प्रक्षयेण कल्याणसम्पत्तेः समुचितः। समये च तस्मिन् समापतितेन ज्वरेण पीड्यमानाऽप्यशुष्यता भगवद्भक्तिरसपरिपूर्णेनाशयेनान्तःसन्तापरहिता परमात्मानमनुस्मरन्ती प्रशिथिलैरङ्गैरधिशिश्ये शयनतलम्। आलक्ष्य भगवानवसानसमयं जनन्यास्तदानीमुपदिदेशात्मज्योतिःप्रकाशकं सकलकर्मग्रन्थिविभेदनं विज्ञानम्। अथ तेनोपदेशेन दीपितात्मप्रभायां हृदयगुहायां सर्वसाक्षिणं परमात्मानं पुरतश्चक्षुषोरिव साक्षात्कृत्य तदनुभवजनितेन परमानन्देन विसृज्य मानुषं वपुः, प्रपेदे परममृतघनमपुनरावर्ति किमपि पदम्। पिता चास्य धर्मदेवः कतिपयैरेव मासैः प्रारब्धे प्रक्षीणे परमात्मप्रसादलब्धविज्ञानः परित्यज्य भूतसङ्घातरूपं वर्ष्म तदेव पदमविन्दत यत्तमसः परस्तात्।

अथ परिसमाप्ते पित्रोः शुश्रूषणे और्ध्वदेहिकान्ते, स्वस्यावतरणकृत्यमनुसरन्, तपसि कृतनिश्चयः, बिभ्रच्च दण्डाजिनमेखलादि ब्रह्मचर्यलिङ्गं, सुशोभमानश्च स्कन्धे भ्राजमानेनाद्वितीयेन यज्ञोपवीतेन शुभ्रेण तुलसीमालया च कण्ठावलम्बिन्या पाणिना च दक्षिणेन विधृतजपमालाङ्गुलिना भालेन चालङ्कृतोर्ध्वपुण्ड्रेण, प्रतस्थे पावयंस्तपोवनं दिशमुदीचीं शैलराजेन हिमवता समलङ्कृतां, परित्यक्तगृहः, अविज्ञातो बन्धुभिः, अनुदिनमाराध्यमानबालमुकुन्दशालग्राममात्रसहायः, सकलभुवनसहायो भगवानहर्मुखे। वयसा च तदानीं व्यराजत द्वादशेन। सपदि समुत्तीर्य सरयूमपहृतान्तरायं प्रवाहपथेनैव बाहुतरिभ्यां, यथाकालं यथाविधि तत्र तत्र समाचरन्वर्णाश्रमधर्मान्, क्वचित्कदाचिदुपलब्धेन कन्दमूलफलाद्यन्यतमेन क्वचित्तोयमात्रेण च देहयात्रामापादयन्, कण्टकशर्करादिभूयिष्ठेऽपि प्रदेशे मृदुशाद्वल इव निष्कम्पमादधानः पदं वेगेन व्रजन्नल्पैरेवाहोभिरभिजगामोपत्यकां हिमवतः। न च महान्तमध्वानमतिक्रान्तवतोऽप्यस्य लेशतोऽप्यध्वपरिश्रमः समुदभूत्। व्यवर्धत च परमुत्साह एष स्वभावपावनमतिगहनमनेकतीर्थसमुपाश्रयं विविधमुनिजनसंसेवितमखिलमेव तद्विपिनमात्मचरणकमलतलविन्यासेन विशेषतः पवित्रयितुम्।

अथ ततः कृताह्निको ( विधाय भगवतः सपर्यां ) निर्वर्त्य मूलफलादिना देहयात्रां, प्रविवेश तदेव महावनं, विविधतरुषण्डमण्डितं, भयानकानेकमृगगणपरिवृतं, नदीनदशतान्तरितं, तेनैवोपत्यकापथेन नातिलक्ष्येण। अथैवं वनाद्वनं गच्छतोऽस्य वनशोभावलोकनदत्तचक्षुषः प्रच्युतो दर्शनपथात् स च दुर्लक्ष्यः पन्थाः। चरमगिरिनितम्बे निपतन् भगवांश्चित्रभानुश्च। अथ तत्रैव क्वचन वृक्षमूले विश्रम्य, समाप्य सान्ध्यं कर्म, पुनरुदयं जगच्चक्षुषः प्रतीक्षमाणः, स्वीकृत्य तत्समयसमुचितां निद्रामुद्रामखिलजगद्रक्षणजागरूकोऽयं निमीलितबाह्यनयनः समुद्घाटितान्तर्विलोचनः स्वात्मारामः समुपसंहृतबाह्यवृत्तिर्बभूव। निशा च तदानीं निशानाथरहिता शोकेन मुह्यमानेव महता तमसाऽपूर्यमाणा विलुप्तविलोचनप्रसरा शून्येव समदृश्यत। निशीथे च तदा तमसि केवलं लब्धप्रचारसमापतितस्तत इतः पिशाचगणो दूरादालक्ष्य कुमारवपुषमलब्धपूर्वमानुषमास्वादलोभेनाहमहमिकया धावमानः प्रत्याहत इवालौकिकेन भगवतो दिव्येनानुभावेन प्रतिरुद्धगतिरदृश्यरूपेण पवनतनयेन परिरक्षताऽयोध्यानगरनिर्गमनमारभ्य भगवन्तमनुवर्तमानेन हतप्रायो यथागतं जगाम।

अथ प्रत्यूषे प्रबुद्धश्च भगवान्, अरुणकिरणैरपसारिते तमसि, नातिसमीपे प्रवहन्तीं प्रसन्नसलिलां कामपि सरितमवलोक्य, तामभिगत्य, समुदिते च कर्मसाक्षिणि, स्नानादि सकलं कर्म विधाय, वियासुरपदपद्धिमार्गम्। परितो गिरिभिरन्तरिते प्रदेशे नाविन्दत कथमपि पन्थाम्। गिरिशिखरमधितिष्ठता केनचिदमरसरूपेण गम्भीरमधुरध्वनिना प्रतिबोधितः पन्थानं, गिरिकन्दरामिस्सरन्तीं तामेव नदीं तोयपथेन तेनैवाभिगच्छन् प्रविश्य तमेव गिरिकन्दरं नदीपूरपरिपूर्णं

राभिमुखमेव प्रचलन्विनिष्क्रम्य तस्मात्कन्दरादपश्यद्विशालाभोगमुपत्यकाविभागं समन्ततो रजतमयमिव श्वेतं हिमालयस्य ।

अथ निशामतिवाह्य तत्र प्रातर्यथाविधि विधाय विधेयं प्राभातिकं कर्म, प्रचलन्नपश्यद्राजानपावनेन पाथसा परिपूर्णां गण्डकीं महानदीम् । तीरे च मुक्तनाथस्य भगवतः स्थानम् । स्थानं चार्षभस्य भरतस्य तीव्रे तपसि प्रवृत्तस्य । अवधार्य च तत्समुचितं तपसः, विधाय वृक्षमूले निवासं, अन्वहमनुसान्ध्यं गण्डक्यां विरचितावगाहनः, सपर्यां च भगवतो मुक्तनाथस्य समयेषु समाचरन्, असकृदनुसरणेन स्नेहदोषाणां गुणानां च वैराग्यस्य कतिपयदिनानि नीत्वा, तपसे प्रावर्तत । तदाचायं वैराग्येण तपसा च नीलकण्ठसाम्येन नीलकण्ठ इति व्यवहारपदमभूत्तत्रत्यानाम् । परिमितफलमूलपर्णाशनः पदेनैकेन तिष्ठन्नुद्बाहुयुगलः समुपसंहृतसकलबाह्यकरणः, भगवति हिरण्मये पुरुषे सवितृमण्डलमध्यवर्तिनि ( सरसिजासनसन्निविष्टचरणयुगले दिव्यपीताम्बरधारिणि कौस्तुभवनमालाद्यलङ्कृते मकरकुण्डलग्रैवेयकहारादिपरिमण्डिते शङ्खचक्रधरे दिव्यमनोहराकृतौ ) विन्यस्य हृदयमस्तान्यभावो जपन् गायत्रीं, विस्मयनीयानुभावो बभूव देवानामपि । ततः कालेनाल्पेन प्रसन्नः स पुरुषो हिरण्मयः पुरतो नयनयोरस्य प्रादुर्बभूव । अथानेन वरान्दीयमानानपि तृणाय मत्वा स्वात्मारामैकतामेव सुप्रतिष्ठामभिचकाङ्क्षे, स्मृतिसमये च सन्निधानम् ।

अथ विनिवृत्तस्तपसः, तत्र दिनमेकमतिवाह्य, वनेषु विचरन्नमानुषोपमर्देषु, प्रतस्थे दिशमभि दक्षिणाम् । विहायाध्वानमध्वगोपसम्मर्दपांसुलम्, अमृतमयात्मनयनमनोनिपातमात्रेण प्रशान्तशीतलमनन्यसामान्यं सङ्कल्पमात्रपरिष्कृतं कमपि पन्थानमनुसृत्य प्रचलतोऽस्य चरणसंस्पर्शेनेवापूर्वां श्रियं समुद्वहन्वनश्रिया समलक्ष्यत शैलराजः । पश्यन्नेवापूर्वां वनश्रियं स्वावास इव परे धाम्नि समधिगतपरमानन्दः, क्वचिद्दिनं दिने दिनानि वा अतिवाहयन्नास्मार्षीदतीतानामपि दिनानां बहूनाम् । अतिगहने चास्मिन्वने भयावहे सर्वेषां व्यपेतभयस्यास्य न प्राभवत् कोऽपि जन्तुरुद्वेगाय । नाप्ययमुद्वेगाय कस्यचित्सर्वभूतसुहृत् । एवं वनाद्वनमभिसञ्चरतोऽस्य तपःपरायणस्य व्यतीयुर्मासा द्वादश । अथैकदा न्यग्रोधमूले तपस्यन्तं विलीनसकलबाह्यवृत्ति निमग्नमानसमानन्दमये सर्वाभ्यन्तरे कमपि सार्वभौमं योगिनामपश्यत् । ततश्च समुपगम्य प्रतीक्षमाणस्तस्य समुत्थानं समाधेः क्षणमात्रं तस्थौ । स च निवृत्तसमाधिः पुरतः प्रणतशिरसमवस्थितं कुमारवपुषमेनमवलोक्य स्वात्मन इव मूर्तस्य लाभेन प्रहृष्यन्नभ्युत्थायाभ्यालिङ्ग्य प्रेम्णाऽपृच्छ्य कुशलमभिजनादि च, आलक्ष्यास्य वैराग्यं गाढानुरागं च योगमार्गे, सन्निधावेव स्वस्य कञ्चित्कालं स्थातुमेनं न्ययुङ्क्त । अयमपि भगवानलब्धपूर्वं योगिनः समागमसुखमनुभवन्निव योगाभ्यासापदेशेन सन्निधावेव तस्य वासमकरोत् । स चायं गोपालनामा योगिराजो यमनियमासनप्राणायामप्रत्याहारधारणाध्यानलक्षणान् समाधिपर्यन्तान्योगमार्गान्यथावसरमुपदिदेशास्मै श्रीहरिकृष्णशर्मणे । अयं च स्मृतिमात्रसम्पन्नानेव तानर्थांस्तदुपदेशतः समधिगत्येवानधिगतपूर्वान्, सपदि निष्पन्नसमाधिः समदृश्यत योगिराजेन । अमन्यत च तस्याचिरेण योगसिद्धिमालक्ष्य, कश्चिदयमप्रच्युतपूर्वयोगसंस्कारो निष्पन्नयोगः पुरुषविशेष इत्यमुं योगिराजः । क्रमेण चावतीर्णं जगतो योगक्षेमाय भगवन्तम् ।

अथ कालेन कलेवरं स्थूलं विहाय; व्यवधूय चाश्व इव रोमाणि कर्माण्यखिलानि, परित्यक्तः सूक्ष्मया प्रकृत्या, प्राप्य ब्रह्मभावमक्षरेणात्मना सङ्गतः, कमप्यानन्दघनमविन्दतापुनरावर्तनेन पथा सोऽयं योगिराजः । अथ भगवान् विधायास्य कलेवरस्य चरमं संस्कारं, जनानां हितमाचरन्, प्रशमपेशलासुरवृत्तिभिराराध्यमानमभिभवं सात्त्विकानाम्, विनिवृत्तो वनसञ्चरणतः प्रतस्थे तीर्थयात्राव्याजेन दिशमभिप्राचीम् । प्रशान्तगम्भीराकृतेरस्यानन्यसामान्यानुभावेन श्रवणपथमिव नयनपथमपि सफलयितुं पथि पथि तत्र तत्र समवेतेन सुमनसां समूहेन संसेव्यमानचरणः प्राप नगरमेकं वङ्गेषु सीराभिधं सिद्धवल्लभनाम्ना भूपतिना समधिष्ठितम् । स चायं राजा परमधार्मिकः प्रकृत्या बद्धस्नेहो महात्मसु, परिचर्यापरः साधूनाम्, समुपश्रुत्य भगवतोऽस्य स्वनगरे प्रवेशं सह परिमितेन भृत्यवर्गेण समेत्य तत्सन्निधिं, प्रार्थयामास स्वनगर एव यावद्वर्षासमयं स्थितिम् । अभ्यर्थितश्च स भगवान्नगराद्बहिरेवात्मनो वासं वृक्षमूले प्रियतमं न्यवेदयत् । यथाभिलषितं नातिविरलवृक्षे क्वचिदुपवने सरसा च कमलिन्या समलङ्कृतेन समुपलक्षिते सुखावासाय किमपि तरुमूलं न्यवेदयत् ।

अथ स्वीकृत्य भगवांस्तस्य प्रार्थनां सुखमुवास तत्र। यत्रैवेतरे पूर्वमेव राज्ञा दत्तावासावकाशाः परिगृहीतत्यागलिङ्गाः यन्त्रतन्त्रमन्त्रमात्रनिष्ठाः प्रख्यापितवैराग्याः प्रकटितपारमहंस्याः बहवो जपमालिकापरिवर्तनव्यग्राङ्गुलयोऽभवन्। अथ तत्र समुद्भूते वर्षासमये अनुदिनमनुवर्धमानं वर्षवातवेगं कथमपि सोढुमशक्ताः परे वीतरागाभासाः पौरेषु प्रशासितरि च राज्ञि प्रख्यापितस्य स्वेषां द्वंद्वातीतत्वास्वभावदम्भस्यास्तमयसमयमाशङ्क्य राज्ञो भयात्, अज्ञातगतयः सर्वे एवानुनिशं क्रमशः पलायनशरणा बभूवुः। द्वन्द्वातीतस्तु भगवानेक एव तत्र व्यपगतशीतोष्णविभागः परया शान्त्या प्रणिधानपरः परमात्मनः सुखेनासीत्। अथेममुदन्तमुपश्रुत्य दूतेभ्यः पृथ्वीपतिः परां भक्तिमावहन् हरिकृष्णे अनुदिनमधिकां सपर्यां कुर्वंस्तदनुग्रहपात्रमभवत्। यः पुनरन्यस्तत्रैव नगरे कृतवसतिः क्षुद्रमन्त्रतन्त्रयन्त्रादिसिद्धिमात्रेण प्रख्यापितापूर्वाश्चर्यशक्तिः परिवृतो बहुभिः शिष्यैः स्वप्रतिष्ठाभङ्गभयेन भगवत्यविज्ञाततन्महिमा वैरमनुबध्नंस्तन्मारणाय यावदात्मनो बलमभिचारमाचरन्नलब्धमनोरथस्तत्सेवापरायणे गोपालदासनामनि प्रायुङ्क्त स्वाभिचारशक्तिम्। तेन चाभिचारयोगेन स सपदि दुरवस्थां मरणाभिमुखीं प्राप। अथ सपदि समुपनिपतितां तां दशामालोक्य नृपतिरानाय्य भिषग्वरान्मन्त्रादिविदश्च समाहितविविधप्रकारोऽपि न लेभे फलं किमपि समारम्भस्य। अथ सपदि भगवतः पार्श्वमानाय्य तं न्यवेदयदस्यावस्थाम्। स च भगवानात्मपरिचर्यापरस्य तस्य तां दुरवस्थामालोक्य, आलक्ष्य चासुराभिचारं, सपदि कर्णयोस्तस्य भगवन्नामोच्चारणमात्रेण तं लब्धप्रज्ञमपगतसकलव्यथमकरोत्। राजा चास्यानन्यसामान्यं प्रभावमालक्ष्य सञ्जाततच्चरणभक्तिः प्रणम्य तच्चरणयोर्महार्हैर्वासोभूषणादिभिस्तस्य सपर्यां विदधौ। भगवांश्च प्रणामादन्यद्वासोभूषादिसपर्याद्रव्यं नाङ्गीचकार। यो यः प्रीत्या यदर्पयति वासो भूषणमन्यद्वा, तत्सर्वं तत्समयसमागताय निर्धनाय प्रयच्छन्नविन्दत केवलमात्मानन्दम्।

अथास्मिन्नवसरे कोऽपि भूसुरो वेदवेदाङ्गविदभिभूयमानो दारिद्र्येण कुटुम्बभरणक्लेशमसहमानो दुष्परिग्रहैरपि कुटुम्बं रक्षंस्तत्र राज्ञा विरचितानि मातङ्गकालपुरुषलवणप्रभृतिदानानि प्रतिगृह्य तेन दुष्परिग्रहेण सपदि मूर्तीभूय वपुषि सन्निहितेनेव दुरितेनाभिभूतः सपदि कृष्णीभूतसर्वगात्रो भूत्वा स्वतनुवैकृतेन व्याकुलीभूतमानसः स्वपापप्रशमनमाकाङ्क्षमाणः समुपश्रुत्य भगवतो महिमानं तस्य चरणौ शरणमुपजगाम। तं च तथाविधं व्याकुलमानसं खिन्नखिन्नमालोक्य समुपजातकरुणो भगवाननुग्रहमकरोत्। तदनुग्रहेण सपदि यथापूर्वं राहुमुक्त इव सूर्यः प्राप्य नैजं ब्राह्मं तेजः तदेकशरणो हृष्टमनाः स्वगृहं जगाम।

अथापगते वर्षासमये, प्राप्ते च शरत्काले, भगवांश्चायमनुगतस्तपस्विभिरनेकैः, विनिर्गत्य तस्मात्सीरपुरात्, आसीमान्तमनुव्रजन्तं राजानमभ्यनुज्ञाय, प्राप्य पथि कमपि कामाख्याः स्थानं, तत्रत्येन पिपैकनाम्ना केनचिद्ब्राह्मणजातीयेन, संसर्गदोषात्प्राप्तशाक्तसमयेन; मधुमांसाद्युपहारसन्तर्पितकालीप्रसादपात्रेण; वशीकृतभैरवादिक्षुद्रदेवेन; पराभूय तांस्तान्पथिकजनानभिचारप्रयोगेण स्वशिष्यभावं नयता; भीषणाचारेण; बहुभिरतिदारुणैरभिचाराचरणैर्हननाय कृतप्रयत्नेन; अभियुक्तः, स्वीयेन तेजसा तत्प्रयुक्तान्सर्वानभिचारान् विफलीकृत्य, तं चान्ते भग्नगर्वं त्यक्तशाक्तसमयमात्मशरणमनुगृह्य समुपदिश्य साधुधर्मान्सन्मार्गे समारोप्य, स्वयमेकाकी विचरन्ननुज्ञाय सर्वांस्तपस्विनो यथाऽभिरुचि गमनाय ततो निर्गत्य नवलक्षाभिधं कमपि गिरिवरं समारुह्य तत्रोग्रे तपसि वर्तमानान्नवलक्षसङ्ख्यापरिमितान्सिद्धानवलोक्य, प्रयच्छंस्तेषामुग्रस्य तपसः फलं, निजं क्षराक्षरातीतं रूपं युगपत्तान् स्वानुग्रहप्रापितदिव्यदृष्टिबलान् साक्षात्कारयित्वा, अवलोक्य च निरिन्धना अग्निज्वालाः, शीतोदकुण्डान्युष्णोदकुण्डानि चानेकानि, उषित्वा तत्र दिनत्रयं, अवतीर्य ततः दक्षिणां दिशमभिप्रस्थितः, आत्वा गङ्गासागरसङ्गमे सन्तीर्य नावा सामुद्रखण्डं, प्राप्य कपिलाश्रमं समुद्रपरिखावेष्टितम्, मासमेकमुषित्वा तत्र, ततो निर्गत्य भगवता कृष्णेन विरचितानवरतसान्निध्यं जगन्नाथपुरं प्राप।

तत्रानुदिनमुषसि महोदधाविन्द्रद्युम्नाभिधे च सरोवरे स्नानावगाहनः, पतितपावनस्य पुरुषोत्तमस्याश्रितजनोज्जीवनायार्चारूपेण सन्निहितस्य सेवां समाचरन्, इन्द्रद्युम्नसरस्तीरे कृतावास उवास पञ्चपदिनानि। प्रायः कलिः पुण्यक्षेत्राणि मलिनयन्नाविश्य पुरुषानासुरं

भावमापाद्य प्रवर्तयति नाम निजं साम्राज्यम्। तदस्य साम्राज्यमनुवर्तमाना बहवः पुरुषा निवसन्ति स्म तत्र। तेषु कतिचन भूसुरेन्द्रजवनिकया, कतिचनाचार्यनेपथ्येन, कतिचन मन्त्रतन्त्रसारपरिनिष्ठितापदेशेन, कतिचन तपस्विदम्भेन, कतिचन ब्रह्मविद्भावनया, जगदिदं वञ्चयन्तः परधनवनितापरायणा अभूवन्। विरलश्चासीत्सर्वातिशायिन्या दैव्या सम्पदा समाश्लिष्टः पुरुषः। तदेवमन्वहमभिवर्धमानमासुरैरभिभवमभिवीक्ष्य पुण्यक्षेत्रस्य तदुपशमनाय तत्रैव न्यवसद्-पराण्यपि दिनानि। अस्य चानन्यसामान्यं तपो विषयवैतृष्ण्यमात्मारामतां च जना वीक्ष्य तस्मिन्सञ्जातभक्तयस्तच्चरणसेवापरा बभूवुः। असहमानाश्चासुरा अपरे भगवति कृतवैरानुबन्धा विधाय विविधानभिद्रोहान्विफलमनोरथास्तत एवानुदिनमभिवर्धमानेनान्तःसन्तापेन दन्दह्यमानाः क्रोधोग्रवेगमसहमानाः प्रवृत्ताश्च पुनस्तदभिद्रोहे तेजसा तस्य प्रतिरुद्धा इव विहतगतयो व्यपेतस्वपरभेदविज्ञानाः समुद्भ्रान्ता मिथो बद्धवैराः परस्परं प्रहरणैः प्रहरन्तो निपेतुरपेतासवः सर्व एव ते। ततश्चान्वहमवर्धत दैवीं सम्पदमभिजातानां जनानां समवायो भगवतोऽस्य सन्निधौ। सदुपदेशेन तेषां सत्त्वं निर्मलयन्भगवानयमचिरेण तत्र जगन्नाथपुरे समाधाय समृद्धिं ज्ञानभक्तिवैराग्याणां व्यपनीय तत्र धर्मप्रतिष्ठापनेन दश मासान्प्रतस्थे दक्षिणां दिशमभि।

अथ ततो निर्गतो भगवता श्रीरामचन्द्रेण पुरा विरचितं सेतुबन्धं भवबन्धहरमुपगच्छन्नादि-कूर्मं नाम क्षेत्रमुपगम्य ततश्च प्रस्थितः समतिक्रम्य महावनं मार्गवशात्सन्निहिते मानसपत्तने प्रविष्टस्तत्रत्येन सत्रधर्माह्वयेन नृपतिना समभ्यर्थितः स्थित्वा तत्र कतिचन दिनानि तेन नृपतिना समभ्यर्चितस्ततः प्राप्य वेङ्कटाद्रिं विधाय सेवां भगवतः श्रीनिवासस्य ततः प्राप्य काञ्चीं शिवस्य विष्णोश्च कृत्वा दर्शनं ततः प्राप्य भूतपुरीं विधाय तत्र श्रीमद्रामानुजाचार्यस्य दर्शनं ततः प्राप कवेरतनया-समालिङ्गितं श्रीरङ्गम्। यत्र भगवान्वासुदेवः स्वयमर्चारूपेण सन्निहितः सर्वदा समिन्धे। यत्र सर्व एव विशिष्टाद्वैतसिद्धान्तप्रवर्तका नाथयामुनप्रभृतयः पूर्वाचार्याः परमपुरुषसेवापरायणा बभूवुः। न्यवसदयं भगवांस्तत्र सरितस्तीरे पूर्वस्यां दिशि कचिदुपवने। अन्वहमाचरन्नुपसि नद्यां स्नानं, कुर्वंश्च हरेर्दर्शनं, सदुपदेशेन सम्बोधयन् शरणमुपगतान्, अपनयंश्च तत्रत्यानां केषांचिद्वैष्णवलक्ष्मणामन्तर्गूढं कलङ्कम्, उवास तत्र मासद्वयम्। अथ ततः प्रस्थाय सकलदुरित-प्रणाशकं प्राप सेतुबन्धाख्यं तीर्थवरम्। तत्र सङ्गमे रत्नाकरमहोदध्योरनुसन्ध्यं स्नानमाचरन् कुर्वंश्च रामेश्वरदर्शनं मासद्वयमुवास।

अथ ततः प्रस्थाय मार्गवशात्कचन महारण्ये प्रविष्टः पञ्चाहानि प्रचलन्नैवाविन्दत तोयमात्रमपि। पञ्चमेऽहनि सायमेकं जलाशयमपश्यत्। स्नात्वा जलाशये तस्मिन्, समाप्य सान्ध्यं, समभ्यर्च्य च शालग्रामं, समाहृत्यैतस्ततो वनशिम्बीश्चतस्रो, भर्जयित्वाऽग्निना, निवेद्य विष्णवे, प्राद्य ताः, निशायाः प्रथमं यामं यावदास्थाय तत्र, ततः प्रतस्थे तस्मिन्नेव महारण्ये। परेद्युर्मध्यन्दिने प्राप कूपमेकम्। अथ समुद्धृत्य तस्मात्सलिलं विधाय स्नानादि सकलं कर्म कस्यचिद्वटस्याधस्तात्प्रच्छायशीतले प्ररूढनवशाद्वले प्रास्तीर्णास्तरण इव भूप्रदेशे समुपविश्य सपर्यां विष्णोः कर्तुं प्रारभत। अत्रान्तरे व्योम्नः पथे सञ्चरन्भगवान्भवो भवान्या सह, समवलोक्य स्वदेहकान्त्या विपिनमखिलं भासयन्तं तपःकृशतनुं मानुषेण संस्थानेन निगूढात्मलिङ्गं, पुराणपुरुषमालक्ष्य कुमारवपुषं, विस्मयाविष्टचेताः समवतीर्य नभस्तलादलक्षित एव तस्थावस्य भगवत्सपर्याप्रकारमवलोकयन्। अयं चार्घ्यादिभिरभ्यर्च्य स्नानासने समारोप्य विष्णुं स्नपयामास सूक्तं पौरुषेयं पठन्प्रसन्नेन सलिलेन कमण्डलुसमुद्धृतेन। स्नपनसलिलधारां च बहिरप्रसृतां क्वापि निलीयमानां विलोक्य समचिन्तयत् किमिदमाश्चर्यमिति। अथ तृषार्तेनैव विष्णुनैवानेन पीयते सलिलधारेति विनिश्चित्य शमयंस्तृषां कूपात्पुनः समुद्धृत्य कमण्डलुना सलिलमभ्यषिञ्चच्छालग्रामरूपं विष्णुम्। यथायथाऽभिषिञ्चति, तथातथा न्यपीयत सलिलमशेषम्। पुनश्चायमुद्धृत्य वारि समभ्यषिञ्चत्, तदाऽपि यथापूर्वं निपीतं नाम सलिलम्। अविचिन्त्यात्मनः परिश्रमं विष्णोस्तोषणाय प्रवृत्तोऽयमसकृदभिषिञ्चन्सलिलसमुद्धरणैकव्यापृतोऽभवत्। अथास्याङ्गेषु परिश्रमस्वेदबिन्दून्विष्णुरालक्ष्य दयमानमानसः प्रशान्ततृष्ण इव समर्पितां वारिधारां स्वाङ्गसङ्गमात्रेण पवित्रयन्विरतोऽभवदाचूषणात्। अथ भगवानस्य विष्णोस्तृषमुपशान्तां विनिश्चित्य व्यचिन्तयदद्यास्य किं भोज्यमाहरामीति। भवश्चास्यालक्ष्याशयमाह भवानीम्।

वितरास्मै यत्स्यादन्नं निवेदयितुमिति। साऽपि सन्निधाय वृद्धतापसीवेषेण सक्तूनप्रायच्छत्। गृहीत्वा च तान् सलिलेन संयोज्य निवेद्य भगवते परां तृप्तिमुपगतो भगवान्यज्ञशिष्टेन तेन सक्तुना देहयात्रां निर्वर्त्य तत्समयमात्मनः समीपमुपगतौ वृद्धतपस्विवेषौ कायकान्त्या कयाप्यखिलं तं वनप्रदेशं प्रकाशयन्तौ दम्पती विलोक्यापृच्छत्सप्रश्रयम्, कौ युवामाकृत्या तपस्विनाविवाऽऽलक्ष्यमाणावनुभावेन त्वमानुपाविव दृश्येथे इति। आह च प्रसन्नगम्भीरया गिरा भगवान्भवः, आवामुमामहेश्वरौ व्योम्नि विचरन्तौ दुर्गमेऽस्मिन्वने विचरन्तमेकाकिनं व्यपेतभयं परिग्रहयोग्येऽपि वयसि त्यक्तसर्वपरिग्रहम् अप्राकृतेन केनापि ब्राह्मेणानुभावेनास्मदादीन्विस्मापयन्तम्, आयुषः प्रथम एव पादे आयुषोऽन्त इव समाहितवनविचरणोत्साहं जगदुपकाराय कृतावतरणमिव परमपुरुषं भवन्तमालोक्याश्चर्यकौतुकोत्तरङ्गितमानसाववतीर्यास्मिन्नेव वृक्षान्तरेऽलक्षितेनाकारेण वर्तमानौ भवतोऽवसरं प्रतीक्षमाणौ प्राप्तेऽवसरेऽस्मिन्सन्निहितौ स्वः, दृश्यतामावयोरकृत्रिमं रूपमिति। अभिधायैवमनुक्षणमयोगिनामदृश्येन सकलसुरासुरवन्द्येन स्वेनैव रूपेणाविर्बभूव सह भवान्या। व्यलोकयच्चायं पुरतः प्रादुर्भूतं, परितः प्रमथगणपरिवेष्टितं, संसेव्यमानं च नन्दिप्रभृतिभिरन्तरङ्गानुचरैः, करुणयेव मूर्तया शैलराजकन्यया समलङ्कृतवामपार्श्वं, गङ्गाप्रपातोपरोधिना जटाजूटेन भ्राजमानं गाङ्गे तरङ्गे पोप्लूयमानया राजहंस्येव शशिकलया समलङ्कृतजटामण्डलम्, निमीलितनिटिलनयनं समुन्मीलितकरुणामृतपूरवर्षिविलोचनं मन्दस्मितेन समाश्रितसकलजनसन्तापहारिणं पन्नगाभरणम्, कर्पूरधवलेन वपुषोपलक्ष्यमाणं सकलमुनिजनमनोनिवासं सर्वपापप्रणाशनं महेश्वरम्। विलोक्यैनमत्याश्चर्यरूपं सपदि कृतप्रणामः समुचिताभिः स्तुतिभिः संस्तूय तं प्रसन्नेन तेनाभिनन्दितोऽभूत्। तिरोहिते च तस्मिन् सपदि तन्महारण्यं समतिक्रान्तुं कृतसङ्कल्पः प्रतस्थे ततः प्रतीचीं दिशमभि। कन्याकुमारीनामकं क्षेत्रं प्राप्य तत्र विधाय गौर्या दर्शनम्, केरलेषु पद्मनाभक्षेत्रमुपगम्य तत्रानन्तशयने पद्मनाभं प्रणम्य ततो जनार्दनं ततश्चादिकेशवं च प्रणम्य प्राप्य मलयगिरिं तत्र साक्षिगोपालस्य दर्शनं विधायोषित्वा पञ्चाहानि तत्र ततश्चोदीचीं दिशमनुप्रविष्टश्चन्द्रभागातीरे विराजमानमनेकभक्तगणसंसेवितं पुण्डलीकपुरं प्राप्य, भक्तजनानुग्रहाय तत्र कृतसान्निध्यस्य भगवतो नन्दनन्दनस्य सेवां विदधानो द्वौ मासावुषित्वा तत्र, ततो दण्डकावनं प्रविश्य, प्राप्य पञ्चवटीं परिसरे गोदावर्याः पावनं तपोवनमनुस्मृतरघुनन्दनदिव्यचरितः कृतावगाहनो गोदावर्यां प्राप्य नासिकपुरं ततस्त्र्यम्बकक्षेत्रं प्राप्य विधाय तत्र त्र्यम्बकनाथस्य दर्शनम्, ततस्तयैवोदीच्या दिशा प्रस्थितः प्राप्य तपतीं नदीं, तत्र कृतावगाहः, ततः प्रस्थितः प्राप्य नर्मदां महानदीं तत्र विधायावगाहनं तीरे तस्याः पावने विचरन्नुत्तीर्य च तां महानदीं, समुल्लङ्घ्य च साभ्रमतीं सरितं, भालदेशे भीमनाथसमाख्यया विख्यातं महादेवं प्रणम्य, गोपनाथमुपगम्य पञ्चतीर्थीमवगाहनादिना तीर्थयन्, प्राप मकरालयपत्तनम् (मागरोल)। व्यतीयुश्चास्य गृहाद्विनिर्गतस्य समाः सप्तैवं तपस्तीर्थयात्रापदेशेन तत्र तत्र तांस्तांस्तत्त्वाववोधनसदाचरणादिभिः समुज्जीवयतो विविधनदनदीतीर्थानि तीर्थयतः। अशोभत चास्य तदानीं गात्रमतिमात्रमादृतकार्श्यमप्यनभिभाव्येन केनापि तेजसा सर्वतेजोभिभाविना तपसेव मूर्तेन।

स चायं भगवांस्तीर्थीकृततीर्थस्तत्र मकरालये प्रातराह्निकं परिसमाप्य सङ्गवसमये नातिदूरस्थं लोजाभिधं पुरमुपगम्य बहिरेव पुरात्कस्याश्चिद्वापिकाया उपकण्ठे समुपविश्य स्वहृदयतलसन्निहिते भगवति वृन्दावनविहाररसिके परमपुरुषे विन्यस्ताभ्यन्तरविलोचनः समुपहृतसकलबाह्यकरणो बभूव। अत्रान्तरे तत्र समाजगाम माध्याह्निकस्नानाय सुखानन्दनामा साधुवर्यः। स्नात्वा च तस्यां वाप्यां तदुपकण्ठे समवस्थितं समाधिनिष्ठमलक्षितपूर्वेण तेजसा समुपलक्षितं वयसा चैकोनविंशत्या सम्पन्नं विलोक्य विस्मयाविष्टचेताः क्षणमवसरं प्रतीक्षमाणः समुत्थितं समाधेः समुन्मीलितनयनं भगवन्तमुपगम्य कृतप्रणामः पप्रच्छ–को भवान्प्रथम एवास्मिन्वयसि तीव्रेण वैराग्येण तपसा चानन्यसामान्येन निष्पन्नेन चाष्टाङ्गेन योगेन सकलमुनिमनांसि विस्मयसागरे निमज्जयन्निह जगति मूर्त इव विज्ञानवैराग्यराशिर्विचरतीति। अथ तं प्रत्यवदत्प्रशान्तगम्भीरया गिरा। केनापि योगेन कोसले देशे कस्यचिद्द्विजवरस्य गृहे प्राप्य सम्भवमाकाङ्क्षमाणो भगवद्भक्तजनसमुदयं स्वभावतोऽनुवृत्तेन वैराग्येण तपसे प्रविष्टो वनं पर्यटंस्तत्र तत्र तीर्थक्षेत्रादौ पथः प्रसङ्गेन समागतोऽसीमं प्रदेशम्। दृष्ट्वा च भवन्तं जिज्ञासति मे चेतः। मन्ये समुन्मिषितसत्त्वं सदनुग्रहपात्रं साधुसमवायगं मुमुक्षुमिव भवन्तम्। ज्ञातुमिच्छामि कस्य गुरोः कृपापात्रं भवानिति। एवमनुपृष्टो भगवता प्रत्यवदत्सुखानन्दः।

अस्ति नामास्माकं गुरुः सौराष्ट्रमिमं पवित्रयन्पावनचरितः प्रवर्तितकृष्णभक्तिः पारमैकान्तिकधर्मपरायणः प्रथितो रामानन्द इति । यस्य भगवति वासुदेवे परमरसनिलये परात्परे श्रीकृष्णे वृष्णिकुलभूषणे व्यपेतसकलबाह्यसङ्गमनुप्रवर्तमानं भक्तिपूरमालक्ष्य, आलक्ष्य चास्य तीव्रं विषयवैराग्यं साक्षादुद्धव एवायमवतीर्ण इति मन्यन्ते नाम महिताः पुरुषाः । अवतीर्णश्चायमयोध्यायां कस्यचित्काश्यपगोत्रस्य विप्रवरस्यान्वयमलङ्कुर्वन्बाल्यतोऽनुवृत्तेन विषयवैतृष्ण्येन विनिर्गतो गृहात्तत्र तत्र तपस्विमण्डले विचरन्प्राप्य कमपि योगिराजं ततः संसारितयोगमार्गः सहजसंस्कारसुप्रतिष्ठितं योगमधिगम्य श्रीकृष्णसाक्षात्कारैकपरायणस्तस्य योगिनः केवलात्मज्योतिर्मात्रपरायणतामालक्ष्यालाभेन श्रीकृष्णसाक्षात्कारपरायणस्य परमगुरोरन्तःखिन्नः, प्राप्य श्रीरङ्गं तत्रार्चारूपेणानवरतमाहितसन्निधिं प्रतिष्ठापकं भक्तिमार्गस्य प्रवर्तकं विशिष्टाद्वैतसिद्धान्तस्य निर्गुणे ज्योतिषि क्वचन केवले निलयनमेव परमपुरुषार्थं मन्यमानानामसदुपदेशाग्निरस्य परमानन्दमयपरमपुरुषचरणनलिनपरिचरणपीयूषरसमास्वादयन्तमात्मसंश्रयान्भवदवदह्यमानान्मानवान्, भगवद्रामानुजाचार्यं प्रणम्य चरितं चास्य प्रपन्नामृतमुपश्रुत्य तमेव गुरुं साक्षात्कर्तुमिच्छन् नद्यां कावेर्यामन्वहं स्नानमाचरन् श्रीरङ्गनाथस्य सेवां कुर्वन् श्रीभाष्यकारमेव च गुरुवरं मुहुः प्रणिधानेन भावयन् कालेन समाधौ लब्धतत्साक्षात्कारः, प्राप्य तस्मादष्टाक्षरं मन्त्रराजम्, अनुज्ञातश्च तेन स्वसिद्धान्तस्थापने शिष्यजनसमुज्जीवने च, ततो हृष्टस्तदुपदिष्टमेवार्थं तेभ्यस्तेभ्य उपदिशन् अनुदिनमनुवर्धमानश्रीवैष्णवशिष्यमण्डलीपरिवृतः कैश्चिदसूयालुभिरन्वहं पीड्यमानस्त्यक्त्वा तं देशं विक्षोभकरं प्राप्य वृन्दावनं परया प्रीत्या श्रीकृष्णमनवरतमनुसरंस्तमेव योगोन्मीलिततया दृशा मुहुरवलोकयन्वाचामगोचरं कमप्यानन्दमनुभवन्कालेन प्राप्य श्रीकृष्णस्य साक्षाद्दर्शनं लब्धमनोरथः कृतकृत्यमात्मानमवधार्य व्यपेतसकलबाह्यव्यापारः सर्वदा श्रीकृष्णचरणनलिनसेवापरायणानां परमभागवतानां सन्दर्शनसङ्गमसुखमाकाङ्क्षमाणस्तेषु तेषु तीर्थेषु सञ्चरंस्तांस्तानाश्रितांस्तत्त्वोपदेशैः समुज्जीवयन्प्राप्य द्वारकां भगवता कृष्णेन सन्ततमधिष्ठितां सेवमानश्च तं कञ्चित् कालं सौराष्ट्रदेशे सम्प्रति तत्र तत्र जनपदे मुमुक्षूनानन्दयन्नमृतमयैरिव सदुपदेशैरनन्यया श्रीकृष्णभक्त्या नित्यतृप्तः सर्वानस्मांश्चरणसेवकान्समुज्जीवयन्नास्तेऽधुना भुजङ्गपुरे । तस्य वयं चरणकमलसंश्रयाः परित्यक्तसर्वैषणा अनिकेतनाः कृष्णैकनिकेतनास्तस्यैवाज्ञयाद्येह स्मः । अस्माकं च प्रमुखः श्रीस्वामिचरणकमलसेवकेषु प्रथमो नाम्ना मुक्तानन्द इति प्रथितः संसिद्धोऽष्टाङ्गयोगे विज्ञानवैराग्यवारिधिर्भवादृशां समागममाकाङ्क्षमाणः सर्वदा वर्तते । यदि भवतस्तदाश्रमागन्तुं न कश्चिदुपरोधः सहैव मयाधुनाऽऽगम्यताम् । चेदुपरोधः स एव भवतः समीपमेष्यतीति ।

तदिदमुपश्रुत्य भगवांस्तत्समागमे समुद्भूतकौतुकः प्राह-परित्यक्तनगरग्रामप्रवेशस्य वनेष्वेव विचरतोऽपि मम समुत्कण्ठा नाम सत्पुरुषसमागमे महती । तद्भवतो वचनेन तथाविधस्य साधुमण्डलमण्डनभूतस्य समागममेव श्रेयसां स्थानं फलं च तपसोऽवधार्य परित्यज्य नियमं ग्रामेऽपि प्रवेष्टुमिच्छामि भवता सहैवेति । इत्यभिधाय सपदि समुत्थाय सहैव तेन तदाश्रमं प्राविशत् । स च मुक्तानन्दः प्रविशन्तमेनं तपसां सञ्चयमिव मूर्तं, तेजोराशिमिव पुञ्जीभूतं, आनन्दमयमिव वपुषोपलक्षितं परमं धर्ममिव धृतविग्रहं तपस्तीर्थाटनादिना कृशीकृततनुं अनुभावेन चातिमानुषेणाभिभावयन्तमखिलानपि तेजस्विनः, क्षमासारमिवाभिगम्याकृतिमवलोक्य सपदि विस्मयाविष्टचेताः स्वयमभिगम्य प्रत्यभिनन्द्यान्तर्नीत्वा पृष्ट्वा च कुशलं विधाय च यथार्हं सत्कारं स्वीकृतातिथेये च भगवति विशेषतो वृत्तमस्य जिज्ञासुर्विविक्ते प्रदेशे सह भगवता स्वयमुपविवेश । अथावसरे भगवता तत्त्वमनुपृष्टो मुक्तानन्दो यथापद्मपादचर्यौ जीवात्मपरमात्मनोर्यथावस्थितं स्वरूपं, स्वरूपं च प्रकृतेः, याथात्म्यं चाक्षरस्य, सङ्क्षेपेण सुव्यक्तम् । एवं प्रश्नानुप्रश्नव्याख्यानोपव्याख्यानैः समधिकानन्दापभूतावुभावपि तौ । मुक्तानन्दश्चास्य श्रीकृष्णे परं प्रेमानुबन्धं विज्ञाय नितरां प्रहृष्टः स्वगुरोः श्रीरामानन्दस्वामिनः श्रीकृष्णे परां भक्तिं समाधौ च तत्साक्षात्कारं सति स्वामिनः प्रसादे श्रीकृष्णसाक्षात्कारस्य सुगमतां न्यवेदयदस्मै । अयं च भगवान् श्रीस्वामिनं श्रीकृष्णैकशरणं सम्पन्नतत्साक्षात्कारं भवभयविमोचनक्षमं गुरुवरं विनिश्चित्य संस्मरंश्च पितुर्वचनं स एवायमित्यवधार्य तदागमनप्रतीक्षैकपरो मुक्तानन्दस्वामिनो वचनेन मासद्वयं तत्रैव न्यवसत् । अतीते च मासद्वये

श्रीस्वामिनामनागमनेनात्यन्तं खिन्नमानसः, तच्चरणकमलसेवासञ्जातत्वरः, तदैव श्रीस्वामिनां सन्निधिं गन्तुकामः पर्यपृच्छन्मुक्तानन्दस्वामिनम्। अतीतौ च मासौ, श्रीस्वामिनस्तु नाद्याप्यागताः। विना तच्चरणसेवामिह क्षणमपि स्थातुं न शक्नोमि तन्ममानुज्ञा दीयतामिति। अथास्याभिनिवेशं दुर्वारमालक्ष्य आलक्ष्य चास्य तनौ कार्श्यं विचिन्त्याध्वनश्च दुर्गमतां प्रशमयन्नस्य मनःखेदं शनैर्मृदुमधुरया गिरा प्राह। तात! दुर्गमः पन्थाः, तपःकृशा च ते तनुः, आगमिष्यन्ति नाम स्वामिनः पक्षान्तरालेन, लेखश्चेतः प्रेष्यतेऽधुनैव, त्वमपि त्वदुत्कण्ठासूचकं लेखं श्रीस्वामिने विलिख्य प्रयच्छ, सोऽपि प्रेष्यत इति। एवमाश्वासितः प्रतिनिवृत्तो गमनाभिनिवेशात्तदागमनमेव प्रतीक्षमाण आसीत्। श्रीस्वामिनस्तु मुक्तानन्दमुनिना प्रेषितेन लेखेनावगत्य वृत्तं भगवतो लेखेन च तस्य त्वरातिशयमात्मदर्शनेऽवधृत्य सपदि ततो निर्गन्तुं कृताभिनिवेशा अपि तत्रत्याश्रितजनमनोरथानुवर्तनेनोपरुद्धत्वराः, अचिरेणैवागमनमात्मनः सन्देशहरमुखेनावगमय्य मुक्तानन्दमुनिम्, कतिपयेष्वतीतेषु दिवसेषु ततः प्रस्थाय परिवृताः शिष्यमण्डलेन प्राप्य पिप्पलाख्यं ग्रामं स्वचरणनलिनसेवकस्य नृसिंहनाम्नो विप्रवर्यस्य गृहं पावनयन्तः स्वागमनसन्देशहरं कमपि मुक्तानन्दस्वामिनः सकाशं प्रेषयामासुः। श्रुत्वा सन्देशहरमुखाच्छ्रीस्वामिनामागमनवचनं सपदि सञ्जातहर्षो मुक्तानन्दमुनिः प्राह भगवन्तम्। यस्य चरणकमलसेवारसाघ्रापरं नः सुखाय, यस्य च दर्शनमाकाङ्क्षमाणो भवांस्तदसन्निधानेन क्षणमपि दिनसहस्रमिव व्यपगतमिह मन्यते, सोऽयं नः स्वामी नातिदूरे पिप्पलग्रामेऽस्मदनुग्रहाय सन्निहितः, तदितोऽद्यैव निर्गच्छाम इति। अथ भगवान् समुपश्रुत्य श्रुतिपथसुखावहमुदन्तं सह मुक्तानन्दस्वामिना निरगात् लोजपुरात्। अन्ये च तावनु त्यागिनः। वेगेन व्यतीत्य पन्थानं, नदीं च समुत्तीर्य पूर्वाह्ण एव प्राप्य पिप्पलग्रामं, श्रीस्वामिचरणरेणुपवित्रितं नरसिंहाह्वयस्य विप्रवरस्य वेश्म प्राविशन्।

तत्र मध्ये वेश्मनः आस्तीर्णमहार्हास्तरणे नातितुङ्गे भद्रासने समुपविष्टं, परिचर्यमाणं परिजनैः, अभ्यर्च्यमानमनन्यमानसैर्निजचरणकमलसमाश्रयैः, अनिमेषनयनमवलोक्यमानवदनारविन्दमाज्ञाप्रतीक्षैरन्तरङ्गसेवकैः, सदुपदेशसुधारसास्वादलोभादहमहमिकया समापततां समवायेन जिज्ञासूनां परिवृतपरिसरप्रदेशम्, वाचाऽमृतमयवाहिन्या भवदवदहनदह्यमानानाप्याययन्तम्, प्रशान्तगम्भीरयाऽऽकृत्या दर्शनपथगोचरीभूतया सपदि प्रेक्षकाणां सत्त्वमेवोद्भावयन्तम्, अनेकशिष्यप्रशिष्यमण्डलपरिवृतं गुरुवरमवलोक्य सर्व एव मुक्तानन्दप्रमुखाः सपदि समुद्भूतेन भक्तिभरेणावनतकन्धरा नमश्चक्रुः। अयमप्याश्रितमानुषसंस्थानो भगवान्प्रेमरसपूरिपूर्णनाशयेन, विस्मयस्तिमिताभ्यां विलोचनाभ्यां भक्तिभरावनतेन मूर्ध्ना च समुपलक्षितः करकमलयोरञ्जलिं तच्चरणकमलयोरर्पयन्प्रणनाम साष्टाङ्गं दण्डवद्धरातले विन्यस्तदेहः। प्रणमन्तमेवैनमभ्युत्थाय विनिवार्य भूयोभूयः प्रणामपरिश्रमात् सादरं समालिङ्ग्य स्वयमुपविष्टः समीप एव स्वस्यासनस्योपवेशनमभ्यनुज्ञायान्यांश्च मुक्तानन्दप्रभृतीन्यथार्हमभ्यनुज्ञाय समुपविष्टेषु यथायथं तेषु तेषु, सदसि सर्वेषु सकौतुकमाश्चर्यदर्शनं बालयोगीन्द्रमभि दत्तदृष्टिषु देशिकवरस्तं बालयोगीन्द्रमवदत्—यस्ते जन्मना समलङ्कृतोऽन्ववायो देशो वा तं मन्ये पावनम्, तौ च नाम्ना ज्ञातुमिच्छामः। आकृत्यैवानुमीयते नाम तपसि ते निष्ठा, परं कियता कालेनैतद्विविदिषामः। अनिकेतस्यात्मनिकेतस्यापि ते कोऽस्मासिरर्थः, यन्नः समागममाकाङ्क्षमाणश्चिरादिह कृतावासोऽसीति। अथैवमुक्तो भगवानाह—कोसलेषु क्वचिद्ग्रामे सामशाखाध्यायिनो हरिप्रसादशर्मणो विप्रस्यात्मसम्भवतां प्राप्य, केनापि भागधेयेन शोभनेन बाल्य एव व्यपगतैषणो वनं प्रविश्य तपश्चरन्, महतां समागमप्रभावेनोपलभ्य योगबलम्, आहिमाद्रेर्भुवमनुक्रमेण पर्यटन्, अनुप्राप्तोऽस्मीमं देशम्। यद्यपि समये समये साक्षात्क्रियते नामाश्चर्यमात्मज्योतिरखण्डमस्पृष्टं गुणैर्विलक्षणं स्थूललिङ्गकारणेभ्यो विज्ञानघनं किमप्यनादिनिधनं सम्पन्नं प्राहेण स्वभावेन। स च न साक्षात्कारपदवीमनुप्राप्तः, यस्मिन्नतितरां रज्यति मे चेतः, यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः, उत्तमः पुरुषो योऽसौ परमात्मेत्युदाहृतः, यः क्षरात्सकलादस्मादक्षरादपि चोत्तमः, योऽसौ लोकेषु वेदेषु प्रथितः पुरुषोत्तमः, भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चापि कर्माणि यस्मिन्दृष्टे परावरे। तस्यानवधिकानन्दस्य सकलजगदुद्भवस्थितिलयलीलस्य श्रीकृष्णस्य साक्षात्काराय स्पृहयन्नयन्तमुपसन्नोऽस्मीति। श्रुत्वेदमाह श्रीस्वामी—प्रायः पश्यन्ति नापरमात्मनो

योगगतयो बहवः। यद्विज्ञानघन एवाश्चर्यमये व्यपेतसकलदुःखे व्यापृतयोगहृदयः सखायमपि पार्श्ववर्तिनं विस्मरन्ति सर्वभूतसुहृदं सर्वकर्मसमाराध्यमपरिमितानन्दघनं परमात्मानं परमपुरुषं श्रीकृष्णम्। दैवीं सम्पदमनन्यसामान्यामभिजातस्य ते सेयमभिरुचिः सकलजगदुज्जीवनाय प्रभवति। विरलाः प्रष्टारः श्रोतारश्च भवादृशाः। वयं भवादृशेभ्यश्चिरात्स्पृहयन्तः स्मः। स च न केवलेन योगेन गम्यः, भक्त्या त्वनन्यया शक्यः किंतु तात स तादृशः ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च पुमान्परः, भक्त्या तमभिजानीहि यावान्यश्चास्ति तत्त्वतः, तन्नः परिसरे स्थीयतां कमपि समयम्, अवसरे प्राप्स्यसि मनोरथसिद्धिमिति। अथैवमुक्तस्तत्परिचर्यापरः, प्रतीक्षमाणस्तत्प्रसादं, मुकानन्दप्रभृतिभिः सब्रह्मचारिभिः पुरस्क्रियमाणः, कमपि समयं गुरुसन्देशानुवर्तनेन, कमपि समयमात्मनिध्यानेन, कमपि समयमनुवर्तमानानां तत्त्वहितावबोधनेन, कमपि समयं योगमारुरुक्षतां यमनियमासनादियोगाङ्गोपदेशेन, कमपि समयं श्रीकृष्णानुस्मरणेनातिवाहयन्नुवास।

अथ श्रीस्वामी जातु तदभिलषितं पूरयन्, अन्वहं श्रीकृष्णाराधनसमये पूजोपकरणसज्जीकरणकर्मणि तमन्वयुङ्क्त। सोऽपि यथानियोगं तत्तत्सपर्यासमयेषु सादरं धूपदीपादितत्तदुपचारद्रव्यसज्जीकरणपरस्तन्मनोनुकूलं परिचर्यां कुर्वन्गुरोः प्रसादपात्रमभूत्। गुरुवरश्चायमात्मना समर्प्यमाणांस्तत्तदुपचारानात्मैकनयनगोचरीभूय साक्षात्स्वीकुर्वन्तं परमपुरुषं श्रीकृष्णं स्वपरिसरवर्तिनः पूजोपकरणद्रव्यप्रदानव्यापृतहस्तस्य निजपरिचरणपरायणस्य श्रीकृष्णैकनिमग्नचित्तस्य बालयोगीन्द्रस्य नयनपथगोचरमकारयत्। दृष्ट्वा च तं भगवानखिलमनोनयनहारिदिव्यरूपं, दिव्यपीताम्बरधरं सर्वातिशायिनाऽनुभावेन सकललोकसाम्राज्यं प्रकाशयताऽद्वितीयेन प्रकाशमानम्, अनेकदिव्यविभूषणविभूषितम्, आनन्दघनमक्षरात्परतः परं कमपि पुरुषोत्तमं निखिलमुनिजनमनोनिवासं, सपदि परमानन्दे नैजे क्वापि मग्नो बभूव। अथैनं सञ्जातदीक्षारुचिमवसरे पारमैकान्तिकमहादीक्षाविधानेन दीक्षयन् देशिकेन्द्रः श्रीस्वामी स्वसम्प्रदायस्य प्रतिष्ठामनेन सम्पादयन् सर्वेभ्यः स्वचरणसेवकेभ्यो भावविशेषमस्मिन्वबन्ध। व्यराजत च तदानीमयं विशेषतो वर्णिलिङ्गैरिव महादीक्षालिङ्गैः। समाख्ये चाभूतामस्य दीक्षाङ्गभूते सहजानन्द इति नारायणमुनिरिति च। अथ श्रीस्वामी च रैवतकोपत्यकासु तत्र तत्र ग्रामेषु तत्तदाश्रितजनसमुज्जीवनाय सञ्चरन्सहैव नारायणमुनिना तेन, पुरस्कृत्य च तं तांस्तान्धर्मज्ञानवैराग्योपदेशाञ्शिष्येभ्यः प्रयच्छन्, निनाय हायनद्वयम्।

अथैकदा जयन्तपुर (जेतपूर) मधिवसतोऽस्य श्रीस्वामिनो मनसि समुदभूदयमध्यवसायः। अयं हि सहजानन्दः सर्वानिमानस्मदन्तेवासिनः समतिलङ्घ्य गुणैर्भूयसा च विनयसम्पदा भ्राजते, अन्वहमनुवर्धते चास्य विज्ञानवैराग्ये, न च्यवति नाम कदाचिदपि सत्पात्, न सहते चापकारिणामपि दुःखम्, सहते च परार्थे क्लेशमापतितम्, क्षमते नामापराधानप्यसह्यान्परकृतान्, वितरति चाभ्यर्थिताधिकमर्थिभ्यः, चिन्तयति चोपकारमेवापकारिणाम्, आर्जवमेवास्य करणत्रयेऽप्येकरूपम्, विषयसन्निधावप्यक्षोभः, शमादयश्च स्वाभाविकाः, अकलङ्कितता च सर्वगुणदूषणेन मानकलङ्केन, अभिनिवेशश्चाविचाल्यो धर्मे, अनन्यसामान्यो भक्तिरसास्वादः, समाधिपर्यन्ता च योगसंसिद्धिः, तदयमेव देशिकपदमर्हतीति। अवधार्यैवं सदसि समुपस्थितेषु स्वचरणकमलरसिकेषु सर्वेषु मुक्तानन्दप्रभृतिषु त्यागिषु गृहस्थेषु चापरेषु भगवन्तमिदमाह—अप्रतिक्षेप्यमसद्वचनम्, अग्रणीर्भवानन्तेवासिनां नः, न कश्चित्त्वामतिशेते ज्ञानादिभिर्गुणैः। अर्हति च भवानेवास्मिन्भवसागरे निमग्नानुद्धर्तुम्। एतावता कालेन कथमपि विधृतमिमं मुमुक्षुजनसमुज्जीवनौपयिकं पारमैकान्तिकधर्मप्रवर्तनभारं त्वय्याधातुमिच्छामीति। श्रुत्वेदं प्रत्युवाच भगवान्गुरुवरम्—भगवन्ननतिलङ्घनीयं नाम शासनं भवतः, कथमतदर्हं तन्नियोगः शक्येतार्थाय, बालोऽस्यासमर्थोऽस्य भारस्य। रोचते मे सदा श्रीस्वामिचरणसेवैव। भवादृशश्चेहुरर्मन्ये यावज्जीवं शिष्यभाव एव श्रेयः, यत् शासनवशगस्य न क्वचित् स्खालित्यावसरः, शासनं च तत्त्वदर्शिनो हितपरस्य, गुरुध्यातमज्ञानदीपेनापसार्य प्रासङ्गिकं तमःसंरोधं प्रवेशयति तत्त्वार्थे दृष्टिं शिष्यस्य समये समये। आचरंश्चायमक्लेशेनानुशिक्षयति धर्मान्, तदेवं देशिककृपानुशासनवशगतैव यावज्जीवं श्रेयसे यदि भाग्येन सा लभ्येत। इदं पुनराचार्यपदसमधिरोहणं मन्ये कठिनतरम्। यस्तु कश्चित्तत्त्वदर्शी क्वचन विजने वने रहसि वसन्कस्मैचिदुपसन्नाय संसारदावानलतो भीतभीताय सपदि परित्यज्य

गृहं तापोपशामकं गुरुं चिरादन्विष्यते कृतसमयप्रतीक्षाय तत्त्वमवबोध्यानुजानाति मननादये विविक्तवासं स्वयं विविक्तवासैकरुचिः, स चायमेकप्रकारो गुरुः, नास्य सङ्गप्रसङ्गः, तत्कृतप्रवृत्तिभूयस्ताया वा, येन कदाचिद्विक्षोभस्य स्यात्प्रमादिकस्य प्रसङ्गः। यद्वैकोऽपि ब्रह्मविदग्रेसरो जानश्रुतेर्मुमुक्षां परीक्षमाणः प्रवृत्तिभूयिष्ठं गार्हस्थ्यं प्राविशत्। परमयं परे ब्रह्मणि प्रविष्टस्तदात्मकमेवाखिलं पश्यन् पद्मपत्रमिवाम्भसाऽलिप्तमलिप्तो गुणैर्व्यवहरन्निव वाहिरभवत्। युज्यते नामैवंविधानाम्। यद्यनिष्पन्नस्य चेदीदृशः प्रसङ्गः, का नाम स्थितिः स्यात्। अयं त्वपरः प्रकारो गुरुपदस्य, यत्स्वयं सञ्जातब्रह्मसाक्षात्कारः प्रशान्ततापत्रयः पश्यञ्जनान्संसारदावानलदह्यमानान् दयमानमनाः, अप्रियामपि प्रवृत्तिभूयस्तां परहितार्थमुररीकुर्वन् स्वयमवसरप्रतीक्षः समये समये तत्त्वहिते सम्बोधयंस्तांस्तदुज्जीवनाय यतते। अनेन च परमपुरुषेणेव जगद्धितार्थमवतीर्णेन भाव्यम्। एवंविधानां हि बहुशः प्रसजति विविधजनसमवायसमागमः। निष्पन्नयोगस्यापि भरतस्य हरिणशावकसङ्गमात्रेण समुद्भूतपुनर्भवः। अथ किमु वक्तव्यमन्येषाम्। तदस्मिन्नाचार्यपदे स्थातुं कथमहमर्हः स्याम्। तद्रोचते मे श्रीस्वामिचरणसेवैव सर्वदा, क्षन्तव्यं चेदमतिशासनमपि वचनं स्वाधिकारानुरूपमितीति। उपश्रुत्येदं वचनं विनयमधुरिमोपेतं प्राह श्रीस्वामी—सत्यमाह भवान् 'अनेन च परमपुरुषेणेवावतीर्णेन भाव्य'मिति। अत एवास्मिंस्त्यागिसमवाये सर्वान्समतीत्य भवन्तमन्विच्छामि। नहीह कस्यापि भवत इव परहितैकप्रवृत्तिपरता, अक्षोभ्यतां सागरस्येव भवतः पश्यामि कामैरपरिक्षोभ्यताम्, समयो देशश्चाद्य भवादृशमेवापेक्षते धर्मपरित्राणाय, इदानीं खलु पारलौकिकश्रेयःपथसंरक्षणापदेशेन प्रवृत्तैरनेकैर्लुण्टाकैरिव कथमप्यभिमुखीकृत्य तस्मिन्नेव पथि तांस्तान्मुग्धाञ्जनान्प्रसभमपहृत्य धर्मार्थान् पातयन्ति क्वचिद्गर्ते। तल्लोकानुग्रहमेव परमपुरुषार्थं पश्यता मद्वचनमनतिलङ्घनीयं मन्यमानेनेदं वचनमस्मदीयमुररीकार्यमिति। श्रुत्वा वचनं श्रीस्वामिनां लोकहिताचरणं परमधर्मतया विनिश्चित्य संस्मरंश्चात्मनः सङ्कल्पं सर्वजीवहितावहमङ्गीचकार गुरुनिदेशम्। अथ श्रीस्वामी श्रीसहजानन्दं भगवन्तमाचार्यासने समुपवेश्य सर्वानात्मीयानिदमवोचत्–अद्यप्रभृत्ययमिदमाचार्यपदमस्मदधिष्ठितमधिष्ठाय सर्वेषां वो निःश्रेयसोपायमुपदिशन्, अपनयंस्तमःसमुद्भवं कलावभिवृद्धं, विज्ञानालोकं परितः प्रचारयन्, समुज्जीवयंश्च वचनामृतैर्विषयविषास्वादमूर्च्छितान्, पाययंश्चाश्रितानखिलान्क्रमप्यानन्दरसमानन्दमयस्यास्मत्सम्प्रदायमभिवर्धयिष्यति। सर्वैर्युष्माभिरस्य सन्देशपथे स्थेयमिति। अथ सर्वे एव श्रीस्वामिचरणसरसिजरसिकाश्चिराकाङ्क्षितमिदं शासनं समुपश्रुत्य प्रहृष्टाः समभिनन्द्य शासनं तत्प्रणतेन शिरसा प्रत्यगृह्णन्।

अथैवमेनमाचार्यपदे प्रतिष्ठाप्य कृतकार्यमात्मानमवधार्य प्राप्य फणिग्रामं (फरेणी) प्राप्ते च तस्मिन्नायुषोऽन्त्येऽवसरे स्थूलमिमं भूतसङ्घातं परित्यज्य क्वाप्यात्मनः स्वरूपे सहजविशुद्धे प्रविशन्, रहसि समुपविष्टः संयम्य सर्वद्वाराणि निरुध्य च मनः क्वाप्यानन्दमये, योगधारणामास्थितः, कालेनोपरतश्वासः कलेवरमत्याक्षीत्। अथ (संवत्-१८५८) मार्गशुक्लत्रयोदश्यां सहस्रकिरण इवास्तमुपगते श्रीस्वामिनि सर्वे एव सपदि तच्चरणावलम्बा विनष्टदृष्टीनात्मनो मत्वाऽनुशोचन्तः, समुद्बोधिताश्च भगवता श्रीसहजानन्दस्वामिना विज्ञानदीपेनेवालौकिकेनाप्रकम्प्येन विपद्गर्ववातादिभिः, लब्धदृष्टिप्रसरास्तं भगवन्तं पुरस्कृत्य विधायौर्ध्वदैहिकं कर्म गुरोः, भगवतः क्रीडोपकरणभूतस्य कालस्य गतिमनतिलङ्घनीयां मन्यमानाः, मन्यमानाश्च श्रीस्वामिनमेव सहजानन्दरूपेणावस्थितं, सेतुनेव सुखसन्तरणेनानेन जगतः सेतुना भगवता नारायणमुनिना भवप्रवाहसन्तरणं सुगममवाप्य प्रहृष्यन्तः, व्यपेतजन्मजरामरणशोकभयाः सुखेन तत्पादच्छायायां न्यवसन्। अथ गुरोः श्रीस्वामिनो यथाविध्यौर्ध्वदैहिके कर्मणि परिसमाप्ते भगवान्सर्वानेव त्यागिनो गृहस्थांश्च श्रीस्वामिचरणसमाश्रयान्यथानिदेशं सदसि समवेतान्स्वामिनन्दनं स्नेहरसपेशलेन वचसेदमुवाच—ओंनमः सच्चिदानन्दघनाय परमगुरवे परमपुरुषाय परमात्मने। श्रीस्वामिने च तद्विज्ञानामृतप्रदाय सकलकल्मषप्रशमनपादपांसवे। वयमधुना श्रीस्वामिचरणनलिनसमाश्रयणप्रभावासादितसकलतीर्थतीर्थीकरणसमृद्धिं पादुकामिमामनुसरन्तः स्नेहार्द्रेण चेतसा किञ्चिदावेदयामः। नार्हो नाम वयमिदं श्रीस्वामिचरणैरधिष्ठितं पदमधिवसितुम्। अथापि तत्पदकमलसंलग्नस्येव परागस्य मे

# भूमिका ।

मन्ये तदासने संस्थितिम्। आद्रियते नाम तद्विश्लेषे तच्चरणरेणुरपि तदासनगैस्तदेकभक्तैः। कस्यायं महिमा। अयमहं च तत्प्रसादाहितविज्ञानविशेषः पार्थिवात्परागाद्विशिष्टोऽस्मि। तद्बुद्धि-ज्ञानानुगुणं किमपि तदनुज्ञासमुचितं श्रेयो लोकस्य सम्पाद्यं नाम मया। ये पुनरिह सदस्याः सन्नि-हिताः सब्रह्मचारिणोऽस्माकं परमहंसवृत्तयः श्रीस्वामिनिदेशेन स्नेहेन भूयसा मामनुवर्तमानास्तै-र्ममास्मिन्प्रयत्ने विज्ञानालोकप्रसारणे ममैव मुखैरिवापरैर्मूर्तैर्भाव्यम्। यैरहं सहस्रवदनो भूत्वा परितः शक्नुयामुपदेष्टुम्। ये पुनरपरे मुमुक्षवो युञ्जानास्तान्वयमिदमादिशामः। इन्द्रियाणि प्रमा-थीनि हरन्ति प्रसभं मनः। इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ। तयोर्न वशमागच्छेत्। तस्मात्संहृत्य वर्तेत कूर्मोऽङ्गानीव सर्वशः इन्द्रियाणीन्द्रियार्थेभ्यः। अयं च सर्वाभ्युपायेषु प्रथमः, यत्प्रेमपूर्वमीश्वरानुसरणं, ततः कदाऽपि न प्रमदितव्यम्। दुर्विलङ्घ्या नाम मायेश्वरस्य। यया मनसः क्षोभो भवन्नसमाधेयो भवति। एवमीश्वरानुसरणापादितवीर्यैरभ्युपायैरिन्द्रियनिग्रहप्रवृ-त्तस्य योगो भवति शोभनः कालेन। ये पुनरिहामुत्र च श्रेयःकामनयाऽस्माननुपतिष्ठन्ते तान्गृहिणो विशेषतो वयमिदमावेदयामः। जातमात्रा एवार्थाय यतन्ते नाम। कोऽर्थः कोऽभ्युपाय इति तु चक्षुषैवावधारयन्ति च। न तेष्वाकृतेरपरं चतुष्पदेभ्यो विशेषं वयं पश्यामः। न खादन्ति न मेहन्ति किं ग्राम्याः पशवोऽपरे। अत एव ते पशुवद्दृष्टं दृष्टमनुधावन्तः श्वभ्रे वा कण्टके वा प्रबलदुःख-परिपाके पतन्तः सीदन्ति विषयदौर्गुण्यात्। इदमेव वैषम्यं चतुष्पदेभ्यो यद्दृष्टमनु विमर्शः, विमर्शे च स्वमतेः क्वचिदाप्तमतेन परिशोधनम्, आप्तवचनेन दृष्टसजातीयस्यैवागमैनेश्वरवचनेनादृष्टार्थाव-धारणं, ततश्च तदभ्युपायेष्वलौकिकेषु विश्वास इत्येवमादि। यूयं च सर्वे सुकृतपरिपाकेनाकृत्ये-षोकेन धीगुणेन च मानुषीं योनिं सफलयन्तः, कल्याणकाङ्क्षया धर्ममेव साधनमवलम्ब्य, धर्मनि-र्णये च मादृशान् शरणमुपगत्य, तत्त्वहितपुरुषार्थश्रवणे विशेषेण बद्धादराः स्थ, मन्ये फलावन्ध्य-भ्युदयोऽस्माकं सुपरिणतः। कलिर्हि कलुषयति हृदयं सर्वस्य, कः पुनरस्मिन्नवसरेऽतीन्द्रियार्थे-ष्वास्थां कुर्यात्, तदुर्लभो ह्येवंविधार्थानां श्रोता। सत्येवं कस्मा उपदिशामो हितं, अथ को वार्थः स्याल्लोकानामस्माभिः। अत एवाहार्थिदौर्लभ्येन खिन्नो भगवान्—"उदाराः सर्व एवैते" इति। एतावदेवानुशासनमिह नः यदि स्यात्कामना वः फलेषु दृष्टेष्वदृष्टेषु वा न तावता महती हानिः। स्यादियं गुणसङ्गेन। अनभिभवनीयता गुणैर्हि दुर्घटा गुणमयेऽस्मिन्मण्डले। परमेषां प्राप्तौ साध्ये साधने च यो नियमः शास्त्रदृष्टः स एवाश्रयणीयः, न तु स्वच्छन्दाचरणम्। यत्तीव्रकामवेगे परदा-राक्रमणम्, यच्चोत्कटायां धनाशायां परद्रव्यापहरणमित्येवमादि। परमिहाभ्युपायेषु यत् भिन्नभि-न्नेषु विविधदृष्टेषु तत्तदर्थाकाङ्क्षया पथि पथि भिक्षुकस्येव पर्यटनं तन्नातीव शोभनम्। यदसौ पर-मोदारः सर्वेभ्यः सर्वाणि फलानि प्रयच्छन्नाविरास्ते भगवान्पुरुषोत्तमः श्रीकृष्णः, तत्समाराधनेन सुगमेन तत्तदिष्टार्थसंपादनं तु शोभनम्। ये पुनरिमं सर्वसुहृदं सर्वकर्मसमाराध्यं सर्वान्तर्यामि-णमविज्ञाय केवलमिन्द्रादीन्यजन्ते नामार्थसिद्धये ते ह्यविधिपूर्वकमेव यजन्ते। परं भगवान् सर्व-तनुरात्मन एवान्तत आराधनं मत्वा परमोदारः प्रयच्छति तत्तदिष्टम्। तदेवं तत्त्वेऽवस्थिते किमिति पामराः फलमिदमनेन मम भावि, इदं चानेन, तच्च तेनेति दृष्टं दृष्टमनु देवाभासमुपधावन्त्यस्थाने प्रदर्शितदन्तपङ्क्तयस्तदाराधनप्रयासमसह्यमपि वहन्तो निरपत्रपाः। ते चेन्द्रादयः कतिपयफलमात्र-वितरणसमर्था, अथ च दुराराध्याः। यानि च तदाराधनरूपाणि चोदनालक्षणानि कर्माणि तानि पुनः प्रमादे केवलमनर्थावहानि देशकालाद्यनेकाधिकारसापेक्षाणि न सर्वसुगमानि। यश्चायं त्रयी-धर्मः पर्यवसानवृत्त्या परमात्मानमुपस्पृशन्नपि गुणानुगुणां फले प्रवृत्तिं तदुपायं च तदनुगुणमव-लम्ब्य प्रवृत्तः कश्मलेऽपि क्वचिद्योजयति। तदस्मभ्यं त्वेवमादि कर्मजातं न रोचते। यदि वः स्यात्स्पृहा क्वचिदर्थे कामे वा धर्मे, समाराध्यतां नाम भगवान् पुरुषोत्तमः, तदाराधनं च सुकरम्, यदयं नित्यतृप्तः। अपूर्ण एव हि दुराराध्यो भवति, येन येनापूर्तिस्तस्य तस्यार्पणेन हि स तृप्येत्, तत्कुत एव सम्पादयेद्योऽर्थी स्वयं दीनः, यः परिपूर्णस्तस्य तुष्टये तु तस्मिन्नकपटं क्रियमाणं प्रीति-मात्रं प्रभवति। सैव परा प्रीतिर्भक्तिरित्युच्यते। नेह द्रव्यार्जनाद्यायासक्लेशः, मानसवृत्तिमात्रसम्पाद्य-स्वरूपा हि भक्तिः, या पुनः पत्नीपुत्रादिष्वभ्यस्ता प्रीतिः सैव पुरुषोत्तमे संयोज्यमाना भवति भक्ति-

रिति विना शरीरप्रयासं सुखेन सम्पाद्या नाम। 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदन'मिति नवविधां च भक्तिं स्मरता नैकापि बाह्या प्रवृत्तिः स्मृता। अर्चनं च न द्रव्यगौरवसापेक्षम्, पत्रेण तोयेनापि तत्सम्पत्तेः। आह च भगवान्—'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः' इति। नाप्यपूर्वकर्मप्रयाससापेक्षता, किन्तु यदेव कर्मानुवर्ततेऽन्वहं प्रकृतिनियतं तदेव भावविशेषयोगेन भवति तदाराधनाय; आह च—'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पण'मिति, 'स्वकर्मणा तमभ्यर्च्ये'ति च। नाप्याचारपरिभ्रष्टस्य भक्तावनधिकारः, दुराचारस्याप्रायश्चित्तितस्य वा, स्मरति च भगवान्—'अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः' इति। नापि वर्णोत्कर्षसापेक्षताऽस्याम्, 'मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्' इति। नाप्यनया फलमिदमेव सिद्ध्येदिदं नेति फलसाधनभावे सङ्कोचोऽस्याः, आह च भगवान्—'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन!। आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ' इति। तदेवं सर्वाधिकारे सर्वतः सुगमे सर्वफलदे सति भक्तिकल्पतरौ किमिति परिमितैकफलमात्रप्रदस्य विविधनियमवृतिशतपरिवृतस्य दुरारोहस्य तत्तत्कर्मवृक्षस्य मूले मुहुरनुधावनेनात्मानं क्लेशयथ। आश्रियतां नामायमेव कल्पतरुः। यश्चायं त्रयीधर्मो ज्योतिष्टोमादिर्वर्णविशेषाधिकारनियतिसापेक्षः स हि स्वस्मिन्नधिकुर्वतामयं पञ्चमः, अयं चतुर्थः, अयं तु तृतीयः, अहमेव च प्रथमः, ममैवाधिकारो न परस्येत्येवमाद्यध्यवसायमनुवर्धयन्नन्ततोऽभिमतिकलङ्कापादनेन मलिनयति मनो मदिराबिन्दुमिश्रशातकुम्भमयकुम्भगततीर्थसलिलवदिति नास्माकमत्यादरोऽस्मिन् पथि। नैतावता वयं त्याज्य एव पन्थास्त्रय्या इति वदामः। यावतानुष्ठितेन स्ववर्णसंरक्षणं तदवश्यमभिमतिपरित्यागेन विधेयं नाम। फलं त्वभिलषितं भगवद्भक्तिसुधारसत एव सुखेन समधिगम्यतामिति। भगवतो वचनमिदममृतमयमिव सर्वतः स्वादुतमं श्रुतिपुटाभ्यामापीय सर्व एव ते परया तृप्त्योपेताः परमानन्दजलधौ निमग्ना नापरं भगवच्चरणसेवारसादबुद्ध्यन्त पुरुषार्थम्। अथ भगवान् गुरुनिदेशं सङ्कल्पं चात्मनः समनुस्मरन्, धर्मच्छलेन तत्र तत्र प्रवृद्धामधर्मप्रवृत्तिं प्रशमयन्, समुज्जीवयंश्च साधुजनान्, सह सर्वैरनुयायिभिः परमहंसवृत्तिभिः परिवृतः, प्रतस्थे कृतार्थयितुं तत्तद्ग्रामनगरनिवासिनः समाश्रितान्।

अथ पावनयंस्तांस्तानाश्रितावासदेशान्स्वचरणकमलपांसुभिः, क्वचिद्दिनमेकं दिने दिनानि वा यथायोग्यं वसन्नमृतमयैरिवोपदेशैर्भवसर्पसन्दष्टान्समुज्जीवयन् क्रमाद्वाप मकपालयपत्तनम्। नगराद्बहिरेव क्वचन तरुमूले कृतावासमनेकपरमहंसमण्डलपरिवृतमेनमुपश्रुत्य नगरस्थाः सर्व एव तच्चरणकमलसंश्रयणायाहमहमिकया समाजग्मुः। तांश्चायमभिनन्दयन्नपूर्वरसावहैर्वचोभिरमृतगर्भैरुपदेशैश्च प्रशमयंस्तापत्रयमेषां तदभ्यर्थनया तत्रैव नगरे कतिपयदिनानि निवसतिमभ्यनुजानाति स्म। अथ प्रशमयन्पथिकजनतृषार्तिं नगराद्बहिः पथिकजनसमवायसमुचिते स्थाने वापीमेकां प्रसन्नमधुरशीतलसलिलां महतीं खनयित्वा यथाविधि विधाय वापीप्रतिष्ठां तदङ्गतया सहस्रशो ब्राह्मणान्भोजयंस्तत्समयसम्पन्नान्विविधान्भक्ष्यभोज्यवर्गान्देवाय निवेदयन्नारभत देवस्य सपर्याम्, अलक्ष्यत च तदा तैस्तैरन्तरङ्गभक्तैरखिलैः परिधृतपीताम्बरः शङ्खचक्रगदापद्मधरैश्चतुर्भिराजानुलम्बिभिर्भुजैरुपलक्षितः श्रीवत्सवनमालालङ्कृतेनोरसा भ्राजमान उपसेव्यमानश्चोभयतः पार्श्वयोः सपर्योपकरणहस्ताभ्यां धर्मभक्तिभ्यां मूर्ताभ्यां सकलजगद्रक्षणैकान्तेन स्वेन दिव्येन रूपेण नारायणात्मना। अत्याश्चर्यमखिलमङ्गलावहं भगवतो रूपं साक्षात्कृत्य ते करतलगतमिव निःश्रेयसफलं प्राप्य लब्धविज्ञानफला व्यस्मार्षुरखिलस्याप्यात्मव्यापारस्य। उपश्रुत्यस्याश्चर्यावहं चरितमपरे समेत्य भगवतः सन्निधिं तच्चरणयोः प्रणम्य स्वस्वमनोरथसिद्धिमाकाङ्क्षमाणास्तत्परिचरणैकपरा अभूवन्। भगवानपि तेषां मनोरथं पूरयन्ननन्यसामान्यमतिमानुषमैश्वर्यमात्मनस्तेभ्यस्तेभ्यः प्रदर्शयन्नलक्ष्यत तैस्तैस्तत्तदभिमतेन दैवेन रूपेण। आसीन्नाम तस्मिन्नेव नगरे

मेघजिन्नामा निष्पन्नयोगमसदृशमात्मानं मन्यमानः साधुजनावमाननैकपरः। यो नाम श्रीस्वामिनः प्रसादादेव संप्राप्तयोगविद्यः, तच्चरणसमाश्रयणेऽपि सतीर्थ्यस्यापि भगवतः श्रीस्वामिभिरप्यनन्दितमैश्वर्यमाचार्यपदनिर्वहणसमृद्धिं चासहमानः सर्वानेव श्रीस्वामिचरणकमलसमाश्रयानपि साधूनवमानयन्नात्मानमेव सर्वतः श्रेष्ठं वदन्नास। इमं चावमानं श्रीस्वामिचरणकमलसमाश्रयाणामसहमानो भगवांस्तस्यापि श्रेयो विधास्यन्ननुप्राप्तं सदसि तं विवदमानं च साधुभिः सदुपदेशैः संबोधयितुं प्रवृत्तो निष्फलप्रवृत्तिर्भूत्वा निग्रहमन्तरा नासौ प्रशाम्येदिति विनिश्चित्य तमतिवादिनं योगशक्तिप्रदर्शनाय प्रवृत्तमेकाग्रया दृष्ट्या निर्निमेषं क्षणं पश्यन्समाचकर्ष सर्वं तदीयं योगसामर्थ्यम्। दाशरथिनेव भार्गवः सपदि स हृतसारः परं प्राणसंशयमापन्नः पपात भूमौ काष्ठवत्। अथ भगवांस्तु दयमानमना व्यपेतमदमावद्धाञ्जलिं प्रहसन्निवोवाच। इतः परं त्यक्त्वा दर्पं साधुषु विनयेन वर्तस्वेत्यनुशास्य तदैव परिगृहीतशिष्यभावं समुज्जीवयन्नेनमुपदिदेश स्वात्महितानर्थान्। सोऽपि तदाप्रभृति भगवति विनयेनावर्तत। कर्णाकर्णिकयेदमीदृशममानुषमैश्वर्यमुपश्रुत्य तन्नगराधिपो यवनः पार्थिवो विस्मयाविष्टः प्राप्य भगवतः सन्निधिं तत्प्रसाददृष्टाश्चर्यरूपः परां प्रीतिं तच्चरणयोर्ववन्ध। अथ भगवति चिरनिवासमेकत्र परिजिहीर्षति प्रस्थातुकामे ग्रामान्तरं सर्वे एव पौराः सह पार्थिवेन सङ्गीभूय समेत्य भगवतः सन्निधिं सप्रश्रयं साञ्जलिबन्धं न्यवेदयन्स्वमनोरथम्—यच्चातुर्मास्ये नियमः स तु श्रीमच्चरणकमलसेवया श्रीमुखसुधांशुसुधाधारारसास्वादेन च सुसंस्कार्य इति नः सर्वेषामाकाङ्क्षा भवता सार्थयितव्येति। भगवांश्च तेषां प्रेमरसपरवशो भूत्वा तत्प्रार्थनामङ्गीचकार। अथ वसन्पौरजनमनोरथानुरोधेन तत्र तदा तदा तांस्तांश्चरणसमाश्रयानवबोधयन्ननुत्तमं रहस्यं धर्मतत्त्वस्य समये समये प्रवर्त्यमानेन भक्तिरसामृतपरीवाहरूपेणेव जन्माष्टम्यादिमहोत्सवेन सर्वानानन्दयन्नन्यैश्च कैश्चिद्भक्तैः स्वेनैव सकलमहर्षिसेव्येन दिव्येन रूपेणावलोक्यमानो यथाभ्यर्थितमुवास तत्र।

अथ ततो निर्गच्छन्ननुज्ञाप्यानेकान्वर्णिप्रमुखांस्त्यागिनः शिष्यजनसंबोधनाय नानादेशपर्यटनाय च स्वयं मुक्तानन्दप्रभृतिभिः परिमितैस्त्यागिवरैः परिवृतः समनुगच्छतः पौराननुज्ञाप्य धर्मादेशपूर्वकं प्रतस्थे कालवाणीममि। सर्वैश्च तद्ग्रामवासिभिर्भक्तैरभ्युद्गतो भगवान्प्रविश्य तं कालवाणीग्रामं तत्रत्यानां भक्तानामत्याश्चर्यममानुषमात्मनः प्रभावमपरोक्षयन्नुपदिशंश्च रहस्यं धर्मस्य परिचर्यमाणश्च तैर्भक्तैरनन्यप्रेमरसपरिपूर्णैः द्वौ मासावुवास तत्र। इदमपरमत्याश्चर्यं तत्र समभूत्—ये नाम बाला वृद्धाः पामराः पण्डिता वा, स्त्रियो वा, सर्वे एव ते भगवतश्चरणसंश्रयाः, तदेकानुग्रहपात्रभूताः, परमेण तस्यानुग्रहेण सपदि समुपरतसकलबाह्यकरणव्यापाराः, प्रलीनसकलचेतोवृत्तयः, प्रज्वालितेनेव ज्ञानदीपेनात्मज्योतिषा स्वयम्प्रकाशमानेन समन्ततो दृश्यमानानवधिकानन्दघनाः, यमनियमादिक्रमेणानेककालाभ्यस्तयोगसाधनैरप्यलभ्यं समाधिलक्षणं योगैश्वर्यफलं समुपलभ्य मासं मासान् न व्यजानन्त व्यतीताम्। अन्वभूवंश्च समाधिसमये भगवतो रूपं सर्वकारणमत्याश्चर्यमिहस्थमिव। निर्वर्त्य तत्र प्रबोधिनीमहोत्सवं ततः प्रस्थाय प्राचीजस्तीतटे वर्तमानमक्षयाख्यं ग्रामम्। अथ विधाय तत्र माध्याह्निकसमयसमुचितां देवसपर्यां प्रेमरसार्द्रहृदयैर्भक्तैरादरेण समाराधितस्तस्मिन्नेव दिने तैरनुगम्यमानः प्रत्युद्गम्यमानश्च पिप्पलग्रामस्थैर्भक्तैः प्राप तं ग्रामं निकटवर्तिनम्। तयोर्ग्रामयोर्मिथो निकटवर्तिनोः षण्मासानुवास तत्रत्यभक्तजनप्रेमपरवशः। श्रूयते च—तयोर्ग्रामयोरतिनैकट्यादन्वहमादरातिरेकेण सपर्यास्वीकरणेन वयमस्मिन्नहन्यनुग्राह्या वयमेवास्मिन्नहन्यनुग्राह्या इति मिथः समुपरोधपूर्वकमभ्यर्थमानांस्तांस्तद्ग्रामद्वयनिवासिनः स्वैकान्तभक्तान् सर्वानेव पूर्णमनोरथानातन्वानः स्वयमुभयतो युगपदात्मीयेनैश्वर्येण स्वेनैव रूपेण सन्निधाय ग्रामद्वयेऽपि तैस्तैः कृतां सपर्यां स्वीचकारेति। अनितरसाधारणमस्य योगैश्वर्यमायालमखिला अप्यनुभूयास्मिन्ग्रामे तदेकचरणनिधानपराः परमात्मानमेवावनितले कृतावतरणमवधार्य व्यसरन्यावदस्य सर्वस्य। तत्र कार्तिके मासि पूर्णिमायां कृतश्रीकृष्णमहोत्सवं भद्रासनगतं भगवन्तमाराधयितुमहमहमिकया प्रवृत्ता भक्ताः स्रक्चन्दनाद्युपहारहस्ता यथाक्रमं परमया प्रीत्या प्राप्य भगवतः पादपीठोपकण्ठं परमानन्दनिमग्नाः समर्चयन्। अथ भगवानालस्यावसरे तैस्तैः प्रीत्या महत्या समर्पितं धनं समर्पितं च गूर्जरधर्मणा पदान्येन स्वनाथिमतिलङ्घ्य धनसमु-

द्यं सपदि तस्य सद्विनियोगमिच्छन्नकरोत्तत्रैव महतारम्भेण वैष्णवं मखम्। व्यतरच्च सर्वमेव तद्धनं तेभ्यस्तेभ्यो विप्रेभ्यो वाञ्छितादधिकप्रदानशीलोऽयं भगवान्। यावदयमुवास तत्र ग्रामेऽन्वहं समागच्छतो विप्रान्सहस्रशः प्राशयद्रसैरादरेण च स्वादुतममन्नममृतमयमुपदेशं च।

अथ ततः प्रस्थाय प्राप्य मेघपुरमुषित्वा तत्र द्वौ मासावनुगृह्य तत्रत्यान्भक्तांस्ततः प्राप मणिभद्रं (माणावदर) नाम नगरम्, तत्र मयारामनामकस्य द्विजवरस्य गृहे तदभ्यर्थनमनुपालयन्नावासमकरोत्। बहवस्तत्र भगवतः सेवायै समवेता नाम। अपूर्वश्च तत्र सर्वेषां भगवति भक्तिरसः प्रावर्तत। परितो भगवन्मुखारविन्दमधुधारास्वादलोभेन समुपविविशुर्जिज्ञासवः। तदानीं मयारामेण प्रणिपातपरिप्रश्नादिशुश्रूषुगुणपरिपूर्णेनानुपृष्टो भगवान् सविस्तरं देवासुरसर्गविभागनिरूपणपूर्वकं न्यरूपयच्चाम लोभादीनां दोषान्। यदपश्यन्तो दोषं तेषु बहवो निबध्यन्ते स्नेहादिना निपात्यन्ते चान्धकूपे रसास्वादादिना। तदेवं तत्र तान्बोधयन्नपनयंश्च तेषां विषयस्नेहानुबन्धमुवास दिनानि षट्। ततः प्रस्थाय भक्तजनप्रार्थनया अंजराख्ये( अंजार )ग्रामे कानिचिदुषित्वाहानि ततः प्राप्य भुजङ्गपुरं( भुज )सुन्दरजिन्नामकस्य रथकारस्य स्वचरणकमलसेवकस्य निकेतं स्वचरणसरोजरेणुभिः सुरभयंस्तांस्तानन्यभक्तान्बहूनामाश्चर्यमात्मनस्तत्तदैश्वरं रूपं तत्कालमापादितेन दिव्येन चक्षुषा साक्षात्कारयन्समाधिपर्यन्तां च योगसंसिद्धिं सुखेन तेभ्यस्तेभ्यो वितरन् दिनानि कानिचिदुवास तत्र। तत्र खलु नगरे त्रयः सोदर्याः कुबेरजित् जगज्जीवो रामचन्द्र इति विश्रुताः प्राप्तामात्यपदाः सम्पादितानवधिधना वेदहृदयमजानन्त्रिर्वेदवादमात्ररतैः पण्डितंमन्यैः श्रोत्रियाभासैः पदे पदे प्रोत्साह्यमाना दम्भमानमदान्विता गृहीतासदभिनिवेशाः ख्यातिकामनैकशेषमन्ततो हिंसामात्रपर्यवसानं मखं कर्तुं प्रवृत्ता निजयशःपताकां दिगन्तेषु संस्थापयन्तो नानादेशतो ब्राह्मणानाहूय तेषां सर्वेषामनुज्ञया महतीं यागशालां निष्पादयित्वा सम्भृतसकलसम्भारा मखमारभमाणा भगवन्तमेत्य—तत्रभवता यज्ञशालायां सन्निधाय वयमनुग्राह्या इति प्राञ्जलयः प्रार्थयन्त। प्रार्थनां तेषां बहुमन्यमानो भगवान्समये तेषां हितानुशासनेन श्रेयश्चिकीर्षंश्चाप यागशालाम्। प्रविश्य भगवानपश्यद्यूपे निबद्धान्पशून्भयोत्कम्पितहृदयान् सूनायामिव नियोजितान्। सकलहृदयसाक्षी चायं विज्ञाय यजमानस्य रागमलावलेपपङ्किलां चेतोवृत्तिम्, ऋत्विजां च धनलोभपिशाचाविष्टताम्, सर्वथाऽवधार्य तामसीं प्रवृत्तिं, यजमानमनर्थतः परिहरन् बहुशोऽनर्थतां प्रवृत्तेरुपक्रान्ताया निरूपयन्स्वस्यैकान्तसमुचितं सर्वतः श्रेयस्करमुपरिचरवसुप्रभृतिभिरादृतं हिंसागन्धवर्जितं यागं विधेयमादिशत्। अथादिष्टोऽपि यजमानः पुनः पुनरासुरवृत्तिभिरपरैरनुबोध्यमानो नान्वमन्यत भगवद्वचनम्। सपदि भगवानपि ततो निर्गत्य नेतः परमस्मिन् क्रूरकर्मास्पदे देशे स्थेयमिति विहितसङ्कल्पः स्वभक्तान् सर्वाननुज्ञाप्य तद्ग्रामवासिनः, प्रतस्थे ततः। अथ भगवति प्रस्थिते सपदि भगवदपचारपरिणतेन प्रबलतरेण दुरितेनेव समुद्भूतेन राजकोपने केनाप्यज्ञातनिमित्तेन हरकोपेन दक्षमख इव सपदि विध्वंसितः सर्वोऽपि स मखः, यजमानाश्च राजभटैर्नाराचप्रहरणैर्निहता नामशेषा अभूवन्। सर्वे पवर्त्विजः कान्दिशीका यथायथं पलायितवन्तः। तदेवं दम्भैकमूलां हिंसामात्रपर्यवसायिनीं प्रवृत्तिं धर्मोपदेशेन प्रसर्पन्तीं तत्र धर्मरहस्यावबोधनेन प्रशमयन्, अवधीरयतां चोपदेशमैश्वरेण प्रभावेन विदलयन्नुन्मर्यादां प्रवृत्तिं, प्रख्यापयन्ननवधिकमैश्वर्यं, ततः प्रस्थाय प्राप राजकूटनगरम्। तत्र नगरे काचिद्रूपत इव गुणशीलादिनाऽप्युत्कर्षमापन्ना राजकन्या नाम्ना लक्ष्मीर्भगवतो महिमानमुपश्रुत्य सञ्जाततच्चरणकमलप्रणया तदेकध्यानक्षपितसकलाशयमला, तत्परिचरणपरायणा, तत्प्रसादलब्धयोगसिद्धिस्तमेवानवरतमन्तर्बहिरलौकिकया दृष्ट्या साक्षात्कुर्वन्ती परमानन्दमविन्दत। बहवो नाम तत्र नगरे भगवतोऽतिमानुषं चरितमुपश्रुत्य तच्चरणकमलपरिचरणपरा अभवन्। एवमतिमानुषमैश्वर्यमाविष्कुर्वन्नात्मनः स्वचरणकमलरसिकान् सदुपदेशामृतैः सन्तर्पयन्, उषित्वा कानिचिद्दिनानि तत्र, ततो निर्गत्य प्राप दारधाराख्यग्रामम्। तत्र द्वावास्तां क्षत्रियकुमारौ तुङ्गजिद्गिरिजिच्चेति। तौ चैतौ भगवत्यनन्यया भक्त्या तच्चरणपरिचरणैकपरायणौ व्यपेतबाह्यवृत्ती भगवतस्तत्तत्समयसमुचितां सर्वामेव सेवामकुरुताम्। अन्ये चाभवन्भगवतश्चरणकमलसेवापराः क्षत्रियास्तत्र। अथ कदाचित्सभायां समुपविष्टे भगवति, तदुपदेशसुधारसास्वादैकबद्धादरे शुश्रूषुजनसमवाये, कामादिष्वान्तरारिषु तरतमभावं जिज्ञासुना तुङ्गजिता पृष्टो भगवान् प्राह—

त्रिविधं नरकस्यैतद्द्वारं नाशनमात्मनः, कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् । काम एष क्रोध एष रजोगुणसमुद्भवः, महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् । आभ्यामुभाभ्यां लोभस्तु गरीयान् सर्वतोमुखः । उपहते करणकलेवरपाटवे कदाचित्प्रक्षीणबलौ भूत्वा कामक्रोधावकार्यकरौ भवतः, अयं तु लोभ आमरणमनुवर्तमानः सर्वपापमूलं भवति । नास्य कश्चिदविषयोऽर्थः । लोभे तु वर्धमाने कमर्थं न कामयते पुमान्, कामे चोपहन्यमाने कस्मै न क्रुध्यति । तदयं लोभः कामक्रोधयोरपि कदाचिन्मूलं भूत्वा महत्यनर्थगर्ते पातयति नाम पुरुषम् । किं ब्रूमः—कामः काम इत्यनर्थेषु परिगण्यते विशेषतो लोके । इह जगति यावन्तः क्रोधेनोपहता यावत्पापमाचरयन्तो दृश्यन्ते; न तावन्तः कामोपहताः, न वा तावतां पापानां कर्तारो दृश्यन्ते, सुलभकोपा हि बहवः । तथा क्रोधो हि परमदुरितस्थाने गण्यते, तत्रापि यदि विचार्येत, यावन्तो लोभोपहता यावत्पापमाचरयन्तो दृश्यन्ते; न तावन्तः क्रोधोपहताः, न तावतां पापानां कर्तारो दृश्यन्ते । पदे पदे गृहे गृहे समुत्कटलोभा हि बहवो धरणिवलये । तत्सर्वथाऽस्य प्रसङ्गं परिहृत्य दूरतः स्थेयं नामेति । तमिममादेशं भगवतः समुपश्रुत्य सर्वे एव प्रशान्तरागाद्यभिभवाः प्रसन्नचेतसोऽभवन् । अत्रान्तरे कार्यायनग्रामाद्राजर्षिः खट्वाङ्गो नाम भगवच्चरणकमलसमाश्रयः प्राप भगवन्तं स्वपुरं नेतुकामः । यः पूर्वं मकरालयपत्तने भगवतोऽतिमानुषमैश्वर्यं साक्षात्कृत्य तत्पदकमले समाश्रित्य पारमैकान्तिके धर्मे बद्धादरोऽभूत् । यः पुनर्नापरं भगवतश्चरणकमलसेवारसाद्वाञ्छति । भगवांश्चानेन बद्धाञ्जलिना सप्रश्रयं प्रार्थितस्तन्मनोरथं परिपूरयन्नङ्गीचकार प्रबोधिन्युत्सवसमनन्तरमागमनमात्मनस्तद्ग्रामं प्रति ।

अथ परिपूर्णमनोरथः सोऽपि राजर्षिः प्रस्थितो निजं ग्रामं मार्गे प्राप दुर्गपुरम् । यत्रास्तेऽभयो नाम क्षत्रियोऽप्रस्खलितक्षात्रवृत्तिरनुवर्तितराजनीतिरनुरञ्जितप्रजः स्वस्य मित्रम् । अयं चाभयोऽनवरतमभिवर्धमानकृष्णभक्तिभूम्ना साक्षात्तमेव श्रीकृष्णं साक्षात्कर्तुकामः, अतीतस्य तदवतरणसमयस्य स्वस्यास्य समयस्य च विप्रकर्षं पुनः पुनरनुस्मृत्य दूयमानमनाः, प्रवर्तमानया निरतिशययाऽनया धर्मग्लान्या पुनरवतरणं भगवतः स्याच्चेदहं तत्साक्षात्कारसुखानुभवभाजनं भवामीत्यसकृदाशंसमान आसीत् । एवं मुहुरन्तर्विचारयन्तमेनं राजर्षिः खट्वाङ्गः प्राप । तौ च मिथः समागमसुखानुभवाभिनन्दनवचनमनु यथार्हमासने समुपाविशताम् । अथाभये साक्षादात्मनः श्रीकृष्णदर्शनमनोरथमावेदयति सपदि सञ्जातवचनावसरः सर्वमेव भगवतश्चरितमवतरणप्रभृत्यतिमानुषं यथावदन्वबेदयत् । तद्वचनेन च राजाऽभयस्तमेव धर्मसंरक्षणाय धरण्यां पुनः कृतावतरणं श्रीकृष्णमवधार्य तत आरभ्य सह कुटुम्बेन तदेकशरणमाश्रयस्तस्यैवापरोक्षानुभवमाकाङ्क्षमाण आसीत् । राजर्षिश्च खट्वाङ्गोऽभ्यनुज्ञातोऽभयेन स्वमेव कार्यायनग्राममगच्छत् । भगवांश्च व्यपगते मासद्वये प्रबोधिन्युत्सवे च परिसमाप्ते खट्वाङ्गस्य प्रार्थनामनुसरन्, काले कार्यायनग्राममवाप । खट्वाङ्गश्च भगवदागमनवार्तामुपश्रुत्य सपदि समधिकानन्दरसनिर्भरः सह पौरैः परिजनैश्च सपुत्रमित्रवर्गः प्रत्युद्गम्य प्रणम्य भगवन्तं प्रहर्षोत्फुल्लनयनेन भगवताऽनुगृहीतः सम्भ्रमेण महता स्वभवनमुपनीय सुखावासं भगवतः समकल्पयत् । अथ समये समये समुचितसेवाचरणेन परया भक्त्या भगवतो विशेषतः प्रसादपात्रमभूत् । भगवांश्चास्मै अन्येषां चानन्यमानसानामात्मनो रूपममानुषं प्रकाशयामास । खट्वाङ्गश्च राजर्षिरदृष्टपूर्वमत्याश्चर्यमखिलकरणाप्यायकमतिसुन्दरमतीतमायागुणमक्षरात्परतरं भगवतो रूपमवधार्य भक्तिपूरोत्कलिताशयो हर्षगद्गदाविष्टकण्ठः स्तुतिमुखरमुखः प्रकृष्टैश्वर्यावबोधकैर्वचोभिरस्तावीत् । स्तुत्वा चेदं प्रार्थयामास—इहैव नश्चिरं भगवन् भवतो रूपमखिलमङ्गलावहमनुदिनं साक्षात्कारयता स्थेयमिति । भगवांश्च तद्भक्त्यतिशयवशगो भूत्वा वसन्तोत्सवपर्यन्तमात्मनः सान्निध्यं प्रतिश्रुतवान् । अथ राजर्षिणा खट्वाङ्गेन राजाऽभयो दुर्गपुरस्थः शीघ्रगतिना दूतेन स्वपुरे भगवदागमनं ज्ञापितः सकुटुम्बः परिमेयपरिवारस्तस्मिन्नेवाहनि कार्यायनग्राममवाप । पुरा राजर्षिणा खट्वाङ्गेन यदेव दिव्यं भगवतो रूपं समुपवर्णितम्, अनुदिनमात्मनः प्रणिधानावलम्बनं चाभूत्तदेव भगवतो रूपमखिलकल्मषनाशनं सकलमङ्गलावहं पार्श्वैकरमणीयं साक्षात्कृत्य निरवधिकानन्दसागरे निमग्नो भक्तिभारावनतमूर्धा भगवन्तं प्रणम्यानन्येन चेतसा तमेवानुरूपायमानः पादयोः दास-

वदास्थितो निवेदितश्च खड्गाङ्गेन प्राप्य समयं प्रार्थयामास भगवन्तम्—अनुग्राह्योऽयं जनः, भगवतश्चरणारविन्दस्पर्शसुखमाकाङ्क्षते नगरमस्माकं, भवनं च मे भगवतश्चरणकमलरजसामर्हति समागमम्, अयं च जनः सपौरः सपुत्रमित्रकलत्रो भगवतश्चरणदास्यश्रियमाकाङ्क्षते इति। अथ तस्य भक्त्यतिशयमवलोक्य प्रसन्नो भगवानाह—वयं ते वचनेन भक्तिरसपूर्णेन प्रसन्नाः स्मः; वयमधुनैव तव नगरमागन्तुं न पारयामः, यदस्य खड्गाङ्गस्य मनोरथपरिपूरणायेहैव कंचित्कालं स्थेयमस्माभिः तदनु ते मनोरथं पूरयाम इति। स च शासनं शिरसावहन्नुवास तत्रैव तत्परिचरणपरः। खड्गाङ्गश्च सर्वमात्मनो धनं भगवतः स्वायत्तमकरोत्। तेन च भगवान् प्रसन्नसलिलं सर्वलोकोपसेव्यं महान्तं तडागमकल्पयत्। वैष्णवं च यागं पूर्णदक्षिणाकं महता धनव्ययेनाकारयत्। तत्र च यागे नैकोऽप्यर्थी निराशः प्रतिजगाम। अथैवं भगवान् खड्गाङ्गस्य मनोरथं परिपूर्यानुस्मरन्नभयप्रार्थनां माघशुक्लदशम्यां रात्रौ दुर्गपुरं गन्तुं प्रतस्थे। अनुगतः शताधिकैर्मुनिवरैः, अनुगतश्च खड्गाङ्गेन स्वचरणकमलपरायणेन, अनुगम्यमानश्चाभयादिभिः, प्रातरेकादश्यां प्राप दुर्गपुरम्।

तत्र तदानीमदृश्यत तरङ्ग इवोत्कूलस्य हर्षपूरस्य कोऽप्यभूतपूर्वः सम्भ्रमः पौरजनस्य। पथि च भगवतो दर्शनायाहमहमिकया समवेतानां सम्मर्दः सुमहानासीत्। व्यराजत च पताकातोरणादिभिरलङ्कृतो राजपथः। अलङ्कुर्वंश्च तं राजमार्गं, परिवृतः परमहंसैः, परिसेव्यमानश्च प्रेमपरवशैः परिगृहीतच्छत्रचामरादिपरिचरणोपकरणैः परिजनैः, हर्षविस्मयोत्फुल्लनयनैस्तृषितैरिव चातकैरनन्यशरणैस्तापत्रयातुरैस्तोयद इवोत्प्रेक्ष्यमाणः, आनन्दमयस्यात्मनः स्वरूपाविष्करणेनानन्दयन्प्रेमरसपरिपूर्णाशयान्प्रेक्षकपुरुषविशेषान्, भक्तजनैरुपस्तूयमानदिव्यचरितः, पुरोगेनाभयेन राज्ञा निवेद्यमानप्रणमद्वनिपालवृन्दो, दिव्यालङ्कारोपशोभितं तस्यैव भवनं प्रविवेश तत्प्रार्थनां सफलयन्। मध्येभवनं मणिमयस्तम्भोपशोभिते महति सभामण्डपे परिकल्पितं नात्युन्नतमतिमनोहरं भद्रासनमधितस्थौ। अथ यथायथं निषण्णेषु तेषु तेषु, राजाऽयमभयो व्यपेतभवभयः शिरसि विरचिताञ्जलिरिदमुवाच—

> आदावाविश्य चित्ते मम मलिनतमे दीर्घकालानुवृत्तं
> दुर्वारं दुःखमूलं हृदयतलगतं वासनापङ्कलेपम्।
> कालेन क्षालयित्वा निजपदकमलप्रेमपीयूषपूरं
> पुष्णन्साफल्यमक्ष्णोर्गृहमपि भगवंस्त्वं पुनास्यसि धन्यः॥

क्षेत्रारामगृहाणि यानि यदिदं हस्त्यश्वपश्वादिकं यच्चेदं धनधान्यजातमपि ये वाहा रथाद्या अमी। यच्चान्यन्मम योऽस्म्यहं तदखिलं त्वत्पादयोरर्पयन्याचे त्वत्पदपद्मदास्यमखिलक्लेशापहं देहि मे॥

इति। इदं च भक्तिरसनिष्यन्दरूपं वचनमुपश्रुत्य प्राह भगवान्—तर्पयसि नाम त्वममृतमयेनेवानेन परानुरागगर्भेण वचनेन नः, यदाप्तकामा वयं तुष्यामः केवलं भक्त्यैव, त्वयि चेयमदृष्टपूर्वोपलक्ष्यतेऽस्माभिः, बहवो ह्यस्थाने स्वातन्त्र्यमात्मन्यारोप्य प्रणश्यन्ति, दास्यकामस्तु स्थाने त्वादृशो विरलः श्रीमान्, धनमदो हि पुरुषमुन्मादयति, सतां सङ्गे च द्वेषमापादयति, तव चायं भावविशेषोऽस्मासु शोभते नाम सत्त्वप्रकृतेर्मुमुक्षोः, श्रेयस्ते वयमाशास्महे सर्वातिशायीति। अनेन च भगवतो वचनेन परमानन्दं प्राप्तः सपुत्रकलत्रबन्धुवर्गस्तच्चरणकमलपरिचरणैकपरायणः, प्रतिदिनमभिवर्धमानेन परमप्रेम्णा समयसमुचितैः सपर्याविधानैर्भगवन्तमाराधयन्नात्मानमाप्तकाममन्यताभयः श्रीमान्। भगवांश्च तस्य सपर्यामनन्यसामान्यां स्वीकुर्वन्सह मुनिवृन्देन कञ्चित्समयमुवास तत्र। ये च राज्ञस्तस्यापत्येषु जया ललितेति द्वे पुत्र्यौ विधिपरिपाकेन प्राप्तवैधव्ये अनारूढविषयवासने अस्पृष्टदेहात्माभिमाने अनवरतमीश्वराराधन एव निरते, ते पुनः प्रथमत एवारभ्य चिरादनुवर्तमानं प्रेमरसं भगवति परोक्षभूत इव प्रलक्षतामापन्नेऽस्मिन् विधाय विशुद्धेन भावेन भगवतश्चरणकमलसेवामात्मसमुचितामनन्यसामान्यां प्राप्य प्रक्षीणसकलव्याहावृत्ती निरवधिकानन्दघनमयं कमप्यनिर्वचनीयमात्मोल्लासं प्राप्तवत्यौ। यश्च तनयो राज्ञो गुणवृत्तशीलोत्तमो नाम्नाऽप्युत्तमः सोऽपि भगवन्तं परया भक्त्या सेवमानः परमानुग्रहपात्रं भगवतो बभूव। अथ भगवाननुग्रहाय लोकानामभ्यर्थनया च बहूनां नानानगरग्रामवासिनां समये जातु सङ्कल्पमकरोत्ततः प्रस्थातुम्। अभयश्चाशयमालक्ष्य भगवतस्तद्विश्लेषमसहमानः, भगवन्तं

शरणमुपजगाम । न्यवेदयच्च—भगवन् ! क्षणमपि विना भवतश्चरणकमलसेवां जीवितुं न शक्नुयाम, इमे च सर्वे भवत्संश्लेषैकायत्तजीविताः, नार्हति भवानशरणांस्त्यक्त्वान्यत्र गन्तुमिति । तदिदमुपश्रुत्य भगवांस्तस्यानन्यभक्तिमालक्ष्य तन्मनोरथमपि परिपूरयन्, परिपूरयंश्चावतरणप्रयोजनमपीदमुवाच—राजन् ! भक्त्येकवशगा नाम वयं न तवाभ्यर्थनमतिलङ्घयितुं शक्नुमः, भवादृशाश्च बहवो मुमुक्षवः सम्भावनीया नामास्माभिः, तत्तवाभ्यर्थनां सफलयन्तो वयमिहैव नियतवसतिं कल्पयन्तः, तदा तदा तत्तदर्थिजनाभ्यर्थनपरिपूरणाय तांस्तान्देशान्व्रजन्तो नातिचिरेण प्रत्यावृत्य तव हर्षमावहन्तो यथासङ्कल्पं जनान्समुज्जीवयन्तो यथासमयमिमं लोकमनुगृह्णन्तो विचराम इति । श्रुत्वा चाभयो वचनमिदं सन्तुष्टो भगवतः शासनं शिरसा वहन्नासीत् ।

अथ भगवांस्तांस्तान्मुनींस्तांस्तान्देशानभिप्रस्थापयन् कालदेशपात्रानुगुणमिदमाह—श्रूयतामवहितेन मनसा वचनमिदम् । न प्रमदितव्यं जातु धर्मात्, प्रमादो हि मृत्युः, प्रमदाश्च स्थानं प्रमादस्य, रसास्वादश्च, तत्ताभ्यां व्यालाभ्यामिवोपधावद्भ्यामपसृत्य वर्तितव्यम् । धर्माच्च्युतं न कोऽप्युद्धर्तुं समर्थः । विज्ञानं च तदनु विनश्यति । सोढव्यं नामात्याचरणं पीडनलक्षणं परैः कृतम् । यतितव्यं नाम तेषामपि श्रेयसे । क्षमया ह्यात्मा रक्ष्यः, अन्यथा प्रसर्पन् क्रोधाग्निस्ततो दहति स्वाश्रयम् । प्रसङ्गश्चास्य पदे पदे सन्निहितो नाम महतामपि । यत्सन्ति पदे पदे सतामवमाननैकप्रवृत्तयोऽस्मिन् समये भूयांसो रजस्तमःकलुषितहृदयः केवलमासुरवृत्तयः । विशेषतश्चेयमनुसर्तव्या श्रुतिः 'बाल्येन तिष्ठासे'दिति । अमृतमयमप्यात्मानं कलङ्कयति नाम मानमललेपः । मानस्य च प्रसङ्गो विशेषतो यं कमप्यतिशयं प्राप्तवतामपि भवति । विज्ञानेन वैराग्येणाप्यतिशयः कलङ्कितो नाम भवत्यनेन । तदिदमखिलमवधार्यास्मद्वचनमविशेषं जीवहिताय यतितव्यं नाम तत्र तत्र । यदधुना कलेर्महिम्ना धर्मापदेशेन परितोऽधर्मस्य प्रवृत्तिरन्वहं वर्धते इति । अथेममादेशं सर्व एव परमहंसाः शिरसा धारयन्तो यथानिदेशं जगद्धितावबोधनाय तांस्तान्देशान् जग्मुः । भगवांस्तु परिमितमुनिजनपरिवृतः परितो निकटग्रामवर्तिनो भक्तान् दर्शनालापनावबोधनादिभिस्तदा तदा अनुगृह्णन्, आनन्दयज्ञभयादीननन्यभक्तांस्तत्रैव कृतवसतिरासीत् । अत्रान्तरे व्यानशे दशापि दिशो भगवतो यशः । ये नाम भगवतः शासनेन धर्मरक्षणाय तत्र तत्र प्रवृत्ताः परमहंसाः, तेषां तपःशीलवृत्तादिकमनन्यसामान्यमालक्ष्य बहवो दैव्या सम्पदा सम्पन्नास्तत्पदकमलमाश्रित्य प्रवृद्धधर्माभिरुचयो ज्ञानविज्ञानसम्पन्नाः सर्वभूतसौहार्देन समलङ्कृता अभवन् । अपरे पुनरासुर्या सम्पदोद्धृता धर्मद्विषः परमहंसानेतानवहेलनपरुषभाषणात्याचरणभर्त्सनताडनादिभिरनेकैः प्रकारैरभिद्रोग्धुमारेभिरे, ते चोर्ध्वरेतसो दीप्ततेजसस्तान् भस्मीकर्तुं समर्था अप्यादेशं भगवतः स्मरन्तः, परमहंसवृत्तयः सहमानाः सर्वं क्लेशं तेषामपि द्रोहिणां हितानुचिन्तनपरा अभूवन् । यथा यथा सर्वभूतसौहार्दव्रतपरैर्मुनिभिः क्षमैव प्रतीकारोऽमन्यत तथा तथा आसुरप्रकृतयो दौर्बल्यमेषामवधार्य तदभिद्रोहमधिकाधिकमातेनिरे । तदिमं क्लेशमसहमानाः कतिचन भगवतश्चरणपार्श्वमाययुः । उपश्रुत्य भगवांस्तन्मुखादासुराणामत्याचारमात्मीयेषु क्षमां चात्मीयानां प्रहस्येदमुवाच—इदं नः प्रियम्; यत्पीड्यमानैरपि युष्माभिः क्षमा न परित्यक्ता, क्षमा हि परमं तपः, परोन्मूलने परमं शस्त्रम्, सर्व एव स्वेनैव दुरितेन प्रबलेन परिपक्वेण प्रणश्यति, निमित्तमात्रं कश्चित्पुरुषः, तदेते आसुराः स्वात्मप्रणाशनाय स्वयमेव संपादितपूर्णसाधना नाम, कालः पुरुषो वा कश्चिदचिरेण तेषामुन्मूलनाय निमित्तमात्रमस्ति सन्निहितः, नेह यतितव्यमस्माभिरधुना, परं युष्माभिस्तेषां जीवानाममुत्र कल्याणमेवाशास्यमिति । तदिदं प्रशान्तपावनं वचः समुपश्रुत्य सर्व एव प्रशान्तचेतसः समुन्मिषितसत्त्वा बभूवुः । अथ कतिपयैरेव मासैर्वाणिज्यार्थं भारतमण्डलं प्राप्तैः प्राप्तराजकुलप्रवेशैः पाश्चात्यैरैरोपखण्डस्थैरुद्वृत्तेषु पार्थिवेषु मिथो रागद्वेषाभिभूतेषु कलहैकप्रियेष्वन्तरमासाद्य नामैकशेषतां नीतेषु, धर्मपथानुपमर्दके परितः प्रवृत्ते तदीयशासने, दण्डपातभीत्या निलीनेषु दुष्टेषु, निर्भयप्रचारेषु साधुजनेषु, सर्व एव सपदि भगवतो धर्मपरित्राणायावतीर्णस्य समयसमुचितं सङ्कल्पं धर्मरक्षणाय समुन्मिषितममन्यन्त ।

अत्रान्तरे राजकूटनगरात्कश्चिद्दूतः प्राप भगवतः पार्श्वम् । प्राप्य भगवतश्चरणकमल-

सेवासमयं सन्निधिमेत्य भगवतश्चरणकमलयोः प्रणम्येदं न्यवेदयत्—भगवन् ! भवतोऽनुग्रहेण विजितारातिमण्डलः, प्रवर्तिताखण्डशासनः, आखण्डल इवासुरसम्पद्विभञ्जकः दैव्याः प्रकृते रक्षकः श्रीमान्नः प्रभुरचिराद्राजकूटनगरमधितिष्ठति । योऽसौ प्रत्यनन्तरः पार्थिवकुलमणेः पाश्चात्यस्य ऐरोपखण्डाधिपस्य भारतविभागरक्षणे नियुक्तः (गवर्नर)। सोऽयमर्थयते भवतो दर्शनम्। यदि धर्मसंरक्षणकार्यगौरवस्य नातिपातो न वान्यः कश्चनान्तरायः, तर्हि, अपीदमधुना राजकूटनगरं श्रीमतश्चरणसरोजविन्यासालङ्करणभाजनं भवेत्, अपि स्यादस्मन्नयनयोः श्रीमत्पदकमलसेवया साफल्यम्, यद्यनुज्ञायेत वयं वा भवतः पार्श्वमेष्याम इति । अथ भगवानुपश्रुत्य वचनं दूतस्य प्राह-वयमेव प्रभोः परिसरमेष्यामः। यैर्नः साधूनां धर्मसंरक्षणार्था प्रवृत्तिर्दुर्मुखकण्टकापाकरणेन सुकरा समापादिता, तेषां हि श्रेयोऽस्माभिरप्रार्थ्यमानैरपि विधेयम्। किं पुनर्दर्शनैकान्तचित्तानाम्। तदुचितं नाम तादृशस्य प्रभोरावासस्थानाभिगमनमिति । उपहरैनं नः सन्देशमिमं त्वं त्वत्प्रभवे इति । अथ मूर्ध्नाऽवधृत्य भगवतः सन्देशं दूतो यथागतं गत्वा न्यवेदयद्भगवतो वचनं प्रभवे। सच भगवदागमनैकप्रतीक्ष आसीत् । भगवांश्च परस्मिन् दिने परिमितैः शिष्यजनैः परिवृतः प्राप राजकूटम्। प्रभुश्चायं समुपश्रुत्य भगवदागमनवार्तां सपदि शिविराद्बहिर्निर्गत्य परिवृतो राजमण्डलेन, उपायनहस्तैश्च परिजनैरनुगम्यमानः, नातिसमीपमायान्तीं भगवताऽधिष्ठितां शिबिकां परिवृतां साधुमण्डलेन, अनुगम्यमानामश्वारूढैर्भगवच्चरणकमलसेवापरायणैरद्राक्षीत्। दृष्ट्वा च सपदि विस्मयोत्फुल्लनयनः शिबिकायाः समीपमुपगम्य भगवतः पदकमलयोरुपायनान्यर्पयित्वा प्रणतशिराः स्वयमनुजगाम भगवन्तं यावदात्मावासशिबिरम् । अथ भगवान्प्राह-इदं नः प्रियतमम्; यदयं भारतभूविभागो धर्मैकास्पदभूतोऽप्युद्भूतरजस्तमःप्रकृतीनां केषांचित्पार्थिवापदेशेन प्रवृत्तानामासुराणामुपद्रवेण प्रक्षीयमाणधर्मोऽस्माभिर्धर्मस्थापनाय कृतप्रयासैरनुपाल्यमानधर्मपथोऽधुना प्राप्य वः सत्पथानुपमर्दकानामनतिलङ्घितधर्मपथानां शासनगोचरतां धार्मिकजनाभ्युदयास्पदं भविष्यतीति। वयं नामावबोधनेन जनान् सत्पथे स्थापयितुं प्रवर्तामहे। अवबोधनं चाज्ञेषु सुज्ञेषु फलमावहति। ये पुनः सततं कलुषितनयना रजःसमुद्रेकेण परानर्थैकप्रिया आसुरवृत्तयो न तेषु फलमावहेत् । प्रत्युतावबोधकमेव पुरुषमस्थानविनियोगप्रकुपितमिव भूत्वा महत्यामापदि प्राणसंशयपर्यन्तायां योजयति । यदिमे आसुरा अवबोधकानां विनाशायैव यतन्ते हिरण्याद्य इव प्रह्लादादीनाम्। तेषामासुरप्रकृतीनां समुन्मूलने सङ्कल्पमात्रेण प्रभवन्तोऽपि वयमहिंसाप्रधानं तपो महत्संरक्षन्तस्तेषामात्मक्षयाधायकं दुरितातिरेकपरिपाकलक्षणं प्रबलतररिपुसमुपरोधं प्रतीक्षमाणा अविकृतमानसाः स्मः। योजयति च समये विधिरनुकूलो धर्मस्य युष्मादृशां धार्मिकं वीरक्षात्रकुलमिति। श्रुत्वा भगवतो वचनमिदमतिगम्भीरमधुरं सभक्तिसमुन्मेषो वरासने समुपवेश्य भगवन्तं कृत्वा तत्पदसरोजपरिचर्यां तदाज्ञया स्वयमुपविष्टः प्राह भगवन्तम्—भगवन्! भवतश्चरणकमलसेवालाभेन यावान्नः प्रमोदो न तावान् भारतभूविभागप्रशासनैश्वर्यलाभेन। नहि नः प्रशासनं देशाद्देशं प्रविशतीत्येतावता सन्तोष्टव्यं पार्थिवैः, यद्धर्मोच्छेदेनाधर्मोद्रेकेण वा प्रजासु प्रसरता परम् अश्रेयसः पदं भवति पार्थिवः। तद्यत्र देशे धर्मसंरक्षणभरमावहन्पुरुषोत्तमो भवादृशः कृतावतरणः स्यात् तत्र चेत्तन्मनोवृत्त्यनुपघातकं प्रशासनं प्रवर्तेत तदा शास्ता पार्थिवः श्रेयसां पदं स्यात्। अन्यथा पुनः शौर्यमदावलेपसमुद्धतभुजदण्डकण्डूतिपरिहरणप्रयासमात्रफलकं पराज्याक्रमणं नाम केवलं दूषणं पार्थिवानाम्। तद्भवतो धर्मरक्षणैकदत्तावधानस्य पुरुषोत्तमस्य दयार्द्रावलोकनपात्रतां प्राप्य सर्वश्रेयसां भाजनं स्यामित्येतावदाशास्यते इति। तस्यैवं विनयोपेतं वचनमाकर्ण्य भगवानाह—यो योऽस्मदीयेषु धर्मैकान्तसक्तेषु प्रेमानुबन्धः, यच्च धर्मकण्टकानामुन्मूलनेन धर्मपथस्य सुखप्रचारताधानम्, या चोऽस्मासु भक्तिः, तैरेतैरितोऽप्यकल्मषं प्रजा धर्मेण परिपालयिष्यतां वः साम्राज्यमस्मिन्भारते भविष्यतीत्यनुगृह्य ततः प्रचलितुकामे भगवति श्रेयसः पारलौकिकस्यापुनर्भवस्य साधनमाकाङ्क्षमाण इदमभ्यर्थितवान्। श्रूयते भवता बहवः संसारसागरतः समुत्तार्यन्ते इति। मन्ये भवन्तं भवभयप्रशमनाय भूमाववतीर्णं सर्वेश्वरम्, भवति भक्तिश्च नः परिपूर्णा प्रवहति विशेषतो भवत्पदकमलसेवातःप्रभृति, तदनुग्राह्या वयमपुनर्भवोपायोपदर्शनेनेति। भगवांश्च प्रसन्नस्तस्मै तथेत्यनुगृह्य भक्तिमार्गसारं, तेनानुगम्यमानः प्रतिनिवृत्तः स तेन प्रथममेव परिकल्पिते तत्तत्स्थाने परिजनान् भक्तांश्चावासयाप्य·

नुज्ञाप्य, स्वयं च मुनिजनपरिवृतः स्वावाससमुचिते स्थाने आवासमकरोत् । ये पुनरन्ये राजानस्तत्र तदाज्ञाकिङ्करास्तदाऽभूवन्, सर्व एव ते भगवत ऐश्वर्यं तादृशमवलोक्य त्यक्तासूयाः सञ्जातभक्तिरसा भगवतश्चरणकमलसेवापरायणा अभूवन् । अथ परेऽह्नि बहुशस्तेन प्रभुणा प्रार्थितस्तत्कृतमनुपमं सत्कारमादरपरिशुद्धमधुरं स्वीकृत्य तत्तत्परिजनपरिवृतः, परिवृतो मुनिवृन्देन प्रत्याजगाम दुर्गपुरम् ॥

अथ भगवानवतरणकार्यं व्यातन्वानः सौवीरदेशमधिवसतः सुरसिंहनाम्नः क्षत्रवंश्यस्य सुगुणसागरस्य प्रार्थनया सह मुनिवृन्देन परिजनेन परिचर्यापरायणेन परिवृतः समावद्धपल्ययनादिपरिष्करणं तुरगमधिरुह्याभिप्रतस्थे तस्य नगरं मात्स्यं( मत्स्याव )नाम । सुरसिंहश्च भगवदागमनवार्ताश्रवणसञ्जातहर्षः परिवृतः पौरैः परिजनैश्च सोपायनहस्तो भगवन्तमभिगम्य सभक्तिप्रश्रयं प्रणम्य दण्डवदभिनन्दितो भगवता भगवच्चरणकमलरेणुभिः पवित्रयन्निजभवनं भगवदावासायाकल्पयत् । भगवांश्च तन्मनोरथं पूरयन्नुवास तत्र कानिचिद्दिनानि । राज्ञे च प्रणिपातपरिप्रश्नादिना प्रसन्नो भगवानुपदिदेश धर्मान् । बहवो भगवदैश्वर्यश्रवणजनितकुतूहला भगवतश्चरणसेवामाकाङ्क्षमाणाः समेत्य तत्र समाश्रित्य भगवतश्चरणसरोजे निःश्रेयसनिधिमुपलभ्येव प्रहृष्टा बभूवुः । अथ ततः प्रस्थितस्तत्रत्याननुगच्छतो धर्मादेशमसकृत्सारयन्समनुज्ञाप्य तीर्थसिषेविषया समाजगाम सिद्धपुरम् । यत्रास्ति मात्रे साङ्ख्यमुपदिशतो भगवतः कपिलस्य महर्षेराश्रमः । यत्र सरस्वती प्रवहति संसेविता सुरर्षिभिर्महर्षिभिश्च । यत्र च विन्दुसरोवरम् । विधाय यथाविधि तत्र स्नानं, विप्रेभ्यः प्रदाय वासोभूषाहिरण्यादीनि, अर्थिभ्यश्चाभ्यर्थिताधिकं विविधै रसवर्गैः सर्वान् ब्राह्मणानन्यांश्च बुभुक्षितांस्तर्पयित्वा, सुखोपविष्टो भगवान्सर्वानेव स्वानुयायिनोऽन्यांश्च भक्तजनानधिकृत्य तीर्थमाहात्म्यं तीर्थे पालनीयान् नियमविशेषांश्चोपादिशत् । अथ तत्तन्नगरवासिभिस्तैस्तैरभ्यर्थितस्तत्र तत्र दिनं दिनानि चोषित्वा तांस्तान्निजैश्वर्यमनुभाव्य, अलौकिकैश्वर्यसाक्षात्कारसञ्जातभक्तिभरैस्तैस्तैः समर्चितचरणनलिनः क्रमात् श्रीनगरमभिजगाम। समुपश्रुतभगवदागमनवार्ता बहवो नगरस्थाः सङ्घशः समेत्य सोपायनहस्ताः नगरात् बहिः सार्धक्रोशं प्रत्युद्गम्य भगवन्तं प्रणम्य विविधमङ्गलवाद्यघोषैर्महता सम्भ्रमेण नगरमानाय्य नवावासे भगवतः समुचितमावासमकल्पयन् । भगवांश्च भक्तजनप्रियः स्वचरणकमलरसिकानां श्रवणनयनमनांसि युगपदाह्लादयन्नमृतमयेनात्मीयवाणीविग्रहसम्पदा, सर्वांश्चात्मनि बद्धभावानावालगोपालं विलीनबाह्यवृत्तीन् साक्षात्कारयन्नक्षरं रूपमुवास तत्र कतिपयदिनानि । श्रुत्वेदममानुषं प्रभावमसहमानाः कतिचनावजानन्त एव भगवन्तं कदाचित्प्रविश्य भगवतः सन्निधिं विलोक्य तत्र बहूनस्तबाह्यवृत्तीनात्मैकसंवेद्ये तेजसि क्वचन विलीनमानसानैन्द्रजालिकमिदमखिलमस्येति भगवदैश्वर्यं विनिन्दन्तः, समये सर्वहिताकाङ्क्षिणा परमकृपानिधिना भगवताऽपहृताविद्यातिमिरा यथावदनुभूयास्य महिमानमतिमानुषं सर्वेश्वर एवायमित्यवधार्य मनसि सपदि सञ्जातभक्तयः प्रणम्य भगवतश्चरणकमले समाश्रित्य सर्वान् भूतपूर्वानपराधाननुस्मृत्यानुतपन्तः क्षमां प्रार्थयन्तोऽनुगृहीता भगवता कृतकृत्याः स्वात्मानं भवदवानलान्मुक्तमवगत्य परमया सन्तुष्ट्या परिपूर्णा अभवन् ।

अथ भगवान् भक्तजनप्रार्थनया ततः प्रस्थाय प्राप जयतल्पाभिधं ( जेतलपुर ) पुरम् । तत्र भक्तजनप्रार्थनया कांश्चन मासानत्यवाहयत् । अकरोच्च तत्र विधानेन रुद्रयागं विष्णुयागं च । तत्र नैकोऽप्यर्थी आसीत् यो वाञ्छितादधिकं न लब्धवान् । इदमपरं दुराचारोन्मूलनं व्यधायि भगवता तत्र । ये नाम वामाचाराः प्रतिषिद्धमपि मदिरामांसादिनिषेवणं धर्मकोटावारोपयन्तो लोकान्घोरकयोनौ पातयन्तः परितो भ्रमन्तो धर्मविप्लवैकचरणास्तेषां प्रवृत्तिं परितः प्रवृत्तां वात्ययेव तूलजालं सदुपदेशैः सहसाऽपसार्य धर्मं वैदिकं प्रतिष्ठितपदं व्यधात् । ततश्च भक्ताननुगृह्णन् प्राप दर्भावतीम् ( डभाण ) । तत्र महान्तमेकमारेभे वैष्णवं मखमतिपावनम् । अस्मिंश्च महामखे विविधैर्भक्ष्यभोज्यादिभिरुत्तमैरभ्यवहारैः सन्तर्पितानां दक्षिणाभिश्च वाञ्छिताधिकाभिरानन्दितानामसङ्ख्याकानां जयघोषध्वनिः परितो व्यजृम्भत । नैकोऽप्यर्थी व्यर्थाशो निववृते । प्रवर्तमाने चैवमप्रतिहतदानपूरे महति मखे कतिचनासुरवृत्तयो भगवदैश्वर्यमजानन्तस्तन्मखस्यान्तरायं कर्तुं कृतव्यवसाया मखोपयुक्तांस्तांस्तानस्थानविनियोगेन व्ययीकुर्वन्तोऽपहरन्तश्च धान्यशालां रसशालां

पाकशालां च रिक्तप्रायामकुर्वन् । अथेदमालक्ष्य भगवांस्तेषां हृदयकौटिल्यं जानन्नपि तेषां निग्रहायाप्रवृत्तः परमशालापहरणेन ताननुगृह्णन्नेव सङ्कल्पमकरोत् । अथ सपदि या या शाला रिक्ता समदृश्यत; सा सा पूर्णैवाभवत्, सम्भारसम्भृताश्च वह्वयः शकट्यः समदृश्यन्त । अथ सर्वे एव ते समीक्ष्य भगवदैश्वर्यमत्यन्तत्रस्तास्तमेव भगवन्तं शरणमुपगम्य लब्धविज्ञाना अभूवन् । अथ यथाविधि परिपूर्णे मखे सर्वांस्ताननुगृह्य भक्तांस्ततो भक्ताभ्यर्थनया प्राप सूर्यपुरम् (सुरत) । तीरे तपत्याः क्वचिदुपवने प्रच्छायतरुषण्डमण्डिते कुसुमितानेकलताप्रतानसमलङ्कृते विविधविहगसंसेव्यमानफलभरपरिणम्रविटपविटपिवलयिते भक्तजनहृदयाभ्यन्तर इव सुखावासमकरोत् । तत्रानुदिनमुपसर्पतां भगवतश्चरणकमलसेवार्थिनां समाजस्तदुपवनमभिव्याप्य व्यवर्धत । व्यवर्धत च भगवतोऽतिमानुषैश्वर्यावलोकनेन परमादरस्तस्मिन्पौरजनानाम् । जिज्ञासवश्च वहवः पण्डिताः प्रतीक्षमाणाः परिप्रश्नसेवावसरं प्राप्य समये भगवताऽवबोधितात्मपरमात्मविवेकाः प्राप्यास्मयाथात्म्यावबोधं कृतार्था अभवन् । स्वचरणकमलैकान्तसमाश्रयेभ्यो भक्तियोगं परमात्मनि पुरुषोत्तमे परानुरागलक्षणं विस्तरेणोपादिशत् । अन्वहमेधमानया भक्त्या भगवतः परिचरणपरायणाः साक्षात्सन्निहिते परब्रह्मणि परमानन्दजलधाविव निमग्ना न व्यजानन्त स्वं परं वा सर्वे एव पौराः ।

एतस्मिन्नवसरे तस्य नगरस्य नातिदूरे वर्तमाने धर्मपुरे प्रजाः सर्वा निर्विशेषं पुत्रेभ्यः परिपालयन्ती नीत्या वहन्ती राज्यभारं राज्ञी कुशलाख्या श्रुत्वा भगवतश्चरितं तच्चरणकमलसेवासमुत्कण्ठया राज्यभारेऽपि प्रशिथिलहृदया प्रेषयामास प्रार्थनासन्देशहरं कमप्यन्तरङ्गं परिजनं भगवतश्चरणकमलसन्निधिम् । भगवांश्च तन्मुखादवगत्य राज्ञ्याः परां भक्तिमात्मनि मुमुक्षां च तस्याः, तन्मनोरथपरिपूरणाय धृतादरस्तदेव धर्मपुरमभिप्रतस्थे । अथ राज्ञी च समलङ्कृत्य पुरं तोरणादिभिस्तांस्तांश्च भृत्यवर्गांस्तत्तत्सेवासमुचितवेषैर्भगवतोऽभिगमनमङ्गलाय सन्नद्धैर्मातृष्यमित्याज्ञाप्यामात्यादिभिः प्रधानपुरुषैरुपसेव्यमानपार्श्वा पुरस्कृत्य तनयमवरोधसमुचितां शिबिकामारुह्य प्राप्य पुरोपकण्ठं भगवन्तं सह मुनिवृन्देनायान्तं दूरादालक्ष्यावतीर्य शिविकातः, पद्भ्यां कतिपयपदान्यभिमुखं गत्वा भगवतश्चरणयोः कृतप्रणामा, भक्तिरसार्द्रया चित्तवृत्त्या विनयपरिपेशलया वाचा तपःप्रशान्तया चाकृत्याऽनन्यसामान्यां भगवतः प्रसादपात्रतां प्राप्य प्रथमत एव सज्जीकृतं कुञ्जरमधिरूढे भगवति, स्वयमनुगच्छन्ती भगवन्तं महता राजपथेन प्राप्य राजभवनं वरास्तरणादिभिः परिवृते महति सौधे भगवतो वासं विधाप्य भगवति दिव्यं भद्रासनमधिरूढे मुनिवृन्दे च यथायथमुपविष्टे प्रतिरुद्धनिजपरिजना सामात्यवर्गा स्वयं भगवतश्चरणकमलपीठोपकण्ठभुवं प्राप्य सर्वमात्मीयं राज्यादि भगवतश्चरणयोः समर्प्य स्वयमात्मानं पूर्णमनोरथामवधृत्य तदाप्रभृति भगवतश्चरणसरोजसेवारसमेव मुक्तिरसनिर्विशेषमविन्दत । अथ तस्यै समये समये सामान्यधर्मान् विशेषधर्मांश्चोपदिश्य तत्प्रार्थनानुरोधेन तत्र मासमेकमुषित्वा संसरन्नभयस्य राज्ञो वरप्रदानं ततो निर्गत्य समुत्तीर्य तपतीं रेवां साभ्रमतीं च भालदेशं समतिक्रम्य दुर्गपुरं प्राप । अभयादयश्च प्राणमिवाभिसमागतमभिगम्यापारानन्दपूरमग्नाः प्रणम्य भगवतः पदपाथोजे प्रशान्तचिरवियोगतापा बभूवुः । भगवांश्च स्वैकान्तभक्तप्रेमरसश्लेषेणाप्तकाम इवाभवत् । तैस्तैर्भक्तप्रवरैरभयप्रभृतिभिर्निषेव्यमाणचरणनलिनः परिवृतः परमहंसमण्डलेन मुमुक्षुजनान्निजवचनामृतैः समुज्जीवयंस्तत्रैव दुर्गपुरे स्वावासदिव्यभवने चिरमुवास ।

अथ कालेनाभयो राजा प्रययाः प्रसादेन भगवतः सकलभयास्पदं प्राकृतं पदमतिक्रम्य प्रापाक्षरं पदम्, यद्गत्वा न निवर्तन्ते तद्धाम परमं हरेः । अथ तस्य तनयो गुणैः पितुर्विशिष्ट उत्तम इत्यन्वर्थनामा निदेशं पितुरजतिवर्तमानः परया भक्त्या भगवन्तं परिचरन्वभूव भगवतो विशेषतः प्रसादपात्रम् । जयाद्याश्च तस्य भगिन्यो भ्रातुर्भगवत्सेवायां पितुरप्यधिकमादरं विलोक्य प्रगुणितानन्दपूराः स्वयं तत्तत्समयसमुचितेन सलिलाहरणभगवन्मन्दिरसंशोधनादिना भगवत्परिचरणेनात्मानं कृतार्थयन्त्य आसन् । अथ जातु किञ्चिद्विज्ञापयितुकामो भगवतः सन्निधिमेत्य गुणैरुत्तमोऽयमुत्तमः कृतप्रणामो विनयावनतशिरा वचनावसरप्रतीक्षोऽवस्थितो भगवताऽनुपृष्ट इदमुवाच । भगवन्भगवच्चरणकमलार्पितात्मात्मीयभराणां नः किमन्यदाशास्यमस्ति, भगवतश्चरणकमलपरिचरणश्रियमेवाभिवर्धमानामाशास्महे । तेषु तेषु महोत्सवसमयेषु यथा नस्तातपादसमये सेवावसरोऽनुगृहीतस्तथैवाधुनापि दासजने परया प्रीत्या तद्वदवसरः प्रदेयः । कतिपयैरेवाहो·

भिरन्तरितोऽन्नकूटमहोत्सवसमयः । स चायं समयः यथाविभवं महोत्सवनिर्वर्तनेन सकलजनानन्ददः कार्यः । यन्निर्वर्तनप्रसङ्गेन वयं समुचितं श्रीमच्चरणसेवावसरं प्राप्य कृतार्था भवेम । यच्चेदं भवनं यच्च कोशजातं यच्च क्षेत्रादि तद्धि सर्वं भवत एव । तस्य समुचिते उपभोगे व्यये च भवता परवानयं जनः । तदागामिनो महोत्सवस्य विस्तरेण विधानाय भवदाज्ञां प्राप्तुमेष तृषितोऽस्मीति । भगवांश्चास्य प्रेमरसमन्याहशमालक्ष्य परां प्रीतिमुपगतस्तथेत्युवाच । उत्तमश्च परिपूर्णमनोरथः सपदि समेत्य भगिन्योर्जयाललितयोरिदं न्यवेदयत् । ते च भगवतश्चरणकमलसेवैकजीविते प्रहर्षोत्फुल्लमानसे भूत्वा प्राहतुः । युक्तरूपं त्वया सङ्कल्पितं नाम । यन्नः पितरं वृत्तमपि वृत्तेन तवानुत्तमेनानेन वर्तमानमेव मन्येत भगवान्, अखिलश्च लोकः । आवां च भगवत्सेवैकसमुत्कण्ठे सेवावसरलाभेन समधिकानन्दे स्वः । तत्सम्भाराः सम्भ्रियन्ताम् । आवां विशेषतो यतावहे स्वसमुचितसेवाप्रसङ्गेषु इति । भगवांश्चादरं सर्वाधिकमुत्तमस्य मानयन्नन्नकूटमहोत्सवस्य सेवार्थं सर्वानेव स्वचरणसमाश्रयान् नानादिगन्तवास्तव्यान् लेखदूतमुखेनामन्त्रयामास । सर्वेषामेव साधूनां वर्णिनां चात्मीयानामौपदेशिककर्मणि व्यापृतानामपि प्रत्यागमनमादिदेश । यथाऽऽदेशं सर्वमेव मुनिमण्डलं सदुपदेशसमुज्जीवितजगन्मण्डलं समये समाजगाम । हरिभक्ताश्च दशदिगन्तरेभ्यः समाजग्मुः । येषामाशये परितोऽप्युत्कूलप्रेमरससम्भृते भगवतश्चरणकमलमुत्फुल्लमनारतमालक्ष्यते । यथा यथा नगरे समवर्धत समागच्छतां वैदेशिकभक्तजनानामुत्तरोत्तराधिकः समवायस्तरङ्ग इवोत्कूलः सागरस्य तथातथा समवर्धतानन्दलहरीतरङ्गश्चैतस्योत्तमस्य । भक्तजनसमाराधनमेव हि भगवतो विशेषतस्तोषणमिति यदयं जानाति नाम । सच सर्वेषामेव तेषां यथासंविभागमावासादिकमनुकूलमकल्पयत् । आश्विनकृष्णत्रयोदशीमारभ्य कार्तिकशुक्लप्रतिपदं यावत्प्रवर्तमानस्य महोत्सवस्य यस्मिन्यस्मिन्समये यद्यदपेक्षितं भगवत्सपर्योपकरणं तत्सर्वं स्मृतिमात्रसन्निहितमकारयत् । यच्च भगवत्सेवार्थमागतानां सन्तर्पणसमपेक्षितमन्नरसवर्गादि तत्सर्वमेवानवधि सन्नद्धमकरोत् । भगवांश्चास्याधिकाधिकमात्मपरिचरणप्रोत्साहपूरमालक्ष्य पितरमतिशेते नामायमखिलैर्गुणैरिति मुहुः प्रेमतरङ्गितेन चेतसा तस्य श्रेयश्चिन्तयन् स्वचरणकमलसेवार्थं नानादिगन्तेभ्यः समागतानामप्रस्खलितधर्मपथानां भक्तजनानां मनोनयनानन्दमावहन् निजचरणारविन्दमधुकरायमाणमानसानां मुनीनां हृदयकमलानि विकासयन्नारभत तत्तदवसरानुगुणं महोत्सवविधानं श्रीकृष्णस्य । अलक्ष्यत च तदानीमनन्येनात्मना निध्यायमानेनापरोक्षभावमुपगतेन परतः परेण परमानन्दमयेन सर्वाश्चर्येण केनापि मूर्तेनेव रूपेण पारमेश्वरेण । सर्व एव साक्षात्कृत्य परमानन्दमयं रूपं किमपि भगवतः, परतः प्रकृतेरिव वर्तमानाः सर्वातिशायिनि परमसुखसागरे निमग्ना बभूवुः । दर्शे च प्रातः सपर्यां विधाय श्रीकृष्णस्य भगवति स्वयमुपविष्टे भद्रासनं सर्व एव भक्ताः परमया भक्त्या भगवतश्चरणकमलमर्चयन्तः, क्रमशः समुपसृत्य भगवतश्चरणकमलपीठोपकण्ठं, समाहृतान्युपायनानि विविधानि महार्हाणि वासोभूषणादीनि समर्प्य, सकलकलिमलापहं भगवतः पदतलं मूर्ध्नोपस्पृश्य सपदि सम्भूतसिवापहतपाप्मानमात्मानमधिगम्य कृतकृत्या भगवद्वचनपीयूषैकास्वादकौतुकेन यथासंविभागं स्वे स्वे स्थाने समुपविविशुः । भगवानपि समर्पितेषु तेषूपायनेष्वनन्यसामान्यममूल्यमेकं भावमेवामूर्तं परया प्रीत्या स्वीकृत्य यन्मूर्तमन्यत्पुञ्जीभूतं पुरतो निपतितं सर्वमेव समुच्चयं काञ्चनानां रत्नानां वासोभूषणानां रूप्यमुद्राणां चानवधिकमर्थिभ्यस्तेभ्यस्तेभ्यो वितीर्य स्वयमात्माराम आप्तकामः परां निर्वृतिमवाप । ईदृशं च स्वभावं भगवतः समालक्ष्य सर्व एवेश्वरस्य भक्त्येकप्रियता हि सहजेत्यवधृत्य भक्त्या तत्प्रसादनमेव परममन्यन्त । अथ भगवतो विज्ञानालोकैरिव गवां प्रसरैरपास्ताविद्यातिमिरोन्मेषासु सन्निहितसकलजनहृदयगुहासु सर्वतः प्रकाशमानेनेवात्मज्योतिषा, निशामुखे सर्वतः सम्प्रवृत्तेन सकलदिगभ्यन्तरतिमिरहारिणा प्रदीपज्योतिषा व्यराजत समधिकानन्दः स कोऽप्यननुभूतपूर्वः समयः । एवं प्रवृत्ते च प्रदीपोत्सवे परेद्युः प्रतिपदि महता सम्भ्रमेण प्रावर्ततान्नकूटमहोत्सवः । ललिता चोत्तमस्य कनीयसी भगिनी गुणशीलाभ्यामुत्तमादप्युत्तमा तदुत्सवावसरसमुचितमधरीकृतामृतरसेन रसेनाऽऽपूर्णं विविधं भक्ष्यभोज्यादि स्वयमधिष्ठाय सम्पादयामास पाककुशलैः । यस्य पाकस्य रसो रसस्यापि तस्य रसायाभूत्; यं रसं लब्ध्वा नापरं कामयेतात्मज्ञस्तत्त्वदर्शी, यं लब्ध्वाऽनवधिमानन्दं कमपि प्राप्नोति । अथ यथाविधि कारयित्वा गोवर्धनपूजां सर्वान्तर्यामिणे सर्वकर्मसमाराध्याय श्रीकृष्णाय सर्वमेव तं पाकवर्गं षड्रसपरिपूर्णं निवेद्य नीराजनान्तैर्महोपचारैः प्रवर्तिते महोत्सवे,

भगवदादेशेन ललिता स्वयं स्वेनानुदिनमाराध्यमानमर्चारूपिणमाराधयितुं प्रवृत्ता प्रत्याहृतः सकलबाह्येन्द्रियव्यापारा भगवति साक्षादप्राकृतवपुषि परया भक्त्या चेतः समुपरुध्य सपदि हृदयकमले समुद्भूतप्रकाशं भगवन्तं पुरुषोत्तममर्चायामपि साक्षात्सन्निहितमनुभूय तमर्घ्यादिभिरखिलैः षोडशोपचारैः समाराधयत्। भगवानपि भक्तिपरवशः सर्वामेव तया कृतां सपर्यां सर्वलोकसाक्षिकमर्चासमाधिमतिलङ्घ्य स्वयमङ्गीचकार। तदेवं ससम्भ्रमं साश्चर्यं च निर्वृत्तेऽन्नकूटमहोत्सवे, प्रवृत्ते च तथैव प्रबोधिन्युत्सवे वृत्तालयनिवासिभिर्भक्तैरसाकमावासः पावनीकर्तव्य इत्यभ्यर्थितो भगवांस्तेषां चिराकाङ्क्षितं मनोरथं परिपूरयन्नङ्गीचकार तत्प्रार्थनाम्।

अथ कतिपयैरेवाहोभिः उच्चैःश्रवसमिव भुवि सन्निहितं तुरगमधिरुह्य प्रस्थितो दुर्गपुरात् अश्वारोहैः पार्थिवकुमारैरभिरक्ष्यमाणपार्श्वः परिवृतो मुनिमण्डलेन प्राप वृत्तालयोपान्तवनभुवम्। अत्रान्तरे अवगतभगवदागमनवृत्तान्ताः पौरजानाः सोपायनपाणयः प्रत्युद्गम्य भगवन्तं कृतप्रणामास्तच्चरणकमलदर्शनसञ्जातनिरवधिकानन्दास्तेनाभिनन्दितास्तदाज्ञानुवर्तनपरास्तमन्वयुः। नानादिगन्तेभ्यस्तदागमनवार्तामुपश्रुत्य समागतानां वैदेशिकानामसङ्ख्यातं वृन्दं परितो वृत्तालयं यावदृक्प्रसरप्रदेशमदृश्यत। भगवांश्चाहमहमिकया सहस्रशः समागच्छतामात्मचरणकमलप्रणयिनां महति सम्मर्दे मन्दं मन्दं वाहनमात्मनो गमयन्ननुपरुद्धसकलप्रेक्षकजनोत्साहः पदे पदे सहाञ्जलिकुड्मलैः समर्प्यमाणान्प्रेमरसनिष्यन्दपूर्णान्पुष्पहारान्स्वीकुर्वन् प्राग्भागे पुरस्य वर्तमाने सहकारप्रमुखविविधफलद्रुमोपशोभिते सर्वेन्द्रियाह्लादके क्वचिदुपवने सुखावतरणमकरोत्। अपरे चानुयायिनो यथायथं प्रकल्पिते आवासे स्वावासमकुर्वन्। अथ भगवान्निजमुखारविन्दनिस्सरद्वाङ्मकरन्दरसास्वादलुब्धानां सहस्राधिकानां सुमनसां समवायेन परिपूर्णां परिषदमलङ्कुर्वन्नमृतरसनिष्यन्दसरसैर्विज्ञानवैराग्यावबोधनैकान्तैर्वचनसन्दोहैर्विमलयन्सकलश्रोतृमानसानि स्वल्पेनैव कालेन प्रशान्ततमोरजस्कामुन्मिषितसत्त्वां दैवीं सम्पदमभितः प्रवर्तयामास। अत्रान्तरे भ्रातरौ भगवतस्तीर्थयात्राप्रवृत्तानां साधूनां वचनादवगतभ्रातृवृत्तान्तौ भ्रातुः समागमसुखमाकाङ्क्षमाणौ सान्वयौ सदाराबुत्तरकोसलात्समाजग्मतुः। विस्मयनीयानुभावं भगवन्तं साक्षात्कृत्य वचसामगोचरे क्वाप्यानन्दजलधौ निमज्जतुः। भगवांश्च भक्तजनैकप्रियो बन्धुजनप्रणयरसानुगुणया वृत्त्या पूर्वजावरजमर्यादां च भावयन् स्वावासप्रत्यासन्ने भवने वासं तयोरकारयत्। भक्तजनाभ्यर्थनया तत्रैव निर्वर्त्य पुष्पदोलोत्सवं दुर्गपुरं गन्तुकामः सर्वाननुज्ञाप्यान्तरङ्गपरिचरैरनुसेव्यमानः परिवृतः परिमितेन परमहंसमण्डलेन प्राप दुर्गपुरम्।

अथ कतिपयेष्वतीतेषु मासेषु लोकानुग्रहैकप्रवृत्तिर्भगवानभ्यर्थनां भक्तानां निमित्तयंस्तांस्तान्निजचरणकमलदर्शनप्रदानेन कृतार्थयन् जीववर्मादीनां प्रार्थनां पुरस्कृत्य प्राप शार्ङ्गपुरमनुगम्यमानः क्षणविरहासहिष्णुनोत्तमेन। तत्र च तेभ्यस्तेभ्यस्तत्तदधिकारानुरूपान्धर्मानुपदिदेश। तत्रैव भक्तजनाभ्यर्थनया महता सम्भ्रमेण जन्माष्टम्युत्सवं निर्वर्त्य कार्यायनग्रामनिवासिनां भक्तजनानामभ्यर्थनया प्राप कार्यायनग्रामम्। तत्र च तैस्तैः परमया भक्त्या सेव्यमानः सुकृतदुष्कृतविभागं तत्तत्फलभेदं हेयोपादेयज्ञापनलक्षणं विस्तरेण निरूपयन्नन्यैश्च तत्त्वोपदेशैः समुज्जीवयंस्तांस्तान्देशानुवास मासद्वयम्। तत्रैव प्रवृत्ते प्रबोधिन्युत्सवे तदुत्सवसेवार्थमागतेष्वपरेषु भगवदाज्ञया यथायथं प्रतिनिवृत्तेषु जीर्णदुर्गावासो हेमन्तसिंहः नागटङ्कनिवासः सूरश्चेत्येतौ स्वस्वावासनगरं भगवन्तं नेतुकामौ सादरमभ्यर्थयताम्। तयोरादरं विचिन्त्य द्वयोरपि मनोरथं परिपूरयन्प्रस्थितः कार्यायनग्रामान्मार्गवशात्प्राप्य लोह(लोया)ग्रामं सूराधिष्ठितं तत्र तेषां तेषां निजचरणकमलपरायणानां मनोनयनमहोत्सवमावहन्, ततः प्राप नागटङ्काख्यं नगरम्। तत्र च सूरस्याभ्यर्थनया अभ्यर्थनया चान्येषां भक्तानां पञ्चपदिनान्युवास तत्र। तत्र च शुश्रूषुजनहृदयानि विमलयन्यथाधिकारमुपदिदेश धर्मान्। ततः प्रस्थितो जीर्णदुर्गं गच्छन् पथि नातिदूरे तस्य नगरस्य वर्तमाने पञ्चालाग्रामे तेनैव हेमन्तसिंहेनाधिष्ठिते नगरनिवासादुत्तममनुरूपमात्मनो निवासममिनिश्चित्य सह तेन हेमन्तसिंहेन मुनिजनपरिवृतपार्श्वभागः, उत्तमादिभिः स्वचरणकमलैकान्तभक्तैरनुगतः, तद्ग्रामनिवासिभिरभिगम्यमानः प्राप पञ्चालग्रामम्। स च हेमन्तसिंहस्तत्र तथाविधां भगवतः सपर्यां व्यधत्त यया प्रसन्नो भगवांस्तन्मनोरथपरिपूरणादपरं नाधिकममन्यत। दुर्गनगर इवास्मिन् ग्रामे उत्तमस्येवास्य भक्तिर

शनया नियन्त्रितश्चिरमुवास। अनुदिनममृतमयैरिवोपदेशैराप्याययन् शुश्रूषुजनान्, आनन्दयंश्चैकान्तभक्तानात्मानन्दानुभवप्रदानेन, प्रशमयंश्चासुरीं प्रवृत्तिं सत्त्वालोकोन्मेषापादनेन, अवगमयंश्चौपनिषदानां भेदवचनानां सारतममर्थं जिज्ञासून्, प्रकृतिपुरुषेश्वरादितत्तदर्थविभागं च प्रख्यापयन्प्रमाणैरभिवर्धमानमुमुक्षुजनसमवायां सभामकरोत्। अथैकदा—ग्रामस्योपान्ते तेन हेमन्तसिंहेन परिकल्पितेषूटजेषु कृतावासान् स्वचरणकमलसमाश्रयान्मुनीनवलोकयितुं निशायाः प्रथमे भागे परिमितपरिजनपरिवृतो भगवाननन्यभक्तेनोत्तमेन हेमन्तसिंहेन सहापरैश्च जगाम। गत्वा च तानपश्यदात्मीयभक्ताननन्यया भक्त्याऽऽत्मन्येव प्रलीनसकलवृत्तिकं यूथशः सङ्घीभूय गायतो मुनीन्। तेषां तथाविधं भक्तिरससमुद्रेकमवलोक्य प्रहृष्टमनास्तेषां समीपं प्राप। तेच सपदि भगवन्तमेव पुरतः साक्षात्सन्निहितमवलोक्य ससम्भ्रमं समेत्य तच्चरणनलिनयोः प्रणम्य तदाज्ञैकप्रतीक्षा अभूवन्। अथ भगवांस्तैरुपनीते आसने स्वयमुपविष्टः, तेषां भक्तिरसपरीवाहं स्वयमनुभवितुकाम इव तान्यथापूर्वं भगवद्गुणगानाय प्रावर्तयत। प्रवर्तिताश्च ते परितो भगवन्तं मण्डलीभूय प्रसर्पन्तस्तद्वदनारविन्दैकदत्तदृष्टयो व्यपेतसकलबाह्यवृत्तयः पुरत इव हृदयकमले भगवन्तं भावयन्तो गानरसोत्तरङ्गितेन भक्तिरसतरङ्गेण ह्रियमाणमानसाः स्वात्मानमपि व्यस्मरन्। अथ भगवान् प्रेमातिशयतः प्रसन्नः किमप्यद्भुतमानन्दमयमक्षरात्परतः परं मुक्तैकानुभाव्यमात्मीयं दिव्यं रूपं तेषां दृष्टिगोचरीचकार। ते च प्रकाशकानामादित्यादीनामपि प्रकाशकेन निजदिव्यरूपप्रभामण्डलेन प्रकाशमानं राधारमाभ्यामलङ्कृतपार्श्वद्वयं श्रीदामाद्यनेकपार्षदपरिचर्यमाणचरणनलिनं पुरुषोत्तमं साक्षात्कृत्यामृतमय इव सागरे निमग्नाः परं कमपि निरवधि सुखमन्वभूवन्। तथैवोत्तमो हेमन्तसिंहश्चापरे च। तैश्च तदनुभवजनितेनोत्तरङ्गेणेव भक्तिपूरेण हृदयतलादुद्गम्य बहिःप्रवहता स्तुतिवचनेन समर्चितो भगवांस्ताननुगृह्य प्राप स्वावासम्। अथ हेमन्तसिंहेनाभ्यर्थितः प्राप्य जीर्णदुर्गनगरं तत्रत्यान्भवभयप्रशमनैस्तत्त्वोपदेशैर्विधाय समुन्मिषितसत्त्वाननुगृह्य च तांस्तान्यथाधिकारं भगवतो वासुदेवस्य द्वारकानिवासस्य विहरणस्थानभूतं रैवतकगिरिमनेकतीर्थोपशोभितमधिरुह्य विधाय तत्तत्पुण्यस्थानयात्रां ब्राह्मणान्सहस्रशो भोजनदक्षिणादिभिः सन्तर्प्य निजचरणकमलच्छायारूपेणोत्तमेनानुगम्यमानः प्राप दुर्गपुरम्।

अथ कदाचन भगवांस्तत्र रहसि समुपविष्टः कमपि शुभसङ्कल्पमकरोत्-एतावता समयेनास्माभिस्तत्र तत्र सञ्चरद्भिः प्रायो जनानां प्रवर्तितं नामाभ्युदयमूलम्। प्रशमितश्च तमःसमुन्मेषो विज्ञानालोकप्रसारणेन। यश्च दृष्टिकालुष्यापादको रजःसमुन्मेषः सोऽप्युपशमित औपदेशिकामृतासारैः। परमिदमाशङ्कास्थानम्। विषमा हि गुणमयी प्रकृतिः क्षणेन पुरुषमनवहितं रजोविलासेन विमोह्य स्ववशमानीयान्ते तमसि गाढे प्रक्षिप्य पातयेदेव, तद्यावन्न ज्ञाननिष्ठासिद्धिस्तावत्सदाचार्यसमागमः साधुजनसहवासनैरन्तर्यं चापेक्ष्यत एव। न च वयं सर्वदा सन्निधाय पदेपदे सम्भाव्यमानं भयं प्रशमयितुं कृतसङ्कल्पाः। नहि रोचते नः समवाये मानुषेऽवस्थितिः। अप्रतिसमाधेयाधर्माभिभवप्रशमनं तु सम्पादितम्। तद्भाविनः प्रमादात्परिरक्षणाय भाविनां सदाचार्यसम्पत्तिः साधुजनसहवसतिश्च यथाऽविरता स्यात्तथा विधेयम्। यश्चायं योगमार्गः स चातिगहनः। श्रूयते च-"पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्। कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्॥" प्रसङ्गश्चास्त्यस्मिन्योगमार्गे स्वात्मकैवल्याविर्भावमात्रेण परमात्मानुभवानन्दरसविस्मरणस्य। स्वादुतमभक्तिमार्ग एव तु सुकरः सर्वजीवहितावहश्च। सर्वेन्द्रियवृत्तीनामात्यन्तिकोपरोधपक्षात्सर्वप्रकारेण तासां भगवत्परतापादनपक्षो हि सुविषयावलम्बनापादनेन सुकरः परमनिःश्रेयसपथः। राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्। प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्। यद्यपि न प्राकृतेन्द्रियाणां गतिः परात्परे भगवद्रूपे, अथाप्यखिललोककल्याणार्थमाविष्क्रियमाणेऽर्चास्वरूपे तु स्यात्तेषां गतिरिति घटते नाम सर्वेन्द्रियाणां भगवत्परतापादनम्। तदर्थं च तत्र तत्रार्चाप्रतिष्ठापनाय भगवन्मन्दिराणि निर्मेयानि नाम। इदं चापरमवश्यं सम्पाद्यम्। गहना हि शास्त्राणां गतिः। यत्प्रथमप्रमाणमनादिनिधनं वेदाख्यं तदपि हि न करतलामलकवत्सुव्यक्तं हितमेकं नियतमावेदयति। नानामुखान्प्रियानावेदयति नाम। त्रैगुण्यविषया हि वेदाः। तदर्थावबोधनाय प्रवृत्ताश्च बहवो नैकहृदयाः स्वस्वदृष्ट्यनुगुणमन्यान्यप्रकारामर्थगतिं साधयन्तो बुभुत्सूनव्याकुलयन्ति नाम।

स्तारश्चानन्तादृष्टशास्त्रार्थाननुसरन्तो गर्भजन्मजरामरणलक्षणचक्रकमण्डले प्रख्यापयन्तः संस्कारान्विधिविधानापाततः केवलं रमणीयां वाचं विशेषतो व्याहरन्ति। उपदेष्टारश्च बहवोऽधुना तेषां हृदयमजानन्तो यथायथमुपदिशन्तः संसृतिचक्र एव भ्रामयन्ति जनान्। तत् सकलवेदस्मृत्यादिपरमतात्पर्यप्रकाशनैकसमुचितं सदुपदेशगर्भं किमपि शास्त्रं प्रकाशयितव्यं नाम, येन भाविन उपदेष्टारः सारांशमेव शास्त्रस्य सर्वेभ्य उपदिशेयुः। अनुदिनमनुतन्यमानोऽस्माभिरयमुपदेशो निबन्धरूपेणोद्धृतो भाविनां विज्ञानोपदेशनिधिभूतः श्रेयसे स्यादिति।

अथ सङ्कल्पमनु समुद्भूतं श्रीनगरनिवासिनां भक्तानां मनोरथं परिपूरयन् स्वसङ्कल्पं फलाविनाभूतमाविष्कुर्वन् श्रीनगरे निर्माय भगवदालयं नरनारायणयोः प्रतिष्ठां यथाविधि विधाय तन्नगरनिवासिनोऽन्यांश्चाभ्यागतान्ब्राह्मणान् सर्वान् भोजयित्वा मुक्तिसौधनिःश्रेणिकां सुखारोहामकरोत्।

अथ जातु दुर्गनगरे भगवन्तं निषेव्यमाणमुत्तमादिभिरभिगम्यमानं मुमुक्षुभिः परिसेव्यमानपार्श्वं मुनिजनैरापीयमानवचनामृतं तापत्रयातुरैरभ्येत्य कतिचन भुजङ्गनगरनिवासिनो भक्ताः स्वनगरे श्रीनगर इव नरनारायणनित्यसेवामाकाङ्क्षमाणाः प्रार्थयामासुः। भगवांश्च तेषामभ्यर्थनां स्वीकृत्य भगवन्मन्दिरनिर्माणायादिदेश। यथादेशं भगवन्मन्दिरे तैर्निर्मिते स्वयं सह मुनिभिस्तत्र गत्वा यथाविधि नरनारायणप्रतिष्ठां विधाय तत्रत्यानां मनोरथमपूरयत्।

अथापरैः स्वचरणसरसिजसेवारसैकास्वादैरवसरेऽभ्यर्थितो यथाभ्यर्थनं वृत्तालये महान्तमतिरमणीयसन्निवेशमात्मनो निरन्तरसन्निधानसमुचितं मन्दिरं स्वान्तरङ्गैः साधुभिः कारयित्वा समये तत्र स्वयं सन्निधाय यथाविधि लक्ष्मीनारायणयोः स्वचरणकमलपरायणानां निध्यानालम्बनभूताया हरिकृष्णाख्याया आत्मीयार्चायाश्च प्रतिष्ठां विधाप्य सर्वातिशायिन्याऽतिमानुषसम्पदा समुपलक्षितं भगवदाविर्भावमर्चायामात्मनः प्रकाशयन् प्रख्यापयंस्तत्र प्रेमरसं भक्तजनेषु चिरमुवास।

आसीच्चास्य चरणकमलसमाश्रयः सच्चिदानन्दनामा व्यपेतदेहात्माभिमानः स्वात्मारामः सर्वान्तरात्मनि समाहितसकलकरणग्रामः। स चायं कदाचिदादेशेन भगवतो द्वारकानाथमुपसेवितुं गच्छतामयोध्यावासिनां साहाय्यमुपकलयन्सह तैर्निर्गतः प्राप द्वारकाम्। तत्र चापश्यदहमहमिकया भगवतो मन्दिरं समुत्सर्पतामुद्वेलभक्तिश्रद्धातरङ्गितमानसानां मन्दिरद्वारपालप्रत्याहतगतीनां वेलाप्रत्याहतानामिव तरङ्गाणां प्रत्यावर्तमानानां पङ्क्तिम्। कुतोऽयं प्रत्याघात एषामिति विचारयतस्तस्य श्रवणपथे न्यपतत्तेषामुद्घोषः। हन्त !! पापा धनलोभप्रणष्टविवेकाः के नामैते ब्राह्मणाभासा यन्नो भगवत्सेवैकलालसानकिञ्चनाननुपरुन्धन्तः पथि धर्मोपदेशेन लुण्टाकवृत्तिमात्मनः ख्यापयन्तो नाविका इव तरणशुल्कं भगवन्मूर्तिदर्शनशुल्कं बलादाहरन्तः समुद्वेजयन्ति तीर्थयात्रापरान्। हन्त !! तीर्थावगाहनमपि शुल्कायत्तम्। कपर्दिकामात्रमपि नास्माकं हस्ते। किं कुर्मः कस्मै ब्रूमः पापवृत्तमेतदिति। तदिदमुपश्रुत्य खिन्नखिन्नो मनस्येवं व्यचिन्तयत्—कोऽयं कलेर्विलासः; यतः सर्वानुग्रहायावतीर्णस्यार्चारूपस्य भगवतः सेवाऽपि धनैकनियता, आपः पन्थाश्च पथिकजनसुलभा अपि धनैकनियताः, येषां नाम याजनादि वृत्तिस्तेषां परपीडनं वृत्तिः, येषां सन्तोषो धर्मस्तेषां लोभोऽभिवर्धमानः सहजतां याति। एवमादि चिन्तयन्नेव भगवद्दर्शनकुतूहलोन्नीयमानमानसः प्राप्तमात्रो मन्दिरद्वारम्, आवेदितापरिग्रहधर्मोऽपि तीव्रकोपैस्तैर्ब्रह्मबन्धुभिर्भर्त्सनपूर्वकमुपरुद्धः सपदि प्रत्यावृत्तस्तत्रैव मन्दिरस्य नातिसमीपे स्थितः प्रणष्टसर्वस्व इव विहतसकलमनोरथ इव नितरामन्तर्विषण्णः कथं नामेहागत्यापि विना श्रीकृष्णचरणकमलसेवां निर्गन्तव्यं मया, भगवान् हि सर्वभूतसुहृत्, स हि भक्त्या त्वनन्यया शक्य एव द्रष्टुम्, तस्य नाम न द्वेष्योऽस्ति न प्रियः, तत् यावत् भगवान् साक्षात्कारपथं नागच्छेत्तावन्नेतः पदमात्रमपि प्रचलितव्यमित्याहितसङ्कल्पः, परया भक्त्या भगवतो द्वारकानाथस्य रूपं मनसि प्रणिधाय समुपरुद्धसकलबाह्यकरणव्यापारो दिनचतुष्टयं स्थाणुरिवाचलः प्रणिधानपरो बभूव। अथ पञ्चमेऽहनि भगवान् द्वारकानाथः स्वमेव दिव्यं रूपं दृष्टिगोचरीकुर्वन्नाविर्बभूव। सोऽपि तत्परमाद्भुतं भगवतो रूपं दृष्ट्वा प्रहृष्टमानसस्तुष्टाव। भगवानपि प्रसन्नो मुने ! तव परमया भक्त्या तवैवास्मि वशगः, वृत्तालये श्रीनारायणार्चायामहं भविष्यामि सदा सन्निहितः, तस्यादृशानां भक्तानां मद्दर्शनार्थं क्लेशो नेदृशः कदाऽपि स्यादिति व्याहृत्यान्तरधात्। मुनिश्चायं भगवतोऽनेन वचनेन नितरां प्रहृष्टः सह तैरयोध्यावासिभिः प्रत्यावृत्तः प्राप्य दुर्गपुरं भगवतश्च-

रणकमलयोर्न्यवेदयत सकलं यात्रावृत्तम्। भगवांश्च द्वारकाधीशस्य दोलोत्सवं वृत्तालये विधास्यन् प्रस्थितः सह सकलेन मुनिवृन्देन भक्तजनवलयेन प्राप्य वृत्तालयं यथाविधानं महता सम्भ्रमेण भगवतो लक्ष्मीनारायणस्य पुष्पदोलोत्सवमकारयत् । तदानीं द्वारकाधीशश्च भगवान्यथावरदानं सन्निधाय श्रीलक्ष्मीनारायणार्चायां सर्वेषामेव नयनगोचरीचकारात्मनस्तदेव परमाद्भुतं रूपम् ।

एतस्मिन्नेवावसरे मुक्तानन्दनामा परमहंसमण्डलेषु प्रथमो भगवतः सेवार्थं वटोदरनगरात्सह भक्तैस्तत्रत्यैः प्राप वृत्तालयम्। यो हि भगवतैव धर्मपथपरिरक्षणाय प्रस्थापितः पूर्वं प्राप्य वटोदरनगरमसदृशेन विज्ञानवैराग्यतपःप्रचयेन विमुखानप्यभिमुखयन्ननुदिनमभिख्यापयन्भगवतो महिमानं कुमतिकल्पनाकलुषितचेतसां वादिनां प्रशमयन्विमतविक्षोभं प्रशमितरजस्तमःसमुन्मेषैः सत्त्वैकसंश्रयैरनपेतप्रमाणपदैः प्रवचनैः परामकारयद्रुचिं बहूनां भगवतश्चरणकमलयोः। अमृतमयमयूखोल्लासैरिव यदुपदेशोल्लासैः सकलकरणाह्लादकं कमप्यालोकमुपलभ्य कतिचन प्रधानामात्या राज्ञः राजा च व्यपेतकुमतितमोनिरोधा व्यपगतकुतर्कधर्मसंलोपणाः समनुभूयमानसहजानन्ददिव्यानुभावाश्चकोरा इव व्यपेतक्षुत्तृषोऽभवन् । भगवांश्चैतन्मुखाद्वटोदरनगरनिवासिनां धर्मनिष्ठां भक्तिं च तथाविधामुपश्रुत्य परां प्रीतिं तेषु व्यधत्त ।

अथ निर्वृत्ते तस्मिन्नुत्सवे यथायथं प्रयातेषूत्सवसेवार्थं समागतेषु भक्तेषु-यश्चापरः सङ्कल्पः सदुपदेशनैरन्तर्यमुमुक्षुजनहिताधानादिनिःश्रेयसमार्गपरिरक्षणैकान्तदेशिकपदप्रतिष्ठापनार्थः; पूर्वंस्तमात्मनो यौ भ्रातरौ रामप्रतापेच्छारामौ तयोः प्रथमस्य तनयमयोध्याप्रसादाख्यमपरस्य तनयं रघुवीराख्यं च ताभ्यां स्वीकृत्य द्वावपि देशिकपदे नियोज्य तयोः प्रथमं श्रीनरनारायणचरणनलिनसेवापरायणं द्वितीयं च श्रीलक्ष्मीनारायणचरणकमलसेवापरायणं च विधाय नरनारायणसेवाप्राधान्येन लक्ष्मीनारायणसेवाप्राधान्येन च आचार्यपदं विभज्य यथासंविभागं तत्तद्देशेषु धर्मप्रवर्तनं परमकर्तव्यं ताभ्यामादिशत् ।

अत्रान्तरे चिरादनुवर्तमानया भगवच्चरणकमलदर्शनसमुत्कण्ठया समुत्तरङ्गितचेतोवृत्तिना वडोदरनगराधीशेन सिंहजिन्नाम्ना महाराजेन प्रेषितो नारुपन्तनामा प्रधानपुरुषः प्राप्य भगवतश्चरणकमलपार्श्वं सभक्त्युन्मेषं प्रणम्य महाराजेन प्रेषितं महावस्त्राद्युपायनं पुरतो भगवतो विन्यस्य सप्रश्रयं व्यजिज्ञपत्। भगवन् महाराजो नः सदा भवदीयचरणकमलसेवावसरं प्रतीक्षमाणो मन्मुखेन प्रार्थयते तत्रभवन्तम्। चिरादेष भगवतश्चरणकमलयो रूढभावः कृतार्थयितव्यो भवता निजचरणदर्शनप्रदानेन, इदं चोपायनं स्वीकृत्य दासभावे वयं स्मर्तव्या इति। भगवांश्च तस्य प्रार्थनां स्वीकृत्य प्राह—प्रणयेन ते प्रेम्णा च राज्ञो वयं प्रसन्नाः स्मः, आगमिष्यामश्चाचिरेण, तमिममुदन्तं राज्ञे त्वं प्रथमं निवेदयेति। भगवतो निदेशं मूर्ध्न्याधाय निरगान्नारुपन्तः। भगवांश्च चतुर्थ्यां यथाविधि परिसमाप्याह्निकं परिवृतो मुनिवृन्देन, अनुगम्यमानश्चाश्वारोहैरात्मीयचरणकमलसेवकैरपरैश्च पद्गैरनुसेव्यमानो निर्गतो वृत्तालयात्पथि परमभक्तैस्तैस्तैरभ्यर्च्यमानः पञ्चम्यां प्रातर्वटोदरनगरोपकण्ठभुवं प्राप। राजा च भगवदागमनवार्तामुपश्रुत्य नारुपन्तमादिदेश—आगच्छतो भगवतः संमुखं सोपायनहस्तेन त्वया ममैव प्रत्यनन्तरीभूतेन सपदि गम्यताम्, नीयतां च चतुरङ्गं बलम्, सर्वतः समलङ्कृतेन महता राजपथेन राजोपचारेण नीयतां भगवानिति। अथ यथाराजनिदेशं निर्गत्य परिमेयपरिजनस्य मुनिजनमण्डलेनानुगम्यमानस्य भगवतः संमुखं गत्वा सपदि वाहनादवतीर्य भगवतः पादयोः प्रणिपत्य समर्प्य चरणकमलयोरुपायनानि, अभिनन्दितो भगवता प्रार्थयामास भगवन्तम्—सहैव मुनिमण्डलेनानेन तत्रभवान् प्रविश्य राजभवनमनेकराजहंससेव्यमाननिजचरणकमलरेणुभिः पवित्रयितुमर्हति, यच्चेदं चतुरङ्गबलं ये चेमे राजपुरुषा यश्चायं जनः सर्वोऽयं भवतश्चरणकमलपरिचरणायैवोपकल्पितः, अध्यारोहतु भवानिमं मातङ्गप्रवरमिति। भगवांश्च तत्प्रार्थनां मानयन्नारुरोह, ते ते मुनयो यथार्हं रथादिपूपाविशन्। राजमार्गे च भगवदागमनमहोत्सवदर्शनकुतूहलाक्रान्तानां जनानां सम्मर्दो महानभूत्। महाराजश्च स्वभवनद्वारोपान्ते स्थितो भगवदागमनं प्रतीक्षमाणो भगवति समागते सपदि प्रणम्य साभिनन्दनं समाभाषितो भगवता भगवन्तमनुव्रजन् प्रविवेश स्वभवनम् । तत्र च काञ्चनमयवेत्रधरैरुपसेव्यमानपार्श्वद्वये हंसतूलिकातल्पपरिष्कृते कनकमये भद्रासने समुपवेश्य भगवन्तं स्वयं प्रश्रयावनतमूर्धा व्यजिज्ञपत्—

भगवन्! भवतः पदाम्बुजं शुभमालम्बनमात्मकाङ्क्षिणाम् ।
अपि नः पथि चक्षुषोरभूत् सुकृतं किन्नु भवत्कृपैव वा ॥ १ ॥
अपि राज्यमिदं न शर्मणे यदनर्थस्य पदं पदे पदे ।
प्रभुतामदिरामदान्धता नियता पातयति क्षितीश्वरान् ॥ २ ॥
इदमेव शिवाय मे मतं हृदयग्रन्थिविमोचनक्षमम् ।
श्रुतिमङ्गलनामधेय ते पदपाथोरुहयुग्मदर्शनम् ॥ ३ ॥
विनयावनतेन मौलिना प्रणयापूरतरङ्गिचेतसा ।
इदमद्य मया निवेद्यते सकलं तत्तव योऽस्मि यन्मम ॥ ४ ॥

समुपश्रुत्य भगवान्वचनमिदं विनयमधुरिमोपेतं मङ्गलानि प्रयुञ्जानः प्रत्युवाच-राजन्! विनयमसृणा ते वाणी, अपूर्वेयमस्यां प्रणयरसाभिव्यक्तिः। मन्ये मेदिनीयं गुणवता भर्त्रा मोदते नाम। स्मारयति भवान्विष्णोर्विभूतिं पार्थिवपदे। इदं नश्चेतो विस्मापयते–अनवरतपरिस्रवन्मदधारासारगजेन्द्रघटाघनघनावलीमेदुरदुर्दिनाक्रान्तं हि राजकुलम्। विज्ञानास्वरमणिकिरणप्रचारस्य प्रचारस्य च परमहंसानां नैव भवेदिहावसरः। सत्यप्येवं भवांस्त्वालक्ष्यते तदुभयप्रचारपदम्। आप्तकामा वयमप्यनिर्भिन्नधर्मसेतून्विज्ञानामृतरसलोलुपान्भवादृशानन्विष्यन्तो भुवनतले विचरामः। यथा नः समागमेन भवतोऽयमानन्दस्तथैव नः; यज्जिज्ञासवो दुर्लभाः कलिदूषितेऽस्मिन् क्षितिवलये इति। आपीय श्रवणमधुरं वचनमिदं भगवतो राजा हर्षरसपरिपूर्णाशयो भगवतश्चरणकमलयोरनर्घं वासोभूषादि समर्पयित्वा भगवदावाससमुचितं स्थानं भगवन्तं प्रापयामास। दिनत्रयं सपर्यामनन्यसामान्यामकरोत्। अवसरप्रतीक्षाय तस्मै तेषु तेष्ववसरेषु हिततममुपदिदेश भगवान्। अथ चतुर्थेऽहनि ततः प्रस्थितः सह मुनिवृन्देन भगवान् राज्ञा चासीमान्तमनुगतोऽभ्यनुज्ञाय राजानमन्यांश्च तदीयान् स्वयं स्वपरिवारेण प्राप वृत्तालयम्।

अथ स्वयं जातु रहसि स्थितः कालविप्रकर्षे देशविप्रकर्षेऽपि सर्वानात्मीयानाश्रितानवबोधयन्धर्मस्य तत्त्वं सुसंक्षिप्तैश्छन्दोमयैर्वचनैः शिक्षापत्रीनाम्ना प्रख्यायमानमिममादेशसारं स्वयं सच्छास्त्रतः समुद्धृत्य प्रकाशयामास सर्वेभ्यः। यस्याद्य भूमिकाप्रसङ्गे चरितमिदं भगवतः प्रसङ्गादुपवर्ण्यते। अथ सौराष्ट्रदेशमधिवसतां भक्तानामभ्यर्थनया भगवतो वासुदेवस्य द्वारकानाथस्य विहरणस्थानभूतस्य रैवतकाचलस्योपत्यकायां जीर्णदुर्गपुरे महान्तं देवालयं निर्माय तत्र श्रीराधारमणं प्रतिष्ठाप्य भक्तिपथं सकलसुगममकरोत्। भाल्लदेशे च धौरेयनगरे तद्देशीयानामभ्यर्थनया मदनमोहनस्य भगवतः प्रतिष्ठामकरोत्। अथ कदाचिदवसरे सन्निहितौ स्वेनाचार्यपदे कृतप्रतिष्ठौ भ्रातृव्यावधिकृत्य प्रसङ्गेन पारमैकान्तिकदीक्षाप्रकारभेदं भगवदुत्सवविभेदांश्चोपदिदेश। धर्मामृतं च त्यागिनामत्यन्तापेक्षितं तेभ्यो विस्तरेणोपदिदेश। विज्ञानं च विशेषतस्तत्तदधिकारानुगुणं यथासंविभागं संततमसनिवर्हणाय प्रायच्छत्। धर्मं जिज्ञासमानाय शिवरामाभिधाय विप्राय सामान्यधर्मान्विशेषधर्मांश्चोपदिदेश। वर्णिनां च वृद्धधर्मान्मुकुन्दानन्दनामानं वर्णिनमात्मनश्चरणकमलपरिचरणपरमधिकृत्योपदिदेश। शतानन्दनाम्ने मुनये योगमष्टाङ्गं विस्तरेणोपदिदेश। तदेवं तत्र तत्र प्रतिष्ठापितधर्मपथः प्रवर्तितभक्तिपूरः समुज्जीवितानेकप्राणिसञ्चयः प्रशमितपापाचारप्रचारः कलिमपि कृतमावर्तयन्महीं स्वचरणकमलविन्यासैः पवित्रयन्नुवास विशेषतो भक्तानुकम्पया वृद्धादरो दुर्गपुरे। स्वचरणकमलैकपरायणस्योत्तमस्याभ्यर्थनया महान्तमतिरमणीयं मन्दिरं कारयित्वा श्रीगोपीनाथार्चात्मना सकलाविर्भावकारणमक्षरात्परतः परमात्मनोऽनन्यभावास्पदं दिव्यं रूपं प्रतिष्ठापयामास।

अथ विस्तृतं पञ्चभिः प्रकरणैर्विभक्तं मुमुक्षुजनसञ्जीवनं वर्णाश्रमधर्मविवेचनगर्भं पारमैकान्तिकधर्मप्रकाशकं श्रीनारायणमुनेरात्मनश्चरितामृतरसनिष्यन्दलक्षणं धर्मशास्त्रं स्वचरणैकान्तसेवकेन श्रीमता शतानन्दमुनिना कारयित्वा सकलजनसुखावबोधं धर्मरहस्यमकरोत्। इत्थम्–अखिलमङ्गलायतनमात्मनोऽतिमानुषं चरितं मानुषभावे प्रत्याययन्, विस्तारयन्नवनितले विज्ञानालोकम्, उत्तरङ्गयन् भगवद्भक्तिसुधाप्रवाहम्, आश्रितजनमनांसि वात्सल्यामृतवर्षेण संमदर्पयन्, अपराधिनोऽ-

प्यनुकम्पया क्रोडीकुर्वन्, तत्तदभिलषितवितरणेन तत्तदर्थिजनमनांसि समुल्लासयन्, दीनजनेषु दयमानमनाः, परेषां दुःखेषु भृशं व्याकुलान्तः करणः, पामरानप्यभिमुखान् प्रेमार्द्रेण चक्षुषा वीक्षमाणः, पथि पथि परितो निपतितान्भवान्धकूपे शरणमाक्रन्दमानाननपेक्ष्य विद्यावृत्तादिसाधनान्वेषणविलम्बं सपदि स्वहस्तावलम्बदानेन समुद्धरन्, आत्मनः प्रादुर्भावमवनितले कमपि समयं सकलयोगक्षेमाय प्रकाश्य परिपूर्णे प्रादुर्भावनिमित्ते स्वं धाम संविशन् आत्मीयानाहूय तांस्तांस्त्यागिनो गृहस्थांश्च तांस्तानर्थान्धर्मानुबन्धिन आदिश्य स्वात्मसमाधौ निलीनो (सं. १८८६) ज्येष्ठशुक्लदशम्यां विसृज्य मानुषसजातीयं संस्थानं नृलोकविडम्बनं स्वेन ज्योतिषा समुपलक्षितः पश्यतामेव सर्वेषामन्तर्दधे ।

इहोदितानामर्थानां मूलं सत्सङ्गिजीवनम् । पदानां ग्रथने त्वेषा मतिरल्पा तु साधनम् ॥ १ ॥
स्यादेव वाक्यरचनादोषो मे मतिमान्द्यतः । गुणदोषविभागेषु सन्तस्तुष्यन्ति पूर्वतः ॥ २ ॥

उत्प्रेक्ष्योत्प्रेक्ष्य बुद्ध्या कथमपि न गुणग्रामहारो मयाऽस्मिन्
सन्दर्भे गुम्फितो यः प्रभवति भगवत्तोषणे कोऽप्यमूल्यः ।
किन्तु प्राचां प्रबन्धादनवधिसहजानन्ददिव्यानुभाव-
प्रोत्कृष्टैश्वर्यकोशात्किमपि करगतं रत्नमुत्कीर्णमत्र ॥ ३ ॥

उचितमनुचितं वा यन्ममेदं वचः स्यात् मम हृदयसखो यस्तस्य तु प्रीणनं स्यात् ।
विबुधवलयचित्ताह्लादने के वयं स्मः स हि भवति समर्थो यः पुमान्वश्यवाक् स्यात् ॥ ४ ॥

---

## अथ किञ्चिदिहावेदनीयमावेदयामः—

सङ्गृहीतं नाम भगवतः सहजानन्दस्य चरितं साम्प्रदायिकनिबन्धानुसारेण । यश्चायं स्वीकृतमानुषभावस्य तस्य गुणातिशयः परार्थैकाधायकः सहृदयहृदयङ्गमस्तत्र तत्र निबन्धे समुदाहृतः, सर्वतो विश्रुतः प्रमातृपुरुषवदनपरम्परातोऽप्यवगम्यमानः, क्वचित्क्वचिदधुनापि दृश्यमानलिङ्गः, तद्विस्तरस्य नेह निबन्धमुखे विशेषतोऽवसरः । अथापि समासेन (प्राधान्येन) तदवश्यमस्मिन्नरितप्रसङ्गे ज्ञापयितव्यं नाम । येनाभ्यसूयात्तिमिरानुपहतमनोनयना गुणग्रहणेन प्रभवेयुरात्मविशुद्धये इत्ययमारम्भः सिंहावलोकनन्यायेन क्रियते—इदं नाम महद्व्रतं भगवतः सहजानन्दस्य; न कस्मैचिद्द्रोहश्चिन्त्य इति । इदं च वचनामृतमस्य अकुतश्चिद्भयानामप्यस्माकं भयं द्रोहमात्रात्-विशेषतश्च भगवद्भागवतदीनजनद्रोहतः, इति । बहवो हि तदा तदा भगवतः सहजानन्दस्य प्रख्यातिमसहमाना वीतरागाभासा अन्ये च ते ते तस्मै तदीयेभ्यश्च द्रुह्यन्ति स्म पांसुप्रक्षेपोपलशकलाभिघातपरुषभाषणादिभिरत्याचारैः । सत्यपि निग्रहसामर्थ्ये क्षमां विना नापरं प्रतीकारमालल्म्बे भगवान्, तदीयाश्च । तत्रेदमुदाहियते—भगवान्कुतश्चिद्ग्रामात्कञ्चिद्ग्रामं गच्छन् पथि विद्वेषिभूयिष्ठं ग्रामं जानन्नप्यात्मीयानां क्षमाव्रतं ग्राहयितुकामः समादिदेश-सन्निहितेऽस्मिन्ग्रामे सन्ति नाम बहवोऽसूयाविष्टहृदयाः, तेऽस्मान् ग्राममध्यं प्रविष्टान् कदाचित्पीडयेयुरपि, ग्रामाद्बहिरेव मार्गान्तरेणापसरणे न तत्प्रसङ्गः, परंतु नः क्षमागुणस्य न प्रसरावकाशः स्यात्, युष्माकं च क्षमाव्रतं कियदिति विनिश्चेयं नाम, तद्वयमनेनैव ग्राममध्येन गच्छामेति । एवमादिश्य परिवृतो मुनिमण्डलेन शताधिकेनाश्वारोहैश्च क्षत्रियकुमारैरनुगम्यमान उपसेव्यमानश्च परिजनैः प्रविवेश तमेव ग्राममध्यम् । प्रविष्टमात्रे तस्मिन्नीर्ष्यातिरेकसमुद्भूतक्रोधवेगाद्विनष्टहृदयः कतिचन पामराः पांसुप्रक्षेपपरुषभाषणादीनत्याचारान्कर्तुं प्रायतन्त । व्यसार्युर्नाम तदा क्षत्रियकुमाराः स्वस्वभावं भगवदादेशमन्त्रनियन्त्रिताः । न चेदेकस्या असिधारायाः पर्याप्तः स्याद्विद्वेषिसमवायः । सर्व एवाधोनिहितदृष्टयः स्वामिनो निदेशमनुसरन्तः सहैव तेन तेनैव पथा ग्रामाद्बहिरपससर्पुः । 'अतृणे पतितो वह्निः स्वयमेवोपशाम्यती'ति न्यायेन स्वयमेवोपरतव्यापारा अभूवन् विद्वेषिणः । भगवांश्च सहैव सर्वैः प्राप जिगमिषितं स्थानम् । तदिदं क्षमाव्रतमात्मीयैरप्यनुपालितमवलोक्य तेषु परां प्रीतिमन्वधत्त । अनेनैव क्षमा-

व्रतेन सर्वातिशायिनाऽयमेव पुरुषोत्तम इति विनिश्चीयमानः कालेन समुद्भूतप्रेमभरैस्तैरपि समाश्रितचरणकमलोऽभूत् भगवान् सहजानन्दः। इदं च क्षमाव्रतं तदा तदा बहुषु स्थलेषु प्रकटितं नाम। इहैव निबन्धे चायमादेशः—'गालिदानं ताडनं च कृतं कुमतिभिर्जनैः। क्षन्तव्यमेव सर्वेषां चिन्तनीयं हितं च तैः॥' 'क्रौर्यं कार्यं न कस्मिंश्चित्' 'कस्यापि प्राणिनो हिंसा नैव कार्या कदाचने'ति।

अयमपरः स्वाभाविको गुणविशेषः—या नाम परदुःखासहिष्णुत्वलक्षणा दया। अनयैव हि ज्ञानशक्त्यादिर्गुणीभवति। असत्यां चास्यां ज्ञानशक्त्यादयो हि नार्थाय। यदा यदा भगवानयं दीनदीनं म्लानवदनमश्रुपूर्णनयनं दुःखिनं पश्येत्सपदि द्रवीभूतहृदयः स्वयं सहजानन्दोऽपि दुःखाकुलो भूत्वा प्रयतते सपदि तदपनोदनाय साक्षात्। विसरति च विभवतः परिवारम्। न च तदाऽस्य देयादेयविभागः। यत्स्यात्समीपे वासो रूप्यं सुवर्णं वा यच्चान्यत् तच्चेद्दुःखप्रशमनं, सपदि तत्प्रदानेन परस्य प्रशामयेदेव दुःखम्। अनेनैव गुणातिशयेन सहजेन स्वगुरोः श्रीरामानन्दस्वामिनः प्रसन्नादिममेव वरमतीत्यान्यान्वरान्वव्रे—प्रारब्धपरिपाकेन केनाप्यस्मिन्सत्सङ्गे स्याच्चेत्कस्यचिद्दुःखप्रसङ्गोऽन्नवस्त्रादिभिः, प्रसङ्गो वाऽन्तिमसमये महतो दुःखस्य, स सर्वोऽपि ममैव भवतु मास्तु परेषामिति। इदं चास्यात्र वचनामृतम्-जातु वयं परेषां वीतरागाणां केषांचिन्मण्डल्यां प्रसङ्गवशाद्गतास्तैः कोमलां तण्डुलीयभाजामाच्छिद्यानय शाकायेति प्रोक्ताः शिशुहिंसात इव तत्पीडनतः सन्त्रस्ता नैव तस्मिन्कार्ये प्रवृत्ता वयमिति। दत्तात्रेयजडभरतनारदशुकवद्दयार्द्रहृदयाः स इति च। जातु भगवान् दुर्गपुरे कृतावासः कस्यचिद्दुर्गतस्य दुर्भिक्षोपघातेनालब्धाशनस्य बुभुक्षावेगेन प्रशिथिलकरणस्यार्थिनो दीनध्वनिमर्धरात्रे शुश्राव, श्रुत्वा सपदि द्रवीभूतहृदयः प्रसुप्तान् परिजनानप्रबोधयन् स्वयमेव संपाद्यान्नं तं प्राशयत्। अस्ति नाम वृत्तालयस्य समीपे कश्चिद्ग्रामः। तत्र काचित्कौलिककुलसम्भवा स्वयमशरणा तनयादिपोष्यवर्गसम्पन्नाऽवग्रहप्रणष्टान्नपरिपाकेषु क्षेत्रेषु कथमपि जीवितुं प्रयतमानाप्यलब्धजीवनोपाया जातु दैवयोगेन तत्र समागतस्य भगवतश्चरणयोरात्मनो जीवनधारणक्लेशं न्यवेदयत्। भगवांश्च दुःखं तदसहमानः सपदि तद्दुःखं प्रशमयन्निदमुवाच—मा भैषीः, यस्ते गृहेऽयं कुसूलः स एव ते निरवधिधान्यं दास्यति, सपदि तन्मुखं सुदृढं पिधेहि सदाऽयमनुद्घाटितवदन एवास्तु, अन्वहमस्याधस्तनाद्द्वाराद्यावदपेक्षितं धान्यं गृहाणेति। एवमुक्त्वा तं कुसूलं निर्दिश्य प्रदर्शयन्निव करतलगृहीतेन वेत्रेणाभिजघान। स च कुसूलः सपदि सम्भृतधान्यो भूत्वाऽपेक्षितसमये धान्यं प्रयच्छन्नासीत्। स चायं कुसूलो दृश्यतेऽद्यापि तद्वंश्यगृहे। एवं तत्र तत्र तदा तदा परदुःखं लौकिकोपायसमाधेयं तेनैवोपायेन, अलौकिकोपायसमाधेयमलौकिकेनैवोपायेन प्रशमयन्नात्मनो निर्हेतुकरुणां प्रकाशयामास भगवान्। इहापि निबन्धे दयामधिकृत्येदं वचनम्—'सर्वैरपि यथाशक्ति भाव्यं दीनेषु वत्सलै'रिति।

सौशील्यं (सारल्यं) चास्यानवधि। नास्यायं विभागः-अयं जात्या ज्यायानयं जघन्यः, अयं विद्यया गरीयानयं कनीयान्, अयं बालोऽयं स्थविरः, अयमेवार्हत्यस्मत्सविधेरयं तु नेति। ये भावानुबन्धमात्मनि दधते ये वा भवन्त्यभिमुखाः सदुपदेशश्रवणे, स्त्रियो वैश्यास्तथा शूद्राः, येऽपि स्युः पापयोनयः ते सर्वेऽप्यस्य प्रियतमाः। तत्प्रीणनमेवास्य परमं प्रयोजनम्। अत एव भगवता हितमादिशता शिक्षापत्र्यां सर्वानेवाधिकृत्य सरलः संसृतिनिस्तरणोपायस्तदनुरूपश्च धर्मो निदर्शितः। जातु वृत्तालये (वडताल) महति भगवदुत्सवे नानादिगन्तरेभ्यो लक्षाधिकाः स्त्रीबालवृद्धपुरोगमाः समवेता नाम भक्ताः। यदा भगवानयं स्वामी सहजानन्दः प्रवर्तितश्रीकृष्णमहोत्सवः सभामलञ्चकार समुज्जीवयन्सदुपदेशामृतैः संसारविषतरुफलास्वादमोहितान्, तदा तद्वचनसुधास्वादलोभोत्तरङ्गितचेतसो बहवो बहवश्च तच्चरणकमलमकरन्दास्वादलिप्सोत्तरङ्गितनयनमधुलिहो भगवतः सन्निधिं प्राप्तुं स्वस्वावासान्निरगच्छन्। पथि तदा प्रवृत्तेन महता सम्मर्देन पदात्पदमपि प्रचलितुमसमर्था प्रत्यावर्तन्त निराशाः। भगवांश्चालक्ष्य संमर्दं कुतूहलं च भक्तानां, बालवृद्धानां परिश्रममकपटं च प्रेमानुबन्धं; ततो द्विगुणितेन प्रेमानुबन्धेन प्रेरितो भगवान्सहजानन्दः स्वयमेव सायं परिमेयपुरस्सरो निर्गत्य बहिः कुटीरे वा तरुमूले वा यत्र यत्र कृतावासा हरिजनास्तत्र तत्र गत्वा तान्योगक्षेमाद्यनुपृच्छन् सम्पादयंश्च तत्तदभिलषितं स्वयं लब्धमनोरथ इव परमानन्दमवाप। अपरं च-जातु जीर्णदुर्गपुराधीशेन नरेशेन दर्शनाकाङ्क्षिणा सबहुमानमामन्त्रितोऽयं तत्प्रार्थनां स्वीकृत्याऽऽरूढ शिबिकां परिवृतो मुनिशतेनानुगम्यमानश्च

राजपुरुषैर्महता राजसम्भ्रमेण राजभवनं प्रति निरगात्। तदा कोऽपि बालः प्ररूढप्रेमरसः कोमलं कर्कटिफलमेकमादाय शिविकामुपधावमानो वार्यमाणोऽपि परिजनैः सहजचापलेनावधीर्य प्रतिरोधकान् कथमपि शिविकासमीपं समेत्य प्रहर्षोत्फुल्लनयनः प्रणिपत्य भगवतश्चरणयोः समर्पितवान्। भगवांश्चेममादरातिशयं तस्य, वयश्च कापट्यप्रवेशदूषणानास्पदं, बालभावं च विविधदुराशाप्रवेशशून्यं, विचिन्त्य तेनार्पितां कर्कटि( काकडी )मेकां तत्प्रेमरसमिवास्वादयन्सर्वेषामेव पश्यतां चखाद। सोऽपि बालो लब्धसर्वार्थ इव प्रहृष्टो भगवता सप्रेमाशीर्वचनमनुज्ञातो यथागतं जगाम। तदिदं सारल्यं परश्रेयसे प्रवर्तमानं को वा गुणातिशयं न मन्येत विनाऽऽसुरप्रकृतेः। न चास्यासीत्प्राकृतानामिव राजरङ्कविभागः सपर्यास्वीकारे। प्राकृतो ह्याढ्य इति नाममात्रेण संप्रहृष्यंस्तत्प्रणयमेव परमं प्रयोजनं मन्यमानः प्रार्थ्यमानोऽपि दरिद्रेण तमवधूयाढ्यस्याभिमुख एव भवेत्। अयं तु पत्रेण पुष्पेण फलेन तोयेन वा प्रेम्णा सम्पाद्यमानां रङ्कस्य सपर्यां स्वीकुर्वन्नतिलङ्घ्य पार्थिवानपि स्वयं तस्य तस्य गृहं प्राप्य तेन तेन क्रियमाणायां सपर्यायां प्रेमार्द्रहृदयस्तदा तदा बभूव। एवमेव जात्या महत्तरेभ्योऽप्यवरैरभ्यर्थ्यमानस्तेष्वधिकं ववन्ध प्रेम। जातु सूर्यनगरे केनचित्पारसीकेन (अरदेसरनामकेन) सादरमभ्यर्थितस्तस्य गृहं परमहंसैः परिवृतः प्राप्य तेन कृतामर्हणां स्वीकृत्य प्रेमातिशयव्यञ्जकेनाङ्गपरीरम्भेण तमभिनन्द्य स्वप्रसादं तद्वंश्येष्वप्यनुवर्तयन्नात्मीयमुष्णीषं तस्मै व्यतरत्। सोऽपि यावज्जीवं तस्योष्णीषस्य साक्षात्तस्येव पूजां विदधन्नासीत्। अधुनापि तदुष्णीषं तदन्वयजैरादरेण संसेव्यमानं दृश्यते। अन्यच्च—जातु स्वयमनेकपार्थिवकुलसेव्यमानोऽप्यनेकपरिजनपरिचर्यमाणचरणकमलोऽप्यात्मीयचरणाश्रयान् वर्णिनः साधूनन्यांश्च पार्षदान् प्रेमपूरोत्तरङ्गितेन सौशील्येन स्वयं विस्मृतनिजगौरवः स्वहस्तेन सम्पाद्य विविधरसवर्गसम्भृतं पाकं स्वयमेव परिवेष्य प्राशयत्। सरलताया ह्येषोऽतिशयः सकलोऽपि।

उदारता चास्यानुपमा—नह्ययं मन्यते जातु वितीर्याप्यपेक्षितादधिकं मयोपकृतमेतावद्भ्यः इति। किंतु मन्यते प्रतिगृहीतृभिः पात्रैरपरिग्रहो नः सहजधर्मः संरक्ष्यते, यन्नश्चरणतलयोरर्प्यमाणस्य धनस्य स्पर्शो न सहते नः करतलमिति। जातु सभायां महत्युत्सवे तैस्तै राजकुमारैरन्यैश्चाढ्यैः समर्च्यमानोऽयं समर्पितानि राजार्हाणि वासोविभूषणादीनि च धनान्यन्वहमात्मनः सन्निधौ भागवतं श्रावयते कस्मैचिद्दुर्गताय विप्राय सपदि सर्वेषामेव तेषां पश्यतां वितीर्य स्वयं प्रहृष्टचित्तोऽभवत्। इदं च तदा तदा सदसि सुव्यक्तमुक्तं भगवता तेन—'अपरिग्रहा आप्तकामा अपि वयं परेषां हितायैव परैरर्प्यमाणं स्वीकुर्मो न स्वार्थाय, येनार्पयन्तोऽमुष्मिन् श्रेयः परं प्राप्स्यन्ति प्राप्नुवन्ति चेहार्थिनः पात्रभूताः सुखम्, नः प्रसादं चोभये' इति। जातु सदसि भद्रासनारूढं भगवन्तं समर्चयन् कोऽपि भक्तः महार्हं वासःप्रभृत्युपायनमादाय सभां प्राविशत्। भगवांश्च तमारादात्मनोऽभिमुखमायान्तमालक्ष्य, आलक्ष्य च तस्य भक्त्यतिशयमलौकिकया दृष्ट्या स्वयमेव सपदि भद्रासनादुत्थाय तत्समीपमुपगम्य तेन विरचितां सपर्यां प्रेम्णा स्वीकृत्य ततः प्रत्यावृत्य भद्रासने समुपाविशत्। अत्रान्तरे दीनानाथभट्टो भगवतश्चरणयोः प्रणम्यानुज्ञातो भगवता समुपाविशत्पार्श्वे। भगवांश्च सपदि तेन भक्तेन प्रदत्तमुत्तमं वासस्तस्मै विप्राय दत्त्वेदमुवाच—'नैतावता समयेन कस्याप्यर्हणं संमुखीभूय स्वीकृतमस्माभिः, परमस्य प्रेमातिशयोऽस्मानासनादुदचालयत्। पात्रं चेदमनुत्तमं सपदि समुपनतं, योऽसौ दीनानाथभट्टो विप्रो विद्वानस्मच्चरणयोरनुरक्तश्च। अयमेव भक्तजनपरीक्षानिकषोपलः, यदीदृशे प्रसङ्गेऽस्मिन्नसदाश्रितसमवाये नैकस्यापि मनो मात्सर्यादिभिरदूषितमिति। यदि मन्येत कश्चित् कथं निःस्पृहोऽप्ययमस्य सपर्यामासनादुत्थाय स्वयं सम्मुखीभूय स्वीचकार सर्वानस्मानतिक्रम्येति स हि महान्कलङ्कश्चेतसः, यदि मन्येतायं दाता कथमधुनैवादरेणास्माभिः समर्पितमनादरेणान्यस्मै प्रायच्छदिति तद्धि महन्मालिन्यं मनसः, यदि मन्येतान्यः कश्चित् किमयमेव पात्रं दानस्य किं वाऽयं समय इति तदपि दूषणमाशयस्य, इमा हि मात्सर्यशाखाः, ताभिरनाक्रान्ता इति विशेषतो युष्मासु तुष्याम' इति। अनेन निःस्पृहता प्रीतिमात्रपरता चास्य सर्वोन्नता सुव्यक्ता। जातु राजकुमारः कश्चिद्राजकुले दुर्लभमत्युत्तममेकमश्वं भगवानेवेममर्हतीत्यवधृत्योत्सवप्रसङ्गे निबद्धपल्ययनादिकं सुखारोहं भगवतेऽस्मै समर्पितवान्। भगवांश्चायमनुजिघृक्षुस्तं तमश्वमधिरुह्य गत्वा गन्तव्यं स्थानं प्रत्यावर्तमानः सपदि कस्मैचिद्ब्राह्म-

णाय दत्वा स्वयं पादचारी सम्प्रत्यावर्तत। पृष्टश्च राजकुमारेण प्राह–यदुत्तममित्यभिमतं वो वस्तु न तद्रोचते नः, किंतु नैसर्गिकी वः प्रीतिरेकैव रोचते, उत्तममनुत्तममित्ययं विभागो हि वो दृष्टौ धनैकनिबन्धनो रूपजात्याद्यौपाधिकः, स चार्थलुब्धानां रूपादिमुग्धानां चोपादेयः, वयं न तथाभूताः; येन तेषामिव विभ्रमो नः स्यादिति।

अयं चापरः परमोदारस्वभावोऽस्य। जातिविद्यावृत्ताद्यनपेक्षं सर्वेषां निःश्रेयससाधने ह्यस्य भगवतः समुद्योगः। अयं हि भवदावानलदह्यमानं प्राणिजातमवलोक्य दयमानमानसः स्वयं पीड्यमान इव तापत्रयेण ग्रामे ग्रामे गृहे गृहे प्रविश्य तांस्तानुद्बोधयन् प्रशमयंश्च दुराचारान्परदार-परधनपरिग्रहप्रभृतीन् निःश्रेयसपथप्रवणान् लक्षाधिकानकरोत्। दृश्यन्ते ह्यद्यापि बहवो भगवतः सहजानन्दस्य चरणकमलसमाश्रयमहिम्ना परित्यक्तमांसमदिराः प्राणिमात्रेषु दयमानमानसा निःश्रेयसाय स्पृहयन्तो बहवो जात्या पुलिन्दाः पुल्कसा वा। दुर्लभो ह्ययं मानुषेषु परमोदारः स्वभावः। बहवो हि ब्रह्मदर्शिनोऽपि महर्षयः सोपायनहस्तांस्तत्त्वं जिज्ञासमानान्वर्षैर्वर्षैर्वा परीक्ष्य शुश्रूषामुपनिषदमुपादिशन्नपट्टकर्णम्। इदमेव तूपायनमपेक्षितमस्य, अञ्जलिमात्रमप्रातिकूल्यं वा। परीक्षा चाज्ञानाशक्तिमात्रे, ते एव हि दयाप्रसरनिमित्तम्। नहि शक्तो ज्ञानदृष्टिसम्पन्नो वा दयायाः पात्रम्। दया हि शोभते विद्याभिजनमदावलिप्तेष्वप्रसर्पन्ती प्रवहन्ती च निम्नगेव विद्याभिजनादिसम्पत्तिरहितेष्वकपटहृदयेष्वनुद्यमानिषु सरलगतिषु। या पुनरस्याशैशवादेवानु-वर्तमाना बाह्यारम्भेष्वरुचिः सेयमाचार्यादेशेन देशिकपदमलङ्कुर्वतोऽस्य लोकोपजीवनैकशेषभू-तैरारम्भैरप्राकट्यमिव गताऽपि तदातदा समुन्मिषन्ती सकलजनसाक्षिकमदृश्यत। यदाऽयं भगवान् सूर्यपुरसन्निकटवर्तिनो धर्मपुरस्य राज्ञ्या सम्प्रार्थितः प्राप धर्मपुरं तदा सा स्वं राज्यं फलपुष्पादिभिः सहोपहारस्थाने समाकलय्य भगवतश्चरणकमलयोः समर्पितवती। भगवांस्तु राज्यप्रवृत्तौ नित्य इवोद्विग्नः फलपुष्पादिकं केवलं स्वीकृत्य विशेषतः प्रसन्नो नाङ्गीचकार राज्यम्। अपरंच–यदा लोकैरभ्यर्थितस्तेषामिहामुत्र च श्रेयो विधास्यन् श्रीनगरे नरनारायणप्रतिष्ठामकारयत्, प्रतिष्ठान्ते च नगरे निरवशेषं सर्वान्ब्राह्मणान् लक्षाधिकान्प्राशयदुत्तमान्नम्, तदा संजातां बाह्य-प्रवृत्तिभूयिष्ठतामपि परार्थां बाह्यवासनोपधायकतास्वाभाव्येनान्तरामताक्षोभकरीमिवाशङ्क्य ततः संजातोद्वेगः सर्वमेव तं बाह्यारम्भं स्मृतिपथादपसारयितुं कस्यचिद्ग्रामस्य बहिः क्वचिन्निर्जन आलये निशामेकामन्तर्मुखो भूत्वा वासनाङ्कुरप्रजननशक्तिं व्यनाशयत्तस्य बाह्यारम्भस्य। इदं च वृत्तं भगवान् स्ववचनामृतेनैव प्रकाशितवान्सदस्यपि। तदेवमनादृतोच्चनीचविभागः कालमेघ इव सर्वतः सकलतापोपशामकं विज्ञानजीवनं प्रवर्षन्, परहितैकशेषभूतात्मीयसकलव्यापारः, रजस्तमःसमुद्रेकं जन्मसहजमपि बहूनां सत्योपदेशैः प्रशान्तमधुरवचनैः प्रशमयन्, प्रशमयंश्च धर्मोपदेशैनैव तीक्ष्ण-दण्डैरप्यसमाधेयां परितः प्रवृत्तां तस्करादिप्रवृत्तिम्, आचण्डालमविद्वेषभूयिष्ठं भूतसौहार्दं सम्प्रतिष्ठापयन् जगति परितः सदुपदेशसम्पत्तये स्वादेशपरिपालनैकपराणां परित्यक्तगृहारम्भाणा-मीषणातरङ्गवेगानाहतमानसानामप्रस्खलितब्रह्मचर्यसम्पदामात्मैकनिष्ठानामभिमानगन्धविधुराणां साधूनां वर्णिनां च समवायं प्रियतममात्मनः प्राणेभ्योऽपि विस्तारयन्भगवान्सहजानन्दो भारत-भूमिभागस्यास्य कोऽपि कल्पशाखीव चतुर्वर्गफलदो बभूव।

अद्रोहव्रतमुत्तमं, निरुपमा दीने दया, सर्वतः सारल्यं सुखसेव्यतासमुचितं, विश्राणनं विश्रुतम्।
संसारव्यसनापनोदनमहोदारव्रतं विस्तृतं, निर्लेपश्च परिग्रहः परकृते, स्वात्मैकसन्तृप्तता ॥ १ ॥

सहृदयहृदयाह्लादाः सारत एते गुणा गदिताः।
भगवति सहजानन्दे संदृष्टाः सर्वगुणपूर्णे ॥ २ ॥

---

# शिक्षापत्र्या हार्दं विषयाश्च ।



हार्दं चास्या निवृत्तिधर्मे । अयं तावन्निवृत्तिधर्मः—यश्चोदनालक्षणोऽर्थो नारम्भाय-विविधफलारम्भाय जन्मबीजाय प्रभवति; किंतु त्रैवर्गिकारम्भायासान्निवर्तयति पुरुषम् । इन्द्रियव्यापारोपरतिप्राधान्याद्विवैव चतुर्थाश्रमसमुचिता निवृत्तिधर्मः, यश्चेन्द्रियव्यापृतिप्रचुरो गृहस्थैकान्तः क्रियामयो विद्येतरः सोऽयं प्रवृत्तिधर्म इति तु विभागो न हृदयङ्गमः । नहीन्द्रियव्यापारोपरतिप्राधान्याद्गुणः, नवा तद्व्यापारप्राचुर्याद्दोषः । कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्, इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते, यस्त्विन्द्रियाणि मनसा संयम्यारभते पुमान्, कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते । विद्यापि न विज्ञानसामान्याद्विद्योच्यते; किंतु परमात्मानमवलम्ब्य प्रवृत्तेति विद्योच्यते, अन्यथा स्वविद्यैव, एवमेव क्रियामयोऽपि परमात्मानमुपस्पृशति चेत्किं न विद्यासमयोगक्षेमः स्यात् । कर्म च वस्तुतः सर्वतनोः परमात्मन आराधनरूपतया तमाराध्यमुपस्पृशति नाम । अत एव श्रूयते—'न कर्म लिप्यते नरे' इति । स्मर्यते च—'मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि' इति । किमिह बहुनोक्तेन—उपनिषदां दोग्धा भगवान् गोपालनन्दनः इन्द्रियव्यापृतिगर्भं कर्मयोगमेव ज्ञानयोगादुत्कृष्टमाह—'कर्म ज्यायो ह्यकर्मणः' 'तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते' इत्यादिना । एतेन—निवृत्तिधर्माधिकारश्चतुर्थाश्रमैकान्त इति वादोऽप्यापातरमणीयः । स चायं निवृत्तिधर्मः कर्मज्ञानोपासनाभेदेन त्रेधा । तत्र प्रथमः—फलसङ्गकर्तृत्वत्यागपूर्वकं परमात्माराधनबुद्ध्यान्वहमनुष्ठीयमानस्तत्तद्वर्णाश्रमानुगुणकर्मलक्षणः, द्वितीयः—प्रकृतिविलक्षणज्ञानैकघनस्वात्मानुध्यानलक्षणः, तृतीयः—परमात्मोपासनलक्षणः; अयमेव भक्तियोग उच्यते । अस्यैवाङ्गभूतौ च पूर्वौ द्वौ क्रमात्कर्मयोगज्ञानयोगावुच्येते । एषु चोदनाः—'कुर्वन्नेवेह कर्माणि' 'योगस्थः कुरु कर्माणि' 'नियतं कुरु कर्म त्वं' 'सम्पश्यन् कर्तुमर्हसि' 'कुर्याद्विद्वांस्तथाऽसक्तः' 'य आत्मा अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' 'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'शान्त उपासीत' 'आत्मानमेव लोकमुपासीत' 'भूमात्वेव विजिज्ञासितव्यः' 'तस्मिन्यदन्तस्तदन्वेष्टव्यम्' 'मय्येव मन आधत्स्व' 'मच्चित्तः सततं भव' 'मन्मना भव मद्भक्तः' इत्याद्याः । तथा चेदं चोदनालक्षणं कर्मयोगादित्रयं निवृत्तिधर्मो गण्यते, अधिकारोऽत्र मुमुक्षुः, त्रिष्वेतेषु भक्तियोगः प्रधानः, इतरयोरेतदर्थत्वात् । प्राधान्यमेवास्य ज्ञापयन्नाह भगवान्—'**तस्यैव सर्वथा भक्तिः कर्तव्या मनुजैर्भुवि । निःश्रेयसकरं किंचित्ततोऽन्यन्नेति दृश्यताम्' 'गुणिनां गुणवत्तायाः ज्ञेयं ह्येतत्परं फल**'मिति । सर्वथेति निर्देशादिदमवगम्यते—सर्वप्रकारेण—यच्च भोग्यमन्नपानादि यच्च भोगोपकरणं स्रक्चन्दनादि यच्च भोगस्थानं गृहारामादि तेन सर्वेणापि प्रकारेण परमात्मा भजनीयः । अयमेव च भक्तेरतिशयः; यदस्यां दशायां विस्मृतलौकिकप्रियः परमात्मैकप्रियो भवति । एवं वा—सर्वथा—उपायतया उपेयतया च । एतेन भक्तेरपरं फलमास्वाद्यमपि नावशिष्यते यस्यां भक्तिकाष्ठायां सोऽयमतिशयो व्यज्यते । यद्यपि निःश्रेयससाधनवर्गे कर्मयोगज्ञानयोगयोः परिगणनं प्रथितं नाम, अथापि तदुभयं न निःश्रेयसं साक्षादुपदधाति; किं तु भक्तियोगं स्वाधिकं सम्पाद्य स्वयमुपक्षीणशक्तिकं भवति । भक्तिरेव साक्षान्निःश्रेयसकरी, तत् 'निःश्रेयसकरं **किंचित्ततोऽन्यन्नेति दृश्यताम्**' । ये च गुणाः 'शमो दमस्तपः शौचमि'त्यादिनाभिहितास्तत्त-

द्वर्णस्वभावानुबन्धिनो गुणाः; ये वा 'शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्ये'दित्यत्राभिहिता योगाङ्गभूताः शमादयो गुणाः; ये वा लोके प्रतिष्ठाधायका गुणाः; किं बहुना-ये वाऽस्यां शिक्षापत्र्यां पूर्वमादिष्टा आदेक्ष्यन्ते वा उत्तरं सर्वेषामेव तेषामिदमेव फलं यत्परमात्मनि भक्तिः, असम्पन्नायामस्यां सर्व एवायं गुणादेशः सम्पन्नोऽपि निरर्थक इत्यावेद्यते—'गुणिनां गुणवत्ताया ज्ञेयं ह्येतत्परं फलम्। कृष्णे भक्तिश्च सत्सङ्गोऽन्यथा यान्ति विदोऽप्यधः' इत्यनेन। इत्थं चैतेन शिक्षापत्र्याः परमं हार्दं भक्तियोग एवेति स्पष्टं विज्ञायते। यद्यपि पूर्वमुत्तरत्र च बहवः क्रियामया धर्मा उपदिश्यन्ते नाम; अथापि मुमुक्षामात्रेण किं नः कर्मभिः कामबीजैः ज्ञानमेव सर्वकल्मषापहं सेव्यमित्यवधीर्य कर्म ये नाम मन्दाः प्रवर्तन्ते ज्ञानव्याजेन स्वेच्छाचरिते तान्नियमयितुमादेशास्तथाविधाः 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः' इतिवत्प्रवृत्ताः। अत एव मन्वादिनिबन्धानामिव न वर्णसामान्यमविशेषेणाधिकृत्यास्य निबन्धस्य प्रवृत्तिरपि। यदादावुल्लिख्यते—'भात्रो'रित्यादिना 'अतो भवद्भिर्मच्छिष्यै'रित्यन्तेनात्मीयानधिकृत्य प्रवृत्तिः। आत्मीयाश्च शिष्याः; ते च स्वचरणसमाश्रया मुमुक्षवः। व्यज्यते च—'प्रीत्यैतामनुसृत्यैव वर्तितव्य' मित्यनेन निर्देशेन निष्कामं धर्मोऽनुष्ठेयोऽस्मदीयैरिति। एतामनुसृत्य तेषु तेषु धर्मेषु प्रीत्यैव—स्वयं प्रीत्यैव वर्तितव्यं न फलाकाङ्क्षयेति हि तदर्थः। अत एव 'धर्मेण सहिता कृष्णभक्तिः कार्येति तद्रहः' इत्याह। निष्काममनुष्ठीयमानस्यैव हि धर्मस्य भक्तियोगेन साहित्यसम्भवः। श्रूयते च 'विद्यां चाविद्यां च यस्तद्वेदोभयं सहे'ति। एवं यच्चात्मस्वरूपविज्ञानवचनं 'हृत्स्थोऽणुसूक्ष्मश्चिद्रूप' इत्यादि तदपि न स्वतन्त्रात्मयोगाय; किंतु भक्तियोगाङ्गतयैवोपयोगाय। अत एव 'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम्। विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा' इति। तदेवमिह कर्मज्ञानयोर्भक्तिशेषतयैवोपदेशादस्या भक्तियोग एव परमं हार्दमिति विज्ञायते। प्रसक्तानुप्रसक्ताश्चापरे बहव इहादेशाः। नैतावता परमं हार्दं तेषु। यदेव प्रधानं प्रतिपाद्यं तत्परत्वमेव तु तस्य निबन्धस्य समुचितम्।

**विषयाश्च प्राधान्येन**—निःश्रेयसं तत्साधनं तद्विरोध्यनुकूलयोर्हेयत्वोपादेयत्वे। तत्र निःश्रेयसं—सर्वकर्मक्षयसमनन्तरभाविब्रह्मात्मकस्वात्मस्वरूपाविर्भावपूर्वकपरमात्मप्राप्तिलक्षणम्। श्रूयते च—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य। धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' 'स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' इति। इदमेव तु 'तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यता' मित्यनेनोक्तम्। तत्साधनं च भक्तिलक्षणं ज्ञानमुपासनादिशब्दवाच्यं स्वात्मपरमात्मयाथात्म्यज्ञानगर्भम्। श्रूयते च—'आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' 'यमेवैष वृणुते तेन लभ्यः' 'समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः॥' 'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति॥' इति। तदिदमाह—'निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम्। विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वदा' इति। तेनेत्युपलक्षणे तृतीया। तद्युक्तेत्येतत्। एतच्छेषभूतानि चात्मपरमात्मस्वरूपविवेचकानि वचनानि—'हृत्स्थोऽणुसूक्ष्मश्चिद्रूपो ज्ञाता व्याप्याखिलां तनुम्। ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षणः॥ हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः। ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः॥ स श्रीकृष्णः परंब्रह्म भगवान् पुरुषो-

त्तमः । उपास्य इष्टदेवो नः सर्वाविर्भावकारणम् ॥' इत्यादीनि । निःश्रेयससाधनभूताया भक्तेश्च लक्षणं—'माहात्म्यज्ञानयुग्भूरिस्नेहो भक्तिश्च माधवे' इत्यनेन निरूपितम् । माधवे भूरिस्नेहो भक्तिरित्येतत् । तथाच सूत्रम्—'सा परानुरक्तिरीश्वरे' इति । यश्च मायिकेषु रागः स हि विरोधी निःश्रेयससाधने । तदयं हेयः । तदिदमुच्यते—'वैराग्यं ज्ञेयमप्रीतिः श्रीकृष्णेतरवस्तुष्वि'ति । श्रीकृष्णेतरवस्तुषु—मायिकेष्वित्यर्थः । मायायाः स्वरूपं निरूपयता च 'जीवस्य चाहंममताहेतु'रित्यनेनाहङ्कारममकारयो रागबीजतोपपादनेन तयोर्हेयता व्यज्यते । यच्च भगवन्महिमचिन्तनं भगवति भक्तिवर्धकमिति निःश्रेयससाधने भक्तियोगेऽनुकूलमिति नितरामुपादेयं नाम । तदेतदभिप्रेत्योच्यते—'माहात्म्यज्ञानयु' गिति । किञ्चायमपरः प्रकारो विरोध्यनुकूलविभागे—अन्तःकरणमालिन्यं तत्प्रसादश्चेति । नह्यप्रसन्ने मनसि घटेतोपासनलक्षणो भक्तियोगः । तत्र चाभ्युपायो दुश्चरितान्निवृत्तिः, यथागुणविभागं विहितानां कर्मणां व्यपेतफलाभिषङ्गमनुष्ठानं च । श्रूयते च—'नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्' 'क्रियावानेष ब्रह्मविदां वरिष्ठः' इत्यादि । तदिदमभिप्रेत्य हेयोपादेयविभागमवगमयन्नाह—'कस्यापि प्राणिनो हिंसे'त्यादि । एतत्प्रसङ्गेनैवेह यथाधिकारं विविधा विधिनिषेधा निरूपिताः ।

तदेवं सङ्क्षेप निरूपितानां निःश्रेयस—तत्साधन—तद्विरोधिहेयत्व—तदनुकूलोपादेयत्वानां चतुर्णां विषयाणां विशेषतः प्रतिपत्तिमाकाङ्क्षमाणानधिकृत्य स्वामिमतानि प्रमाणानि 'वेदाश्चे'त्यादिवचनैः सविशेषं विभज्य प्रादर्शयत् । विशेषश्चायमुपदर्शितः—'एतेषु यानि वाक्यानि श्रीकृष्णस्य नृपस्य च । अत्युत्कर्षपराणि स्युस्तथा भक्तिविरागयोः ॥ मन्तव्यानि प्रधानानि तान्येवेतरवाक्यतः ।' इति । प्राधान्यं च परमतात्पर्यम् । प्रतिपादयन्ति नाम वेदाः स्मृतयश्च रागद्वेषानुविधायिनोऽर्थांस्तदुपायांश्च । नैतावता तेषां परमं तात्पर्यं तेषु । रागद्वेषपरवशानुद्भूतरजस्तमस्कानत्यनर्थस्वच्छन्दाचरणतो निवर्त्य नियमयितुं प्रवर्तन्ते केवलं ते । आह च भगवान् बादरायणः—'लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना । व्यवस्थितिस्तत्र विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा' इति । एतेन विशेषोपदेशेन प्रतिपिपादयिषितेषु निःश्रेयसतत्साधनतद्विरोधिहेयत्वतदनुकूलोपादेयत्वरूपेष्वर्थेषु येषां प्रमाणत्वेष्यते त एव निःश्रेयसविरोधिरागपरा अपीति सम्भाव्यमानो मन्दमतीनां चित्तविक्षोभः परिहृतो भवति । तत्रोपनिषद्विचाररूपाणि यानि व्याससूत्राणि परमतत्त्वनिर्णये प्रधानप्रमाणतया परिगण्यमानानि, या च तदुपबृंहणेषु प्रथमभूता भगवद्गीता तयोरतिगहनत्वेन व्याख्यातृणामन्येषां मतिभेदेन चान्यथाप्रतिपत्तिः स्यादेवेति तद्व्युदस्यंस्तयोरर्थनिर्णये श्रीमद्रामानुजाचार्यकृतं व्याख्यानमेवोपादेयमित्यवगमयन्नाह—'शारीरकाणां भगवद्गीतायाश्चावगम्यताम् । रामानुजाचार्यकृतं भाष्यमाध्यात्मिकं मम' ॥ इति । सोऽयं विषयविभागो हार्दं चैतन्निबन्धस्य । सम्प्रेक्ष्य सूक्ष्मदृष्ट्या प्रकाशितोऽस्मिन्निबन्धमुखे ।

इदमभिधीयते स्थूलदृष्ट्या—त्रैवर्गिके निःश्रेयसे वा पुरुषार्थे येऽधिकुर्वन्ति तेषां सर्वेषामेव हितावबोधने हार्दमस्य लेखस्य । तथा चारम्भ उच्यते—'सर्वजीवहितावह' इति । अन्ते च—'ते धर्मादिचतुर्वर्गसिद्धिं प्राप्स्यन्ति निश्चित'मिति । आत्मीयानभिमुखीकृत्य प्रवृत्तोऽप्ययं लेखः सर्वानेव यथाधिकारं क्रोडीकरोति । तत्र धर्मो ज्ञानं भक्तिश्चेति यथासम्भवं मिथः सापेक्षमनपेक्षं वा श्रेयसे उपादेयं भवति । तेषामेषां स्वरूपमन्यथाऽवधृत्य यथावदनवधृत्य वा प्रवर्तमानाः पतन्ति नामानुकूल्या-

दर्थात्। तदेषां हितावबोधनाय कर्तव्यं सारतस्तेषां निरूपणम्। यद्यपि सन्ति नाम बहवो निबन्धा यैस्तेषां स्वरूपं विस्तरेणावेद्यते। सत्यं सन्ति। परं न ते स्वाशयं प्रकाशयन्ति सरलहृदयेभ्यः। ते हि गहनगतयो विविधन्यायसम्मर्दसम्पन्नशक्त्यतिशयानामेव सुखावतराः। भ्रामयन्ति च मन्दमतीनेषां शाखोपशाखाविभागानपरिमितानावेदयन्तो विविधविकल्पाधानेन। कलावल्पायुरल्पमतिः कथमिदमवगाह्य सुखेन स्वानुरूपं श्रेयःपथमुपाददीत। अपि चानियमितगतयश्च स्मृतयः श्रुतयो वा। गुणानुगुणं रुचिविभेदमनुसृत्य धर्माद्युपदिशन्ति। ततश्चान्ततस्तेषामशुद्धिस्पर्शो ह्यवर्जनीयः। यथा—त्रैवर्गिके धर्मे श्राद्धे मांसविधानम्, अतिथिभ्यः समांसो मधुपर्कः, स्वर्गसुखसम्पादनाय पशुविशसनविधिः, सौत्रामण्यां सुराविधानम्, परमारणायाभ्युपायप्रदर्शनम्, इत्येवमादि। तेषु हिंसागर्भतयाऽशुद्धियोगो ह्यस्ति। एवं ज्ञाने—कापिलः परमेश्वरमवधूय पुरुषविशुद्धिमात्रेण तृप्तः कैवल्यकामनागुणमाह विज्ञानम्। पातञ्जला अपि तथैव प्रायः। परमेश्वरोऽप्येषां हस्तावलम्बमात्रम्। परमानन्दमयस्य परब्रह्मणो दूरीकरणे किं तेन ज्ञानेन; अज्ञानमेव तु तत्, तदेषामपि विज्ञानमार्गोऽशुद्ध इव। एवमन्ये ते ते ज्ञानवादिनः। भक्तौ च तथा—कश्चिदग्नौ कश्चिदर्के कश्चिदिन्द्रे कश्चिदन्यस्मिन् प्रेमातिशयं भक्तिमाह, कश्चित्तु मायाशबलिते, एवमनियता गतिर्भक्तेस्तत्र तत्र निबन्धे। कश्चिदन्तःकरणनैर्मल्यमात्रोपकारकतया जाते तस्मिंस्तस्याः प्रक्षयं वदन्नशुद्धिमेवान्ततस्तस्यां मन्यते। अपरे पुनर्भक्तिमहिमवादमात्रमादृत्य त्यक्तधर्मपथमेव भक्तिपथमावेदयन्तस्तस्या अत्यन्ताशुद्धिमेवावहन्ति। तदेवं धर्मज्ञानभक्तीनां सारांशावधारणस्यान्यतोऽसम्भवं प्रत्युताशुद्धिसङ्कीर्णस्यैवावगमं चावधार्य शुद्धसारतमतत्स्वरूपाववोधनायायं भगवतो लेखारम्भः। आसीच्च तदानीं धर्मोपदेशेन हिंसामांससुरारतिः, ज्ञानभक्त्यपदेशेन स्त्रीद्रव्यरसलोलुपता च समधिकतरा। तत्र धर्मांशे प्राणिपीडनलक्षणकलङ्कप्रसरः परिह्रियते— '**देवतापितृयागार्थमप्यजादेश्च हिंसनम्। न कर्तव्य**'मित्यादिना। तथा—अर्थे च कामे च तत्प्रसरः परिह्रियते—'**स्त्रिया धनस्य वे**'त्यादिना। मांससुरादिप्रसङ्गश्च परिह्रियते—'**न भक्ष्यं सर्वथा मांसं यज्ञशिष्टमपि क्वचित्। न पेयं च सुरामद्यमपि देवनिवेदित**'मिति। '**भक्तिं वा ज्ञानमालम्ब्य स्त्रीद्रव्यरसलोलुभाः। पापे प्रवर्तमानाः स्युः कार्यस्तेषां न सङ्गमः**' इत्यादिना भक्तिज्ञानापदेशेनाधर्मे प्रवर्तमानानां प्रसङ्गः परिह्रियते। '**स्ववर्णाश्रमधर्मो यः स हातव्यो न केनचि**'दित्यनेन ये वर्णनिमित्ता ये वाऽऽश्रमनिमित्ता ये वोभयनिमित्ता धर्मा अकरणे प्रत्यवायावहास्तेषामहेयत्वविधानेन केवलकामनामूलकानां शाखोपशाखं विस्तृतानां कर्मणामनादरो व्यज्यते। तेन कर्मसु सारांशे तात्पर्यं विज्ञायते, नोपदेशश्चेह कण्ठरवेण कस्यापि कामनामूलकस्य कर्मणः। विधीयन्ते च विशेषतः कृष्णभक्त्यनुगुणान्येव कर्माणि '**कृष्णदीक्षां गुरोः प्राप्तै**'रित्यादिना। असकृदिह कृष्णभक्तिधर्मयोः साहित्योपदेशात् वर्णाश्रमधर्माणामपि न स्वतन्त्रान्यान्याराधनरूपतया कर्तव्यता; किं तु सर्वान्तर्यामिणः कृष्णस्याराधनरूपतयैव कर्तव्यतेति व्यज्यते। अन्यान्यदेवपरता हि कृष्णे भक्तिं निरुणद्धि। तत् सर्वतनोः कृष्णस्याराधनबुद्ध्या क्रियमाणान्येव कर्माणि कृष्णभक्तिसाहित्यमर्हन्ति। तत् कर्मसु सारतरपरता चास्य प्राप्ता। '**भगवन्मन्दिरं सर्वैः सायं गन्तव्यमन्वहम्। नामसङ्कीर्तनं कार्यं तत्रोच्चैः राधिकापतेः॥ विष्णोः कथायाः श्रवणं वाचनं गुणकीर्तनम्। महापूजा**' इत्यादिभिर्भगवदेकान्तकर्मणां विधानात् सारतमपरता च। उच्यते च—'**सच्छास्त्राणां समुद्धृत्य सर्वेषां सारमात्मना। पत्रीयं लिखिता नृणामभीष्टफलदायिनी**'ति। '**भूताद्युपद्रवे क्वापि वर्म नारायणात्मकम्। जप्यं........जप्यो न क्षुद्रदैवतः॥**' इत्यनेन आत्मर्पणादर्थं

कृष्णभक्त्यनुपमर्दकमेवोपायं विदधता सर्वत्रैहिके आमुष्मिके वा फले भगवद्भक्त्युपमर्दकं न कर्मान्तरं कर्तव्यमिति व्यज्यते । एतेनेह कर्मणां गतिरन्यत्रेव नानियता नाप्यशुद्धा नाप्यसारभूता । एवं 'ज्ञानं च जीवमायेशरूपाणां सुष्ठु वेदन'मित्यारभ्य 'स श्रीकृष्णः परं ब्रह्म……सर्वाविर्भावकारण'-मित्यन्तैर्ज्ञानस्वरूपनिरूपणेन ज्ञानवादे यः कलङ्कस्तैस्तैरापाद्यते सोऽपि संशोधितः । एवं—'कृष्णस्तदवताराश्च ध्येयास्तत्प्रतिमाऽपि च । नतु जीवा नृदेवाद्या भक्ता ब्रह्मविदोऽपि च ॥' इत्युक्त्या तैस्तैर्यथेच्छमापाद्यमाना भक्तावनियमिता गतिः परिहृता । 'तस्यैव सर्वथा भक्तिः कर्तव्या मनुजैर्भुवि' 'गुणिनां गुणवत्ताया ज्ञेयं ह्येतत्परं फलम् । कृष्णे भक्तिश्च' इत्यनेन भक्तेरेव निःश्रेयसे प्रधानसाधनत्वनिरूपणेन परैर्भक्तावाधीयमानाप्रधानसाधनलक्षणाशुद्धिः परिहृता । 'धर्मेण सहिता कृष्णभक्तिः कार्येति तद्वद्'इत्यादिभिर्धर्माविनाभूताया एव भक्तेः श्रेयःसाधनत्वोक्त्या अपेतधर्मपथैर्भक्तिपथे आपाद्यमाना अत्यन्ताशुद्धिरपास्ता । तदेवमयं निबन्धस्त्रैवर्गिके निःश्रेयसे प्रवर्तमानान् मन्दमतीनपि धर्मज्ञानभक्तिलक्षणानि तत्तत्साधनानि विशोध्य सारतः सुखतश्च ग्राहयन् प्रभवत्यर्थाय । तत्र निःश्रेयसोपयोग्यौपनिषदं विज्ञानं विविधवादिविमतविक्षोभतो दुर्गममवधार्य तत्सुगमतायै श्रीमद्रामानुजाचार्यकृतश्रीभाष्यगीताभाष्ययोरादरणीयत्वमाह । एतेन औपनिषदं मतं सूत्रैरावेदयतो बादरायणस्य हार्दं श्रीमद्रामानुजाचार्यविरचितमेव भाष्यमप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिनिरसनपूर्वकं प्रकाशयति नेतरत् शाङ्करादिभाष्यम्, तत्तत्त्वविज्ञाने नास्माभिः पृथग्यत्न आधीयत इति गम्यते । तदिदं द्रढयन् कण्ठरवेणेदमप्याह—'मतं विशिष्टाद्वैतं मे' इति । एतेनापाततः प्रतीयमानमद्वैतं विवर्तवादस्वरूपपरिणामवादादिमूलकं न त्वत्यन्तहार्दमिति न तत्र पदमाधेयमिति च गम्यते । तथा च विज्ञानांशे श्रीरामानुजाचार्यसिद्धान्त एवाश्रयणीय इति भगवतो हार्दं गम्यते । मुक्तिरपि तदभिमतरीत्यैवेष्टा भवति; 'कृष्णसेवा मुक्तिश्च गम्यता'मिति वचनात् । यद्यपि 'गोलोको धाम चेप्सित'मितीह स्मर्यते, तत्र तु परमपदवैकुण्ठादिशब्देन, नायमत्यन्तभेदावहः, नामभेदेऽप्यर्थाविरोधात् । अत एव शतानन्दमुनिना शिक्षापत्रीटीकायामुक्तम्—'एतदेव धाम वैकुण्ठशब्देनाप्युक्तम्—"लोकं विकुण्ठमुपनेष्यति गोकुलं स्म" इति । 'चतुरादिभुजत्वं तु द्विबाहोस्तस्य चैच्छिक'मिति यदुच्यते तदपि नात्यन्तभेदावहम् । दिव्याकारयोगो ह्युभयाभ्युपेतः । श्रीमन्नारायणशब्देन मुक्तप्राप्यं भगवत्स्वरूपं श्रीमद्रामानुजाचार्यैरुच्यते; इह तु कृष्णशब्देन, तदिदं नामभेदमात्रमिति नार्थभेदावहम् । अत एवेदमिहोच्यते—'श्रीमन्नारायणस्मृत्या सहिता' इति 'अतश्चास्य स्वरूपेषु भेदो ज्ञेयो न सर्वथे'ति च । निःश्रेयससाधनतापि भक्तावेव मुख्या ज्ञाप्यते । अयमेव च श्रीमद्रामानुजाचार्याभिमतो निःश्रेयसोपायः । नारायणमहेशयोरैकात्म्यावबोधनमप्यन्तर्यामिणि परमात्मनि प्राधान्यदृष्टिमाधाय प्रसक्तम् । अतो न विरोधस्ततः । अस्तु वायं विशेषः—भगवद्रामानुजाचार्यमतमवलम्बमानानां नारायणपारम्यनिष्ठातिरेकमूलकः शिवे प्रद्वेषः स च दुरितायेति तन्निषेधार्थं शिवस्याप्यादरणीयतां ज्ञापयन्निदमाहेति । अत एव 'विष्णुः शिवो गणपति'रित्यादिना पूज्यतोच्यते । एतावता न श्रीमद्रामानुजाचार्यसिद्धान्तात्प्रच्यवः । दीक्षा—तदङ्गभूतोर्ध्वपुण्ड्रधारणादपि प्रायः श्रीमद्रामानुजाचार्यसरणिमनुसरति । तदवगम्यते प्रायः तत्त्वविज्ञान इव दीक्षाङ्गपुण्ड्रधारणादिकर्मेऽपि श्रीमद्रामानुजाचार्यसरणिर्भगवदभिप्रेतेति । व्रतोत्सवनिर्णयश्च श्रीमद्विठ्ठलेशप्रोक्तप्रकारेणोक्तः, तत्रेदं निमित्तं प्रायोऽस्मिन्मार्गे श्रीकृष्णप्रेमरसातिरेकमूलकता व्रतोत्सवेषु विज्ञायत इति । तदेवदनुसरणं श्रीकृष्णे परमात्मनि

परानुरागोपधायकमित्येतदादृतम् । नैतावता विशिष्टाद्वैतसिद्धान्तस्य भङ्गः, प्रत्युत श्रीकृष्णभक्तिरसपोषक एवेत्यनुकूलतैव । तदेवं विशिष्टाद्वैतमतमेव प्राधान्येन श्रुतिहार्दं संरक्षता भगवता अविरुद्धमनुकूलमनाग्रहेणान्यतोऽप्यादृतमित्यात्मनः सारग्राहिता गुणो व्यज्यते ।

प्राधान्येनायं विषयविभागः—धर्मो, विज्ञानं, वैराग्यं, भक्तिश्चेति । तत्र धर्मो निषेधलक्षणो विधिलक्षणश्च। निषेधे च–विशेषतो हार्दं प्राणिपीडनप्रतिषेधलक्षणे, यतस्तस्यापि कचिद्धर्मकोटावापाततो भवति गणना । राजसांस्तामसांश्चाप्यधिकृत्य स्मरन्ति नाम तदपि धर्मं केचन, वेदवादरता हि ते । सुखाभास इव स्वर्गादितत्साधनमपि धर्माभासो नाम । नहि धर्मनिष्कर्षं ज्ञापयतां तदादरणीयम् । विधिलक्षणे च–विशेषतो हार्दं कृष्णदीक्षातदङ्गधर्मयोः । स हि निःश्रेयसमार्गे साक्षात्सङ्गतः । विज्ञाने च–जीवमायेशभेदानां विज्ञाने विशेषतो हार्दम् । असकृदावेदितमेतत् । भक्तिश्च श्रीकृष्णे परमात्मनि परे ब्रह्मणीत्येतदप्यसकृदावेदितम् । विज्ञानभक्त्योर्धर्मवैराग्याभ्यां विनाऽनर्थावहत्वेत्यप्येतदिह विशेषतो विवक्षितम् । इदमप्यसकृदावेदितम् । 'भक्तिं वा ज्ञानमालम्ब्य स्त्रीद्रव्यरसलोलुभाः । पापे प्रवर्तमानाः स्युः कार्यस्तेषां न सङ्गमः ॥' इति ।

अपरश्चायमिह विषयविभागक्रमः—सामान्यधर्मो विशेषधर्मो विज्ञानं भक्तिश्चेति । तत्र विशेषधर्मे–दीक्षाधर्मः, वर्णधर्मः, आचार्यधर्मः, गृहस्थधर्मः, स्त्रीधर्मः, नैष्ठिकधर्मः, साधुधर्म इति विशेषविभागः । तत्राचार्यधर्मानुपदिशता भगवता प्राधान्येन सच्छास्त्राभ्यासस्य लक्ष्मीनारायणादिदेवसेवायाः अन्नार्थिभ्योऽन्नदानस्य च कर्तव्यतायां हार्दं प्रकाश्यते—'कर्तव्यः सच्छास्त्राभ्यास आदरात्' 'लक्ष्मीनारायणादीनां सेवा कार्या यथाविधि' 'आदरात्स तु सम्भाव्यो दानेनान्नस्य शक्तितः' इत्यनेन । अत्र हि आदराद्यथाविधीति च विशिष्यते । तेनानादरेणाविधिना वा तदाचरणं प्रतिक्षिप्यते । इदमेव च भगवतो हार्दं प्रधानं गमयति । तेभ्योऽपि सद्विद्याप्रदाने भगवतो भावाधिक्यं गम्यते—'संस्थाप्य विप्रं विद्वांसं पाठशालां विधाप्य च । प्रवर्तनीया सद्विद्या भुवि यत्सुकृतं महत्' इति वचनात् । अत्रैव हि 'भुवि यत्सुकृतं मह'दित्यन्यतो विशेषो वर्ण्यते । अन्नदानतः सुकृतं नाम, न महत्सुकृतम्, क्षुत्प्रशमनेन विज्ञानैकान्तमानुपदेहसंरक्षणमात्रे हि पर्यवस्यत्यन्नदानम् । तद्विज्ञानसाधनकोटौ व्यवहितं पदमादधाति । सद्विद्याप्रदानं तु सन्निहितम्, सद्विद्या हि; तया च विज्ञानसम्पत्तिः । या ब्रह्मावगमयति; सा हि सद्विद्या; अत एव—'अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः' इति श्रूयते । एतेनार्थैकान्तविद्याप्रवर्तनादन्यस्य धर्मैकान्तविद्याप्रवर्तनस्यैवाचार्यधर्मत्वं स्फुटमुक्तं भवति ।

विज्ञानालोकसम्पन्ने दृष्टो दृष्टिपथेऽधुना ।
विषयाणां विभागोऽयं शिक्षापत्र्याः प्रकाशितः ॥

---

यस्यार्पं चक्षुरासीदपि गतिरभितः सिद्धदेहस्य योगात्
येन प्राप्ता समाधिस्थितिरपि सहजानन्ददिव्यप्रसादात् ।



शिक्षापत्र्याः सुटीकां भगवदभिमतां तच्चरित्रामृतैक-
व्यासं ग्रन्थं च चक्रे स जयति हि शतानन्दनामा मुनीन्द्रः ॥१॥

कौतुकोऽस्ति तदत्र भवतोऽभ्यनुज्ञां प्रार्थये इति । भगवांश्च तदादरेण प्रसन्नो मूलेदमुवाच– मुने! तव मनोरथः समये परिपूर्णो भविष्यति, अवश्यमपेक्ष्यते च ग्रन्थनिर्माणे मनसः प्रसादः, स च प्रशान्तपावने देशे एव सुसम्पादः, वयमेष्यामो दुर्गपुरम्, तत्सम्पत्तिस्तत्र भविष्यतीति । इत्यनुज्ञातो भगवता तत्समयप्रतीक्षस्तच्चरणसेवैकप्रियस्तदादेशवशगस्तच्चरणकमलसन्निधावुवास । भगवांश्च सह परमहंसमण्डलेन शतानन्दमुनिना च प्राप दुर्गपुरम् ।

अथ भगवांस्तत्र तत्र प्रवर्तितपारमैकान्तिकधर्मपथः प्रतिष्ठापितभगवन्मन्दिरो दुर्गपुरे स्वेनैव प्रतिष्ठापितस्य श्रीगोपीनाथमन्दिरस्य सन्निधौ सदसि तेभ्यस्तेभ्यस्तांस्तानर्थविशेषानुपदिशन्नासीत् । तदा जातु भगवता सविस्तरमुपदिष्टयोगप्रकरणो मुनिः शतानन्दः प्रणम्य भगवन्तं स्तुत्वा च भक्तिरससम्भृतैर्वचनैः स्वमनोरथं भगवच्चरितनिबन्धनिर्माणैकप्रवृत्तं निवेदितपूर्वं न्यवेदयत् । भगवांश्च तन्मनोरथं पूरयन्नाह– चिरादयं ते मनोरथः प्रवर्तते नाम; विज्ञानं च ते निबन्धनिर्माणानुगुणम्, विशेषतश्चास्मत्प्रसादाचत्त्वैकान्ता दृष्टिः कालत्रयव्यापिनी भविष्यति । प्राधान्येन धर्मैकावलम्बमसच्चरितोपनिबन्धलक्षणं प्रबन्धं सरलपदविन्यासं सुबोधं च निर्मायालदाश्रितानां विज्ञानदृष्टिं विस्तारय, त्वद्विरचितमेव चास्मदीयानां शास्त्रमालोकतां गमिष्यतीति । अनेन च भगवद्वचनेन सम्प्रहृष्टः सत्सङ्गिजीवनाख्यं भगवद्दिव्यचरितामृतपरिपूर्णं मुमुक्षुजनसंसेव्यधर्मावबोधकं पञ्चभिः प्रकरणैरुपेतं एकोनविंशत्युत्तरशतत्रयाध्यायात्मकं (३१९) यथाग्रथितवृत्ततः षोडशसहस्राधिकद्विचत्वारिंशदुत्तरपञ्चशतश्लोकपरिपूर्णं ( १६५४२ श्लो० ) प्रबन्धमेकमकरोत् । यमात्मनः शिष्यं सुव्रतं नाम ब्रह्मर्षिमध्यापयामास । यं च सुव्रतो मुनिः प्रतापसिंहाय राज्ञे शुश्रूषवे उपादिशत् । यत्रेयं शिक्षापत्री निबद्धा । अस्याश्चैकामर्थदीपिकाख्यां सरलसन्दर्भां सुखावबोधां तत्र तत्रोदाहियमाणापेक्षितस्मृत्यादिप्रमाणामकरोत् । यां भगवानवलोक्य सुप्रसन्नः शतानन्दमुनिमभ्यनन्दच्छ्लाघावचनैः । तथा च वचनम्—

'सटीकां पत्रिकां स्वीयां दृष्ट्वा तां सन्तुतोष ह। प्रशंसां बहुधा चक्रे शतानन्दस्य संसदि ॥
यावान्मदीयोऽभिप्राय आसीत्तावानशेषतः। अत्रानीतोऽस्त्यनेनेति मुनीन्भक्तांश्च सोऽब्रवीत् ॥
प्रीत्या ददौ स्वकण्ठस्थां शतानन्दाय स स्रजम्। करद्वयं चातिमुदा दधौ तच्छिरसि प्रभुः ॥'

(सत्संगिजीवने प्रक.५ अ. ६७ श्लो.५–७) इति । अन्तर्हिते च भगवति तद्विरहाकुलोऽपि तद्ध्याननिष्ठयोपरतबाह्यवृत्तिः सिद्धदेहेन तत्र विचरन् मुमुक्षून्कांश्चन तदावदा तत्त्वहितपुरुषार्थानवगमयन् गमयामास समयम् ।

अनेन विरचिता निबन्धाः—शिक्षापत्र्या अर्थदीपिकाख्येयं टीका (१) अपरा च सरला अन्वयदीपिकाख्या (२) सत्सङ्गिजीवनाख्यं नारायणचरितम् (३) सर्वमङ्गलाख्यं श्रीहरिनामसहस्रस्तोत्रम् (४) जनमङ्गलाख्यमष्टोत्तरशतनामस्तोत्रम् (५) हरिवाक्यसुधासिन्धुः (२६२) द्विषष्ट्युत्तरद्विशततरङ्गात्मकः (६) श्रीहरिसिद्धान्तः (७) धर्मदेवस्तोत्रमष्टोत्तरशतनामात्मकम् (८) भक्तिदेवीस्तोत्रमष्टोत्तरशतनामात्मकम् (९) श्रीहरिजन्मतिथिविधिः (१०) वासुदेवनाममाला अष्टोत्तरशतनामावलिरूपा (११) इत्येते । अयमेव श्रीहरेः सम्प्रदाये निबन्धकाराणां प्रथमो बभूव ।

शतानन्दमुनेरेतच्चरितं नातिविस्तृतम् ।
सत्सङ्गिजीवनग्रन्थात्समुद्धृत्य प्रकाशितम् ॥

---

# श्रीरघुवीराचार्यचरितम् ।

भगवत्सहजानन्दसूक्तिसारप्रकाशकम् ।
भाष्यं भावैः सुगम्भीरं प्रथते यत्कृताविदम् ॥ १ ॥
तस्य श्रीरघुवीराख्यदेशिकेन्द्रस्य पावनम् ।
सङ्गृह्य सारतो वृत्तं भूमिकान्तर्निबद्ध्यते ॥ २ ॥

यस्त्वयमाचार्यपदे भगवता सहजानन्देन सनातनधर्मपथसंरक्षणाय समुद्धरणाय च समुत्तितीर्षतां दुरन्तसंसृतिगर्ततः प्रवर्तनाय चौद्धवसम्प्रदायस्य संस्थापितो रघुवीरनामा तस्यैव भ्रातृव्यः। तस्य जन्मस्थानमामलीयाख्यो ग्रामः, भगवता श्रीसहजानन्देन स्वावतरणेन पवित्रितो योऽयमुत्तरकोसलाख्यो देशस्तदन्तर्गतः। जन्मसमयश्चास्य ( संवत् १८६८ फाल्गुनकृष्णचतुर्थी ) अयं च शैशव एव परहितैकप्रवृत्तिरनभिभूतो दुर्गुणैरभिसेव्यमानश्च सुगुणैः सत्यैकप्रियः प्रियः पित्रोरिव लोकानामपि बभूव। यथाकालं यथाविधानमुपनीतोऽयं कालेनाल्पेन वेदे वेदाङ्गे च निष्णातो बभूव। विद्ययेव विनयेन च परिपूर्णः, यौवनश्रियेव विवेकश्रियापि समाश्लिष्टः, विद्याधनाभिजनसमुत्कर्षेणेव सरलस्वभावेनाप्युपलक्षितः, आभाषणेन च मृदुमधुरेण धर्म्येणाकर्षकः शुश्रूषुजनचेतसां बभूव। यदा भगवान्सहजानन्दः स्वेन धार्यमाणां धर्मरक्षणैकशेषभूतां परहितैकाधायकां देशिकादेशानुवर्तनलक्षणामप्याचार्यधुरं चिरमूढां बाह्यव्यापृतिगर्भतयाऽन्तरारामतालक्षणापरिमितात्मानन्दैकानुभवोपरोधिकां समुचिते पुरुषे समवरोप्य क्वाप्यानन्दमये स्वात्मैकसंवेद्ये दहराकाशे निलयनमाकाङ्क्षमाणो व्यचिन्तयत्; तदाऽस्य हृदयपदवीं द्वावेवाविशतां गुणोपनीतौ भ्रात्रोः पुत्रौ। ययोरन्यतमोऽयं रघुवीराचार्यः, अपरश्चायोध्याप्रसादाख्यः। द्वयोरेनयोरात्मनैकेन चिरादूह्यमानं श्रीमदौद्धवसम्प्रदायनिर्वहणभारं विभज्य स्थापयन् पुत्रभावेन तौ स्वीकृत्याचार्यपदेऽभिषिच्य विभज्य दक्षिणोत्तरविभागेनाचार्यपदं श्रीरघुवीराचार्याय लक्ष्मीनारायणाधिष्ठिते दक्षिणविभागे श्रीमदौद्धवसम्प्रदायप्रवर्तनैकशेषभूतं तदाचार्यपदं प्रायच्छत्।

अयं च रघुवीराचार्यः ( संवत् १८८२-कार्तिकशुक्लैकादश्यां ) सम्प्रापिताचार्यपदस्तिरोहिते भगवति सहजानन्दे स्वयमादेशं भगवतः पुनः पुनरनुस्मरन् सदुपदेशमुखेन परमहंसानां च परिपन्मुखेन परितः प्रवर्तयन्नौद्धवसम्प्रदायमनुदिनमनुवर्धमानयाऽऽचार्यसम्पत्त्या बभूव सर्वेषामेव हरिभक्तानां स्पृहणीयचरणकमलः। ये च भगवतः सहजानन्दस्य चरणकमलसमाश्रयाः परमहंसाः सर्व एव ते भगवत आदेशमनुसरन्तस्तस्यास्य श्रीरघुवीराचार्यस्यादेशमनुवर्तमाना यथापूर्वं परितो मुमुक्षुजनमण्डलमुपदेशैः समुद्बोधयन्तो लोकहिताय व्यचरन्। अयं चाचार्यस्तेषु भगवच्चरणकमलसमाश्रयलक्षणमतिशयमात्मनोऽपि माननीयं भावयन्विशेषतः प्रेम बहुमानसम्मिश्रां दृष्टिमादधान आसीत्। अस्य चाचार्यस्य गृहानधिवसतोऽपि नैकं वा कर्म कामारम्भायाभूत्, येन वासनालेपदूषितं कर्म निबन्धाय भवेत्। परं सर्वमेव श्रीलक्ष्मीनारायणचरणपरिचर्यैकशेषभूतं पारमैकान्तिकधर्मप्रवर्तनैकान्तं सद्विद्याप्रवर्तनैकप्रयोजनं प्रशान्तिप्रधानं परमहंसानामप्यादरणीयमभूत्। अयं चाचार्यो भगवन्मूर्तिप्रतिष्ठापनेन तत्त्वनिबन्धनिर्माणेन चादेशं भगवतोऽनुपालयंस्तत्र तत्र भगवन्मूर्तीः प्रतिष्ठापयामास, चकार च पद्भूस्तरयद्दितपुरुषार्थकान्ताग्नियन्धान्। मन्दिरेषु प्राधान्येन वृत्तालये भगवतो लक्ष्मीनारायणस्य पार्श्वे द्वारकानाथस्य प्रतिष्ठामकारयत्। दुर्गपुरे च रेवतीबलदेवयोस्तथा कृष्णस्य। तथा धौलेय ( धोलेरा ) नगरे प्रतिष्ठामकारयत्। दुर्गपुरे ( गढडा ) जीर्णदुर्गे च ( जूनागढ ) भगवतो हरिकृष्णस्य प्रतिष्ठामकारयत्। स्तम्भनगरे च ( खम्भात ) कारयित्वा हरिमन्दिरं भगवन्तं हरिकृष्णं राधासनाथपार्श्वं कृष्णं च प्रतिष्ठापयामास। सूर्यनगरे च ( सूरत ) भृगुपुरे च ( भरूच ) श्रीकृष्णं रेवतीरमणं बलदेवं च प्रतिष्ठापितवान्। मोहमय्यां ( मुंबई ) भगवन्तं हरिकृष्णं नारायणमुने राधाकृष्णस्य चार्चां प्रतिष्ठापयामास।

गोलोकविहारिणं च राधासमाश्लिष्टपार्श्वं प्रतिष्ठापयामास। निमाडदेशे च धराख्ये (धरगाम) ग्रामे च भगवतो नारायणस्य प्रतिष्ठामकारयत्। वरयानाख्ये नगरे (बुरानपूर) लक्ष्मीनारायणार्चां हरिकृष्णार्चां च यथाविधानं प्रतिष्ठापयामास। सावदानपुरे (सावदा) राधाकृष्णार्चां प्रतिष्ठापितवान्। सौराष्ट्रदेशे मणिभद्राभिधे पुरे (माणावदर) भगवन्मन्दिरं कारयित्वा भगवन्तं हरिकृष्णं प्रतिष्ठापयामास। ऊनाख्ये ग्रामे बालमुकुन्दस्य प्रतिष्ठामकारयत्। तत्र तत्र प्रतिष्ठामहोत्सवे यश्च हरिभक्तानामादरातिशयः, यच्च प्रतिष्ठाविधानेऽप्रस्खलितं तत्तद्वैदिकं कर्म, विप्राणां च सहस्राधिकानां भोजनदक्षिणादिसन्माननं सर्वमेव तत् भगवतः सहजानन्दस्य समय इव लेशतोऽप्यन्यूनमभूत्। अस्य चाचार्यस्य प्रशान्तपावनेन स्वभावेन सत्सङ्गसम्पत्तिरनुदिनमनुवर्धमाना नानादिगन्तेषु व्यापृताऽभवत्।

अनेन विरचिता निबन्धाः—द्वादशस्कन्धात्मको हरिलीलाकल्पतरुः। यत्र भगवतः सहजानन्दस्य चरितं विस्तृतमनुवर्ण्यते (१) सर्वमङ्गलव्याख्या भावप्रबोधिन्याख्या (२) जनमङ्गलटीका भावार्थप्रकाशिकाख्या (३) इदं च भाष्यम् (४) भाष्ये चास्मिन्नप्रतिपत्तिविप्रतिपत्त्यन्यथाप्रतिपत्तिनिरसनपूर्वकं मूलाशयस्तत्र तत्राविष्कृतः। प्रासङ्गिकाश्च तत्त्वविचाराः प्रमाणोपपत्तिभूयिष्ठास्तत्रतत्र वितन्यन्ते। तदिदं शब्दे चार्थे च गाम्भीर्यमावहद्विबुधवर्गस्याह्लादाय विशेषतः प्रभवति। एवमयमाचार्यो निबन्धमुखेन भगवन्मन्दिरस्थापनामुखेन सदुपदेशाधानेन च चिरं विधायोद्धवसम्प्रदायप्रवृद्धिम्, वयसि चरमे सञ्जातात्मारामतैकरुचिः सर्वमारम्भं बाह्यं परिहरन्नध्यारोपयंश्चाचार्यपदमन्यस्मिन्नात्मनैवोपनीतमाबाल्यादाहितसद्विद्याभ्यासं भ्रातुः पुत्रं निजतनयभावेन स्वीकृतं भगवत्प्रसादाचार्यमाचार्यपदेऽभिषिच्य स्वयं समुपरुद्धबाह्येन्द्रियप्रवृत्तिः सर्वान्तरात्मनि भगवति पुरुषोत्तमे मनः समाधाय तत्प्रणिधानैकपरो बभूव। अथ कालेनात्मनः कलेवरं जीर्णमिव वासःखण्डं सुखेन परित्यजन् सर्वान्वर्णिनः साधूनात्मनश्चरणकमलसमाश्रयांश्चाहूय भगवतः सहजानन्दस्य चरणकमले समनुसरन्समयसमुचितान्सदुपदेशान्विधाय श्रीमगवत्प्रसादाचार्याय सम्प्रदायपरिपालनैकशेषभूतमाचार्यपदनिर्वहणमेव परमं धर्ममावेद्य (संवत् १९१९-माघशुक्लद्वितीयाया) प्रशान्तश्वासः प्रलीनः परे ब्रह्मणि परमानन्दमये परमं निर्वाणमविन्दत।

**प्राक्तनेभ्यो निबन्धेभ्यः सङ्गृह्येदमुदाहृतम्।**<br>
**चरितं पावनं श्रीमद्रघुवीरमहागुरोः॥**

---

# निवेदनम् ।

श्रीमत्यौद्धवेऽस्मिन् सम्प्रदाये सर्वैरेव भगवतः सहजानन्दस्य प्रकटीभूतं वाङ्मयमिवापरं रूपमनुदिनमनुसेव्यते नाम शिक्षापत्र्याख्यमेतत्। टीका भाष्यं चार्थविशेषावबोधनेन मूलाशयं विविदिषतामत्यन्तोपकारकभावमावहति,पण्डितानां च निर्मत्सराणां प्रह्लादनाय च प्रभवति। तथैव भाष्यटीका चेत्येषां त्रयाणां निगूढानां निबन्धानां व्यक्तीकरणमिच्छन्तः सनातनधर्मधुरन्धर-(१०८) श्रीश्रीपतिप्रसादाचार्या मुद्रापणे बद्धादराः प्रोत्साहिताश्चाशयज्ञैः परमहंसैः संशोधनसम्मुद्रणादिकार्यनिर्वहणे न्ययोजयन्नात्मीयांस्तत्तदभिज्ञान् । तत्र संशोधनपरिश्रमः स्वीकृतो नामास्माभिः। या तत्र शतानन्दमुनिविरचिताऽर्थदीपिकाख्या टीका, तस्याः पुस्तकमेकं श्रीशतानन्दमुनिसमय एव विलेखितं समुपलब्धम्। अन्यानि च कानिचित्पुस्तकानि अध्यापकैरध्येतृभिर्वा तत्र तत्र बहुशः कृतैः टिप्पणैरापूर्णानि प्रायो बालबोधनैकान्तानि तान्यदृश्यन्त । यथा-निबन्धोदाहृतप्रमाणानां व्याख्यानम्, तथा समानार्थाधिकप्रमाणसङ्ग्रहः, तथा प्रसिद्धेऽप्यर्थे कोशवचनानि, तथा व्याकरणप्रक्रियाश्चेति । कानिचित्पुस्तकानि लेखकप्रमादतो निबन्धमध्योल्लिखिततत्तट्टिप्पणवचनानि टिप्पणानामपि निबन्धशरीरान्तःपातित्वभ्रमावहानि । क्वचित्क्वचित् श्लोकविवरणे लेखकप्रमादतो विलेखने पौर्वापर्यविनिमयोऽप्यदृश्यत । तदिदमखिलमवलोक्य विचार्य च सम्यक् परिहृत्य लेखकप्रमादं सर्वतः प्रथमं पुस्तकं विशेषतः प्रमाणीकृत्य प्रामादिकं पदवाक्यप्रस्खलनं च परिशोध्य यथामति संशोधितं नामास्माभिः। भाष्यं टीका चेत्यनयोः पुस्तके तु प्रायः शुद्धे । क्वचित्क्वचिल्लेखकदोषायातमशुद्धं परिहृतं नाम ।

निबन्धत्रयेऽस्मिन्प्रमाणतयोदाहृतानां वचनानामाकरप्रदर्शनप्रसङ्गे समादृतो नाम भूयान् प्रयासः । तत्र कानिचित्प्रमाणवचनानि यथा निबन्धेऽस्मिन्नुदाह्रियन्ते, न तथैवोपलभ्यन्ते तत्तत्स्थाने, किन्तु ततो लेशतो भिन्नपाठान्येव क्वचिदन्यथाऽपि । यथा-पाद्मे इत्यारभ्योदाहृतमेकं वचनं मुद्रिते पाद्मे भिन्नपाठं दृश्यते, मुद्रितेष्वपि नैकप्रकारं, तत् तेषां तेषां पुराणप्रभृतीनामन्यान्यस्थानमुद्रितानां तथा लेखपुस्तकस्य च सङ्ग्रहं कृत्वा यावन्ति वचनान्यविप्रतिपन्नान्युपलब्धानि तेषां स्फुटमाकरप्रदर्शनं कृतम् । येषां प्रमाणवचनानामाकरो नोपलब्धस्तत्र पुनरन्वेषणप्रयासो नैवादृतः। विषयानुक्रमणिका च यथामतिबलमुपदर्शिता नाम ।

अत्र संशोधनकर्मण्याप्रथमयत्नादामुद्रणावसानमक्षरशो मनोनयनावधानेनानुलेखमनुमुद्रणं नः साहाय्यं (परमसद्गुरूणां अद्भुतानंदस्वामिनां शिष्यस्य सद्गुरुश्रीघनश्यामचरणदासस्य शिष्येण) हरिजीवनदासेन वैदुष्यमप्यात्मनः सफलयता बहुशो विहितम्, येन नः संशोधनकार्यं सुखसाध्यमभूत् । यश्चायं प्रयासः प्रमाणानामाकरान्वेषणे अकाराद्यनुक्रमेण तद्योजने च स सर्वस्तदीय एव । तथा भूमिकाधाने विषयविभजने च तत्तदपेक्षितार्थोद्बोधनेन च नः साहाय्यमापादितम् । तेनानेन साहाय्येनास्मद्हृदयगुहानिवासः सर्वान्तरात्मा प्रतुष्यति ।

वाङ्मनश्चक्षुषां योऽसौ वाङ्मनश्चक्षुरात्मकः ।
कोऽप्यौपनिषदः सोऽयमन्तरात्मा प्रसीदतु ॥

एं० कृष्णमाचार्यः

श्रीस्वामिनारायणो विजयतेतराम् ।

# शिक्षापत्रीविषयानुक्रमणिका ।

श्रीस्वामिनारायणो विजयतेतराम् ।

# अर्थदीपिकाख्यटीकास्थविषयानुक्रमणिका ।

# भाष्यस्थविषयानुक्रमणिका।

# शिक्षापत्रीविषयानुक्रमसङ्क्षेपः ।

श्लोकः

## शिक्षापत्रीध्यानम् ।

विज्ञाने विलयं गते प्रसरति क्षोण्यां तमस्यान्तरे
दिङ्मूढेषु भवाध्वगेषु परितः पीडैकशेषे विधौ ।
कारुण्यादवतीर्य मुक्तिजननीं शिक्षामदाधामिमां
साक्षादक्षरदिव्यधामनिलयस्तामन्वहं चिन्तये ॥ १ ॥

संसारकर्दमविवर्तनपङ्किलानां नैर्मल्यमाकलयितुं रचितावताराम् ।
आविद्यसंतमसनिर्हरणे समर्थामादेशपत्रि ! भवतीमनुचिन्तयामि ॥२॥

काऽप्यञ्जनशलाकेयमन्तस्तिमिरहारिणी ।
प्रज्ञादृष्टिप्रकाशाय शिक्षापत्र्युपसेव्यताम् ॥ ३ ॥

नानादेशनिवासिशिष्यजनतामुद्दिश्य याऽऽविष्कृता
साक्षादक्षरवासिना नृवपुषा नारायणेन स्वयम् ।
सा त्वं सङ्ग्रथितासि पावनि ! शतानन्दर्षिणा ग्रन्थतः
शिक्षापत्रि ! भवापहन्त्रि ! भवतीमन्वान्वहं चिन्तये ॥ ४ ॥

शतानन्देन मुनिना मध्ये सत्सञ्जिजीवनम् ।
ग्रथितां भगवत्प्रोक्तां शिक्षापत्रीमहं श्रये ॥ ५ ॥

समस्तशास्त्रदुग्धाब्धिमध्योद्धृतमनुत्तमम् ।
शिक्षापत्र्यमृतं किञ्चिदमृतत्वाय कल्पते ॥ ६ ॥

शिक्षापत्र्यमृतं यदेव सहजानन्दः शरण्यः सतां
देवः प्राशयदाश्रितानिह मुकुन्दानन्दमुख्यान् पुरा ।
यत्पीत्वा प्रभवन्ति सम्पदमनायासेन तामासुरी-
मुच्छेत्तुं तदुपास्महे भवभयप्रध्वंसनैकौषधम् ॥ ७ ॥

संसारसागरगतान्स्वयमुद्दिधीर्षुः श्रेयस्तदेकमखिलेष्वभिकाङ्क्षमाणः ।
आदेशमालिलिखिषुमादृतपत्रलेखो नारायणः स्फुरतु मे हृदि वर्णिवेषः ॥

व्यञ्जयन्नाश्रितस्नेहं मुग्धस्मितमुखाम्बुजः ।
आदेशमालिखन्नस्तु हृदि मे धर्मनन्दनः ॥ ९ ॥

स्वामिनारायणस्यैतत्स्वरूपमपरं हरेः ।
शिक्षापत्र्यात्मना भूमौ चकास्त्यखिलमङ्गलम् ॥ १० ॥

शिक्षापत्रि ! समस्तशिष्यनिवहैरभ्यर्थितेनादरात्
देवेनाखिलकारणेन सहजानन्देन याऽऽविष्कृता ।
तां त्वां सर्वफलप्रदां भगवतो देवस्य तस्यापरां
मूर्तिं देवि ! विभावयन्ननुदिनं सेवे मुहुः प्रेमतः ॥ ११ ॥

शिक्षापत्र्यमृतं हिताय जगतामाविष्कृतं यन्मया
मद्भक्तैरिदमादरादनुदिनं सेव्यं समस्तैरपि ।
इत्यादिष्टमनुस्मरन् भगवतः प्रेम्णान्वहं यः पठेत्
शिक्षापत्रमिदं स याति परमं धामाक्षरं शाश्वतम् ॥ १२ ॥



श्रीस्वामिनारायणो विजयतेतराम् ।

# शिक्षापत्री ।

वामे यस्य स्थिता राधा श्रीश्च यस्यास्ति वक्षसि ।
वृन्दावनविहारं तं श्रीकृष्णं हृदि चिन्तये ॥ १ ॥

## श्रीशतानन्दमुनिविरचिता–अर्थदीपिका टीका ।

यो भूमेरुदडीडयत्स्वमहसा वात्येव तूलं सुरा-
मांसप्राशमयोपधर्ममभितः कार्ष्णं वृषं पोषयन् ।
स्वैश्वर्यं समपप्रथल्लघु नृणां स्वान्तासुरोधाद्धरौ
श्रीस्वामी जयतीश्वरः स सहजानन्दो ममानन्ददः ॥ १ ॥

धर्मप्रियं धर्मभुवं धर्मस्थं धर्मपोषकम् । धर्मारिध्वान्ततरणिं श्रीकृष्णं प्रणमाम्यहम् ॥२॥
तस्य प्रसादात्क्रियते सत्प्रमाणवचोऽन्विता। सधर्मभक्तिमाश्रित्य शिक्षापत्र्यर्थदीपिका ३

## श्रीरघुवीराचार्यविरचितं भाष्यम् ।

सद्ब्रह्मात्मादिशब्दैः श्रुतिषु निगदितश्चेतनाचेतनात्मा
स्वामी नारायणो यः स्वतनुचिदचितोः सौक्ष्म्यतः सोऽविभक्तः ।
सङ्कल्प्याहं बहु स्यामिति समुदभवत्तत्त्यदात्मा विभक्तो
विश्वत्राणाय भूयादनवधिमहिमा नित्यनिर्धूतदोषः ॥ १ ॥

## श्रीभगवत्प्रसादाचार्यविरचिता–भाष्यटीका ।

अव्यादस्मादुरन्ताद्भवदहनशिखाचक्रवालान्तरालादुद्गच्छन्मोहधूमात्प्रलयजलधरैरप्रशाम्योग्रवेगात् ।
एष श्रीमानशेषप्रणतजनपरित्राणदत्तावधानः कारुण्यापाङ्गपूरैरमृतरससमैः स्वामिनारायणो नः ॥ १ ॥
पुत्रीकृत्य तु यं निजे गुरुपदे संस्थाप्य सर्वान्निजान् भक्तान्यस्य वशे चकार सहजानन्दः स साक्षाद्धरिः ।
तस्य श्रीरघुवीरदेशिकमणेः श्रीतातपादस्य मे, भूयात्स्वस्तिकरं पदाम्बुजमिदं मूर्ध्नो ममाभूषणम् ॥ २ ॥
योऽस्मावादेशरूपो भवति भगवतो विमुखो यो नियन्तुः शिक्षापत्रीति,तस्य व्यरचि मम पुनस्तातपादैर्हि भाष्यम्
गम्भीरं न्यायगुम्फैः परिमितमतिभिर्दुर्गमं भाष्यमेतद्व्याख्यातुं तत्प्रसादादयमहममुना कौतुकेन प्रवृत्तः ॥३॥

पत्रिकामुखेनाश्रितजनान्सद्धर्मानुपशिक्षयन्भगवान् श्रीस्वामिनारायणः प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारप्राप्तं मङ्गलमिष्टदेवतास्मरणलक्षणमाद्यश्लोकेनोपनिबध्नाति—वामे यस्येति। यस्य—श्रीकृष्णस्य। वामे—सव्यपार्श्वभागे। राधा स्थिता। राध्नोति राधयति साधयति वा भक्तकार्याणीति राधा। राध साध संसिद्धावित्यतः पचाद्यच्। यद्वा राध्नोति—भक्तजनः संसिद्धिं प्राप्नोत्यनयेति

---

मत्स्यादयोऽवतारा भवन्ति दिव्याकृतेर्यस्य। सोऽयं स्वयमवतीर्णः स्वामी नारायणो जयति॥२॥

यस्याङ्घ्रिपङ्कजरजः शिरसा वहन्तः संसारसागरमिमं सुखतस्तरन्ति।
श्रीधर्मभक्तितनयाकृतिरेष साक्षात्पूर्णः पुराणपुरुषः पुरुषोत्तमोऽव्यात् ॥ ३ ॥

---

तत्रभवानाचार्यो व्याचिख्यासुः शिक्षापत्रीमादावुपनिबध्नाति मङ्गलम्—सदिति। आचारप्राप्तं चैतत्, प्रत्यूहशमनं चास्य फलम्। मङ्गलं चेदमाशीरात्मकम्। स्वस्य वा स्वीयस्य वा नाशास्यते त्राणम्, परन्तु विश्वस्येति व्याख्यातुः सर्वभूतसौहार्दं व्यज्यते। अनवधिमहिमा नित्यनिर्धूतदोष इत्याभ्यामुभयलिङ्गत्वमुच्यते। जगत्कारणत्वेन परं ब्रह्म लक्षयन्नभिन्ननिमित्तोपादानत्वं तस्योपपादयति—स्वेत्यादिना। अविभक्त इत्युपादानत्वनिरूपणम्, विभक्त इत्युपादेयत्वनिरूपणम्। कथमसावविभक्तः कथं वा विभक्तस्तदुच्यते—स्वतनुचिदचितोः सौक्ष्म्यतः सोऽविभक्तः सत्यदात्मा विभक्त इति च। विशेषणद्वारा तदुभयमिति यावत्। विशेषणत्वं च चिदचितोर्न दण्डादेरिव, किन्तु तनुतया, तदपृथक्सिद्धविशेषणद्वारा स्थौल्यसौक्ष्म्ययोः सिद्धेर्मुख्यमेवोपादानत्वम्। तद्धि विशेषणं स्वरूपैकदेशभूतमेवेति भावः। विशिष्टमेव तु परमब्रह्मस्वरूपमित्याह—चेतनाचेतनात्मेति। निमित्तत्वमुपपादयते—सङ्कल्पेति। सङ्कल्पविशिष्टवेषेण हि निमित्तत्वम्। "तदैक्षत बहु स्यां प्रजायेये" ति श्रुत्यर्थः स्मार्यते—सत्यदात्मेति। सामान्यविशेषन्यायाज्जगत्कारणत्वं देवताविशेषे सङ्गमयति—सदित्यादिना नारायण इत्यन्तेन। "सदेव सोम्येदमग्र आसीत्" "ब्रह्म वा इदमग्र आसीत्" "आत्मा वा इदमग्र आसी"दिति श्रुत्या जगत्कारणत्वेन प्रतिपन्नं वस्तु "एको ह वै नारायण आसी"दिति श्रुत्या देवताविशेष एवेति निश्चीयत इति भावः। अयमाशयः—सदेवेति श्रूयमाणस्य सच्छब्दस्य ब्रह्म वेति श्रूयमाणस्य ब्रह्मशब्दस्य "आत्मा वा इदमग्र आसी" दिति विशेषश्रुत्या परमात्मनीव, "एको ह वै नारायण" इति विशेषश्रुत्या सदादिशब्दानां नारायणे तात्पर्यमिति ॥ १ ॥

सकलवेदान्ततात्पर्यगोचरता, सकलजगत्कारणता च भगवतः प्रथमश्लोके प्रदर्शिता। अथ सर्वावतारमूलतां ज्ञापयन्वस्तुनिर्देशात्मकं मङ्गलमुपनिबध्नाति—मत्स्यादय इति। दिव्याकृतेरित्यनेनावतरणसमयेऽप्यप्राकृतरूपता बोध्यते। स्वयमवतीर्ण इत्यवतारान्तरतो भेद उच्यते। अद्वारमवतरणमित्येवत् ॥ २ ॥

संसारसागरसन्तरणसाधनत्वं भगवति विनिश्चित्य संसारतः संरक्षणमात्मीयानामात्मनश्चाशंसते—यस्येति। संसारस्य सागरत्वोक्त्या दुस्तरत्वं व्यज्यते। दुस्तरमपि समनायासेन तरन्ति। के ?—यस्याङ्घ्रिपङ्कजरजः शिरसा वहन्तः—रजसोऽपि भगवत्पादपङ्कजसम्बन्धेन शिरसोह्यमानत्वेन च संसारसागरसन्तरणे सुतररूपसाधनत्वं सिद्ध्यति। अन्यथा रजसा व्याप्तहृदया निमज्जन्ति

राधा । गुरोश्च हल इत्यप्रत्ययः । श्रीवृषभानुनन्दिनी । राधाशब्दो ब्रह्मवैवर्तपुराणस्थश्रीकृष्णजन्मखण्डे—"रेफो ह्यनेकजन्माघं कर्मभोगं शुभाशुभम् । आकारो गर्भवासं च मृत्युं रोगं च नाशयेत् । धकार आयुषो हानिमाकारो भवबन्धनम् । श्रवणस्मरणोक्तिभ्यः प्रणश्यति न संशयः । रेफो हि निश्चलां भक्तिं दास्यं कृष्णपदाम्बुजे । सेवप्सितं सदानन्दं सर्वसिद्ध्योघमीश्वरम् । धकारः सहवासं च तत्तुल्यं कालमेव च । ददाति सार्ष्टिं सारूप्यं तत्त्वज्ञानं हरेः सुखम् । आकारस्तेजसो राशिं दानशक्तिं हरौ यथा । योगशक्तिं योगमतिं सर्वकालं हरेः स्मृतिम् । श्रुत्युक्तिस्मरणोद्योगान्मोहजालं च किल्बिषम् । रोगशोकमृत्युयमा वेपन्ते नात्र

भगवत्सहजानन्दचरणौ शरणं वृणे । सभाजयन्ति सन्तोऽपि यत्प्रभावादिमं जनम् ॥ ४ ॥
यं मेने पुत्रभावेन प्रकटः पुरुषोत्तमः । सोऽयं तत्प्रीणनं किञ्चित्तनुते तत्पदाश्रयः ॥ ५ ॥
श्रीस्वामिनारायणपादपद्ममरन्दमास्वाद्य नितान्ततृप्तः ।
कश्चिद्द्विरेफो रघुवीरनामा स्वनन्किमप्यद्य सतां मुदे स्यात् ॥ ६ ॥

सहसा संसारसागरे । एतेनासत्यपि कर्मादिपरिकरे भगवत्पादसम्बन्धमात्रेण निस्तरन्ति संसारमिति भगवतः संसारनिस्तरणे मुख्यसाधनत्वमुक्तं भवति । एवं संसारनिस्तरणे मुख्यसाधनत्वं भगवतोऽनुसन्दधानः स्वयं संसृतितः संरक्षणमर्थयते— अव्यादिति । इह प्रार्थ्यमानं रक्षणं सामान्यतः श्रूयमाणमपि संसारसागरसन्तरणसाधनत्वानुसन्धानपूर्वकं प्रार्थ्यमानत्वात्संसृतितः संरक्षणरूपविशेष एव पर्यवस्यति । न इति कर्माध्याहारादात्मीयानां कर्मत्वसिद्धिः । स्वस्य स्वीयानां च संसृतितो निस्तरणप्रार्थनमेवाचार्यकृत्यम् ॥ ३ ॥

प्रार्थ्यमानस्य संसारसन्तरणस्य स्वयमुपायमनुतिष्ठति—भगवदिति । ननु—विना कर्माद्युपायं चरणयोराश्रयणमात्रेण किं सिद्ध्येदित्यत्राह—सभाजयन्तीति । किं न सिद्ध्येत्, इममज्ञमपि सन्तः सभाजयन्ति । मुमुक्षुजनैरप्युपसेव्यते इत्यसकृत्, तत्कस्य प्रभावेन तत्, तदेव मुख्यं साधनमित्याशयः । अनेनाचार्यपदमात्मनो व्यज्यते ॥ ४ ॥

भगवदभिसबलौकिकसंबन्धविशेषोऽप्यात्मनः सकलश्रेयःसाधनमिति ज्ञापयन्स्वस्य तदेकदासत्वं तदनुरूपां वृत्तिमप्याह—यं मेने इति । तत्पदाश्रय इति तदेकदासत्वमुच्यते । तत्प्रीणनमिदं किञ्चिदिति तदनुरूपा वृत्तिरुच्यते । चरणसेवकेन स्वामिनः प्रीणनं हि कार्यम् । नेतोऽन्यत्तस्य प्रीणनम्, यत्तदीयादेशविवेचनं तस्यात्यन्तं प्रीणनम् ॥ ५ ॥

यद्यप्यर्थमाधुर्यविरहितोऽयं मदीयः शब्दसन्दर्भस्तथापि भगवच्चरणारविन्दप्रणयपरिवाह इति सन्तोष्टव्यं नाम सद्भिरित्याह—श्रीस्वामीति । किमपि स्वनन्—अर्थसङ्गतिनिरपेक्षं यत्किञ्चिदुच्चारयन्निलेखन् । सतां मुदे स्यात् । ननु कस्मादतिशयात्? अयमेवास्मिन्नतिशयो द्विरेफे—श्रीस्वामिनारायणपादपद्ममरन्दमास्वाद्य नितान्ततृप्त इति ॥ ६ ॥

१ धीरं स्वनत्येष सतां हि कर्णे इति पाठान्तरम् ।

संशय" इति निरुक्तः। वामे स्थितेति सेवाधर्मो दर्शितः। तेन च शृङ्गारिकपूजोचितस्रक्चन्दनादिपात्रहस्तत्वं व्यज्यते ॥

किंच यस्य वक्षसि-उरःस्थले। श्रीः श्रयति हरिमिति श्रीः, लक्ष्मीरस्ति-निवसति। स्वर्णरेखारूपेण वर्त्तते। बहिस्तु जनादृश्यरूपेण राधिकावत्सेवायामेव तत्पराऽस्तीत्यर्थः। तथाच भागवतामृते—"श्रीः प्रेक्ष्य कृष्णसौन्दर्यं तत्र लुब्धा ततस्तपः। कुर्वन्तीं प्राह तां कृष्णः किं ते तपसि कारणम्। विजिहीर्षे त्वया गोष्ठे गोपीरूपेति साऽब्रवीत्। तद्दुर्लभमिति प्रोक्ता लक्ष्मीस्तं पुनरब्रवीत्। स्वर्णरेखेव ते नाथ! वस्तुमिच्छामि वक्षसि। एवमस्त्विति सा तस्य तद्रूपा वक्षसि

---

अथ भगवानखिलहेयप्रत्यनीककल्याणैकतानः स्वेतरसमस्तवस्तुविलक्षणज्ञानानन्दैकस्वरूपः सर्वेश्वरोऽपारकरुणानिधिराश्रितवात्सल्यविवशः पुरुषोत्तमः कलिकलुषितचेतनोद्दिधीर्षया स्वयमुर्व्यामवतीर्णोऽप्राकृतदिव्यमङ्गलमूर्तिर्धर्मनन्दनस्तीर्थीकृततीर्थैः पारमैकान्तिकधर्मपरायणैः परमहंसैः परिवृतचरणकमलो मधुरमधुरैरुपदेशैः कतकक्षोदैरिव विमलीकृतसकलाशयः भक्-

---

पुरुषोत्तमप्राकट्यनिरूपणपूर्वकं प्रबन्धावतरणप्रकारमाह—अथेत्यादिना। अथेति मङ्गलार्थः प्रयोगः। कलिकलुषचेतनोद्दिधीर्षयोर्व्यामवतीर्णस्य धर्मनन्दनस्य सर्वतः परतरत्वमुच्यते—भगवानित्यादिभिर्विशेषणैः। भगवान्-असाधारणोऽयं निर्देशः परस्य ब्रह्मणः। तथाच स्मर्यते—"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय! भगवच्छब्दः सर्वकारणकारणे। परमब्रह्मभूतस्य वासुदेवस्य नान्यग" इति। अस्य च पदस्य परे ब्रह्मणि मुख्यवृत्तेः प्रयोजकं प्रवृत्तिनिमित्तयोगमाह—अखिलेति। हेयप्रत्यनीकत्वे सति षाड्गुण्यं ह्यस्य पदस्य प्रवृत्तौ निमित्तम्। तथाच स्मर्यते—"ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः"। अत एवास्य स्वरूपमितरविसजातीयमित्याह—स्वेति। स्वेतरसमस्तवस्तुविलक्षणं स्वरूपं यस्य सः, स्वरूपं च ज्ञानानन्दमयम्। सर्वेश्वरः-ईश्वराणामीश्वरः, अनन्येश्वरः स्वयम्। परत्वमुक्तमेतावता। अथावतरणौपयिकगुणविशेष उच्यते—अपारकरुणानिधिराश्रितवात्सल्यविवश इति च। करुणा-परदुःखासहिष्णुता। वात्सल्यं-आश्रितदोषादर्शनम्। वत्सेषु धेनूनामिवाश्रितेषु स्नेहातिशयो वा। पुरुषोत्तमः-"यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतो हि लोके वेदे च प्रथितः पुरुषोत्तमः"। कलाववतरणे निमित्तमाह—कलीति। स्वयं-यः क्षराक्षरातीतः स एव। उर्व्यां-अक्षरनिलयोऽप्युर्व्याम्। अप्राकृतदिव्यमङ्गलमूर्तिः-उर्व्यामवतीर्णोऽप्यक्षर इवाप्राकृतदिव्यमङ्गलमूर्त्तिरेवायम्। "प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया"। धर्मनन्दनः-धर्मदेवनन्दनात्मना प्रकटतां गतः। अथावतरणे कार्यमुच्यते—तीर्थीकृतेत्यादिना। कलिकलुषितचेतनोद्दिधीर्षयाऽवतीर्णस्य मुमुक्षुजनोपसेव्यतैव हि प्राप्ता। तीर्थीकृततीर्थैः-गङ्गादयानि तीर्थानि, तीर्थता च यत्पादरजःसङ्गेन तेषां, ते तीर्थीकृततीर्थाः। साधनभावेन साध्यभावेन च परमपुरुषैकनिष्ठाः परमैकान्तिनः, तेषामभिमतो धर्मः पारमैकान्तिकधर्मः, स च भगवानेव, "कृष्णं धर्मं सनातन" मित्युक्तेः। तत्परायणाः-पारमैकान्तिकधर्मपरायणाः,

---

१ भगवतानाम्.

स्थिता" इति। तथा च स्मर्यते—"तस्याः श्रियस्त्रिजगतां जनको जनन्या वक्षो निवासमकरोत्परमं विभूते" रिति।

वृन्दावने विहारः—ताभ्यां सह क्रीडनं यस्य तम्। सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकाद्व्यधिकरणपदोऽपि बहुव्रीहिः। वृन्दावनं—व्रजभूमिस्थोद्यानविशेषः। नन्विष्टदेवत्वेन वर्णनीयस्य वृन्दावनविहारिणो भगवतः श्रीकृष्णस्य

---

टिताखिलात्मभावः समुदञ्चितसर्वभूतसौहार्दः समुपनतसकलजनमनोनयनगोचरीभूय कयाऽप्यप्राकृतया दिव्यशक्त्याऽऽबालगोपालमापादितानवधिकमहानन्दः सोऽयमानन्दमयो निजचरणारविन्दचञ्चरीकायमाणमानसेनाभ्यर्थितो मुनिवृन्देन प्राचीकशद्वैदेशिकशिष्यजनानुजिघृक्षासङ्कल्पितादेशलेखव्याजेन परमं रहस्यं धर्मतत्त्वस्य। स चायं प्रबन्धोऽनतिविस्तृतः साक्षाद्भगवद्वदनारविन्दविनिर्गलितः सात्त्विकधर्मैकावबोधकः प्रथते शिक्षापत्रीति।

वेदा निःश्वसितं यस्य साक्षात्तस्य वचः क नु। काहं मन्दमतिः क्षुद्रो हन्त! व्याख्यातुमारभे ॥१॥

प्रेरयति भक्तिरेका भगवति तस्मिन्निमं जनं मुग्धं। तदपाङ्गदिव्यधारा व्याचिख्यासोस्तनोतु मे शक्तिं

---

भगवदेकशरणा इति यावत्। परमहंसैः परिवृतचरणकमलः—कमलं चेत् हंसैः सेव्येत, भगवच्चरणकमलं परमहंसैरित्यत्र किं वक्तव्यम्। विमलीकृतसकलाशयः—रजःकलुषितजलाशयोऽपि विमलीकृतो नाम, नाश्चर्यमेतत्, कतकक्षोदेनापि विमलीक्रियते सः, तामसानामासुराणामप्याशयो विमलीकृत इत्ययं विशेषो भगवदुपदेशे। प्रकटिताखिलात्मभावः—प्रकटितं नाम स्वस्याखिलात्मत्वं तदा तदाऽऽश्रितेभ्यः। नास्य कश्चिदप्रिय इत्याह—सर्वेति। सर्वेषां श्रेयःकाङ्क्षीत्येतत्। यो महानन्दं न प्रापितस्तादृशो न कश्चिदस्य सन्निधावित्याह—समुपनतेति। योऽयमगोचरो यथावस्थितेन स्वरूपेण श्रुतीनाम्, अगोचरश्च देवानां हिरण्यगर्भादीनाम्, सोऽयं सकलजनमनोनयनगोचरीभूत इत्यस्य वात्सल्यातिशयो व्यज्यते। न केवलं नयनगोचरीभूतः, किन्तु मनसोऽपीति विशेषमभिप्रेत्य मनोनयनेत्युक्तिः। येन येनाऽयं दृष्टस्तस्य तस्य मनःपदवीं नात्यजत्कदापीति भावः। इह च जनिमत्त्वं समुपनतत्वमिति द्वयमेवापेक्षितम्, नाधिकं साधनानुष्ठानमिति समुपनतसकलजनेत्युक्तिः। समुपनतः—सन्निहितः। अभिमुखीभूतो वा। जनः—जनिमान्, यः कश्चित्, न विशेषोऽत्र वर्णगरीयस्त्वादिभिः। आबालेति। बाल इति वा गोपाल इति वा नावज्ञा, समुपनतत्वमात्रेण सर्वेषामविशेषेणेह परत्रश्चानवधिमहानन्दं यथावस्थितस्वस्वरूपानुभवजनितं प्रायच्छदिति भावः। अभ्यर्थितः—अभ्यर्थना तु निमित्तमात्रम्, सर्वेषां श्रेयश्चिकीर्षैव प्रधानहेतुः। वैदेशिकाः—देशतो विप्रकृष्टाः। कालतो विप्रकृष्टानामप्येवदुपलक्षकम्। शिष्याः—साक्षात्परम्परया वा समाश्रिताः। अनतिविस्तृत इति वाक्ये वैलक्षण्यम्, भगवद्वदनारविन्दविनिर्गलित इति वक्तृवैलक्षण्यम्, सात्त्विकधर्मावबोधक इत्यर्थवैलक्षण्यं च ज्ञाप्यते॥

व्याख्याने स्वस्यासामर्थ्यमनुसंदधानाह—वेदा इति। हन्त!! व्याख्यातुमारभे—साहसे प्रवृत्तोऽस्मि हन्त मौर्ख्यमिति भावः॥ १॥

अथ वेदसाध्यं निवर्तयन्निव इत्यत आह—प्रेरयतीति। किं कुर्यामहम्?, भगवति भक्तिर्मुग्धमपि मां प्रेरयति। प्रेरितोऽप्यशक्तो भवान् किं कुर्यात्? सत्यं, भक्तपरवशाघनाशतत्प्रबन्धव्याख्याने शक्तिरेव प्रथममाशास्यते मयेत्याह—तदपाङ्गेति॥ २॥

मानुषाकृतिधृतो भगवत्याः श्रीराधिकाया इव श्रियः साहित्यं वृन्दावने त्वप्रसिद्धम्। "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनि" इति विष्णुपुराणवाक्यात्, द्वारकायामेव तत्प्रसिद्धेरिति चेत्, सत्यम्। मानुषाकृतिधारिण्याः श्रीरुक्मिणीरूपायाः श्रियः साहित्यं तु द्वारकायामेवास्ति। किन्तु–जनादृश्यदिव्यरूपाया भगवत्याः श्रियो वृन्दावनेऽपि नित्यमेव भगवता साहित्यमस्ति। तस्या अखण्ड-

---

अथवा देशिकपदे येनास्मि विनिवेशितः। स मामाविश्य भगवान्व्याकरोति निजं वचः॥ ३॥

स्वयमखिलमङ्गलमूर्तिरपि भगवाननुजिघृक्षयाऽन्येषामादावुपनिबध्नाति मङ्गलम्—वामे यस्येति। एतेन निरस्तनिखिलदोषस्यापि विघ्ननिरसनाय कोऽयमारम्भ इति शङ्का परास्ता। आह च भगवान् लोकानुग्रहायावतीर्णस्यात्मनो लोकानुकरणमवर्जनीयमिति "मम वर्त्मानुवर्त्तन्त" इत्यादिना गीतायाम्। नन्वस्तु नामैवं तथाऽप्याशीरूपं मङ्गलं तु घटेत न तूपास्योपासकभावभेदावबोधकमिदं भगवति घटेत। मैवम्। अनुकरणे किं नामाघटितं, वस्तुदृष्ट्या स्वस्वरूपसरणरूपं च।

चिन्तये—चिन्तनं ह्यसकृदनुस्मरणम्, ध्यानमित्येतत्। दर्शनसमानाकारा तत्काष्ठाऽत्र विवक्षिता। यद्यपि चिन्तनस्य हृदुपकरणत्वं सिद्धमेवेति हृदीत्यनुपयुक्तम्। तथापि सिद्धेऽप्यर्थे हृदीतिशब्दग्रहणेन प्रेमार्द्रेण मनसा चिन्तय इति व्यज्यते। एतेन—शिशुपालादीनामिव न

---

स्वस्य सर्वथानर्हतामेव पुनरनुस्मरन्नाह—अथवेति। मयि शक्त्याधानमिति किम्? नहि करीषे काञ्चनगुणाधानं योग्यम्, तद्भगवानेव मामाविश्य व्याकरोति। कस्मादेव? निजं वच इति। नहि तद्वचसो हार्दमन्यो वेद। यं कञ्चिदन्यमाविश्य कुतो न? प्रणयविशेषोऽत्र हेतुः। कः प्रणयविशेषः?, देशिकपदे स्वेनैव विनिवेशित इति। यद्वा—आत्मयाथात्म्यमनुस्मरन्नाह—अथवेति। आत्मनो याथात्म्यं चेदनुस्मर्येत, आत्मनः क्वचिदपि कर्मणि कर्तृत्वं स्वातन्त्र्येण नानुसन्धीयेत। यावदात्मान परमात्मनः शरीरभूतं यथावस्थितमजानन्प्रवर्तेत, तावदहमिदं कर्म करोमीति मन्येत। यदा त्वन्तर्यामिनाक्षणोकरीत्या परमात्मशरीरतया यथावस्थितवेषेणात्मानमनुसन्दधीत, तदा तु हस्तपादादीनामात्मापेक्षयेवात्मनः परमात्मापेक्षयोपकरणतामेवाकलयेत्। ईदृशानुसन्धानदशायामिदमेव तु योग्यम्, स मामाविश्य भगवान्व्याकरोति निजं वच इति। आविश्य–अन्तर्यामितया प्रविश्य। मुमुक्षुभिरेवमेवानुसन्धेयमिति भगवतैवोक्तम्—"मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा। निराशीर्निर्ममो भूत्वा युद्ध्यस्व विगतज्वर" इति॥ ३॥

प्रणमाम्यहमित्यनिर्दिश्य हृदि चिन्तय इति निर्देशेनाभिप्रेतं विशेषमाह—चिन्तनं हीत्यादिना। मोक्षोपायतया वेदान्तोदितस्य सूचने भगवतो हार्दमित्याशयः। सामान्यशब्दस्य विशेषपरत्वमाह—तत्काष्ठाऽत्र विवक्षितेति। "क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति श्रुत्यर्थानुगुण्यात्। हृदीति निर्देशस्य विशेषमाह—यद्यपीत्यादिना। "यमेवैष वृणुते" इति श्रुत्यर्थः स्मारितः। इत्थं च मोक्षोपायः सूचितो भवति। प्रीतिपूर्वकमित्यव्यावर्तकमित्याशङ्क्य समाधत्ते—यद्यपीत्यादिना। विद्वेषमूलकस्य तस्य विधेयता न घटेतेति भावः। उत्कर्षैव ध्यानविशेषस्य मोक्षोपायतां शङ्कासमाधान-

साहचर्यात्। तथाचोक्तं श्रीमद्भागवते-"तत आरभ्य नन्दस्य व्रजः सर्वसमृद्धिमान्। हरेर्निवासात्मगुणै रमाक्रीडमभून्नृप!"। "जयति तेऽधिकं जन्मना व्रजः श्रयत इन्दिरा शश्वदत्र हि"। "दत्ताभयं च भुजदण्डयुगं विलोक्य वक्षः श्रियैकरमणं च भवाम दास्यः"। "नयसि कथमिहास्मान् दुस्त्यजद्वन्द्वपार्श्वं सततमुरसि सौम्य! श्रीर्वधूः साकमास्ते"। "हित्वाऽन्यान्भजते यं श्रीः पादप-

ध्यानम्, किन्तु गोपीनामिवेति व्यञ्जितं भवति। यद्यपि मोक्षोपायता स्मर्यमाणभगवन्माहात्म्याद्वैरानुबद्धेऽपि ध्यानेऽस्ति। तथापि तत्पश्चात्फलाय प्रभवदपि स्तुर्यौवत्सरणमुपतापायेति नानन्दाय। अनुरागगर्भितं तु सरणे सरणे चर्वणे चर्वणे द्राक्षाफलवदानन्दायेति। इदमेव तु प्रार्थनीयमिति भावः। सैव भक्तिरुच्यते। "प्रेमपूर्वमनुध्यानं भक्तिरित्यभिधीयते" इति लक्षणात्। एतेन भक्तेर्मुमुक्षुभिरादरणीयता द्योतिता। यद्यपि-"ब्रह्मविदाप्नोति परम्" "तमेवं विद्वानमृत इह भवति" इति ज्ञानमात्रस्य मोक्षोपायता श्रूयते, तथाऽपि-"ओमित्यात्मानं ध्यायथ" "निचाय्य तं मृत्युमुखात्प्रमुच्यते" "आत्मानमेव लोकमुपासीत" "आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य" इत्यादिविशेषश्रुतेः सामान्यविशेषन्यायेन ध्यान एव पर्यवसानम्। 'द्रष्टव्य' इति च दर्शनसमानाकारता ध्यानस्य विधीयते। प्रेमरूपता च "यमेवैष वृणुते तेन लभ्य" इति विशेषश्रुतिसिद्धा।

हृदि—हृदयप्रदेश इति वार्थः। हृदयकमल इत्येतत्। उपासकजनानुजिघृक्षया सदा हृदयकमलसन्निहितं समस्तकल्याणगुणाकरमतिमनोहरदिव्याकृतिं स्निग्धचारुवर्णं घनश्यामं दिव्यपीताम्बरधरं किरीटकुण्डलग्रैवेयहारकौस्तुभकेयूरकटकनूपुरोदरबन्धनाद्यपरिमितदिव्यभूषणं लक्ष्मीचरणलाक्षाङ्कसाक्षिश्रीवत्सवक्षसमनघरतवामतलसन्निहितराधाविरचितकण्ठालिङ्गनपिशुनवलयरेखालङ्कृतकम्बुग्रीवं श्रीकृष्णमुपरुद्धसकलबाह्यकरणो योगदृष्ट्या साक्षात्करोमीति भावः।

हृदि चिन्तये—सकलसिद्धिमयी राधा यस्य पार्श्वे, सर्वैराश्रयणीया श्रीश्च यस्य वक्षसि नित्यं जागर्ति, तस्य भगवतोऽवाप्तसमस्तकामस्य सपर्यायां किंवा वयमासनादिकं समर्पयेम, रत्नखचितमित्यपि तस्य परिलघून्यक्षराणि, तथाविधस्यापि भगवतो वृन्दावनविहाररसिकतेति तु महदिदं सौशील्यम्। तदिदं सौशील्यमनुसरन्तो वयमक्लेशेनेदमेव हृदयकमलमासनमुपकल्प्य एतद्वृत्तिभिरेव पुष्पधूपदीपादिविविधोपचारैर्मोदयाम इत्यपि व्यज्यते।

चिन्तय इति वर्त्तमाननिर्देशात्, एतदर्थं चिन्तय इति फलान्तराऽनिर्देशाच्च, श्रीकृष्णानुचिन्तनस्यैव स्वतः स्वादुतमतया फलत्वेन साधनदशायां वा साध्यदशायां चाऽविच्छेदेनानुवर्त्तमानता व्यज्यते। एतेन—प्रयोजनान्तरपराणामार्त्तादीनां भगवद्भजनतो विशेषोऽत्र सूचितः। ते हि स्वाभिलषितैश्वर्यावाप्तिपर्यन्तमेव भजन्ति भगवन्तम्।

मुखेन श्रुतिशिरस्सु सङ्क्रमयति—यद्यपीत्यादिना। योगिनां हृदयकमले भगवान् स्वासाधारणेन दिव्येनाकारेण निवसतीति ज्ञापयन्नाह—समस्तेत्यादि। चिन्तनकर्मतया निर्दिष्टे तच्छब्दार्थे पूर्वोक्तविशेषणद्वयस्य विशेषणविधया विशेषणत्वमभिप्रेत्याह—लक्ष्मीचरणेत्यादि। श्रीशब्दस्य राधाशब्दस्य

शीशयाऽसकृत् । स्वात्मदोषापवर्गेण तद्याच्ञा जनमोहिनी" । "परिचरसि कथं तत्पादपद्मं नु पद्मा अपि बत ! हृतचेता ह्युत्तमश्लोकजल्पै" रित्यादि ।

तं श्रीकृष्णम्–अभियुक्तनामोच्चारणे श्रीशब्दः प्राक् प्रयोज्य इति शिष्टाः । यद्वा—"श्रीर्वेषरचनाशोभाभारतीसरलद्रुपु । लक्ष्म्यां त्रिवर्गसम्पत्तौ वेषोपकरणे मता"विति विश्वप्रकाशान्निरतिशयशोभाविशिष्टं कृष्णम् । 'कर्षति–सदानन्दरूप-

---

सकलजगदुदयविभवलयलीलं सर्वशेषिणं वासुदेवं ध्येयमाचष्टे—श्रीकृष्णमिति । स खलु निखिलजगदुद्भवादिहेतुः सर्वशेषी च "कृष्ण एव हि भूतानामुत्पत्तिरपि चाव्ययः । कृष्णस्य हि कृते सर्वमिदं विश्वं चराचरमि"ति वचनात् । अप्ययो लयः, स्थितिरुपलक्ष्यते, "कृष्णस्य हि कृत" इति च शेषित्वोक्तिः, तदेकप्रयोजनत्वाभिधानात्, "शेषः परार्थत्वादि"ति हि सूत्रम् । इदमवसरे निपुणमुपपादयिष्यामः ।

श्रिया युक्तः कृष्णः श्रीकृष्णः । श्रीश्च सर्वसमाश्रयणीयत्वोपकारकसौशील्यश्रीरत्र विवक्षिता । महतो मन्दैः सह नैरन्ध्र्येण संश्लेषः सौशील्यम् । इदं ह्याश्रयण उपकारकम् । न हि महत्त्वामात्रेण कश्चिद्दीनानामाश्रयणीयो भवति, दौर्लभ्यात्, नापि सौलभ्यमात्रेण काष्ठ-लोष्ठादेरिवानुपयोगात् । तस्मात्सौशील्यमेव च सर्वतो गरीयसी श्रीः । इयमेव प्रकरणोचिता । श्रीश्च यस्यास्ति वक्षसि, वृन्दावनविहारमित्याभ्यां प्रस्तुतं हीदमेव सौशील्यम् । श्रीश्चेत्यादि परत्वनिरूपकम्, वृन्दावनविहारमिति सौलभ्यनिरूपकम् । विहारशब्दस्वारस्याच्च भगवतः स्वस्य सौलभ्ये समधिकतरा रुचिश्च सूचिता । एवं विहारशब्दस्वारस्यान्मन्दैः सह संश्लेषेऽप्यका-पट्यं व्यज्यते । न हि कश्चिन्महान्कापट्येन कस्मैचित्प्रयोजनाय मन्दैः सह संश्लेषं कुर्वन्नानन्दी भवेत् । अपि तु सखेद एव स्यात् । इह तु वृन्दावने सन्निहितो भगवानानन्देन विहरति । वृन्दावनं च गोगोपतरुलतादिसङ्कुलमेव खलु, तत्र विहरणमिति च महतो मन्दैः सह नैरन्ध्र्येण संश्लेष एव । तदियं सौशील्यश्रीः श्रीशब्देन विवक्ष्यते ।

---

च स्वारस्यमाकलयन् हृदीत्यस्य व्यङ्ग्यान्तरव्यञ्जकतया प्रयोजनान्तरमाह—हृदीत्यादिना । चिन्तनस्य हृदुपकरणत्वे सिद्धे पुनर्हृदीति निर्देशादिदं व्यज्यते । हृदुपकरणकमेव यत्किञ्चिदस्य प्रीणनं घटेत, न बाह्यकरणसाध्यं किमपीति । तत्र च निमित्तं श्रियो राधायाश्च योग इत्याशयः । वर्तमाननिर्देशस्वारस्य-माह—चिन्तय इतीति । कृष्णशब्दनिर्देशस्वारस्यावगतं विशेषणयोगमाह—सकलेति । तत्र प्रमाण-माह—कृष्ण एव हीति । अवसरे–आत्मस्वरूपनिरूपणावसरे । विशेषणत्रयस्वारस्यावगतं श्रीश-ब्दार्थमाह—श्रीश्चेत्यादिना । विशेषणत्रयस्वारस्यं निरूपयति—इयमेवेत्यादिना । सौशील्यस्वरूपघटकी-भूतं नैरन्ध्र्यं विहारशब्देन व्यज्यत इत्याह—विहारेति । अव्यवहितशब्दमात्रे स्वारस्यविशेषमाकलय्य श्रीशब्दस्यार्थान्तरमाह—वृन्दावन इत्यादिना । नित्ययोगः श्रिया सह, वामे च राधा, तथापि विहारस्तु वृन्दावने, तदवगम्यतां प्रियतमत्वं कुत्रेति । गोगोपगोपिकावलय इति सुगमम् । तद्वृन्दावनविहरणज-नितसात्त्विकशोभा श्रीशब्देन विवक्षितेति युक्तम् । अस्मिन्व्याख्याने लक्ष्मीराधापेक्षया भक्तजन-समधिका प्रीतिरुक्ता भवति । तमिमं प्रीतिविशेषं–आह च भगवानित्यादिना प्रपञ्चयति । यद्यप्यह-मित्यादिमन्थो गीतावचनविवरणरूपः । एतेन परेषामन्यथाव्याख्यानमपास्तम् । स्निग्धैः सह विह-

त्वात्स्वाश्रितानां सकलदुःखान्युन्मूलयतीति कृष्णः । कृषेर्बाहुलकाद्वर्णे विनापि नक् । नराकृति परं ब्रह्मेत्यर्थः । तथा च स्मर्यते—मोक्षधर्मेषु गुरुशिष्यसंवादे—"तदिदं ब्रह्म वार्ष्णेय"मित्यादि । वार्ष्णेयम्—वृष्णिषु कृतावतारमिति चातुर्धरनीलकण्ठो व्याचख्यौ । श्रीमद्भागवते च—"रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्म ज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः" । "यूयं नृलोके

वृन्दावने गोपादिस्निग्धजनसंश्लेपसमुन्मिषितमहोत्साहकृता तादात्विकदेहशोभा वा श्रीशब्देन विवक्षिता । न हि भगवतो गोगोपगोपिकाभ्यः स्निग्धतमोऽन्यो जनः । ता हि क्षणमपि तद्विश्लेषमसहमानास्तत्संश्लेषैकलब्धजीवितास्तं सर्वात्मनाऽभजन्त । तत्संश्लेषे तस्य महोत्साह इति किमु वक्तव्यमस्माभिः । आह च भगवान् "वासुदेवः सर्वमिति स महात्मा सुदुर्लभः" । यद्यप्यहमप्राकृतदिव्यनिलयनोऽनवरतमनन्तनित्यमुक्तैरभिष्टूयमानचरणनलिनयुगलो दिव्यपरिजनपरिच्छदपरिवृतः सन्ततमिन्दिरासंश्लिष्टवक्षःस्थलः, किंबहुना सर्वतः पूर्णस्तथाऽपि लीलाविभूतावीदृशो मृग्यः, यः सर्वं धारकपोषकभोग्यजातं मामेव सेवेत, ईदृशमहमभ्यर्थये "ज्ञानी त्वात्मैव मे मत"मिति । तदेवं स्निग्धतमसंश्लेषैकाभिकाङ्क्षिणस्तस्य गोगोपगोपिकासंश्लेषे महानेवोत्साहस्तदानीन्तनदिव्यदेहकान्त्याप्यतिविलक्षणयैव भाव्यम् । वृन्दावनविहाररसिकस्य नन्दसूनोर्नटवरवपुषः किसलयकुसुमकेसरादिपरिकलिता गोपवेषानुगुणविचित्रनेपथ्यरचनाश्रीर्वा श्रीशब्देन विवक्षिता ।

कृष्णम्—नितान्तनिर्वृतम्, "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । कृष्णस्तद्भावयोगाच्चे"त्यार्षं निरुक्तम् । एवमेव भट्टपराशरैः सहस्रनामभाष्ये 'शाश्वतः कृष्ण'इत्यत्र कृष्णशब्दविवरणे भाषितम् । "एकान्तलीलारसतो निर्वृतः कृष्ण उच्यते" इति च सहस्रनामनिरुक्तिकाराः । वृन्दावनविहारस्य तु नितरां निर्वृतिः । अत एवाक्षरे धाम्नीव नन्दभवनेऽपि कृष्ण एवायम् । किञ्च कृष्णः—मेघमेचकचारुवर्णः, "कृष्णो वर्णश्च मे यस्मात्तस्मात्कृष्णो भवाम्यह"मिति वचनात् । कृषेर्वर्णे इति नक्, अगुणः अनिट् । सहस्रनामभाष्ये भट्टपराशरैः "अजितः कृष्ण"इत्यत्र कृष्णशब्द एवमेव व्याख्यातः । "अप्राकृतातिरुचिरमेचकः कृष्ण ईरित" इति निरुक्तिकाराः ।

अभिलषिताखिलार्थवितरणसमुचितसमयविशेषमव्याजतः प्रसादावहमनुसरन्विशिन-

रणमूलकश्रीविशेषपरतामाह—वृन्दावनेति । वने विहरतां हि किसलयकुसुमादिकमेव ह्याभरणतां प्राप्नोति । कृष्णशब्दार्थमाह—नितान्तेति । तत्र निरुक्तं प्रमाणयति—कृषिरिति । अस्मिन्नर्थे आप्तानां संवादमाह—एवमेवेति । यतोऽयं वृन्दावनविहारस्ततोऽयं कृष्ण इति हेतुगर्भविशेषणतामभिप्रयन्नाह—वृन्दावनविहारस्य त्विति । निरुक्तिसिद्धार्थोऽस्मिन्ननपाय इत्याह—अत एवेति । स्वरूपपरतया व्याख्यानं कृतम्, स्वरूपं ह्यानन्द एवास्य । निर्वृतिशब्दो ह्यानन्दपर्यायः । अथ दिव्यविग्रहयोगपरतया व्याचष्टे—किञ्चेति । तदर्थत्वे प्रमाणमाह—कृष्णो वर्णश्चेति । आचार्याणां संवादं प्रमाणयति—सहस्रेति । अव्यवहितस्य वृन्दावनविहार इत्यस्य विशेषणपदस्य प्रयोजनमाह—अभिलषितेति । कथ-

बत भूरिभागा लोकं पुनाना मुनयोऽभियन्ति। येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम्"। "श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः"। "अहो! भाग्यमहो! भाग्यं नन्दगोपव्रजौकसाम्। यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्" मित्यादि। "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण

टि॰—वृन्दावनेति। अनवधिकमहानन्दसागरस्य कृष्णस्य राधावदनचन्द्रोदयेनोत्तरङ्गितस्य कोऽप्यानन्दपरीवाहो हि वृन्दावनविहरणम्। अयं च परीवाहः प्रकिरेदपि तत्र तत्र परितो मौक्तिकफलानि। सर्वकर्मसमाराध्यो देवदेवोत्तमो यज्ञभोक्तेति जोघुष्यमाणोऽप्ययं कृष्णः स्निग्धजनसजग्धिकेलिं कामयमानः किल वृन्दावनविहरणमकरोत्। "बुभुजे यज्ञभुग्बालकेलिः" तमिममनुसेवमानानामस्माकं "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इत्युक्ता सजग्धिकेलिरवश्यं भवित्रीत्यपि व्यज्यते। लीलारसोत्तम्भनसमुचितप्रियतमाश्लेषमाह—वाम

मभिलषिताखिलार्थवितरणसमुचितताऽस्य समयविशेषस्य? कथं वाऽव्याजतः प्रसादावहता? तदुपपादयति—अनवधिकेति। इदानीं कृष्णशब्दे वृन्दावनविहारशब्दे च विशेषतः स्वारस्यं विभाव्यते। अनवधिकमहानन्दस्येति कृष्णशब्दस्वारस्योक्तिः। तदेतत्स्फुटयितुमेव कृष्णस्येत्यव्यवधानेन निर्देशः। सागरस्य जलाशयाद्विपुलत्वेऽप्यस्त्यवधिः, अस्य सागरस्य न तथात्वमिति ज्ञापनायानवधिकशब्दः। वृन्दावने विहरणं भगवतः प्रायो राधया सह। वृन्दावनविहरणोक्ती राधासंश्लेषं द्योतयतीत्यभिप्रायेणोच्यते—राधेति। उत्तरङ्गितस्य समुद्रस्य परीवाहो हि दृष्टस्तदुच्यते—उत्तरङ्गितस्य कोऽप्यानन्दपरीवाहो हि विहरणमिति। तथा चास्य समयविशेषस्यानुसन्धीयमानस्याभिलषितसकलार्थसिद्धावुपयोगिता स्फुटैव। प्रार्थनानिरपेक्षं परमपुरुषार्थमपि प्रयच्छेदयं, किं पुनरभिलषितमर्थं लौकिकमित्यभिप्रायेणाह—अयं चेति। मौक्तिकफलानि–मुक्तिगम्यानि फलानि, प्रकृते मुक्ताफलानि। अनेन रूपकेणायमर्थविशेषो व्यज्यते—समुद्र इवायं दुरवगाहः, नद्यनादिपापवासनादूषितशेमुषीकः पुरुषः परमात्मनः स्वरूपं यथावदवगन्तुं शक्नुयात्, जानन्नपि कथञ्चिच्छास्त्रतो नैनमुचितैरुपायैः प्रवेष्टुं शक्नुयात्, सुशिक्षितः कश्चिद्धीरः समुचितैरुपायैः समुद्र इवावगाह्यास्मिन्गृह्णीयान्नाम मौक्तिकफलानीतः क्रमशः, विरलस्तादृशो जनः, तन्मौक्तिकफलावाप्तिर्दुःसाध्या। यदा पुनरयमानन्दमयो लीलाविभूतावागत्य प्रियजनसंश्लेषतः समुत्तरङ्गितानन्दो भवति, तदा पुनरुच्चनीचविभागमन्तरा प्रवृत्ते तदानन्दपरीवाहे ये विषयीभूता भवन्ति, तैः सर्वैरनायासेन परमपुरुषार्थः समधिगम्यते, यथा समुद्र उत्तरङ्गिते सम्प्रवृत्तात्परीवाहादनायासेन मुक्ताफलमधिगम्यत इति। विहरणसामान्यावबोधकस्यापि विहारशब्दस्य सजग्धिकेलिरूपविहरणविशेषे विशेषतस्तात्पर्यमाकलय्य वृन्दावनविहारशब्दस्यार्थविशेषव्यञ्जकतामाह—सर्वकर्मेति। यत्पुनरतिमानुषं भगवतो विहरणं वत्सापहारादिसमयसम्भूतम्, तत्पुनर्ब्रह्मादीनां देवानां हृदयङ्गमम्। यत्पुनर्गोपालबालकैः सह सवयस्यभावनया सजग्धिकेलिप्रभृति विहरणम्, तदेव तु मानुषाणां हृदयङ्गमम्। एवंविधां भगवतः सजग्धिकेलिं भावयतां भगवता सह सजग्धिकेलिरविच्छिन्ना सम्पत्स्यत इत्याह—तमिममिति। सोऽश्नुत इति। कामान्–काम्यन्त इति कामाः–कल्याणगुणाः, तान्। ब्रह्मणा सह तदीयगुणाननुभवतीत्यर्थः। सहशब्दश्रुत्याऽनुभाव्यतायां गुणानां प्राधान्यं व्यज्यते। सजग्धिकेलिरवश्यं भवित्रीति। मुक्तावित्ति यावत्। वृन्दावने तु सजग्धौ कर्तृसाहित्यमात्रम्, इह तु

इत्यभिधीयत" इति नामनिरुक्तेश्च। "कृष्णस्तु भगवान् स्वय" मिति च। अत एव वृन्दावनविहारिणो नटवरमूर्तेरपि भगवतः प्रार्थने श्रीगोपीजनेन "श्रीकरग्रह" मिति दक्षिणकरसरोरुहं विशेषितम्। तथा भ्रमरगीते निर्दयत्वोपालम्भे तस्यैव सकलावतारधारित्वमुक्तम्। "मृगयुरिव कपीन्द्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम्। बलिमपि बलिमत्त्वाऽवेष्टयद्ध्वाङ्क्षवद्यस्तदलमसितसख्यैर्दुस्त्य-

---

इत्यादिना। वामे यस्य स्थिता राधा—यस्य नन्दसूनोर्यमुनातीरनिकुञ्जविहरणरसिकस्य वामतः सव्यभुजविटपसंश्लेषतः कोरकितेव कल्पलता कामपि कान्तिं पुष्णाति राधा वृषभानुनन्दिनी। यद्यप्यनया सह विहरणं श्रीभागवते न स्मर्यते, तथापि पुराणान्तरे सुव्यक्तम्।

नित्यानपायिनीं दिव्यमहिषीं कौस्तुभवनमालालङ्कृतं निजवक्षःस्थलं किमपि दिव्यरत्नख-चितसिंहासनमधिरोप्य देवीपदानुरूपं सम्मानयन्वीतशङ्को मुरलीवादनव्याजेन वामबाहुकृत-वामकपोलो वामपार्श्ववर्तिनीं समुचितस्थानसन्निहितां प्रियतमामाकूणितनयनाञ्चलेनानुभवन्ना-नन्दमनुभवत्यनन्यसामान्यमिति व्यञ्जयन्नाह—श्रीश्च यस्यास्ति वक्षसीति। भगवच्छा-स्त्रेष्वस्या नित्यानपायित्वं बहुधा प्रपञ्चितम्। श्रीभागवते च सुस्पष्टम्। तदिदं यामुनाचार्य-श्चतुःश्लोक्यां सङ्गृह्य निर्णीतम् "शान्तानन्तमहाविभूति परम"मित्यनेन श्लोकेन। परब्रह्मण आनन्दस्वरूपे दिव्यमङ्गलविग्रहे विभवेऽप्यनुरूपरूपेयं सन्निधत्ते, न कदाचिदपि भगवद्रूपं तया वियुक्तम्। वक्षःस्थले नित्यसन्निहिताया अस्या अप्राकृतदिव्यलोकप्रभृतिषु तेषु तेषु भगवत्स्था-नेषु तदनुरूपरूपेण तदेकपर्यङ्कसान्निध्यमपि प्रसिद्धं भगवच्छास्त्रे।

वसुदेवसूनोरस्य लक्ष्मीसमाश्लिष्टवक्षस्त्वविशेषणेनानेन तेनैवाप्राकृतदिव्यमङ्गलविग्रहेण स्वासाधारणेनावतरणं प्रकाशितम्। इदमेव परमप्रयोजनम्, यदखिलकल्याणावहमप्राकृतमतिम-नोहरमात्मनोऽपि स्पृहणीयं दिव्यमङ्गलविग्रहमक्रूरमालाकारप्रभृतिपरमभागवताननुभाव्य तेषा-मात्मोज्जीवनापादनम्। आह च भगवान् गीतायाम्—"परित्राणाय साधूनां विनाशाय च दुष्कृता"मिति। चकारोऽन्वाचयसमुच्चये। सर्वशक्तस्य मम दुष्कृतां विनाशने नातीव प्रयासः,

---

कर्मसाहित्यमपीति विशेषश्च। प्रयोजनज्ञापनपूर्वकं "वामे यस्य स्थिता राधे"त्येतदवतारयति—लीलेति। समुचितान्तं-प्रयोजनपरम्। लीलारसः-वृन्दावनविहारशब्दोक्तो लीलारसः। राधया सह भगवतो देशविशेषे सान्निध्यं रसविशेषाधायकं स्मारयन्नच्छब्दार्थमाह—नन्दसूनोर्यमुनातीर-निकुञ्जविहरणरसिकस्येति। वामपार्श्वसन्निहितया राधया भगवतस्तादात्विकशोभाविशेषं वर्णयति—सव्येति। वाम इत्यस्य विशेषं व्यञ्जयन्विशेषणान्तरमवतारयति—नित्येत्यादिना। इदमत्र विज्ञायते—नित्यमुक्तेभ्यो भगवतः प्रीत्यतिशयो भक्तजनेष्विति। भगवच्छास्त्रेषु-पञ्चरात्रसंहितास्वित्यर्थः। विभवेऽपि-अवतरणदशायामपीत्यर्थः। द्वेधा सान्निध्यमस्याः प्रमाणप्रतिपन्नमित्याह—वक्षःस्थलेत्या-दिना। अनेन विशेषणेन लब्धं विशेषान्तरमाह—वसुदेवेत्यादिना। अप्राकृतदिव्यमङ्गलविग्रहेण स्वासाधारणेनावतरणस्य प्रयोजनमाह—इदमेवेति। इदमेव परमप्रयोजनमित्यत्र प्रमाणं प्रदर्शयति—आह चेति। प्रकृतस्यार्थविशेषस्य स्फुटमप्रतिपत्तेर्वचनं व्याचष्टे—चकारइत्यादिना। स्वेन रूपेणावतर-

जस्तत्कथार्थः"। गीतगोविन्दे जयदेवश्चाह—"वेदानुद्धरते जगन्ति वहते भूगोल-मुद्बिभ्रते दैत्यं दारयते बलिं छलयते क्षत्रक्षयं कुर्वते। पौलस्त्यं जयते हलं कलयते कारुण्यमातन्वते म्लेच्छान्मूर्च्छयते दशाकृतिधृते कृष्णाय तुभ्यं नम" इति दिक्।

हृदि–हृदयारविन्दे। "अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तरआकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य"मिति। "स वा एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति तस्माद्धृदयमि"ति श्रुतौ "हृदाकाशे तु

---

स्वे स्थाने स्थित्वैव सङ्कल्पमात्रेण तान्विनाशयेयम्। परं परमभागवता मामेव परमप्राणमुपाश्रिता मत्स्मरणमात्रेणापि प्रशिथिलसर्वगात्रा ये साधवस्तेषां सन्निधावनेनैव निजरूपेण सन्निधाय यद्यहं तान्नानन्दयेयं तर्ह्यहमपि हृदि निखातशङ्कुरिव भवेयम्। "ऋणं प्रवृद्धमिव मे हृदयान्नापसर्पति। गोविन्देति यदाक्रन्दत्कृष्णा मां दूरवासिनम्" इदमेव निदर्शनम्। तन्मामेव सर्वात्मना धारकपोषकभोग्यं मन्यमानानां साधूनां तदभिलषितसंश्लेषविशेषप्रदानेन परित्राणायैवाहमवतरामि, दुष्टनिबर्हणं त्वानुषङ्गिकमिति भावः। आह च तेनैवाप्राकृतेन रूपेणावतरणं सुस्पष्टम्। "अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" इति। यदाऽहमाश्रितजनानुजिघृक्षयाऽवतरामि तदा मम सङ्कल्पादृते नोपकरणान्तरापेक्षा, किन्तु आत्ममायया–स्वसङ्कल्पमात्रेण। अवतरतोऽपि मम न कोऽपि पारमेश्वरः प्रकारः प्रच्यवति, अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपिसन्सम्भवामि। येन येन प्रकारेण पारमेश्वरस्वरूपेणास्मि तेन तेनानुज्झित एवावतरामि। "न मम प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा" किन्तु प्रकृतिं स्वामधिष्ठाय–असाधारणीं दिव्यां तनुमधिष्ठायैव सम्भवामीति भावः। प्रकृतिरत्र स्वभावः। विग्रहस्यापि निरुपाधिकस्वासाधारणविशेषणत्वात्स्वभाववाचिप्रकृतिशब्देन निर्देश उचितः। गोबलीवर्दनयाच्चात्र विग्रहाख्यस्वभावविशेषपरता। भगवद्रामानुजाचार्यैरस्य श्लोकस्येत्थं सम्पिण्डितार्थो निरूपितः। "अपहतपाप्मत्वादिसमस्तकल्याणगुणात्मकत्वं सर्वमैश्वं स्वभावमजहत्स्वमेव रूपं देवमनुष्यादिसजातीयसंस्थानं कुर्वन्नात्मसङ्कल्पेन देवादिरूपः सम्भवामी"ति। एतेन—नन्दसूनोर्वृन्दावनविहरणसमये क्व लक्ष्मीसमाश्लिष्टवक्षस्त्वमित्यज्ञानामाशङ्का परास्ता। अनेन श्लोकेनानवधिकानन्दमयमखिलकल्याणगुणाकरमप्राकृतदिव्यमङ्गलविग्रहं परं ब्रह्मानुदिनमनुचिन्तनीयमित्ययमर्थोऽवबोधितः।

---

णस्य प्रयोजनं साधूनां संरक्षणमित्येतावता न तत्र मम प्रयोजनमिति मन्तव्यम्, साधूनां संरक्षणमपि ममैवार्थ इति भगवदाशय इत्याह—यद्दीत्यादिना। भगवतः स्वेनैव रूपेणावतरणं भगवानेवाहेत्याह—आह चेति। वचनार्थं व्याचष्टे—यदेत्यादिना। तत्रात्ममाययेत्यस्य भावो वर्ण्यते—ममेत्यादिना सङ्कल्पमात्रेणेत्यन्तेन। अवतरतोऽपीत्यादिना अवतरामीत्यन्तेनाजोऽपीत्यादेर्भावः। न ममेत्यादिना प्रकृतिं स्वामधिष्ठायेत्यस्य भावः। प्रकृतिशब्दस्य विग्रहार्थकता कथमिति शङ्कायामुच्यते—प्रकृतिरत्रेत्यादिना। गोबलीवर्दनयाचेति। अजोऽपीत्यादिस्वभावविशेषनिर्देशकशब्दसाहचर्यादिति भावः। अस्मिन्नर्थे भाष्यकारसम्मतिमाह—भगवदिति। परेषां परमब्रह्मणो निराकारत्ववादमाशङ्क्य परिहर-

यत्पद्म"मित्यादिना योगशास्त्रे च ध्येयास्पदत्वेन तस्यैव विशिष्योक्तेः । श्रीमद्भागवते च—"योगरन्धितकर्माणो हृदि योगविभाविते । योगिनो यं प्रपश्यन्ति योगेशं तं नतोऽस्म्यहम्" । "मुक्तात्मभिः स्वहृदये परिभाविताये" त्याद्युक्तम् ।

चिन्तये—ध्यायामि । मनसेति शेषः । चितेश्चौरादिकात्कर्त्तरि लट् । णिचश्चेत्यात्मनेपदम् । चिन्तये हृदेति पाठे तु हृदा—मनसा करणेनेत्यर्थः । "स्वान्तं हृन्मानसं मन" इत्यमरः । तदा तु हृदीत्यधिकरणशेषोऽवगन्तव्यः । यस्य वामे सिद्धिमयी राधा, यस्य च वक्षसि लक्ष्मीस्तमनुस्मरतः का श्रीः का वा सिद्धिर्दुर्लभा स्यात् । तदयमेवोपसेव्यः पुरुषार्थाय सर्वस्मा इति हि व्यज्यते ।

---

ननु—"स पर्यगाच्छुक्रमकायमव्रणमस्नाविरम्" "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" इत्यादिश्रुतिभिः परस्य ब्रह्मणो विग्रहनिषेधात्कथं तद्योगो वर्ण्यत इति चेन्न । "आदित्यवर्णं तमसः परस्तात्" "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" "तस्मिन्नयं पुरुषो मनोमयः" "सर्वेऽनिमेषा जज्ञिरे विद्युतः पुरुषादधि" "भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः" इत्यादिश्रुतिषु तत्प्रसिद्धेः । प्रपञ्चितश्चायमर्थो वेदार्थसङ्ग्रहे भगवद्रामानुजाचार्यैः ।

अन्ये पुनरेवं व्याचक्षते—वामे यस्येत्यादि । यः साक्षादक्षरपरमव्योमनिलयो राधया श्रिया च सह समिन्धे देशविशेषे, राधैव श्रीरूपेण वक्षसि सन्निधत्त इत्यपि सम्प्रदायः । तं समलङ्कृतनन्दभवनं वृन्दावनविहाररसिकं हृदि चिन्तये । श्रुतिस्मृतिप्रसिद्धेर्यस्येतिनिर्देश इति । वृन्दावनशब्दोऽत्र दिव्यवृन्दावनपरः । वृन्दावनं च गोलोकस्थं श्रीकृष्णस्य विहरणस्थानम्, इदं च ब्रह्मवैवर्त्ते प्रसिद्धमिति वृन्दावनविहरणरूपविशेषणमपि देशविशेषावच्छेदेन योजयन्त्यपरे । राधाकृष्णोऽक्षरस्थो यः स वैकुण्ठे श्रियः पतिः । वृन्दावनविहारः स नन्दसूनुः स

---

ति—नन्वित्यादिना । अकायं, अत एवाव्रणमत एवास्नाविरं—स्नायुरहितं, अत एव शुद्धमित्यर्थः । अशरीरं—स्वतः शरीरशून्यं, तथापि शरीरेष्वनवस्थेष्वात्मतया सन्निहितमिति परामिमतोऽर्थः । सिद्धान्ते प्राकृतशरीरनिषेधपरतयोपपत्तिः । आदित्यवर्णं—प्रकाशवद्बहुलरूपमित्यर्थः । तमसः परस्तात्—प्रकृतेः परस्तात् । हिरण्मयः पुरुषः—कमनीयाकृतिः पुरुष इत्यर्थः । "तस्मिन्नयं पुरुषो मनोमय" इत्यत्र पुरुषशब्दस्वारस्यादेव तत्सिद्धिः । नन्दसूनोर्वृन्दावनविहरणस्येव श्रीराधायोगस्यापि विशेषणविधया विशेषणत्वमभिप्रेत्य श्लोको व्याख्यातः । तस्योपलक्षणतया विशेषणतामभिप्रेत्य व्याचक्षाणानां व्याख्यामनुवदति—अन्य इति । राधैव श्रीरूपेणेति । अस्मिन्पक्षे तु मूले चकारास्वारस्यम् । वामे यस्य स्थिता राधा सैव यस्यास्ति वक्षसीति हि तदानीं भाव्यम्, सा श्रीर्यस्यास्ति वक्षसीति वा । स्वायत्ते शब्दप्रयोगे श्रीश्च यस्यास्ति वक्षसीत्येतच्छ्रियो राधायाश्च भेदमेव द्रढयति । इदं व्याख्यानद्वयमपि विभवपरम् । अपरे तु त्रयाणां विशेषणानां विशेषणविधयैव विशेषणत्वमङ्गीकृत्य परत्वे योजयन्ति, तेषां पक्षमाह—वृन्दावनशब्दोऽत्रेति । वृन्दावनविहरणरूपविशेषणमपीत्यपिशब्दाच्छ्रीराधायो-

इदं च मङ्गलाचरणं न विघ्नप्रशमनाय, न ह्यस्य सङ्कल्पे कश्चिदन्तरायः स्यात्, यन्निरसनाय मङ्गलमनुष्ठेयं स्यात्, स्वयं हि भगवानयम् । "वाणी मङ्गलरूपिणी च हसितं यस्याखिलं मङ्गलं नेत्रे मङ्गलदे च दोर्विलसितं नृणां परं मङ्गलम् । वक्त्रं मङ्गलकृच्च पादचलितं यस्याखिलं मङ्गलं सोऽयं मानुपलीलया समकरोदादाविदं मङ्गलम्" । तस्मादिदं मङ्गलाचरणं लोकावबोधनायैव । एतेन मङ्गलाचरणमयुक्तमित्याशङ्का परास्ता ।

चिन्त्यते ॥ इति केषांचिदाशयः । योऽक्षरव्योमनिलयो राधाकृष्णः दिव्यवृन्दावनविहारं तं श्रीकृष्णं; यश्च लक्ष्मीसमाश्लिष्टवक्षा वैकुण्ठनिकेतस्तं नन्दसूनुं यमुनातटविहरणरसिकं श्रीकृष्णं च चिन्तय इत्यपि भावं कथयन्ति, चकारस्य भिन्नक्रमेणान्वयः ।

अनेन श्लोकेन मुमुक्षूपास्यता श्रीकृष्णे द्योत्यते । ननु—"कारणं तु ध्येयः" इति जगज्जन्मादिकारणस्यैवोपास्यत्वं श्रूयते । सत्यम्—"यतो वा इमानि भूतानि जायन्त" इति जगज्जन्मादिकारणत्वेन लक्षितं परं ब्रह्म "ब्रह्म वा इदमेक एवाग्र आसीत्" "सदेव सोम्येदमग्र आसीत्" इत्यादिकारणवादिवाक्येन सामान्यतो निर्दिष्टं शाखान्तरतः सामान्यविशेषन्यायेन "एको ह वै नारायण आसीत्" इति नारायणे देवताविशेषे समर्प्यत इति, स एव श्रीकृष्णः परं ब्रह्मेति सुस्पष्टम् । गोपालतापन्युपनिषदि च—"कतमः परमो देवः कुतो मृत्युर्बिभेति कस्य विज्ञानेनाखिलं विज्ञातं भवति केनेदं विश्वं संसरतीति तदुहोवाच ब्राह्मणः कृष्णो वै परमं दैवतं गोविन्दान्मृत्युर्बिभेति गोपीजनवल्लभज्ञानेनैतद्विज्ञातं भवति सकलं परं ब्रह्मैव तत्" इत्यादिभिस्तथाऽवगम्यते । तथा स्मृतयश्च परं ब्रह्म कृष्णमामनन्ति—तथाच भारते—"ततः कृष्णो महाभागः पुनरेव युधिष्ठिरः । ब्राह्मणानां शतं श्रेष्ठं मुखादेवासृजत्प्रभुः ॥ बाहुभ्यां क्षत्रियशतं वैश्यानामूरुतः शतम् । पद्भ्यां शूद्रशतं चैव केशवो भरतर्षभ ! । स एवं चतुरो वर्णान्समुत्पाद्य महायशाः ॥" इति । तत्रैव पितामहकृतवाराहस्तोत्रे—"निहत्य दानवपतीन्महावर्ष्मा महाबलः । एष देवो महायोगी भूतात्मा भूतभावनः ॥ सर्वभूतेश्वरो योगी मुनिरात्मा तथात्मनः । स्थिरी-

गस्यापि तथात्वमुक्तं भवति । विशेषणत्रयमपि भिन्नभिन्नदेशावच्छेदेन योजयन्तः प्रथमविशेषणपदस्योपलक्षणतामभिप्रयन्तो व्याचक्षते, तेषां पक्षमाह—राधेति । परविभवोभयानुध्यानपरतामपरे मन्यन्ते, तेषां पक्षमाह—य इति । शङ्कते—नन्विति । कृष्णे कारणत्वं प्रमाणतो न प्रतिपन्नमिति शङ्कितुराशयः । समाधत्ते—सत्यमिति । नन्वस्तु नारायणस्य तथात्वं, तावता कृष्णे तत्सिद्धिः कथमित्यत

१ अयमत्र ध्वन्यर्थः । सिद्ध्यर्थकराधधातुतो निष्पन्नेन राधाशब्देन सिद्ध्यविनाभूता सङ्कल्पशक्तिर्ध्वन्यते, या परमात्मनः सत्यसङ्कल्पताख्या । श्रीवक्षसीत्यनेन ज्ञानशक्तिर्ध्वन्यते, या सर्वज्ञत्वलक्षणा । श्रीशब्दो हि ज्ञानेऽपि प्रवर्तते । वृन्दावनविहारमित्यनेन मायाशक्तिर्ध्वन्यते, या जगदुदयादिलीलोपकरणभूता । त्रिगुणा हि माया वनमिव नाम गहना । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इत्यनेन निरुक्तिवचनेन कृष्णशब्देनाऽऽनन्दघनो ध्वन्यते, सोऽयमनवधिकानन्द आनन्दयत्यादिषु श्रुतः, स च—"आनन्दाद्ध्येव खल्विमानि भूतानि जायन्त" इति जगत्कारणभूतः । तथा च—कारणतौपयिकसर्वज्ञत्वसत्यसङ्कल्पत्वविशिष्टं सृष्ट्यादिलीलोपकरणभूतप्रकृत्युपलक्षितं स्वयमानन्दस्वरूपं सर्वकारणकारणं परमात्मनः स्वरूपं हरिं चिन्तय इति ॥

ग्रन्थेऽस्मिन्प्रायश आनुष्टुभं वृत्तम् । "पञ्चमं लघु सर्वेषु सप्तमं हि चतुर्थयोः । गुरु षष्ठं च सर्वेषामेतच्छ्लोकस्य लक्षण"मिति छन्दःप्रकाशे तल्लक्षणोक्तेः । कचित्कचिद्वृत्तरत्नाकरोक्ताः पथ्यावक्त्रादयो भेदाश्च सूक्ष्मदृशाऽवगन्तव्याः ॥ १ ॥

भवतु कृष्णोऽयं सर्वविघ्नविनाशनः ॥ अच्युतः पुण्डरीकाक्षः सर्वभूतादिरीश्वरः ॥" इति च । "योनिस्त्वमस्य प्रलयश्च कृष्ण ! त्वमेव देवं सृजसि विश्वमग्रे । विश्वं चेदं त्वद्वशे विश्वयोने ! नमोऽस्तु ते शार्ङ्गचक्रासिपाणे ! ॥" इति च । "एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥ कृष्णव्रताः कृष्णमनुस्मरन्तो रात्रौ च कृष्णं पुनरुत्थिता ये । ते कृष्णदेहाः प्रविशन्ति कृष्णमाज्यं यथा मन्त्रहुतं हुताशे ॥" इति च । "नमस्ते भगवन्कृष्ण ! लोकानां प्रभवाप्यय ! । त्वं हि कर्त्ता हृषीकेश ! संहर्त्ता चापराजितः ॥" भागवते च—"एष वै भगवान्साक्षादाद्यो नारायणः पुमान्" । ब्रह्मकृतस्तोत्रे—"क्वाहं तमो महदहंखचराग्निवार्भूसंवेष्टिताण्डघटसप्तवितस्तिकायः । क्वेदृग्विधाविगणिताण्डपराणुचर्यावाताध्वरोमविवरस्य च ते महित्वम् ॥" इति च "येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिङ्गम् ।" इति "स वा अयं ब्रह्म महद्विमृग्यम्" "श्रुत्वा कृष्णं परं ब्रह्म ॥" इति च । श्रुतिभिः स्मृतिभिश्चैवं गीयमानः परः पुमान् । इष्टाय कृष्णः संसेव्य इत्येतदिह शिक्षितम् ॥ १ ॥

आह—स एवेति । तत्र प्रमाणमाह—गोपालेत्यादिना । सकलजगत्कारणं परं ब्रह्म प्रायः श्रुतिशिरस्सु नारायणशब्देन, पुराणेषु तु कृष्णशब्देनापि । तत् शब्दभेदमात्रं नार्थभेदापादकमिति भावः ॥ १ ॥

---

**लिखामि सहजानन्दस्वामी सर्वान्निजाश्रितान् ।**
**नानादेश स्थितान् शिक्षापत्रीं वृत्तालयस्थितः ॥ २ ॥**

लिखामीति । वृत्तालये–एतन्नाम्नि गुर्जरदेशीयपुरविशेषे । स्थितः सहजानन्दस्वामिनामाऽहं नानादेशस्थितान्सर्वान्निजाश्रितान्प्रति शिक्षापत्रीं लिखा-

अथ लेखस्यास्यावहितेन मनसाऽवगन्तव्यत्वे निमित्तं व्यञ्जयन्प्रतिजानीते—लिखामीति । अत्र प्रस्तूयमानोऽर्थो न बालोपच्छदनवत्प्ररोचनाय, नापि चरितं कस्यचिदनूद्यते विनोदाय, अपि तु शिक्षणीय एवार्थ इत्यभिप्रायेणाह—शिक्षापत्रीं लिखामीति ।

अवहितेन मनसाऽवगन्तव्यत्वे निमित्तं व्यञ्जयन्निति । आदाविदमवश्यमावेदनीयम्, नहि कर्त्तव्यप्रतिज्ञामात्रेणाविचार्यैवादरणहेतुं न कोऽप्यवहितचेता भूत्वा प्रवर्तेत श्रोतुम्, तच्चिकीर्पितप्रतिज्ञापेक्षया प्राधान्यादवगन्तव्यत्वे निमित्तं व्यञ्जयन्निति प्रथमत उक्तम् । किञ्चिदर्थेत्याद्यनुक्त्वा शिक्षापत्रीमिति विशिष्योक्तिरस्याभिव्यञ्जिका । शिक्षाशब्दस्वारस्यं चावहितेन मनसाऽवगन्तव्यत्वे ।

मीत्यन्वयः। वृत्तालयालय इत्यनुक्त्वा स्थित इत्युक्तेः स्वस्यैकस्थाननियतवा: साभावं सूचयति। कर्तृवैशिष्ट्यज्ञानाभावे प्रेक्षावत्प्रवृत्त्यनुपपत्तेर्जगत्प्रसिद्धं स्वनामाह—सहजानन्दस्वामीति। सहजः–स्वभावसिद्धो नत्वन्यवत्साधनजन्य आनन्दो यस्येति सहजानन्दः। यद्वा—सहन्ते–ज्ञानबलेन द्वन्द्वानीति सहाः–साधवः। "क्षमासारा हि साधवः" इति भारतोक्तेः। जायन्त इति जाः–जनाः।

शिक्ष्यते–उपदिश्यते मुमुक्षूणामसाधारणं विधिनिषेधरूपं धर्मतत्त्वमनयेति शिक्षा, तथाविधा पत्री। पतत्यनयेति पत्री। दाम्नीति करणे ष्ट्रन्। लिपिः। कालतो देशतो वा विप्रकृष्टानामपि हृदयतले पतति खलु लिपितः कश्चिदादेशः। लिपिरक्षरविन्यासो रेखाविशेषलक्षणः। मुमुक्षूणामुपादेयं धर्मतत्त्वं लिखामीत्येतत्। निरुपाधिकशिक्षापदात् शिक्षकवैलक्षण्याच्च शिक्षाऽत्र संसारदावानलदह्यमानजनैरवश्यमधिगन्तव्यस्य तथाविधानलप्रशमनोपायभूतस्य धर्मस्यैव हि सङ्घटिता। शिक्षायाः पत्री शिक्षार्था वा पत्रीत्यपरे। लिपौ शिक्षात्वविशेषणान्नात्र लेख एकमप्यक्षरं निरर्थकमुपच्छन्दनं वा, लेखोऽयं कार्त्स्न्येन शिक्षारूपो लेशतोऽपि नोपेक्षणीय इति व्यज्यते। अलसानामपि प्रवृत्तये लिपौ लेखनकर्मत्वोक्तिः। अलसाः खल्वतिविस्तृतमतिगभीरं ग्रन्थमुत्प्रेक्ष्य सहसा त्यजन्ति सारतरमपि। तेऽपीदं प्रतिज्ञावचनमालोक्य हन्त ! ! कतिपयलिपयः सन्ति ताश्च शिक्षारूपास्तदवलोकयाम इति सोत्साहं प्रवर्त्तेरन्। प्रवृत्ताश्च सरसमिमं सन्दर्भमनुभूय सञ्जातस्वादा न प्रत्यावर्त्तेरन्परस्तात्। 'पत्रं पत्री च पत्रिके'त्यनुशासनादत्र पत्रशब्दः सन्देशार्थमुपकल्पितपत्रविशेषपरो वा। लेखनाधारस्यापि तस्य विवक्षावैलक्षण्यात्कर्मत्वनिर्वाहो बोध्यः। अपरिग्रहस्य मुनिवृत्तेरयं सन्देशो न लोकसेवार्थकामावधिकृत्य, अपि

तदेव स्वारस्यमाह—अत्रेत्यादिना। लिपिपरतया पत्रीशब्दं व्याचष्टे—पतत्यनयेत्यादिना। एतेन पत्रीति स्त्रीलिङ्गता कथमिति शङ्का निरस्ता। फलिताशयमाह—मुमुक्षूणामिति। सामान्यतः श्रूयमाणस्य शिक्षाशब्दस्य विशेषपरत्वे हेतुमाह—निरुपाधिकेत्यादिना। यद्यपि साधारणं धर्मतत्त्वमप्यत्र प्रतिपाद्यते, तथापि तत्प्रासङ्गिकम्। साक्षात्प्रतिपिपादयिषितं तु मुमुक्षूणामुपादेयं धर्मतत्त्वमेव, अत एव व्याख्यातं—शिक्ष्यते–उपदिश्यते मुमुक्षूणामसाधारणं विधिनिषेधरूपं धर्मतत्त्वमनयेतीति। भावार्थे घञ्प्रत्ययमाकलय्य समासान्तरमाह—शिक्षायाः पत्रीति। पत्रीशब्दस्य लिप्यर्थकताश्रयणेन लिपौ शिक्षात्वस्य लेखनकर्मत्वस्य चावगमाद्व्यज्यमानमाशयमाह—लिपावित्यादिना परस्तादित्यन्तेन। प्रसिद्ध्यनुरोधेन पत्रशब्दस्यार्थान्तरमाह—पत्रं पत्री चेत्यादिना। लेखनाधारस्य कथं कर्मत्वमित्याशङ्क्य समाधत्ते—लेखनेति। विवक्षावैलक्षण्यादिति। अयं भावः—अक्षरविन्यासो लिखत्यर्थः, अक्षरव्यञ्जको विन्यासविशेषोऽक्षरविन्यास उच्यते। तत्र पत्रे धात्वर्थविन्यासाश्रयत्वविवक्षायामधिकरणसप्तमी स्यात्, यथा नामान्यस्मिन्पत्रे लिखतीति। तत्र धात्वर्थतावच्छेदकाक्षराश्रयत्वस्य नाम्नि विवक्षया नाम्नः कर्मता। धात्वर्थतावच्छेदकफलशालित्वं हि कर्मत्वम्। अक्षराणां वाक्ये घटकतयाऽक्षराणां वाक्यनिष्ठत्वाध्यवसायेन नाम्नि तद्विवक्षोपपत्तिः। यदा तु पत्र एवाक्षराश्रयत्वविवक्षा तदा तु तस्य कर्मत्वम्। अक्षरव्यञ्जकरेखाविशेषेऽक्षरतादात्म्याध्यवसायेन पत्रस्य धात्व-

सहाश्च ते जाश्च सहजाः—साधुजनास्तानानन्दयतीति तथोक्तः। स्वामीत्यैश्वर्यातिशयदर्शनेन स्वाश्रितलोकोक्त्यनुवादमात्रम्। कर्तृविशेषोक्त्यैवैतन्नामकग्रन्थान्तरभ्रमोऽपि निरस्तः। निजाश्रितानिति। प्रत्यर्थसद्यःस्वीकारे तेषां मुख्याधिकारज्ञापनार्थम्, नत्वन्येषामनधिकारार्थमुक्तिः। सर्वजनीनत्वाच्छिक्षापत्र्या इति भावः। विशेक्ष्यति हि पत्रीलेखं स्वयमेव "सर्वजीवहितावह" इति। नानादेश-

---

तु धर्मम्। तस्मादिदं पत्रं शिक्षायै केवलं, धर्मोपदेशायेत्येतत्। सत्यप्यपरिमिते दासवर्गे "अहं लिखामी" त्यक्षरविन्यासेऽपि स्वस्यैव साक्षात्कर्तृत्वोक्त्याऽऽश्रितेषु प्रेमातिशयः सूच्यते। यथा भक्तः सत्यपि दासवर्गे स्वयमेव वाटिकां प्रविश्य पत्रपुष्पाण्यपचीय भगवतेऽर्पयति, तथा भगवानपि निजजने स्नेहार्द्रमानसः स्वकरतलोपलालितं स्वेनैव दत्ताक्षरं प्रणयविशेषव्यञ्जकं पत्रमाश्रितान्प्रापयितुमिच्छतीत्येतत्। विषयवैलक्षण्यमुक्तं शिक्षापत्रीति। सन्देष्टृवैलक्षण्यमाह—सहजानन्दस्वामीति। विशेषणं चैतदुत्तमपुरुषयोगतोऽहंशब्दार्थे। सर्वतः श्रुतिगतो यः सहजानन्दस्वामीति सोऽहमिति विश्रुतनाम्ना निर्देशः। नात्र लोकश्रुतिमात्रमभिप्रेतम्। अनद्यतना श्रुतिरपि। तथाच निरतिशयानन्दत्वं "सैषानन्दस्य मीमांसा भवती"त्यादौ। स्वामित्वं च 'पतिं विश्वस्यात्मेश्वर"मित्यादौ। तदिदमानन्दप्राचुर्यं स्वामित्वं च स्वासाधारणं व्यज्यते। सहजाः—स्वाभाविका आनन्दा यस्य स चासौ स्वामी। आनन्दमयस्यायं लेख आनन्दाय स्यादिति व्यज्यते। स्वामिनः सन्देशोऽयं श्रेयस इत्यपि व्यज्यते। अनवरतमुपदेशतः समुज्जीवितलोकेन भगवता को वाऽनुग्राह्यो लेखेनेत्यत्राह—सर्वानित्यादि। देशविप्रकृष्टानाश्रितान्प्रत्ययमारम्भ इति भावः। ननु भवतो भगवतो वासुदेवस्य कोऽयं देशविप्रकर्षः, सर्वतः समं सन्निधाय साक्षादुपदेशेन ते ते समुज्जीव्यन्तां किमनेन लेखेन ? अत आह—वृत्तालयस्थित इति। अहमद्य मानुषसाजात्यभावनया लोकानुग्रहाय धृतसङ्कल्पो वृत्तालये सन्निहितोऽस्मि; तदवतरणसमाधिभङ्गस्य नायमवसर इति भावः। एतेन समाप्तपुनरावर्त्त्वं दूरोत्सारितम्। ये पुनर्यदा कदाचिल्लब्धमत्संश्लेषा नानादेशस्थितास्तेऽधुना मद्विश्लेषमसहमानाः क्षणमपि युगमिव महता दुःखेन कथमपि नयेयुस्तान्प्रत्ययं लेखः। ते हि इमं लेखं मामिवाधिगम्य

---

र्थतावच्छेदकफलीभूताक्षराश्रयत्वं तदा बोध्यम्। तथा चोक्तविवक्षावैलक्षण्यात्पत्रस्य प्रकृते कर्मत्वमिति। वक्तृवैलक्षण्यानुसन्धानतो व्यज्यमानं व्यवच्छेद्यं व्यनक्ति—अपरिग्रहस्येति। लिखामीति निर्देशस्वारस्यमाह—अहमिति। साक्षात्कर्तृत्वोक्त्येति। णिजन्ते प्रयोजकत्वं प्रतीयेत, तथाऽप्रयोगात्साक्षाल्लेखनकर्तृत्वप्रतीतिः स्वरससिद्धेति भावः। तथेति। आश्रितो यथा यथा स्वस्मिन्प्रेमार्द्रमानसो भवति तथा तथा भगवानपि तस्मिन्प्रेमार्द्रमानसो भवतीत्येतज्ज्ञापितम्। सति नामान्तरे सहजानन्दस्वामीति नामनिर्देशस्य फलमाह—विश्रुतनाम्नेति। विश्रुतौ विशेषमाह—नात्रेति। तदिदमिति। अनेनासाधारणरूपेण ज्ञापनायायं निर्देश इति भावः। सत्यप्यसाधारणरूपान्तरेऽनेनासाधारणरूपेण ज्ञापनेन यो विशेषस्तमाह—आनन्देति। वृत्तालयस्थित इत्यस्य विशेषणस्य भावमाह—अहमद्येत्यादिना। दूरोत्सारितमिति। लिखामि सहजानन्दस्वामी सर्वान्निजाश्रितान्। नानादेशस्थितान्शिक्षापत्रीमित्यन्तनिर्देशेनैव कर्तृकर्मक्रियासमभिव्याहारसम्पत्तेर्वाक्यपरिसमाप्तेः पश्चात्

स्थितानित्यनेन शिष्यबाहुल्यं स्वप्रतापस्य चाऽऽसमुद्रव्यापित्वं गम्यते । स्थितानित्युक्तेः शिष्याणां भगवद्भावाधिक्यात्तदन्यत्र विरक्त्या गृहादिष्वतिथितुल्यत्वं व्यज्यते । शिक्षणम्-शिक्षा हितोपदेशः । पतति-स्थानान्तरं गच्छति स्वाभिप्रेतोऽर्थोऽनयेति पत्री । दाम्नी शसेति करणे ष्ट्रन् । ततः षित्त्वात् ङीप् । शिक्षार्थां पत्री शिक्षापत्रीति शाकपार्थिवादित्वादुत्तरपदलोपी समासः । लिखामीति । लिख अक्षरविन्यास इत्यतस्तौदादिकात्कर्त्तरि लट् । अत्र गम्यमानत्वादप्रयुज्यमानोऽहमिति कर्तोत्तमपुरुषबलादध्याह्रियते । 'अस्मद्युत्तम' इति स्मरणात् ।

---

नितान्तनिर्वृताः स्युः समुज्जीविताश्च स्युः शिक्षारूपत्वादित्यपि व्यज्यते । एतेन—क्रमशस्तत्र तत्र सन्निधायोपदेशतस्ते रक्ष्यन्तामिति शङ्का परास्ता । नानादेशस्थितानिति कालविप्रकृष्टानामप्युपलक्षकम् । एतेन—कालविप्रकृष्टान्प्रत्यप्ययमारम्भ इति व्यज्यते । सर्वान्-कदाचिदप्यसत्तोऽनुपश्रुतधर्मरहस्यानुपश्रुतधर्मरहस्यान्वा विप्रकृष्टानाश्रितान्सर्वान्प्रत्येवायमारम्भः । नहि रहस्यं धर्मस्य सकृदुपश्रुतं सुविज्ञेयम्,बहुना श्रुतेन तु तथा । अणुरेष धर्मः । निजाश्रितान्-निजान्-आत्मीयान्, आश्रितान्-आश्रयणमत्रोपाधिरात्मीयत्वे । एतेन—आश्रिता हि ममात्मीयाः । अविशेषात्सर्वस्वभूता इति व्यज्यते । एतेन—अहमाश्रितानुद्दिश्य लिखामीत्यनेनैव स्वाश्रितत्वे सिद्धे निजेति व्यर्थमिति शङ्का परास्ता । आ-अभिव्याप्य, ईषद्वा, श्रिता आश्रिताः, साक्षात्परम्परया वाऽश्रिताः । साक्षात्सम्बन्धिन इव तत्सम्बन्धिसम्बन्धिनोऽप्यस्मदनुग्रहपात्रभूता इति भावः । यद्वा—अभिव्याप्य श्रिताः । सततं सर्वप्रकारैः श्रिताः । ईषत्स्वाभिलषितसिद्धिपर्यन्तम् । यद्यपि सर्वप्रकारैर्मामेव ये सेवन्ते त एवास्य शिक्षालेखस्य प्रधानं समुचितं पात्रम् । अहं पुनः परमोदारः परमकृपया यथाकथंचिदस्मदभिमुखेभ्योऽपीदं शिक्षामृतं प्रयच्छामि । यदि भाग्यहीना उद्गिरेयुः, किं नश्छिन्नम् । आस्यगतममृतमपि य उद्गिरेत्तादृशो भाग्यहीनोऽस्मदभिमुखकोटौ कोऽपि न स्यादिति च प्रत्येमीति भावः । अनेन भगवदभिमुखा अधिकारिण इति व्यज्यते । 'स्वाम्यं यस्य निज'मित्यादाविवात्र निजशब्दः स्वाभाविकपरो वा । स्वाभाविका आश्रिताः, निमित्तनिरपेक्षा आश्रिताः । निमित्तनिरपेक्षमाश्रिता इत्येतत् । स्तोकनम्रा स्तनाभ्यामित्यादौ स्तोकं नम्रेतिवत् निजमाश्रिता इति वा

---

वृत्तालयस्थित इति विशेषणान्तरोपादानात्समाप्तपुनरात्तत्वं स्यादिति शङ्कावकाशः । उक्ताशङ्कापरिहारार्थतया नियताकाङ्क्षत्वेन "उदयति चन्द्रः कुमुदबन्धु"रित्यादाविव नात्र समाप्तपुनरात्तत्वशङ्कावकाश इति परिहारप्रकारः । लेखे निमित्तं भगवतो भावान्तरमत्र व्यज्यमानमाह—ये पुनरित्यादिना । सर्वानित्यस्य भावमाह—कदाचिदित्यादिना । उपश्रुतधर्मरहस्यान्प्रति पुनरुपदेशे निमित्तमाह—नहीत्यादिना । निजानित्येव वा आश्रितानित्येव वा पर्याप्तमिति शङ्कां परिहरन्नाह—आश्रयणमत्रोपाधिरित्यादिना व्यज्यत इत्यन्तेन । आङोऽर्थद्वयाश्रयणेन सिद्धं भावविशेषमाह—साक्षादित्यादिना । भावान्तरमाह—यद्वेत्यादिना । निजशब्दस्यार्थान्तरमाश्रित्य व्याचष्टे—स्वाम्यमित्यादिना । आश्रितेषु स्वाभाविकत्वोक्त्याऽऽश्रयणे स्वाभाविकत्वमर्थात्सिद्धमित्यभिप्रेत्याह—निमित्तनिरपेक्षमिति ।

इह शिक्षाशब्देन हिततमं धर्मतत्त्वं विषय उक्तः। तेनैव च हितावगमः प्रयोजनमुक्तप्रायम्। निजाश्रितानित्यनेनाधिकारिण उक्ताः। सम्बन्धश्च लेखार्थयोर्वाच्यवाचकभावः स्फुटः। सहजानन्दस्वामीति कर्तृवैलक्षण्यम्। शिक्षेति विषयवैलक्षण्यं चोक्तम् ॥ २ ॥

---

समासः। भावे क्तमाश्रित्य बहुव्रीहिर्वा। तथा च स्वाभाविकत्वमाश्रयणे साक्षादन्वेति। ये किमपि फलमनपेक्ष्यैव मदाश्रयणमेव परमप्रयोजनं मत्वा मामाश्रितास्ते निजाश्रितास्तान्प्रत्ययमारम्भ इति भावः। अनेन भगवदेकप्रयोजनास्तदेकोपायनिष्ठा अधिकारिणो व्यज्यन्ते। अनेन श्लोकेन वक्तृवैलक्षण्याद्विषयवैलक्षण्याच्च भगवत्परैरुपादेयोऽयं लेख इत्युक्तं भवति। अत्रानुबन्धचतुष्टयमभिहितप्रायम् ॥ २ ॥

---

शब्दत एव तदर्थसिद्धिमाह—स्तोकनम्रेत्यादिना। कर्मधारयतो विशेषं दर्शयति—तथाचेत्यादिना। परिनिष्पन्नं भावमाह—अनेनेति। अभिहितप्रायमिति। विषयस्याधिकारिणश्च कण्ठरवेणोक्त्या प्रयोजनस्य च व्यञ्जनया ज्ञापनाच्च तथोक्तिः ॥ २ ॥

---

१ अत्रायं ध्वन्यर्थः—हन्त! जगति सर्वे एव निजाश्रिताः। निजम्–आत्मानमेव आश्रिताः, न परमुपदेष्टारम्। 'स्वयं धीराः पण्डितंमन्यमानाः'। इदं नः प्रियमिदं नो हितमिति स्वयमेवोत्प्रेक्ष्य तत्र तत्र प्रवर्तन्ते नाम। "इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्। इदमस्तीदमपि मे भविष्यति पुनर्धनम्। ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी। आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया। यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः। अनेकचित्तविभ्रान्ता मोहजालसमावृताः। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ"। यदि पुनर्यादृच्छिकसुकृतवशात्कतिचनपरस्याऽऽदेशेऽपहायाऽसूयां श्रोतुं प्रवर्तेरंस्ते पुनर्हन्त!! नानाऽऽदेशस्थिता भवन्ति–नानाविधेष्वादेशेष्वेव स्थिताः–निष्ठावन्तो भवन्ति। ये नानाविधाः श्रुतीनामादेशाः शत्रुमारणसुरतरुणीसम्भोगपुत्रपश्वन्नादिविविधफलसाधनादेशास्तेष्वेव स्वरसतः प्रवर्तन्ते। "वेदवादरता ह्येते नान्यदस्तीति वादिनः। कामात्मानः स्वर्गपराः पतन्त्यन्ते ततः क्वचित्" ॥

यदि नाम कतिचननिःश्रेयसवार्तामुपश्रोतुं प्रवर्तेरंस्तत्रापि नानाविधा आदेशाः। कश्चन निरीश्वरादेशः, कश्चन कल्पितेश्वरादेशः, कश्चन जीवात्मपरमात्मनोर्भेदमिथ्यात्वादेशः, कश्चनौपाधिकतत्त्वोपदेशः, कश्चन ब्रह्मस्वरूपपरिणामकतत्त्वोपदेश एवमादयो नानाविधा वेदव्याख्याने प्रवृत्तानामादेशाः। तेषु बहवः प्रलुब्धा भोगतो मोक्षतश्च च्यवन्ति। एवं कतिचन तमोवृत्तिप्रचुराः कतिचन रजःप्रचुराश्च भूत्वा प्रायशः सर्वे एव निःश्रेयसमार्गतो दूरीभवन्ति, तानेतान्निजाश्रितान्नानाऽऽदेशस्थितान्प्रत्यय कश्चन यत्न आधीयतेऽस्माभिः। **ननु** किमाधीयते? तेषां शिक्षायै कापि पत्रिका विलिख्यते। ते ह्यनेन लेखेन शिक्षिताः स्युः–अपगतरजस्तमःसमुन्मेषा उद्रिक्तसत्त्वाः स्वात्महितचिन्तकाः पारमैकान्तिकधर्मपरायणा भवेयुः। **ननु** सर्वेषु भवतः का प्रीतिः, यदेवं सर्वार्थे यत्नः? अहं हि स्वामी सर्वस्यास्य, किं बहुना–क्षराक्षरयोरपि। क्व प्रसिद्धमेतत्? "पतिं विश्वस्याऽऽत्मेश्वरम्"। "क्षरात्मानावीशते देव एक" इत्येवमादिषु श्रुतिषु मम स्वामित्वं स्फुटम्। अन्येषां त्वौपचारिकम् "एक एव हरिः स्वामिशब्दवाच्योऽस्ति सर्वथा। अन्यस्तु मदुपास्त्यात्तगुणयोगात्तथोच्यते"। हन्त!! जीवसमुद्धरणैकव्यासङ्गात्सर्वदा चिन्तामयं भवतः स्वरूपम्? न, आनन्द एव हि मम स्वरूपम्, यदस्मि सहजानन्दः, अन्येषां त्वानन्दो मदधीनो मम तु सहजः। स्फुटं चैतद्विशेषत आनन्दवल्ल्याम्—"यतो वाचो निवर्तन्ते अप्राप्य मनसा सह"। "आनन्दं ब्रह्मणो विद्वान्" "एष ह्येवानन्दयाती"ति च। **ननु** भवतो न व्यापारान्तरम्? इहावतीर्णस्य ममेदमेव व्रतम्–यद्वृत्तं तस्य अलयोऽविनाशः–रक्षणं तदेव, तदहं तत्रैव व्रते सर्वदा स्थितोऽस्मि। सुवृत्त एवेह वृत्तशब्दः स्वरसतः प्रवर्तते। गुणवानयमित्युक्ते सगुण एव हि बोध्यते। सुवृत्तं च यद्भगवदेकान्तं तदेव, ज्ञानं यद्भगवदेकान्तं तदेव ज्ञानमन्यदज्ञानम्। एवं वृत्तमाचरणं भगवदेकान्तं यत्तदेव वृत्तम्। तदेवंविधभगवदेकान्तवृत्तरक्षणायैवावतीर्णस्य ममेदमेव कर्तव्यमिति ॥

भ्रात्रो रामप्रतापेच्छारामयोर्धर्मजन्मनोः ।
यावयोध्याप्रसादाख्यरघुवीराभिधौ सुतौ ॥ ३ ॥
मुकुन्दानन्दमुख्याश्च नैष्ठिका ब्रह्मचारिणः ।
गृहस्थाश्च मयारामभट्टाद्या ये मदाश्रयाः ॥ ४ ॥
सधवा विधवा योषा याश्च मच्छिष्यतां गताः ।
मुक्तानन्दादयो ये स्युः साधवश्चाखिला अपि ॥ ५ ॥
स्वधर्मरक्षिका मे तैः सर्वैर्वाच्याः सदाशिषः ।
श्रीमन्नारायणस्मृत्या सहिताः शास्त्रसम्मताः ॥ ६ ॥

शिक्षणीयान्निजाश्रितानेव त्रिभिः श्लोकैर्निर्दिशन्नादौ स्वेन निजाश्रितसकलजनगुरुत्वे स्थापितौ भ्रातृजावुद्दिशति—भ्रात्रोरिति । धर्मजन्मनोः—धर्मात्—धर्मावतारत्वेन प्रसिद्धाद्धरिप्रसादाख्यविप्रात् जन्म ययोस्तयोः । "अवर्ज्यो बहुव्रीहिर्व्यधिकरणो जन्माद्युत्तरपद" इत्याह वामनः । रामप्रतापश्च इच्छारामश्च तयोरेतन्नाम्नोः । इह रामप्रतापस्य ज्येष्ठत्वा'द्भ्रातुर्ज्यायस' इति पूर्वनिपातः । एतच्च "मज्ज्येष्ठावरजभ्रातृसुताभ्यां तु कदाचने"त्यनेनाग्रे स्पष्टीकरिष्यति । भ्रात्रोः—एकमातृकयोरित्यर्थः । इदं पदं स्वस्यापि धर्मजत्वज्ञापकं, नतु केवलं तयोः सोदरत्वमात्रबोधकमिति ज्ञेयम् । यौ । अयोध्याप्रसाद इत्याख्या—नाम यस्य सः,

---

नन्वस्माभिरप्रार्थितस्याऽपि भवतः परमरहस्यभूतधर्मोपदेशरूपैतल्लेखारम्भे केयमाशंसा ? सत्यम् । अवाप्तसमस्तकामस्यानाशिषोऽपि ममास्ति तावदियमेकाऽऽशंसा, यदाश्रितानामनुत्तमं श्रेयो भूयादिति । इयमेव चाशीर्युष्मासु सर्वदा नः, ययैवाशंसयाऽहमधुना प्रवृत्तोऽस्म्यत्र लेखे, येन वः श्रेयःप्रापको बुद्धियोगः स्यात् । सेयमाशंसा लेखस्यास्य निदानमधुनावधार्या युष्माभिरखिलैरित्याश्रितान्व्यञ्जयन्नादावाशिषाऽनुगृह्णाति—भ्रात्रोरित्यादिना श्लोकचतुष्टयेन । यौ सुतौ, ये च नैष्ठिका ब्रह्मचारिणः, ये च गृहस्थाः, याश्च योषाः, ये च साधवः, तैरखि-

---

विरचितं नामादावेव मङ्गलम्, प्रतिज्ञातं च लिखामि शिक्षापत्रीमिति, अथ यथा प्रतिश्रुतमारभ्यतां शिक्षैव, कोऽयमथाशीर्वचनस्य प्रसङ्ग इति शङ्कां परिहरन्नाशीर्वचनं सङ्गमयति—नन्विति । सुखेनार्थप्रतिपत्तयेऽन्वयमाह—यावित्यादिना । ननु—सर्वैर्वाच्याः सदाशिष इत्यनेनैव सामान्यतो निर्देशेन विवक्षितार्थलाभे विशिष्य भ्रात्रोरित्यादिनिर्देशे को विशेषः ? नह्याशिषि विशेषः सुतादिभेदेन, यमभिप्रेत्यायं विशिष्य निर्देशो नीयेत, अविशेषेण सर्वान्प्रति परमनिःश्रेयसमेवाका-

रघुवीर इत्यभिधा—नाम यस्य सः, स च स च तौ, सुतौ—पुत्रौ, यथासङ्ख्यं भवत इति शेषः । इह "द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं सम्बध्यते" इति वचनादयोध्याप्रसादरघुवीरौवित्येव वक्तुमुचितम् तथापि प्रत्येकं संज्ञावाचकपदनिबन्धनं तु भ्रात्रोः पुत्रबाहुल्यादेकैकपुत्रेष्वेकैकस्यैव संज्ञया पृथङ्निर्धारणस्य स्पष्टतयाऽवबोधनार्थमिति प्रतिभाति । तेन चैतयोर्द्वयोरेव पृथग्देशविभागपूर्वकं स्वाश्रितजनगुरुत्वे स्थापनमित्यवसेयम् । यच्छन्दस्य तैः सर्वैर्मे सदाशिषो वाच्या इति चतुर्थेनान्वयः ॥ ३ ॥

मुकुन्देति । मुकुन्दानन्दो मुख्यो येषां ते । नैष्ठिकाः—'निष्ठां—उत्क्रान्तिकालं नयन्तीति नैष्ठिका' इति मिताक्षरायामाचाराध्याये व्युत्पत्तिः । यावज्जीवमूर्ध्वरेतस इत्यर्थः । ब्रह्मचारिणः—ब्रह्म—वेदं तपो ज्ञानं वा चरन्ति—अर्जयन्त्यवश्यमिति ब्रह्मचारिणः, प्रथमाश्रमिणः । आवश्यके णिनिः । ब्रह्मचर्याख्यं व्रतं विद्यत एषामिति वा ब्रह्मचारिणः । "कर्मणा मनसा वाचा सर्वावस्थासु सर्वदा । सर्वत्र मैथुनत्यागं ब्रह्मचर्यं प्रचक्षत" इति कौर्मे ।

ननु—"दीर्घकालं ब्रह्मचर्य"मिति कलिवर्ज्येषूक्तेः कथं नैष्ठिकत्वमिति चेन्न, निषेधस्य भगवद्बलरहितत्वेन तद्धर्मपालनाशक्तपुरुषविषयत्वात् । अशक्तानामनवहितानामेव स्त्रीदर्शनादिना तच्च्यवनसम्भवस्य क्वचिद्दर्शनात् । अत एव मोक्षधर्मेषु "योषितो न कथा श्रव्या न निरीक्ष्या निरन्तरम् । कथञ्चिद्दर्शनादासां

---

लैरसदाश्रितैराशिषोऽसदीया वाच्या इत्युत्तरेणान्वयः । विशिष्यैवमाश्रितानां निर्देशो यथा

---

ङ्क्यते भगवतेत्याशङ्कायामाह—विशिष्येति । नाम्ना भ्रात्रोर्निर्देशे विवक्षितं विशेषं स्फुटयति—

---

१ "एतेन—द्वन्द्वे साहित्यविशिष्टतयैवार्थोपस्थितेः कस्य कः पुत्र इति नावधार्यत इति शङ्का परास्ता । तथा च प्रयोगाः—"शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः" । नियतश्चात्राद्बोधः शुक्लयाऽनावृत्तिं कृष्णयाऽऽवृत्तिं यातीति । "लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना । व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इति च । तथा साङ्ख्यतत्त्वकौमुदीविवरणे वाचस्पतिमिश्रैः—"यथासङ्ख्यमेकद्वित्रिचतुःपञ्चभ्य आकाशानिलानलसलिलावनिरूपाणि पञ्च" इति । तथा—अविद्याऽस्मितारागद्वेषाभिनिवेशा यथासङ्ख्यं तमोमोहमहामोहतामिस्रान्धतामिस्रसंज्ञकाः पञ्चेति च । एवं प्रत्येकं यथासम्भवमन्वयविवक्षया सन्ति बहवः प्रयोगाः । तत्त्वसङ्ग्रहे—"कार्यानुवृत्तिव्यावृत्ती लक्षणार्थविभेदिता" इति । कार्यमर्थविभेदिता, अनुवृत्तिव्यावृत्ती लक्षणविभेदितेति तदर्थः । एवं सन्ति काव्येष्वपि शतशः प्रयोगाः । विस्तारभयान्नेह प्रदर्श्यन्ते । इदमेव त्वपेक्षते । द्वन्द्वे साहित्येनोपस्थितानामप्यर्थानां प्रत्येकमन्वये प्रयोक्तुः पुरुषस्य विवक्षाज्ञापकः कश्चनारम्भो यथासङ्ख्यं यथासम्भवमित्येवमादिनिर्देशः । स च कण्ठरवेणाप्रयुक्तोऽपि 'व्याख्यानतो विशेषप्रतिपत्ति'रिति न्यायात्सिद्ध्यत्येव । यत्तु महाभाष्यव्याख्याविवरणे 'यथासङ्ख्याभिप्रायेणेदृशः प्रयोगो लोकेऽसाधुः' इति तत्तत्समयानुसारिभिरेवादरणीयं वचः । अपरे पुनर्नैयायिकप्रभृतयस्तान्त्रिका द्वन्द्वतः साहित्यविशिष्टस्योपस्थितिं नाङ्गीकुर्वन्ति ॥

दुर्बलानाविशेद्व्रज" इति दुर्बलशब्दोपादानं कृतमस्ति। परावरतत्त्वनिष्णातसद्गुरुप्रसादलब्धधैर्येषु भगवद्भक्तेषु कामादिकलिबलाप्रवृत्तेर्न च्यवनशङ्का। तदुक्तं श्रीमद्भागवते रोमहर्षणिना—"किन्तु बालेषु शूरेण कलिना धीरभीरुणा । अप्रमत्तः प्रमत्तेषु यो वृको नृषु वर्तते"। अत एवोद्धवेन चोक्तम्—"त्यागोऽयं दुष्करो भूमन्कामानां विषयात्मभिः । सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः" इति ।

किञ्च—भक्तानां कामवासनाश्च भक्त्यैव नाश्यन्त इत्याह भगवानेव—"प्रोक्तेन भक्तियोगेन भजतो माऽसकृन्मुनेः । कामा हृदय्या नश्यन्ति सर्वे मयि हृदि स्थिते" इति । तथाताद्दशनैष्ठिकभगवद्भक्तरक्षणं हि भगवत्पार्षदैरेव सर्वतः क्रियत इति न क्वापि तेषां बाह्यान्तरशत्रुभ्यो भयशङ्कालेशोऽपीत्युक्तं यमेन—"भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिङ्गानि महाद्भुतानि । रक्षन्ति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च" इति । भगवताऽप्युक्तम्—"न विक्रियन्ते मयि बद्धसौहृदा" इति ।

ये तु भगवदाश्रयरहिताः केवलं नैष्ठिकधर्ममात्रमाश्रयन्ते, तेषां त्वन्तःशत्रुभयनिवृत्तिः स्वव्रतरक्षणं चातिदुष्करमेव । कचिदेकतमस्य जयेऽप्यन्यतमभयानिवृत्तेः । उक्तं हि देवैः—"क्षुत्तृट्त्रिकालगुणमारुतजैह्वशैश्नानस्मानपारजलधीनतितीर्य केचित् । क्रोधस्य यान्ति विफलस्य वशं पदे गोर्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्ति" इति । सनकादिभिश्चोक्तम्—"कृच्छ्रो महानिह भवार्णवमप्लवेशां षड्वर्गनक्रमसुखेन तितीर्षन्ति" इति । तथाचोक्तं मदनरत्ने—"दानं व्रतानि नियमा ज्ञानं ध्यानं हुतं जपः । यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवे"दिति ।

---

निर्देशमुपदेष्टव्यविशेषमभिसन्धाय । व्यञ्जयति च प्रतिनिर्देशं यच्छब्दयोगो निमित्तभेदमुपदेश्यविशेषे । यद्यपि ब्रह्मचारिण इत्यत्र न यच्छब्दयोगः, तथापि पूर्वमुत्तरत्र च प्रतिनिर्देशं यच्छब्दयोगादत्रापि तद्योगोऽनुषङ्गेण स्वारसिकः । यद्यपि ब्रह्मचारित्वादिको निमित्तभेदः शाब्दः, सुतयोस्तु न; तथाप्यार्थो यच्छब्दस्वारस्यात् । स चाचार्यभाव इति शिक्षाविशेषादवगम्यते । संसारसागरनिमग्नसकलचेतनोद्धरणप्रयासं स्वयं विभज्य समं प्रायच्छत्खलु भ्रातृव्याभ्याम् । सकलभुवनभारवाहिनः सकाशादंशः कोऽन्यो लभते । सन्तोष्टव्यं त्वेतावता । यदखिलभुवनभारतोऽणुभूतकतिपयचेतनोद्धरणभारो हि दैवाल्लब्ध इति । सामान्यतो भ्रातृ-

---

सामान्यत इत्यादिना । अनेन पितृत उत्कर्षो ज्ञापितः । धर्मजन्मनोरित्यस्य स्वारस्यमाह—नन्वित्यादिना। अनेन पितामहतोऽप्युत्कर्षो ज्ञापितः। सर्वतः समुत्कर्षावहे स्वभ्रातृभावे सति किमन्यत उत्कर्षेण

तस्मात्कृष्णभक्तिबलवतां कलावपि न नैष्ठिकव्रतक्षतिः। यद्वा—नैष्ठिकपदेनैव निरवधिब्रह्मचर्याः प्रथमाश्रमिणः। ब्रह्मचारिण इति ये उपकुर्वाणकास्ते चेत्यर्थः। येषां सावधिकं ब्रह्मचर्यं ते उपकुर्वाणकाः।

**मदाश्रयाः**—मच्छिष्याः। इदं पूर्वान्वयि परान्वयि च। **मयारामभट्टः**—एतन्नामा सौराष्ट्रदेशीयो ब्राह्मणः स आद्यो मुख्यो येषां ते तथोक्ताः। **गृहस्थाः**—गृहेषु—दारेषु निमित्तभूतेषु तिष्ठन्तीति तथोक्ता द्वितीयाश्रमिणश्च। 'गृहस्थो दारसंग्रहा'दिति स्मृतेः। गौरमुखसप्तपर्णकुम्भकारगृहस्थादयः शब्दा योगरूढा इत्याहुर्वैयाकरणाः। अत्र गृहस्थेभ्यः प्राक् ब्रह्मचारिनिर्देशस्तु तेषां शास्त्रीयमर्यादोल्लङ्घनेन पापाचरणे प्रायश्चित्तद्वैगुण्यस्मरणात्स्वोपदिश्यमानधर्मशिक्षावाक्यानामतिशीघ्रावधारणार्थम्। यथाहाङ्गिराः—"गृहस्थोक्तानि पापानि कुर्वन्त्याश्रमिणो यदि। शौचवच्छोधनं कुर्युरर्वाग्ब्रह्मनिदर्शना"दिति। शौचमाह मनुः—"एतच्छौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्। त्रिगुणं तु वनस्थानां यतीनां च चतुर्गुण"मिति। ब्रह्मनिदर्शनादिति। ब्रह्मस्वरूपसाक्षात्कारेण देहविस्मरणे तु नायं नियम इत्यर्थः। तथोपकुर्वाणकेभ्यः प्राक् नैष्ठिकनिर्देशोऽपि तेषां शास्त्रीयमर्यादातिक्रमे द्विगुणप्रायश्चित्तविधानात्स्वोपदेशशीघ्रावधारणार्थमेव। तत्प्रायश्चित्तमाह हारीतः—"उपकुर्वाणस्तु यत्कुर्यात्कामतोऽकामतोऽपि वा। तदेव द्विगुणं कुर्याद्ब्रह्मचारी तु नैष्ठिक" इति। तथा गृहस्थेषु ब्राह्मणानां प्राङ्निर्देशोऽपि तेषां प्रायश्चित्ताधिक्यात् "विप्रे तु सकलं देयं पादोनं क्षत्रिये स्मृतम्। वैश्येऽर्धं पादशेषस्तु शूद्रजातिषु शस्यत" इति विष्णुस्मृतेः। यत्तु—"पर्षद्या ब्राह्मणानां तु राज्ञां सा द्विगुणा मता। वैश्यानां त्रिगुणा प्रोक्ता पर्षद्वच्च व्रतं स्मृत" मित्यङ्गिरोवचनं तत्तु प्रातिलोम्यानुष्ठितचतुर्विधसाहसादिपरमित्यवसेयम्। अत्र **मदाश्रया** इत्यनेनं

---

व्याविव्यनुक्त्वा नाम्ना भ्रातरौ निर्दिश्य तत्सुतत्वेनोत्कीर्तनम् "सहोवाच व्यासः पाराशर्य" इतिवदभिजनसूचनाय। ननु—भगवद्भ्रातृत्वेनैवाभिजनपूर्तौ पुनर्धर्मजत्वेन किं विशेषणेन? सत्यम्, तथापि भगवान् "वृष्णीनां वासुदेवोऽस्मि" इति स्वस्य वसुदेवसूनुत्वमैश्वर्यं यथाऽमन्यत, तथा धर्मसूनुत्वं मन्वान आह—धर्मजन्मनोरिति। यद्यपि भ्रात्रोरित्येतत्पदं मिथो भ्रातृत्वबोधनेनापि गतार्थम्, तत्स्फुटं भगवतो भ्रातृत्वं न बोधयेत्; तथापि भगवतः स्वभ्रातृत्वस्य स्फुटमप्रतिपत्तावपि धर्मसूनुत्वप्रतिपत्तावेवाभिनिवेशात्स्फुटं भमेत्यनुक्तिः। सत्स्वपि

---

स्फुटेन वर्णितेनेत्यत्राह—यद्यपीत्यादिना। सुतयोर्नाम्ना निर्देशस्य फलमाह—सत्स्वपीति। अन्येषा-

तेषां स्वशिष्यत्वादप्रेरितस्यापि स्वस्य शिक्षापत्रीलेखने निर्दोषत्वमुक्तम् । तदुक्तं धर्मशतके—"अप्रेरितः शिष्यहितं विदध्याद्गुरुः स एवातिदयालुरुक्त" इति ॥४॥

सधवा इति । तथा मच्छिष्यतां गताः–प्राप्ताः । मदाश्रयाः–मदाश्रया सच्छास्त्रोक्तपतिव्रताधर्मे स्थित्वैव श्रीकृष्णं भजन्त्य इत्यर्थः । धवेन–पत्या सह वर्त्तमानाः सधवाः–सभर्तृकाः । "धवः प्रियः पतिर्भर्ते"त्यमरः । विनष्टो धवो यासां ता विधवाः–मृतभर्तृकाश्च । या योषाः–स्त्रियः । अत्रोभयविधास्वपि स्त्रीषु ब्रह्मचार्यादिवदेकैकस्या मुख्यतया नाम्ना पृथगनिर्धारणं तु तासां वक्ष्यमाणपारतन्त्र्येण प्राधान्याभावात् । अत एव गृहस्थपुरुषानन्तरं तन्निर्देश इत्यवसेयम् । तथा मुक्तानन्द आदिर्येषां ते, अखिलाः–सर्वे साधवोऽपि च स्युः । साध्नुवन्ति साधयन्ति वा धर्ममिति साधवो–मुनयः । तेषां लक्षणान्युक्तानि श्रीमद्भागवते—"साधुस्तवोत्तमश्लोक! मतः कीदृग्विधः प्रभो!" इत्युद्धवप्रश्नोत्तरे भगवता श्रीकृष्णेनैव—"कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ।

---

भ्रातृव्येष्वपरेषु शिक्षाविशेषनिमित्तं द्वयोरेवाभिमत्य नाम्ना द्वयोर्निर्देशः । **मदाश्रया** इति विशेषणेन मुमुक्षुता व्यज्यते । **मदाश्रया** इत्येतद्ब्रह्मचारिष्वप्यन्वेति । **मच्छिष्यतां गता** इत्येतल्लिङ्गविपरिणामेन साधुष्वन्वेति । यद्वा—गृहस्थेषु स्त्रीषु चामुमुक्षुताया एव प्रायिकतया तद्वारणाय **मदाश्रया मच्छिष्यतां गता** इति च विशेषणं क्रमादुक्तम् । अन्यत्र तु न तदपेक्षेति न तादृशविशेषणोपादानम् । तथाहि—"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इति श्रुतेः, "अनेन विधिना देहं साधयन्विजितेन्द्रियः । ब्रह्मलोकमवाप्नोति न चेहाजायते पुनः ॥" इति नैष्ठिकानामपुनरावृत्तिस्मरणाच्च नैष्ठिकानां ब्रह्मचारिणां मुमुक्षैव स्वारसिकीति; अत्र नैष्ठिका ब्रह्मचारिण इति निर्देशस्वारस्यादेव मुमुक्षुता तेषां व्यज्यते । साधूनां मुमुक्षुता साधुशब्देनैव स्फुटा । "यथालब्धेऽपि सन्तुष्टः समचित्तो जितेन्द्रियः । हरिपादाश्रयो लोके द्विजः साधुरनिन्दकः ॥ लोभमोहमदक्रोधकामादिरहितः सुखी । कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः ॥" इति तल्लक्षणस्मरणात् । यद्यपि साधुत्वस्योक्तलक्षणस्य ब्रह्मचारिगृहस्थसाधारणतयाऽनेन रूपेण ये च साधव इति पृथङ्निर्देशोऽनुपपन्नस्तथापि गोबलीवर्दनयेन नैष्ठिकेभ्यो गृहस्थेभ्यश्चान्ये वीतरागाः कृष्णकान्तिनो गृह्यन्ते । तैः सर्वैर्मे आशिषो वाच्या इत्यन्वयः । वाच्याः–पाठ्या इत्यर्थः । यद्यप्याशिषो न पाठकर्मता, हिताशंसारूपस्याशब्दरूपत्वात्, तथाप्याशीर्वचने तात्पर्यात्तत्सङ्गतिः ।

---

नन्वविशेषेण भगवदाश्रयत्वे सति **मदाश्रया** इत्यस्य गृहस्थेष्वेव, **मच्छिष्यतां गता** इत्यस्य योषास्वेव च विशेषणतया श्रवणमनुचितमित्याशङ्कां परिहरन्नाह—**मदाश्रया** इत्येतदित्यादिना । अनुपक्रान्तदिष्टेशं पर्यालोच्याह—यद्वेति । आशिष इच्छाविशेषरूपत्वात्कथं पठनकर्मतेत्याशङ्क्य समाधत्ते—यद्यपी-

सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः । कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः । अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः । अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः । अमानी मानदः कल्पो मैत्रः कारुणिकः कविः । आज्ञायैवं गुणान्दोषान्मयादिष्टानपि स्वकान् । धर्मान्सन्त्यज्य यः सर्वान्मां भजेत स सत्तमः । ज्ञात्वाज्ञात्वाथ ये वै मां यावान् यश्चास्मि यादृशः । भजन्त्यनन्यभावेन ते मे भक्ततमा मता" इत्यादिना । श्रीकपिलदेवेन चोक्तम्—"तितिक्षवः कारुणिकाः सुहृदः सर्वदेहिनाम् । अजातशत्रवः शान्ताः साधवः साधुभूषणा" इति । साधु—शीलं भूषणं येषां ते साधुभूषणाः । अत्र साधूनां सर्वेषामन्ततो निर्देशस्तु तेषां स्वधर्मविक्षेपहेतुव्यावहारिककार्यव्यासक्त्यभावात्प्रायशो धर्मनिष्ठत्वनिश्चयादेवेति प्रतीयते । तेषां च ज्ञानवैराग्यबलातिशयस्य विद्यमानत्वात्कस्यचिदपि स्वोक्तधर्माचरणेऽनादरो माभूदित्यत उक्तमखिला इति । मुक्तप्रायाणामपि देहस्मृत्यवधि सदाचारपालनस्यैवावश्यकत्वादिति भावः ॥ ५ ॥

---

नन्वत्र लेखे आशीःप्रकारपरं 'भूयाद्वः श्रेय उत्तमम्' इत्यादिवाक्यमेकं वा यदि विलिखितं स्यात्; तदा स्यादेवं निर्देशः, विना तल्लेखं पठ्यन्तामाशिष इति निर्दिष्टे किमाशीर्वचनं पाठ्यम् । सत्यम्—सर्वैर्वाच्याः सदाशिषः इति निर्देशस्वारस्यादेवाशीःप्रकारपरवाक्यस्य लेखमन्तराऽपि सिद्धेर्न क्षतिः । 'ते सर्वे' इति पाठे वाच्या इति पुंल्लिङ्गम् । "वाच्यस्त्वया मद्वचनात्स राजा" इत्यादाविव वक्तव्या इत्यर्थो बोध्यः । आशिष इति च द्वितीयान्तम् । वचेर्द्विकर्मकत्वेन तत्राशिषः कर्मता । ते इति चाप्रधानकर्म । वाच्या इति ण्यत्प्रत्ययेनाप्रधानकर्मणोऽभिधानान्न द्वितीया । "अप्रधाने दुहादीनाम्" इति ह्यनुशासनम् । अनेन लेखदूतेनेति कर्तुरर्थात्सिद्धिः । अनवरतमाश्रितश्रेयोऽभिकाङ्क्षिणो मम विशेषतः पुनरधुना लेखारम्भे प्रवृत्ता आशिषो युष्माभिराश्रितैरवधार्या इति भावः ।

सदाशिषः—सत्यः-परमपुरुषार्थावलम्बिन्यः । अन्यास्तु गृहारामादिकमधिकृत्य प्रवृत्ता असदाशिष एव । हिताशंसैव खल्वाशीः । परमपुरुषार्थादृते किमन्यद्धितं चेतनस्य । नापि भगवानितोऽन्यदाश्रितेष्वाशासीत । तथाच वचनम्—"पुंसां किलैकान्तधियां स्वकानां याः सम्पदो दिवि भूमौ रसायाम् । न राति यद्द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं सम्प्रयासः ॥"

---

त्यादिना । षष्ठीतत्पुरुषभ्रमं वारयन्नर्थमाह—सत्य इति । अनेन विशेषणेन व्यावर्त्यमाह—अन्यास्त्विति । गृहारामादिकमधिकृत्य प्रवृत्तानामाशिषामसदाशीरूपतामुपपादयति—हिताशंसैवेति । आशासितुः स्वभावपर्यालोचनायां परमपुरुषार्थावलम्बिनीनामाशिषामेवात्र विवक्षा समुचितेत्याह—नापीति । तत्र प्रमाणमाह—तथा चेति । भगवानेकान्तधियां स्वकानां दिवि भूमौ रसायां च याः सम्पदस्ता न राति—न प्रयच्छति । यत्—याभ्यो द्वेषादिरेव भवेन्न कुशलमिति वचनार्थः । बहुवचनानुपप-

स्वधर्मेति। तैरयोध्याप्रसादादिभिः सर्वैर्मदाश्रितैः। मे–मम मत्प्रयुक्ताः श्रीमन्नारायणस्मृत्या सहिताः। नित्यं श्रीः–लक्ष्मीः विद्यते यस्यासौ श्रीमान्। भूमनिन्देति नित्ययोगे मतुप्। स चासौ नारायणश्च। तस्य स्मृतिः–स्मरणं तया सहिताः। तथा शास्त्राणां–श्रीमद्भगवद्गीतादीनां सम्मताः–मान्याः। तेषु हि स्वधर्मरक्षणमेव प्राधान्येन स्थापितमिति प्रसिद्धम्। "सुखमेवेप्सितं लोके सर्वेषामपि देहिनाम्। तन्मूलं तु स्मृतो धर्मस्तं रक्षेद्यत्नतस्तत" इति स्मृतेश्च। स्वधर्मरक्षणस्यैव सर्वसुखमूलत्वात्सप्रमाणा इत्यर्थः। स्वधर्मरक्षिकाः–स्वधर्मस्य रक्षा याभिस्ताः। शेषाद्विभाषेति कप्। केऽण इति ह्रस्वः। अभाषितपुंस्काच्चेति विकल्पादित्वम्। यद्वा—रक्षन्तीति रक्षिकास्ततः स्वधर्मस्य रक्षिका इति षष्ठीसमासः। तृजकाभ्यां कर्तरीति निषेधस्य याजकादिभिश्चेति प्रतिप्रसवात्। अत

---

ननु—सदाशिष इति कथं बहुवचनम्। ह्यत्राशंस्यमानं बहु, गृहारामादिभेदेन भिद्यते त्वाशंस्यमानमसदाशिषि, सदाशिषि तु परमपुरुषार्थः। स चैक एव। सत्यम्—तस्य मोक्षत्वेनैकत्वेऽपि संसारनिवृत्तिब्रह्मप्राप्तिरूपानिष्टनिवृत्तीष्टप्राप्तिभेदेन, सालोक्यसारूप्यसायुज्यादिभेदेन च भिन्नत्वादनेकत्वम्। अनुदिनमनुवर्त्तमानाया अस्या आशिषोऽवच्छेदकदिनभेदाद्वा बहुवचनोपपत्तिः। यद्वा—परमपुरुषार्थविषयिण्या आशिषः परमपुरुषार्थविषयताया इव तदुपायविषयताया अप्यौचित्यादुपायानां कर्मज्ञानादिभेदेन भेदाद्बहुवचनोपपत्तिः।

ज्ञानिनामप्युल्लङ्घितस्वधर्माणां परमपुरुषार्थलाभो न कदाचिद्घटेत। तस्मात्—"रतिः स्वधर्मे भूयाद्वः श्रेयश्चानुत्तमं ततः" इति स्वधर्मे रुचिमप्याशास्महे इत्यभिप्रायेणाह—स्वधर्मरक्षिका इति। स्वधर्मरुचिजनकत्वात्स्वधर्मरक्षकत्वम्। स्वशब्दः समभिव्याहृततच्छब्दोपस्थाप्यपरः। नैष्ठिकादीनां वो वर्णत आश्रमतो वा यो धर्मस्तस्य रक्षिकाः। अस्मदाशीर्गोचराणां वः स्वधर्मरक्षणमक्लेशेन सिद्ध्येदेव, तदजितेन्द्रियाणामस्माकं कथं स्वधर्मरक्षणं घटेतेति न चिन्ता कार्येति व्यज्यते। यद्वा—यथा फलेषु परमपुरुषार्थरूपमोक्षस्य मुख्यत्वादिदं वो भूयादित्याशासे, तथा तदुपायेष्वस्यैव स्वधर्मस्य मुख्यतयाऽत्र वो रुचिमाशासे। तस्मात्स्वधर्मानतिलङ्घनं मुख्यमिति युष्माभिर्ज्ञातव्यमित्यपि व्यज्यते। शास्त्रसम्मताः—

---

त्तिमाशङ्क्य परिहरति—नन्वित्यादिना। अनेकत्वमिति। तथा च विषयबहुत्वादाशिषां बहुत्वमिति भावः। अवच्छेदकदिनभेदादिति। ईश्वरेच्छाया नित्यत्वेन तथोक्तिः। मध्यमः पक्षोऽयं मध्यमः, आरोपितं हीदं बहुत्वम्, न चैतद्विवक्षया कश्चिद्विशेषः। यद्वेति। औचित्यादिति। फलाशंसायामुपायस्यापि विधेयतया विषयत्वसम्पत्तिरिति भावः। वस्तुतस्तु परमपुरुषार्थावलम्बिन्या इव तदुपायावलम्बिन्या अप्याशिषः सदाशीःपदवाच्यतया बहुवचनोपपत्तिरिति बोध्यम्। ज्ञानसंरक्षिका इत्यनुक्त्या स्वधर्मरक्षिका इत्युक्तेराशयं प्रकाशयन्नाह—ज्ञानिनामिति। आशिषः कथं स्वधर्मरक्षकत्वमत आह—स्वधर्मे रुचिमिति। रक्षिका इति निर्देशेन व्यज्यमानमर्थविशेषमाह—अस्मदिति। कर्म-

एव 'यत्र पुष्पशरशास्त्रकारिके'ति श्रीहर्षः प्रायुङ्क्त बालभारते भीष्मपर्वणि। अमरश्च "मोहविद्रोहकारक" इति। सदाशिषः—सत्याश्च ता आशिषश्च ताः। "सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः। सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवे"दित्यादिरूपा वाच्याः। वाच्या इति पत्रिकालेखनशिष्टाचाररीत्योक्तिः। यद्वा—सदा आशिष इति पदच्छेदः सदा—निरन्तरं स्वधर्मरक्षिका आशिषो वाच्या इत्यन्वयः॥ ६॥

सम्यक् मताः सम्मताः, उत्तमत्वेन शास्त्राभिमता इति यावत्। अखिलाशिषां पूरयितारं श्रीमन्नारायणमनुस्मृत्य प्रयुज्यमाना आशिषः फलाविनाभूता इत्यभिप्रेत्याह—श्रीमन्नारायणस्मृत्या सहिता इति। सर्तृसर्पयोरभेदेऽप्यवतरणसमाधितस्तथोक्तिः। अवगतभगवच्छेषत्वैकवेषात्मस्वरूपयाथात्म्येन पुरुषेण, अहमेनमाशिषाऽनुगृह्णामीत्यहंभावं विना सकलफलदं श्रीमन्नारायणमनुसन्धायाऽऽशिषः प्रयोज्या इत्ययमर्थो व्यज्यते॥ ३। ४। ५। ६॥

ज्ञानभक्तिषु त्रिषूपायकोटिनिविष्टेषु कर्मणो रक्ष्यत्वनिर्देशाद्व्यज्यमानमर्थमाह—यथेति। इत्यभिप्रेत्याहेति। एतेन नारायणस्मृत्या सहिता इति निर्देशस्य प्रयोजनं ज्ञापितम्। मूले नारायणस्य श्रीमत्त्वेन विशेषणादखिलाशिषां पूरयितृत्वं समुत्तम्भ्यते। नित्ययोगे मतुप्॥ ३–४–५–६॥

---

एकाग्रेणैव मनसा पत्रीलेखः सहेतुकः।
अवधार्योऽयमखिलैः सर्वजीवहितावहः॥ ७॥

एकाग्रेणेति। सर्वजीवहितावहोऽत एव सहेतुकोऽयं पत्रीलेखः। अखिलैः—सर्वैर्मदाश्रितैः। एकाग्रेण—अव्यग्रेणैव मनसाऽवधार्य इत्यन्वयः। कार्यान्तरव्य-

एवमाशिषं विधाय लेखार्थस्यानुपेक्षणीयत्वायावधार्यतामादिशति—एकाग्रेणेति। लेखो—लिखितम्, कर्मणि घञ्। पत्र्यां यद्विलिखितं तदवधार्यम्। तदर्थोऽवधार्य इति यावत्। ननु—विफलो लेखो नावधार्य इत्याशङ्कायामाह—सहेतुक इति। सफल इत्यर्थः। फलस्य साधने प्रयोजकत्वात् (प्रवर्त्तकत्वात्) हेतुशब्देन निर्देशः। कस्य किं फलमित्यत्राह—सर्वजीवहितावह इति। यद्वा—निष्प्रमाणोऽयं लेखः कथमवधार्य इत्यत्राह—सहेतुक इति।

भावार्थकत्वेऽनन्वयादाह—कर्मणि घञिति। नहि लेखनक्रिया प्रकृतेऽवधार्या। ननु—लेखनकर्मीभूतस्याक्षरराशेर्वा क प्रकृतेऽवधार्यतेत्यत आह—तदर्थोऽवधार्य इति यावदिति। ननु—निष्फलत्वशङ्का सहेतुकत्वोक्त्या कथं शाम्येदित्यतः सहेतुक इत्यस्यार्थमाह—सफल इति। हेतुशब्दस्य फलपरत्वे युक्तिमाह—फलस्येति। कस्य किं फलम्—कस्य पुरुषस्य किं फलमित्यर्थः। सर्वजीवहितावह इत्यनेनैव विफलत्वशङ्कानिरासे सम्भवति, सहेतुक इत्यस्य सामान्यतः सफलत्वपरतया

अमनस्तयाऽवधारणं त्वनवधारणमेव । तथा च श्रुतिः—"अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौष"मिति । "मनसा ह्येव पश्यति मनसा शृणोती"ति। मनो हि विशेषतश्चलम् । आह च गीतायाम्—"चञ्चलं हि मनः कृष्ण! प्रमाथि बलवद्दृढ"मिति । "असंशयं महाबाहो ! मनो दुर्निग्रहं चल"मिति च । तदस्यावधानमवश्यमपेक्षत इत्यभिप्रायेणैवकारः । सर्वेषामपि जीवानां हितम्–श्रेय आवहति–सम्पादयतीति सर्वजीवहितावहः । हेतुना–अनन्तरश्लोकद्वयवक्ष्यमाणेन सहितः सहेतुकः । ननु—"पत्रं पत्री च पत्रिका" "वर्णदूतः स्वस्तिमुखो लेखो वाचिकहारक" इति हारावल्यादिकोशात् पत्रीलेखशब्दयोरेकार्थत्वं प्रतीयते, तथा सति तु पुनरुक्तिदोषापत्तिरिति चेन्न, अत्र लेखशब्दे भावे घञो विवक्षितत्वात् । ततश्च पत्र्या लेख इति षष्ठीतत्पुरुषः । कर्मणि घञि तु लेखशब्दः पत्रवचनः इति ॥ ७ ॥

---

हेतुश्चात्र ज्ञापकः, सप्रमाण इति यावत् । ननु किं फलमत आह—सर्वजीवहितावह इति । जीवः–बद्धश्चेतनः, तस्य यद्धितं तस्य सर्वस्याऽऽवह इत्यर्थः । बद्धस्य हितं हि मोक्षः, तमावहत्यमुत्र; इह तु तदुपयोगि सत्सङ्गप्रभृति सर्वम् । तदयं सर्वजीवहितावहः । सर्वेषां जीवानां हितावह इति केचित् । यद्यपि शास्त्राधिकारिणोऽपि जीवा विविधा बुभुक्षवः, न ते हितमाप्नुवन्त्यनेन; तथापि तेऽपि श्रवणमहिम्ना क्रमशः प्रशिथिलफलान्तराभिलाषाः क्रमेण हितमाप्नुयुरिति बोध्यम् । एतदवधारणे मनसैकाग्रेण भाव्यमित्याह—एकाग्रेणेति। तेन लेखार्थस्य सूक्ष्मत्वं व्यञ्जितम् । अखिलैः–प्रकरणादाश्रितैरखिलैः । यद्वा—मया आश्रितान्व्याजीकृत्यायं लेखः प्रस्तुतः, यदि रुचिः, आश्रिता वाऽनाश्रिता वा, अखिलैरवधार्यतां नामेति भावः ॥ ७ ॥

---

व्याख्यानमनुचितमित्यस्वरसादन्यथा व्याचष्टे—यद्वेत्यादिना । सर्वशब्दस्य हितशब्देनान्वयमभिप्रेत्य व्याचष्टे—जीव इत्यादिना । अव्यवहितेन जीवशब्देनान्वयमाश्रित्य व्याचष्टे—सर्वेषामिति । अस्मिन्नर्थेऽसाङ्गत्यमाशङ्क्य परिहरति—यद्यपीत्यादिना । शास्त्राधिकारिणोऽपि जीवा इति । सत्यपि सर्वशब्दसमभिव्याहारे पश्वादितिर्यग्योनिगतानां जीवानां सङ्ग्रहो न घटते, शास्त्रेष्वनधिकारात् । शास्त्राधिकारवतां मनुष्याणां त्वविशेषेण सङ्ग्रहो भवत्येव, सर्वशब्दसमभिव्याहारात् । तथा च विविधानामधिकारिणामनेन कथं हितमिति शङ्कितुरभिप्रायः । ईदृशशङ्कापरिहारक्लेशमभिप्रेत्यैव केचिदित्युक्तिः । प्रकरणादिति । आश्रितानधिकृत्य खलु लेखः प्रवृत्तः, आशिषश्चाश्रितानधिकृत्यैव्यवहितमेव प्रवृत्ताः यावयोध्येत्यादिना, तत्, आश्रितैरखिलैरित्येव समुचितमिति भावः । नैतद्भगवतो हार्दम्, यद्यप्यर्जुनं व्याजीकृत्य गीता प्रवर्तिता, भगवतो हार्दं तु सर्वे समवधारयन्तु तत्त्वार्थमित्येव, यद्वदिहाप्याश्रिता व्याजमात्रम्, सर्व एवेममुपदेशमवहितेन मनसाऽवधारयन्त्वित्येव भगवतो हार्दमित्याशयेन व्याचष्टे—यद्वेत्यादिना ॥ ७ ॥

---

ये पालयन्ति मनुजाः सच्छास्त्रप्रतिपादितान्।
सदाचारान्सदा तेऽत्र परत्र च महासुखाः ॥ ८ ॥
तानुल्लङ्घ्यात्र वर्तन्ते ये तु स्वैरं कुबुद्धयः।
त इहामुत्र च महल्लभन्ते कष्टमेव हि ॥ ९ ॥

हेतुमेवाह द्वाभ्याम्—य इति। ये मनुजाः—मनुष्याः। सद्भिः—ईश्वरसत्यत्वप्रतिपादकैः शास्त्रैः प्रतिपादितास्तान्। शासतीति शास्त्राणि—वेदाः, तदर्थप्रकाशकानि स्मृतिपुराणादीनि च, तैरास्तिकग्रन्थैः प्रतिपादितान्। यथाधिकारं कर्तव्यतयोपदिष्टानित्यर्थः। 'शास्त्रं ग्रन्थनिदेशयो'रिति हैमः। सदाचारान् सदा—निरन्तरं पालयन्ति, ते अत्र—अस्मिँल्लोके। परत्र—परस्मिँल्लोके च। 'सप्तम्यास्त्रल्' इति सर्वनाम्नस्त्रल्। महासुखाः—महत्—ब्रह्मादिसुखादप्यधिकं सुखं येषां ते महासुखाः। तथाविधा भवन्तीति शेषः।

अत्र सदाचारानिति सन्तः—शोभनाः शास्त्रलोकाविरुद्धा आचाराः—धर्माः। सतामाचारा इति वा, तानिति बोध्यम्। "सदाचारो मतो धर्मः सन्तस्त्वाचारलक्षणा" इति मोक्षधर्मोक्तेः। श्रुतिस्मृत्युदितेषु बहुविधधर्मेषु क्वचिद्देशकालादिवैगुण्ये शिष्टाचारस्यैव धर्मविषयनिर्णायकत्वादिति भावः। तथा च भारते धर्मराजवाक्यम्—"तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना नैको मुनिर्यस्य मतं प्रमाणम्। धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्था" इति। तर्कः—स्वमतिकल्पित ऊहः। अप्रतिष्ठः—अनैकान्तिको निर्णयशून्यो वा। तथा श्रुतयोऽपि विभिन्नाः—परस्परविरुद्धार्थवादिन्यः। यथा—"अक्षय्यं ह वै चातुर्मास्ययाजिनः

अवधृतस्य प्रयोजनमनुष्ठानम्, तद्वर्त्तितव्यमखिलैर्यथावधृतमिहोदिते सदाचार इति वक्ष्यन्सदाचारपरिपालनतदतिलङ्घनयोरर्थानर्थावाह—द्वाभ्याम्। अत्र मनुजा इति शास्त्राधिकारिणो लक्ष्यन्ते। तेन देवादीनामपि सदाचारपरिपालनतदुल्लङ्घनाभ्यामर्थानर्थावुक्तौ। यश्च तदानीमनुभूयमानो यश्चाधिकारक्षयादनन्तरभावी तौ देशावभिप्रेत्य अत्र परत्र इति निर्देशो देवेष्वपि घटते। यद्वा—मनुजाः—मनुष्याः। ये सच्छास्त्रप्रतिपादितान्सदाचारान्पालयन्ति ते

मनुजशब्देन देवा यद्युपलक्ष्यन्ते, तदाऽत्र परत्रेत्यनन्वितमिति शङ्कां परिहरति—यश्चेति। ये सदाचारान्पालयन्ति ते मनुजाः, त एवात्र परत्र च महासुखा इति वाक्यभेदेनान्वयमभिप्रेत्य व्याचष्टे—यद्वेति। अस्मिंश्च व्याख्याने मनुजा इति निर्देशस्य साफल्यं सिध्यति। उद्देश्यसमर्पकतया व्याख्याने

सुकृतं भवति" "नास्त्यकृतः कृतेन" "कर्मचितो लोकः क्षीयते"। "मा हिंस्यात्सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेत"। "उदिते जुहोति" "अनुदिते जुहोति"। "अतिरात्रे षोडशिनं गृह्णाति" "नातिरात्रे षोडशिनं गृह्णाति"। "सदेव सोम्येदमग्र आसीत्" "असदेवेदमग्र आसीत्"। "नेह नानास्ति किञ्चन" "द्वा सुपर्णा सयुजा सखायौ" इति। परस्परविरोधप्रशमनपूर्वकमेकाभिप्रायकत्वावधारणं मीमांसावसेयमतिगहनमिति भावः। मुनिः–स्मृतिभाष्यादिभिस्तद्व्याख्याता ऋषिरप्येको न भवति, किन्त्वनेके; अतो यथास्वस्वभावं परस्परविरुद्धार्थवादिन इत्यर्थः। महाजनः–महांश्चासौ जनश्च महाजनः। साधुपुरुष इत्यर्थः। "आपद्यपि स्वधर्मं यो न जह्यादास्तिको विदन्। दृढभक्तो हरेः प्रोक्तः स श्रेष्ठः पुरुषो महा"-निति विष्णुधर्मोत्तरे तल्लक्षणमुक्तम्। अत एव भगवानप्याह—"यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः। स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते" इति। शेषं स्पष्टम्। सदाचारलक्षणमुक्तं काशीखण्डे—"विद्वेषरागरहिता अनुतिष्ठन्ति यं मुने!। विद्वांसस्तं सदाचारं धर्ममूलं विदुर्बुधाः। प्रथमं धर्मसर्वस्वं प्रोक्ता यन्नियमा यमाः।

---

मनुजाः, अन्ये तु पशव एव। एवं त एवेहामुत्र च महासुखा इति भावः। सत्त्वप्रधानानधिकृत्य प्रवृत्तं शास्त्रं सच्छास्त्रम्, ईश्वरसत्यत्वप्रतिपादकं शास्त्रं सच्छास्त्रमित्यपरे। तेन प्रतिपादितान्सदाचारान्, सन्तः–दैवीं सम्पदमभिजातास्तेषां धर्मान्–कामसङ्कल्पवर्जिताननभिद्रोहप्रधानान्स्वस्ववर्णाश्रमतो विशेषतश्च प्राप्तान्विधिनिषेधरूपान्धर्मान्। सदा–प्राप्तसमयेषु। अहरहरनुष्ठीयमानेष्वालस्यादिना दिनमेकमपि विच्छेदो नोचित इति भावः। पालयन्ति–आचारस्य पालनं नामात्यागः; अनुतिष्ठन्तीत्येतत्। तेऽत्र परत्र च महासुखाः। तेषामाचरणं हि कामसङ्कल्पवर्जितम्। ते हि यत्किमपि वैदिकं तदुपयोगि लौकिकं वा सर्वमेव स्वशेषिणः सर्वसुहृदः परमकारुणिकस्य समाराधनं मन्यन्ते, नापि सङ्कल्पन्ते 'अहमिदं करोमि' इति, किन्तु–"यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम्॥" इति गीतोक्तप्रकारेण स्वशेषभूतेन मया स्वस्मै स्वयं भगवान्कारयतीति खलु सङ्कल्पन्ते।

---

तु व्यर्थस्तन्निर्देशः। देवाद्युपलक्षकताश्रयणेन क्लेशश्च। अपर इति। अभिचारादिशास्त्रमपीश्वरप्रतिपादकं भवत्येवेति न तद्व्यावृत्तिरित्यस्वरसादपर इत्युक्तिः। कामसङ्कल्पवर्जितानिति। दैवीं सम्पदमभिजातानामात्मस्वरूप एव रुचिस्तेषां च कामसङ्कल्पवर्जिता एवाचाराः स्युः। अनभिद्रोहप्रधानानिति। सर्वभूतसौहार्दाविरोधिन इत्यर्थः। तेन पशुविशसनाद्यगर्भानिति सिद्धम्। सदेत्यस्य भावमाह—प्राप्तेति। नियतकालस्य धर्मविशेषस्य सर्वसमयावच्छेदेनानुष्ठानमसम्भावितं, तत्कथमुच्यते सदेतीति शङ्का प्रत्युक्ता। इह मुख्यार्थस्याऽनन्वयादाह—पालनं नामात्याग इति। प्रतीकमुपादत्ते—तेऽत्र परत्र च महासुखा इति। अत्र–साधनानुष्ठानदशायाम्। परत्र–फलानुभवदशायाम्। महासु-

अतस्तेष्वेव वै यत्नः कर्त्तव्यो धर्ममिच्छते"ति । ते च द्वादश द्वादश विभज्योक्ताः श्रीमद्भागवते—श्रीभगवानुवाच—"अहिंसा सत्यमस्तेयमसङ्गो ह्रीरसञ्चयः । आस्तिक्यं ब्रह्मचर्यं च मौनं स्थैर्यं क्षमाऽभयम् ॥ शौचं जपस्तपो होमः श्रद्धातिथ्यं मदर्चनम् । तीर्थाटनं परार्थेहा तुष्टिराचार्यसेवनम् ॥ एते यमाः सनियमा उभयोर्द्वादश स्मृताः । पुंसामुपासितास्तात ! यथाकामं दुहन्ति हि" इति । अत्र शौचस्य वाह्याभ्यन्तरभेदेन द्वैविध्यान्नियमानां द्वादशत्वमिति ज्ञेयम् । सदाचारेष्वपि स्ववर्णाश्रमोचिता एवाऽऽचाराः पालनीयाः । तथा चाह मनुः—"श्रुतिस्मृत्युदितं सम्यङ्निबद्धं स्वेषु कर्मसु । धर्ममूलं निषेवेत सदाचारमतन्द्रित" इति ॥ ८ ॥

तानिति । ये तु पुरुषाः कुबुद्धयः—हिंसादिरुचयः सन्तः । तान्—सदाचारान् । उल्लङ्घ्य—त्यक्त्वा । अत्र—लोके । स्वैरम्—यथेच्छं वर्तन्ते । सामान्ये नपुंसकत्वं क्रियाविशेषणत्वाद्द्वितीयान्तं च । ते—पुरुषाः इह—अस्मि-

---

तस्मात्कथमिह परत्र वा तेषामसुखाशङ्का । "नहि कल्याणकृत्कश्चिद्दुर्गतिं तात ! गच्छति । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥" ये पुनर्भोगैश्वर्यप्रसक्ता नान्यदस्तीति वादिनो वेदवादरताः; तेषां सुखाभासलुब्धानां सादिहामुत्रान्ततो दुःखानुषङ्गः । सर्वलोकमहेश्वरः सर्वभूतसुहृदनेन कर्मणा समाराध्य इत्यभिसन्धिमतां न कदाचित्कुतश्चिदुद्वेगः । सर्वतस्ते महासुखाः । उक्तं च—"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥" इति ।

---

खाः—प्रभूतसुखाः । सुखे प्रभूतत्वं च दुःखानुपहतत्वम् । तेषां तथात्वमुपपादयति—तेषामित्यादिना । कदाचिद्विच्छेदेऽपि न दुःखशङ्केत्याह—नहीति । अन्येषामतथात्वमाह—ये पुनरिति । अत्र गीतावचनान्यंशतो वाक्यरूपेण यथायोग्यं योजितानि विदुषामानन्दविशेषाय । अन्तत इति । साधनदशायां शारीरायासादिना, साध्यदशायां च पातभीत्या दुःखानुषङ्गो भवेदेवेति भावः । दैवीं सम्पदमभिजातस्य सात्त्विकान्धर्माननुतिष्ठतस्तु न तस्यावकाश इत्युपपादयति—सर्वेति । ननु—निष्कामकर्मा-

---

१ अहिंसा—अभूतद्रोहचिन्ता । सत्यम्—हितावहं वचः । अस्तेयम्—मनसापि परस्वाग्रहणम् । असङ्गः—क्वाप्यनासक्तिः । ह्रीः—अकर्मसु जुगुप्सा । असञ्चयः—अश्वस्तनविधानेन यथोचितपरिग्रहः । आस्तिक्यम्—शास्त्रार्थविश्वासः । ब्रह्मचर्यम्—अष्टधा स्त्रीसङ्गराहित्यम् । मौनम्—वृथालापवर्जनम् । स्थैर्यम्—अचापल्यम् । क्षमा—तितिक्षा, दुःखसम्मर्श इति यावत् । अभयम्—स्वस्मादन्येषां भयाभावः । शौचम्—बाह्यमाभ्यन्तरं चेति द्विविधम् । तत्र बाह्यं स्नानादितः । आन्तरं मनःशुद्ध्यादितः । जपः—मन्त्रावृत्तिः । तपः—शास्त्रीयक्लेशः । होमः—पञ्चयज्ञादिविधिः । श्रद्धा—चिकीर्षितविषया त्वरा । आतिथ्यम्—अतिथिभोजनम् । मदर्चनम्—ममाराधनम् । तीर्थाटनम्—तीर्थयात्रा । परार्थेहा—परोपक्रिया । तुष्टिः—यदृच्छालाभेनाप्यलंबुद्धिः । आचार्यसेवनम्—शीघ्रं तद्वचोऽवधारणपूर्वकं तत्परिचर्यायां तत्परता । उभयोः—लोकयोर्ये स्मृतास्ते यमा नियमाश्च । यद्वा—उभयोः—प्रवृत्तनिवृत्तयोः । मुमुक्षोर्यमा मुख्याः सकामस्य नियमा मुख्याः स्मृता इत्यर्थः । अत्र हेतुमाह—हि—यस्मात् । उपासिताः—सेविताः सन्तः, पुंसाम्—प्रवृत्तानां निवृत्तानां च । यथाकामम्—कामानुसारेण । मोक्षमभ्युदयं च दुहन्तीति श्लोकार्थः ॥

ल्लोके। अमुत्र–परलोके च। महत्–अनिवार्यम्। कष्टम्–दुःखं लभन्ते। हीति निश्चये। तथाचोक्तं श्रीभगवद्गीतायाम्—"यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः। न स सिद्धिमवाप्नोति न सुखं न परां गति"मिति। श्रीमद्भागवते चोक्तम्—"वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे। नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः। नाचरेद्यस्तु वेदोक्तं स्वयमज्ञोऽजितेन्द्रियः। विकर्मणा ह्यधर्मेण मृत्योर्मृत्युमुपैति स" इति। "यदसौ शास्त्रमुल्लङ्घ्य स्वैरचार्यार्यगर्हितः। अवर्तत चिरं कालमघायुरशुचिर्मलात्। तत एनं दण्डपाणेः सकाशं कृतकिल्बिषम्। नेष्यामोऽकृतनिर्वेशं यत्र दण्डेन शुध्यति" इति च। मलं–स्वैरिण्यन्नादिकम्। अत्तीति मलात्। अकृतनिर्वेशम्–अकृतप्रायश्चित्तम्। एनम्–अजामिलम्। याज्ञवल्क्यश्चाह—"विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति" इति॥ ९॥

---

कुबुद्धयः–शब्दादिविषयप्रवणाः। तानुल्लङ्घ्य–सात्त्विकधर्मान्विहाय। स्वैरम्–यथाभिलषितम्। अवधूय भगवदाराधनभावं फलविशेषसाधनतयैव तेषु तेषु कर्मसु प्रवर्त्तन्ते ये वेदवादरतास्ते द्रव्यदेशकालवैगुण्येन कदाचिदिहैवानर्थं, कथञ्चित्प्राप्यापि यथाभिलषितं किमपि सुखाभासं देशान्तरगतो वृषभ इव तत्रत्यानां भारवाही पशुर्भूत्वा सीदति पुनरधःपतनभीत्या चेति भावः।

यद्वा—ये मुमुक्षामात्रेण प्राप्तमपि भगवदाराधनरूपं निजनिजवर्णाश्रमाद्युचितं सदाचारमवधूय स्वैरं किंपुनः कर्मणा ज्ञानविरोधिनेति यथा निजमतिविलासं प्रवर्त्तन्ते ते उभयतो हानेरिहामुत्र च कष्टं लभन्त इति भावः। एतेन—मुमुक्षोरपि विना कर्मनिष्ठां सहसैव ज्ञाननिष्ठा दुर्लभेति सिद्धम्। उक्तं च—"न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते। न च सन्न्यसनादेव सिद्धिं समधिगच्छति॥" इति॥ ८॥ ९॥

---

नुष्ठाने सर्वतः सुखम्, सकामकर्मानुष्ठाने सर्वतो दुःखं भवति, तदवधूय कामनां निष्कामाः सात्त्विका धर्माः काले कालेऽनुष्ठेया इत्येतावदत्रोक्तं भवति, नैतावता तेषां मुमुक्षुभिरवश्यानुष्ठेयत्वं सिध्यति, यदस्त्येवाशङ्कावकाशः, मुमुक्षूणां किं कर्मणा सकामेन वा निष्कामेन वा ?, स्वरूपतस्तु त्याज्यमेव तत्, ज्ञान एव प्रवर्ततामिति, तस्मादिमां शङ्कां परिहरन्प्रकारान्तरेण व्याचष्टे—यद्वेति॥ ८॥ ९॥

**अतो भवद्भिर्मच्छिष्यैः सावधानतयाऽखिलैः ।**
**प्रीत्यैतामनुसृत्यैव वर्त्तितव्यं निरन्तरम् ॥ १० ॥**

अत इति । अतः—अस्माद्धेतोः । मच्छिष्यैरखिलैर्भवद्भिः । सावधानतया—अप्रमादेन । प्रमादस्य मृत्युरूपत्वादिति भावः । तदुक्तं सनत्सुजातीये—"प्रमादं वै मृत्युमहं ब्रवीमि तथाऽप्रमादममृतत्वं ब्रवीमि । प्रमादाद्वायसुराः पराभवन्नप्रमादाद्वै ब्रह्मभूता हि देवा" इति । अत एवोक्तं भगवता फणीन्द्रेण—"त्वमेतच्छ्र-

---

अवधार्योऽयमखिलैरित्यादिष्टस्यावधारणस्य फलमाह—अतो भवद्भिरिति । अतः—यतः सदाचारपरिपालने महानर्थः तदतिलङ्घने महाननर्थश्च तत एवैतामनुसृत्यैव वर्त्तितव्यम् । सदाचारानवगमयन्तीमिमां पत्रीमनुसृत्यैव वर्त्तितव्यम् । एतदादिष्टाः सदाचारा अवश्यमनुष्ठेया इति यावत् । यद्यपि विविधाधिकारिपरिपूर्णे जगति न सर्व एव सात्त्विकधर्मपरायणाः; सन्ति चार्थार्थिनः सहस्रशः न तानधिकारिणोऽद्य वयमादिशामः । किन्तु—"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥" इत्युक्तप्रकारेण ये परमपुरुषकटाक्षविशेषपात्रभूतास्तानादिशाम इत्यभिप्रायेणाह—मच्छिष्यैरिति । अखिलैरित्यनेन नैकोऽप्यस्मत्कटाक्षविशेषपात्रभूतेष्वनधिकारीति व्यज्यते ।

इह खल्वनादौ संसारे सर्वेषामेव कर्तृत्वभोक्तृत्ववासना काचिचिरतरानुवृत्ता प्रबला । "इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् । इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ असौ मया हतः शत्रुर्हनिष्ये चापरानपि । ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ यक्ष्ये दास्यामि मोदिष्ये" इति स्वतन्त्रात्माभिमानतः सुदृढमूला च । सेयं वासना फलसङ्गकर्तृत्वाद्यभिमानरहितं सतामाचारं कदाचिदभिभवेदपि, तस्मादवहितैराचरणीयोऽयमाचार इत्यभिप्रायेणाह—सावधानतयेति । भगवच्छेषतैकलक्षणनिष्कृष्टात्मस्वरूपेऽप्रमादैर्भाव्यम् । यदि कदाचित्तत्रानवधानं सेयं पार्श्वपरिवर्तिनी स्वतन्त्रात्मवासनापिशाचिका सहसाऽभिभवेदिति भावः । पित्तोपहतस्य क्षीरमिव स्वादुतममेव सदाचरणमादिष्टम् । तत्प्रीत्या सेव्यतामित्याह—प्रीत्येति । यस्तु फलसङ्गेन कर्म करोति तस्य यावत्फलसिद्धि तदसिद्ध्याशङ्कया दुःखम् । यदा तु तत्सिद्धिः, अनुष्ठितोपायाननुरूपत्वचिन्तया तत्क्षयचिन्तया च दुःखम् । यश्च कर्तृत्वसङ्गेन करोति, तस्य "ममेदं कर्मासौ निहन्ति" इति परतो दुःखम् । यस्तु फलसङ्गं परित्यज्य भगवान्स्वतनुनाऽनेन

---

फलमाहेति । अनुष्ठानलक्षणं फलमाहेत्यर्थः । ननु—सदाचारपरिपालने महानर्थः, तदतिलङ्घने महाननर्थश्चेत्येतत्सत्यम्, तावतैतामनुसृत्यैव कुतो वर्तितव्यमित्याशङ्कायामाह—सदाचारानवगमयन्तीमिति । फलितार्थमाह—एतदिति । ननु—सदाचारश्चेदनेनावबोध्यते, सर्वैरेव सद्भिरयं लेखोऽनुसरणीयः, तत्कुतः सङ्कोचो मच्छिष्यैरिति शङ्कायां मच्छिष्यैरित्यस्याशयं प्रदर्शयन्नवतारयति—यद्यपीत्यादिना । परमपुरुषेति । ये परमपुरुषकटाक्षविशेषपात्रभूतास्ते सर्वे मच्छिष्या एवेति भावः । स्वस्वरूपदृष्ट्यैतत् । अखिलैरित्येतत्रातिप्रयोजनकमिति शङ्कायां तस्याशयविशेषव्यञ्जकतया समयोज-

द्धया राजन्नप्रमत्तो वचो मम। ज्ञानविज्ञानसम्पन्नो धारयन्नाशु सिद्धयसी"ति। प्रीत्या–महासुखप्राप्त्युत्साहेन। एताम्–सदाचारप्रतिपादिकां शिक्षापत्रीम्। अनुसृत्य–एतदुक्तमर्थमवधार्य। तदनुसारेणेत्यर्थः। निरन्तरम्–प्रत्यहम्। वर्त्तितव्यं नत्वन्यथेति। अत्रैकं विधिमुखेनोपदेशवाक्यम् ॥ १० ॥

चेतनेनेदं कर्म करोतीति सङ्कल्प्य करोति तस्य न फलासिद्धिशङ्कया न तत्क्षयशङ्कया नानुष्ठिताऽननुरूपत्वचिन्तया न स्वप्रयत्नभञ्जकपराशङ्कया वा दुःखम्। क्रियमाणेन कर्मणाऽऽराध्यश्च भगवान्सर्वसुहृत्; तदाराधनं सुखरूपम्; तस्मात्सदाचारे प्रीतिरेव तु स्वारसिकीति भावः। सदाचारश्च फलसङ्गकर्तृत्वत्यागपूर्वकं भगवदाराधनतापन्नं कर्मेति प्रागेवोक्तम्। निरन्तरम्–आपद्यपीति यावत् ॥ १० ॥

कथामाह—अखिलैरित्यनेनेति। ननु–न दुष्करमेतल्लेखानुसारेण वर्तनम्, तदर्थं सावधानतयेति शङ्कां परिहरन्नवतारयति—सहसेत्यादिना। प्रीत्येत्यस्याशयमाह—पित्तेति। प्रियरूपतामुपपादयति—यस्त्वित्यादिना ॥ १० ॥

---

**कस्यापि प्राणिनो हिंसा नैव कार्याऽत्र मामकैः।**
**सूक्ष्मयूकामत्कुणादेरपि बुद्धया कदाचन ॥ ११ ॥**

इह खलु संसारसागरे स्वकृतविविधकर्मभिरेव मुहुर्निमज्योन्मज्जतां जीवानां तुरीयपुरुषार्थसमासादनमेव परमं निःश्रेयसमिति स्वाश्रितजीवानां तदेवास्त्वित्याशयेन मोक्षधर्मानेव प्राधान्येनाश्रित्यादौ चातुर्वर्ण्यस्य साधारणधर्मानाह—कस्यापीति। मामकैः–मम इमे मामका मच्छिष्यास्तैः सर्वैरपि। "युष्मदस्मदोरन्यतरस्यां खञ्चे"ति पाक्षिकोऽण्। "तवकममकावेकवचने" इति ममकादेशः। अत्र–लोके। कस्यापि–प्रकृतित्रयस्यापि। प्राणिनः–प्राणवृत्तिमतो जीवमात्रस्य। हिंसा–द्रोहः। नैव कार्या–नैव कर्तव्या। "न हिंस्यात्सर्वा भूतानी"ति स्मृतेः।

प्रीत्यैतामनुसृत्यैव सदाचारे वर्तितव्यमखिलैरस्मदीयैरित्यादिश्य; अथ सदाचारमादिशन्प्रवृत्तिनिवृत्तिरूपेण द्विविधयोराचारयोर्विहिताचरणतो निषिद्धनिवृत्तेः प्राधान्यमभिप्रेत्य,

ननु–निवर्तनायाः प्राथम्ये को हेतुः, प्रवर्तना तु प्रथमतः समुचिता, विधिनिषेधयोर्विधेः प्रथममुपस्थितेरिति शङ्कां परिहरन्ननन्तरश्लोकमवतारयति—प्रीत्यैतामित्यादिना। तत्रापि निवर्तनाविशेषस्य प्राथम्ये कारणमाह—निषिद्धेष्विति। विशिष्येति। यद्यपि "नाविरतो दुश्चरिता"दिति

एवं सामान्यतो जीवहिंसां निषिद्ध्य, लोके सूक्ष्माणां यूकामत्कुणादीनां वधे स्त्रीणां पुंसां च प्रायशः प्रवृत्तिर्दृश्यत इति सांसर्गिकदोषेण राजसतामसस्वभावदोषेण वा स्वकीयानां सा माभूदिति पुनर्विशेषतो निषेधति—सूक्ष्मयूकामत्कुणादेरपीति । सूक्ष्माः—सूक्ष्मदेहाः । यूकाः—केशकीटाः । मत्कुणाः—स्वेदजाः शय्याकीटाः । आदिशब्दाल्लिक्षामशकादिग्रहणम् । तस्यापि बुद्ध्या—बुद्धिपूर्वकं तु कदाचन—कापि हिंसा न कार्या । अबुद्धिपूर्वककृतपापेषु प्रायश्चित्तविधिप्राशस्त्यात् । तथा चोक्तमापद्धर्मेषु—"कृत्वा पापं पूर्वमबुद्धिपूर्वं पुण्यानि चेत्कुरुते बुद्धिपूर्वम् । स तत्पापं नुदते धर्मशीलो वासो यथा मलिनं क्षारयुक्त्ये"ति ।

तथा—"विहितं यदकामानां कामात्तद्द्विगुणं भवे" दिति स्मृत्या बुद्धिपूर्वककृतपातके तु प्रायश्चित्तद्वैगुण्यापत्तेः । याज्ञवल्क्यस्त्वाह—"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवेत् । कामतो व्यवहार्यस्तु वचनादिह जायत" इति । अत्र मिताक्षरा—अज्ञानाद्यदेनः—पापं कृतं, तत्प्रायश्चित्तैरपैति—गच्छति, न तु कामतः कृतम्, किन्तु तत्र प्रायश्चित्तविधायकवचनबलादिह—लोके व्यवहार्यो जायते, नच पापक्षयाभावे व्यवहार्यत्वमनुपपन्नम् । द्वे हि पापस्य शक्ती नरकोत्पादिका व्यवहारनिरोधिका चेति । तत्रेतरशक्त्यविनाशेऽपि व्यवहारनिरोधिकायाः शक्ते-

---

आदौ निषिद्धान्निवृत्तिरूपमाचारमुपदिशति । विहितातिलङ्घनान्निषिद्धाचरणं ह्यतिपापीयः । निषिद्धेषु हिंसायाः क्रूरकर्मणो महानर्थावहतया नितरां दुष्टत्वेन निवृत्तिरूपाचारे प्रथमं हिंसानिवृत्तिमादिशति—कस्यापीति । यद्यपि—अहिंसा साधारणो धर्मः "न हिंस्यात्सर्वा भूतानि" इत्यविशेषेण सर्वान्प्रति श्रुतेः । आह च विज्ञानेश्वरः "साधारणो धर्मोऽहिंसादिः" इति । तन्मुमुक्षून्प्रति विशिष्यायमहिंसोपदेशो व्यर्थः । तथापि बुभुक्षूणां स्वपरभेदवासनादूषितचेतसां प्रोन्मिषद्रागद्वेषवर्गाणां "असौ मां सम्पीडयति हन्म्येन"मिति सम्भाव्यते हिंसा प्रायः । नैतावताऽपहीयते तेषां बुभुक्षाधिकारानुरूप्यम् । ईदृशेष्वपि करुणया विदधाति च शास्त्रं प्रायश्चित्तं कथञ्चिदेनःपरिहाराय । मुमुक्षूणां पुनरिदमखिलं ब्रह्मात्मकमाकलयतामपेतविप-

---

श्रुतेर्दुश्चरितनिवृत्तेर्ज्ञानाङ्गत्वप्रतीत्या मुमुक्षून्प्रत्युपदेशः समुचितो नाम, तथापि दुश्चरितमात्रतो निवर्तनाया एव तदानीं समुचिततया विशिष्य हिंसानिषेधे न किञ्चित्स्वारस्यमिति भावः । समाधत्ते—तथापीति । बुभुक्षाधिकारानुरूप्यमिति । बुभुक्षा—स्वर्गादिकामना, सैवाधिकारः, तदानुरूप्यम्—तदनुगुणं वर्तनम्, तच ज्ञातृत्वकर्तृत्वभोक्तृत्वादिस्वात्मस्वरूपस्य प्रतिपत्तिः । यागाद्युपायानुष्ठानस्यानुपमर्देन व्यापारश्च । ब्रह्मात्मकमाकलयतामिति । बुभुक्षूणां यागाद्यनुष्ठाने प्रवर्तमानानां स्थिरात्मप्रतिपत्तिमात्रमपेक्ष्यते, न तु ब्रह्मात्मकत्वभावनम्, कर्तुर्भोक्तुः स्थिरस्यात्मनः प्रतिपत्तिमात्रेण

विनाशो नानुपपन्नस्तस्मात्पापानपगमेऽपि व्यवहार्यत्वं नानुपपन्नमिति । मोक्षधर्मेषु पराशरगीतायां चोक्तम्—"अज्ञानाद्धि कृतं पापं तपसैवाभिनिर्नुदेत् । बुद्ध्वा कृत्वा तु यः पापं शुभमेवानुतिष्ठति । प्रायश्चित्तं नरः कर्तुमुभयं सोऽश्नुते पृथ"गिति । तस्माद्बुद्धिपूर्वकं पापाचरणं सर्वथैव न कार्यमिति तात्पर्यम् ।

ननु—"आत्मने द्रुह्यतो द्रोहो न दोषाय भवेन्नृणा"मिति स्मृतेः स्वद्रोग्धृयूकादिवधे को दोष इति चेन्न, अस्याः स्मृतेः साङ्ग्रामिकक्षत्रियाणामाततायिवधाभ्यनुज्ञामात्रपरत्वात् । 'नाततायिवधे दोष' इत्युक्तेः । आततायिन उक्ताः कात्यायनेन—"उद्यतासिर्विषाग्निश्च शापोद्यतकरस्तथा । आथर्वणेन हन्ता च पिशुनश्चापि राजनि । भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः । एवमाद्यान्विजानीयात्सर्वानेवाततायिन" इति ।

---

मधियां द्वेषाप्रसक्त्या न घटेत कदाचिदपि हिंसा, यदि कदाचित्सङ्गदोषेण वासनावेगेन वा द्वेषोन्मेषेण किमपि हन्यात्; न्यपतदेवासौ सहसा गिरिशिखरत इव स्वाधिकृतात् । गिरिशिखरमिव दुरारोहं ब्रह्मात्मभावनम् । "दण्डवत्प्रणमेद्भूमावाश्वचाण्डालगोखरम्" इति भागवतेऽप्युक्तम् । नहीदं निगृहीतेन्द्रियाणामपि सुघटम् । प्रह्लादादीनामिव संस्कारविशेषलभ्यमेतत् । तत्, ईदृशं ब्रह्मात्मभावनं यूकाद्यल्पप्राणिपीडाऽपि भेदबुद्धिमूलकत्वेन सहसा निरुन्ध्यादेव । नात्र बुभुक्षोरिव प्रायश्चित्तेन प्रतीकारः सुकरः । तत्साधारणाप्यहिंसा मुमुक्षून्प्रति विशिष्यादिश्यते "यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः । हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ अद्वेष्टा सर्वभूतानाम्" इति मुमुक्षोः सर्वभूतेषु मैत्री विशेषतः शास्त्रेषु वर्णितेति विशेषज्ञापनाय वा विशिष्योपदेशः ।

अत्र मामकैर्हिंसा न कार्या–अत्रेति बुद्धिस्थनिर्देशः । राजसतामससमाकीर्णमिदं जगदुच्यते । स्थितैरिति शेषः । केवलराजसतामसभूयिष्ठेऽप्यत्र जगति ये समुन्मिषितसत्त्वाः संजातपरमपुरुषार्थरुचयः परमपुरुषं मामुपाश्रितास्तैरस्मदपाङ्गधारापात्रभूतैः कदापि हिंसा न कार्या । तद्धि नृशंसानां केवलतामसानां कर्मेति भावः । यद्वा—अत्रेति । न कार्येत्यन्वयः । जगदिदं राजसतामसभूयिष्ठं तत्संसर्गदोषेणात्र जगति स्यात्कदाचिद्धिंसायामन्वयः; सा कथ-

---

यागादिषु प्रवृत्तिसम्भवात् । मुमुक्षूणां तु "ब्रह्मार्पणं ब्रह्म हवि"रिति सर्वत्र ब्रह्मात्मभावपूर्वकमेव धर्मानुष्ठानं विहितमित्यवश्यमपेक्ष्यते ब्रह्मात्मकत्वभावनमिति भावः । स्वाधिकृतादिति । कर्मयोगादिव इत्यर्थः । प्रतीकारः सुकर इति । नह्यस्य तादृशकर्मयोगाधिकारः सुगम इति भावः । बुद्धिस्थनिर्देश इति । इह बुद्धिस्थं रूप राजसतामससमाकीर्णत्वम्, तदेवाह—राजसतामससमाकीर्णमिदं जगदुच्यत इति । स्थितैरिति शेष इति । एतच्च मामकैरित्यस्य विशेषणम् । व्याधगृहाङ्गणे राजकुमार इव तमःप्रचुरेऽप्यत्र जगति सत्त्वप्रचुरो मामकोऽपीतीदमाश्चर्यमिति भगवदाशय इति भावः । इदमेवोच्यते—केवलेत्यादिना । विना शेषपूरणं व्याचष्टे—यद्वेति । बुद्धिस्थं रूपं भगवच्छरीरभू-

सूक्ष्मजन्तुद्रोहफलमप्यन्धकूपाख्यनरकप्राप्तिरेवेत्युक्तं श्रीमद्भागवते—"यस्त्विह वै भूतानामीश्वरकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथो व्यथामाचरति, स परत्रान्धरूपे तदभिद्रोहेण निपतति, तत्र हासौ तैस्तैर्जन्तुभिः पशुपक्षिमृगसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्ये के चाभिद्रुग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीव" इति। "न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च। नारकाश्चानुगृह्णन्ति यां यां योनिमसौ गतः"॥ "तस्मान्न कस्यचिद्द्रोहमाचरेत्स तथाविधः। आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भय"मिति च॥ उपदेशो हि द्वेधा—कचिद्विधिमुखेन क्वचिन्निषेधमुखेन चेति। तत्रारम्भे निषेधमुखेनायमुपदेशः॥ ११॥

---

श्चिदत्र परिहरणीयेति भावः। "तत्सर्वं वै हरेस्तनुः" इति भगवतस्तनुभूते जगतीति वार्थः। निर्धारणे सप्तमी। कस्यापीत्यनेनान्वेति। किन्न जानीथ? योऽन्तरात्मा युष्माकं स एवाखिलस्य; तदेकात्मके जगति मित्रामित्रकथा कुतः, तदीदृशे जगति कस्यापि हिंसा न कार्या सरतेति भावः। यद्वा—अत्रेति प्रत्यक्षतो निर्देशः। दृश्यमानेषु मानुषादिकीटान्तेषु कस्यापि हिंसा न कार्येति भावः। कस्यापि प्राणिनः—कीट इति नाहिंस्यत्वानादरणनिमित्तम्, प्राणनमात्रं त्वहिंस्यत्वे पर्याप्तं निमित्तमस्तीति भावः।

ननु—शयनासनाटनादिषु घटेतैषामनिच्छतामपि सूक्ष्मतराणां यूकादिकीटानां हिंसा; तत्कथमिदमहिंसाव्रतमस्माभिः पालनीयमित्युद्विग्नान्प्रति विहितामेवाहिंसां विशदयति—सूक्ष्मेति। मामकैर्न कार्येत्यनुषङ्गः। सूक्ष्मतमानां यूकादीनां शयनाटनादिभिरनिच्छतोऽपि घटमाना हिंसा नात्र निषिद्धा; अपि तु बुद्ध्या प्रसक्तैवेति भावः। कदाचन—कदाचिदपीत्यर्थः। निद्राद्युपघातेऽपीति भावः। सूक्ष्मयूकामत्कुणादेः कस्यापि प्राणिनः कदाचनापि बुद्ध्या हिंसा न कार्येत्येकान्वयो वा। नातो वाक्यभेदादिदोषः॥ ११॥

---

सत्यमित्याशयेन व्याचष्टे—तत्सर्वमित्यादिना। बुद्धिस्थपरामर्शित्वाश्रयणापेक्षया प्रत्यक्षपरत्वमेव समुचितमित्यभिप्रायेण व्याचष्टे—यद्वेति। अत्रेति निर्धारणे सप्तमी, तदर्थमाह—दृश्यमानेष्वित्यादिना। कस्यापि प्राणिन इत्यस्य स्वारस्यमाह—कीट इत्यादिना। वाक्यभेदमीत्यैकान्वयपक्षमाश्रयति—सूक्ष्मेति॥ ११॥

**देवतापितृयागार्थमप्यजादेश्च हिंसनम्।**
**न कर्तव्यमहिंसैव धर्मः प्रोक्तोऽस्ति यन्महान्॥ १२॥**

एवं लौकिकीं हिंसां प्रतिषिध्य वैदिकीमपि तां प्रतिषेधति—देवतेति। देवतानां पितॄणां च यागो–यजनम्। तस्मै इति तदर्थमपि। चतुर्थी तदर्थेति समासः। अजादेः–अजः–मेष आदिर्यस्य तस्य, ग्राम्यारण्यमेषाश्वहरिणादिपशुमात्रस्याऽपि। चकारात्पक्षिणामपि। हिंसनम्–हिंसा। भावे ल्युट्। न कर्तव्यम्। कुत इत्यत आह—यदिति। यत्–यस्माद्धेतोः। अहिंसैव–कायवाङ्मनोभिर्भूतमात्राद्रोह एव, एवकारस्तु "या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते" इति स्मृतिभासवेदोक्तहिंसाव्यवच्छेदार्थः। महान्–परमो धर्मः प्रोक्तोऽस्ति। महर्षिभिरिति शेषः।

ऋग्वेदस्यैतरेयब्राह्मणे द्वितीयपञ्चिकायाः प्रथमद्वितीयाध्याययोः, यजुर्वेदस्य शतपथब्राह्मणे नवमे खण्डके च यागेऽप्यहिंसा प्रतिपादिता, सा ततः सविस्तरं बोध्या। एतच्च भारते मोक्षधर्मेषु जाजलितुलाधारसंवादे, तथा धर्मोञ्छवृत्तिसंवादे,

---

ननु—"वसेत्स नरके घोरे दिनानि पशुरोमभिः। सम्मितानि दुराचारो यो हन्त्यविधिना पशून्॥" इति वचनेन विधितो हिंसायामप्रतिषेधोऽवगम्यत इत्यत्राह—देवतेति। मामकैरिति पूर्वश्लोकादनुपज्यते। देवतापितृयागार्थमप्यजादेश्च हिंसनमप्रतिषिद्धं नाम; क्वचिद्विहितमपि, तदपि मामकैर्नैव कार्यम्।

ननु—चोदिता हिंसा कथं निषिध्यते? हिंसात्वादधर्म इति। न, श्रुतिचोदितस्तु धर्मः। श्रुतिचोदितः श्येनः कथमनर्थे गण्यते? प्राणिपीडनमिति। तुल्यं तदत्रापि। न; अस्ति महद्वैषम्यम्। यस्त्वालभते स्वर्गकामः क्रत्वर्थमग्निषोमीयं पशुम्; तेन काम्यमानः स्वर्गो न

---

अननुपङ्गे निषेधानुपपत्तिमालोच्याह—मामकैरितीति। न कर्तव्यमित्यस्याशयमाह—देवतेत्यादिना। शङ्कते—नन्विति। चोदितेति। श्रुत्येति शेषः। स्वतःप्रमाणभूता श्रुतिर्यद्विधत्ते न तन्निषेधार्हमिति भावः। निषेधे हेतुमाशङ्क्य प्रतिक्षिपति—हिंसात्वादधर्म इत्यनेन। हिंसात्वात्–प्राणिमारणरूपत्वात्। श्रुतिचोदितस्त्विति। तुशब्दादिदमेव धर्मलक्षणं नान्यदिति व्यज्यते। नात्राधर्मत्वं येनास्य निषेधः स्यात्, यो न धर्मः सह्यधर्म उच्यते, प्राणिमारणमपीदं धर्मः, श्रुतिचोदितत्वमेव तु धर्मलक्षणमिति भावः। पुनराशङ्क्य प्रतिक्षिपति—श्रुतिचोदितेत्यादिना प्राणिपीडनमित्यन्तेन। प्राणिपीडनम्–शत्रुमारणम्। श्रुतिचोदितोऽपि श्येनः फलद्वारा प्रत्यवायावहत्वादनर्थत्वेनाऽधर्म इति भावः। पुनराशङ्क्य प्रतिक्षिपति—तुल्यमित्यादिना परानर्थ इत्यन्तेन। तुल्यं तदत्रापीति। अभिचार इव ज्योतिष्टोमेऽप्यस्ति प्राणिपीडनम्, क्रियते हि पशोर्विशसनमित्यर्थः। नेति।

तथा द्युमत्सेनसत्यव्रतसंवादे, तथा, विश्वजित्संज्ञकेन्द्राश्वमेधसमागतमहर्षिदेवतासंवादादौ च सविस्तरमवलोचनीयम्। तत्र हि—"लुब्धैर्वृत्तिपरैर्ब्रह्मन्नास्तिकैः सम्प्रवर्तितम्। वेदवादानविज्ञाय सत्याभासमिवानृतम्"। तथा "अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः। संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता"। तथा "तस्य तेनानुभावेन मृगहिंसात्मनस्तदा। तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिये" इत्यादिभिर्वाक्यैर्वेदेष्वाभासमाना हिंसा निन्दितास्ति।

ननु—तर्हि कथं यज्ञसिद्धिः? तत्र हि 'अजेन यजेते'त्यादिविधेः सत्त्वात्। उच्यते—"परोक्षवादो वेदोऽयं बालानामनुशासनम्। कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथे"ति। "वेदा ब्रह्मात्मविषयास्त्रिकाण्डविषया इमे। परोक्षवादा ऋषयः

---

कस्याप्यनर्थः; श्येनेन यजतस्त्वभिलषितं शत्रुमारणं परानर्थः। न च स्वर्गकामस्यालम्भनमवर्जनीयमिति समानम्। 'आलभेतेति श्रुतिर्विदधात्यालमनम्। नहि तथाऽभिचरणं विदधाति श्रुतिः। अभिचरन्नित्येव निर्देशात्। यद्यभिचरण इच्छा, तदा श्येनेन यजेतेति हि तस्य भावः। तत्, आलमने विधिसंस्पर्शोऽस्ति; अभिचरणे तु न, प्रत्युत, मा हिंस्यादिति निषेधस्पर्श एवेति। अत एव धर्मलक्षणाधिकरणे सूत्रस्यार्थपदस्य प्रयोजनं वर्णयता शबरस्वामिना इदमभाषि—"उभयमिह चोदनया लक्ष्यते, अर्थोऽनर्थश्चेति, कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः, कोऽनर्थः? यः प्रत्यवायाय श्येनो वज्र इषुरित्येवमादिः, तत्रानर्थो धर्म उक्तो माभूदित्यर्थग्रहणम्। कथं पुनरसावनर्थः? हिंसा हि, हिंसा च प्रतिषिद्धेति। कथं पुनरनर्थः कर्त्तव्यतयोपदिश्यते? उच्यते—नैव श्येनादयः कर्त्तव्या विज्ञायन्ते, यो हि हिंसितुमिच्छेत्तस्यायमभ्युपाय इति हि तेषामुपदेशः। श्येनेनाभिचरन्यजेतेति हि समामनन्ति, नाभिचरितव्यमिति" इति। आह च माधवाचार्यो जैमिनीयन्यायमालायाम्—"यद्यपि श्येनस्य वधः फलं न तु नरकस्तथापि तस्य वधस्य नरकहेतुत्वाद्वधद्वारा श्येनोऽनर्थः। न चैवमग्नीषोमीयपशुहिंसाया अपि वधत्वेन नरकहेतुत्वं स्यादिति शङ्कनीयम्। तस्याः क्रत्वङ्गत्वेन क्रतुफलस्वर्गव्यतिरेकेण फलान्तराभावा"दिति। आह चेदं वैषम्यं विज्ञानेश्वरोऽनुगमनस्य श्येनतो वैलक्षण्यव्यवस्थापनावसरे।

---

अभिचारे काम्यमानमनर्थः, ज्योतिष्टोमे तु काम्यमानं फलं नानर्थ इति महद्वैषम्यमिति भावः। पुनराशङ्क्य प्रतिक्षिपति—न चेति। आशङ्कितुरयमाशयः—अभिचारे काम्यमानम्, ज्योतिष्टोमे तु काम्यमानस्य साधनम्, एतावता को विशेषः, प्राणिपीडनत्वेनानर्थत्वं त्वविशिष्टमिति। प्रतिक्षेप्तुरयमाशयः—काम्यमानसाधनकोटिप्रविष्टे पशुविशसने विधिसंस्पर्शोऽस्तीति चोदितत्वान्नाधर्मत्वम्, काम्यमाने शत्रुमारणे तु न विधिसंस्पर्श इत्यभिचारस्य प्रत्यवायावहताऽस्तीति। उक्तार्थं आप्तानां वचनं प्रमाणतयाऽनुवदति—अत एवेत्यादिना।

परोक्षं मम च प्रिय"मिति च श्रीभागवतोक्तेर्न, वेदस्य हिंसायां तात्पर्यम् । किन्तु रागप्राप्तहिंसासङ्कोचार्थं महापत्कालनिर्वाहार्थं चेदमभ्यनुज्ञामात्रम् । तथा चोक्तं तत्रैव—"तीर्थेषु प्रतिदृष्टेषु राजा मेध्यपशून्वने । यावदर्थमलं लुब्धो हन्यादिति नियम्यते" तथा "लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना । व्यवस्थितिस्तेषु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इत्यादि । अनयोरर्थमाहुः

अपरे तु—श्येनो न मरणानुकूलो व्यापारः, स हि न मरणं प्रति हेतुः, किन्तु व्याधिं विद्वेषिणं वा प्रबलतरमदृष्टद्वाराऽऽपादयति, तदीयो व्यापारस्तु खड्गप्रहारादिर्मरणानुकूलः स्यात्, न चैतावताऽदृष्टोद्बोधनमात्रेण श्येनस्य मरणे हेतुत्वं प्रामाणिकम् । न ह्यसेस्तैक्ष्ण्यापादनमात्रेण कश्चिद्धन्ता भवेत्, न वा तदापादनं मरणे कारणम्, परम्परया मरण उपयोगोऽपि श्येनस्य न दृष्टविधया, तन्नात्र "न हिंस्या"दिति निषेधगोचरता । यो यत्कामनया प्रवृत्तः स तत्प्रयोजक एवेति यदि विभाव्यते, तथापि न दृष्टद्वारा तत्र तस्योपयोग इति सा न हिंसा । अदृष्टाऽद्वारकमरणानुकूल एव हि हिंसा । अत एव "पट्स्वनभिचरन्पतेत्" इति स्मर्यते । नहि करणेऽप्यकरणेऽपि पतनमिति शास्त्रार्थो घटेत । तस्मादन्ततः फलस्याधर्मत्वेऽपि न श्येनस्वरूपस्याधर्मता । नच "चोदनालक्षणोर्थो धर्म" इति सूत्रेऽर्थग्रहणं व्यर्थम् । निषेध्यव्यवच्छेदार्थत्वात् । तदपि हि चोदनालक्षणम्, निषेध्यं ह्यनर्थसाधनत्वेन "न कलञ्जं भक्षयेत्" इति निषेधचोदनया लक्ष्यते । द्विविधा खलु चोदना विधिनिषेधात्मिका । मन्दप्रयोजनं वा तदित्याहुः । तस्मादग्नीषोमीयादेर्धर्मत्वं तु निर्विवादमिति तत्कथं निषिध्यते यागार्थमपीति ।

ज्योतिष्टोमस्येव श्येनस्यापि धर्मत्वं वदतां मतमनुवदति—अपरे त्वित्यादिना । हिंसात्वे हि तदवकाशः, श्येनस्य तु न हिंसात्वमित्यभिप्रायेणाह—श्येन इति । न चैतावतेति । अन्यथासिद्धत्वादिति भावः । अन्यथासिद्धत्वानन्यथासिद्धत्वयोः प्रामाणिकव्यवहारव्यवस्थाप्यतामभिप्रेत्य प्रामाणिकानां श्येने मारणकारणत्वव्यवहाराभावं दृष्टान्तमुखेन स्फुटयति—नहीति । ननु—विषमोऽयं दृष्टान्तः यस्त्वसीनां निर्माता, न तेन काम्यते कस्यापि हननम्, तैक्ष्ण्यमेव तु काम्यते, नातस्तस्य तद्धेतुता, इह तु शत्रुमरणकामनया श्येने प्रवृत्तेस्तस्य तद्धेतुत्वमस्त्येवेत्याशयेन शङ्कते—य इति । तथापि न श्येने हिंसापदप्रवृत्तिनिमित्तान्वय इत्याह—तथापीति । अत एवेति । श्येनस्य प्रत्यवायानावहत्वादेवेत्यर्थः । घटेतेति । अभिचरणे चेन्निषेधसस्पर्शः, स्मृतिरियं विरुध्येतेति भावः । अर्थग्रहणं व्यर्थमिति । श्येनादिवारणाय हि धर्मलक्षणेऽर्थग्रहणं कृतम्, श्येनादि चेद्धर्मस्तस्य लक्ष्यतया व्यावृत्त्यभावाद्व्यर्थं तद्ग्रहणमिति भावः । निषेध्यव्यवच्छेदार्थत्वादिति । कलञ्जभक्षणादिनिषेध्यव्यावृत्तयेऽर्थग्रहणं सार्थकमिति भावः । अतिव्याप्तिमुपपादयति—तदपि हीति । ननु चोदनाशब्दस्य प्रवर्तनायामेव प्रसिद्धेर्निवर्तनायाश्चोदनाशब्देन सङ्ग्रहासम्भवान्निवर्तनागोचरस्य कलञ्जभक्षणादेश्चोदनालक्षणत्वं न घटत इत्यभिप्रेत्याह—मन्दप्रयोजनं वा तदिति । इत्याहुरिति । अनेन श्येनज्योतिष्टोमयोर्वैषम्यस्यानेकस्मृतिकारसम्मतस्यातिलङ्घनमनुचितमित्यस्वरसः सूच्यते । पूर्वपक्षी विवक्षितमुपसंहरति—तस्मादिति ।

श्रीधरस्वामिनः—नहि मृगया विधीयते, रागप्राप्तत्वात् । किन्तु नियम्यते–प्रवृत्तिः सङ्कोच्यते । नियममेव षड्विधं दर्शयति—यद्यलम्–अत्यर्थं लुब्धः–रागी सन् हन्यात्तर्हि तीर्थेषु–श्राद्धादिष्वेव । तत्रापि प्रतिदृष्टेषु–प्रख्यातेष्वेव, न नित्यश्रा-

---

अत्राहुः—अनर्थत्वान्निषिद्ध्यते । चोदनालक्षणोऽयमर्थः कथमनर्थः ? । न हिंस्यादिति निषेधगोचरोऽयं कुतो नानर्थः ? । हन्तोत्सर्गापवादनयमप्यधरीकरोषि, सामान्यशास्त्रं हि स्वस्य विशेषशास्त्रेणोपमर्दे प्राप्ते स्वयमपसरति विषयान्तरेऽवकाशप्रदानेन, तदिह "न हिंस्यात्" इति सामान्यशास्त्रं विशेषविधिविरोधेनाग्नीषोमीयव्यतिरिक्तहिंसामालम्बते । न वयमवधीरयाम उत्सर्गापवादनयम्, तस्येह नावकाश इत्येव कथयामः, सति हि विरोधे तदवकाशः, यथाऽश्वस्य मेध्यस्य पदे जुहोतीति विशेषशास्त्रेण प्रतीयमानस्याश्वपदाधिकरणकहोमविधानस्याहवनीये जुहोतीति सामान्यशास्त्रतः प्रतीयमानेनाऽऽहवनीयाधिकरणकहोमविधानेन विरोधे साक्षाद्विशेषमुपसर्पता प्रबलतरेण विशेषशास्त्रेण सामान्यमुखेन प्रवर्त्तमानस्य दुर्बलस्य सामान्यशास्त्रस्य बाधादाहवनीयाधिकरणकहोमविधानं विशेषशास्त्रसिद्धहोमविधिव्यतिरिक्तविषयमवलम्बते, इह तु न तथा विरोधः, इह हि "न हिंस्यात्" इति शास्त्रेण हिंसाया अनर्थहेतुत्वमुच्यते, "अग्नीषोमीयं पशुमालभेते"ति च विशेषशास्त्रेणाग्नीषोमीयालम्भनस्य क्रतूपकारकत्वमुच्यते, तद्भिन्नविषयेऽत्र को मिथो विरोधः; एकस्यैवानर्थहेतुत्वं तदभावश्चेति द्वयं विरुद्धम्, न त्वनर्थहेतुत्वं क्रतूपकारकत्वं च मिथो विरुद्धम् । विधिबलादकरणे यागानिष्पत्तेः पश्वालम्भनं भवतु क्रतूपकारकम्, "न हिंस्या"दिति निषेधगोचरतया भवत्वनर्थहेतुरपि । नन्वनर्थहेतुना कथं क्रतूपकारः किन्त्वपकार एवेति न शङ्क्यम् । यथा "न कलञ्जं भक्षयेत्" इति निषेधस्य

---

साङ्ख्यानां समयमनुसृत्य समाधत्ते—अत्राहुरिति । अनर्थत्वादिति । प्रत्यवायावहत्वादित्यर्थः । कथमनर्थ इति । विधिसंस्पृष्टस्यास्य प्रत्यवायावहता न घटेतेति भावः । कुतो नानर्थ इति । विधिसंस्पर्शस्येव निषेधसंस्पर्शस्यापि सत्त्वात्प्रत्यवायावहता दुरपह्नवेति भावः । हन्तेति । नात्र निषेधशास्त्रसंस्पर्शावकाशः, उत्सर्गापवादन्यायावतारादित्याशयः । नेहोत्सर्गापवादनयावतरणावकाश इति समाधत्ते—न वयमित्यादिना । विरोध इति । अश्वपदाधिकरणकत्वस्याऽऽहवनीयाधिकरणकत्वस्य चैकस्मिन्होमे समावेशासम्भवेन द्वयोः शास्त्रयोर्मिथो विरोध इति भावः । साक्षाद्विशेषमुपसर्पतेति । इदं च विशेषणं विशेषस्य प्रबलत्वे ज्ञापकम्, तथा चान्यत्र निरवकाशत्वाद्विशेषशास्त्रं बाधकमिति भावः । सामान्यमुखेन प्रवर्त्तमानस्येति । इदं च विशेषणं सामान्यशास्त्रस्य बाध्यत्वे ज्ञापकम्, तथा च सावकाशत्वाद्बाध्यत्वमिति भावः । व्यतिरिक्तविषयमवलम्बत इति । तथा च बाध्यमानं सामान्यशास्त्रं विशेषशास्त्रस्यावकाशं प्रदाय स्वयं विषयान्तरमवगाहत इति यावत् । इह तु न तथेति । तुशब्देन ततोऽत्र वैषम्यं द्योत्यते । वैषम्यमेवोपपादयति—इह हीति । अनर्थहेतुत्वमुच्यत इति । निवर्तना ह्यनर्थहेतुत्वमवगमयति । अनर्थश्च–प्रत्यवायः । क्रतूपकारकत्वमुच्यत इति । अयं ह्यङ्गविधिः अङ्गिनिष्पादनं त्वङ्गकृत्यम् । भिन्नविषये–स्वतन्त्रार्थद्वयावबोधक इत्यर्थः । तत्तदभावानवबोधक इति यावत् । अविरोधमेवोपपादयति—एकस्यैवेत्यादिना । शङ्कते—नन्विति । अपकार एवेति ।

ध्वादिषु । तत्रापि राजैव, मेध्यानेव, वन एव, यावदुपयोगमेवेति । अतो नावश्यकत्वमिति प्रथमश्लोकार्थः । नित्याः–रागतः प्राप्ताः । जन्तोः–प्राणिमात्रस्य । अतस्तत्र–तासु चोदना–विधिर्नास्ति । ननु—"ऋतावुपेयात्" "हुतशेषं भक्षयेत्" दित्या-

ऋतुप्रकरणेऽनाम्नानाद्यजमानेन ऋतुमध्ये विरचितमपि कलञ्जभक्षणं न ऋतुवैगुण्यमापादयति । तथाचोक्तम्—"यो नाम ऋतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न ऋतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः" इति, तथा "न हिंस्या"दिति निषेधस्य ऋतुप्रकरणेऽनाम्नानान्निषेधगोचराऽपीयं हिंसा न ऋतुवैगुण्यमापादयेत् । "अग्नीषोमीयं पशुमालभेत" इति ऋतुप्रकरण इतिकर्त्तव्यतयाऽऽम्नानाद्भवति च ऋतूपकारकता । नहि ऋतूपकारकत्वमात्रेणानर्थहेतुत्वाभावः । तदिदमग्नीषोमीयपश्वालम्भनं ऋतूपकारकतया स्वर्गप्रयोजकमपि, निषेधगोचरतया प्रत्यवायावहमपि ।

ननु—निषेधगोचरतया प्रत्यवायावहत्वे कथं तत्र प्रवृत्तिः ?, न ह्यनर्थसाधनमिदमिति जानन्प्रवर्त्तेत तत्र । सत्यम् । यद्यनर्थसाधनमित्येतावदेव जानीयान्न प्रवर्त्तेत नाम । अर्थसाधनमित्यपि जानन्नर्थे समधिकतररुच्या कुतो न प्रवर्त्तेत । "अग्नीषोमीयं पशुमालभेते"ति हि स्वर्गसाधनयागोपकारकताऽऽलम्भनस्य प्रतीयते ।

ननु—बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानमेव खलु प्रवर्त्तकम्, नेष्टसाधनताज्ञानमात्रम् । नहि लोके कश्चिदात्मनोऽनिष्टतमं जानन्निष्टमित्येतावता प्रवर्त्तेत, तत्कथमालम्भनतः प्रत्यवायं जानन्यागोपकारकमित्येव प्रवर्त्तेत । सत्यम् । यदि नाम स्वर्गसुखमल्पमालभनजनितदुःखं प्रबलम्, न स्यान्नाम तदा यागे प्रवृत्तिः, बलवदनिष्टानुबन्धित्वज्ञानात्, न ह्यनिष्टानुबन्धित्वज्ञानमात्रेणाप्रवृत्तिः, द्रव्यव्ययायासादिरूपानिष्टसाधनत्वेऽवगम्यमानेऽपि हि

प्रत्यवायावहत्वेनानृतवदनेनाग्निहोत्रस्येव ऋतोर्वैगुण्यमेव भवेदित्याशयः । समाधत्ते—यथेत्यादिना । अग्निहोत्रप्रकरणे 'नानृतं वदे'दिति विशिष्य श्रूयमाणतयाऽनृतवदननिवृत्तेरग्निहोत्राङ्गत्वावगमेनाऽनृतवदनेऽग्निहोत्रवैगुण्यं न्याय्यम्, 'न हिंस्या'दिति निषेधस्य तु ऋतुप्रकरणेऽनाम्नानान्निषेधशास्त्रगोचरादप्यग्नीषोमीयपश्वालम्भनतो न ऋतुवैगुण्यमिति भावः । कलञ्जभक्षणतो विशेषमाह—भवति च ऋतूपकारकतेति । ननु–तत एव ऋतूपकारकत्वाद्विशेषात्कलञ्जभक्षणतोऽस्य प्रत्यवायानावहत्वरूपो विशेषोऽप्यास्थेय इत्यत्राह—नहीति । निषेधसंस्पर्श एव तत्र प्रयोजक इति कलञ्जभक्षण इव तत्संस्पर्शोऽत्राप्यस्तीति न तदंशे ततोऽस्य विशेष इति भावः ।

प्रवृत्त्यनुपपत्तिमाशङ्कते—नन्विति । अनर्थसाधनताज्ञानं प्रवृत्तौ विरोधीत्याशयः । समाधत्ते—सत्यमिति । अनर्थसाधनताज्ञानविशेषस्य प्रवृत्तौ विरोधित्वेऽभ्युपगमस्तत्सामान्यस्य तथात्वे त्वनभ्युपगमश्च बोध्यः । व्यज्यते चैतत्सत्यमिति निर्देशेन । अयं हि निर्देशोऽर्धाङ्गीकारव्यञ्जकः ।

शङ्कते—नन्विति । प्रत्यवायं जानन्निति । प्रत्यवायस्य बलवदनिष्टत्वेन बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानस्यैव प्रवर्तकतया तत्र तदसम्भवात्प्रवृत्त्यनुपपत्तिरिति भावः । द्रव्यव्यवसायादेरिवाऽऽलभनजनितप्रत्यवायस्यापि न बलवदनिष्टत्वमित्याशयेन समाधत्ते—सत्यमिति । बलवदनिष्टा-

१ अनर्थावहत्वे ।

दिविधिर्दर्शितः, सत्यं दर्शितः, नत्वयमपूर्वविधिः, किन्तु नियमविधिरूपेण सकामानां राजसतामसप्रकृतीनां हिंसारागिणां क्षत्रियाणामेवाभ्यनुज्ञामात्रं क्रियते, न तु सात्त्विकानां मुमुक्षूणामित्यादिर्द्वितीयश्लोकार्थः ।

---

प्रबलतरस्वर्गसुखलिप्सया प्रवर्त्तन्ते यागे, तस्मात्पुण्यसम्भारोपानीतस्वर्गसुधामहाह्रदावगाहसुखातिशयरूपेष्टस्वरूपपर्यालोचनायामालभनप्रयुक्तप्रत्यवायतः सम्भावितदुःखकणिकाः कियत्यः, तस्माद्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनताज्ञानस्य निराबाधतया भवेदेवावगतेऽप्यालभनदोषे यागे प्रवृत्तिः । इष्टसाधनत्वमनिष्टसाधनत्वं चेत्युभयमेकत्र दुर्घटमिति तु मन्दचोद्यम् । नहि दुर्घटं नाम तत् । सति सामर्थ्ये फलद्वयस्य फलत्रयस्य वा सम्भवात् । इष्टत्वानिष्टत्वयोस्तु फलगतयोः प्रीत्यप्रीतिरूपोपाधिकृतत्वात् । एतेन विषमधुसंसृष्टान्नभोजनपरतरुणीप्रवेशादिषु दृष्टविधयेष्टानिष्टोभयसाधनत्वे सत्यपि नादृष्टविधया कस्यापि तथात्वमिति चोद्यमपास्तम् । समानयोगक्षेमत्वात् ।

ननु—"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥" "या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे । अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥" इति यज्ञीयविशसनस्यापापतां स्मरति मनुः, तत्कथमुच्यते तदपि पापावहमिति, तस्मान्न हिंस्यादिति सामान्यनिषेधस्य वैधहिंसातिरिक्तविषयत्वमेवोचितमिति चेत् । मैवम् । "अनुदरा कन्या" इत्यादाविव "वधोऽवध" इत्यादौ नञा अल्पत्वस्यैव बोधनात् । अन्यथा वधोऽवधत्वप्रतिक्षेपस्य बाधितत्वेन घटोऽघट इत्यादाविवाबोधकत्वापत्तेः । तथाच समधिकसुखारम्भके गुरुतरेऽस्मिन्यज्ञे प्रसक्तोऽयं वधः कतिपयदुःखकणिकावहो लघुतरप्रायश्चित्तसमाधेयश्चेत्यभिप्रेत्योच्यते "वधोऽवध" इति । तन्नानेन वाक्येन न हिंस्यादिति सामान्यवचनतः प्रसक्तस्याऽनर्थावहत्वस्य प्रतिक्षेपः । "अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः" इति श्रुतिरपि वैधहिंसायाः

---

ननुबन्धित्वविशिष्टसाधनत्वस्य प्रवर्त्तकत्वेऽभ्युपगमः, आलभनजनितप्रत्यवायस्य बलवदनिष्टत्वेऽनभ्युपगमः । मन्दचोद्यमिति । विरोधमूलमविजानतां चोद्यमिति यावत् । एकत्र चेदिष्टत्वमनिष्टत्वं चाभ्युपगम्येत, तदा विरोधशङ्कावकाशः, एकस्य तदुभयसाधनत्वे न कश्चिद्विरोध इति भावः । अविरोधमेवोपपादयति—नहीति । अर्थद्वयसाधनत्वमेव विरुद्धं मन्यसे ? उतैकसाध्ययोरिष्टत्वानिष्टत्वे विरुद्धे मन्यसे ? इति विकल्प्य प्रथमे दूषणमाह—सतीति । द्वितीयं निरस्यति—इष्टत्वानिष्टत्वयोस्त्विति । समानेति । नहि दृष्टतोऽदृष्टे कश्चिद्विशेषः । तुल्यं निरूपणमिति भावः ।

मनुवचनविरोधमाशङ्कते—नन्विति । अपापतां स्मरतीति । 'वधोऽवध' इत्युक्तेरपापत्वमवगम्यत इति शङ्कितुराशयः । समाधत्ते—मैवमिति । अबोधकतापत्तेरिति । तस्मादीषदर्थतासमाश्रयणमेव न्याय्यम्, ईषदर्थता च नञोऽनुशासनसिद्धा, प्रत्यवायानावहत्वावबोधकत्वाश्रयणं तु लक्षणादोषदूषितमिति भावः । आलभनजनितप्रत्यवायस्याल्पत्वमुपपादयति—तथाचेति । उपनिषद्विरोधमाशङ्क्य प्रतिक्षिपति—अहिंसन्निति ।

अत्रायं ब्रह्मविदामाशयः—"अजेन यजेते"त्यादावजादिशब्दानामपरोक्षार्थस्तु व्रीह्यादिरेव, न तु मेषादिव्यक्तिः। "अजस्त्रैवार्षिको व्रीहि"रिति धनञ्जयाभिधानात्। भारते च देवान्प्रति महर्षिवाक्यम्—"बीजैर्यज्ञेषु यष्टव्यमिति वै

---

पापानावहत्वं नावगमयति; किन्त्ववैधहिंसानिवृत्तिव्रतस्येष्टसाधनत्वमवगमयति। तस्माद्वैधहिंसाया अप्यस्त्येव पापावहत्वम्।

ननु—प्रक्षीणकर्मणः स्वर्गात्प्रच्युतस्याकाशवायुधूमाभ्रमेघवृष्टिव्रीह्यादिभावेन प्रत्यावर्त्तमानस्य यो व्रीह्यादिभावः स यागीयहिंसाजनितपापोपहित इत्याशङ्क्य—नायं व्रीह्यादिभावः प्रत्यावर्त्तमानस्य पापभोगाय, पापस्यैवाभावात्, तथाहि शब्दः "अग्नीषोमीयं पशुमालभेत" इति। किन्तु चेतनान्तरेणाधिष्ठितव्रीह्यादिषु संश्लेषमात्रमित्यभिप्रेत्य व्यासोऽसूत्रयत् "अशुद्धमिति चेन्न शब्दात्" इति। तत्कथमुच्यते वैधहिंसा पापावहेति। तदिदं व्यासाभिप्रायानभिज्ञानां चोद्यम्। नहि तेन सूत्रेण यागस्याशुद्धत्वं प्रतिक्षिप्यते किन्त्वशुद्धस्यैतस्य व्रीह्यादिभावहेतुत्वं प्रतिक्षिप्यते। सूत्रस्य चायमर्थः—वैदिकेनेष्टादिकर्मणा द्युलोकमुपगतस्य सुकृतफलमनुभूय प्रत्यावर्त्तमानस्य व्रीह्यादिगर्हितजन्मप्रयोजकमस्ति भुक्तावशिष्टं यागप्रसक्तं पशुविशसनाद्यशुद्धं कर्मेति चेन्न, तदपि भुक्तमेव तु प्रागेव, यावत्सम्पातमुषित्वेति शब्देन सर्वस्य कर्मणः प्रक्षीणत्वावगमात्। अयं भावः—आलभनेनाङ्गेन सिद्ध्यन्नयमङ्गी यागः फलं यदा प्रयच्छेत्तदा साङ्गस्यैव स्वस्येति, स्वर्गसुखानुभवसमय एवान्तरान्तरा दुःखमपि भुक्तमेवेति न भुक्तावशिष्टं किञ्चिदस्ति, यद् व्रीह्यादिभावभोगाय स्यादिति। यत्पुनरन्यैरन्यथा व्याख्यातं तद्व्यासहार्दविरुद्धमेव। यद्व्यासेनैव यागस्याशुद्धिर्योगभाष्ये—"कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" इति सूत्रविवरणावसरे "शुक्लकृष्णा बहिःसाधनसाध्या, तत्र परपीडानुग्रहद्वारेणैव कर्माशयप्रचयः," इति ग्रन्थेन स्पष्टमभाषि। व्याख्यातश्चायं वाचस्पतिमिश्रैः—"यद्यावद्बहिस्साधनसाध्यं तत्र सर्वत्रास्ति कस्यचित्पीडा, नहि व्रीह्यादिसाधनेऽपि कर्मणि परपीडा नास्ति, अवघातादिसमयेऽपि पिपीलिकादिवधसम्भवात्, अन्ततो बीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धात्, अनुग्रहश्च दक्षिणादिना ब्राह्मणादे"रिति। एवं तत्रैव योगभाष्ये—अनियतविपाकस्यादृष्टजन्मवेदनीयस्य कर्माशयस्य कृतस्याविपक्वस्य नाशः, प्रधानकर्मण्यावापगमनं, नियतविपाककर्माभिभूतस्य चिरमवस्थानमिति त्रेधा गतिं निरूपयता व्यासेन प्रधानकर्मण्यावापगमनलक्षणगतिनिरूपणावसरे "स्यात्स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्शः कुशलस्य नाऽपकर्षायालं, कस्मात्, कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति" इति पञ्चशिखवचनं प्रमाणयता प्रकटितं चैतत्। व्याख्यातं चेदं वाचस्पतिमिश्रैः—"प्रधाने कर्मणि

---

अथ सूत्रविरोधमाशङ्कते—नन्विति। संश्लेषमात्रमिति। पूर्वेण व्रीह्यादिभाव इत्यनेनान्वेति। सूत्रमन्यथा नयन्समाधत्ते—तदिदमिति। ननु—कथमिदमुच्यते? तदपि भुक्तमेव तु प्रागेवेति; ऋतुफलभूतस्वर्गानुभवसमये कावसरोऽशुद्धफलानुभवस्येति शङ्कायामाह—अयं भाव इति। परेषां व्याख्यानस्य व्यासहार्दाननुगुणतां प्रदर्शयति—यत्पुनरिति।

वैदिकी श्रुतिः । अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ । नैष धर्मः सतां देवा ! यत्र वध्येत वै पशु"रिति । वायुमत्स्यपुराणयोश्चोक्तः—"यज्ञो बीजैः सुरश्रेष्ठ ! येषु हिंसा न विद्यते । त्रिवर्षपरमं कालमुषितैरप्ररोहिभि"रित्यादिना । आनुशासनि-

ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावापगमनम् । द्वे खलु हिंसादेः कार्ये, प्रधानाङ्गत्वेन विधानात्तदुपकारः, "न हिंस्यात्सर्वा भूतानी"ति हिंसायाः प्रतिषिद्धत्वादनर्थश्च, तत्र प्रधानाङ्गत्वेनानुष्ठानादप्रधानतैवेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति; किन्त्वारब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते । प्रधानसाहायकमाचरन्त्याश्च स्वकार्ये बीजमात्रतयाऽवस्थानं प्रधाने कर्मण्यावापगमनम् । यत्रेदमुक्तं पञ्चशिखेन स्वल्पः सङ्करः ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण सपरिहारः शक्यो हि कियता प्रायश्चित्तेन परिहर्तुम् । अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च विपच्येत, तथापि यावन्तमसावनर्थं प्रसूते तावान्स प्रत्यवमर्शः, मृष्यन्ते हि पुण्यसम्भारोपनीतसुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखकणिकाम् । अतः कुशलस्य सुमहतः पुण्यस्य नापकर्षाय, प्रक्षयाय पर्याप्तः । पृच्छति—"कस्मादि"ति, पुण्यवत उत्तरं "कुशलं हि मे बह्वन्यदस्ति" प्रधानकर्मपरिकरतया व्यवस्थितं दीक्षणीयादिदक्षिणान्तं । यत्रायं सङ्करः स्वल्पः, स्वर्गेऽप्यस्य फले सङ्कीर्णपुण्यलब्धजन्मनः स्वर्गात्सर्वथा दुःखेनापरामृष्टादपकर्षमल्पम्—अल्पदुःखसम्भेदं करिष्यती"ति ।

ननु—यागे पशोः संज्ञपनं न हिंसा, अपि त्वनुग्रह एव । तत्र हि पशोर्निहीनछागादिशरीरमपनीयते, आपाद्यते च कल्याणतरदिव्यदेहावाप्तिः, स्वर्गानुभवश्च । तथाच श्रुतिः—"न वा उ वेतन्म्रियसे न रिष्यसे देवान् इदेषि पथिभिः सुगेभिः । यत्र यन्ति सुकृतिनो नापि दुष्कृतः तत्र त्वा देवः सविता दधातु" इति । तच्चिकित्सककर्मातुरस्येव पशो रक्षणमेव संज्ञपनमिति, कुतस्तत्र प्रत्यवायावसरः । मैवम् । अर्थवादवाक्यस्य स्वार्थेऽप्रामाण्यात् । अर्थवादवाक्यानि हि प्रशंसामात्रेण प्रवर्त्तने पर्यवस्यन्ति । तस्मात् "न वा उ वेतन्म्रियसे" इत्यादिरर्थवादः स्तुतिमात्रे पर्यवस्यतीति यागीयस्यापि संज्ञपनस्य हिंसात्वाविशेषादवर्जनीयं पापावहत्वम् ।

ननु—हिंसात्वादवर्जनीयं चेत्पापं धार्मिकाणामपि क्षात्रे धर्मे स्थितानां युद्धादिप्रसङ्गेन पापनैयत्यं स्यात् । स्यादेव का नो हानिः । अत एव भागवते—"क्षत्रधर्मे स्थितो जन्तून्यवधीर्मृगयादिभिः । समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥" इति क्षात्रधर्मस्थित्या मृगयादिना पापसम्बन्ध उक्तः । एवं भारते—धर्मपुत्रस्य युद्धे ज्ञातिवधजनितात्पापाद्भीतिः, तत्या-

बलवत्सुखानुदर्कदुःखानुकूलव्यापारस्यैव हिंसापदार्थत्वेन यज्ञे पशोः संज्ञपनं तात्कालिकदुःखापादकमपि तस्य प्रभूतसुखमेवावहति पश्चादिति तत्र हिंसापदप्रवृत्तिनिमित्तस्यैवानन्वयान्न निषेधवचनसंस्पर्शावकाश इति वदतामाशङ्कामुपक्षिपति—नन्वित्यादिना । 'न वे'त्यादिश्रुतेरर्थवादतया स्वार्थेऽप्रमाण्येन न ततः प्रभूतसुखोदर्कतासिद्धिरित्याशयेन समाधत्ते—मैवमिति ।

अथोत्सर्गापवादन्यायावलम्बनेनाऽऽलभनस्यापापत्वं वदन्तः प्रत्यवतिष्ठन्ते—नन्विति । इष्टापत्त्या समाधत्ते—स्यादिति । युद्धादेः प्रत्यवायावहत्वे प्रमाणमाह—अत एवेत्यादिना । पञ्चविश-

कपर्वणि भीष्मश्चाह—"श्रूयते हि पुराकल्पे नृणां व्रीहिमयः पशुः । तेनायजन्त यज्वानः पुण्यलोकपरायणा"इति ।

---

पपरिहरणाय प्रायश्चित्तोपदेशस्तदनुष्ठानं च स्मर्यते, तत्रेदं पापतो भीतिवचनम्—"अवध्यानां वधं कृत्वा लोके प्राप्तः स वाच्यताम् । मया त्ववध्या बहवो घातिता राज्यकारणात् । तानि कर्माणि मे ब्रह्मन् दहन्ति च पचन्ति च" "स मया राज्यलुब्धेन पापेन गुरुघातिना" । "अघातयं च यत्कर्णं समरेष्वपलायिनम् । ज्येष्ठभ्रातरमत्युग्रं को मत्तः पापकृत्तमः । हताः पुत्राश्च पौत्राश्च भ्रातरः पितरस्तथा । श्वशुरा गुरवश्चैव मातुलाश्च पितामहाः । क्षत्रियाश्च महात्मानः सम्बन्धिसुहृदस्तथा । नरके निपतिष्यामो ह्यधःशिरस एव हि । शरीराणि विमोक्ष्यामस्तपसोग्रेण सत्तम ! ॥" "नहि शान्तिं प्रपश्यामि घातयित्वा पितामहम् । कर्णं च पुरुषव्याघ्रं सङ्ग्रामेष्वपलायिनम् । कर्मणा येन मुच्येयमस्मात्क्रूरादरिन्दम ! ॥" इति । अयं च प्रायश्चित्तोपदेशो व्यासकृतः—"शृणु तत्र यथा पापमपकृष्येत भारत ! । यजस्व हयमेधेन विधिवद्दक्षिणावता ॥" "अश्वमेधो हि राजेन्द्र ! पावनः सर्वपाप्मनाम् । तेनेष्ट्वा त्वं विपाप्मैव भविता नात्र संशयः ॥" इति ।

किञ्च—यागस्यापि हिंसागर्भितस्य निन्दा स्मर्यते—"अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः । संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता ॥ सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत्" इति । तथा पितापुत्रसंवादे—"तातैतद्बहुशोऽभ्यस्तं जन्मजन्मान्तरेष्वपि । त्रयीधर्ममधर्माढ्यं न सम्यक् प्रतिभाति मे ॥" इति । "पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति । अन्तवद्भिरिव प्राज्ञः क्षेत्रयज्ञैः पिशाचवत्" । इति ।

एवं सत्यनाम्नः कस्यचिदुञ्छवृत्तेः श्यामाकादिचरुणा यष्टुमुपक्रान्तस्य हरिणरूपेण धर्मेण प्रलोभितस्य हिंस्रयज्ञाचरणेन तपोनाशः स्मर्यते—"तस्य तेनानुभावेन मृगहिंसात्मनस्तदा । तपो महत्समुच्छिन्नं तस्माद्धिंसा न यज्ञिया ॥" इति ।

एवं व्रीहिभिर्यष्टव्यमुत छागैरिति ऋषीणां देवानां च प्रसक्ते विवादे धर्मनिर्णयाय वृतस्योपरिचरस्य छागैरिति देवपक्षपातेन ब्रुवतः ऋषिशापतो भूविवरप्रवेशः स्मर्यते—"देवानां तु मतं ज्ञात्वा वसुना पक्षसंश्रयात् । छागेनाजेन यष्टव्यमेवमुक्तं वचस्तदा" इत्यादिना । एतत्सन्दर्भे—"बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः । अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ ॥" इति श्लोकव्याख्यानावसरे नीलकण्ठेन—"तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजः, तेऽजमालभन्त सोऽजादालब्धादुदक्रामत्, स इमां प्राविशत्, तस्मादियं मेध्याभवत्, अथैनमुत्क्रान्तमेधमत्याज्यन्त स शरभोऽभवत्, त एत उत्क्रान्तमेधाः, अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात्, तमस्यामन्वगच्छन्सोऽनुगतो व्रीहिरभवत्" इति श्रुतिश्छागादीनाममेध्यत्वेन यागानर्हतायां प्रमाणतयोदाहृता । तुलाधारजाजलिसंवादे—"नमो ब्राह्मणयज्ञाय ये च यज्ञविदो जनाः । स्वयज्ञं ब्राह्मणा हित्वा क्षत्रयज्ञमिहास्थिताः । लुब्धैर्वित्तपरैर्ब्र-

---

सनगर्भस्य यागस्य प्रत्यवायावहत्वे प्रमाणमुपन्यस्यति—किञ्चेति । उपसंहरति—तस्मादिति । याज्ञवल्क्यवचनस्याशयमाह—यो हविधिनेतीति ।

रजस्तमःप्रकृतयः परोक्षदृष्टयः कर्मजडास्तु भगवन्मतमेतन्न जानन्ति। तथा च श्रीभागवते भगवानाह—"ते मे मतमविज्ञाय परोक्षं विषयात्मकाः। हिंसायां यदि रागः स्याद्यज्ञ एव न चोदना । हिंसाविहारा ह्यालब्धैः पशुभिः

स्वनास्तिकैः सम्प्रवर्त्तितम् । वेदवादानविज्ञाय सत्याभासमिवानृतम् ॥" इत्यादिना हिंस्रयज्ञो बहुधा निन्दितः। "आज्येन पयसा दध्ना पूर्णाहुत्या विशेषतः। पुरोडाशो हि सर्वेषां पशूनां मेध्य उच्यते ॥" इत्याज्यादिना पुरोडाशेन च यागो निरूपितः। श्रुतिरप्येतदुपबृंहिता—"सर्वेषामेष पशूनां मेधेन यजते यः पुरोडाशेन यजेत" इति । तस्माद्यागेऽपि प्राणिमारणमनर्थाय स्यादेवेति तन्न कर्त्तव्यमित्यादिश्यते "देवताविलूयागार्थम्" इत्यादिना । "यो हन्त्यविधिना" इति याज्ञवल्क्यवचनं तु यागादन्यत्रानर्थाधिक्यमाह, नतु यागेऽनर्थाभावम् ।

अन्ये तु—नैतन्मतं युक्तम्—यद्यागे पशुविशसनमनर्थायेति । नच—न हिंस्यादिति सेयं सामान्यश्रुतिरेव हिंसात्वाविशेषाद्यागीयहिंसाया अप्यनर्थतामवगमयति, न चोत्सर्गापवादनयः, अर्थभेदेन विधिनिषेधयोरविरोधादिति तूक्तमिति वाच्यम् । यदि नाम न हिंस्यादिति वचनं "अग्नीषोमीयं पशुमालभेते"ति विहितां हिंसां क्रोडीकुर्यात्, स्यान्नाम तदाऽनर्थावहताऽपि, न च तथा, द्वयोर्हि विषयो विभिद्यते, न हिंस्यादिति तु निषिध्यते पुरुषार्था हिंसा, विधीयते तु क्रत्वर्था हिंसा "अग्नीषोमीयं पशुमालभेत" इति ।

ननु—निषिद्ध्यते पुरुषार्थैव 'हिंसेति कथमवगम्यते? इत्थम्—यस्तु क्रतुप्रकरण आम्नातः, स क्रतुशेषत्वात्क्रत्वर्थः, यस्तु कस्यापि क्रतोः प्रकरणेऽनाम्नातत्वेनाऽनारभ्याधीतः, स पुरुषार्थः, तथा च न हिंस्यादित्यनारभ्याधीतत्वेनायं निषेधः पुरुषार्थः निषेध्या च हिंसा पुरुषार्था ।

ननु—निषेधः पुरुषार्थः स्यान्नाम । निषेध्या हिंसा पुरुषार्थैव न क्रत्वर्थेत्यत्र किं मानम् । न हिंस्यादित्यविशेषेण हि निर्देशः। न च यदर्थो निषेधस्तदर्थ एव निषेध्य इति

अपौरुषेयवचसां परं प्रामाण्यमिच्छतां मीमांसकानां मतमाह—अन्ये त्वित्यादिना । अग्नीषोमीयपशुविशसने नास्ति निषेधवचनसंस्पर्शः, येन प्रत्यवायावहता सम्भाव्येतेत्याह—यदि नामेति । विषयविभेदमुपपादयति—न हिंस्यादित्यादिना । पुरुषार्थेति । ययानुष्ठितया हिंसया पुरुषस्यैवार्थः, सा पुरुषार्था—केवलकामनामूलकेति यावत् । विधीयते तु क्रत्वर्थेति । आलभनं हि न कलञ्जभक्षणादिवत्पुरुषस्यैवार्थाय, किन्तु क्रतोरर्थायैव, अन्यथा क्रतुनिष्पत्तिरेव हि न भवेत्, तस्माद्विधिगोचरो हिंसाविशेषो यस्ततोऽन्य एव निषेधगोचर इति न निषेधवचनसंस्पर्शावकाशः पशुविशसन इति भावः ।

अयं विषयविभागः कथं सिध्यतीत्याशङ्कते—नन्विति । समाधत्ते—इत्थमिति । यस्त्विति । यत्प्रकरण आम्नातः स तच्छेषभूत इति व्याप्तेरिति भावः । अनारभ्येति । पुरुषमुद्दिश्यैव प्रवृत्तेरिति भावः । नन्वेतावता निषेधस्य पुरुषार्थत्वं सिद्धम्, तावता निषेध्यस्य पुरुषार्थता कथमिति शङ्कते—नन्विति । अविशेषेण हीति । क्रतुप्रकरण आम्नातत्वादस्तु क्रत्वर्थता विधिगोचरस्यालभनस्य,

स्वसुखेच्छया । यजन्ते देवतायज्ञैः पितृभूतपतीन्खला" इति । नारदपञ्चरात्रे चोक्तम्—"श्रुतिर्वदति विश्वस्य जननीव हितं सदा । कस्यापि द्रोहजनकं न वक्ति

नियमान्निषेधस्य पुरुषार्थत्वे निषेध्यहिंसायास्तदर्थत्वं सिद्धमिति वाच्यम् । तथा नियमे प्रमाणाभावात् । दीक्षितो न ददाति न जुहोतीत्यादौ प्रतिषेधस्य क्रत्वर्थत्वेऽपि प्रतिषेध्यस्य दानादेः पुरुषार्थत्वेन व्यभिचाराच्च । न च हिंस्यादिति कर्त्राख्यातेन हिंसायां कर्तृनिष्ठत्वप्रतीत्या पुरुषार्थत्वं निषेध्यहिंसायाः सिद्धमिति वाच्यम् । कर्तृनिष्ठतायाः शब्दादप्रतीतेः । आख्यातेन व्यापारमात्रस्यैव बोधनात् । कर्तुः पुरुषस्याऽबोधनात् । अत एव दर्शपूर्णमासयोः श्रुतस्यानृतवदननिषेधस्य क्रत्वर्थतासमर्थनपरसूत्रविवरणावसरे शबरस्वामिना—"आह गृह्णाम एतद्विधिरिति, पुरुषधर्म इति तु गृह्णामः पुरुषप्रयत्नस्य श्रुतत्वात्" इत्याक्षिप्य "अत्र ब्रूमः—सर्वेष्वाख्यातेषु क्रियानुष्ठानं श्रूयते न कारकं किञ्चि"दित्यादिना सन्दर्भेण कर्तृनिष्ठताया अशाब्दत्वं समर्थितम् । प्रतीयतां वा कर्तृनिष्ठत्वमाख्यातेन, तावता क्रत्वर्थताव्यावृत्तं पुरुषार्थत्वं कथं प्रतीयते? तद्धि पुरुषार्थत्वं क्रतुजन्यपरमापूर्वेच्छानधीनेच्छाविषयसाधनत्वम्, आख्यातेन कर्तृनिष्ठत्वावगममात्रेण तदिदं पुरुषार्थत्वं कथं प्रतीयेत?, कर्तृनिष्ठताया उभयसाधारण्यात्; तस्मात्पुरुषार्थहिंसैव 'न हिंस्यादि'ति निषिध्यते न क्रत्वर्थेत्येतन्नोपपद्यते ।

अत्रोच्यते—प्रसक्तस्यैव हि प्रतिषेधो नाप्रसक्तस्य । तल्लोके केवलेष्टसाधनतया प्रसक्तहिंसा न हिंस्यादिति निषिध्यत इति हि वक्तव्यम् । इत्थं च येनाकारेण प्रसङ्गस्तेनैवाकारेण हि निषेध्यताऽपि, तस्मात्पुरुषार्था हिंसा निषिध्यत इति सिद्धम् । न च—हिंसाया राग-

तथापि न हिंस्यादिति सामान्यतः प्रवृत्तेर्निषेधशास्त्रे हिंसात्वेन तस्यापि क्रोडीकरणेनाऽवर्जनीयो निषेधवचनसंस्पर्शः, तस्य नहि पुरुषार्थतारूपविशेषाकारेण हिंसायाः पदतस्तत्रोपस्थितिः, तत् पुरुषार्थैव हिंसा निषिध्यत इत्येतदनुपपन्नमिति भावः । निषेध्यहिंसायास्तदर्थत्वं सिद्धमिति । निषेध्यहिंसायाः पुरुषार्थत्वाभावेन निषेधे प्रतीयमानं पुरुषार्थत्वं नोपपद्येतेत्यनुपपत्तिप्रतिसन्धानतस्तत्सिद्धिरिति भावः । प्रमाणाभावादिति । तथा चोक्तानुपपत्तिप्रतिसन्धानस्य नावकाश इति भावः । न केवलं प्रमाणाभावः, प्रत्युत बाधकमप्यस्तीत्याह—दीक्षित इत्यादिना । शब्दत एव पुरुषार्थत्वं निषेध्यहिंसायामवगम्यत इत्याशङ्क्य परिहरति—न चेत्यादिना । कर्तृनिष्ठत्वप्रतीत्येति । तावता पुरुषार्थत्वं सिध्यतीत्यभिमानः । इममेवाभिमानं प्रतीयतां वेत्यादिना निरसिष्यति । शब्दादप्रतीतेरिति । ननु–कर्त्राख्यातेन कर्तुरुपस्थापनात्तस्य च धात्वर्थेऽन्वयेन तत्प्रतीतिर्भवत्येवेत्याशङ्कायामाह—आख्यातेति । व्यापारमात्रस्यैवेति । एवकारव्यवच्छेद्यं स्फुटयति—पुरुषस्याबोधनादिति । तत्राप्तवाक्यं प्रमाणयति—अत एवेत्यादिना । पुरुषप्रयत्नस्य श्रुतत्वादिति । कर्त्रैवबोधकाख्यातश्रवणादिति भावः । क्रियानुष्ठानं श्रूयत इति । व्यापारमात्रं श्रूयत इत्यर्थः । कर्तृनिष्ठत्वावगममात्रेणेति । यद्यपि कर्तृनिष्ठत्वावगमतः कर्तुरिच्छाविषयसाधनत्वमवगम्येत नाम, न तु क्रतुजन्यपरमापूर्वेच्छानधीनेच्छाविषयसाधनत्वं प्रतीयेतेत्याशयः ।

समाधत्ते—अत्रेत्यादिना । अस्यैव वाक्यस्याशयं शङ्कासमाधानमुखेन स्फुटयति—न चेत्या-

प्रभुतत्परा। न तच्छास्त्रं तु यच्छास्त्रं वक्ति हिंसामनर्थदाम्। यतो भवति संसारः सर्वानर्थपरम्परः। अन्तरङ्गं विजानाति भगवत्याः श्रुतेः स्वयम्। चराचरात्मा

---

प्राप्तत्वेन प्रसक्तावपि पुरुषार्थतायाः पदादनुपस्थित्या न तेन रूपेण निषेधान्वयो भवेत्, येन रूपेण यस्यार्थस्य पदादुपस्थितिस्तद्रूपेणैव तस्यार्थस्यान्वयबोधात्, हिंसात्वेनैव तु हिंसा पदादुपस्थाप्यते, तस्मात् क्रत्वर्थपुरुषार्थोभयसाधारणहिंसासामान्यस्यैव निषेध इति वाच्यम्। घटेन जलमाहरेदित्यादौ पदादनुपस्थितस्यापि जलाहरणसाधनत्वानुपपत्त्योपस्थितस्य छिद्रेतरत्वस्यान्वयेन छिद्रेतरघटस्य जलाहरणसाधनत्वान्वयबोधवत्प्रकृते केवलरागप्राप्तत्वरूपपुरुषार्थत्वस्य पदादनुपस्थितस्यापि निषेधान्वयानुपपत्त्योपस्थितस्यान्वयो निराबाध इति तेनाकारेणैव हिंसाया निषेधबोधान्न क्रत्वर्थहिंसाया निषेधगोचरता।

एतेनेहोत्सर्गापवादन्यायानवतारं प्रकारान्तरेणाभिप्रेत्य यागीयपशुविशसनस्यापि न हिंस्यादिति निषेधविषयत्वमक्षतमिति कैश्चिदुक्तं निरस्तम्। उक्तप्रकारेण पुरुषार्थहिंसाया एव निषेधगोचरत्वात्। तदभिमत उत्सर्गापवादन्यायानवतारप्रकारश्चायम्—"अग्नीषोमीयं पशुमालभेते" ति नाग्नीषोमीयपशुहिंसा विधीयते; येन व्याप्यधर्मावच्छिन्नविधायकवाक्यप्रामाण्यानुरोधेन व्यापकधर्मावच्छिन्ननिषेधवाक्यस्य सङ्कोचप्रापक उत्सर्गापवादन्यायोऽवतरेत्; किन्त्वग्निहोत्रप्रकरणे 'वत्समालभेत' इत्यत्रेवात्राप्यालभेतेति स्पर्शो विधीयते, आङ्पूर्वकलभधातोस्तदर्थत्वात्, विशसनस्य तु "हृदयस्याग्रेऽवद्यति" "अथ जिह्वाया" इति अवदानश्रवणादेव प्रतीतेः। वस्तुतस्तु "अग्नीषोमीयं पशुमालभेत" इति पशुद्रव्यकस्य यागस्यैव विधिः, आलभ-

---

दिना। छिद्रेतरत्वस्यान्वयेनेति। शाब्दबुद्धित्वावच्छिन्नं प्रति पदजन्यपदार्थोपस्थितेरेव प्रयोजकत्वमिति न नियमः, अर्थापत्त्योपस्थितस्याप्यर्थस्य शाब्दबोधे भानं सम्भवतीति भावः। मीमांसकसमयसम्मतोऽयमन्वयबोधक्रमः।

एतेनेति। विधिनिषेधयोर्विभिन्नविषयत्वोपपादनेनेत्यर्थः। निरस्तमित्यनेनान्वयः। प्रकारान्तरेणेति। पूर्वोक्तप्रकारादन्येन प्रकारेणेत्यर्थः। प्रकारान्तरमेवोपपादयति—तदभिमत इत्यादिना। व्याप्यधर्मेति। न्यूनदेशवृत्तिर्धर्म इत्यर्थः। तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वं तद्व्याप्यत्वमिति यावत्। इह तथाविधो धर्मः—अग्नीषोमीयं पशुहिंसात्वम्, व्यापकधर्मः—हिंसात्वम्, विशेषे चेद्विधिः, सामान्ये प्रवृत्तो निषेधः सङ्कोचयितव्यः, वाक्यद्वयप्रामाण्यानुपरोधात्। इह तु विशेषे विधिरेव नास्तीति सामान्यशास्त्रस्य न सङ्कोचावसर इति यागीयपशुविशसनस्याप्यस्ति प्रत्यवायावहत्वेति भावः। अग्नीषोमीयपशुविशसनस्य विधिसंस्पर्शमुररीकृत्यापि प्रत्यवायावहत्वमुपपादितं कापिलैः। एतैस्तु विधिसंस्पर्शो न, परन्तु निषेधसंस्पर्श एवेति प्रत्यवायावहत्वमुपपाद्यत इति विभेदो बोध्यः। नन्वस्यालभेतेति विधिसंस्पर्शस्तत्कथमुच्यते नेतीत्यत्राह—किन्त्विति। स्पर्शो विधीयत इति स्पर्श एव विधिर्न तु विशसन इति भावः। अथ यदि तत्र न विधिः कथं तदवगमः, यद्यागे तदनुष्ठानं दृश्यते तत्राह—विशसनस्य त्विति। अवदानस्य विशसनमन्तराऽनुपपत्तेरिति भावः। यागस्यैव विधिरिति। न तु विशसनस्येत्यर्थः। आल-

भगवान् नापरः कोऽपि तत्त्ववित् । आत्मवत्सर्वभूतानि मान्यानीत्येव स ब्रुवन् ।
भगवान्कथमत्रेमां हिंसामुपदिशेत्कचित् । हिंसाविधिस्तु हिंसाया निवृत्त्यर्थोऽस्ति

तिश्च यागे लाक्षणिकः, अवगम्यते चैतत्पूर्वमीमांसायां द्वितीयाध्याये द्वितीयपादे पशुसोमापूर्वताधिकरणे । तत्र हि—"अग्नीषोमीयं पशुमालभेत" इति वाक्यमधिकृत्य किमिदं हृदयस्याग्रेऽवद्यति? इत्यादिना चोदितानामेव कर्मणां समुदायतोऽनुवादपरं; उताऽपूर्वकर्मान्तरविधायकमिति संशय्य पशुद्रव्यकयागरूपा, पूर्वकर्मविधिपरता समर्थिता । तथा च शाबरभाष्ये पूर्वपक्षग्रन्थे—'यदि चापूर्वौ यागौ विधीयेते' इत्यादिना अपूर्वयागविधिपरत्वे दोष उद्भावितः । सिद्धान्तग्रन्थे च तथा शृङ्गिणि पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे पशुशब्दमाकृतिवचनमुपचरन्ति न चैवमाकृतिकद्रव्याः प्रकृता यागा विद्यन्ते येषामिमावनुवदितारौ भवेयातामित्यादिना पशुद्रव्यकयागविधिपरता समर्थिता । एवं दशमाध्याये सप्तमे पादे 'अग्नीषोमीयं पशुमालभेत' इत्यत्र विहितः किं कृत्स्नः पशुरेकं हविः, उत प्रत्यङ्गं हविर्भेद? इति संशय्य प्रत्यङ्गं हविर्भेद इति समर्थनपरे प्रथमाधिकरणे च तस्य तथात्वावगमात् । तत्र हि पूर्वपक्षसूत्रे पशोरेव हविष्ट्वसमर्थने अग्नीषोमौ प्रति समस्तस्य पशोर्द्रव्यत्वेन "अग्नीषोमीयं पशुमालभेते"ति चोदितं लिङ्गतया वर्णितम् । भाष्ये च पूर्वपक्षग्रन्थे—अङ्गहविष्ट्वे च पशुशब्दे च लक्षणा स्यादिति सिद्धान्ते दूषणमुपात्तम् । सिद्धान्तग्रन्थे च—समस्तचोदना तु अङ्गहविष्ट्वेऽपि प्रणाड्याऽवतिष्ठतीत्यवकल्पत एवेति भाषितम् । पशुहननविधिपरत्वे कथमिदं सर्वं घटेत । तस्मादत्र पशुद्रव्यकयागस्यैव विधानात्, हिंसाया विधानाभावेन कथमुत्सर्गापवादनयप्रसरः । विशेषविधिश्चेत्खलु सामान्यनिषेधस्य सङ्कोचोऽपेक्ष्यते द्वयोर्वाक्ययोः प्रामाण्यपरिरक्षणायेति । तदेवमुत्सर्गापवादन्यायाऽनवकाशेऽप्युक्तरीत्या न क्रत्वङ्गविशसनस्य निषेधगोचरता ।

यत्तु—परैः कृतमविरोधेन नयनम्, इष्टसाधनत्वानिष्टसाधनत्वयोर्विधिनिषेधार्थयोः पार्थक्यादेकस्मिन्नविरोधाच्च "अग्नीषोमीयं पशुमालभेत" "न हिंस्यात्सर्वा भूतानि" इति विधिनिषेधवाक्ययोरविरोध इति । तदयुक्तम् । "कलञ्जं न भक्षयेत्" "कलञ्जं भक्षयेत्" इति द्वयोरपि वाक्ययोः प्रामाणिकतापत्तेः । अनिष्टसाधनत्वस्येव तृप्त्यादीष्टसाधनत्वस्य कलञ्जभक्ष-

भतेः कथं यागबोधकतेत्यत्राह—आलभतिश्चेति । ननु—लाक्षणिकार्थाश्रयणमयुक्तमित्यत आह—

अवगम्यते चैतदिति । इदं सर्वमिति । "अग्नीषोमीयं पशुमालभेते"ति वाक्यस्य पशुद्रव्यकयागरूपापूर्वकर्मपरतासमर्थनादि सर्वमित्यर्थः । उक्तरीत्येति । निराकृतेऽपि विधिसंस्पर्शे उक्तयुक्त्या निषेधस्पर्शस्यानवकाशेन न प्रत्यवायावहतेति भावः ।

कापिलाशयमनूद्य निरस्यति—यत्त्वित्यादिना । पार्थक्यादिति । तत्तदभावरूपत्वाभावादिति भावः । एकस्मिन्नविरोधाच्चेति । वह्निजलयोरिवापि विरोधो नास्तीत्यर्थः । एतेन तदभावव्याप्यविधयापीष्टसाधनत्वेऽनिष्टसाधनत्वं न विरोधीत्युक्तं भवति । प्रामाणिकतापत्तेरिति । अबाधितार्थकत्वादिति भावः । अबाधितार्थकतामेवोपपादयति—अनिष्टसाधनत्वस्येवेत्यादिना । विध्यर्थानन्वयमा-

सर्वथा । आत्मवत्सर्वभूतानि ततः पश्येच्च नान्यथे"ति । सात्त्विकास्तु सत्सङ्गेनैतज्जानन्तो हिंसारहितमेव यागं कुर्वन्ति । तदुक्तं भारते—"ते तु तद्ब्रह्मणः

---

णेऽक्षतेः । यदि च बलवदनिष्टाननुबन्धित्वसहितेष्टसाधनत्वस्यैव विधितः प्रत्यायनात् निषेधतस्तदनुबन्धित्वावगमात्, तृप्त्यादिसाधनेऽपि कलञ्जभक्षणे परतः प्रत्यवायानुबन्धिनि विध्यर्थबाधात्, न द्वयोः प्रामाणिकतेति विभाव्यते; हन्त!! तर्हि न हिंस्यादिति निषेधशास्त्रतो हिंसात्वावच्छेदेन बलवदनिष्टानुबन्धित्वे प्रमीयमाने विधिशास्त्रेण हिंसाविशेषे तदननुबन्धित्वं कथं प्रमीयेत ।

अथ—अनिष्टे बलवत्त्वं नामोत्कटद्वेषविषयत्वं, यस्य हिंसाजनितप्रत्यवाय उत्कटद्वेषः, तमपेक्ष्य बलवदनिष्टानुबन्धित्वं हिंसायाम्, यस्य च नोत्कटद्वेषः प्रत्यवाये किन्तूत्कटो रागः स्वर्गे तमपेक्ष्य बलवदनिष्टाननुबन्धित्वं चेति विधिनिषेधयोरविरोधः । न च—यं कञ्चिदपेक्ष्य बलवदनिष्टानुबन्धित्वे सति तत्सामान्याभावरूपं बलवदनिष्टाननुबन्धित्वं विध्यर्थः कथं घटेतेति वाच्यम् । विध्यर्थे बलवदनिष्टानुबन्धित्वसामान्याभावस्यानिवेशात्, अपि तु यत्किञ्चिदुत्कटद्वेषव्यक्तिमादाय तद्गोचरसाधनत्वाभावरूपबलवदनिष्टाननुबन्धित्वस्यैव निवेशात् । स्वविषयसाधनतात्वावच्छिन्नप्रतियोगिताकाभाववत्त्वसम्बन्धेनोत्कटद्वेषविशिष्टत्वं, बलवदनिष्टाननुबन्धित्वमित्येतत् । उत्कटद्वेषगोचरजनकत्वे, अभावे च विधेः खण्डशक्तिरिति तु हृदयम् । तथाच

---

शङ्कते—यदि चेत्यादिना । बलवदनिष्टानुबन्धित्वविशिष्टेष्टसाधनत्वं चेद्विध्यर्थस्तर्हि तदन्वयस्तुल्यः प्रकृतेऽपीत्याह—हन्त तर्हीति । कथं प्रमीयेतेति । तथा च त्वन्मते विधिनिषेधयोरेकतराप्रामाण्यमापतेदेवेति भावः ।

पुनरविरोधेन विधिनिषेधौ नयन्कापिलः प्रत्यवतिष्ठते—अथेति । न किञ्चिद्वस्तु स्वरूपत इष्टमनिष्टं वा, किन्तु प्रीतिविषयमिष्टम्, द्वेषविषयमनिष्टम्, उत्कटद्वेषविषयं चेद्बलवदनिष्टमुच्यते, तथा च बलवदनिष्टं न वस्तुतन्त्रम्, परन्तु पुरुषतन्त्रमेवेति बलवदनिष्टानुबन्धित्वं तदभावश्चोभयमेकस्मिन्पुरुषभेदेन स्यादेवेति भावः । बलवदनिष्टानुबन्धित्वसामान्याभावस्यैव विध्यर्थतयाऽग्नीषोमीयपशुविशसनेऽप्युक्तरीत्या बलवदनिष्टानुबन्धित्वस्यैव सत्त्वेनाऽग्नीषोमीयं पशुमालभेतेत्यत्र कथमालभने विध्यर्थान्वयः, सति तद्विशेषे तत्सामान्याभावो हि बाधित इत्याशयेन शङ्कते—न चेति । समाधत्ते—विध्यर्थ इत्यादिना । यत्किञ्चिदिति । यस्य स्वर्गे उत्कटो रागः, पश्वालभनप्रत्यवाये तु नोत्कटो द्वेषस्तदीयोत्कटद्वेषव्यक्तिमन्यत्र प्रसिद्धामादायेत्यर्थः । ननु विध्यर्थाननुगम इत्यत आह—स्वविषयेति । खण्डशक्तिरिति । अयमाशयः—यथा सकर्मकेण गम्यादिना फलं व्यापारश्चैकयैव शक्त्या स्वातन्त्र्येणोपस्थाप्येते, तथा बलवदनिष्टानुबन्धित्वमभावश्च विधितः स्वातन्त्र्येणैकयैव शक्त्योपस्थाप्येते, तत्र बलवदनिष्टानुबन्धित्वस्याभावे तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः । तथा च स्वर्गे समुत्कटप्रीतिमतो यद्बलवदनिष्टं तज्जनकत्वमादायोक्तसम्बन्धेन बलवदनिष्टानुबन्धित्वविशिष्टोऽभावो विध्यर्थस्तत्र सूपपाद इति । नच—येन रूपेण प्रतियोगी पदेनोपस्थाप्यते, तद्रूपावच्छिन्नप्रतियोगिनोऽभावेऽन्वयो व्युत्पन्नः, अन्यथा घटवति भूतले यत्किञ्चिद्घटाभावतात्पर्येण भूतले घटो नेति प्रयोगापत्तेरिति वाच्यम्, नञादिनोपस्थापितेऽभावे प्रतियोगिनोऽन्वय एव तथा नियमात् । हृदयमिति । अनेन

स्थानं प्राप्नुवन्तीह सात्त्विकाः। सतां वर्त्मानुवर्तन्तो यजन्ते ये त्वहिंसया" इत्यादि । प्राचीनबर्हिषं प्रति नारदश्चाह—"भो! भो! प्रजापते! राजन्! पशून्पश्य

---

यस्य स्वर्गे उत्कटो रागः, तस्य हिंसाजनितप्रत्यवाये नोत्कटो द्वेष इति, तदीयोत्कटद्वेषगोचरानुबन्धित्वस्य विध्यर्थस्याक्षतेर्न विरोध इति । मैवम् । तथा सति यस्य कलञ्जभक्षणजनितप्रत्यवाये नोत्कटो द्वेषः, किन्तु तद्भक्षणजनिततृप्त्यतिशय एव रागातिशयः, तदीयोत्कटद्वेषगोचरीभूतोदासीनासाधनत्वेन कलञ्जभक्षणस्य विध्यर्थाबाधात्, कलञ्जं न भक्षयेदितिवत्कलञ्जं भक्षयेदिति प्रयोगस्यापि प्रामाणिकत्वापत्तेः । न च—विधिप्रत्ययस्य बलवदनिष्टाननुबन्धित्वे इष्टसाधनत्वे च खण्डश एव शक्तिः । एवं च "अग्नीषोमीयं पशुमालभेत" इत्यादौ खण्डश उपस्थापितयोस्तयोर्मध्ये बलवदनिष्टाननुबन्धित्वरूपैकार्थस्य प्रहाणेन बोधान्न क्षतिरिति वाच्यम् । स्वरसतः प्रतीयमानार्थप्रहाणस्य निर्मूलत्वात् । न च—बलवदनिष्टानुबन्धित्वमावेदयन्ती "न हिंस्या"दिति निषेधश्रुतिरेव मूलमिति वाच्यम् । बलवदनिष्टाननुबन्धित्वसहितेष्टसाधनतामवगमयन्ती विधिश्रुतिरेव निषेधश्रुतिं कुतो न सङ्कोचयेत् । निरवकाशे विधिशास्त्रे औत्सर्गिकार्थपरित्यागकल्पनातः सावकाशस्य निषेधशास्त्रस्य वैधातिरिक्ते विहरणवर्णनस्यैव न्याय्यत्वाच्च । न च—"अग्नीषोमीयं पशुमालभेते"त्यत्र विधिप्रत्ययेन क्रतूपकारकताया एव बोधनादनिष्टानुबन्धिन्यामपि

---

विध्यर्थशरीरेऽनिष्टस्यानुबन्धित्वस्याभावस्य चानुप्रवेशस्येदानीमत्यागाद्विधेर्बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनतार्थकत्वप्रवादः सुसङ्गच्छत इति व्यज्यते । उत्कटद्वेषेऽभावे च खण्डशक्तिरित्यपि सुवचम् । एवमनूद्य केषाञ्चित्कापिलानामाशयं निरस्यति—मैवमिति । प्रत्यवायावहतयाऽभिमतेऽप्यालभने येन प्रकारेण विध्यर्थसमन्वयः क्रियते, तेनैव प्रकारेण प्रत्यवायावहताभिमते कलञ्जभक्षणेऽपि विध्यन्वयो निराबाध एवेति भावः । इदमुपलक्षणम्—कलञ्जभक्षण उक्तरीत्योत्कटद्वेषविशिष्टाभावरूपस्य बलवदनिष्टाननुबन्धित्वरूपविध्यर्थस्य सत्त्वेन तत्सामान्याभावस्य नञा बोध्यमानस्य तस्मिन्नसमन्वयात्र कलञ्जं भक्षयेदिति वाक्यस्याप्रामाण्यं स्यात् । नञश्च स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावबोधन एव व्युत्पत्तेः । एवं 'सन्न्यासिना धनं न सङ्ग्राह्य'मिति वाक्यस्याप्यप्रामाण्यं स्यात् । येषां सन्न्यासिनां धनार्जनजनितप्रत्यवाये नोत्कटो द्वेषः, प्रीतिरेव धनार्जने, तदीयोत्कटद्वेषविषयोदासीनासाधनत्वेनोक्तरीत्या विध्यर्थस्य सन्न्यासिकर्तृकधनार्जनेऽक्षततया तत्सामान्याभावस्य नञा बोध्यमानस्य तस्मिन्बाधादिति । प्रकारान्तरेण शङ्कते—न चेति । एवं चेति । खण्डशक्त्यङ्गीकारे चेत्यर्थः । निर्मूलत्वादिति । खण्डशः प्रतीयमानयोरर्थयोर्विशिष्य विशेषणभावे व्यत्ययो दृष्टः, नत्वेकतरार्थस्यात्यन्तिकस्त्याग इति भावः । नन्वस्ति त्यागे निमित्तमित्याशङ्कते—न चेति । कुतो न सङ्कोचयेदिति । अयं भावः—अवधूय विधिनिषेधयोरनयोरविरोधवादाभिनिवेशं, मिथो विरोधमधुनाऽऽशङ्क्य विध्यर्थे चेदेकांशं त्यजसि ? मार्गमस्मदीयमनुसृतस्त्वं विधिवचनमहिम्ना निषेधवचनस्यैव सङ्कोचं कुतो नानुमन्यसे ? इति भावः । ननु—विनिगमनाविरहेणास्मत्पक्षः परिगृह्यतां नामेत्यत्राह—निरवकाश इति । ननु—"ज्योतिष्टोमेन स्वर्गकामो यजेते"त्यादौ बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य विधितो बोधनेऽपि "अग्नीषोमीयं पशुमालभेते"त्याद्यङ्गविधौ क्रतूपकारकताया एव विधितो बोधनात् "न हिंस्यादि"ति निषेधशास्त्रावगतस्य बलवदनिष्टानुबन्धित्वस्य मानेन विधिनोपमर्दाभावात इति नोत्सर्गापवादनयावकाश इत्याशङ्कां परिहरति—न चेत्यादिना । क्रतूपकारकताया एवेति ।

त्वयाऽध्वरे । संज्ञापितान् जीवसङ्घान्निर्घृणेन सहस्रशः । एते त्वां सम्प्रतीक्षन्ते स्मरन्तो वैशसं तव । सम्परेतमयःकूटैश्छिन्दन्त्युत्थितमन्यवः" । तथा—"तं

---

हिंसायां क्रतूपकारकता स्यादेवेति विधिनिषेधयोरविरोध इति वाच्यम् । इष्टसाधनत्वातिरेकेण क्रतूपकारकताया दुर्वचत्वात् । तस्यास्ताद्रूप्येण विध्यर्थत्वासम्भवाच्च । तथा सति विध्यर्थाननुगमाच्च ।

ननु—बलवदनिष्टाननुबन्धित्वतदभावौ विधिनिषेधाभ्यां न प्रतीयेते, येन विधिनिषेधयोर्विरोधादिहोत्सर्गापवादावकाशो भवेत् । किन्तु प्रभूतसुखसाधनत्वं विधितः प्रतीयते, निषेधतस्तु प्रभूतदुःखसाधनत्वं प्रतीयते । इत्थञ्च कलञ्जभक्षणादेस्तात्कालिकतृप्त्यादिरूपसुखजनकत्वेऽपि ततोऽधिकतरपारलौकिकदुःखजनकत्वेन स्वजन्यसुखाधिकदुःखजनकत्वमेवास्तीति न कलञ्जं भक्षयेदिति प्रयोगोपपत्तिः, कलञ्जं भक्षयेदिति प्रयोगस्य तु नापत्तिः, दुःखाधिकसुखजनकत्वस्य विध्यर्थस्य बाधात्, तत्र हि दुःखमधिकं सुखं त्वल्पम्, दुःखापेक्षया सुखस्याधिकत्वं नामोत्कटरागजनकतावच्छेदकं वैजात्यमेव । एवं सुखापेक्षया दुःखस्याधिक्यं नामोत्कटद्वेषजनकतावच्छेदकं वैजात्यमेव । यत्र त्वल्पेऽपि सुख उत्कटो रागः; अल्पेऽपि दुःख उत्कटो विद्वेषः; तद्वैपरीत्यभ्रमादेव तु तथा । इत्थञ्च न हिंस्यादिति निषेधशास्त्रेण हिंसायां मारणजनिततात्कालिकलौकिकसुखापेक्षया प्रबलतरपारलौकिकदुःखजनकत्वमवग-

---

एवकारेण बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्य व्यवच्छेदः । दुर्वचत्वादिति । क्रतूपकारकतायाः क्रतुशरीरनिष्पादकतारूपायाः पश्वालभननिष्ठायाः क्रतुसाधनतारूपत्वेन क्रतोरपि स्वर्गद्वारेष्टत्वेनेष्टसाधनतायामेव पर्यवसानादिति भावः । ननु क्रतोः परम्परयेष्टत्वेऽपि क्रतुत्वेनैव विध्यर्थे प्रवेशान्न बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वस्येह विधितः समुपस्थापनमित्यत्राह—तस्यास्ताद्रूप्येण विध्यर्थत्वासम्भवादिति । विधिप्रत्ययस्य बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्व एव शक्तेर्न क्रतुत्वेन क्रतोर्विध्यर्थेऽनुप्रवेशावकाश इति भावः । अस्त्वेतदर्थतापीत्यत्राह—तथा सतीति ।

उत्सर्गापवादन्यायानवतारं प्रकारान्तरेणोपपादयन्परः शङ्कते—नन्विति । यजेतेत्यादिविधिवाक्ये लिङा प्रभूतसुखसाधनत्वं शक्त्या समुपस्थाप्यते, "न कलञ्जं भक्षये"दित्यादिनिषेधस्थले तु लिङा प्रभूतदुःखसाधनत्वं लक्ष्यते, लक्षणाग्राहकश्च नञ्समभिव्याहारः, नञश्च विरोधार्थकता सम्प्रतिपन्ना, प्रभूतदुःखसाधनत्वमेव तु प्रभूतसुखसाधनत्वविरोधि, तत् लक्षणाग्राहकत्वं नञो युक्तम्, तात्पर्यग्राहकतैव तु नञस्तत्र प्रयोजनं नार्थोपस्थापनमिति भावः । कलञ्जभक्षणे निषेधार्थं सङ्गमयति—इत्थं चेति । प्रभूतशब्दार्थं व्यञ्जयन्नाह—स्वजन्येति । स्वजन्यत्वस्य सुखे विशेषणात्कचिद्विधेये सुखान्तरतोऽधिकदुःखजनकेऽपि न निषेधावकाशः । दुःखाधिकेति । इहापि स्वजन्येति दुःखविशेषणं बोध्यम् । तेन निषिद्धस्यापि यस्मात्कस्माचिद्दुःखादधिकसुखजनकत्वेऽपि न क्षतिः । आधिक्यं किमित्यत आह—दुःखापेक्षयेत्यादिना । वैजात्यमेवेति । अतिशयविशेष इत्येतत् । वस्तुनश्चेदतिशयविशेषस्तथाविध इष्यते, कस्यचित्कचिदतथाभूते रागो वा विद्वेषो वा कथमित्यत्राह—यत्र त्वित्यादिना । विधिगोचरस्याप्यालभनस्य निषेधसंस्पर्शेन प्रत्यवायावहत्वमुपपादयति—इत्थं चेति । विधिनिषेधयोः

यज्ञपशवोऽनेन संज्ञप्ता येऽदयालुना । कुठारैश्चिच्छिदुः क्रुद्धाः स्मरन्तोऽमीवमस्य त" दिति ।

---

म्यते । अग्नीषोमीयं पशुमालभेतेत्यनेन त्वालभनस्य हिंसात्वेन प्राप्तं यत्पारलौकिकं दुःखं, तदपेक्षयाऽप्यधिकसुखविशेषजनकत्वमवगम्यते तदिह विधिनिषेधार्थयोः समावेशेनाविरोधादुत्सर्गापवादन्यायानवतारान्निषेधशास्त्रावगतप्रत्यवायसंस्पर्शोऽपरिहार्यः । मैवम् । यद्यपि सुखे दुःखे वाऽऽधिक्यमल्पत्वं वाऽनुभवतः कथञ्चिदवगम्यते; शास्त्रैकवेद्येऽस्मिन्नर्थे निषेधावगतस्य दुःखस्याल्पत्वं; विध्यवगतस्य सुखस्याधिक्यं च कथमवगम्यते, निषेधशास्त्रावगतस्य प्रत्यवायप्रयोज्यस्य दुःखस्यैवाधिक्यं किं न गृह्येत; निषेधशास्त्रं हि सुखाधिकदुःखमवगमयति, एवं च सति स्वर्गसुखादप्यधिकं दुःखमेव कुतो नावगमयेत् । उक्तञ्च श्रीमता वेदान्ताचार्येण सेश्वरमीमांसायाम्—"तदसत् । शास्त्रैकवेद्ये सुखे दुःखे च किं प्रभूतमिति नियामकाभावात् विधिबलात्सुखाधिक्यं कल्प्यत इति चेत्; निषेधबलाद्दुःखाधिक्यं किं न कल्प्येत, अल्पदुःखसाधनेऽपि सुखाधिक्याल्लोके विधिर्दृश्यत इति चेत्; अल्पसुखसाधनेऽपि दुःखाधिक्यान्निषेधोऽपि" इति ।

यदपि—इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वरूपं बलवदनिष्टाननुबन्धित्वं विधितः प्रतीयते, कलञ्जभक्षणादौ तृष्णादिरूपेष्टोत्पत्तिनान्तरीयकदुःखाधिकनिरयदुःखजनकत्वसत्त्वात् कलञ्जं भक्षयेदिति प्रयोगस्य नावकाशः । यागीयहिंसायां तु न तज्जनितस्वर्गादिरूपेष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकता । यच्च दुःखं हिंसात्वाविशेषात्प्रसजति, तद्धि

---

प्रभूतसुखदुःखसाधनतार्थत्वे चेत्यर्थः । परिहरति—मैवमिति । सुखे दुःखे वेति । लौकिक इति शेषः । अनुभवत इति । प्रत्यक्षत इत्यर्थः । तयोः स्वानुभवैकवेद्यत्वान्न स्वपरसाधारण्येन प्रत्यक्षतस्तत्सिद्धिः । अनुमानेन तु परकीये तथात्वनिश्चयः कदाचित्स्यादिति कथञ्चिदित्युक्तिः । कथमवगम्यत इति । स्वर्गसुखस्य निरयदुःखस्य वा केनाप्यदृष्टत्वेन तयोर्मध्ये इदं महदिदमल्पमिति विविच्य निश्चेतुं न शक्यमिति भावः । किं न गृह्येतेति । अयं भावः—यदि नाम विभाव्यते निषिद्धेऽपि श्रूयमाणो विधिरेव स्वस्वारस्यादालभनरूपहिंसाजनितप्रत्यवायादालभनघटितक्रतुप्रयोज्यस्वर्गसुखस्याधिक्यमवगमयतीति, तर्हि विहितेऽपि श्रूयमाणा "न हिंस्यात्सर्वा भूतानी"ति श्रुतिः सर्वशब्दस्वारस्यात्स्वस्वारस्याच्च स्वर्गसुखाद्धिंसाजनितनिरयदुःखस्यैवाधिक्यं किं नावगमयेत्, दुःखगताधिक्यावधितया लौकिकसुखमात्रमेव निषेधत उपस्थाप्यते नान्यदिति सङ्कोचे नियामकं न किमप्यस्ति, उभयोः समबलत्वाद्यदि सङ्कोचः, उत्सर्गापवादनयाश्रयणेन सर्वशब्दस्यैव कुतो न सङ्कोच इति भावः ।

मतमपि निषेधसंस्पर्शे विध्यन्वयं प्रकारान्तरेणोपपादयतां मतमनूद्य दूषयति—यदपीत्यादिना । इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वरूपमिति । येन दुःखेन विनाभूतेष्टोत्पत्तिस्तदेव दुःखमिष्टोत्पत्तिनान्तरीयकदुःखमुच्यते । तादृग्दुःखभिन्नदुःखाजनकत्वरूपं तदित्यर्थः । कलञ्जं भक्षयेदिति प्रयोगस्य नावकाश इति । "न कलञ्जं भक्षये"दिति प्रयोगस्य नानुपपत्तिरित्यपि बोध्यम् । यागीयहिंसायां त्विति । तुशब्देन दृष्टमात्रफलकलौकिकहिंसातो व्यावृत्तिर्व्यज्यते । विध्यर्थमात्मते सङ्क-

एतेन—देवतापितृयागार्थपशुहिंसानिषेधेन वरातिथिपूजार्थं शास्त्रार्थानभि-

---

द्रव्यव्ययायासादिजनितदुःखमिव नान्तरीयकम् । नहि कश्चिदपि तद्दुःखमननुभवन्स्वर्गसुखमात्रमनुभवति, अन्तरान्तराऽनुभवन्त्येव स्वर्गेऽपि दुःखम्, यथेन्द्रादेः वृत्रादितो दुःखम्, तदवर्जनीयद्रव्यव्ययायासादिदुःखमिवावर्जनीयमान्तरालिकं हिंसाजनितदुःखमपि सहन्ते, अन्यथाऽभिलषितस्वर्गासिद्धेरिति । तदपि न । इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वरूपबलवदनिष्टानुबन्धित्वस्य न हिंस्यादिति निषेधशास्त्रेण हिंसात्वावच्छेदेन गृहीतत्वात्, तदभावरूपविध्यर्थस्य हिंसाविशेषे बाधात् । न च—घटवत्ताज्ञानस्य नीलघटाभाववत्ताज्ञानेऽविरोधित्ववत्सामान्यत इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वे निषेधशास्त्रेण गृहीतेऽपि स्वर्गात्मकेष्टविशेषघटिततदभावस्य हिंसाविशेषे विधितोऽवगतेरविरोध इति वाच्यम् । इष्टत्वेन स्वर्गादेरप्युपसङ्ग्रहात्, तदुत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वेऽवगते तदभावग्रहस्यानुपपत्तेरेकतरशास्त्राप्रामाण्यस्य दुर्वारत्वात् । नहि द्रव्याधिककार्यजनकत्वेनावगतेऽर्थे घटाधिककार्यजनकत्वाभावोऽवगम्यते । न हिंस्यादिति निषेधत इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वेऽवगम्यमान इष्टत्वेन लौकिकेष्टस्यैव सङ्ग्रहो न स्वर्गादेरित्यत्र नहि नियामकमस्ति ।

---

मयति—यच्चेत्यादिना । हिंसात्वाविशेषादिति । निषेधगोचरतानेन व्यज्यते । अवर्जनीयमान्तरालिकमिति । तथा च हिंसात्वेन प्रत्यवायावहेऽप्यालभन इष्टोत्पत्तिनान्तरीयकं दुःखाधिकदुःखाजनकत्वमस्त्येवेति विध्यर्थोपपत्तिरिति भावः । तदभावरूपविध्यर्थस्य हिंसाविशेषे बाधादिति । ननु—यागीयहिंसायां निषेधशास्त्रसंस्पर्शोऽस्ति न वा ? नास्ति चेन्न प्रत्यवायावहता, अस्ति चेदिष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखजनकत्वयोगोऽबाधित एव, एवं च सति विधितस्तद्बाधः कथं घटेतेति भावः । अविरोधित्ववदिति । घटवत्ताज्ञानस्य पीतघटमात्रमवलम्ब्यापि सम्भवदुदयस्य नीलघटवत्ताज्ञानघटाभाववत्ताज्ञान इव यत्किञ्चिदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वमवलम्ब्य संभवदुदयस्य निषेधशास्त्रजन्यज्ञानस्य स्वर्गरूपेष्टविशेषोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वाभावरूपविध्यर्थावगमे नोपमर्दकतेति भावः । सामान्यत इति । स्वर्गरूपेष्टविशेषो निषेधशास्त्रे न नान्तरीयकत्वप्रतिसम्बन्धितया स्फुरति, इष्टत्वेन सामान्यमुखेन लौकिकेष्टमेवावगम्यत इति व्यञ्जनाय सामान्यत इत्युक्तिः । इष्टत्वेनेति । अयं भावः—इष्टोत्पत्तिनान्तरीयकदुःखाधिकत्वं दुःखे तथाविधदुःखसामान्यभिन्नत्वमेव वाच्यम्, न तु तथाविधयत्किञ्चिद्दुःखभिन्नत्वम्, नान्तरीयकेष्वनेकेषु दुःखेषु मध्ये कस्यचित्कस्माच्चिद्भिन्नत्वेन "यावज्जीवमग्निहोत्रं जुहोती"ति वाक्यस्याप्रामाण्यापत्तेः, तथा च स्वर्गसमयेऽनुभूयमानस्यापि दुःखस्येष्टोत्पत्तिनान्तरीयकदुःखसामान्यान्तर्गततया तद्भिन्नदुःखान्तरजनकत्वस्यैव हिंसात्वेनोपस्थिताया यागीयहिंसाया बोधनात्तत्सामान्याभावरूपो विध्यर्थः कथमालभने घटेतेति भावः । नहि नियामकमस्तीति । विध्यर्थशरीर इष्टस्येष्टत्वेनैव सामान्यरूपेण प्रवेशः कार्यः, अन्यथा प्रवृत्तिनिमित्ताननुगमप्रसङ्गात्, तथा च निषेधशरीरे तस्य विशेषरूपेण प्रवेशोऽनुपपन्नः विधितो योऽर्थो येन रूपेणोपस्थाप्यते तद्रूपविशिष्टतदभावस्यैव निषेधेन बोधनात्, लक्षणया चेत्तथाऽऽस्थीयते न तत्र नियामकं किञ्चिदिति भावः ।

ज्ञसम्मतः पशुवधोऽपि निषिद्ध एव। न च—"महोक्षं वा महाजं वा श्रोत्रिया-

---

ननु—न हिंस्यादिति निषेधस्थले यत्किञ्चिदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वरूपं बलवदनिष्टानुबन्धित्वं प्रतीयते, "अग्नीषोमीयं पशुमालभेत" इति विधिस्थले त्विष्टविशेषोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वं प्रतीयते। इत्थञ्च वैधहिंसाजन्यस्य दुःखस्य तज्जन्यस्वर्गोत्पत्तिनान्तरीयकदुःखानधिकत्वेऽपि प्रीत्यादिरूपलौकिकेष्टोत्पत्तिनान्तरीयकदुःखाधिकत्वेन प्रीत्यादिरूपयत्किञ्चिदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वरूपनिषेधशास्त्रार्थस्यापि वैधहिंसायामनपायात्प्रवर्त्तत एव तत्रापि निरङ्कुशं निषेधशास्त्रमिति प्रत्यवायो वैधेऽपि विशसनेऽपरिहार्य इति चेत्। मैवम्। तथा सति यजेतेतिवत् न यजेतेत्यपि प्रयोगापत्तेः, यागस्यापि स्वजन्यस्वर्गसाधनीभूतावान्तरापूर्वात्मकयत्किञ्चिदिष्टापेक्षया बलवदनिष्टानुबन्धित्वसम्भवात्। प्रत्यवायफलस्य दुःखस्य स्वर्गसमकालत्वकल्पनेन स्वर्गापेक्षया नान्तरीयकत्वोपपादनेऽप्यपूर्वतः पश्चाज्जायमानस्य तदपेक्षया नान्तरीयकत्वाभावात्। यदि च सामग्र्यैक्येन पूर्वमुत्तरं वाऽवश्यंभावित्वमात्रमाश्रित्यापूर्वापेक्षयाऽपि नान्तरीयकत्वमेव तस्य विभाव्येत तदा

---

नन्विति। अयं भावः—यजेतेत्यादिप्रवर्तनास्थले यत्किञ्चिदिष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखाजनकत्वं स्वोत्पत्तिनान्तरीयकदुःखाभिन्नदुःखाजनकत्वसम्बन्धेनेष्टविशिष्टत्वरूपं विधितो बोध्यते। "न कलञ्जं भक्षये"दित्यादिनिवर्तनास्थले तु यत्किञ्चिदिष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखजनकत्वं स्वोत्पत्तिनान्तरीयकदुःखभिन्नदुःखजनकत्वसम्बन्धेनेष्टविशिष्टत्वरूपं विधितो बोध्यते। उभयत्र विधिप्रत्ययस्य शक्त्या तत्र तत्र तत्तद्बोधः, निवर्तनास्थले नञस्तात्पर्यग्राहकतैव। यद्वा—प्रवर्तनास्थले विधेरुक्तार्थशक्तिः, निवर्तनास्थल उक्तार्थे विधेर्लक्षणैव, लक्षणाग्राहकश्च नञ्समभिव्याहारः। ननु—नञ्समभिव्याहारे योऽर्थो येन वाक्येन प्रतीयते, नञ्समभिव्याहारे तेन वाक्येन तदभावस्यैव प्रतीतेरौत्सर्गिकतया निवर्तनास्थले नञ्समभिव्याहारादृते विशेषस्यान्यस्याभावेन कथमुक्तार्थविशेषप्रतिपत्तिर्लक्षणया वाऽऽश्रीयत इति चेत्—"न हिंस्यात्सर्वा भूतानि" "अग्नीषोमीयं पशुमालभेते"ति द्वयोः प्रामाण्यानुरोधेनैव तत्र लक्षणाऽऽश्रीयते, अन्यथैकतरवाक्यस्याप्रामाण्यापत्तेः, इत्थं च "न हिंस्यात्सर्वा भूतानी"ति वाक्यतोऽग्नीषोमीयपशुहिंसायां प्रीत्यादिरूपलौकिकेष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखजनकत्वरूपं बलवदनिष्टानुबन्धित्वमस्ति, स्वर्गरूपेष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखाजनकत्वरूपं बलवदनिष्टाननुबन्धित्वमप्यस्तीति वाक्यद्वयप्रामाण्यसङ्गतिरिति भावः। विधिनिषेधयोरुक्तार्थविशेषावबोधकताज्ञापनायैव बलवदनिष्टानुबन्धित्वनिर्वचने यत्किञ्चिदिष्टेति, बलवदनिष्टानुबन्धित्वनिर्वचन इष्टविशेषेति चोक्तम्। यद्वा—विधिप्रत्ययस्येष्टोत्पत्तिनान्तरीयकदुःखभिन्नदुःखाजनकत्वमेवार्थः, न तु यत्किञ्चिदिष्टघटितं पूर्वोक्तम्, निवर्तनास्थले तूक्तेऽर्थे लक्षणा, आलभने तु स्वर्गाख्येष्टस्यापीष्टसामान्यान्तर्गततयाऽऽलभनतो जायमानस्य दुःखस्य तदुत्पत्तिनान्तरीयकतया तथाविधदुःखभिन्नदुःखाजनकत्वमबाधितमिति ज्ञापनायैवेष्टविशेषेत्युक्तिः, न तु विध्यर्थशरीरे यत्किञ्चिदिष्टत्वेनेष्टस्य प्रवेशज्ञापनाय, तत्र तथा सङ्कोचकरणस्यानावश्यकत्वात्। यत्किञ्चिदिष्टापेक्षयेति। उक्तसम्बन्धेनेष्टविशिष्टत्वरूपबलवदनिष्टानुबन्धित्वस्य तत्र सत्त्वादिति बोध्यम्। ननु—स्वर्गसुखानुभवकालेऽनुभूयमानं दुःखमेव नान्तरीयकमाल-

योपकल्पयेत् । सत्क्रियान्वासनं स्वादु भोजनं सूनृतं वच" इति याज्ञवल्क्येन स

---

फलञ्जभक्षणादिजनिततृप्तिविशेषापेक्षया नान्तरीयकत्वं नारकदुःखादेरप्यवर्जनीयम् । नहि तादृशतृप्तिविशेषोऽनिरयोत्तरो घटेत । तदवश्यम्भावि तद्दुःखमपि तृप्तिविशेषस्य नान्तरीयकमेवेति निषेधानुपपत्तिः किन्तु विध्यापत्तिश्च । वस्तुतस्तु—निषेधशास्त्रेण हिंसात्वावच्छेदेन तत्तद्धिंसासु तत्तदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्यैव बलवदनिष्टानुबन्धित्वबोधकनिषेधशास्त्रेण तत्र प्रतीतेर्बलवदनिष्टाननुबन्धित्वावबोधकालम्भनविधिशास्त्रेण विरोधात् शास्त्रद्वयगोचरतया तत्र प्रत्यवायोपपादनं दुर्घटमेव । किञ्च—सुखदुःखयोरनुभवेन शास्त्रेण वाऽवगम्यं महत्त्वमल्पत्वं वा दूरीकृत्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखत्वमेव दुःखे बलवत्त्वमिति यत्परिष्क्रियते, तत्केवलं परिष्करणकौशलमेव । नहीष्टोत्पत्तिनान्तरीयकदुःखान्नाधिकं दुःखमनया क्रिययेति निश्चयमात्रात्प्रवर्त्तते कश्चित् । किन्तु नान्तरीयकमपि प्रबलमिति यदा जानाति सुखं चाल्पमिति तदा निवर्त्तत एव । यदा चानया क्रियया पश्चाज्जायमानमपि दुःखमत्यल्पं, अद्यतनं सुखं तु प्रबलमिति मन्यते तदा इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकेऽपि प्रवर्त्तत एव, तस्मादुक्तविध्यर्थस्य प्रवर्त्तकता भज्येत । यत्र लौकिकं सुखमत्यल्पं नान्तरीयकं चातिदुःखं तत्र लौकिकाल्पेष्टापादके लौकिके कर्मणि विध्यापत्तिः । नहि प्रामाणिकानां तत्र तथा प्रयोगः । एवं येन व्यापारेण सुखं प्रभूतं दुःखं पश्चात्तनमप्यत्यल्पं तत्र विधिप्रयोगः प्रामाणिको व्याहन्येत ।

ननु—स्यान्नाम बलवदनिष्टानुबन्धित्वतदभावयोर्विरोधः । किं तावता प्रकृते, किं वा तत्स्वरूपचर्चया, यतोऽयं न विध्यर्थः, न वा नञ्समभिव्याहारे तदभाव उपस्थाप्यः । किन्तु प्रवर्त्तना विध्यर्थः, निषेधस्थले निवर्त्तना, ते च क्रमादयमत्र प्रवर्त्ततामयमितो निवर्त्ततामित्याकारेच्छाविशेषौ । लोक आप्तस्य, वेद ईश्वरस्य । ईश्वरमनङ्गीकुर्वाणास्तु इमामेव शाब्दीं भाव-

---

भनेनोत्पाद्यत इत्याशङ्कायां न तदपूर्वापेक्षया नान्तरीयकमित्याह—प्रत्यवायफलस्येति । तत्तदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्यैवेति । तत्तद्धिंसाजन्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्यैवेत्यर्थः । स्वजनकत्वस्योत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वोभयसम्बन्धेनेष्टविशिष्टत्वरूपबलवदनिष्टानुबन्धित्वस्यैवेति यावत् । दुर्घटमेवेति । यदि क्रिया स्वजन्यादिष्टाद्बलवद्दुःखं जनयेत्तदा तस्यां बलवदनिष्टानुबन्धित्वव्यवहारः प्रामाणिको लोकानाम्, न तु यतः कुतश्चिदिष्टात्, तत्तद्धिंसात्वावच्छेदेन यत्किञ्चिदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वविवक्षणेऽपि यत्किञ्चिदिष्टं स्वजन्यमेव ग्राह्यम्, आलभनेन तु जायमानमिष्टं स्वर्गसुखमेव ततो नान्तरीयकमेव ततो जायमानतया भवदभिमतं दुःखमिति न घटेत निषेधसंस्पर्शोपपादनमिति भावः । आयास एव केवलं भवतामित्याह—किञ्चेति । अयमाशयः—इतो जनिष्यमाणमनिष्टं बलवदिति जानन्निवर्त्तते, इतस्तु न बलवदिति जानन्प्रवर्त्तत इति तु लोकसिद्धम्, तत् निवर्त्तनायामुपयोग्येवानिष्टे बलवत्त्वं वक्तव्यम्, यत्तत्र नोपकारकं तच्चेद्बलवत्त्वरूपं परिष्क्रियते, आयास एव हि केवलमिति भावः ।

बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वादन्यदेव *विध्यर्थमाकलय्याऽऽलभने विधिनिषेधसंस्पर्शं* वर्णयतां केषाञ्चित्पक्षमुपक्षिपति—नन्वित्यादिना । ईश्वरमनङ्गीकुर्वाणास्त्विति । मीमांसकैकदेशिन

विहित इति वाच्यम्। तदर्थस्य मिताक्षरायां विज्ञानेश्वरेण पशुहिंसानिषेधपरत्वेनैव प्रतिपादितत्वात्। तथाहि—महान्तमुक्षाणं धौरेयं महाजं वा श्रोत्रियायोक्तलक्षणाय

---

नामाचक्षते। प्रवर्त्तनात्वमिव निवर्त्तनात्वमपि प्रवृत्तिनिमित्तमास्थीयते नञ्समभिव्याहारे। तौ चाखण्डधर्मावनतिप्रसक्ताविति च। यद्वा—तयोर्द्वयोरप्येकोऽनतिप्रसक्तः कश्चिदखण्डधर्मः प्रवृत्तिनिमित्तमास्थीयते। आख्यातार्थकृतौ प्रवर्त्तनाप्रयोज्यत्वं प्रतीयते। नञ्समभिव्याहारे च तदभावे निवर्त्तनाप्रयोज्यत्वं प्रतीयते। युज्यते चैतत्। अनेन प्रेरितोऽहमिदं करोमि, अनेन निवर्त्तितोऽहमिदं न करोमीति हि विधिनिषेधावनुसरतो वचने। प्रवर्त्तनानिवर्त्तनयोः प्रवृत्तिनिमित्तैक्येऽपि नञ्समभिव्याहारो निवर्त्तनायां तात्पर्यग्राहकः। इत्थञ्च क्रतूपकारकत्वेनाग्नीषोमीयालभनकृतौ प्रवर्त्तनाप्रयोज्यत्वस्य, हिंसात्वेन हिंसाया अभावे निवर्त्तनाप्रयोज्यत्वस्य च को विरोधः। यस्य स्वर्गे रुचिः स प्रयोज्यते प्रवर्त्तनया, यस्य दुःखविशेषे द्वेषः स निवर्त्यते निवर्त्तनयेति चेत्। सत्यम्। अयमेव विध्यर्थनिर्वचनप्रकारः, परन्तु प्रदर्शिते परोत्प्रेक्षिते पथीवात्रापि भवतामनिस्तारः, तथाहि—यद्यप्यस्मिन्पक्षे न वृत्त्या बलवदनिष्टाननुबन्धित्वावबोधस्तथापि तदवगमोऽवर्जनीय एव। प्रवर्त्तनाप्रयोज्यत्वं हि प्रवर्त्तनाविशेषविषयत्वज्ञानजन्यानुमितिविशेषप्रयोज्यत्वरूपमेव, यागविशेष आप्तप्रवर्त्तनाविषयत्वमवगम्य बलवदनिष्टान-

---

इत्यर्थः। इमामेवेति। प्रवर्त्तनां निवर्त्तनां चेत्यर्थः। निवर्त्तना च न लक्ष्यार्थः किन्तु शक्यार्थ एवेत्याह—प्रवर्त्तनात्वमिवेति। इच्छाविशेषगतं प्रवर्त्तनात्वं निवर्त्तनात्वं च किंरूपमित्यत आह—तौ चेति। इति चेति। आस्थीयत इति शेषः। विधिप्रत्ययस्यानेकार्थताश्रयणमनुचितमित्याशयेन प्रवर्त्तनानिवर्त्तनोभयसाधारणं धर्मविशेषमङ्गीकृत्यैकार्थतामेवोपपादयति—यद्वेति। आख्यातार्थकृतौ प्रवर्त्तनाप्रयोज्यत्वं प्रतीयत इति। आख्यातत्वेनाऽऽख्यातेनोपस्थापितायां कृतौ लिङ्त्वेन लिङोपस्थापितायाः प्रवर्त्तनायाः प्रयोज्यत्वसम्बन्धेनान्वय इति भावः। तथा च यजेतेत्यादिविधिप्रत्ययसमभिव्याहारस्थले प्रवर्त्तनाप्रयोज्यकृतिविषयो याग इति धात्वर्थमुख्यविशेष्यको बोधो बोध्यः। नञ्समभिव्याहारे चेति। धात्वर्थस्य कृतौ, कृतेश्च नञर्थे, तत्र च निवर्त्तनाप्रयोज्यत्वस्यान्वयः। विध्यर्थनिवर्त्तनायाः प्रयोज्यतासम्बन्धेन नञर्थे–अभावे, तस्य च प्रतियोगितासम्बन्धेनाख्यातार्थकृतौ, कृतेश्च विषयतासम्बन्धेन धात्वर्थेऽन्वय इति भावः। प्रवर्त्तनाया इव निवर्त्तनाया अपि विध्यर्थत्वे यजेतेत्यादौ कुतो न तत्प्रतीतिरित्यत्र नियामकं किमित्यत आह—प्रवर्त्तनानिवर्त्तनयोरिति। विधिनिषेधयोरीदृशार्थविशेषावबोधकत्वेनाऽऽलभने तयोरविरोधेनान्वयो न घटेतैवेत्याह—इत्थं चेति। उक्तपक्षं प्रतिक्षिपति—सत्यमित्यादिना। सत्यमित्यर्धाङ्गीकारे, तत्र विध्यर्थनिर्वचनांशेऽभ्युपगमः, आलभने निषेधसंस्पर्शेन प्रत्यवायावहत्वोपपादनप्रकारे त्वनभ्युपगमः। तदेतदुपपादयति—अयमेवेत्यादिना। एवकारेण पक्षान्तरेऽरुचिर्ज्ञाप्यते। प्रभ्यन्तनिष्णातैरभ्युपगतत्वादस्मिन्पक्ष आदर इति बोध्यम्। विशेषस्तु विधिसुधाकरादिषु द्रष्टव्यः। अनिस्तारमेवोपपादयति—तथाहीति। वृत्त्येति। लिङेति शेषः। अवर्जनीय एवेति। प्रवर्त्तनाया एव विध्यर्थतया यद्यपि न वृत्त्या तद्बोधस्तथापि संसर्गशरीरज्ञापकतया तद्बोधोऽवर्जनीय एवेत्यर्थः। प्रवर्त्तनाविशेषेति। नित्यकाम्यादिविधिभेदेन प्रवर्त्तनायां विशेषो बोध्यः। आप्तप्रवर्त्तनाविषयत्वमवगम्येति। आप्तोऽत्रेश्वरः। अनुमाय इति। यदि कश्चित्कस्यचित्क्रियायां

स्वगृहागतायोपकल्पयेत्, भवदर्थमयमस्माभिः परिकल्पित इति तत्प्रीत्यर्थं न तु दानाय व्यापादनाय वा, यथा सर्वमेतद्भवदीयमिति, प्रतिश्रोत्रियमुक्षासम्भवात्।

नुबन्धीष्टसाधनत्वमनुमाय हि ततः प्रवर्त्तते। एवं निवर्त्तनाविशेषविषयत्वेन भवति बलवदनिष्टानुबन्धित्वानुमितिः। अतस्तत्प्रयोज्यत्वमपि तद्विषयत्वज्ञानजन्यानुमितिप्रयोज्यत्वरूपमेव। इत्थञ्च विधिनिषेधयोर्बलवदनिष्टाननुबन्धित्वतदभावावगमस्यावर्जनीयतयोक्तविधिनिषेधयोरविरोधो दुरुपपाद एव। न च—प्रवर्त्तनयेष्टसाधनत्वमात्रानुमितिः, निवर्त्तनयाऽनिष्टसाधनत्वमात्रानुमितिः, न बलवदनिष्टाननुबन्धित्वस्य तदभावस्य वेति प्रवर्त्तनाविषयत्वज्ञानजन्येष्टसाधनत्वानुमितिप्रयोज्यत्वरूपं प्रवर्त्तनाप्रयोज्यत्वं, निवर्त्तनाविषयत्वज्ञानजन्यानिष्टसाधनत्वानुमितिप्रयोज्याभावप्रतियोगित्वरूपं निवर्त्तनानिवर्त्त्यत्वमप्युक्तरीत्या स्यादेवालभन इति नात्र विधिनिषेधयोर्विरोध इति वाच्यम्। न कलञ्जं भक्षयेदितिवत्प्रीतिकामः कलञ्जं भक्षयेदित्यस्यापि प्रामाणिकत्वापत्तेः। नच—कलञ्जभक्षणे प्रीतिफलकत्वस्य प्रत्यक्षेणैवावगततया प्रवर्त्तनाविषयत्वलिङ्गेन प्रीतिरूपेष्टसाधनत्वानुमितेरसम्भवात्स्वविषयत्वज्ञानजन्येष्टसाधनत्वानुमितिप्रयोज्यत्वसम्बन्धेन विध्यर्थस्य कलञ्जभक्षणे तत्कृतौ वाऽनन्वयान्नोक्तप्रयोगापत्तिरिति वाच्यम्। तथापि न सुरां पिबेदितिवत्पुष्टिकामो मात्रया सुरां सेवेतेत्यस्य प्रामाणिकत्वापत्तिः। तृप्तेः प्रत्यक्षावगतत्वेऽपि पुष्टिविशेषरूपेष्टसाधनत्वस्योक्तप्रवर्त्तनाविषयत्वेनानुमानसम्भवात्। अवगतेऽप्यर्थे सिषाधयिषयाऽनुमानसम्भवाच्च।

यदपि—स्वर्गेऽप्यनुभूयमाने देवासुरसङ्ग्रामादिनिमित्ते यत्र क्वचन दुःखे पशुविशसनफलत्वकल्पनेनेष्टोत्पत्तिनान्तरीयकत्वोपपादनम्, तदपि न साधीयः। अननुष्ठाय यागविशेषं केवलतपश्चर्यया ये प्राप्नुवन्ति तेषामपि तस्य दुःखस्य समत्वात्। तत्र विशसनप्रत्यवायफलत्वकल्पनाया अन्याय्यत्वात्। दुःखान्तरे च मानाभावात्। तस्माद्यज्ञे पशुविशसनं न प्रत्यवायाय।

स्वस्येष्टमनिश्चित्यैव प्रवर्त्तेत, प्रवर्त्तनामात्रं तु न प्रयोजकम्, परन्त्वाप्तप्रवर्त्तनागोचरतां जानन्बलवदनिष्टाननुबन्धीष्टसाधनतामनुमाय तत्र प्रवर्तते, एवमेव चाप्तनिवर्त्तनागोचरतां जानन्बलवदनिष्टानुबन्धित्वमनुमाय निवर्त्तते, तत् निवर्त्तनागोचरत्वं प्रवर्त्तनागोचरत्वं वा यदाऽवगम्यते तदा बलवदनिष्टानुबन्धित्वस्य तदभावस्य वा निश्चयो भवत्येवेति तद्बोधोऽवर्जनीय एवेति भावः। तत्प्रयोज्यत्वमपीति। निवृत्ताविति शेषः। विधिनिषेधयोरिति। विधिवाक्ये निषेधवाक्ये चेत्यर्थः। प्रवर्त्तनानिवर्त्तनयोरिष्टसाधनत्वानिष्टसाधनत्वमात्रयोरनुमापकतामाकलय्याशङ्कते—न चेति। परिहरति—नेति। प्रीतिरूपेष्टसाधनत्वानुमितेरसम्भवादिति। सिद्ध्यभावरूपपक्षताया अभावादित्यर्थः। सिषाधयिषयेति। सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतायाः सम्भवादिति भावः।

यागे पशुविशसनं यदि परत्र दुःखावहं स्याचदा हि तस्य प्रत्यवायावहत्वं स्यात्, दुःखावहत्वैव तु न, तस्मात्प्रत्यवायावहत्ववर्णनं परेषामसङ्गतमित्याशयेनाह—यदपीत्यादिना मानाभावादित्यन्तेन। तत्र देवासुरसङ्ग्रामादिनिमित्तं यद्दुःखं तदेव पशुविशसनप्रत्यवायफलमित्युच्यते? उतान्यदेव यत्किञ्चिदुच्यते? इति विकल्प्याद्यं दूषयति—अन्याय्यत्वादित्यन्तेन। द्वितीयं शिरो दूषयति—मानाभावादित्यन्तेन। एतेन देवासुरसङ्ग्रामादिनिमित्तकदुःखस्य इष्टोत्पत्तिनान्तरीयकत्वनिरास-

"अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्वि"ति निषेधाच्च । तस्मात्सत्क्रियाद्येव

यदि प्रत्यवायजनकत्वेऽप्याग्रहस्तदा प्रायश्चित्तार्थं विहितेष्वालम्भेषु पापापनोदकत्वं पापापादकत्वं चेत्युभयं विरुध्येत । अथ चेत्पापव्यक्तिभेदेन परिहारः, अन्ततः पापजनकमेव प्रायश्चित्तकर्मावगच्छन्न कोऽपि प्रेक्षावान्प्रवर्त्तेत प्रायश्चित्ते । परिहार्यं प्रबलं जायमानं त्वल्पमिति तु तारतम्यं न केनाप्यवगम्यते, निषिद्धत्वेन साम्यात् । नह्यवकीर्णिप्रत्यवायतो गर्दभालभनप्रत्यवायो न्यून इत्यवगमकं किञ्चिदस्ति । आह च कण्ठरवेण—"तस्माद्यज्ञे वधोऽवधः" इति मनुः प्रत्यवायानावहत्वम् ।

यच्च नञ ईषदर्थताश्रयणेन व्याख्यातं तदसङ्गतं, तथा सति नञो लाक्षणिकत्वापत्तेः । नच—अनुदरा कन्येत्यादिप्रयोगादीषदर्थताऽप्यस्तीति वाच्यम् । तत्र शक्त्योपस्थापितस्योदरशून्यत्वस्य बाधनिश्चयादेवाल्पोदरा कन्येति भवति बोधः सर्वेषाम् । तस्मादीषत्त्वं न वाच्यार्थः । अभावार्थतैव तूक्ता नञ्सूत्रे महाभाष्ये—"निवृत्तपदार्थक" इति । निवृत्तमिति भावे क्तः, निवृत्तिरभावः । स पदार्थो–वाच्यार्थो यस्य नञ इति भावः । अत एव वैयाकरणभूषणसारे—"अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशया"दित्युक्तम् । "तत्सादृश्यमभावश्च"

स्येष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वरूपबलवदनिष्टानुबन्धित्ववादनिराकरणसमय एव सङ्गतत्वेन बलवदनिष्टाननुबन्धित्वतदभावयोर्विधिनिषेधार्थतामनाश्रित्य प्रकारान्तरेण निषेधसंस्पर्शमुपपाद्य प्रत्यवायावहत्वं वर्णयतां पक्षनिरासाय यः प्रवृत्तो नन्वित्यादिग्रन्थस्तेनास्य व्यवधानं नोचितमित्याशङ्का परास्ता । इत्थं च दुःखान्तरे मानाभावादित्यस्य ग्रन्थस्यापि सुसाङ्गत्यम् । तस्मादिति । पशुविशसनस्य प्रत्यवायावहत्वोपपादनप्रकारस्य सर्वस्य प्रतिक्षेपादित्यर्थः ।

*प्रत्यवायजनकत्वेऽनिष्टं प्रसञ्जयति—यदीत्यादिना । आग्रह इति । अनेन प्रत्यवायजनकत्व*वादस्याप्रामाणिकता व्यज्यते । ननु–पापापनोदकत्वं पापापादकत्वं चैकस्यां क्रियायां कुतो न स्यात्, नाश्यते पापमेकमुत्पाद्यते चान्यदित्याशङ्क्य परिहरति—अथ चेत्यादिना । ननु–विनाश्यपापापेक्षया जनिष्यमाणपापस्याल्पत्वज्ञाने स्यादेव प्रवृत्तिरित्याशङ्कायामाह—परिहार्यमित्यादिना । परोक्तं मनुवचनार्थं प्रतिक्षिपन्मनुवचनानुकूल्यं स्वपक्षे प्रतिजानीते—आह चेति ।

ईषदर्थतां नञः प्रतिक्षिपति—यच्चेत्यादिना । बाधनिश्चयादेवेति । नहि तदर्थबोधकतामात्रेण तदर्थता पदानां प्रामाणिकी, नहि समभिव्याहारविशेषे तीरं बोधयद्गङ्गापदं तीरार्थकम्, यस्मिन्पदे श्रुतमात्रे सपदि यस्यार्थस्योपस्थितिस्तदर्थकतैव तु तस्य पदस्य समुचिता, सपदि समुपस्थाप्यते गङ्गापदेन प्रवाह एव, सति तदन्वयानुपपत्तिप्रतिसन्धान एव पश्चात्तीरबोधः, तथात्रापि नञा सपदि समुपस्थाप्यतेऽभाव एव, तस्यार्थस्यानुपपत्तिप्रतिसन्धानतः पश्चादेव तु ईषत्त्वबोधः, शक्यसम्बन्धस्तु तत्रेवात्रापि तुल्यः, तल्लक्षणयैवेषत्त्वस्य बोधो न शक्त्येति, ईषदर्थताश्रयणे लक्षणाऽवर्जनीयेति भावः । अत्र भाष्यकारस्य सम्मतिमाचष्टे—अभावार्थतैवेति । भाष्यवचनं व्याचष्टे—निवृत्तमित्यादिना । भाष्यवचनस्योक्तार्थतायां संवादं प्रदर्शयति–अत एवेति । नन्वानुशासनिकेनार्थेन शक्येनैव भाव्यम्, अन्यथाऽनुशासनवैयर्थ्यात्, नहि लक्षणाज्ञापनायानुशासनमपेक्ष्यते, नहि गङ्गापदस्य तीरे लक्षणाग्राहकं किमप्य-

कर्तव्यम् । सत्क्रिया—स्वागतवचनपाद्यार्घ्याचमनादिदानम् । तस्मिन्नुपविष्टे पश्चा-

त्यादिवचनं तु लाक्षणिकार्थमभिप्रेत्य । भवति हि सर्वत्र सर्वस्यैव सपदि नञ्श्रवणोत्तरमभावोपस्थितिः । तदर्थबाधेनैव तु पश्चादप्राशस्त्यादीनां बोधः । अस्तु वा तेष्वर्थेषु निरूढलक्षणा । तत्परं च तद्वचनम् । शक्तिस्तु नैव न्याय्या । ननु—घटेऽघटत्वस्येव वधेऽवधत्वस्य बाधितत्वेनावधशब्दस्य प्रत्यवायाजनके लक्षणाया अवश्यमाश्रयणीयतया तदपेक्षया नञो निरूढलक्षणया ईषदर्थाश्रयणमेवोचितम् । निरूढलक्षणायाः शक्तितुल्यत्वादिति चेत् । मैवम् । तथा सति—"यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा । यज्ञोऽस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥" इति पशूनां यज्ञार्थं सृष्टताया अवधत्वे हेतुतयोपन्यासस्वारस्यं हीयेत, यदर्थं ये भगवता सृष्टास्तेषां तत्रोपयोगो हि साधीयान् । एवम्—"ओषध्यः पशवो वृक्षास्तिर्यञ्चः पक्षिणस्तथा । यज्ञार्थं निधनं प्राप्ताः प्राप्नुवन्त्युत्सृतीः पुनः ॥" इत्यव्यवहितवचनेन यज्ञे निधनं गतानामुत्कृष्टजन्मावाप्तिस्मरणमप्यस्वरसं स्यात् । दुःखापादकोऽपि वधो महत्तरस्वर्गसुखापादकयज्ञसंसृष्टोऽयमत्यल्प इत्युपपादनीयेऽल्पत्वे नहि यज्ञे निधनं गतानामुत्कृष्टजन्मप्राप्त्युपपादनं लेशतोऽप्युपयुज्यते । नच—यज्ञे वधस्य वधान्तरतो वस्तुतोऽल्पदोषत्वमभिप्रेत्येदृशाल्पत्वे तदिदं हेतुवर्णनमिति वाच्यम् । तर्हि तद्वचनमदोषतामेव किन्नावगमयेत् । नह्यल्पदोषावशेषे प्रमाणान्तरमुपलभामहे । तदनेन वचनेन यज्ञे वधस्य कल्याणतरजन्मापादकत्वेन वस्तुतः प्राणवियोजकत्वेऽपि नान्यत्रेव प्रत्यवायावहत्वेत्युक्तं भवति । इममेवाशयमेतदुपबृंहिता श्रुतिरप्याह—"हिरण्यशरीर ऊर्ध्वः स्वर्गं लोकमेति" इति ।

यदप्यर्थवादस्य प्रामाण्यं नेति—तदसङ्गतम् । देवताधिकरणे तत्प्रामाण्यस्य सम-

नुशासनमुपलभ्यते, तत्, "तस्मादश्यमभावश्चे"त्यनुशासने शक्तिरेव सिध्यतीत्याशङ्कायामाह—अस्तु वेति । शक्तिस्तु नैव न्याय्येति । निरूढलक्षणाग्राहकत्वेनैवानुशासनसार्थक्येऽनेकशक्तिकल्पनाया अनुचितत्वादिति भावः । अनुशासनस्य निरूढलक्षणाग्राहकता तु विभक्तेरानुशासनिकातिरिक्तार्थेन निरूढलक्षणेति शास्त्रकाराणां वचनतः सिध्यति । मैवमिति । निरूढलक्षणायाः शक्तितुल्यत्वेऽपीषदर्थताश्रयणमसङ्गतमेवेत्यर्थः । तत्र हेतुमाह—तथा सतीत्यादिना । हेतुतयोपन्यासस्वारस्यं हीयेतेति । तस्मादित्यन्तवचनस्य स्वारस्यं न स्यादित्यर्थः । साधीयानिति । एतेन न प्रत्यवायलेशोऽपीत्येव सिध्यतीति भावः । "यज्ञोऽस्य भूत्यै सर्वस्ये"त्यनेन सङ्क्षेपोक्तमेवार्थं विवेचयतोऽनन्तरश्लोकस्यास्वारस्यमप्याह—एवमित्यादिना । यादृशमल्पत्वं भवतां विवक्षितं तत्र नास्योपन्यासस्योपपादकतेत्याह—दुःखापादकोऽपीत्यादिना । वधान्तरत इति । यज्ञे विशस्यमानानां सम्भवत्यपि तात्कालिके दुःखे पश्चात्स्वर्गसुखसम्पत्त्या यज्ञीयवधस्य कल्याणोदर्कतया वधान्तरवन्नाधिकप्रत्यवायावहत्वा, परन्त्वल्पप्रत्यवायावहताऽस्तीति तदुपपादकतया तद्वचनसङ्गतिरिति शङ्कितुराशयः । शङ्कां परिहरति—तर्हीति । उक्तार्थे स्मृतिमूलभूतां श्रुतिं सङ्गमयति—इममेवेत्यादिना ।

देवताधिकरण इति । ब्रह्मविद्यायां देवतानामधिकारोऽस्ति न वेति संशये, अस्ति देवानामप्यधिकारस्तेषामप्यर्थित्वसामर्थ्ययोः सद्भावात्, तत्सम्भवश्च देहेन्द्रिययोगादुपपद्यते, तद्योगश्चार्थवादेषु श्रूयते, न च तेषां स्वार्थे न तात्पर्यम्, असति तात्पर्येऽप्रामाण्यापत्तेः, स्तावकतया प्रवर्त्तकत्वेन विधि-

दुपवेशनमन्वासनम्। स्वादु भोजनम्–मृष्टमशनम्। सूनृतं वचः–धन्या वय-

र्थितत्वात्, यत्र शक्यार्थबाधस्तत्र लक्षणया यत्र च तदबाधस्तत्र शक्त्यैव प्रमापकत्वेन वाक्यान्तरवत्प्रामाण्यात्। अन्यथा स्वार्थे सुतरां यदि न तात्पर्यं तेन प्ररोचना वा कथम्, नहि वितथमित्यवगतं वचनं प्रवर्त्तयितुं क्षमम्। तत्, विधिशेषतया प्रामाण्यमपि हीयेत। किंचान्ततः प्राशस्त्याप्राशस्त्यादिलक्षकत्वेन वा प्रामाण्यमनपायम्। प्राशस्त्यं बलवदनिष्टाननुबन्धित्वम्, अप्राशस्त्यं बलवदनिष्टानुबन्धित्वमित्यादि स्पष्टमन्यत्र। तत्, आलम्भेषु श्रूयमाणा कल्याणतरदेहावाप्तिरालभनस्य प्राशस्त्यलक्षकतया बलवदनिष्टाननुबन्धित्वं प्रत्यवायानावहत्वपर्यवसितमवगमयेदेव।

यानि च भारतवचनानि संज्ञपनगर्भयागनिन्दापराणि प्रतीयन्ते, न तेषां तादृशयागस्य प्रत्यवायावहत्वे तात्पर्यम्। उक्तमनुवचनोपबृंहितश्रुतिविरोधात्। किन्तु नहि निन्दान्यायेन संज्ञपनाद्यगर्भयागविशेषस्तुतिमात्रे तात्पर्यम्। किञ्च पितापुत्रसंवादे—"त्रयीधर्ममधर्माढ्यं न सम्यक्प्रतिभाति मे" इति वचनं न यागस्य प्रत्यवायाभिप्रायम्। "मे न सम्यक्प्रतिभाति" इति हि निर्दिश्यते। अयं हि निर्देशो जननमरणज्वालावलीविलग्नमात्मानमाकलय्य, परितः प्रज्वलितकाष्ठलग्नकीटस्येव भीतभीतस्य, अत एवैहिकमामुष्मिकं वाऽर्थमखिलमनर्थं प्रपश्यतः, तदुपायानप्यनर्थावहतयाऽधर्मानेव पश्यत, आत्मदृष्टेः कस्यचिदुत्तमाधिकारिणः, स्वाधिकारानुगुणो विज्ञायते। नह्यस्य निरय इत्यनर्थः स्वर्ग इति चार्थः, जननमरणावहमित्यनर्थमेव सर्वम्, तदावहोऽप्यधर्म एवाऽस्य, तदयं निर्दिशति—"न सम्यक् प्रतिभाति मे" इति। एवम्—"पशुयज्ञैः कथं हिंस्रैर्मादृशो यष्टुमर्हति। अन्तवद्भिः"॥ इतिवचने मादृशः, अन्तवद्भिः, हिंस्रैः, इति पदैरधिकारिवैलक्षण्यं, फलावहत्वेऽप्यन्तवत्त्वादनर्थत्वं, प्राणिनस्तत्कालदुःखापादकत्वरूपन्यूनता च व्यज्यते।

---

शेषतया प्रामाण्यमपि स्तावकत्व एव सङ्गच्छते, स्तावकत्वे च गुणकथनेन, असति तस्मिन्न स्तावकता, असतोऽप्यारोपमात्रं क्रियते चेत्–प्रवर्तकता वा कथं?, नह्यारोपमात्रमिति जानन्प्रवर्तेत कश्चित्, तस्मादस्ति तात्पर्यं स्वार्थेऽर्थवादानामिति शारीरकमीमांसायां देवताधिकरणेऽर्थवादस्यापि प्रामाण्यं समर्थितमिति भावः। यत्र शक्यार्थबाधस्तत्रेति। "आदित्यो यूप" इत्यादावित्यर्थः। तुष्यतु दुर्जन इति न्यायेनाह—किञ्चेति। अन्तत इति। अर्थवादवाक्यस्य स्वार्थे तात्पर्यमनभ्युपगच्छतापि विधिशेषतया प्रामाण्यसंरक्षणाय विध्यर्थवादस्य प्राशस्त्ये निषेधार्थवादस्याप्राशस्त्ये लक्षणामङ्गीकृत्य तत्र तत्र तद्बोधः स्वीक्रियत एवेति भावः। स्पष्टमन्यत्रेति। भाट्टचिन्तामण्यादिमीमांसकनिबन्धेष्वित्यर्थः। प्राशस्त्यलक्षकत्वे किं प्राप्तमित्यत्राह—तदित्यादिना।

भारतवचनानां तात्पर्यमाह—यानि चेत्यादिना। उक्तमनुवचनोपबृंहितश्रुतिविरोधादिति। श्रुतिस्मृत्योर्विरोधे प्राप्ते स्मृतेर्गौणताश्रयणमेव समुचितम्, इह च श्रुतिर्मनुवचनेनोपबृंहिता चेत्यपि प्राबल्यं बोध्यमिति भावः। ननु–गौणतया भारतवचनस्य कथं नयनमित्यत्राह—किन्त्विति। परैः प्रत्यवायावहत्वे प्रमाणतया प्रदर्शितेषु वचनेषु कानिचित्परिशील्यमानानि प्रत्यवायावहतां नावगमयन्तीत्याह—किञ्चेति। इति हि निर्दिश्यत इति। "न सम्यक् प्रतिभाती"त्येव वक्तव्ये मे इति निर्देशे स्वारस्यं परिशीलयतामित्याशयः।

मद्य भवदागमनादित्येवमादीति । मनुश्चाह—"परित्यजेदर्थकामौ यौ स्यातां धर्मवर्जितौ । धर्मं चाप्यसुखोदर्कं लोकसङ्कुष्टमेव चे"ति ।

---

यदपि—"अव्यवस्थितमर्यादैर्विमूढैर्नास्तिकैर्नरैः । संशयात्मभिरव्यक्तैर्हिंसा समनुवर्णिता ॥" इति वचनम्, तदप्यधिकारितारतम्याभिप्रायमात्रनिबन्धनम् । अयमस्य भावः—गुणतारम्यतो रुचिभेदमापन्नानपि क्रोडीकर्तुं प्रवृत्तस्य वेदस्य परमतात्पर्यमजानद्भिर्विमूढैः स्वर्गपुत्रपश्वन्नादिविविधफलवादरतैर्नान्यदस्तीति वादिभिरनात्मरतैः कामनाधिकारकमेव शास्त्रमाकलयद्भिरव्यवस्थितमर्यादैर्मूढैरिदमालभेतैतत्काम:, इदमालभेतैतत्काम इति हिंसाप्रधानः क्रियाविशेषबहुलो याग एव प्रशस्यते. नात्मयज्ञः, तदुपकारकं सत्त्वैकनिष्ठैरुपसेवितं वा ब्राह्मं प्रणिपातप्रदक्षिणादिप्रचुरं कर्म वा । इति । नैतावताऽधिकारानुगुण्येन प्रवृत्तस्यान्यस्य प्रत्यवायावहतासिद्धिः ।

यश्च—उञ्छवृत्तेः सत्यस्य हिंस्रयज्ञाचरणेन तपोनाशः, स चाहिंसाव्रतविशेषनिष्ठस्य धृतव्रतभङ्गेन व्रतोपसञ्चितसुकृतनाशरूप एव । व्रतात्प्रच्यवः सर्वत्र सञ्चितसुकृतनाशावह एव । प्रलोभनमात्रेण तु कृतं न विधिनेति वा तपोनाशः ।

यश्च विवादविशेषे धर्मनिर्णयाय वृतस्य छागैर्यष्टव्यमिति पक्षपातेन ब्रुवत उपरिचरस्य महर्षिशापेन भूविवरप्रवेशः, स च छागसाध्ययागस्य प्रत्यवायावहत्वे न नियतं लिङ्गम्, सत्यमप्यर्थं स्वयमात्मन्यसंमन्त्र्य वादिमुखविकासानुरोधेन कथयतो वस्तुतो वचनवैतथ्यविरहेऽपि पक्षपातदोषस्यापरिहार्यत्वात्, तावताऽपि निमित्तेन सुलभकोपानामृषीणां शापोन्मुखतायाः सम्भावितत्वात्, अपराधिभिरनपराधिभिर्वा महर्षिशापस्यानुल्लङ्घनीयत्वात् । अधिकारिविशेषकालविशेषाभिप्रायत्वाच्च तद्वचनस्य । तत्र हि—"नैष धर्मः सताम्" इति निर्दिष्टम् । निर्दिष्टं चेदं कृतयुगमिति । धर्मो ह्यधिकारिभेदेन कालभेदेन भिद्यत इत्यविवादम् । ये च निष्कामाः

---

"अव्यवस्थितमर्यादै"रिति श्लोकस्य "वेदवादरताः पार्थ! नान्यदस्तीति वादिन" इति वचनेन समानाशयत्वमभिप्रेत्याह—यदपीत्यादिना । अजानद्भिरित्यन्तं विमूढैरित्यस्य विवरणरूपम् । स्वर्गपुत्रपश्वन्नादिविविधफलवादरतैरित्येतत्संशयात्मभिरित्यस्य विवरणरूपम् । संशयशब्देनाव्यवसायो लक्ष्यते, तत एव च तथा विवरणम् । नान्यदस्तीति वादिभिरित्येतन्नास्तिकैरित्यस्य विवरणम् । नास्ति स्वर्गतो निरतिशयानन्दमिति वादिनो हि नास्तिका एव । कामनाधिकारकमेव शास्त्रमाकलयद्भिरित्येतदव्यवस्थितमर्यादैरित्यस्य विवरणरूपम् । समनुवर्णितेत्यस्यार्थः प्रशस्यत इति । सोपसर्गनिर्देशादेतदर्थता ।

उञ्छवृत्तेरहिंसाव्रतनिष्ठस्य सत्यनाम्नो हिंसागर्भयज्ञाचरणेन यस्तपोनाश उक्तः "तपो महत्समुच्छिन्न"मिति, स च व्रतविशेषसञ्चितसुकृतनाशतो नातिरिच्यते, व्रतभङ्गे व्रतसञ्चितसुकृतनाशः सार्वत्रिक इति न प्रत्यवायविशेषसिद्धिरित्याह—यश्चोञ्छवृत्तेरिति ।

उपरिचरवसोर्भूविवरप्रवेशे निमित्तमन्यदाह—यश्चेति । सुलभकोपानामिति । भूविवरप्रवेशे शापस्यैव हेतुता, शापे तु ऋषीणां क्रोध एव हेतुः, क्रोधे त्वनभिमतोक्तिरेव, नैतावता छागैर्यागस्याशास्त्रीयतेत्याशयः । असति वचनवैतथ्ये पक्षपातदोषः कथञ्चिदपि न प्रसजतीत्याशङ्कायां प्रकारान्तरेण परिहरति—अधिकारीति । नहिनिन्दान्यायमनाश्रित्यास्य वचनस्य स्वार्थे तात्पर्यवर्णनं दुःशकमि-

अहिंसाधर्मस्य महत्त्वं तु सकलसच्छास्त्रप्रसिद्धम्। यथाह भारते भीष्मः—

सर्वभूतानुकम्पैकशीला न तेषामयं धर्मः, ये च भोगलोलुपास्तेषामयमवश्यापेक्षितो धर्मः, तावता न प्रत्यवायावहत्वावगमः, अधिकारितारतम्यं कालतारतम्यं चानादृत्याऽभिहितमिति तु पक्षपातः। किञ्च—विप्रतिपत्तिवचने विनैव कामनाविशेषादिनिर्देशम् "भो! राजन्केन यष्टव्यमजेनाहोस्विदौषधैः" इति सामान्यतो निर्देशात्; फलार्थिभिरतदर्थिभिर्वाऽविशेषेण "सर्वैरेवाऽजेन यष्टव्यम्" इति देवानां पक्षः। न तथा नियमः, किन्तु–औषधैर्यष्टव्यं तेनाऽपि सर्वार्थसिद्धेः, तस्यैव यागस्यानन्तर्गतप्राणिपीडनत्वेन सर्वभूतसुहृदुपसेव्यत्वेनोत्तमाधिकारिकत्वाच्चेति, ऋषीणां पक्ष इति विज्ञायते। अत्र तु देवपक्षपाताश्रयणेन जाता हानिर्नावगमयति यागविशेषस्य प्रत्यवायावहताम्। वस्तुतस्त्विमानि वचनानि नहि निन्दान्यायेनाहिंस्रयागप्रशंसापराण्येव। तदिदमुक्तं प्रागेव। यज्यर्थो यागो हि देवपूजा, पूजा च तत्प्रीणनव्यापारः, तदभिमत एव तु तत्प्रीणनव्यापारः, न तु तदनभिमतः। इत्थञ्च तदनभिमतमार्षं पक्षं परित्यज्य तदभिमतयागविशेषस्य कर्त्तव्यत्ववर्णने को वाग्दोषः, कथं वा शापादिकं, तदियमाख्यायिका सर्वथाऽहिंस्रयागप्रशंसामात्रतात्पर्यकेति कश्चित्। "अजसंज्ञानि बीजानि छागं नो हन्तुमर्हथ" इति वचनं तु पाक्षिकाभिप्रायप्रदर्शकम्। न बीजस्याजसंज्ञत्वव्यवस्थापनपरम्, न वा छागादिपशोर्यज्ञानर्हत्वव्यवस्थापनाय प्रवृत्तम्।

यदपि—"एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीयात्" इति श्रुतिः अजस्यामेध्यत्वाद्यागानर्हत्वपरेत्युक्तम्, तदपि मन्दम्। तत्र हि प्रकरणे—अग्निगुप्रैषानन्तरं पशुपुरोडाशविधानार्थं काचिदाख्यायिका प्रस्तुता। अनया चाख्यायिकया व्रीहेर्मेध्यत्वं पुरोडाशविधानोपयोगि प्रशस्यते। पशुपुरोडाशश्च—अग्नीषोमीयस्य वपां प्रचर्याऽग्नीषोमीयमेकादशकपालं निर्वपेदित्यत्रापि श्रुतः। न तु पशुरनर्ह इति प्रतिक्षिप्यते, पूर्वमुत्तरत्र च पशुसम्बन्धात्। ननु—मनुष्यपशुना यष्टुमुपक्रान्तेषु देवेषु ततोऽपसृतस्य मेध्यांशस्य तैरनुगतस्याश्वगोऽव्यजाक्रमेण ततस्ततोऽपसृत्य पृथिवीं प्रविश्य व्रीह्यात्मनाऽवस्थितेर्व्यपेतमेध्याः पशवो न यागार्हाः, तदेतदुच्यते—"त एत उत्क्रान्तमेधा अमेध्याः पशवः" इति। मैवम्। तेन वाक्येन मनुष्याश्वगोऽव्यजेभ्यो मेधोत्क्रमणक्रमेण निष्पन्नानां किंपुरुषगौरमृगगवयोष्ट्रशरभाणां मेध्याऽसम्बन्धाद्यागानर्हत्वोक्तेः। उत्क्रान्तमेधा इति च त एव निर्दिश्यन्ते। यः पुरुषपशुर्मेधोत्क्रमणात्त्यक्तः स हि किंपुरुषोऽभवत्, तदुत्क्रान्तमेधस्तु किं पुरुष एव। तथैवान्येऽपि। "सर्वेषामेव पशूनां मेधेन यजते यः पुरोडाशेन यजते" इति च पुरोडाशस्य प्रशंसा। न वा पुरोडाशस्योत्कर्षः पशोरमेध्यत्वे लिङ्गम्। एतदुपबृंहणरूपं भारतवचनमपि एतत्समानयोगक्षेमम्।

---

त्याशयेनाह—यज्यर्थो हीति।

"एत उत्क्रान्तमेधाः पशवस्तस्मादेतेषां नाश्नीया"दिति श्रुतेः परोक्तमर्थं प्रकरणपर्यालोचनतो निरस्यति—यदपीत्यादिना। न त्विति। नह्येकस्य प्रशंसाऽन्यस्यानर्हतां ज्ञापयेदिति भावः। त एव निर्दिश्यन्त इति। एवकारेण मनुष्यादयो व्यवच्छिद्यन्ते। तथा च भवदाशङ्का तच्छब्दार्थानवधानमूलेत्युक्तं भवति।

"सर्वकर्मस्वहिंसां हि धर्मात्मा मनुरब्रवीत् । कामकाराद्धि हिंसन्ति बहिर्वेद्यां पशून्नराः । तस्मात्प्रमाणतः कार्यो धर्मः सूक्ष्मो विजानता । अहिंसा सर्वभूतेभ्यो धर्मेभ्यो ज्यायसी मते"ति । "न भूतानामहिंसाया ज्यायान्धर्मोऽस्ति कश्चने"ति च ।

एवं पितृयागे श्राद्धेऽपि ज्ञेयम् । तथा च वृद्धपराशर आह—"शौचं च पात्रशुद्धिश्च श्रद्धा च परमा यदि । अनन्ततृप्तिकृच्छ्राद्धे एतदेव न चामिषम् । यस्तु प्राणिवधं कृत्वा पितॄन्मांसेन तर्पयेत् । सोऽविद्वांश्चन्दनं दग्ध्वा कुर्यादङ्गारलेपन" मिति । नारदश्चाह—"न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।

---

यच्च नमो ब्राह्मणयज्ञायेत्यादि, तदपि प्राण्यनुपमर्दकयागस्य प्राण्युपमर्दसाध्यादत एव क्षत्रयज्ञशब्दितादुत्तमत्वावेदनद्वारा प्रशंसायां पर्यवस्यति ।

यदपि योगभाष्ये—मानसव्यापारमात्रसाध्यादन्ये बाह्यसाधनसापेक्षाः सर्व एव धर्माः शुक्लकृष्णा इति वर्णितं तदभिमतिमात्रम् । तथा सति बीजोपमर्दादीनां पुरोडाशमात्रसाध्येऽप्यवर्जनीयत्वादन्ततस्तेऽप्यशुद्धाः स्युः । न चेष्टापत्तिः । सत्त्वोत्तरैर्भगवदेकान्तभक्तिनिष्ठैर्विधीयमानस्य बाह्यस्य भगवद्यागस्य चर्वादिसम्पाद्यस्यान्ततस्तु सस्याहरणादिसम्पाद्यस्य चाशुद्धतापत्तेः । परतः पापानावहत्वेऽपि तात्कालिकद्रव्योपमर्दसद्भावमात्रमभिप्रेत्य वा कृष्णत्वोक्तिर्द्रष्टव्या ।

यदपि—"क्षत्रधर्मे स्थितो जन्तून्व्यवधीर्मृगयादिभिः । समाहितस्तत्तपसा जह्यघं मदुपाश्रितः ॥" इति वचनम्, तदपि लोकरक्षानुपयुक्तमृगयाविषयम् । अत एव च भारते क्षत्रियाणां मृगयायामदोष उच्यते—"क्षत्रियाणां तु यो दृष्टो विधिस्तमपि मे शृणु" इत्यारभ्य—"रक्षणार्थाय भूतानां हिंस्रान्हन्यान्मृगान्पुनः । नात्मानमपरित्यज्य मृगया नाम विद्यते ॥ अतो राजर्षयः सर्वे मृगयां यान्ति भारत ! । नहि लिप्यन्ति पापेन न चैतत्पातकं भुवि" इत्यन्तेन ।

यदपि—क्षात्रधर्मे स्थितस्यापि युधिष्ठिरस्य युद्धे बन्धुवधजनितप्रत्यवायभयेनानुशोचनं तदपि बन्धुवियोगजनितशोकसंविग्नमानसतया प्रणष्टविवेकस्य प्ररुदितमात्रमिति न तत्तस्य प्रत्यवायावहत्वं द्रढयति । "युधिष्ठिरस्तु धर्मात्मा मां धर्माननुपृच्छतु" इति भीष्मेणानुज्ञातस्यापि युधिष्ठिरस्य सपदि तत्सन्निधानानुपगमने कारणम् "लज्जया परयोपेतो धर्मराजो युधिष्ठिरः । पूज्यान्मान्यांश्च भक्तांश्च गुरून्सम्बन्धिबान्धवान् ॥ अर्घार्हानिषुभिर्हत्वा भवन्तं नोपसर्पति ॥" इति श्रीकृष्णे निवेदयति, "ब्राह्मणानां यथा धर्मो दानमध्ययनं तपः" इत्यादिना क्षत्रियाणामवश्यधर्मत्वेन युद्धस्य प्रत्यवायानावहत्वस्यैव भीष्मेण दृढीकरणात् ।

---

"नमो ब्राह्मणयज्ञाये"ति वचनस्याशयमाह—यच्चेत्यादिना । तदभिमतिमात्रमिति । न प्रामाणिकमित्यर्थः । योगभाष्यकृतो व्यासदेवस्यैतदंशेऽनाप्ततावर्णनमनुचितमित्यभिमन्यमानान्प्रत्याह—परतः पापानावहत्वेऽपीति । भागवतवचनस्य भावमाह—क्षत्रेत्यादिना । ननु—लोकरक्षानुपयुक्तमृगयाविषयमिदं वचनमिति कथं विज्ञायत इत्यत्राह—अत एवेत्यादिना । प्ररुदितमात्रमिति । न तद्वचनमर्थतत्त्वे प्रमापकमिति भावः ।

मुन्यन्नैः स्यात्परा प्रीतिर्यथा न पशुहिंसया। नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम्। न्यासो दण्डस्य भूतेषु मनोवाक्कायजस्य य" इति। स्कान्दवासुदेवमाहात्म्ये नारायणश्चाह—"न श्राद्धे क्वापि मांसं तु दद्यान्नाद्याच्च मानवः। मुन्यन्नैः क्षीरसर्पिर्भ्यां तृप्यन्ति पितरो भृश"मिति।

ईदृशीमहिंसां च योगशास्त्रे साधनपादे महाव्रतत्वेन सूत्रयामास पतञ्जलिः—"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः, जातिदेशकालसमयानवच्छिन्नाः सार्व-

---

यश्च—प्रायश्चित्तोपदेशः स तु शोकसंविग्नमानसस्य मुहुरतिशङ्कमानस्य लुप्तधैर्यस्य धैर्यापादनमात्रमुद्दिश्य प्रवृत्तः। तथा च व्यासवचनानि—"असकृच्चापि सन्देहाश्छिन्नास्ते कामजा मया। अश्रद्दधानो दुर्मेधा लुप्तस्मृतिरसि ध्रुवम्॥ युधिष्ठिर! तव प्रज्ञा न सम्यगिति मे मतिः। आत्मानं मन्यसे चाथ पापकर्माणमन्ततः॥" इति। अनेन स्पष्टं ज्ञायतेऽयं प्रायश्चित्तोपदेशस्तन्मनोव्याकुलतापनोदनमात्रार्थ इति। किञ्च—वधमात्रमिति प्रत्यवायमङ्गीकुर्वतां वधजनितप्रत्यवायपरिहाराय विधीयमानोऽयमपि यागविशेषो वधगर्भितः पापावह एवेति पापाद्भीतस्य पापान्तरविधानमनुचितमेवेत्ययं प्रायश्चित्तोपदेशो न घटेत। वध्ये वधदण्डमाज्ञापयितू राज्ञः प्रत्यवायप्रसङ्गेन विलुप्येत धर्माधिकरणम्। तस्मात्प्राणवियोजनव्यापारोऽपि श्रुतिस्मृतिचोदितो नानर्थः। अत एव—"वृथा पशुसमालम्भी गृहदाहस्य कारकः" "वृथा पशुसमालम्भं नैव कुर्यान्न कारयेत्" इति यज्ञादन्यत्र कामतः क्रियमाणस्य पशुविशसनस्यैव प्रत्यवायकोटौ गणना स्मर्यते।

ननु तर्हि—"देवतापितृयागार्थमप्यजादेश्च हिंसनं न कर्त्तव्य"मिति मूलवचनस्य कोऽयमभिप्राय इति चेत्। अवहितमनाः शृणु। नानेन निषेधेन "न कलञ्जं भक्षयेदि"त्यादावि प्रत्यवायावहत्वमवगम्यते। किन्तु—"नातिरात्रे षोडशिनं गृह्णाति" इत्यत्र षोडशिग्रहणाघटितसामग्र्यन्तरेण क्रतूपकारवदजाद्युपमर्दाघटितसामग्र्यन्तरेण देवतापितृयागोपकारः प्रतीयते। इयांस्तु विशेषः। अविशिष्टे विकल्पे हिंसाऽघटित पक्ष एव मामकैराश्रयणीय इति। तदिदं व्यज्यते मामकैरित्युपज्ञेण। तत्र हेतुमाह—"धर्मः प्रोक्तोऽस्ति यन्महान्" इति। तात्कालिकदुःखापादनाद्यगर्भतयाऽऽनृशंसैकधर्मपरैरप्याश्रेयत्वेन महत्तया हि बहुशः शास्त्रेष्वयं श्लाघ्यत इति भावः।

---

यदि भीष्मस्योपदेष्टुः प्रत्यवाये न तात्पर्यम्, तर्हि कुतः प्रायश्चित्तोपदेश इत्यत्राह—यश्च प्रायश्चित्तोपदेश इत्यादिना। वधमात्रमिति। वधत्वसामान्यधर्मसम्बन्धमात्रेणेति यावत्।

अथ मूलाशयं शङ्कासमाधानरूपेणाह—ननु तर्हीत्यादिना। दृष्टान्ततो दार्ष्टान्तिके विशेषमाह—इयांस्त्विति। इति भाव इति। महच्छब्दस्वारस्यपर्यालोचनया, उपसर्गस्वारस्यपर्यालोचनया चायं भावः सिध्यतीत्याशयः। इदं च बोध्यम्—यदि देवतापितृयागार्थमप्यजादेश्च हिंसनं प्रत्यवायावहतया न कर्तव्यमित्यभिमतं स्यात्, तदा "न कर्तव्यमवश्यं यत्प्रत्यवायस्ततो भवे"दिति तु हेतुवचनेन भाव्यम्, न तथा श्रूयते, तदुक्त एवाशयो युक्त इति।

भौमी महाव्रत"मिति । तत्र अहिंसामहाव्रतं व्याचख्यौ भाष्यकारो भगवान्बादरायणः—सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः—अहिंसा, सा च मत्स्येष्वेव हिंसा नान्यत्रेति जात्यवच्छिन्ना, न तीर्थे हनिष्यामीति देशावच्छिन्ना, न चतुर्दश्यां न पुण्येऽहनीति सैव कालावच्छिन्ना, तथा त्रिभिरुपरतस्य देवब्राह्मणार्थे हनिष्यामि नान्यथेति समयावच्छिन्ना, यथा क्षत्रियाणां युद्ध एव हिंसा नान्यत्रेति । एभि-

---

यद्वा—तस्य व्रतमित्युपक्रम्य श्रूयमाणे 'नेक्षेतोद्यन्तमादित्यमि'त्यत्रेव धात्वर्थान्वितनञर्थे विध्यर्थान्वयेन तदनाचरणस्येष्टविशेषसाधनत्वमेवावगम्यते नतु तदाचरणस्य प्रत्यवायावहतां । विधितः प्रतीयमानायाः प्रवर्त्तनाया विरोधिनी निवर्त्तना यदि नञा प्रत्याय्येत तदैव निवर्त्यस्य तथात्वावगमात् । फलविशेषसाधनतामेवाह—अहिंसैवेत्यादिना । अहिंसैव—क्वापि प्राण्युपमर्दं न करोमीति सङ्कल्पविशेष एव महान्धर्मः प्रोक्तोऽस्ति—प्रतिनियतफलविशेषात्परिमितफलान्यस्मादयं वाञ्छितसकलफलाधायकत्वेन परमपुरुषार्थोपकारकत्वेन च महत्तया वर्णित इति भावः ।

यद्वा—निषेधेनानेनावगम्यत एवानिष्टसाधनत्वं, नैतावता प्रत्यवायावहत्वं शङ्कनीयम्। अनिष्टे वैलक्षण्यात् । तच्च भगवतो नातिप्रीतिविषयत्वम् । तादृशमपि भगवदेकान्तभक्तानामनिष्टमेव । भगवतो नातिप्रीतिविषयत्वान्मामकैरेकान्तभक्तैर्न कर्तव्यमित्युक्तं भवति । भगवतो नातिप्रीतिविषयत्वे हेतुमाह—धर्मः प्रोक्त इत्यादिना । यस्मात्कस्यापि प्राणिनः कुत्राप्यनुपमर्दमेव महान्धर्मः प्रोक्तः । महत्त्वं च भगवदत्यन्तप्रीणनत्वात् । स्पष्टं चैतत्—"लोके व्यवायामिषमद्यसेवा नित्यास्तु जन्तोर्नहि तत्र चोदना । व्यवस्थितिस्तासु विवाहयज्ञसुराग्रहैरासु निवृत्तिरिष्टा" इति भागवतवचने । अयं भावः—परमकारुणिको भगवान्सर्वसुहृत् इहानादौ संसारे पूर्वपूर्वकर्मवासनावशेन रुचिभेदमुपगतान्व्यवायामिषाद्यभिलाषिणः सहसैव विनिवृत्य तेभ्यो निवृत्तिमार्गमनुसर्त्तुमक्षमान् विषमप्रवृत्त्या विनङ्क्ष्यमाणानवगम्य, स्वयं सञ्जातकरुणस्तान्मन्दान्विवाहादिना तेषु मूर्खपुत्रन्यायेन नियमयन्, नियमानतिलङ्घनमात्रेण तेषु प्रीणन्, तदुचितं फलं प्रयच्छति न तु द्विष्यति तेभ्यः, नापि पातयति तान्, यः पुनः परमतात्पर्यं जानन्सर्वथा हिंसादितो विमुखो भगवदेकपरः, अतीव प्रीणाति च तस्मिन्सर्वसुहृदितीत्याहुः ।

---

प्रकारान्तरेण मूलं सङ्गमयति—यद्वेति । नन्वविशिष्टे नञ्समभिव्याहारे "न कलञ्जं भक्षये"दित्यादाविव प्रत्यवायावहत्वा कुतो नावगम्यत इत्यत्राह—विधित इत्यादिना । अहिंसापदस्याहिंसाव्रते लक्षकतामभिप्रेत्याह—क्वापीत्यादिना । अन्यस्मादिति । ज्योतिष्टोमादेरित्यर्थः ।

निवर्तनाबोधकत्वमभ्युपगम्यापि सङ्गमयति—यद्वेत्यादिना । नैतावता प्रत्यवायावहत्वं शङ्कनीयमिति । अयं भावः—निवर्तनया हि न प्रत्यवायावहत्वं साक्षात्प्रत्याय्यते, किन्त्वनिष्टसाधनत्वमेव 'न पङ्किले पथि गच्छे'दित्यादिलौकिकवाक्येषु निवर्तनानुपपत्तेः, तदनिष्टसाधनत्वमेव निवर्तनाबोध्योऽर्थः, अनिष्टं च भिन्नं भिन्नम्, अधिकारानुगुण्यात्, प्रत्यवायावहत्वानवबोधनेऽप्यनिष्टसाधनत्वबोधनाभिवर्तना युज्यत एवेति । प्रकृतेऽनिष्टमुपपादयति—तच्चेति ।

र्जातिदेशकालसमयैरनवच्छिन्ना अहिंसा सर्वभूमिषु–सर्वविषयेषु सर्वथैवाविदितव्यभिचारा सार्वभौमी महाव्रतमित्युच्यत इति ॥ १२ ॥

---

इदं तु तत्त्वम्—"यत्पशुर्मायुमकृतोरोवा पद्भिराहते अग्निर्मा तस्मादेनसो विश्वान्मुञ्चत्वंहस" इति मन्त्रवर्णे पापविमोचनप्रार्थनाश्रवणादवर्जनीयं पापं तत्परिहारगर्भाद्यागात्तदगर्भस्योत्तमत्वेन प्रक्षालनाद्धीति न्यायेन हिंसागर्भो यागः परिहरणीयो मामकैरिति ।

कश्चित्तु—अस्य श्लोकस्य चण्ड्यादिदेवतानिमित्तकं यत्तान्त्रिकं हिंसनं यच्च स्मार्त्तश्राद्धादिनिमित्तं तावन्मात्रपरत्वेन न श्रौतपरतेति भावमाचष्टे । मुमुक्षूणां फलान्तरनैरपेक्ष्येऽप्युपासनाङ्गतया देवतापितृयागानामुपादेयत्वेन तान्प्रत्यप्यस्त्येवास्य निषेधोपदेशस्य प्रसङ्गः । एतेन मुमुक्षूणां हेयोपादेयोपदेशप्रकरणे नास्य सङ्गतिरिति शङ्का परास्ता ॥ १२ ॥

---

ज्योतिष्टोमादियागशरीरे पशुविशसनस्यैव पशुविशसनजनितप्रत्यवायपरिहारार्थप्रायश्चित्तस्याप्यनुप्रविष्टतया प्रक्षालनाद्धीति न्यायेन पशुविशसनागर्भस्यैव गरीयस्तामभिप्रेत्याह—इदं तु तत्त्वमित्यादिना । अत्र च पक्षे "धर्मः प्रोक्तोऽस्ति यन्महानि"त्यस्य हेतूपपादकस्य नातीव साङ्गत्यम् । मुमुक्षून्प्रति नायमुपदेशो घटते, ज्ञाननिष्ठैव हि तेषामपेक्षितेत्याशङ्कायामाह—मुमुक्षूणामिति ॥ १२ ॥

---

**स्त्रिया धनस्य वा प्राप्त्यै साम्राज्यस्यापि वा क्वचित् ।**
**मनुष्यस्य तु कस्यापि हिंसा कार्या न सर्वथा ॥ १३ ॥**

लौकिको वैदिको वा मनुष्यजातिवधस्तु सुतरां परिहार्य इत्याह—स्त्रिया इति द्वाभ्याम् । कस्यापि–प्राकृतस्यापि । मनोरपत्यं मनुष्यः–मनुष्यजातिस्तस्य । हिंसा तु सर्वथा–सर्वप्रकारेण । मनसाऽपीति भावः । क्वचित्–महापराधेऽपि । न कार्या –न कर्त्तव्या । मनुष्यदेहस्यातिदुर्लभसर्वपुरुषार्थसाधकत्वात्तन्नाशे सर्वनाशादिति भावः । तदुक्तं श्रीभागवते—"देहोऽयं मानुषो राजन्! पुरुषस्याखिलार्थदः । अत-

---

अथ प्रसङ्गादर्थकामपरैर्नृशंसैः क्रियमाणस्य दृष्टविधयाऽदृष्टविधया वोपकारकतयाभिमतस्य मनुष्यवधस्यात्यन्तानर्थत्वमाह—स्त्रिया धनस्येति । उल्लङ्घितविधिनिषेधा ह्यर्थकामान्धाः स्वाभिलषितान्तरायं मनुष्यमपि कीटवत् घ्नन्त्येव, उपहरन्ति च स्वाभिलषितसिद्ध्यै पशुमिव पुरुषं भद्रकाल्यै, तदिदमत्यन्तानर्थकमिति बोध्यते । सर्वथा न कार्येत्यनेन मानुषशरीरस्य निरतिशयपुरुषार्थसाधनोपकरणत्वरूपवैलक्षण्यं व्यज्यते । तेन च क्वचिदनुमतोऽप्यात्मघातो न

---

अनन्तरश्लोकमवतारयति—अथेत्यादिना । नृशंसैरिति । इदं चाभिमतैरित्यत्राप्यन्वेति । श्लोकाशयमाह—उल्लङ्घितेत्यादिना । तेन चेति । वैलक्षण्येनेत्यर्थः । क्वचिदिति । गङ्गादितीर्थ

स्तस्य वधो वीर! सर्वार्थवध उच्यत" इति । मनुष्यहिंसानिमित्तान्याह—स्त्रिया इत्यादिना । स्त्रियाः—स्वाभीष्टयोषितः । प्राप्त्यै—लब्धये । यद्यपि स्वेन मनुष्यवधे कृते स्त्रीलाभो भवेत्तथापि स न कर्तव्य इत्यर्थः । वाशब्दद्वयं चार्थे । धनस्य—स्वाभीष्टविपुलद्रव्यस्य प्राप्त्यै च । तथा साम्राज्यस्य—सम्यक् राजतेऽसौ सम्राट्—चक्रवर्ती तस्य कर्म साम्राज्यं—सार्वभौमराज्यम् । ब्राह्मणादित्वात्कर्मणि ष्यञ् । तस्य प्राप्त्यै चापि मनुष्यस्य हिंसा न कार्येति सम्बन्धः । साम्राज्यस्य च वेति पाठे चकारोऽवधारणे । नैव कार्येत्यर्थः । "च पादपूरणे पक्षान्तरे विनिश्चय" इति त्रिकाण्डशेषः । "मनुष्यमारणं चैव परदाराभिमर्शनम् । पारुष्यमुभयं चेति साहसं स्याच्चतुर्विध" मिति बृहस्पतिना मनुष्यमारणस्य चतुर्विधसाहसान्तर्गणनान्नीचजातीयनिर्गुणमनुष्यवधेऽप्युत्तमसाहसाख्यनृपदण्डापत्तेरष्टादशवर्णान्तर्गतमनुष्यवधे तारतम्येन प्रायश्चित्तगौरवस्मरणाच्च मनुष्यहिंसा सर्वथा त्याज्यैव । "नृत्वं नरकभोगान्ते नृहन्तुर्न पुनर्भवे" दिति स्मृतेर्मनुष्यहन्तुर्दुरन्तदुःखापत्तेरिति भावः ॥ १३ ॥

---

कर्त्तव्य इत्युत्तरश्लोकाशय उत्तभ्यते । इतरहिंसातो मनुष्यहिंसाया अत्यन्तानर्थत्वे निमित्तं जन्मनो वैलक्षण्यमुच्यते—मनुष्यस्य त्वित्यनेन । तच्च सुप्रसिद्धम् । श्रुतिरपि—"ताभ्यो गामानयत् ता अब्रुवन् न वै नो अयमलमिति, ताभ्योऽश्वमानयत् ता अब्रुवन् न वै नो अयमलमिति, ताभ्यः पुरुषमानयत् ता अब्रुवन् सुकृतं वत" इति । हीनजातेर्हीनवृत्तेर्वा श्वपचतस्करादेर्मनुष्यमात्रस्य हिंसाऽत्यन्तानर्थेति ज्ञापनायाह—कस्यापीति । स्वेच्छया वा परप्रेरणया वा सर्वप्रकारेण तदनिष्टमित्याह—सर्वथेति । यद्वा—सर्वथा—सुतरामित्यर्थः, तेनात्यन्तानर्थत्वं प्रतीयते । मानुषवधादिदारुणकर्मणि प्रवृत्तौ कदर्याणां पर्याप्तं निमित्तमाह—स्त्रिया इत्यादिना । तत्र कामुका हि स्त्रीनिमित्ते, धनलुब्धास्तस्करा धननिमित्ते, उभयलुब्धास्तु साम्राज्यनिमित्ते क्षणेन निघ्नन्ति पुरुषं कीटमिव, तदेवमादिषु निमित्तेषु मनुष्यहिंसाऽत्यन्तानर्थाय । किं बहुना । क्वचिदपि निमित्ते न कर्त्तव्या । इतोऽप्यन्यदभिमततमं तत्रापि निमित्ते क्रियमाणे तदनर्थायेति भावः । अपीत्यस्य भिन्नक्रमेणान्वयः ॥ १३ ॥

---

इत्यर्थः । अनुमत इति । स्वर्गार्थिनः प्रतीति यावत् । मानुषजन्मनः श्रैष्ठ्ये श्रुतिं प्रदर्शयति—ताभ्य इति । ताभ्यः—सृज्यमानाभ्यः । चेतनेभ्य इति यावत् । गामानयत्—सृष्टिसमये स्रष्टा गोशरीरं प्रायच्छत् । ता अब्रुवन् न वै नोऽयमलमिति—तेन शरीरेण तेषां तृप्तिर्नाभूदिति यावत् । ता अब्रुवन् सुकृतं वतेति—सन्तुष्टा अभूवन्निति यावत् । कस्यापीत्यस्य भावमाह हीनजातेरिति । सर्वथेत्यस्य भावमाह—स्वेच्छयेत्यादिना । अपीत्यस्य भिन्नक्रमेणान्वय इति । साम्राज्यस्यापि वेति पाठमभिप्रेत्यैवमुक्तम् । चेति पाठेऽप्येवमेव बोध्यम् ॥ १३ ॥

---

**आत्मघातस्तु तीर्थेऽपि न कर्तव्यश्च न क्रुधा।**
**अयोग्याचरणात्क्वापि न विषोद्बन्धनादिना ॥ १४ ॥**

हिंसा द्विविधा—परहिंसा स्वहिंसा चेति। तत्राऽऽद्या निराकृता। द्वितीयामपि निराकरोति—आत्मघात इति। आत्मनः—स्वदेहस्य। घातस्तु तीर्थे—प्रयागादावपि। कामिनां स्वर्गादिप्राप्तये—"आब्राह्मणाद्वा स्वर्गादिमहाफलजिगीषया। प्रविशेज्ज्वलनं तोयं कुर्याद्वाऽनशनादिक"मित्यादिशास्त्रविहितोऽपीति भावः। न कर्तव्यः। "सर्वत एवात्मानं गोपाये" दिति श्रुत्याऽऽत्मरक्षणविधानात्। "तस्मादुह न पुराऽऽयुषः स्वःकामी प्रेया"दिति च मिताक्षरायां श्रुत्या बुद्धिपूर्वकमरणनिषेधाच्च। भगवद्भक्तेः स्वाभीष्टसकलपुरुषार्थसम्पादनसमर्थाया विद्यमानत्वादतितुच्छस्वर्गादिसुखाशया मदाश्रितैः सकलपुरुषार्थसाधकमनुष्यशरीरघातो नैवाचरणीयः। तदुक्तं भगवतैव—"यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत्। योगेन दानधर्मेण श्रेयोभिरितरैरपि। सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा। स्वर्गापवर्गं मद्धाम कथञ्चिद्यदि वाञ्छती"ति। किञ्च—तीर्थेऽपि वाञ्छितफलप्राप्तिर्भगवत्स्मरणादिनैवोक्ता, न तु देहत्यागमात्रेण। तदुक्तं ब्राह्मे—"ध्यात्वा विष्णुपदाम्भोजं प्रयागे विष्णुतत्परः। तनुं त्यजति यो माघे स लभेद्वाञ्छितं फल" मिति। तस्माद्यावज्जीवं हरिस्मरणमेव कर्तव्यम्। "हरिस्मृतिः सर्वविपद्विमोक्षण"मिति शुकवाक्यात्।

---

प्रसङ्गान्मनुष्यवधस्यात्यन्तानर्थतोक्ता, तत्प्रसङ्गादात्मवधस्य ततोऽप्यत्यन्तानर्थतामाह—आत्मघातस्त्विति। धनादिलुब्धा निहत्य स्वामिनमुपलभन्ते समभिलषितमैहिकं वाऽर्थाभासम्, ये पुनः कोपादिभिः प्रणष्टविवेका आत्मानमेव घ्नन्ति, ते पुनः सर्वोपभोगसाधनभूतशरीरनाशनादैहिकसुखाभासतोऽपि भ्रष्टाः प्रविशन्ति च परतोऽन्धं तम इति विशेषो व्यज्यते आत्मघातस्त्विति तुशब्देन। क्रुधा अयोग्याचरणाच्चात्मघातो न कर्तव्य इत्यन्वयः। चकारो वाकारार्थः। तीव्रतरकोपवेगेन वर्णाश्रमाभिजनाद्यनुचितातिगर्हिताचरणजनितत्रपातिशयेन वा, आत्महनन-

---

अनन्तरश्लोकमवतारयति—प्रसङ्गादिति। तुशब्दलभ्यं विशेषमाह—धनादीत्यादिना। स्वामिनमित्युपलक्षणम्। स्वामिनं वान्यं वा धनिनं निहत्येति यावत्। अर्थाभासमिति। परिणामे दुःखावहत्वेन तुच्छतामभिप्रेत्याभासोक्तिः। सर्वोपभोगेति। सर्वशब्देनैहिकामुष्मिकसकलभोगसङ्ग्रहः। न केवलमर्थहानिः, परन्त्वनर्थप्राप्तिश्चेत्याह—प्रविशन्ति चेति। यद्यपि तीर्थेऽपि न कर्तव्य इत्यस्य पाठः प्रथमतोऽस्ति तथाप्यर्थक्रमेण योजनामभिप्रेत्यान्वयं प्रदर्शयति—क्रुधा अयोग्याचरणाच्चात्मघातो न कर्तव्य इत्यन्वय इति। न कर्तव्यश्चेत्यत्र पठ्यमानस्य चकारस्यायोग्याचरणादित्यनेन योजितस्यार्थमाह—चकारो वाकारार्थ इति। अयोग्याचरणादित्यस्यार्थमाह—वर्णेति। क्रोधवेगस्येव त्रपा-

यद्यपि मिताक्षरादौ स्वधर्मपालनाशक्तस्यातिवृद्धस्याप्यविरक्तस्य सन्न्यासानधिकारिणो वानप्रस्थस्यैवाग्निप्रवेशाद्युक्तम्, स त्वाश्रम एव कलौ निषिद्धः। "वर्ज्यं गोनरवाजिमेधकरणं मद्यं विवाहः पुनर्व्यूढायाश्च कलौ कमण्डलुधृतिर्ब्रह्मव्रतं नैष्ठिकम्। ज्येष्ठांशोद्धरणं वरातिथिसुरार्चर्यं पशोर्हिंसनं भ्रातुः स्त्रीषु नियोगतः सुतजनिस्तद्वद्वनस्थाश्रम" इति कालनिर्णयदीपिकोक्तेः। ननु—"दुश्चिकित्स्यैर्महारोगैः पीडितश्च जरन्पुमान्। प्रविशेज्ज्वलनं वाऽऽपरस्तुपारगिरिमेव वे" त्यादिपुराणवाक्याद्वृद्धादेरपि देहत्याग उचित इति कथं वानप्रस्थस्यैवेति चेच्छृणु। वृद्धोऽपि जीर्णवानप्रस्थ एवेति विज्ञानेश्वरदेवयाज्ञिकादय आहुः। केचित्त्वन्यानपि वृद्धादीनाहुस्तदपि कलौ निषिद्धमेव। "भृग्वग्निपतनैश्चैव वृद्धादिमरणं तथे" ति कालमाधवेन पृथ्वीचन्द्रेण च कलिवर्ज्येषूक्तेः। युगभेदेन धर्मभेद इत्युक्तं मोक्षधर्मेषु—"अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे। अन्ये कलियुगे धर्मा यथाशक्ति कृता हि ते" इति। अत एव याज्ञवल्क्येनापि प्रायश्चित्ताध्यायान्त उक्तम्—"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः। प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृति" रिति।

अपिशब्दात्कचिन्महापापादिसम्भवे वैधं देहान्तप्रायश्चित्तादिदेहत्यागनिमित्तान्तरं गृह्यते। तदाहाङ्गिराः—"यः कामतो महापापं नरः कुर्यात्कदाचन। न तस्य निष्कृतिर्दृष्टा भृग्वग्निपतनादृत" इति। तदपि कलौ निषिद्धमेव। तदुक्तं निर्णयसिन्धौ कमलाकरभट्टेनैव मृतदोषनिर्णये—"एतेन मरणान्तिकप्रायश्चित्तं काश्यादौ चातुर्वर्ण्यस्य तनुत्यागविधयश्च युगान्तरपरा एवे"ति।

---

मत्यन्तानर्थमिति भावः। क्वापि विषोद्बन्धनादिना आत्मघातो न कर्तव्य इति पूर्वेणान्वयः। असमाधेयव्याध्यादिरूपेऽपि निमित्ते विषोद्बन्धनादिनाऽऽत्मघातोऽनर्थायैवेत्यर्थः।

यश्च गङ्गादितीर्थे स्वर्गाद्याकाङ्क्षया तनुत्यागोऽनुमतो नाम, तत्र स्वाशयमाह—तीर्थेऽपीति। तीर्थे आत्मत्यागोऽप्यनर्थायेत्यर्थः। इह चानर्थः परमपुरुषार्थप्राप्त्युपकरणोच्छेदः। नहीतोऽन्योऽधिकतरोऽनर्थः, यद्बहुतरसुकृतपरिपाकलब्धस्योपायविशेषानुष्ठानसाधनभूतस्य फल्गुवर-

---

वेगस्याप्यात्महनने निमित्तत्वं दृष्टमिति भावः। क्वापीत्यस्य विवक्षितमर्थमाह—असमाधेयव्याध्यादिरूपेऽपि निमित्त इति। सतीति शेषः। अस्तु नाम महर्षीणां केषाञ्चिदर्थिनां कामानुगुण्येन तीर्थे तनुत्यागानुमतिः, वस्तुतः प्रत्यवायानावहत्वेऽप्यर्थहानिरूपानर्थावहत्वेन न तदुचितमिति भगवदाशय इति निषेधतात्पर्यं ज्ञापयन्नाह—यश्चेत्यादिना। निषेधगम्यमनर्थं प्रदर्शयति—इह चेत्यादिना। एतेन शास्त्रविहितस्यास्य निषेधः कथं समुचित इति शङ्का निरस्ता। नहीदानीं प्रत्यवायावहत्वमुप-

एवं शास्त्रीयामात्महिंसां निषिध्य स्वभावदोषजन्यां तां निराकरोति—क्रुधेति । क्रुधा–स्वजनदुर्जनोक्तमर्मभिद्वचनादिजन्यया रुषा हेतुभूतया । विषोद्बन्धनादिना । विषं–अहिफेनादिभक्षणम् । उद्बन्धनं–कण्ठपाशः । ते आदी यस्य–कूपपतनादेस्तेन करणेन । आत्मघातो न कर्तव्यः । तस्यातिपातकत्वात्सकलस्वार्थभ्रंशकत्वाच्च धर्मशास्त्रे दुर्मरणप्रकरणे पातित्यहेतुत्वोक्तेः । उक्तं च ब्राह्मे—"क्रोधात्प्रायं विषं वह्निं शस्त्रमुद्बन्धनं जलम् । गिरिवृक्षप्रपातं च ये कुर्वन्ति नराधमाः । महापातकिनो ये च पतितास्ते प्रकीर्तिता" इति । तथा लोकलज्जयापि स न कर्तव्य इत्याह—अयोग्याचरणादिति । क्वापि–दैवगत्या कस्मिंश्चित्समये । अयोग्यस्य–स्ववर्णाश्रमदेशकुलाचारानुचितस्य कर्मणः । आचरणात्–स्वकृतात्स्वसम्बन्धिजनकृताद्वा दुराचाराद्धेतोरपि । विषोद्बन्धनादिनेत्यत्रापि सम्बध्यते । आत्मघातो न कर्तव्यः । साहजिकस्याप्यस्यातिघोरनरकपातहेतुत्वादिति भावः । तस्मात्सति पापाचरणे देशकालवयोऽवस्थाशक्त्यनुसारेण धर्मशास्त्रोक्तं युगानुरूपं प्रायश्चित्ताचरणमेव न्याय्यं न त्वात्मघात इत्याशयः ॥ १४ ॥

---

सुखाभिकाङ्क्षयोच्छेदनम् । संरक्ष्यमाणे हि मानुषे वपुषि भवेन्नाम कदाचिद्याद‍ृच्छिकसुकृतादिना सुप्रसन्नस्य परमपुरुषस्यानुग्रहेण मुमुक्षा, तया च तदुपायानुष्ठाने प्रवृत्तिः, ततश्च परमपुरुषार्थलाभः । तस्मादल्पफलाभिकाङ्क्षायां वरमुपायान्तरानुष्ठानं विनाऽऽत्मोपघातम् । अल्पे निमित्त आत्मत्यागः कोद्रवकणिकार्थं निधित्याग इवात्यन्तानुचित इति भावः । अत एव श्रूयते—"तस्मादुह न पुरायुषः स्वःकामी प्रेयात्" इति । इह श्लोके निरूपित एवान्वयक्रमो न्याय्यः, पाठक्रमादर्थक्रमो हि बलीयान् ॥ १४ ॥

---

पाद्यते येन शास्त्रविरोधः प्रसजेदिति भावः । अनर्थाधिक्यमुपपादयति—यदित्यादिना । तत्र प्रमाणमाह—अत एवेत्यादिना । अर्थक्रमो हि बलीयानिति । तीर्थे तनुत्यागश्चेत्प्रथमतो निषिद्धः स्यात् पश्चात्केवलक्रोधादिमूलकस्य निषेधो न घटते, तस्य कैमुतिकन्यायेनार्थतः सिद्धेरिति भावः ॥ १४ ॥

**न भक्ष्यं सर्वथा मांसं यज्ञशिष्टमपि क्वचित् ।**
**न पेयं च सुरामद्यमपि देवनिवेदितम् ॥ १५ ॥**

एवं स्वस्य परस्य च हिंसां निषिध्य संस्कृतासंस्कृतमांसभक्षणमपि निषेधति—न भक्ष्यमिति । क्वचिद्यज्ञशिष्टमपि मांसं न भक्ष्यम्—मदीयानां वैष्णवत्वान्मोक्षमार्गस्थितत्वाच्च हिंस्रयज्ञाभावेऽपि क्वचित्—स्थानान्तरे, यज्ञशिष्टं—परकृते सोमादियज्ञे श्राद्धे वा देवपितृयजनावशिष्टमपि, मांसं न भक्ष्यम् । तादृशस्यापि मांसस्य भक्षणनिषेधात् । तथाच ऋग्वेदैतरेयब्राह्मणश्रुतिः—"त एत उत्क्रान्तमेधा अमेध्याः पशवस्तस्मादेतेषां नाश्नीया"दिति । तथा यजुर्वेदशतपथब्राह्मणश्रुतिः—"तस्मादेतेषां पशूनां नाशितव्यमपक्रान्तमेधा ह्येते पशव" इति । किञ्च—एतादृशस्यापि मांसस्य सर्वथा निर्दोषत्वाभावात् । तथा चोक्तमानुशासनिके पर्वणि—"निर्दोषं सर्वथा मांसं विद्यते नैव भूपते!" इति । अपिशब्देनासंस्कृतमांसं तु दूरापास्तम् । सर्वथेति । स्वेच्छया रसलौल्येन देवपितृप्रसादमाहात्म्येन स्नेहसम्बन्धगौरवेण वा गुर्वाज्ञयाऽपि न भक्ष्यम्—नैवास्वादनीयम् । मांसस्य पश्वादिव्यापादनजन्यतया तद्भक्षकस्यापि घातकेषु गणनात् । तथाच मनुः—"अनुमन्ता विशसिता निहन्ता क्रयविक्रयी । संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः । नाकृत्वा प्राणिनां हिंसां मांसमुत्पद्यते क्वचित् । न च प्राणिवधः स्वर्ग्यस्तस्मान्मांसं न भक्षयेत् । मां स भक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः । वर्षे वर्षेऽश्वमेधेन यो यजेत शतं समाः । मांसानि न च खादेद्यस्तयोः पुण्यफलं सम"मिति । कौर्मे च—"वर्णाश्रमव्यवस्थां च त्रेतायां कृतवान्प्रभुः । यज्ञप्रवर्तनं चैव पशुहिंसाविवर्जित"मिति । दानधर्मेषु भीष्मश्चाह—"यो यजेताश्वमेधेन मासि मासि यतव्रतः । वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर ! । सप्तर्षयो वालखिल्यास्तथैव च मरीचिपाः । अमांसभक्षणं

---

उक्तं तावत्प्रासङ्गिकम् । अथ निजान्प्रति व्रतविशेषमादिशति—न भक्ष्यमिति । मामकैरित्यध्याहारः । नाहं सर्वथा मांसमश्नामीति सङ्कल्पपूर्वकं मांसाशनतः सर्वथा विनिवृत्तैरेवाऽस्मदीयैर्भाव्यमिति भावः । एतेन—प्रोक्षितादिमांसाशनस्यादोषत्वप्रतिपादकानाम्

---

प्रासङ्गिकमिति । प्रसङ्गात्प्राप्तम्—मानुषवध आत्मघातनिषेधश्चेत्येतद्द्वयम् । व्रतविशेषमिति । मांसाद्यनशनव्रतमित्यर्थः । अयमत्राशयः—यद्यपि यागीयपशुविशसनसमनन्तरं यज्ञशिष्टमांसाशननिषेधः समुचितो नाम, तथापि वधत्वसामान्यधर्मयोगान्मानुषवधात्मघातयोः स्मृतयोरुपेक्षानर्हतया तद्द्वयं निरूप्येदानीं यज्ञशिष्टमांसाद्यनशनमादिशति इति । आपाततः प्रतीयमानं विरोधं

राजन् ! प्रशंसन्ति मनीषिणः । पूर्वं तु मनसा त्यक्त्वा तथा वाचा च कर्मणा । न भक्षयति यो मांसं त्रिविधं स विमुच्यते । नहि मांसं तृणात्काष्ठादुपलाद्वापि जायते । जन्तुघाताद्भवेन्मांसं तस्माद्दोषोऽस्ति भक्षणे ॥ ऋषिभिः संशयं पृष्टो वसुश्चेदिपतिः पुरा । अभक्ष्यमपि मांसं स प्राह भक्ष्यमिति प्रभो ! ॥ आकाशात्पतितः सद्यो भूमौ स नृपतिस्तदा । एतदेव पुनश्चोक्त्वा विवेश धरणीतल"मित्यादि । मोक्षधर्मे चाह भृगुः—"यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात् । न भक्षयेद्वृथामांसं पृष्ठमांसं च वर्जये"दिति । व्याख्यातमेतच्च चातुर्धरनीलकण्ठेन— यजुषा–यजुर्वेदविदाऽध्वर्युणा संस्कृतं–प्रोक्षितं यज्ञियमपि मांसं स्वयं मांसभक्षणान्निवृत्तः सन्न भक्षयेत् । वृथामांसम्–असंस्कृतं मांसं च । पृष्ठमांसम्–चरममांसम्, श्राद्धशेषमित्यर्थः । "पृष्ठं चरममात्रे स्या"दिति विश्वः । एतेन हिंसायुक्तो धर्मोऽपि न कर्तव्य इत्युक्तमिति । "हुतशेषं भक्षये"दित्यादिश्रुतिस्तु नापूर्वविधिपरा, किन्तु रागप्राप्तसार्वकालिकमांसभक्षणनियमेन तन्निवृत्तिपरेवेत्यवधेयं मुमुक्षुभिः ।

यच्च—"यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः । भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणा"दिति भगवद्वाक्यं तदपि न मांसभक्षणविषयं, किन्तु देवकृतवृष्टिनिष्पन्नरन्धितान्नस्य वैश्वदेवानन्तरं भोजनविषयम् । तथैव व्याख्यानात् । वैश्वदेवादिपञ्चमहायज्ञावशिष्टमन्नं येऽश्नन्ति ते पञ्चसूनाकृतैः सर्वैः किल्बिषैर्मुच्यन्ते । पञ्चसूनाश्च स्मृतावुक्ताः—"कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति" इति । अपरे तु "यज्ञो वै विष्णु"रिति श्रुतेः श्रीवासुदेवनैवेद्यावशिष्टान्नभोजिनः सकलकिल्बिषमुक्ता भवन्तीत्यस्यार्थमाहुरित्यन्यत्र विस्तरः ।

---

"यज्ञाय जग्धिर्मांसस्येत्येपो दैवो विधिः स्मृतः । देवान्पितॄंश्चार्चयित्वा खादन्मांसं न दुष्यति । मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः॥" इत्यादिवचनानां विरोध इति शङ्का परास्ता । इह ह्यधिकारिविशेषमपेक्ष्य तन्निवृत्तेर्धर्मविशेषताया एव बोधनात् । तत्प्रकारश्च देवतापितृयागार्थमिति श्लोके व्याख्यातरीत्या बोध्यः । अयमेव च धर्मः पारमैकान्तिकसमाश्रयणीयः सर्वभूतसौहार्दसीमाभूमिः । "यो यजेताश्वमेधेन मासि मासि यतव्रतः । वर्जयेन्मधु मांसं च सममेतद्युधिष्ठिर ! ॥ न भक्षयति यो मांसं न हन्यान्न च घातयेत् । तन्मित्रं सर्वभूतानां मनुः स्वायम्भुवोऽब्रवीत् ॥ ददाति यजते चापि तपस्वी च भवत्यपि । मधुमांसनिवृत्त्येति प्राह

---

परिहरति—एतेनेति । एतेन–व्रतविशेषादेशपरतावर्णनेनेत्यर्थः । शङ्कापरिहारमुपपादयति—इह हीत्यादिना । धर्मविशेषताया एव बोधनादिति । एवकारेण प्रोक्षितमांसप्राशनस्याधर्मता व्यवच्छिद्यते । व्याख्यातरीत्येति । "नेद्देवोद्यन्तमादित्यं सद्भुत"मित्यत्रेवेति भावः । अस्य व्रतविशेषस्यो-

ननु—"प्राणात्यये तथा श्राद्धे प्रोक्षितं द्विजकाम्यया। देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभा"गिति याज्ञवल्क्यस्मृतेः श्राद्धादौ मांसभक्षणे को दोष इति चेन्न। पूर्वोक्तानुशासनिकपर्ववाक्यात्तत्रापि दोषोऽस्त्येव। किञ्च-इयं हि स्मृती राजसतामसपित्रुपासकानां रजस्तमःप्रकृतीनां पुरुषाणां युगान्तरे रागप्राप्तप्रत्याहिकमांसभक्षणसङ्कोचपरा। कलौ तु देवपितृभ्यः पशूपाकरणस्यैव निषेधः। पूर्वोक्तदीपिकावाक्यात्। "देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः। मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथे"ति बृहन्नारदीये कलिवर्ज्येषूक्तेश्च। सर्वथा मांसभक्षणं न कर्तव्यमित्याशयः। अत एव धर्मोपदेशे जीवहिंसामांसभक्षणसम्भावनया सतुषभृष्टार्द्रशमीधान्यभक्षणमपि निषिद्धम्—"आर्द्रा वल्लास्तथाऽऽढक्यो भृष्टाः स्युर्यद्यनिस्तुषाः। पुम्भिः स्त्रीभिर्न भक्ष्यास्ते सूक्ष्मजीवान्तसम्भवा"दिति। अस्यार्थः—आर्द्राः-पाकदशायाः पूर्वकालिकाः, वल्लाः-निष्पावाख्यधान्यविशेषाः, तथा आढक्यः-तुवर्याख्यधान्यविशेषाः, ता अप्यार्द्रशिम्बिस्था इति ज्ञेयम्। उपलक्षणमेतदार्द्रवर्तुलराजमाषादिशमीधान्यस्य। यद्यनिस्तुषाः-तुषेभ्यो निर्गता निस्तुषा न निस्तुषा अनिस्तुषाः, सशम्य एवेत्यर्थः। भृष्टाः-मृत्पात्रादौ निधाय भर्जिताः स्युः। तर्हीति शेषः। पुम्भिः स्त्रीभिश्च ते-वल्लादयो न भक्ष्याः। तत्र हेतुमाह—सूक्ष्मजीवान्तसम्भवादिति। सूक्ष्माणां-अल्पदेहानां तत्रोत्पन्नकीटानाम्, अन्तः-नाशस्तस्य सम्भवाद्धेतोः। आदौ भर्जनकाले वहिरद्वयशम्यन्तरुत्पन्नसूक्ष्मजन्तुहिंसादोषापत्तेस्ततो भक्षणे तन्मांसभक्षणदोषापत्तेश्च दोषद्वयेन स्वस्याऽऽसुरत्वापत्तेश्चेति भावः। "सुरापा मांसभक्षाश्च हिंस्रा ये ते किलासुराः" इति स्मृतेरिति।

तथा देवनिवेदितं-देवाय-कैश्चिदिष्टदेवत्वेनाभिमताय कालीभैरवादये निवेदितमपि। सुरामद्यं, सुरा च मद्यं च सुरामद्यम्। "जातिरप्राणिनामि"ति द्वन्द्वैकवद्भावः। तच्च न पेयम्। चकारात्तदाघ्राणनमपि न कार्यम्। सुरामाह मनुः—"सुरा वै मलमन्नानां पाप्मा च मलमुच्यते। तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां

चैवं बृहस्पतिः ॥" इत्यादिभिः प्रशंसितश्चायं भारते बहुशः। तत्रैवेतरस्य मुमुक्षुनादरणीयत्वं चोक्तम्—"प्रवृत्तिलक्षणो धर्मः प्रजार्थिभिरुदाहृतः। यथोक्तं राजशार्दूल! न तु तन्मोक्षकाङ्क्षिणाम् ॥" इति। सर्वथा न भक्ष्यमिति प्राणात्ययेऽपि तन्निवृत्तिरादिश्यते। यत्तु प्राणात्यये

रफर्पमाह—अयमेव च धर्म इत्यादिना। तत्र प्रमाणमाह—यो यजेतेत्यादिना। प्राणात्ययेऽपि तन्निवृत्तिरादिश्यत इति। मांसाशनप्रवविरोधनिष्ठानां यद्यनुमतं ततोऽपि हि निवृत्तिरपेक्ष्यते, तत्

पिबेत् । गौडी माध्वी तथा पैष्टी विज्ञेया त्रिविधा सुरा । यथैवेका तथा सर्वा न पातव्या द्विजोत्तमै”रिति । मद्यं त्वेकादशविधम्—“पानसं द्राक्षमाधूकं खार्जूरं तालमैक्षवम् । माधूत्थं सैरमारिष्टं मैरेयं नालिकेरजम् । समानानि विजानीयान्मद्यान्येकादशैव तु । द्वादशं तु सुरामद्यं सर्वेषामधमं स्मृतम्” इति पुलस्त्योक्तेः । “मैरेयमासवो धात्रीधावकीगुडवारिभि”रिति वैजयन्ती । तत्र सुरापानं महापातकमेव—“ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः सम्प्रयोगं च तैः सहे”ति मनूक्तेः । तत्प्रायश्चित्तं धर्मशास्त्रे महदेवोक्तमस्ति—“सुरापगुरुतल्पगौ चीरवल्कलवाससौ द्वादशाब्दं ब्रह्महत्याव्रतं चरेयाता”मिति प्रचेतःस्मरणात् । अज्ञानात्सुरापानेऽपि—“सुरां पीत्वा द्विजो मोहादग्निवर्णां सुरां पिबे”दिति महदेव प्रायश्चित्तमुक्तम् । अज्ञानात्सुरामिश्रोदकादिपानेऽपि प्रायश्चित्तमुक्तं मनुना—“अज्ञानात्प्राश्य विण्मूत्रं सुरासंस्पृष्टमेव वा । पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातय” इति । पुनःसंस्कारं–पुनरुपनयनम् । तद्विधिस्तु संस्कारमयूखादेर्ज्ञेयः । अत्र सुराशब्दो मद्यमात्रे रूढः, मदजननशक्तिमत्त्वोपाधिना सर्वस्य तुल्यत्वादिति वासिष्ठादावुक्तम् ।

न च—“सौत्रामण्यां सुराग्रहान्गृह्णाति” इति श्रुतेः सौत्रामणीयागे सुरापानं निर्दोषमिति वाच्यम् । सौत्रामण्यामपि “यद्घ्राणभक्षो विहितः सुराया” इति वाक्यात्सुराघ्राणमेवानुज्ञातं न तु पानम् । अन्यत्र त्वाघ्राणेऽपि दोषः । “ब्राह्म-

---

“खादन्मांसं न दोषभागि”ति स्मरणं तदर्थकामपरानधिकृत्य प्रवृत्तम् । तेषां हि पुरुषार्थोपभोगतदुपायानुष्ठानाय शरीरधारणमत्यन्तापेक्षितम् । अत एव चाधिकारानुगुण्येनानुजानन्ति च सदोषमपि मांसभक्षणं स्मर्तारः । धर्मनिर्णयो हि देशकालाधिकारिभेदेन भिद्यते, ये पुनर्भगवदेकान्तभक्तास्तदेकोपायनिष्ठा निष्कामाः कृतकृत्याः, न तेषामनेन शरीरेण साधनीयं किञ्चित् । हेयमेव तु मलमयमिति कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम् । तदेषां सर्वथा तन्निवृत्तिरेव सर्वानुद्वेगकरः परमो धर्मः, अयमेव च शास्त्रपरमतात्पर्यार्थः । यज्ञशिष्टमपि क्वचित्—अपिशब्दो मध्यमणिन्यायेन क्वचिदित्यत्राप्यन्वेति । क्वचिदपि—देवतायागे पितृयागे वा क्वचिदपीत्यर्थः । यज्ञशिष्टमपि न भक्ष्यम्—“देवान्पितॄन्समभ्यर्च्य खादन्मांसं न दोषभाक्” इत्युक्तमपि न भक्षयेदित्यर्थः ।

---

प्राणात्ययेऽनुमतान्मांसाशनतो निवृत्तिरादिश्यते “न भक्ष्यं सर्वथा मांस”मित्यनेनेति वाक्यभेदेनान्वयो विवक्षित इति भावः । आपदि मांसानुमतेराशयमाह—तदर्थकामपरानधिकृत्येत्यादिना । पाठान्तरं व्याख्यातुमुपादत्ते—यज्ञशिष्टमपि क्वचिदिति ।

णस्य रुजःकरणमघ्रेयमद्ययोर्घ्रातिर्जैह्म्यं पशुषु पुंसि च मैथुनाचरणमित्येतानि जातिभ्रंशकरणानी"ति बृहद्विष्णुस्मृतेः । कलौ तु सौत्रामण्यामपि सुराग्रहग्रहणं निषिद्धमेव । तदुक्तमादित्यपुराणे—"विधवायां प्रजोत्पत्तौ देवरस्य नियोजनम् । कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः । महाप्रस्थानगमनं गोसंज्ञप्तिश्च गोसवे । सौत्रामण्यामपि सुराग्रहणस्य च सङ्ग्रहः । वरातिथिपितृभ्यश्च पशूपाकरणक्रिया । दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः । आश्रमौ त्रिचतुर्थौ चेत्यादि वर्ज्यं कलौ बुधै"रिति । अज्ञानादेकादशविधमद्यपानेऽपि प्रायश्चित्तमाह प्रायश्चित्तमयूखे बृहस्पतिः—"पीत्वा प्रमादतो मद्यमतिकृच्छ्रं चरेद्द्विजः । कारयेत्तस्य संस्कारं राजा विप्रांश्च भोजये"दिति । सुरामद्ययोरेकत्वे तु सुरैव मद्यं सुरामद्यमिति मयूरव्यंसकादिसमासः । मिताक्षरादौ तु तयोर्भेदमङ्गीकृत्य ब्राह्मणस्य सुरामद्ये क्षत्रियवैश्ययोः सुरा सर्वकालं सर्वथैव निषिद्धानि । क्षत्रियादेस्तु पुराणेषु मद्यपानवर्णनान्मद्यमनुज्ञातमित्युक्तं तदपि न समञ्जसम्, तस्यापि दोषत्वात् । तथा चोक्तं विदुरनीतौ—"सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः । प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः । स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च" इति । किञ्च—मनुना मद्यपानमष्टादशव्यसनेष्वेव कष्टतमत्वेन गणितम् । तथाहि—"मृगयाऽक्षो दिवास्वापः परिवादः स्त्रियो मदः । तौर्यत्रिकं वृथात्यागः कामजो दशको गणः । पैशुन्यं साहसं द्रोह ईर्ष्याऽसूयाऽर्थदूषणम् । वाग्दण्डजं च पारुष्यं क्रोधजोऽपि गणोऽष्टकः । पानमक्षाः स्त्रियस्तत्र मृगया च यथाक्रमम् । एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे । दण्डस्य पातनं चैव वाक्पारुष्यार्थदूषणे । क्रोधजेऽपि गणे विद्यादेतत्कष्टतमं सदे"ति । व्यसनानि च याज्ञ-

---

ननु—यज्ञशिष्टाभक्षणे यज्ञस्यैवानिष्पत्तेः; कथं यज्ञशिष्टमभक्ष्यमिति निषिध्यते । नैवम् । तथाविधयज्ञनिषेध एव तात्पर्यात् । न चेदं देवतापितृयागार्थमित्यनेनैव सिद्धमिति वाच्यम् मुखभेदेन निषेधादाशयविशेषाभिव्यक्तेरपौनरुक्त्यात् । यद्वा—अन्ययजमानकेऽपि यागे यागावशिष्टमदुष्टमित्यभिसन्धाय न भक्ष्यमिति निषेधे तात्पर्यात् । न च प्रोक्षितमदुष्टं कथं निषिध्यत इति वाच्यम् । अधिकारिविशेषमपेक्ष्य धर्मविशेष आदिश्यत इति तूक्तमेव । एतेन—"तदाहुर्नाग्नीषोमीयस्य पशोरश्नीयात्पुरुषस्य वा एषोऽश्नाति योऽग्नी-

---

शङ्कते—नन्विति । अनिष्पत्तेरिति । तत्प्राशनस्य तत्राङ्गत्वादिति भावः । समाधत्ते—नैवमिति । पौनरुक्त्यमाशङ्क्य परिहरति—न चेत्यादिना । मुखभेदेनेति । प्रकारभेदेनेत्यर्थः । एतेनेति ।

वल्क्येन गोवधाद्युपपातकेषु—"हिंस्रयन्त्रविधानं च व्यसनान्यात्मविक्रयः" इति श्लोकेन गणितानि। तदर्थमाह विज्ञाननाथः—व्यसनानि–मृगयादीन्यष्टादशेति। तत्प्रायश्चित्तं च त्रैमासिकव्रतादि मिताक्षरादिभ्यो ज्ञेयम्। तस्मान्मद्यपानमपि न क्षत्रियादेः सदाचारत्वेन क्वापि विहितमिति तात्पर्यम्। अस्तु वा युगान्तरे सदोषमपि तत्पानं, कलौ तु तन्निषिद्धमेव। "नराश्वमेधौ मद्यं च कलौ वर्ज्यं द्विजातिभि"रिति ब्राह्मोक्तेः। मद्यस्य स्पर्शेऽपि नरकपातमाह पराशरः—"अज्ञानाज्ज्ञानतो वाऽपि सुरां स्पृष्ट्वा त्रिवर्णजः। प्रयाति नरकं घोरं यावच्चन्द्रदिवाकरा"विति। तत्प्रायश्चित्तमाह मनुः—"जान्वधः स्नानमात्रं स्यादानाभेरेकरात्रकम्। नाभेरूर्ध्वं त्रिरात्रं स्यान्मद्यस्पर्श उपोषणम्" इति। मद्यभाण्डोदकपानेऽपि दोषमाह हारीतः—"मद्यभाण्डस्थितं तोयं यदि कश्चित्पिबेद्द्विजः। द्वादशाहं तु पयसा पिबेद्ब्राह्मीं सुवर्चला"मिति मिताक्षरायाम्। अयं च सुरानिषेधोऽनुपनीतस्यानूढायाः कन्यायाश्च भवत्येव। "तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबे"दिति जातिमात्रावच्छेदेन निषेधादिति।

नन्वनुपनीतस्य बालस्य प्रायश्चित्ताभावः स्मर्यते। तथाच गौतमः—"प्रागुपनयनात्कामचारकामवादकामभक्षा" इति। तत्कथमनुपनीतस्य सुरापानदोष इति चेच्छृणु। गौतमादिस्मृतिर्मद्येतरविषयेति भगवद्भास्करोक्तेः। मिताक्षरायां चोक्तम्—"अनुपेतस्तु यो बालो मद्यं मोहात्पिबेद्यदि। तस्य कृच्छ्रत्रयं कुर्यान्माता भ्राता तथा पिते"ति जातूकर्ण्यस्मृतेर्गौतमवचनं सुरादिव्यतिरिक्तशुक्तपर्युषि-

पोमीयस्य पशोरश्नाति यजमानो ह्येतेनात्मानं निष्क्रीणीत इति तन्नादत्यम्। "वार्त्रघ्नं वा एतद्धविर्यदग्नीषोमाभ्यां वा इन्द्रो वृत्रमहंस्तावेनमब्रूतामावाभ्यां वै वृत्रमवधीर्वरं ते वृणावहा" इति। "वृणाथामिति तौ तमेव वरमवृणातां श्वः सुत्यायां पशुं स एनयोरेपो च्युतो वरवृतो ह्येनयोस्तस्मात्तस्याशितव्यं चैव लीप्सितव्यं च" इत्यनेन विरोधः परास्तः। वचनञ्च—"यजुषा संस्कृतं मांसं निवृत्तो मांसभक्षणात्। न भक्षयेद्वृथामांसं पृष्ठमांसं च वर्जयेत्॥" इति। यजुषा संस्कृतम्–प्रोक्षितम्। पृष्ठमांसम्–श्राद्धशिष्टम्। वृथामांसभक्षणस्य निषिद्धत्वादेव तन्निवृत्तिसिद्धेरिह तदनुक्तिः। न च कलौ श्राद्धे मांसस्य निषिद्धत्वाच्चत एव श्राद्धावशिष्टभक्षणनिवृत्तिसिद्धेस्तन्निषेधविवक्षाऽपि निष्फलेति वाच्यम्। अधिकारिविशेषनियतस्यास्य धर्मस्य सर्वयुगसाधारण्येनोपदेशात्।

व्रतविशेषनिरूपणपरतावर्णनेनेत्यर्थः। तन्नादत्यमिति। अग्नीषोमीयस्य पशोर्मांसस्यादनं पापायेत्येतन्नादरणीयमित्यर्थः। तत्र हेतुरुच्यते—वार्त्रघ्नं वेत्यादिना। सर्वयुगसाधारण्येनोपदेशादिति। इदमुप-

तादिविषयमिति। ननु–सर्वोऽप्ययं निषेधो रागप्राप्तसुरापाने भवतु नाम, देवप्रसादिसुरापाने को दोष इति चेच्छृणु। देवाः सात्त्विकाः, राजसा मनुष्याः, तामसा असुरा इति सर्वजनीनो घण्टापथः। तत्र देवेभ्यः सुराया निवेदनमेव न सङ्गच्छते, तस्या असुरान्नत्वात्। तदुक्तं श्रीभागवते—"दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम्। विधाय दुदुहुः क्षीरमयःपात्रे सुरासवम्। अथासीद्वारुणी देवी कन्या कमललोचना। असुरा जगृहुस्तां वै हरेरनुमतेन ते" इति। अत एव मिताक्षरायां मनुना—"यक्षरक्षःपिशाचान्नं मद्यं मांसं सुरासवम्। तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हवि"रिति तस्या देवहविषः पर्युदासः कृतः। भारते मोक्षधर्मे चोक्तम्—"यदि यज्ञांश्च वृक्षांश्च यूपांश्चोद्दिश्य मानवाः। वृथा मांसानि खादन्ति नैष धर्मः प्रशस्यते। सुरां मत्स्यान्मधु मांसमासवं कृशरौदनम्[1]। धूर्तैः प्रवर्तितं ह्येतन्नैतद्वेदेषु कल्पितम्। मानान्मोहाच्च लोभाच्च लौल्यमेतत्प्रकल्पितम्। विष्णुमेवाभिजानन्ति सर्वयज्ञेषु ब्राह्मणाः। पायसैः सुमनोभिश्च तस्यापि यजनं स्मृतम्। यज्ञियाश्चैव ये वृक्षा वेदेषु परिकल्पिताः। यच्चापि किञ्चित्कार्त्तिक्यमन्नं चोक्षैः सुसंस्कृतम्। महत्सत्त्वैः शुद्धभावैः सर्वं देवार्हमेव तत्" इति। तस्माद्देवनिवेदितमपि सुरामद्यं न पेयमिति श्रीस्वामिचरणानां सिद्धान्तः। एवं सर्वथा हिंसा परिहार्येति कस्यापीति श्लोकपञ्चकतात्पर्यार्थोऽवसेयः॥ १५॥

---

एवं सर्वथा मांसनिवृत्तिरूपधर्मविशेषमादिश्य सर्वथा सुरातो निवृत्तिरूपं धर्मविशेषमादिशति—न पेयं चेति। चकार उक्तधर्मसमुच्चये। अपि देवनिवेदितं सुरारूपं मद्यं न पेयम्—"सौत्रामण्यां सुराग्रहान्गृह्णाती"ति सुराग्रहो यो विहितः सोऽपि न कार्य इत्यर्थः। इहापि निवृत्तिविशेषस्य धर्मविशेषतैवोच्यत इति न श्रुतिविरोधः। न च तत्तदभावयोर्धर्मत्वं विरुद्धमधिकारिभेदेन तत्सम्भवात्। "प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया। अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते" इति वचनात्प्रोक्षितमांसादिभक्षणमपि दोषायैवेत्यनर्थत्वादेवात्र निषिध्यत इति तु परे प्राहुः॥ १५॥

---

लक्षणम्—पलपैतृकादेः कलौ निषेधेऽपि श्रौतस्यान्यस्याप्रतिषेधाद्यज्ञशिष्टमांसप्राशनप्रसक्तिः कलावप्यस्त्येवेति ततो निवृत्तिरादिश्यत इति। ननु विहितं कथं निषिध्यत इत्यत्राह—इहापीत्यादिना। परेषामाशयमाह—प्रोक्षितेत्यादिना। आहुरित्यनुक्त्वा प्राहुरित्युक्तेरस्मिन्पक्षेऽभिरुचिरवगम्यते॥ १५॥

---

१ कृशरौदनं—कृशरस्तिलमुद्गसिद्ध ओदन इति मिताक्षरा।

अकार्याचरणे क्वापि जाते स्वस्य परस्य वा ।
अङ्गच्छेदो न कर्तव्यः शस्त्राद्यैश्च क्रुधाऽपि वा ॥ १६ ॥

एवं प्राणिमात्रस्य हिंसां निषिध्य तदेकावयवच्छेदमपि निषेधति—अकार्येति । क्वापि—कुसङ्ग-स्वभावदोषोद्रेकादौ निमित्ते सतीत्यर्थः । अकार्यस्य—लोकशास्त्रनिषिद्धस्य परस्त्र्यङ्गस्पर्शादिकर्मणः, आचरणं तस्मिन् । जाते—स्वेन परेण वा कृते सतीत्यर्थः । शस्त्रं—खड्गादि आद्यं—मुख्यं येषां—छुरिकानापितक्षुरादीनां, तैः करणैः । स्वस्य वा, परस्य—अन्यस्य स्वापराधकर्तुः स्त्रीपुरुषपशुपक्ष्यादेर्वा । अङ्गस्य—कर्णनासाशिश्नादेश्छेदः—छेदनं न कर्तव्यः । सत्यकार्याचरणे यथाशक्ति तत्प्रायश्चित्तव्रतमेवाचरणीयमाचारणीयं च, न त्वङ्गच्छेदः कार्यः । अन्यथा प्रसक्तपापस्यापरिहारः, अङ्गच्छेदतः पापान्तरप्रसक्तिः, निर्दयतापत्तिश्चेति

अथ परमधार्मिकैः प्रामादिकेन प्रकृतिक्षोभमात्रेण निमित्तेन धर्मश्रद्धया स्वाङ्गच्छेदादिसाहसं न कर्त्तव्यमित्याह—अकार्याचरण इति । यद्यपि धार्मिकाणामात्मविदां न कदाचिदधर्मे प्रवृत्तिः स्यात्, तथापि प्रमादतस्तत्प्रसङ्गो घटेतैव कदाचित् । "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥" तमिमं प्रामादिकं प्रसङ्गमभिप्रेत्याह—क्वापि जात इति । कदाचिज्जात इत्यर्थः, प्रमादतः प्रसक्त इति यावत् । अत एव कृते इत्यनुक्तिः । स्वस्य परस्य वाऽकार्याचरणे क्वापि जातेऽपीत्यन्वयः । अकार्याचरणं च अपदे रजःकलुषितदृष्टिपातादिः, नहीतोऽधिकस्य प्रामादिकस्यापि तेषु प्रसङ्गः । सहसैव निवर्त्तेरन्खलु ते ततः । तच्चाकार्याचरणं स्वस्य परस्य वा—स्वसम्बन्धि परसम्बन्धि वा, सम्बन्धश्चात्र निमित्तमिति भावः । स्वनिमित्तके परनिमित्तके वाऽकार्याचरण इति यावत् । निमित्तत्वमिह सम्बन्धत्वेन षष्ठ्या विवक्षितं बोध्यम् । स्वतः परतो वेत्येतत् । धर्मवृत्तिमसहमानस्य परस्य विविधाभियोगेन वा स्वयं त्रिगुणप्रकृतिसंसर्गित्वमात्रेण वा निमित्तेन कदाचित्प्रमादतः क्षुभितेन्द्रियतया प्रसक्तेऽप्यपदे रजोरूषितदृष्टिपातादिरूपेऽकार्याचरण इत्याशयः । तावता

अङ्गच्छेदनरूपसाहसनिषेधादेशस्य मुमुक्षुसाधारणतां सङ्घटयन्ननन्तरश्लोकमवतारयति—अथेत्यादिना । यद्यपि धार्मिका नामार्थकामपरा अपि, तच्छेषतया धर्मानुष्ठानस्य तेष्वपि सम्भवात्, तथापि न ते परमधार्मिकाः, मुमुक्षव एव तु परमधार्मिकाः, मोक्षोपायो यः स एव हि परमो धर्मः, तत् परमधार्मिका इत्यनेनार्थकामपरा व्यावर्त्यन्ते । तेषां प्रकृतिक्षोभस्य धीपूर्वकत्वासम्भवात् प्रामादिकेनेत्युक्तम् । क्वापि जात इत्यस्याशयमाह—यद्यपीत्यादिना । अत एवेति । परमधार्मिकाणामधर्मे बुद्धिपूर्वकं प्रवृत्त्यसम्भवादेवेत्यर्थः । स्वस्य परस्य वेत्येतस्यान्वयमाह—स्वस्य परस्य वाऽकार्याचरणे जातेऽपीत्यन्वय इति । षष्ठ्यर्थमाह—स्वसम्बन्धि परसम्बन्धि चेति । विवक्षितं सम्बन्धविशेषं प्रदर्शयति—सम्बन्धश्चात्रेति । फलिताशयमाह—धर्मवृत्तिमित्यादिना इत्याशय इत्यन्तेन । एवकारस्याश्रवणा-

भावः । तथा सति तु भगवदपरितोषेण संसृतिभ्रमणमेव भविष्यति । दयाया भगवत्तोषहेतुत्वमुक्तं श्रीभागवते—"नातिप्रसीदति तथोपचितोपचारैराराधितः सुरगणैर्हृदि बद्धकामैः । यत्सर्वभूतदयया ऽसदलभ्ययैको नानाजनेष्ववहितः सुहृदन्तरात्मे"ति । "तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम् । भावमासुरमुन्मुच्य यया तुष्यत्यधोक्षज" इति च । "पुंसः कृपयतो भद्रे! सर्वात्मा प्रीयते हरिः प्रीते हरौ भगवति प्रीयेऽहं सचराचर" इति च । "दयया सर्वभूतेषु सन्तुष्ट्या येन केनचित् । सर्वेन्द्रियोपशान्त्या च तुष्यत्याशु जनार्दन"इति च । चकारादथ स्वाङ्गं छिनद्मि देवदत्तस्याङ्गं छिन्धीत्यादि स्वपराङ्गच्छेदवचनमपि नोच्चारणीयमिति समुच्चीयते । "परस्य त्रासजननी नोच्चार्या वागपि क्वचि"दिति स्कान्दोक्तेः । तथा क्रुधा—दुरुक्तादिजनितक्रोधवशतयाऽपि शस्त्राद्यैः स्वस्य परस्य वाऽङ्गच्छेदश्च न

तेषु चक्षुरादिषु क्रुधा अङ्गच्छेदः—चक्षुरादितत्तदङ्गोच्छेदो नैव कर्त्तव्यः । वाकार एवार्थे । अनेन खलु चक्षुरिन्द्रियेण धर्मैकरतानामपि प्रामादिकोऽयमधर्मप्रसङ्गः समजनि, तदिदं करणमेवास्माकमनर्थदं माऽस्तु तदुत्पाटयाम इति धर्मश्रद्धान्धहृदयतया नोच्छेद्यं तत् । लोके कतिचन धर्मैकपराश्चिरोपार्जितधर्मसञ्चया जातु पथि परवनितादिषु प्रमादतः प्रसक्ते चक्षुषि सहसैव प्रतिबुद्धा धर्मश्रद्धाग्रहगृहीतहृदया "अहो बत महत्पापं कर्तुं व्यवसिता वय"मिति नितान्तमन्तर्व्याकुला वरमुपघात एवैतदशाधर्मनिदानस्य चक्षुषोऽस्य क्वचिदुपकारकस्यापीति मन्यन्ते हि प्रायः । केचन साहसमप्याचरन्ति । तदिदमनुचितम् । मुमुक्षुणाऽपि प्रमाथित्वादिन्द्रियाणां प्रामादिकदृष्ट्यादिव्यभिचारप्रसङ्गे तदापादकरजोनिबर्हण एव यतितव्यं न तदङ्गभङ्गे । "विचित्रा देहसम्पत्तिरीश्वराय निवेदितुम्" इत्यादिवचनेन हि स्वाराधनाय भगवता परमकृपालुना चक्षुरादिविचित्रकरणग्रामं वपुः प्रदत्तमिति प्रतीयते । तदिदं विषयान्तरे यो विनियुङ्क्ते यश्च धर्मैकरतो भूत्वाऽपि प्रामादिकं विषयान्तरप्रसङ्गं परिहर्तुमक्षमः समूलं तदेव नाशयति न तयोरन्तरं महत् । विनियोक्तव्यस्थानेऽविनियोगस्योभयोरविशेषादिति भावः ।

यद्वा—ननु—कस्यापि प्राणिनो हिंसेत्यादिना सर्वात्मना कीटादीनामपि हिंसा न विधेयेति यदुक्तं तत्सत्यम् । सर्पवृश्चिकादेः परपीडापादकस्य दंष्ट्राद्येकाङ्गविच्छेदनं तूपकारायैवेत्यत्राह—अङ्गच्छेदो न कर्त्तव्य इति । सर्पोऽयं बहून्दशति इति क्रुधा तस्य शस्त्रादिना

दाह—वाकार एवार्थ इति । धर्मश्रद्धया स्वाङ्गच्छेदसम्भावनां प्रदर्शयति—लोके कतिचनेत्यादिना । साहसमनुचितं चेन्मुमुक्षुणा किं कर्तव्यमित्यत्राह—मुमुक्षुणापीत्यादिना । ननु तदङ्गभङ्गे का क्षतिरित्यत्राह—विचित्रेत्यादिना ।

स्वस्य परस्य वेत्यस्याङ्गच्छेद इत्यनेनान्वयमभिप्रेत्य प्रकारान्तरेण व्याचष्टे—यद्वेत्यादिना । तत्रापि क्रुधाऽङ्गच्छेदोऽपि न कर्तव्यः, अयोग्याचरणे जाते स्वस्य परस्य वाऽङ्गच्छेदो न वा कर्तव्य इति वाक्यभेदमभिप्रेत्य व्याचष्टे—नन्वित्यादिना । अपेरिति । क्रुधापि वेत्यत्र श्रूयमाणस्यापेरित्यर्थः ।

कर्तव्यः । वाशब्दश्चार्थे । क्रोधस्य स्वकृताखिलपुण्यनाशहेतुत्वादिति भावः । तदुक्तं मदनरत्ने—"दानं व्रतानि नियमा ज्ञानं ध्यानं हुतं जपः । यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवे"दिति ॥ १६ ॥

---

गरलाङ्गविच्छेदनमपि न कार्यम् । अपेरङ्गच्छेद इत्यत्र सम्बन्धः, अङ्गच्छेदोऽपि प्राणिपीडैव । परदुःखापादनं हि पीडा, सैव च हिंसाशब्दार्थः, प्राणवियोगानुकूलो वा तदननुकूलो वा परदुःखापादको व्यापारो हिंसैव । अत एव छान्दोग्ये सप्तमप्रपाठके त्रयोदशखण्डे—"स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक्त्वास्त्वित्येवैनमाहुः पितृहा वै त्वमसि, मातृहा वै त्वमसि, भ्रातृहा वै त्वमसि, स्वसृहा वै त्वमसि आचार्यहा वै त्वमसि, ब्राह्मणहा वै त्वमसि" इति । दुःखापादकतामात्रेण हन्तृत्वनिर्देशः, तस्मादङ्गविच्छेदनस्यापि हिंसात्वात् "मा हिंस्यादि"ति निषेधविषयत्वात्तदप्यनुचितमिति भावः ।

यत्पुनर्भृत्यपुत्रकलत्रादीनां स्वतः परतो वा धर्मोल्लङ्घने प्रसक्ते स्वीयानामपि तेषां कर्णनासादि विच्छिद्यते स्वामिभिः, विच्छिद्यते वा दूषकं परमाशङ्क्य तत्कर्णनासादि । तत्तु सुतरां दारुणमनर्थं सुदूरपरिहरणीयमित्याह—अकार्याचरण इति । क्वापि–स्वप्रीतिरूपे परप्रीतिरूपे वा यत्र कुत्रापि निमित्त इत्यर्थः । अकार्याचरणे–परपरिचरणाद्यधर्मे जाते भृत्यकलत्रादीनामिति यावत् । स्वस्य–स्वीयस्य भृत्यकलत्रादेः, परस्य वा–यत्संसर्गेण स्वीयानां धर्मच्युतिशङ्का, तस्य वाऽङ्गच्छेदस्तु नैव कर्त्तव्यः । चस्त्वर्थे । वाकार एवकारार्थे । हिंस्रसर्पादेर्दन्तोत्पाटनादिकमपि हिंसेत्यवसिते किमु वक्तव्यमन्यत्राङ्गच्छेद इति भावः । क्वाप्यकार्याचरणे जाते स्वस्य परस्य वा शस्त्राद्यैः क्रुधाऽङ्गच्छेदोऽपि न वा कर्त्तव्य इत्येकान्वयो वा । अकार्याचरणे जाते आत्मनः परस्य वाऽङ्गच्छेदो न कर्त्तव्यः, अप्रसक्तेऽप्यकार्याचरणे परोक्तवाग्दुरुक्तादिजनितकोपवेगेन वाऽऽत्मनः परस्य वाऽङ्गच्छेदो न कर्त्तव्य इति वाऽन्वयः ॥ १६ ॥

---

नन्वङ्गच्छेदो न दोषायेत्याशङ्कायामाह—अङ्गच्छेदोऽपि प्राणिपीडैवेति । ननु "न हिंस्यात्सर्वा भूतानी"ति हिंसा हि निषिद्धा, न पीडामात्रमित्यत्राह—सैव च हिंसाशब्दार्थ इति । अत एवेति । दुःखापादकव्यापारस्य हिंसात्वादेवेत्यर्थः ।

एवमर्थक्रमादुत्तरार्धं प्रथमतो योजयित्वा पूर्वार्धं योजयति—यत्पुनरित्यादिना । स्वस्येत्यस्यार्थमाह—स्वीयस्येति । परशब्दार्थमाह—यदित्यादिना । अङ्गच्छेदस्तु नैव कर्तव्य इति । ननु कथमयमर्थो लभ्यते, नहि तुशब्द एवकारो वा मूले श्रूयत इति शङ्कायामाह—चस्त्वर्थे । वाकार एवकारार्थ इति । चः–शस्त्राद्यैश्चेत्यत्र श्रूयमाणश्चकारः । वाकारः–क्रुधापि वेत्यत्र श्रूयमाणः । फलिताशयमाह—हिंसेत्यादिना । व्यवहितान्वयक्लेशं पर्यालोच्यैकवाक्यतया योजयति—क्वापीत्यादिना । स्वशब्दस्यात्मनि प्रसिद्धिप्राचुर्यमभिप्रेत्य, क्रुधापि वेति वाकारघटितनिर्देशस्य निमित्तान्तरज्ञापकतां चाभिप्रेत्य व्याचष्टे—अकार्याचरणेत्यादिना ॥ १६ ॥

**स्तेनकर्म न कर्तव्यं धर्मार्थमपि केनचित् ।**
**सस्वामि काष्ठपुष्पादि न ग्राह्यं तदनाज्ञया ॥ १७ ॥**

स्तेनेति । किञ्च–केनचित्–केनापि मदाश्रितेन । धर्मार्थं–धर्मकार्याचरणार्थमपि । अपिशब्दः स्वकुटुम्बपोषणादिनिमित्तान्तरं दूरीकरोति । स्तेनः–चोरस्तस्य कर्म स्तेनकर्म–प्रत्यक्षं हठात् परोक्षं वा परस्वापहरणम् । स्तेयेति पाठे "स्तेनाद्यन्नलोपश्चे"ति कर्मणि यत् । ततः स्तेयाख्यं कर्म स्तेयकर्मेति मध्यमपदलोपी समासः । न कर्तव्यम् । स्तेयद्रव्यस्य धर्मानर्हत्वादिति भावः । "स्ववृत्त्या लब्धवित्तेन न्याय्येन वृषमाचरे"दिति । "न्याय्येनावाप्तमन्नं तु नरो हर्षसमन्वितः । द्विजेभ्यो वेदवृद्धेभ्यो दत्त्वा पापात्प्रमुच्यत"इति च दानधर्मोक्तेः । "न हर्तव्यं परधनमिति धर्मः सनातन"इति मोक्षधर्मोक्तेश्च । "अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति । स दाता नरकं याति यस्यार्थस्तस्य तत्फल"मिति दानखण्डे यमस्मृतेश्च । एतच्च कायवाङ्मनोभिर्वर्ज्यमित्युक्तं लैङ्गे—"अनादानं परस्वानामप-

---

प्रथमं परपीडानिवृत्तिमादिशता भगवता प्राणिमारणतदङ्गच्छेदतो निवृत्तिरादिष्टा । इदानीं तथाभूतात्स्तेयतो निवृत्तिरादिश्यते—स्तेनकर्मेति । स्तेनकर्म–स्तेयं, तच्च वञ्चनया परधनहरणम्, तथाच व्याख्यातं विज्ञानेश्वरेण—"स्तेयं तु तद्विलक्षणं, निरन्वयं द्रव्यस्वाम्याद्यसमक्षं वञ्चयित्वा यत्परधनहरणं तदुच्यते । यच्च सान्वयमपि कृत्वा न मयेदं कृतमिति भयान्निह्नुते तदपि स्तेयम्" इति । तदिदं वर्णान्तर्गतेन तदनन्तर्गतेन चण्डालादिना वा केनापि न कर्त्तव्यमित्याह—केनचिन्न कर्त्तव्यमिति । केनचित्–केनापीत्यर्थः । तेनास्तेयमाचाण्डालं साधारणो धर्म इति व्यज्यते । यद्वा—केनचित्–केनापि निमित्तेन, प्राणधारणादिनिमित्तेनापीति भावः । मुमुक्षूणां चेदमत्यन्तापेक्षितं, अन्यथा योगासिद्धेः । योगे हि यमादयोऽष्टावङ्गानि, यमेषु चास्तेयं गण्यते । तथाच सूत्रम्–"अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" इति । एतेन साधारणस्य धर्मस्य मुमुक्षून्प्रत्युपदेशे नातीव प्रयोजनमिति शङ्का परास्ता ।

---

प्रथममिति । प्रथमम्–स्तेयनिवृत्त्यादेशतः प्रागित्येतत् । अस्य चादिष्टेत्यनेनान्वयः । स्तेयस्य परपीडात्वेऽपि ततोऽङ्गच्छेदस्य, ततश्च मारणस्याधिकदुःखापादकत्वेन प्रथमतस्ततो निवृत्तिरादिष्टेत्याशयेनाह—परपीडानिवृत्तिमादिशता भगवतेत्यादिना । इदानीमिति । प्राणिमारणतदङ्गच्छेदतो निवृत्त्यादेशानन्तरमित्यर्थः । तथाभूतादिति । परपीडनरूपादित्यर्थः । एतेन कस्यापीत्यादिभिः श्लोकैरस्य श्लोकस्यैकप्रकरणत्वं ज्ञापितं भवति । निरन्वयमित्यस्य विवरणम्—द्रव्यस्वाम्याद्यसमक्षमिति । केनचिदिति निर्देशतो यो विशेषस्तमाह—तेनेति । यद्वेति । ननु–धर्मतो, गरीयः किं निमित्तान्तरम्, यत् केनापि निमित्तेन न कर्तव्यमिति निषेधप्रसङ्गस्तत्राह—प्राणधारणनिमित्तेनापीति भाव.

घपि विचारतः । मनसा कर्मणा वाचा तदस्तेयं समासत"इति ।"अरण्ये विजने न्यस्तं परस्वं दृश्यते यदा । मनसाऽपि न गृह्णन्ति ते नराः स्वर्गगामिन"इति भारते श्रीशङ्करोक्तेश्च । अत्र स्तेनकर्म न कर्तव्यमिति सामान्यत उक्तं, तद्विशेषास्त्वार्षस्मृतिभ्योऽवगन्तव्याः ।

नच–कोलकिरातादीनां दस्युजातीनां स्तेनकर्मापि वृत्तिर्न्याय्येति वाच्यम् । "वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत् । अचौराणामपापानामन्त्यजान्त्यावसायिना"मिति नारदेन चौर्यवृत्तेः पर्युदासात् । "आचार्यगुरुशुश्रूषा तथैवाश्रमवासिनाम् । भूमिपानां च शुश्रूषा कर्तव्या सर्वदस्युभि"रित्यादिना भारते राजधर्मेष्वाचार्यादिशुश्रूषालब्धधनेनैव तद्वृत्तेर्विधानाच्च तैरपि स्तेयकर्म न कर्तव्यम् ।

ननु—"योऽसाधुभ्योऽर्थमादाय साधुभ्यः संप्रयच्छति । स कृत्वा प्लवमात्मानं सन्तारयति तावुभौ" इति वचनेन धर्मार्थं स्तेयमप्यभ्यनुज्ञातमित्यत्राह—धर्मार्थमपीति । धर्मार्थमपीति न कर्तव्यमिति पूर्वेणान्वयः । यद्यपि—"तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मणः ॥" इत्याहारालाभेन त्रिरात्रमुपोषितस्य प्राणधारणाय परद्रव्याहरणाभ्यनुज्ञा स्मर्यते । स्मर्यते च—"यज्ञश्चेत्प्रतिरुद्धः स्यादेकेनाङ्गेन यज्वनः । ब्राह्मणस्य विशेषेण धार्मिके सति राजनि ॥ यो वैश्यः स्याद्बहुपशुर्हीनक्रतुरसोमपः । कुटुम्बात्तस्य तद्द्रव्यमाहरेद्यज्ञसिद्धये ॥ आहरेत्त्रीणि वा द्वे वा कामं शूद्रस्य वेश्मनः । नहि शूद्रस्य यज्ञेषु कश्चिदस्ति परिग्रहः ॥ योऽनाहिताग्निः शतगुरयज्वा च सहस्रगुः । तयोरपि कुटुम्बाभ्यामाहरेदविचारयन् ॥" इति धर्मार्थं परद्रव्याहरणम् । तथापि न तत्स्तेयम् । नहि सुप्ते प्रमत्ते वा स्वामिनि वञ्चनया तदाहरणमिष्यते, अपितु राज्ञा क्रियमाणमिव कराहरणमकपटं तत् । अत एव तत्र प्रकरणे—"खलात्क्षेत्रादगाराद्वा यतो वाऽप्युपलभ्यते । आख्यातव्यं तु तत्तस्मै पृच्छते यदि पृच्छति ॥" इति हृतद्रव्यस्वामिनि कुत इदमाहृतमिति पृच्छति वक्तव्यमेव यथाहृतम्, नापलपितव्यमित्युच्यते; तत् न तत्स्तेयम्, स्तेयं तूक्तं वञ्चनागर्भमिति । स्मरति नारदोऽपि—"उपायैर्विविधैरेषां छलयित्वाऽपकर्षणम् । सुप्तप्रमत्तमत्तेभ्यः स्तेयमाहुर्मनीषिणः" इति । मनुरपि—"निरन्वयं भवेत्स्तेयं कृत्वाऽपह्नुवते च यत्" इति ।

नन्वत्यल्पेष्वेधःपुष्पादिष्वपेक्षितेषु सन्निहितेषु द्वित्राणां ग्रहणे न स्वामिनो वञ्चनया प्रवृत्तिः, तत्स्वामिनि जाग्रत्येव कतिपयैधःपुष्पादिग्रहणे न स्तेयं नाम, अवञ्चनादित्य-

इति । ननु–स्तेयमपि प्राणधारणार्थं धर्मार्थमप्यनुज्ञातमिति कथं तन्निषेध इति शङ्कते—यद्यपीत्यादिना । तथैवेति । "योऽसाधुभ्योऽर्थमादाये"ति वचनं यथा स्तेयमभ्यनुजानाति तथैवेत्यर्थः । समाधत्ते—न तत्स्तेयमिति । कुतो न तत्स्तेयमित्यत्राह—नहीति । स्तेयलक्षणस्य तत्राभावान्न तत्स्तेयमिति भावः । तत्र स्तेयलक्षणस्यासत्त्वामेवोपष्टम्भयति—अत एवेत्यादिना । स्तेयत्वं सङ्क्रमयति—

तथा—सस्वामि—विद्यमानस्वामिकम् । यत्काष्ठपुष्पादि—काष्ठं च पुष्पं च ते आदी यस्य—फलपत्रादेस्तदपि । तदनाज्ञया—तस्य स्वामिनोऽनाज्ञया, आज्ञां विनेत्यर्थः । न ग्राह्यं—नोपादेयम् । अनाज्ञप्ताप्रदत्तपरकीयपदार्थमात्रापहरणस्यैव स्तेयत्वात् । "तत्स्तेयं यदुपादानमनाज्ञप्ताप्रदत्तयो"रिति स्मृतेः । "तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् । अनापृच्छन् हि गृह्णानो हस्तच्छेदनमर्हती"ति गौतमोक्तेश्च । "कृमिकीटवयोहत्या मद्यानुगतभोजनम् । फलपुष्पेन्धनस्तेयं मलिनीकरणं स्मृतम् । मलिनीकरणे चापि तप्तकृच्छ्रं विशोधन"मिति प्रायश्चित्तस्मरणाच्च । जाबालस्तु—"उदके फलमूलेषु पुष्पपर्णसुगन्धिषु । मृद्भाण्डमधुचौर्ये च सन्तोष्य स्वामिनं ततः । पापं निवेद्य विप्रेभ्यः पादकृच्छ्रं समाचरे" दित्याह ।

---

आह—सस्वामीति । स्वोपभोगायेति शेषः । अयं भावः—अस्त्येव तत्र वञ्चना । अपहार्यद्रव्यतारतम्येन वञ्चनायां लाघवगौरवमात्रम् । अपहर्तुरियं ह्यभिसन्धिः—स्वामी यदि पराङ्मुखः कार्यवैयग्र्येण सुखाहरणं यथाक्षिपेत्तर्हि द्वित्राणि काष्ठशकलानि प्रज्वालनमात्राय गृहीतानि, यदि नानुमन्येत भवांस्तर्हि माऽस्तु त्यक्तानि-नामेमानि, इति प्रक्षिप्य सहसाऽपसराम इति । तदिदं वञ्चनालाघवमभिप्रेत्य न ग्राह्यमित्युक्तिः । तस्मात्स्वामिन आज्ञां गृहीत्वैवास्वल्पमपि ग्राह्यं न तं विनेति । स्वोपभोगायेति शेषपूरणेन व्याख्यानात् "द्विजस्तृणैधःपुष्पाणि सर्वतः सर्वदा हरेत्" इति गवाग्निदेवार्थमाहरणाभ्यनुज्ञानमविरुद्धम् ।

यद्वा—यदप्यभ्यनुज्ञातमग्निदेवादिनिमित्तं समित्पुष्पादीनामन्यदीयानामप्याहरणं तदपि स्वामिनोऽभ्यनुज्ञयैव । अभ्यनुज्ञा चात्राप्रतिषेधमात्रम् । अन्यथा तु तदपि न कर्त्तव्यमित्याह—सस्वामीति । काष्ठमत्र समित् । धर्मार्थमित्यस्यात्रापि सम्बन्धः, देवाग्न्यादिनिमित्तमपीति यावत् । तदनाज्ञया—नञो विरुद्धार्थकतयाऽनाज्ञेति प्रतिषेध उच्यते । स्वामिना प्रतिषिद्धे तु तन्न ग्राह्यमित्यर्थः । शास्त्राभ्यनुज्ञातस्यापि तस्याप्रतिषेधरूपाभ्यनुज्ञामात्रमपेक्ष्यत एव । निषेधे तु स्वामिदोषेण तद्द्रव्यं न देवाद्यर्हं त्याज्यमेव तु तत्, देवाद्यर्थं शास्त्रानुमतमपि समित्पुष्पाद्याहरणं निषेधन् स्वामी ह्यासुरप्रकृतिरिति भावः ।

यद्वा—विनाप्यनुमतिं स्वामिनः समक्षमसमक्षं वोत्तमस्य नीचादगुणाद्यज्ञापेक्षितकतिपयद्रव्याहरणमनुज्ञायते—"यज्ञश्चेत्प्रतिरुद्धः स्या"दित्यादिना । अनुज्ञायते च देवाद्यर्थं

---

अयं भाव इत्यादिना । शेषपूरणेन व्याख्यानस्य प्रयोजनमाह—स्वेत्यादिना । विना शेषपूरणं व्याचष्टे—यद्वेत्यादिना । अप्रतिषेधमात्रमिति । एतेन—"द्विजस्तृणैधःपुष्पाणी"ति याज्ञवल्क्यवचनेनाविरोधः सिद्धः । धर्मार्थमित्यस्यानुषङ्गतो निर्गलितमर्थमाह—देवाग्न्यादिनिमित्तमपीति यावदिति । ननु—शास्त्रेऽभ्यनुज्ञातं नाम "द्विजस्तृणैधःपुष्पाणि सर्वतः सर्वमाहरे"दित्यत्राह—शास्त्राभ्यनुज्ञातस्यापीत्यादिना अपेक्ष्यत एवेत्यन्तेन । कथमिदमवगम्यत इत्यत्राह—निषेध इत्यादिना भाव

होमार्थसमिदाहरणादौ तु न दोष इत्याह शङ्खः—"अस्तेयमग्नये काष्ठमस्तेयं च गवां तृण"मिति । "द्विजस्तृणैधःपुष्पाणि सर्वतः स्ववदाहरे"दिति याज्ञवल्क्यस्मृतेश्च । कश्चित्स्तेयापवादं मनुश्चाह—"द्विजोऽध्वगः क्षीणवृत्तिर्द्वाविक्षू द्वे च मूलके । आददानः परक्षेत्रान्न दण्डं दातुमर्हति । चणकव्रीहिगोधूमयवानां मुद्गमाषयोः । अनिषिद्धैर्ग्रहीतव्यो मुष्टिरेकः पथिस्थितैः । तथैव सप्तमे भक्ते भक्तानि षडनश्नता । अश्वस्तनविधानेन हर्तव्यं हीनकर्मण"इति । सप्तमे भक्ते–चतुर्थदिवस इत्यर्थः । हीनकर्मणः–अब्राह्मणात् । तस्माद्यत्किञ्चिदपेक्षितं चौर्येण कदापि न ग्राह्यमिति तात्पर्यम् ॥ १७ ॥

---

पुष्पादीनां सर्वतः स्ववदविशङ्कमाहरणं कचित्, ततोपि निवृत्तिर्धर्मविशेष आदिश्यते–स्तेनकर्मेति । एतेनाभ्यनुज्ञातस्य प्रत्यवायानावहत्वात्कथं तन्निषेध इति शङ्का परास्ता । निवृत्तेर्धर्मविशेषतया एव बोधनात्, एतत्प्रकारश्च व्याख्यातरीत्या ज्ञेयः । अभ्यनुज्ञाततो निवृत्तेरप्यधिकारिविशेषं प्रति धर्मत्वं चाक्षतमेव । केनचित्–उत्तमेनापीत्यर्थः । स्तेनकर्म–परद्रव्यापहरणमित्यर्थः, धर्मार्थमपि तन्न कर्तव्यं स्वामिनः समक्षमसमक्षं वा; बलाद्वञ्चनया वा क्रियमाणं परद्रव्यहरणं धर्मार्थमपि न कर्त्तव्यम् । यदप्यत्यल्पं समित्पुष्पादि तदपि परकीयं न ग्राह्यं धर्मायापि । अभ्यनुज्ञातादपि ततो निवृत्तिरेव निःश्रेयसविशेषसाधनीभूता । तदिदमेव सर्वथाऽस्तेयव्रतं मुमुक्षुभिर्मामकैरुपसेव्यम् । धर्मार्थे तु परद्रव्यमाह्रियते नान्यत्रेतीदमस्तेयं हि समयावच्छिन्नम्, तदनवच्छेदस्तु ततोऽपि निवृत्तौ । इदमेव च योगाङ्गतया परिगणितमस्तेयव्रतम् । तथाच पातञ्जले—"अहिंसासत्यास्तेयापरिग्रहा यमाः" इति योगाङ्गभूतान् यमान्निरूप्य ते च विशेषिताः—"जातिदेशकालसमयानवच्छिन्नाः सार्वभौमी महाव्रतम्" इति । जात्याद्यनवच्छिन्नत्वमहिंसादिषु सर्वत्रान्वेतीति भावः ॥ १७ ॥

---

इत्यन्तेन । ततोऽपि निवृत्तिर्धर्मविशेष आदिश्यत इति । न तु तस्याधर्मत्वमुच्यत इति भावः । एतेनेति । निवृत्तिविशेषस्य धर्मत्वनिरूपणेनेत्यर्थः । यद्यपि "यश्चैत्प्रतिषिद्धः स्या"दित्यादिना परार्थे विहितं परद्रव्याहरणं न स्तेयलक्षणलक्षितम्, वञ्चनागर्भत्वात्, तस्मान्न तस्य स्तेनकर्मेत्यनेन ग्रहणसम्भवस्तथापि प्रकृते स्तेनकर्मपदस्य परद्रव्याहरणमात्रे लक्षकतया तद्ग्रहणसम्भव इत्याशयेनाह—स्तेनकर्म परद्रव्यापहरणमित्यर्थ इति । बलाद्वञ्चनयेति । यथा वञ्चनागर्भात्स्तेयतो निवृत्तिरावश्यकी, यथा च बलात्कारगर्भात्साहसतो निवृत्तिरावश्यकी, तथाऽस्तेयव्रतनिष्ठस्य धर्मार्थादपि परद्रव्याहरणतो निवृत्तिरावश्यकीति भावः । अस्तेयव्रते यो विशेषस्तमाह—धर्मार्थे त्वित्यादिना । तथाविधस्यास्तेयव्रतस्यैव योगोपकारकतयाऽऽदरणीयत्वमाह—इदमेव चेत्यादिना । जात्याद्यनवच्छिन्नत्वेनाहिंसामात्रं विशेष्यत इति भ्रमव्युदासायाह—जात्याद्यनवच्छिन्नत्वमहिंसादिषु सर्वत्रान्वेतीति भाव इति॥१७॥

**व्यभिचारो न कर्तव्यः पुम्भिः स्त्रीभिश्च मां श्रितैः ।**
**द्यूतादिव्यसनं त्याज्यं नाद्यं भङ्गादि मादकम् ॥ १८ ॥**

व्यभिचार इति । किञ्च—मां श्रितैः—मदाश्रितैः । पुम्भिः—पुरुषैः । तथा लिङ्गविपरिणामेन मां श्रिताभिः स्त्रीभिश्च व्यभिचारो न कर्तव्यः । पुरुषैः परदारगमनं न कर्तव्यं, स्त्रीभिश्च परपुरुषसङ्गो न कर्तव्यः । उभयोरपि दोषसाम्यात् । अत एवाह मनुः—"व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् । शृगालयोनिमाप्नोति पापरोगैश्च पीड्यत"इति । "यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रत"मिति च । पारदार्यस्य सर्वक्षयहेतुत्वमाह विदुरः—"हरणं च परस्वानां परदाराभिमर्शनम् । सुहृदां च परित्यागस्त्रयो दोषाः क्षयावहा"इति । तच्च कायवाङ्मनोभिस्त्याज्यमित्युक्तं भारते आनुशासनिके पर्वणि—"परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् । नहीदृशमनायुष्यं लोके किञ्चन विद्यते । यादृशं पुरुषस्येह परदारोपसेवनम् । यावन्तो रोमकूपाः स्युः स्त्रीणां गात्रेषु निर्मिताः । तावद्वर्षसहस्राणि नरकं पर्युपासत"इति । तथा "परदारेषु ये मूढाश्चक्षुर्दुष्टं प्रयुञ्जते । तेन दुष्टस्वभावेन जात्यन्धास्ते भवन्ति हि । मनसापि प्रदुष्टेन ये पश्यन्ति परस्त्रियम् । रोगार्त्तास्ते भवन्तीह नरा दुष्कृतकारिण"इति । श्रीवासुदेवमाहात्म्ये चोक्तम्—"कामभावेन नेक्षेत परयोषां तु कर्हिचित् । श्राद्धपर्वव्रताहादौ नोपेयाच्च स्वयोषित"मिति । हारीतस्मृतौ तु परस्त्रिया वस्त्रान्तरस्पर्शोऽपि दोष उक्तः—"परस्त्रियाश्च वस्त्रान्तं यदि स्पृशेच्च कामतः । ब्रह्महत्यासमं पापं मुनिः कात्यायनोऽब्रवीत् । यावन्ति तस्य सूत्राणि तावद्वर्षशतानि च । अन्ते स नरके वासं प्रकरोति नराधम"इति । एतावता तदुपहासादिकं तु दूरापास्तम् । देवलस्मृतिश्च स्त्रीणां व्यभिचारं निषेधति—"या कामेनान्यपुरुषं योषाऽभिसरति कचित् । सा खरी सप्त जन्मानि निरयान्तेऽतिरुग्भवे"दिति । श्रीभागवते च व्यभिचारफलं तप्तसूर्मिनरक-

---

अथ परदारपरिग्रहादिरूपदुश्चरितादनर्थावहान्निवृत्तिरादिश्यते—व्यभिचार इति । यद्यपि व्यभिचारादिदुराचारस्यात्यन्तानर्थतया तन्निवृत्तेः सर्वसाधारण्येन शास्त्रतः सिद्धेरिह मां श्रितैर्न कर्त्तव्य इति विशिष्याश्रितानभिमुखीकृत्य निषेधो नातिप्रयोजनकः, तथापि

---

अनन्तरश्लोकमवतारयति—अथेत्यादिना । परदारपरिग्रहादीत्यादिपदेन द्यूतादिपरिग्रहः । अनर्थावहादित्यनेन प्रकरणैक्यं ज्ञाप्यते । कस्यापीत्यादिना निषिद्धाभिवृत्तिर्हि समादिश्यत इति भावः । नातिप्रयोजनक इति । यद्यपि व्यभिचारस्यानर्थत्वेन ततो निवर्तितव्यमित्येतदङ्गीक्रियते तत्र-

प्राप्तिरेवेत्युक्तम्—"यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमालिङ्गयन्ति स्त्रियं च पुरुषमय्या सूर्म्ये"ति। तस्मान्मानसाऽपि व्यभिचारो न कर्तव्य इति भावः। एतच्च पारदार्यं सामान्यत उक्तम्। गुर्वङ्गनागमनादेर्महापातकत्वाद्भगिन्यादिगमनस्यातिपातकत्वात्तत्प्रायश्चित्तादेराधिक्यस्मरणाच्च। तथा स्त्रीणामपि गुरुशिष्यप्रतिलोमजादिगमने दोषाधिक्यात् "चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा तथा। पतिघ्नी च विशेषेण जुङ्गितोपगता तथे"त्यादिवाक्यैस्त्यागविधानाच्च। जुङ्गितः—मधपस्तमुपगता। तत्रापि वर्णाश्रमप्रतिलोमजानुलोमजकृतो विशेषविस्तरो मिताक्षरादेरवगन्तव्यः।

अत्र केचित्कामविह्वलाः प्रलपन्ति पण्यस्त्रीणां परदारत्वाभावात्तद्गमने दोषाभाव इति। तदसत्। तस्या वृषलीत्वेन गणनात्तद्गमने दोषाधिक्यात्। वृषल्य उक्ता मिताक्षरायां स्मृत्यन्तरे—"चण्डाली बन्धकी वेश्या रजःस्था या च कन्यका। ऊढा या च सगोत्रा स्याद्वृषल्यः पञ्च कीर्तिता"इति। बन्धकी—स्वैरिणी। तद्गमने प्रायश्चित्तमाह मनुः—"यत्करोत्येकरात्रेण वृषलीसेवनादघम्।

---

सामान्यतः सिद्धस्यानृतवदननिषेधस्य दर्शपूर्णमासप्रकरणे विधानवदुपपत्तेः। अयं भावः—फलविशेषाकाङ्क्षया क्रत्वादिसाधनविशेषमवलम्बमानस्यैश्वर्यार्थिनः प्रसक्तो व्यभिचारादिदुराचारः प्रत्यवायमावहन्नपि "यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत्। न तस्य क्रतुवैगुण्यं यथा चोदितसिद्धितः॥" इत्युक्तरीत्या परिगृहीतोपायस्य कदाचिद्वैगुण्यं नापादयेदपि, लभेतापि किमपि फलमभिलषितं सः। ये पुनरर्वाचीनफलविशेषाकाङ्क्षयाऽपि मामेवोपायं साक्षादवलम्बन्ते ते तु नैव लभेरन् फलमपि फल्गु सति तादृशे दुराचारे, स ह्युपायतया परिगृहीतस्य ममोपायभावे वैगुण्यमापादयति, तस्मात्परिगृहीतमदेकोपायभावैरैश्वर्यार्थिभिरपि परिगृहीतोपायभञ्जकतयाऽपि सुदूरपरिहरणीयोऽयं दुराचार इति। मां श्रितैः—उपायान्तरं परित्यज्य मामेव भगवन्तमभिलषितार्वाचीनफलार्थमुपायतया श्रितैः। उक्तश्च गीतायामर्थार्थिनोऽप्युपायतया भगवदाश्रयणम्—"आर्त्तो जिज्ञासुरर्थार्थी"ति।

---

योजनमस्त्येव, तथापि तत्र मुख्यं प्रयोजनम्, तस्य सामान्यशास्त्रेणैव सिद्धेस्तथा सति "व्यभिचारो न कर्तव्यः पुम्भिः स्त्रीभिश्च"त्येतावतैव वचनेन भाव्यम्, मां श्रितैरिति त्वधिकमेवेत्याशयेनोक्तं नातिप्रयोजनकमिति। समाधत्ते—तथापीत्यादिना। विधानवदुपपत्तेरिति। ननु—दृष्टान्तप्रदर्शनेन किं लब्धमित्यत आह—अयं भाव इति। उपायभावे वैगुण्यमिति। उपायभावश्च प्रसादविशिष्टवेषेण, तस्य वैगुण्यं नाम प्रसादासम्भव एव। उपायभञ्जकतयेति। प्रसादविच्छेदकतयेत्येतत्। मां श्रितैरित्यस्यार्थमाह—उपायान्तरं परित्यज्येत्यादिना। भगवतो यथावस्थितस्वरूपदृष्ट्या व्याख्यातम्।

तन्नैक्ष्यभुग्जपन्नित्यं त्रिभिर्वर्षैर्व्यपोहति ।" तत्रापि ब्राह्मणस्य विशेषमाह हारीतः—"ब्राह्मणो वृषलीं गत्वा सद्यो गच्छेदधोगतिम् । अथास्यां गर्भ उत्पन्ने पतत्याशु न संशय" इति । तस्मात् स्वोढेतरयोषिद्गमनं सर्वैरपि हेयमित्याशयः ।

याज्ञवल्क्यस्तु परस्त्रियाश्छायातिक्रमणमपि निषेधति—"देवर्त्विक्स्नातकाचार्यराज्ञां छायां परस्त्रियाः । नाक्रामेद्रक्तविण्मूत्रष्ठीवनोद्वर्तनानि चे"ति । अङ्गिराश्च परस्त्रियोर्मध्यतो गमनमपि निषेधति—"विप्राग्न्योर्विप्रयोरग्न्योर्भर्गोक्ष्णोर्गुरुशिष्ययोः । दम्पत्योर्नान्तरा गच्छेद्योषितोर्विष्णुतार्क्ष्ययो"रिति । तत्प्रायश्चित्तं चाह शङ्खः—"द्वौ विप्रौ ब्राह्मणाग्नी वा दम्पती गोद्विजौ स्त्रियौ । अन्तरेण यदा गच्छेत्कृच्छ्रं सान्तपनं चरे"दिति ।

तथा द्यूतमादिर्यस्य तत् । व्यसनं–विशेषेणास्यति–च्यावयति श्रेयोमार्गात्, व्यस्यते–परित्यज्यत इति वा व्यसनम् । द्यूताद्यासक्तिलक्षणं कर्मेत्यर्थः । कर्मणि ल्युट् । "स्त्री द्यूतं मृगया मद्यं नृत्यं गीतं वृथाटनम् । वाद्यं निन्दा दिवास्वापो व्यसनानि नृणां दशे"ति दक्षः प्राह । आदिशब्दात्कथालापदुरालापपण्यवीथ्युपवेशकुलटासङ्गभक्तिधर्महीनशास्त्रपरिशीलनादीनामपि ग्रहणम् । त्याज्यं–न कर्तव्यमित्यर्थः । सर्वैरपि मच्छिष्यैरिति ज्ञेयम् । "नाक्षैर्दीव्येन्नाददीतान्यवित्त"मिति भारते कपिलोक्तेः । "द्यूतसंव्यवहारी च प्राणिहिंसारताश्च ये । वैतरण्यां निपात्यन्ते ये नरा बन्धुघातका" इति यमस्मरणाच्च । द्यूते छलानृतबाहुल्यात्तन्निषेधं तत्कारिणां दण्डं चाह मिताक्षरायाम्—"नाक्षैः क्रीडेत्कदाचित्त्वि"ति । द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा । तान्सर्वान् घातयेद्राजा शूद्रांश्च द्विजलिङ्गिन" इति च । अप्राणिग्लहं द्यूतम् । प्राणिग्लहः समाह्वय इति भेदः । एवमन्येषामपि

---

यद्वा—"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥" इति दुश्चरितनिवृत्तेरुपासनाङ्गतया श्रूयमाणत्वान्मुमुक्षोर्विहितानुष्ठानस्येव निषिद्धनिवृत्तेरुपासनाङ्गत्वेनाप्यपेक्षितत्वादङ्गभावज्ञापनाय विशिष्योच्यते—मां श्रितैर्न कर्त्तव्यमिति । मां श्रितैः—मुमुक्षुभिरित्येतत् । द्यूतादीत्यादिपदेन वेश्योपसेवनादिस्त्रीव्यसनादीनां सङ्ग्रहः । यद्यपि—"स्त्री द्यूतं मृगया मद्यम्" इति व्यसने परिगणितस्य मादकद्रव्योपसेवनस्य द्यूतादीत्यादिपदेन ग्रहणसम्भवात् "नाद्यं भङ्गादि मादक"मिति पृथग्ग्रहणं व्यर्थ

---

भगवतो मानुषसमाधिमनुसृत्य मां श्रितैरित्येतद्व्याचक्षाणः प्रकारान्तरेण समाधत्ते—यद्वेत्यादिना । शङ्कते—यद्यपीत्यादिना । आदिपदेन ग्रहणसम्भवादिति । व्यसनत्वजातियोगादिति भावः ।

व्यसनानां गोवधाद्युपपातकेषु याज्ञवल्क्यबृहद्विष्ण्वादिभिर्गणनाद्यथोचितं त्रैमासिकव्रतादेस्तत्तत्प्रायश्चित्तस्य विधानाच्च व्यसनमात्रं वर्ज्यमिति सङ्क्षेपः ।

तथा भङ्गा–विजयाख्यौषधिरादिर्यस्य तत् । मादयति–प्रमत्तं करोतीति मादकं गञ्जाहिफेनमहाजिह्लादि । नाद्यं–न भक्षणीयम् । तस्यापि मदजनकत्वेन मद्यसाम्यात् । "न भक्ष्यं मादकं किञ्चिच्चित्तविभ्रमकृद्धि त"दिति नारदीयोक्तेः ॥ १८ ॥

---

तथापि कैश्चित्प्रतिभावर्धकत्वाद्यभिमानेनोपसेव्यमानतया तद्दूरीकरणाय विशिष्य निषेधः । उक्तदुराचाराणामनर्थता धर्मशास्त्रेषु सुप्रसिद्धा, तदुपन्यासश्च प्रकृते नातीवापेक्षित इति नेह वितन्यते ॥ १८ ॥

---

समाधत्ते—तथापीत्यादिना । मूले मादकमिति विशेषणात्त्याज्यतौपयिकं रूपं प्रदर्शितं भवति ॥१८॥

---

**अग्राह्यान्नेन पक्वं यदन्नं तदुदकं च न ।**
**जगन्नाथपुरं हित्वा ग्राह्यं कृष्णप्रसाद्यपि ॥ १९ ॥**

अग्राह्येति । गृहीतुमर्हं ग्राह्यम् । ग्रहिरत्र भुक्त्यर्थः । उपादानार्थस्यापि गृह्णातेर्भुक्त्यर्थत्वं तु धातूनामनेकार्थत्वात् । "बहुलमेतन्निदर्शन"मिति गणसूत्रे बहुलग्रहणात् "भुजोऽनवन" इति सूत्रे भुजो भोजन इति वक्तव्येऽनवनशब्देनार्थान्तरज्ञापनाच्च धातूनामनेकार्थत्वसिद्धिः । तथाच "दिवं मरुत्वानिव भोक्ष्यते भुवं दिगन्तविश्रान्तरथो हि तत्सुत" इत्यत्र पालनभिन्नस्वीकाररूपार्थस्य भुजेरात्मनेपदमिति वदन्ति । उक्तं च—"निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः । अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शन"मिति । वस्तुतस्तु धातूनामर्थनिर्देशो

---

नाद्यं भङ्गादीत्यद्यत्वनिषेधे प्रसक्ते तत्प्रसङ्गादद्यनिषेधान्तरमाह—अग्राह्येति । यद्वा—यज्ञशिष्टमपि मांसमित्यतो न भोज्यं सर्वथा मांसमिति पूर्वमुक्तम्, तथा अद्य मांसादिव्यतिरिक्तमोदनाद्यपि भगवद्यागशिष्टमपि शूद्रादिना पक्वं न ग्राह्यमित्याहेति सिंहावलोकनन्यायेन सङ्गतिः । निषेधधर्मोपदेशप्रकरणत्वादयमपि निषेधोपदेश इति प्रकरणसङ्गतिमात्रं वा । अग्रा-

---

श्लोकसङ्गतिमाह—नाद्यं भङ्गादीत्यादिना । व्यवहितश्लोकेन सङ्गतिमाह—यद्वेत्यादिना । मांसमित्यत इति । मांसत्वजात्याक्रान्तत्वादित्यर्थः । तथेति । यथा यज्ञशिष्ट इति ग्राह्यताप्रसङ्गे प्राप्ते प्रबलतरनिमित्तान्तरेण तत्त्यागस्तथेत्यर्थः । नन्वव्यवहितेन हि सङ्गतिरपेक्ष्यते, किं व्यवहितेन सङ्गत्येत्यत आह—सिंहावलोकनन्यायेनेति । प्रकरणतः सङ्गतिमात्रेण वा निर्वाह इत्याह—निषेधेति । कर्म-

न पाणिनिकृतः, किन्तु भीमसेनपण्डितकृत इति न नियतः । तथाच सर्वधातूनां सर्वार्थवाचकत्वप्रसक्तौ रूढिर्नियामिका । रूढिमाश्रित्यैवार्थनिर्देशादित्यन्यत्र विस्तरः । न ग्राह्यमग्राह्यमन्नं यस्य । यस्येति सम्बन्धे षष्ठी । स चात्र पाच्यपाचकभावलक्षणः । येन पक्वमन्नं स्वस्य वर्णाश्रमाचारविरुद्धत्वाद्भोजनार्हं न भवेत् तेन । पक्वं—रन्धितम् । यदन्नं—भक्ष्यभोज्यादि । तथा तदुदकं—तस्याग्राह्यान्नपुरुषस्योदकं—लक्षणया तत्पात्रादिसम्बन्धि पानीयं चरणामृतादि तच्च । जगन्नाथपुरं—उत्कलदेशप्रसिद्धां श्रीपुरुषोत्तमपुरीम् । हित्वा—तदतिरिक्तस्थाने । तत्रत्यस्य भगवतो जगन्नाथस्य निवेदितादन्यदित्येतत् । जगन्नाथपुरोऽन्यत्रेति पाठे तु समासान्तविधेरनित्यत्वं बोध्यम् । न ग्राह्यं—न भोज्यं न पेयं चेत्यर्थः । सङ्करीकरणाख्यपापत्वात्तस्येति भावः । तदुक्तं विष्णुस्मृतौ—"ग्राम्यारण्यपशूनां हिंसनमग्राह्यान्नादानं च सङ्करीकरण"मिति । तथा—"सङ्करीकरणं कृत्वा मासमश्नीत यावक"मित्यादिना तत्प्रायश्चित्तविधानाच्च ।

नन्वेतदप्राप्तं किं तन्निषेधेनेति चेत्—हेतुबलेन कलौ क्वचित्तत्सम्भवदर्शनात्स्वकीयानां तन्माभूदित्याशयेन तद्ग्रहणे हेतुगर्भं विशेषणमाह—कृष्णप्रसाद्यपीति । इदं कृष्णाय निवेदितमतोऽतिपवित्रमस्य ग्रहणे न दोषः किन्तु बहुपुण्यमिति भावेनापि न ग्राह्यम् । ईश्वरनिबद्धनिजवर्णाश्रमधर्ममर्यादाभङ्गदोषेण नरकपातापत्तेरित्यर्थः । निजवर्णाश्रमधर्ममर्यादापालनस्येश्वरप्रसादेन भक्तिसिद्धि-

ह्यान्नेन—यस्यान्नमग्राह्यं तेन । यस्येति षष्ठ्या पाच्यपाचकभावरूपः सम्बन्धो विवक्षितः । पक्वमिति विशेषश्रवणात् । अन्यथा तदस्वारस्यात् । अग्राह्यता चाभोज्यतैव, ग्रहणं हि स्वीकारः, स्वीकारफलं ह्युपभोग एव । स च स्वीकृतवस्त्वनुगुण एवोत्पन्नस्य ग्रहणमुपभोग एव । तदिदमन्नशब्दस्वारस्यादेव व्यज्यते, अद्यते इति ह्यन्नम् । तत्कृष्णप्रसाद्यपि—कृष्णनिवेदितमपि,

धारयभ्रमं व्यावर्तयति—यस्यान्नमग्राह्यं तेनेति । स्वस्वामिभावसम्बन्धं व्यावर्तयति—यस्येति षष्ठ्येत्यादिना । पाच्यपाचकभावरूपसम्बन्धविवक्षायां ज्ञापकं किमित्यत आह—पक्वमिति विशेषश्रवणादिति । पूर्वश्लोकस्यानन्तरश्लोकस्य च सङ्गतिमाहेत्यर्थः । तथा च सम्बन्धत्वेन पाच्यपाचकसम्बन्ध एवावबोध्यत इति भावः । अन्यथा तदस्वारस्यादिति । स्वस्वामिभावसम्बन्धस्य विवक्षायां पक्वमिति पदस्यास्वारस्यं स्यादित्यर्थः । स्वामिदोषेण त्याज्यतायाः पक्वापक्वोभयसाधारण्यादिति भावः । ननु शूद्रेण पक्वस्य भोजनं हि निषिद्धम्, न ग्रहणमात्रम्, तद्ग्रहणे कश्चिद्दोष इत्याशङ्कायां न ग्राह्यमित्यस्याशयमाह—अग्राह्यता चाभोज्यतैवेति । ननु—तस्य तदर्थकता कथमित्यत आह—ग्रहणं हि स्वीकार इत्यादिना । अन्नशब्दस्वारस्यादेव व्यज्यत इति । एतेन—"अग्राह्यान्नेन पक्वं च"इत्येतद-

हेतुत्वादिति भावः। "भक्तिः सिध्यति धर्मेण ज्ञानं धर्मेण सिध्यती"ति संवर्तोक्तेः यदि बलात्कारेण भयदर्शनादिना वा कश्चिद्दुष्टश्चातुर्वर्णिकं पुरुषमग्राह्यान्नं भक्षयेत्तत्र तु राजदण्ड उक्तो व्यवहाराध्याये—"अभक्ष्येण द्विजं दूष्याद्दण्ड्य उत्तमसाहसम् । मध्यमं क्षत्रियं वैश्यं प्रथमं शूद्रमर्धिक"मिति । अर्धिकं–प्रथमसाहसार्धं दण्ड्य इत्यर्थः ॥ १९ ॥

न ग्राह्यं–न भोज्यं, परं भगवत्प्रसाद इति माननमात्रमर्हति, तत्राञ्जलिमात्रमुचितमित्येतत् । वर्णादिमर्यादाया भगवन्नियमिततया तदुल्लङ्घनं तदीयानां ह्यवर्जनीयमिति भावः । एवं तदुदकं च न–कृष्णनिवेदितमप्यभोज्यान्नसम्बन्धि । सम्बन्धश्चात्र तद्भाण्डगतत्वम् । शूद्रादेरभोज्यान्नत्वं तद्भाण्डगतस्योदकस्य साक्षादपेयत्वं च—"नाद्याच्छूद्रस्य पक्वान्नम्"इत्यादिवचनतोऽवगन्तव्यम् । क्वचिदस्यापवादमाह—जगन्नाथपुरं हित्वेति । तत्र भगवन्निवेदितं तथाविधमपि ग्राह्यमिति तत्क्षेत्रमाहात्म्ये स्फुटम् । न च शूद्रपक्वस्य भगवद्यागे नैवावकाश इति वाच्यम् । तान्त्रिकवर्त्मना शूद्राणामपि भगवद्यागेऽधिकारस्य पाञ्चरात्रे सुप्रसिद्धत्वात् । "ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः । अर्चनीयश्च सेव्यश्च" इति च वचनम् ॥ १९ ॥

न्मात्रेणापि विवक्षितार्थलाभे, अन्नमिति निर्देशो नातिप्रयोजनक इति शङ्काप्यपास्ता । तदुदकमित्यत्र लुप्तषष्ठ्या विवक्षितं सम्बन्धमाह—सम्बन्धमात्रेति । केऽभोज्यान्नास्तेषां तथात्वे किं प्रमाणमित्यत्राह—शूद्रादेरित्यादिना ॥ १९ ॥

---

**मिथ्यापवादः कस्मिंश्चिदपि स्वार्थस्य सिद्धये ।**
**नारोप्यो नापशब्दाश्च भाषणीयाः कदाचन ॥ २० ॥**

मिथ्यापवाद इति । स्वार्थः–यः कश्चित्स्वस्याभीष्टः पदार्थस्तस्य । सिद्धये–तत्प्राप्त्यर्थमपि । परापवादे कृते सति यदि स्वार्थसिद्धिर्भवेत्तथापीत्यर्थः । कस्मिंश्चित्–पुरुषे स्त्रियां वा । सामान्ये नपुंसकम् । प्राकृतजनेऽपीत्यर्थः । मिथ्याभूतोऽपवादः–अनेनेदमयुक्तं कृतमित्यनृताभिशंसनम् । नारोप्यः–नैवारोपणीयः ।

प्राणिपीडनस्तेनकर्मव्यभिचारादिदुराचारः प्राङ्निषिद्धः । अथेदानीं तथाविधदोषारोपणं परस्मिन् कर्तव्यमित्युच्यते—मिथ्यापवादेति । ततः पापद्वैगुण्यात् । तथाच याज्ञवल्क्यः—"मिथ्याभिशंसिनो दोषो द्वि"रिति । कस्मिंश्चिदपि–उत्तमे वा नीचे वा कस्मिंश्चिदपि, शत्रावथवा कस्मिंश्चिदपीति वाऽर्थः । अपेर्मध्यमणिन्यायेनोभयत्र सम्बन्धः । स्वार्थस्य सिद्धयेऽपि

मूले मिथ्यापवादो नारोप्य इत्यत्र हेतुं पूरयति—ततः पापद्वैगुण्यादिति । ततः–मिथ्यापवादात् इत्यर्थः । उत्तमे नेति । विद्यावृत्तादिभिरिति शेषः । एतेन–ईर्ष्याकलुषितमानसो जनः प्रायो

भूरिदोषावहत्वात्तस्येति भावः । तदुक्तमादित्यपुराणे—“यानि मिथ्याभिशस्तानां पतन्त्यश्रूणि रोदनात् । तानि पुत्रान् पशून् घ्नन्ति तेषां मिथ्याभिशंसिनाम् । ब्रह्महत्यासुरापाने स्तेये गुर्वङ्गनागमे । दृष्टं विशोधनं वृद्धैर्नास्ति मिथ्याभिशंसिना”मिति । याज्ञवल्क्योऽप्याह—“मिथ्याभिशंसिनो दोषो द्विःसमो भूतवादिनः । मिथ्याभिशस्तदोषं च समादत्ते मृषा वद”न्निति । अस्यार्थमाह विज्ञानेश्वरः—“यस्तु परोत्कर्षेर्ष्याजनितरोषकलुषितान्तःकरणोऽन्यजनसमक्षं मिथ्यैवाभिशापं पारदार्यं ब्रह्महत्यादिकं वा दुष्कर्मानेन कृतमित्यारोपयति तस्य तदेव पापं द्विगुणं भवति । यस्तु विद्यमानमेव दोषमलोकविदितं जनसमक्षं प्रकाशयति तस्य तत्पातकिसमदोषभाक्त्वम् । न केवलमेतावदेव किन्तु मृषावदन् मिथ्याभिशस्तस्य यदन्यदुष्कृतजातं तदपि समादत्ते” इति तथा । कदाचन—क्वापि । अपशब्दाः—म्लेच्छवाचो गालिदानमश्लीलं परुषापवचनानि च । न भाषणीयाः—नोच्चारणीयाः तेषामपि वाक्पारुष्यसाहसत्वादित्यर्थः । उक्तं हि भारते—“पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा । अनिबद्धप्रलापी च मृगपक्षिषु जायते” इति ॥ २० ॥

---

मिथ्यापवादो नाऽऽरोप्यः । स्वार्थस्य सिद्धयेऽपीत्यनेन ये पुनः स्वार्थं विना परोत्कर्षासहिष्णुतामात्रेण मिथ्यापवादमारोपयन्ति तेषां नृशंसतमत्वं सूच्यते । यद्यप्यर्थविशेषाय सह्यते नामानर्थमप्यल्पम्, परापवादतो जनिष्यमाणमनर्थमतिप्रबलं न कयाऽप्यर्थाकाङ्क्षया सोढुमर्हम्, गृहारामक्षेत्रकलत्रादितो जायमानादपि सुखादिदमतिदारुणं हि मिथ्याभिशंसनजं पारलौकिकं दुःखम् । तदुच्यते—स्वार्थस्य सिद्धयेऽपि नारोप्य इतीत्यपि भावः । मिथ्यापवादमारोपयितुः स्वार्थलाभ इति तत्कालमस्ति कश्चिदास्वादोऽन्तर्निगूढगरल इव मधुनि । यः पुनः क्रोधवेगेन त्वमसि मातृगामीत्यादिदुर्भाषितानि प्रयुङ्क्ते स तु स्वानर्थमेकमादत्ते न तात्कालिकार्थास्वादाभासमपीति वैषम्यं ज्ञापयितुं वा स्वार्थस्य सिद्धय इत्युक्तिः।कदाचन नापशब्दा भाषणीयाः—स्वयमन्येनातिक्लेशमापादितोऽपि तदानीमपि तादृशापभाषणं न कुर्यात्, सह्य एव कोपवेग इति भावः ॥२०॥

---

विद्यया वृत्तेन वात्मनोऽधिकमसहमानो दूषयेदेव दोषारोपणेनेत्येवक्षपत्यते । अपेक्षयतान्वयतो यो विशेषस्तमाह—स्वार्थस्य सिद्धयेऽपीत्यादिना । कदाचनेत्यस्याशयमाह—स्वयमन्येनेत्यादिना ॥ २० ॥

**देवतातीर्थविप्राणां साध्वीनां च सतामपि।**
**वेदानां च न कर्तव्या निन्दा श्रव्या न च क्वचित् ॥२१॥**

देवतेति। देवताश्च तीर्थानि च विप्राश्च तेषाम्। तथा साध्वीनां–पतिव्रतानां च। तथा सतां–भगवद्भक्तानां च। अपिश्चार्थे। तथा वेदानाम्। चकारः पुराणादिसमुच्चयार्थः। निन्दा–कुत्सा। न कर्तव्या–स्वेन न कार्या। क्वचित्–अन्यतश्च न श्रव्या–श्रोतुमप्यर्हा न भवति। "देववेदद्विजातीनां साधुतीर्थमहात्मनाम्। गुरोः पतिव्रतानां च तथा यज्वितपस्विनाम्। परिवादं न कुर्वीत परिहासेऽपि पुत्रक!। कुर्वतामविनीतानां न श्रोतव्यः कथञ्चने"ति मार्कण्डेयपुराणोक्तेः। तथा "न निन्दाताडने कुर्या"दिति साधारणमनुष्यनिन्दाया अपि निषेधः स्मर्यते। अतो गुणमहतां तु सकृन्निन्दनेऽपि दोषभूयस्त्वमेव। तथाच सुमन्तुस्मृतिः—"देवर्षिब्राह्मणाचार्यमातृपितृनरेन्द्रसाधुसतीनां परिवादन आक्रोशे वोल्मुकेन जिह्वां दहेद्धिरण्यं दद्या"दिति। स्कान्दे चोक्तम्—"श्रुतिभूदेवदेवानां नृपसाधुतपस्विनाम्। पतिव्रतानां नारीणां निन्दां कुर्यान्न कर्हिचित्। तीर्थानि देवप्रतिमा निन्देयुर्ये कुबुद्धयः। तेषां तु जारजातानां वंशोच्छेदो भवेद्ध्रुव"मिति। वेदादिनिन्दायास्तु ब्रह्महत्यासमत्वमप्युक्तं योगीश्वरेण—"गुरूणामध्य-

---

नापशब्दाश्च भाषणीया इति वाग्दुरुक्तनिषेधप्रसङ्गेन निन्दाया विषयविशेषेऽत्यन्तानर्थतामाह—देवतेति। प्राङ्निषिद्धश्चापशब्दः कोपमूलः, निषिध्यमाना चेयं निन्दाऽसूयामूलेति भिदा। देवताः–अग्न्यादित्यादयः, तीर्थानि–भागीरथ्यादीनि, विप्राः–भूसुराः, एतेषां त्रयाणामुत्कर्षस्याजानसिद्धत्वे साम्यमभिप्रेत्य देवतातीर्थविप्राणामित्येकेन द्वन्द्वेन ग्रहणम्। साध्व्यादीनां तु वृत्तादिकृतोत्कर्षवैलक्षण्यादेतद्वर्गतो वैलक्षण्यज्ञापनायैवैतस्मिंस्तेषामुपसङ्ग्रहमकृत्वा पृथङ्निर्देशः कृतः। देवतातीर्थविप्रेभ्यः साध्वीनां, ताभ्यः सतां, तेभ्यो वेदानामुत्कर्षमभिप्रेत्योत्तरोत्तरं तेषां निर्देशः। अग्न्यादयोऽपि हि देवाः पतिव्रतावचनेनोपसंहृतदाहादिस्वसामर्थ्या भवन्तीति सुप्रसिद्धम्। विप्रस्तु फल्गुतेजाः पतिव्रतासु विषय इत्येतत्कौशिकनामकस्य विप्रस्य भिक्षार्थं कस्यचिद्गृहमेधिनो गृहं गतस्य प्रक्रान्तं पतिपरिचरणं परिसमाप्य भिक्षामादायागतायाः पतिव्रतायाश्च संवादे स्फुटम्, किमु वक्तव्यं जडात्तीर्थादुत्कर्षे। "असन्नेव स भवति असद्ब्रह्मेति

---

वाग्दुरुक्तनिषेधप्रसङ्गेनेति। अपभाषणमिव निन्दापि हि वाग्दुरुक्तमिति भावः। तयोर्मिथो भेदमाह—प्रागित्यादिना। असूयामूलेति। परोत्कर्षासहिष्णुतामूलकेत्यर्थः। साध्व्यादीनामिति। आदिशब्दात्सतां परिग्रहः। वृत्तादीति। आदिशब्दात् ज्ञानपरिग्रहः। ताभ्य इति। देवतातीर्थविप्रसाध्वीभ्य इत्यर्थः। तेभ्य इति। देवतातीर्थविप्रसाध्वीसद्भ्य इत्यर्थः। पतिव्रतासु देवाश्चेत्यति-

धिक्षेपो वेदनिन्दा सुहृद्वधः । ब्रह्महत्यासमं ज्ञेयमधीतस्य च नाशन"मिति । भारते चोक्तम्—"गुरुनिन्दा दहत्यायुर्मनुष्याणां न संशय" इत्यादि ॥ २१ ॥

वेद चेत् । अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदुः" इति ब्रह्मज्ञानसम्पत्त्या सच्छब्दवाच्या ये ब्रह्मविदस्तेषां पतिव्रताभ्यो गरीयस्त्वे किं वक्तव्यम् । यदर्थज्ञानात्ते ब्रह्मज्ञानिनो भवन्ति ते स्वतःप्रमाणभूताः सर्वदा तैरपि सेव्या वाच्यं परं ब्रह्मेव स्वयमप्यपरिच्छिन्ना वेदास्तेभ्यो गरीयांस इति स्फुटम् । एतेषामुत्तरोत्तरं गरीयसां निन्दा न कर्त्तव्या, सा ह्यत्यन्तानर्थकरीति भावः । कचिदपि सा निन्दा न श्रव्या, कर्णपथात्सा दूरपरिहरणीयेति यावत् । अनेन श्लोकेन देवतादिनिन्दकदुर्जनसङ्गे मदीयैर्न स्थेयमिति निजाः शिक्षिताः ॥ २१ ॥

रुद्धवीर्याः, किं वक्तव्यं विप्रस्तासु तथेत्येतत् विप्रस्त्विति तुशब्देन व्यज्यते । इह सच्छब्दविवक्षितमर्थमाह—असन्नेवेत्यादिना । सद्भ्यो वेदानामुत्कर्षं निरूपयति—यदर्थज्ञानादित्यादिना ॥ २१ ॥

देवतायै भवेद्यस्यै सुरामांसनिवेदनम् ।
यत्पुरोऽजादिहिंसा च न भक्ष्यं तन्निवेदितम् ॥ २२ ॥

देवताया इति । यस्यै देवतायै । रजस्तमःप्रधानाय देवाय देव्यै वेत्यर्थः । सुरा च मांसं च तयोर्निवेदनं—नैवेद्याख्य उपहारो भवेत् । तथा यत्पुरः—यस्या अग्रे । अजः—मेष आदिर्येषां तेषां पशूनां हिंसा च भवेत् । आदिशब्दान्महिषादिग्रहणम् । तयोर्निवेदितं—नैवेद्यमन्नमपीत्यर्थः । न भक्ष्यम् । तदुक्तं पाद्मोत्तर-

"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति सात्त्विकाहारसेवनस्यैव सत्त्वोन्मेषापादनद्वारा मोक्षोपायभूतोपासननिष्पादकत्वश्रवणात् मुमुक्षुभिः सात्त्विकाहार एव निषेव्य इति ज्ञापयंस्तामसस्वामिकस्यैव तामसदेवताकस्याप्याश्रयदुष्टत्वेन परिहार्यतामाह—देवतायै इति । चण्डिकादयो हि तामसदेवतास्तासां निवेदितं ज्ञात्वा खाद्यमपि फलादि न खाद्यम्, तत्सम्बन्धेन तस्यापि दुष्टत्वादिति भावः। तासां तामसत्वमेव व्यनक्ति—"देवतायै भवेद्यस्यै सुरामांसनिवेदनम्" इति । यस्यै—चण्डिकादिदेवतायै

सत्त्वशुद्धिरिति । सत्त्वम्—अन्तःकरणं, तच्छुद्धिरित्यर्थः । ध्रुवा स्मृतिरिति । ध्याननैरन्तर्यमिति यावत् । सर्वग्रन्थीनामिति । रागादीनामिति यावत् । दुर्मोचत्वाच्चेषां ग्रन्थित्वेन निर्देशः । तामसदेवताः का इत्यत्राह—चण्डिकादयो हीति । तामसफलमात्रप्रदत्वात्तामसवृत्तिभिराराध्यत्वात्तामसप्रक्रिययाऽऽराध्यत्वाच्च तासां तामसत्वं बोध्यम् । वस्तुतस्तु यस्या मूर्तेस्सात्त्विकया तामसप्रक्रियया सुरामांसादिभूयिष्ठया सपर्या, सा चण्डिका याऽन्या वा, न भक्ष्यं तन्निवेदितमित्याशयः । अत एव चण्डिकादीनां नाम्ना निर्देशं विना "देवतायै भवेद्यस्यै" इति निर्देशः स्वारस्यमावहति । ननु—"यत्पुरोऽजादि

खण्डे—"यक्षाणां च पिशाचानां तामसानां दिवौकसाम् । निवेदितान्नं योऽश्नाति पूयशोणितभुग्भवे"दिति । "मद्यमांसाशिनो नाद्यमन्नं हिंसारुचेरपि । वैष्णवेन विशेषेण सत्त्वनाशकरं हि त"दिति विष्णुधर्मोक्तेः । अत एव श्रीभागवते—"नोच्छिष्टं चण्डिकान्नं च सामिषं वृषलाहृतम् । भुञ्जीतोदक्यया दृष्टं पिबेदञ्जलिना त्वप" इति निषेधः स्मर्यते ॥ २२ ॥

सुरामांसादिनिवेदनं भवेत् । अवैदिकास्तान्त्रिका हि सुरामांसादिभिस्तां प्रीणयन्ति । अन्यतः सादितस्य मांसस्य निवेदनेन प्रीणनमुक्तम् । पुरतः प्राणिवधोऽपि यस्याः प्रीणनोपाय इत्युच्यते—यत्पुर इति । यत्पुरः—यस्याश्चण्डिकाद्यर्चायाः पुरतः, आदिशब्दात्पुरुषपर्यन्तः पशुर्विवक्षितः । तन्निवेदितं न भक्ष्यम् । न भक्ष्यं सर्वथा मांसमिति मांसनिवृत्तेः प्रागेव प्राप्तत्वात्सामान्यबोधकोऽप्ययं शब्दो मांसादन्यज्ञात्याऽदुष्टं फलाद्येव बोधयति । तन्निवेदितं फलादिकमपि न भक्ष्यमित्यर्थः । दुष्टत्वात् । तथाच वचनम्—"तर्प्यन्ते तामसैर्मांसैश्चण्ड्याद्या यास्तु देवताः । ताभ्यो निवेदितं किञ्चिदपि ग्राह्यं न सात्त्विकैः ॥" इति पाञ्चरात्रे । इदं जात्यादिदुष्टान्ननिषेधस्याप्युपलक्षकम् । तन्निषेधस्य स्फुटमन्यतोऽवगमादिह निशिष्यानुक्तिः ॥ २२ ॥

वे"ति निर्देशो व्यर्थः, "सुरामांसनिवेदन"मित्यनेनैव गतार्थत्वादित्याशङ्कां परिहरति—अन्यतः सादितस्येत्यादिना । सामान्यविशेषन्यायेन निवेदितशब्दस्याशयमाह—न भक्ष्यमित्यादिना ॥ २२ ॥

---

**दृष्ट्वा शिवालयादीनि देवागाराणि वर्त्मनि ।**
**प्रणम्य तानि तद्देवदर्शनं कार्यमादरात् ॥ २३ ॥**

नच कस्या अपि देवताया अवमानना कार्येत्याह—दृष्ट्वेति । वर्त्मनि—मार्गे । यानि शिवालयमादिर्येषां तानि । देवागाराणि—गणेशसूर्यनारायणादिदेवमन्दिराणि स्युः । तानि दृष्ट्वा प्रणम्य—सद्यो नमस्कार्यम् । प्रणम्येति पाठान्तरेऽप्ययमर्थो विवक्षितः । मदाश्रितैरिति कर्तृशेषः सर्वत्र ज्ञेयः । ततस्तेषु देवागारेषु ये देवास्तेषां दर्शनम् । तच्चादरात्—प्रीतिपूर्वकं कार्यम् । दर्शनमिति तन्न-

तामसदेवताप्रसङ्गात् शिवादेस्तामसदेवतात्वेन तत्प्रणामाद्यनुचितमिति यन्मन्यते तदत्यन्तानर्थमित्यभिप्रयन्नाह—दृष्ट्वा शिवेति । यानि शिवालयादीनि देवागाराणि तानि वर्त्मनि दृष्ट्वा देवमन्दिरमिति भावनया प्रणम्य—प्रणतैर्भाव्यम् । तथा तदालये दृश्यमानस्य देव-

तानीति तच्छब्दनिर्देशस्य यच्छब्दसापेक्षतया यानीत्यध्याहृत्य योजनां प्रदर्शयति—यानि शिवालयादीनि देवागाराणि तानि वर्त्मनि दृष्ट्वेति । वर्त्मनि दृष्ट्वेत्युक्तेः श्रीकृष्णमन्दिरं प्रत्य-

मस्कारादेरप्युपलक्षणम् । अन्यथा देवहेलनदोषापत्तेरिति भावः । "देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा च योगिनम् । नमस्कारं न यः कुर्यात्प्रायश्चित्तीयते हि स" इति वसिष्ठस्मृतेः । "देवं देवालयं दृष्ट्वा वृद्धं विप्रं तपस्विनम् । गुरुं प्रव्रजितं साध्वीं प्रणमेत्सद्य आदरा"दिति यमस्मृतेश्च । अत एव श्रीमद्भागवते देवहेलनदोषाद्रक्षणं श्रीहयग्रीवात्प्रार्थ्यते—"हयशीर्षा मां पथि देवहेलना"दिति ॥ २३ ॥

---

स्यापि आदरादर्शनं कार्यम्, आदरादर्शनं कार्यमित्यनेन तद्दर्शन आदरो विधीयते, तेनानवहेलनं विवक्षितम् । प्रणम्येति पाठे प्रणामेऽपि विधिर्बोध्यः, अप्राप्तत्वात् । अयं भावः—यद्यपि "जन्माद्यस्य यत" इति जगत्कारणत्वलक्षणलक्षितस्य परस्य ब्रह्मण एव मुमुक्षूपास्यता न शिवादेस्तेपामर्वाचीनदेवत्वेनाकारणत्वात्, तथापि मुमुक्षुभिरपि यदृच्छया पथि समुपलभ्यमानेषु तदालयेषु तन्मूर्त्तिषु वा सादरं प्रणतैर्भाव्यम् । ते हि भगवता परमपुरुषेण स्वीयलीलारसभूतसृष्ट्यादिजगद्व्यापारैकदेशनिर्वाहकतया नियमिता आधिकारिका देवास्तदभिमतिविषयाः शक्तितस्तेनानुप्रविष्टाश्च, अन्यथा तदवहेलनप्रसङ्ग इति । स्मर्यते च देवतावहेलनस्यानर्थावहता—"देवताप्रतिमां दृष्ट्वा यतिं दृष्ट्वा च योगिनम् । नमस्कारं न यः कुर्यात्प्रायश्चित्तीयते हि सः ॥" इति । तथा— "देवं देवालयं दृष्ट्वा वृद्धं विप्रं तपस्विनम् । गुरुं प्रव्रजितं साध्वीं प्रणमेत्सद्य आदरात् ॥" इति ॥ २३ ॥

---

न्वहं गन्तव्यमितिवदिह गन्तव्यता नेत्येतद्व्यज्यते । प्रणम्यत्वे हेतुमाह—देवमन्दिरमिति भावनयेति । अयं भावः—मोक्षप्रदः पुरुषोत्तमो हि तादृशस्तथापि तेनैव पुरुषोत्तमेन तत्र तत्राधिकारे विनियुक्ता देवा हि तत्किङ्करेषु प्रधानास्तेषां मन्दिरमिति प्रणतैर्भाव्यमिति । ननु प्रह्वीभावे, ततः स्वस्यापकृष्टत्वानुसन्धानं, तेन तेषां तन्मन्दिरस्य चाभिवन्दनयोग्यतामात्रं व्यज्यते । एतेनात्यर्थप्रीतिरूपा भक्तिर्भगवत्येव समुचितेति सिद्धम् । आदरविधानेन विवक्षितमर्थमाह—तेनानवहेलनं विवक्षितमिति । एतेन श्रीकृष्णस्यैवोपास्यता नेत्युक्तं भवति । प्रणम्येति पाठ इति । अस्मिन्पाठे तानि प्रणम्येत्यन्वयः स्फुटः । यद्यपि दृशिकर्मणो निर्देशेनैव प्रणतिकर्मणोऽपि सिद्धेस्तानीति पृथक् कर्मनिर्देशो नापेक्ष्यते, तथापि स्फुटप्रतिपत्तये तन्निर्देशः । मन्दिरस्य तत्रत्यमूर्तेश्च पृथक् पृथक् प्रणतिः कार्येति विशेषव्यञ्जनाय वा । पूर्वस्मिन्पाठे तु व्यवहितान्वयनिबन्धनः क्लेशः, यच्छब्दाध्याहारसापेक्षता चेति । जगत्कारणत्वलक्षणलक्षितस्य परस्य ब्रह्मण एव मुमुक्षूपास्यतेति । "कारणं तु ध्येय" इति श्रुतेरिति भावः । एकदेशनिर्वाहकतयेति । व्यष्टिसृष्ट्यादावुपकरणतयेति भावः । अन्यथा—प्रणत्यकरण इत्यर्थः । तेषामवहेलनप्रसङ्ग इत्यर्थः ॥ २३ ॥

---

१ प्रणम्येत्यनेन व्यवहितस्य तानीत्यस्य देवागाराणीत्यनेनान्वयादिति भावः ।

**स्ववर्णाश्रमधर्मो यः स हातव्यो न केनचित् ।**
**परधर्मो नचाचर्यो नच पाषण्डकल्पितः ॥ २४ ॥**

स्वेति । वर्णश्चाश्रमश्च वर्णाश्रमौ, स्वस्य वर्णाश्रमौ स्ववर्णाश्रमौ, तयोर्धर्मः । यः स्वस्य वर्णधर्म आश्रमधर्मश्च । सः । केनचित्—प्राप्तभक्तिज्ञानबलेनापीति भावः । न हातव्यः—न त्याज्यः । तत्त्याग ऐहिकपारलौकिकानर्थापत्तेः । तस्मात्सर्वथा स्वधर्मः पालनीयः । सर्वेषां भुक्तिमुक्तिसाधनत्वात् । तदुक्तं भृग्वादिभिः—"धर्म आचरितः पुंसां वाङ्मनःकायबुद्धिभिः । लोकान्विशोकान्वितरत्यथानन्त्यमसङ्गिना"-मिति । किञ्च—संसृतिभ्रमणनिवृत्तिहेतुभक्तिज्ञानप्राप्तिरपि स्वधर्मानुष्ठानादेव भवतीति तत्त्यागे मूलच्छेदप्रसङ्गात् स न त्याज्य इत्याह भगवान्—"अस्मिँल्लोके वर्तमानः स्वधर्मस्थोऽनघः शुचिः । ज्ञानं विशुद्धमाप्नोति मद्भक्तिं वा यदृच्छये"ति । तत्त्यागे नरकपातं चाहाक्रूरः—"असिद्धार्थो विशत्यन्धं स्वधर्मविमुखस्तम" इति । अत एवापद्यपि मनसापि तदत्यागमाह मनुः—"न सीदन्नपि धर्मेण मनोऽधर्मे निवेशयेत् । अधार्मिकाणां पापानामाशु पश्यन्विपर्यय"मिति ।

---

ध्रुवानुस्मृतिनिष्पत्तये मुमुक्षुभिराहारविवेकोऽवश्यमाश्रयणीय इत्युक्तम् । देवतायै इति मध्ये तु प्रासङ्गिकम् । इदानीं तेषां तन्निष्पत्तये क्रियाया अवश्यापेक्षितत्वमुच्यते—स्ववर्णाश्रमधर्म इति । उभयं हि साधनसप्तकान्तर्गतं, साधनसप्तकादेव तु ध्रुवानुस्मृतिसिद्धिः, तथाच वृत्तिग्रन्थः—"तल्लब्धिर्विवेकविमोकाभ्यासक्रियाकल्याणानवसादानुद्धर्षेभ्यः" इति । विवेकः—आहारविवेकः । क्रिया—शक्तितो वर्णाश्रमोचितकर्मानुष्ठानम् । यः स्ववर्णाश्रमधर्मः स मुमुक्षुणा ज्ञाननिष्ठाधिकारिणा तदनधिकारिणा वा केनचिदपि न हातव्यः । स हि मुमुक्षोर्ज्ञाननिष्ठाऽशक्तस्य मनोनैर्मल्यमापादयञ्ज्ञाननिष्ठामापादयति, शक्तस्यापि तदविच्छेदमापादयन्नुपासन उपकरोति, तन्मुमुक्षुभिरवश्यमनुष्ठेयः शक्तितः स्ववर्णाश्रमधर्मः । तथाच यज्ञदानतपःप्रभृति

तथा परस्य धर्मो नचाचर्यः—नैवाचरणीयः । ब्राह्मणस्य क्षत्रियधर्मः परधर्मः, क्षत्रियस्य वैश्यधर्मः परधर्मः, वैश्यस्य शूद्रधर्मः परधर्मः, गृहस्थस्य त्यागिधर्मः परधर्मः, त्यागिनो गृहस्थधर्मश्च परधर्मः, स नाचरणीय इत्यर्थः । "श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावह" इत्यर्जुनं प्रति भगवदुक्तेः । मनुना चोक्तम्—"वरं स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः । परधर्माश्रयान्नूनं सद्यः पतति जातित" इति ।

तथा पाषण्डकल्पितो धर्मो नाऽऽचर्यः । पापं सनोतीति पापण्डः । षणु दाने इत्यस्माद्यमन्ताड्डः । पृषोदरादित्वात्साधुः । श्रीमद्भागवते तु—"तानि पापस्य षण्डानि लिङ्गं पण्डमिहोच्यते" इत्युक्तम् । तदा पापस्य पण्डं—चिह्नं तद्विद्यतेऽत्रेति पाषण्डः । अर्श आदिभ्योऽच् । कवर्गद्वितीयमध्यपाठे तु पान्तीति पाः—धर्ममर्यादास्ताः खण्डयतीति पाखण्डः—वेदविरुद्धो धर्मः, तेन सहितः कल्पितः—

---

कर्मजातं हि बन्धकं तन्मुमुक्षुणा न कार्यमिति न भ्रमितव्यम् । फलसङ्गकर्तृत्वत्यागपूर्वकक्रियमाणं हि तदेवोपकारकमुपासने, तन्मुमुक्षुभिर्गृहस्थैरपि स्वाश्रमधर्मो न हातव्य इति भावः ।

ननु—"अत एवाग्नीन्धनाद्यनपेक्षा" इति सूत्रे यज्ञादिनैरपेक्ष्यस्य विद्यायां वर्णनान्निरपेक्षमेवोपासनं गृहस्थस्यापि सिद्ध्येदिति मुमुक्षुणा तेन न यज्ञादिकर्मानुष्ठेयमपि तु तत्त्याग एवाश्रयणीय इति चेदाह—परधर्मो न चाचर्य इति । स हि त्यागः परस्य धर्मः, आश्रमान्तरस्य संन्यासस्य धर्मः, स तु नैवोपकारक आश्रमान्तरस्थस्य, यथा पाखण्डकल्पितो धर्मो नोपकारको नानुष्ठेयः, तथा परधर्माचरणरूपो यज्ञादित्यागो नानुष्ठेय इत्यर्थः । दृष्टान्ततयातूक्तं—नच्च पाखण्डकल्पित इति । यदप्यग्नीन्धनाद्यनपेक्षत्वं विद्याया आह सूत्रकारः, तत्तूर्ध्वरेतसां तत्रानधिकारात्, तेषां तदनपेक्षं स्वाश्रमोचितं कर्मान्तरमुपकारकमभिप्रेत्य, येषां त्वग्न्यादिष्वधिकारस्तेषां तदपेक्षैव । अत एव "सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्"दित्यसूत्रयत् । तथाच श्रुतिः—"ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति । यद्वा—मुमुक्षूनमुमुक्षून्प्रत्येवेदमुपदिश्यते, केनचिन्मुमुक्षुणाऽमुमुक्षुणा वा न हातव्यः, हानेऽमुमुक्षोः प्रायश्चित्तीयता । तथाच मनुः—"वरः स्वधर्मो विगुणो न पारक्यः स्वनुष्ठितः । परधर्माश्रयान्नूनं सद्यः

---

नुष्ठानमनर्थायेति भावः । ननु स्वर्गादिफलसाधनानां कर्मणां कथमुपासनोपकारकतेति शङ्कां परिहरति—तथाचेत्यादिना । ननु मुमुक्षुणा ज्ञाननिष्ठाधिकारिणा तदनधिकारिणा वा स्ववर्णाश्रमधर्मो न हातव्य इति मुमुक्षून्प्रत्येव चेदयमादेशः "परधर्मो न चाचर्य" इति वर्णान्तरधर्मानुष्ठाननिषेधस्य कः प्रसङ्गः ? नहि मुमुक्षुषु तत्प्रसङ्गः, येन तन्निषेधापेक्षा स्यादिति शङ्कायां विवक्षितार्थानुगुणं परधर्मेत्यादि व्याचष्टे—नन्वित्यादिना । दृष्टान्ततया तूक्तमिति । एतेन मुमुक्षुषु पाषण्डधर्मान्वयप्रसङ्गस्यैवाभावेन तन्निषेधोऽनुचित इति शङ्का परास्ता । सूत्रस्याशयमाह—यदपीत्यादिना । प्रायश्चित्तीयता—

ऐच्छिको धर्मः। स च नैवाचरणीयः। उभयोरप्यधर्मशाखत्वात्। तदुक्तं श्रीमद्भागवते—"विधर्मः परधर्मश्च आभास उपमा छलः। अधर्मशाखाः पञ्चेमा धर्मज्ञोऽधर्मवत्त्यजेत्। धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः। उपधर्मस्तु पाषण्डो दम्भो वा शब्दभिच्छलः। यस्त्विच्छया कृतः पुम्भिराभासो ह्याश्रमात्पृथ"-गिति॥ २४॥

---

पतति मानवः॥" इति। मुमुक्षोरुपासनाङ्गवैकल्यमपि। यश्च मुमुक्षुः सिद्धोपायनिष्ठः, तस्य भगवदाज्ञोल्लङ्घनरूपमनौचित्यम्। तन्न केनापि स हातव्यः। मुमुक्षोः परधर्मपाखण्डधर्मप्रसङ्गाभावेऽपि बुभुक्षोस्तत्प्रसङ्गात्तं प्रति तन्निषिध्यते—परधर्म इति। पाखण्डाः–वेदबाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुकक्षपणकादयः। पाति–रक्षति दुरितेभ्य इति पाः,–वेदधर्मस्तं खण्डयति–निष्फलं करोतीति पाखण्डः। तथाच निरुक्तिः—"पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते। खण्डयन्ति तु तं यस्मात्पाखण्डस्तेन कीर्त्तितः॥" इति॥ २४॥

---

पापान्वयः। ननु मुमुक्षोस्तदा तदन्वयो न किमिति शङ्कायामाह—मुमुक्षोरुपासनाङ्गवैकल्यमपीति। अपिना पापान्वयः समुच्चीयते। ननु साध्योपायनिष्ठस्य कर्मत्यागे स्यान्नामाङ्गवैकल्यम्, सिद्धोपायनिष्ठस्य तु न तत्, नहि कर्म सिद्धोपायेऽङ्गमित्यत आह—यश्चेति। भगवदाज्ञोल्लङ्घनरूपमिति। "लोकसङ्ग्रहमेवापि संपश्यन्कर्तुमर्हसी"ति हि भगवताऽऽज्ञप्तमिति भावः। अनौचित्यमिति। भगवत्परतन्त्रैकरसात्मस्वरूपानुसन्धाननिष्ठस्य तदाज्ञोल्लङ्घनं ह्यत्यन्तानुचितमिति भावः। बुभुक्षोस्तत्प्रसङ्गादिति। बुभुक्षोरित्येतत्तत्प्रसङ्गे हेतुगर्भम्, बुभुक्षा हि प्रबलतरा पुरुषं पाषण्डधर्मेऽपि योजयति कदाचित्, तं प्रति तन्निषिध्यत इति। तथा च दार्ष्टान्तिकपरत्वाश्रयणक्लेशोऽत्र नेति भावः॥ २४॥

---

कृष्णभक्तेः स्वधर्माद्वा पतनं यस्य वाक्यतः।
स्यात्तन्मुखान्न वै श्रव्याः कथा वार्त्ताश्च वा प्रभोः॥ २५॥

कृष्णेति। यस्य वाक्यतः–यत्कृतपुराणादिव्याख्यानवाक्येभ्य इत्यर्थः। कृष्णस्य भक्तेः–श्रवणादिनवविधभजनात्सकाशात्। पतनं–तत्त्यागः स्यात्।

---

पाखण्डप्रसङ्गात्त इव तत्सुहृदः शठाः सर्वथा परिहरणीया इत्यभिप्रयन्नाह—कृष्णेति। शठा हि वेदेष्वश्रद्दधानाः, एते हि वेदबाह्यानां पाखण्डिनां सुहृद एव। अत एव मनुरेनान्सत्कारानर्हत्वे पाखण्डिनां गोष्ठ्यामसरत्—"पाखण्डिनो विकर्मस्थान्बैडालव्रतिकाञ्शठान्।

---

ननु पाषण्डप्रसङ्गात्त इव तत्सुहृदः शठाः परिहरणीया इत्यभिप्रयन्नाहेति कथमवतरणं घटते, नहि शठानां मुखतो 'न श्रव्या' इति मूलम्, किन्तु "कृष्णभक्तेः स्वधर्माद्वा पतनं यस्य वाक्यतः। स्यात्तन्मुखान्न वै श्रव्या" इति तु मूलम्, पाषण्डिनां शठानां सौहार्दं वा किमित्यत्राह—

वा-अथवा । स्वस्य धर्माद्वर्णाश्रमविहितात्पतनं स्यात् । एतेन तद्वक्तुः कृष्णभक्तिस्वधर्मरहितत्वं गम्यते, अन्यथा तदसम्भवात् । तन्मुखात्-तस्य कृष्णभक्तिस्वधर्मनिष्ठारहितस्य पुंसः मुखात् । प्रभोः-श्रीकृष्णस्य । कथा-पुराणादिव्याख्या । तथा प्रभोः सम्बन्धिन्यो वार्त्ताः-गोष्ठ्यश्च । च वा श्रव्याः-नैव श्रोतव्याः । वाशब्द एवार्थे । वै इति निश्चये । नात्र कश्चित्संशयः कर्तव्य इत्यर्थः । तदुक्तं हरिभक्तिविलासे—"येषां गुरौ च जप्ये च विष्णौ च परमात्मनि । नास्ति भक्तिः सदा तेषां वचनं परिवर्जये"दिति । कौर्मे च—"येषां न कारणं वेदा न विप्रा

हैतुकान्वकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥" इति । व्याख्यातश्च शठशब्दः कुल्लूकेन—"शठाः-वेदेष्वश्रद्दधानाः" इति । यद्यप्येते वेदेषु श्रद्धाराहित्येन कृष्णभक्तिरहिता धर्मविमुखाश्च, तथापि जीविकादिनिमित्तेन कथयेयुर्नाम कथां भगवतोऽपि, तावता प्रस्तूयमानाऽपि भगवत्कथा न तन्मुखाच्छ्रोतव्या । यस्मात्तेषां सङ्गो भक्तिच्यावक इत्याशयेनाह—यस्य वाक्यत इति । यस्य-शठस्य वाक्यतः, वाक्यशब्दोऽत्र वाक्सङ्गपरः सङ्गान्तरस्याप्युपलक्षकः । सङ्गत इत्येतत् । कृष्णभक्तेः स्वधर्माद्वा पतनं-च्यवनं स्यात् । वाशब्दोऽप्यर्थः । पतनशब्दात् ये भक्तिनिष्ठा धर्मनिष्ठा वा तेऽपि ततश्च्यवेयुस्तत्सङ्गदोषेण किं पुनरन्ये तद्रुचय इति व्यज्यते । तत्स्वसङ्गेन भक्तिधर्मपथविभ्रंशकैः स्वयं भक्तिधर्मविमुखैर्वेदेष्वश्रद्दधानैर्भाव्यम् । तेषां मुखात्प्रभोर्वा-कृष्णस्यापि कथाः, वार्त्ताः न श्रव्याः । वाकारोऽप्यर्थः । कथाः-पुराणमूलकाः, वार्त्ताः-कर्णाकर्णिकामात्रेण श्रुताश्चरित्रविशेषा इति भिदा ।

यद्वा—यस्तु श्रुतवेदान्तोऽविप्रतिपन्नश्च तदर्थे, जानन्नपि धर्मभक्त्योः स्वरूपं स्वयमतन्निष्ठो विषयरसिकः । स चोपदेशकुशलोऽपि तन्मुखाद्ब्रह्मस्वरूपतद्गुणकर्मादिकं न श्रोतव्यम् । तन्मुखतः श्रूयमाणो हि भगवत्स्वरूपगुणादिर्न निष्ठामावहेत्, उपदेष्टुरतन्निष्ठस्यैव सङ्गात् । अत एव श्रुतिः श्रुतवेदान्तस्याप्यब्रह्मनिष्ठस्य मुमुक्षुणाऽनभिगम्यत्वमभिप्रयन्ती "श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुतवेदान्तं ब्रह्मनिष्ठत्वेन विशिनष्टि इत्यभिप्रयन्नाह—कृष्णभक्तिरिति । यस्य-विषयरसिकस्येत्यर्थः ।

शठा हीत्यादिना । ननु पाषण्डिनां शठानां च समानगणना स्यान्नाम, वेदेष्वश्रद्दधानानां कः प्रसङ्ग इत्यत्राह—व्याख्यातश्चेति । यच्छब्दस्य शठपरतामभिप्रयन्नवतारयति—यद्यप्येत इत्यादिना । नन्ववतरणे शठाः सर्वथा परिहरणीया इत्यभिप्रयन्निरुक्तिः कथं घटते, 'कथा न श्रव्या' इत्येव खलु निविष्यत इत्यत्राह—सङ्गान्तरस्याप्युपलक्षक इति । पतनशब्दादिति । ततः पतनं हि तदारूढस्यैव संभाव्यते । कथावार्तयोर्भेदमाह—कथेत्यादिना । वेदेषु सत्यामपि श्रद्धायां सत्यपि तदर्थविज्ञाने प्राक्तनपापवासनादूषितमनस्तया ये नाम केवलं विषयलोलुपा भवन्ति, तेषां सङ्गस्यात्यन्तपरिहरणीयता ह्यवश्यमादेष्टव्या, तदादेशेन 'किं पुनर्न्यायेन' वेदेष्वश्रद्दधानानां सङ्गस्य परिहरणीयता सिध्यत्येवेत्यतो यत्पदस्य शठपरतया व्याख्यानेऽतृप्यन् व्याचष्टे—यद्वेत्यादिना । पूर्वश्लोकेन सुसङ्गमाशयमाह—

न जनार्दनः। तत्राणि धर्मशास्त्राणि तेषां वाक्यं विवर्जये"दिति। अतः स्वधर्मस्थकृष्णभक्तमुखादेव कृष्णकथावार्ताश्रवणं कर्तव्यमिति भावः। तादृश एव पौराणिक उक्तः सनत्कुमारसंहितायाम्—"स्वधर्मस्थः पापभीरुर्विष्णुभक्तो जितेन्द्रियः। यथार्थवाक् स्वधीती च वक्ता पौराणिको मत" इति॥ २५॥

यद्वा—ये निर्विशेषचिन्मात्रैक्यवादिनस्तेषां मुखात्प्रभोरपि कथा न श्रव्या। ते हि भगवतो गुणचरितादिकं वर्णयन्तोऽपि, अन्ततो निर्विशेषचिन्मात्रैक्यरसिकाः, सकलमपि तदीयं कल्याणगुणजातमाविद्यकमाकलयन्तः; परमनिःश्रेयससाधनमन्यदेव धर्मभक्तिभ्यामैक्यज्ञानं किमपि कर्मपरिपन्थि समादिशन्तश्च्यावयन्ति भक्तिधर्मतस्तदेषां सङ्गो विषकन्यासङ्ग इवात्मनाशायेत्यभिप्रयन्नाह—कृष्णेति। यस्य—निर्विशेषचिन्मात्रैक्यवादिनः। व्याख्यातारोऽपि वा यच्छब्देनाभिप्रेताः॥ २५॥

यद्वेत्यादिना। सौसाङ्गत्यं चैवम्—ननु "स्ववर्णाश्रमधर्मो यः स हातव्यो न केनचिदि"ति कथमिदमुच्यते, येषां न विविदिषा तेषामेव तु कर्मण्यधिकारः, येषां तु विविदिषा समुत्पन्ना न तेषां तदुपयोगः, निर्विशेषचिन्मात्रैक्यापरोक्षविज्ञानं मोक्षोपाय इति हि वेदान्तिन इति शङ्कायां न ते तत्त्वविदस्तेषां सङ्गेन भक्तिर्धर्मश्चेत्येतावेव विलीयेते, अलङ्कस्य शिरश्छिन्दन्ति ते, भगवत्कथाश्रवणमूलकोऽपि सङ्गो न तैः कार्य इति॥ २५॥

---

**स्वपरद्रोहजननं सत्यं भाष्यं न कर्हिचित्।**
**कृतघ्नसङ्गस्त्यक्तव्यो लुञ्चा ग्राह्या न कस्यचित्॥ २६॥**

स्वेति। स्वस्य परस्य च द्रोहः—हिंसाद्युपद्रवस्तस्य जननं—उत्पादकम्। सत्यं—यथार्थवचनम्। कर्हिचित्—कचिदपि। न भाष्यं—नोच्चारणीयम्। यस्मि-

द्रोहप्रसञ्जकानां सत्याभासादीनां परिहरणीयतामाह—स्वपरेति। सत्यम्—यथादृष्टार्थमपि वचः। स्वस्य वा परस्य वाऽनर्थावहं कर्हिचित्—कदाचिदपि न भाष्यं—न वक्तव्यम्। अयं भावः—यद्यपि—"स यः सत्यं वदति यथाग्निं समिद्धन्तं घृतेनाभिषिञ्चेदेवं हैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वः श्वः श्रेयो भवति" इति सत्यं प्रशस्यते। "अहिंसासत्यास्तेयब्रह्मचर्या यमा". इति योगाङ्गतयाऽपि गण्यते "जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" इति तस्य देशकालसमयानवच्छिन्नत्वमपि प्रतीयते। तथापि न केवलं सत्यशब्दप्रवृत्तिनिमित्तं यथा दृष्टार्थावबोधकत्वम्, किन्तु भूतानुपघातकत्वमपि।

मूले सत्यशब्देन विवक्षितमर्थमाह—यथादृष्टार्थमिति। यद्यपि सत्यमथापि न भाष्यमिति कथमिदं घटत इत्याशङ्कायामाशयमाह—अयं भाव इत्यादिना। भूतानुपघातकत्वमपीति। अपिना यथादृ-

न्सत्ये भाषिते स्वस्यान्यस्य वा पीडा भवेत्तादृशं सत्यं न भाष्यम्, अन्यथा तु सत्यमेव भाष्यं नानृतमित्यर्थः। स्वपरद्रोहजनकसत्यभाषणरूपस्य धर्मस्याप्यनर्थत्वप्रतिपादनात्। तदुक्तं भागवते—"कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण। स्वद्रोहात्तव कोपः परसम्पीडया च तथाऽधर्म" इति। सत्यभाषणे गुणोऽनृतभाषणे दोषश्च श्रूयते याजुषब्राह्मणे—"स यः सत्यं वदतियथाग्निं समिद्धन्तं घृतेनाभिसिञ्चेदेवं हैनं स उद्दीपयति तस्य भूयो भूय एव तेजो भवति श्वः श्वः श्रेयान्भवति, अथ योऽनृतं वदति स यथाग्निं समिद्धन्तमुदकेनाभिसिञ्चेदेवं हैनं स जासयति तस्य कनीयः कनीय एव तेजो भवति श्वः श्वः पापीयान्भवति तस्मादु सत्यमेव वदे"दिति। श्रीभागवते च—"नह्यसत्यात्परोऽधर्म इतीहोवाच भूरियम्। सर्वं वोढुमलं मन्ये ऋतेऽलीकपरं नर"मिति। मोक्षधर्मेषु च—"अनृतं तमसो रूपं तमसा नीयते ह्यधः। तथा—"यदनृतं सोऽधर्मो योऽधर्मस्तत्तमो यत्तमस्तद्दुःख"मिति। उक्तं च दानधर्मेषु—"प्राणत्राणेऽनृतं वाच्यमात्मनो वा परस्य च। गुर्वर्थे स्त्रीषु. चैव स्याद्विवाहकरणेषु चे"ति। आपद्धर्मेषु

---

अतः स्वस्य परस्य वोपघातकं वचो यथादृष्टार्थमपि न सत्यम्, किन्तु सत्याभासमात्रम्। अत एव योगसूत्रभाष्ये—"एषा सर्वभूतोपकारार्थं प्रवृत्ता न सर्वभूतोपघाताय, यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यात्, न सत्यं भवेत्, पापमेव भवेत्तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयात्। तस्मात्परीक्ष्य सर्वभूतहितं ब्रूयात्" इति व्यासदेवेन भाषितम्। व्याख्यातं च वाचस्पतिना—"एवं लक्षणमपि सत्यं परापकारफलं सत्याभासं नतु सत्यमित्याहे"ति। व्याख्यातं च शङ्कराचार्यैः—"सत्यम्—अप्रियाऽनृतवर्जितं यथाभूतार्थवचन"मिति गीताभाष्ये "अहिंसासत्यमक्रोधस्त्यागः शान्तिरपैशुन"मिति श्लोकविवरणावसरे। भगवद्रामानुजाचार्यैरपि—"सत्यं—यथादृष्टार्थगोचरभूतहितवाक्य"मिति भाषितम्। तथाच वचनम्—"दृष्टं श्रुतं चानुमितं स्वानुभूतं यथार्थतः। कथनं सत्यमित्युक्तं परपीडाविवर्जितम्" इति। एवम्—"सत्यस्य वचनं श्रेयः सत्यज्ञानं सुदुष्करम्। यद्भूतहितमत्यन्तमेतत्सत्यस्य लक्षणम्॥" इति। प्रवृत्तिनिमित्तकोटावप्रवेशेऽपि सामान्यविशेषन्यायेन वा तथाभूतमेव सत्यं बोध्यम्। तस्माद्यथार्थामपि स्वपरानर्थकरीं वाचं न ब्रूयात्, अधर्मो हि स इति।

---

दृष्टार्थावबोधकत्वस्य समुच्चयः। तथाच भूतानुपघातकत्वे सति यथादृष्टार्थावबोधकत्वं सत्यपदप्रवृत्तिनिमित्तं फलितम्। तत्र प्रमाणमाह—अत एवेत्यादिना। धर्माधर्मव्यवस्था हि भूतोपकारकत्वतदुपघातकत्वाभ्याम्, यत्तु भूतोपघातकं तस्य कथं धर्मकोटौ समावेशः, तस्मात् धर्मतया परिगणितं सत्यमुक्तरूपमेवेति भावः। अप्रियानृतवर्जितमिति। अप्रियमिति भूतानुपघातकत्वं लक्ष्यते। पुराणवचनं प्रमाणयति—तथाचेति। तथाभूतमेव सत्यं बोध्यमिति। धर्मकोटाविति शेषः।

चोक्तम्—"न नर्मयुक्तमनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले। न गुर्वर्थे नात्मनो जीवितार्थे पञ्चानृतान्याहुरपातकानी"ति। श्रीभागवते चोक्तम्—"सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्त्तिः श्वसन्मृतः। स्त्रीषु नर्मविवाहे च वृत्त्यर्थं प्राणसङ्कटे। गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सित"मिति। मोक्षधर्मेषु च—"सत्यां वाचमहिंसा च वदेदनपवादिनीम्। कल्कापेतामपरुषामनृशंसामपैशुनाम्" तथा वर्जयेदुशतीं वाचं हिंसायुक्तां मनस्तुदा"मिति। तत्रैवं सत्यलक्षणमाह नारदः—"सत्यस्य वचनं श्रेयः सत्यज्ञानं तु दुष्करम्। यद्भूतहितमत्यन्तमेतत्सत्यस्य लक्षण"मिति। लैङ्गे चोक्तम्—"दृष्टं श्रुतं चानुमितं स्वानुभूतं यथार्थतः। कथनं सत्यमित्युक्तं परपीडाविवर्जित"मिति।

तथा कृतम्–उपकारं हन्ति वाचा प्रलापेनेति कृतघ्नस्तस्य–स्वकृतोपकारमगणयतः प्रत्युतापकारकर्तुः पुरुषस्य सङ्गस्त्यक्तव्यः–न कार्यः। कृतघ्नस्यातिपातकित्वात्तत्संसर्गिणोऽपि तद्दोषापत्तेरिति भावः। यथाह देवलः—ब्रह्मघ्ने च सुरापे च स्तेने च गुरुतल्पगे। मुनिभिर्निष्कृतिः प्रोक्ता कृतघ्ने नास्ति निष्कृति"रिति। भारतीयापद्धर्मेषु कृतघ्नोपाख्याने चोक्तम्—"ये च दोषसमायुक्ता नराः प्रोक्ता मयाऽनघ!। तेषामप्यधमा राजन्! कृतघ्ना मित्रघातका" इति। कृतघ्नः

---

ननु—यथादृष्टार्थवर्णनं कथमधर्मः। मैवम्। न यथार्थमिति धर्मः, नाप्ययथार्थमित्यधर्मः, भूतोपकारकत्वाद्धि धर्मत्वम्, भूतापकारत्वाच्चाधर्मत्वम्, यथा सत्यतपसस्तस्करैः सार्थगमनं पृष्टस्य सार्थगमनाभिधानमधर्मो गण्यते। यतस्तेनानर्थः सार्थस्य समभवत्। अत एव भारते राजधर्मे—"किंस्वित्सत्यं किमनृत"मिति युधिष्ठिरेण पृष्टो भीष्मो भूतानुपघातकस्यैव यथार्थस्य सत्यत्वमभिप्रेत्य प्रत्यवदत्—"प्रभवार्थाय भूतानां धर्मप्रवचनं कृतम्। यः स्यात्प्रभवसंयुक्तः स धर्म इति निश्चयः॥ धारणाद्धर्ममित्याहुर्धर्मेण विधृताः प्रजाः। यः स्याद्धारणसंयुक्तः स धर्म इति निश्चयः॥ अहिंसार्थाय भूतानां धर्मप्रवचनं कृतम्। यः स्यादहिंसासंयुक्तः स धर्म इति निश्चयः॥ येऽन्यायेन जिहीर्षन्तो धनमिच्छन्ति कस्यचित्। तेभ्यस्तु न तदाख्येयं स धर्म इति निश्चयः॥" इति। प्रभवः–अभ्युदयः। धारणं–रक्षणम्। अहिंसा–अपीडा। एतद्यत्र यथार्थेन न तदाख्येयम्। तदनाख्यानेन नाधर्म इति यावत्। नन्ववगताऽपि धनिकप्रवृत्तिस्तस्करेभ्यः पृच्छद्भ्यो न ज्ञापनीया, ज्ञापने धनिकस्यानर्थमिति मौनमेवास्थेयं नाम। यदि पुनर्मौने शङ्कितमात्मनोऽनिर्मोक्षो वा तदा पुनराख्येयमेव किञ्चित्, यद्यन्यथैवोच्यते

---

यथादृष्टार्थस्यापि भूतानुपघातकस्यैव धर्मता शङ्कासमाधानमुखेन विशदयति—नन्वित्यादिना। यथार्थत्वमात्रं धर्मत्वेऽप्रयोजकमित्येतन्निरूपयति—यथेत्यादिना। अयथार्थतामात्रमधर्मत्वे न प्रयोज-

लक्षणमुक्तं वैदुरिके—"सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये । तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जत" इति । सङ्गशब्देन च सर्वथा तत्सम्बन्धस्त्यक्तव्य उक्तः, अन्यथा तत्संलापादिनापि तत्पापस्य स्वस्मिन्सङ्क्रमादिति भावः । उक्तं च मिताक्षरायाम्—"संलापस्पर्शनिःश्वाससहयानासनाशनात् । याजनाध्यापनाद्यौनात्पापं सङ्क्रमते नृणा"मिति । अत्र पापिनामिति शेषः ।

---

अनृतं नाम, सचाधर्मः, परिहरणीयस्तु सः "नानृतं वदेत्" इति निषेधादिति चेन्मैवम् । उत्सर्गापवादन्यायेन परानर्थाप्रतिक्षेपकत्वे तस्य तथात्वं बोध्यम् । परानर्थप्रतिक्षेपकत्वे तु तस्य धर्मत्वमेव । इदमेवाह व्यासस्तत्रैव—"अकूजनेन चेन्मोक्षो नावकूजेत्कथञ्चन । अवश्यं कूजितव्ये वा शङ्केरन्वाप्यकूजितात् ॥ श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारितम् ॥" इति । धनिकवृत्तं पृच्छत्सु तस्करेषु कथञ्चन नावकूजेत्—न वाचमुच्चारयेत्, मौनमेवाश्रयेत् । यद्येतावतैव ते त्यजेयुश्चेत् । यदि पुनर्मौनेन स्वस्य ततो मोक्षो न घटेत, अवश्यं कूजितव्यमेव किञ्चित्, अन्यथा शङ्केरन्वा । तदा तु यथार्थं परित्यज्यानृतमेव वक्तव्यमित्यर्थः । सत्यात्—यथार्थात् । ल्यब्लोपे पञ्चमी । एवं परमिवात्मानमपि गोपायेत्तस्करादिभ्योऽनृतेनापि, तदिदमभिप्रेत्य मूले स्वपरेति निर्देशः ।

नच स्तेयादौ व्यवहारपदे साक्षिणो यथार्थवचनेन स्तेनादेर्दण्डप्रसङ्गेन यथार्थमपि परोपघातकमिति न वक्तव्यम् । अन्यथैव वा वक्तव्यमापतेत्, न चेष्टापत्तिः, अकथयत्यन्यथा कथयति साक्षिणि दण्ड्यत्ववचनात् । तथाच वचनम्—"न ददाति हि यः साक्ष्यं जानन्नपि नराधमः । स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि" इति "पृथक्पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथे"ति चाच्यम् । स्तेनादेर्दण्डेन लोकोपकारात्स्तेनादेरुपघातकं वचनं लोकोपकारकमिति न तत्परानर्थकेषु गणनार्हम् । तदेवमर्थानर्थगौरवलाघवपर्यालोचनेन भूतोपघातकत्वानुपघातकत्वव्यवस्था बोध्या । आख्यायते च कौशिको गङ्गातीरे सहस्रशः सर्पिण्या स्थापितान्यण्डानि भित्त्वा महत्पुण्यं प्रापेति । तदभेदने तु तीक्ष्णविषाणां सर्पाणां वृद्ध्या सद्यो लोकनाशः स्यात् । इयं चाख्यायिका व्यासेन तत्रैव सत्यासत्यव्यवस्थाप्रकरणे—"सुमहत्प्रापयत्पुण्यं गङ्गायामिव कौशिकः ।" इत्यसूचयत ।

---

कमित्येतन्निरूपयन्शङ्कते—नन्विति । समाधत्ते—मैवमित्यादिना । उत्सर्गापवादेति । "नानृतं वदे"दित्युत्सर्गशास्त्रम् । "श्रेयस्तत्रानृतं वक्तुं सत्यादिति विचारित"मित्यपवादशास्त्रम् । येनायथार्थेन परस्य नोपकारः, न वाऽप्यपकारस्तस्याप्यधर्मकोटौ परिगण्यमानतया परानर्थावहत्व इत्यनुक्त्वा परानर्थाप्रतिक्षेपकत्व इत्युक्तम् । प्रतिक्षेपकं—वारकम् । परानर्थेति । इह परेत्यविवक्षितम् । एतेन मौनेनैव परानर्थप्रतिक्षेपादन्यथावदनस्य दोषावहत्वं स्यादित्यपास्तम् । परस्येवात्मनः प्राणत्राणस्यापि परमधर्मत्वादिति भावः । अनृतमेव वक्तव्यमित्यर्थ इति । एवद्व्यतिरिक्तेष्वेव नानृतं वदेदिति शास्त्रस्यावकाशः । उत्सर्गशास्त्रस्य ह्ययमेव स्वभावः, यदपवादशास्त्रादन्यत्र प्रसर्पणमिति भावः ।

किञ्च–कस्यचिदपि पुंसः लुञ्चा–उत्कोचः। अत्र क्रियावाचिना लुञ्चाशब्देन तत्प्राप्यं धनं लक्ष्यते। रहसि भयादिदर्शनेन स्वकार्यसाधनोद्यतजनादुपादेयं द्रव्यमित्यर्थः। "लञ्चा लुञ्चोपधोत्कोच" इति शब्दार्णवः। सा न ग्राह्या। "उत्कोचद्यूतदौत्यार्तद्रव्यं दूरात्परित्यजे"दिति काशीखण्डोक्तेः। "न कर्मणि नियुक्तः सन्धनं किञ्चिदपि स्पृशेत्। प्राप्नोति हि हरन् द्रव्यं बन्धनं यदि वा वध"मिति विराटपर्वोक्तेश्च। धनं–उत्कोचादिप्राप्तमिति नीलकण्ठः। "उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासये"दिति नृपधर्मेषु याज्ञवल्क्योक्तेश्च। "उपधाभिस्तु यः कश्चित्परद्रव्यं हरेन्नरः। ससहायः स हन्तव्यः प्रकाशं विविधैर्वधै"रिति मनुस्मृतेश्च। उपधा–उत्कोच इति तट्टीका॥ २६॥

---

कृतघ्नसङ्गस्त्यक्तव्यः–कृतम्–उपकारं घ्नन्ति–अपकरणेन नाशयन्ति ते कृतघ्नाः। ते च स्कन्दपुराणे निरूपिताः–"भर्तृपिण्डापहर्ता च पितृपिण्डापहारकः। तस्माद्गृहीत्वा विद्यां च दक्षिणां न प्रयच्छति॥ पुमान्स्त्रियं च यो द्वेष्टि यश्चैतान्घातयेन्नरः। कृतस्य द्वेषं वदति स कामान्न करोति यः॥ न स्मरेच्च कृतं यश्च आश्रमान् यस्तु दूषयेत्। सर्वांस्तानृषिभिः सार्धं कृतघ्नानब्रवीन्मनुः॥" इति। तेषां सङ्गो द्रोहप्रसञ्जकः सर्वथा परिहार्यः। तथाच वचनम्–"शरणागतदीनस्त्रीहिंसकान्संवसेन्न तु। चीर्णव्रतानपि सदा कृतघ्नसहितानिमान्॥ बालघ्नांश्च कृतघ्नांश्च विशुद्धानपि धर्मतः। शरणागतहन्तॄंश्च स्त्रीहन्तॄंश्च न संवसेत्॥" इति।

'लुञ्चा ग्राह्या न कस्यचित्'–लुञ्चा–लुञ्चनम्–उत्कोचः, एतावद्धनमुपहरास्मभ्यमन्यथाऽस्मिन्व्यवहारपदे तव प्रातिकूल्यं स्यादिति रहसि भीषयित्वाऽपह्रियमाणं द्रव्यं विवक्षितम्। तादृशं द्रव्यं कस्यापि–अधार्मिकस्यापि न ग्राह्यम्। अयमधार्मिकः, अनेनार्जितमन्यायेन, अस्मभ्यमुपहरतु नामेत्येवमादि दुरालोचनं न कर्त्तव्यमिति भावः। उत्कोचजीविनो हि विवासनीयानाह याज्ञवल्क्यः–"उत्कोचजीविनो द्रव्यहीनान्कृत्वा विवासयेत्" इति॥ २६॥

---

कृतघ्नसङ्गस्य स्वतः पापावहस्य फलतोऽपि पापावहत्वमभिप्रेत्याह–द्रोहप्रसञ्जक इति।

कस्यापीत्यस्य भावमाह–अधार्मिकस्यापीति। अप्रयच्छतोऽपि धनिकस्याधार्मिकस्य गृह्यागे यदपेक्षितमावश्यकमलब्धमन्यतस्तस्याहरणमभ्यनुज्ञातं नाम क्वचित्, तेन धर्मार्थमुत्कोचग्रहणे न दोष इति कस्यचिन्मन्दस्य शङ्का स्यात्, सेह निराकर्तव्या निराक्रियत इत्याशयः॥ २६॥

**चोरपापिव्यसनिनां सङ्गः पाषण्डिनां तथा।**
**कामिनां च न कर्तव्यो जनवञ्चनकर्मणाम्॥ २७॥**

चोरेति। किञ्च—चोराः—अदत्तपरद्रव्यापहारका दस्यवः। पापिनः—प्राणिहिंसादिपापकर्मशीलाः। व्यसनिनः—मृगयाक्षादिवास्वापेत्यादिमनूक्ताष्टादश-व्यसनवन्तः, भङ्गाहिफेनतमालमद्यजिह्वादिसेविनश्च। चोरादीनां द्वन्द्वः। तेषाम्। तथा पाषण्डिनां—वेदविरुद्धाचाराणाम्। तथा कामिनां—परस्त्रीकामुकानाम्। जनानां वञ्चनं—स्वार्थसाधनार्थं छलनं, तदेव कर्म—कर्तव्यार्थो येषां तेषां च। सङ्गः—मैत्री सहस्थित्यादिश्च न कर्तव्यः। तदुक्तं मार्कण्डेयपुराणे—"नोद्धृत्तोन्मत्त-मत्तैश्च नाविनीतैश्च पण्डितः। गच्छेत मैत्रीं नाशीलैर्नच चौर्यादिदूषितैः। नचा-तिव्ययशीलैश्च न लुब्धैर्नातिवैरिभिः। नानृतकैस्तथा क्रूरैः सहासीत कदाचन। सार्धं न बलिभिः कार्या न निःस्वैर्न च निन्दितैः। न सर्वशङ्किभिर्नित्यं न च दैवपरैर्नृभि"रिति। तत्करणे हि स्वस्यापि तत्साम्यापत्तेः। तदुक्तं हंसगीतायाम्—"यदि सन्तं सेवते यद्यसन्तं तपस्विनं यदि वा स्तेनमेव। वासो यथा रङ्गवशं प्रयाति तथा स तेषां वशमभ्युपैती"ति। आरण्यके पर्वणि चोक्तम्—"बुद्धिश्च

---

कृतघ्नसङ्गस्त्यक्तव्य इति सङ्गविशेषस्य परिहरणीयत्वे प्रसक्ते परिहरणीयस्य सङ्गान्तरस्य परि-हरणीयतोच्यते द्वाभ्यां—चोरेति। तथेति। पूर्वश्लोकोक्तः कृतघ्नसङ्गत्यागः समुच्चीयते। यथा कृतघ्नसङ्गस्त्याज्यस्तथा चोरादीनामपि सङ्गस्त्याज्य इत्यर्थः। चोरादीनां सर्वेषां पापित्वेऽपि पृथङ्निर्दिष्टः पापिशब्दो गोबलीवर्दन्यायेन श्रूयमाणचोरादिव्यतिरिक्तपापिपरः। लक्ष्यते वा पापशब्देन हिंसारूपं पापं, हिंसक इत्येतत्। पाखण्डिनः—वेदधर्मविप्लावकाः, देवतान्तरपार-म्यवादिनश्च। तथाच वचनानि—"येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः। नारायणा-ज्जगद्वन्द्यात्ते वै पाखण्डिनस्तथा॥ कपालभस्मास्थिधरा ये ह्यवैदिकलिङ्गिनः। ऋते वनस्था-श्रमांश्च जटावल्कलधारिणः॥ अवैदिकक्रियोपेतास्ते वै पाखण्डिनो मताः। श्रुतिस्मृत्युदि-ताचारं यस्तु नाचरति द्विजः। स पाखण्डीति विज्ञेयः सर्वलोकेषु गर्हितः॥ समस्तयज्ञ-भोक्तारं विष्णुं ब्रह्मण्यदैवतम्। उद्दस्य देवतान्येभ्यो जुहोति च ददाति च॥ स पाख-ण्डीति विज्ञेयः०। यस्तु नारायणं देवं ब्रह्मरुद्रादिदैवतैः। समत्वेनैव जानाति स पाखण्डी भवेत्सदा॥" इत्यादीनि। एतेषां सङ्गः सुदूरपरिहरणीयः। तथाच वचनानि—"देवि

---

अनन्तरश्लोकद्वयस्य सङ्गतिमाह—कृतघ्नेत्यादिना। पापिशब्दस्य यथाश्रुतार्थत्वे सम्भाव्यमानां क्षतिमर्थविशेषविवक्षया परिहरति—चोरादीनामित्यादिना। चोरेत्यनेन प्राणसमार्थहरो निर्दिष्टः, तत्समभिव्याहृतेन पापिशब्देन प्राणहरस्य निर्देशः समुचित इत्याशयेनाह—लक्ष्यते वेति। वेदधर्म-विप्लावका इति। वैदिकधर्मखण्डनैकपराः पाशुपतप्रभृतयः। सुदूरपरिहरणीय इति। चोरादिसङ्ग-

हीयते पुंसां नीचैः सह समागमात् । मध्यमैर्मध्यतां याति श्रेष्ठतां याति चोत्तमै"-रिति । स्कान्दे श्रीवासुदेवमाहात्म्ये चोक्तम्—"यादृशां यस्य सङ्गः स्याच्छास्त्राणां वा नृणामपि । बुद्धिः स्यात्तादृशी तस्य कार्योऽतो नासतां हि स" इति । पापिसङ्गे सांसर्गिकपापप्रायश्चित्तमाह मनुः—"यो येन पापिनैतेषां संसर्गं याति मानवः । स तस्यैव व्रतं कुर्यात्तत्संसर्गविशुद्धये" इति । सङ्गोऽपि नवधा वर्ज्य इत्याह बृहस्पतिः—"एकशय्यासनं पङ्क्तिर्भाण्डपक्त्यन्नमिश्रणम् । याजनाध्यापने यौनं तथाच सहभोजनम् । नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैः सहे"ति । विदुरश्चाह—"अनर्थकं विप्रवासं गृहेभ्यः पापैः सन्धिं परदाराभिमर्शम् । दम्भं स्तैन्यं पैशुनं मद्यपानं न सेवते यः स सुखी सदैवे"ति । चकारात्कुष्ठादिमहारोगग्रस्तानां च संसर्गो न कर्तव्यः । माधवनिदानादौ तन्निषेधोक्तेः ॥ २७ ॥

---

कार्ष्णादयो भक्ता अनन्यशरणास्तु ये । पाखण्डसङ्गं नो कुर्युः ।" "तस्मात्पाखण्डिभिः पापैरालापं स्पर्शनं त्यजेत् ।" इत्यादीनि । कृष्णस्येमे कार्ष्णाः, कृष्णभक्ता इत्यर्थः । आदिशब्दात्साक्षात्परम्परया तदवतारेषु भक्ता ग्राह्याः । व्यसनिनः—व्यसनानि च—"दश कामसमुत्थानि तथाष्टौ क्रोधजानि च । व्यसनानि दुरन्तानि प्रयत्नेन विवर्जयेत् ॥" इति मनुना त्याज्यतया प्रोक्तान्यष्टादश मृगयादीनि, तन्निष्ठा व्यसनिनः, एतेषां सङ्गो न कर्त्तव्यः । कामिनां—काम एव शीलं येषां ते कामिनः-विषयसेवैकलालसाः । धर्मनिरपेक्षं शब्दादीन्विषयानेव केवलं कामयमाना इति यावत् । काममात्रं तु न दूष्यम्, धर्माविरुद्धकामस्योपादेयत्वात् । जनवञ्चनकर्मणां—जनवञ्चनमेव कर्म येषां, एवकारेण स्वार्थसिद्धिनैरपेक्ष्यं वञ्चनेऽवगम्यते, जनवञ्चनैकतत्पर इत्येतत् । चकारादनुक्तानामेवमादिदुःशीलानां समुच्चयः । एवंविधानां सङ्गं न कुर्यात् । सङ्गो हि कलुषयेन्निर्मलमपि चेत इति भावः । स्मर्यते च दुःसङ्गस्य दूषकत्वं स्कान्दे श्रीवासुदेवमाहात्म्ये—"यादृशां यस्य सङ्गः स्यात् शास्त्राणां वा नृणामपि । बुद्धिः स्यात्तादृशी तस्य कार्योऽतो नासतां हि सः" इति ॥ २७ ॥

---

तोऽप्ययमतिक्रूरः, यत् वेदे वैदिके च कर्मणि विद्वेषः प्रबलतरः प्रसजेदस्मादिति भावः । सुदूरपरिहरणीयत्वे प्रमाणमाह—तथा चेति । वचनस्थकार्ष्णपदं व्याचष्टे—कृष्णस्येति । कामिनामित्यत्र ताच्छील्यार्थे णिनिप्रत्ययमाश्रित्य व्याचष्टे—काम एव शीलं येषां ते इति । तथा व्याख्याने निमित्तमाह—काममात्रं तु न दूष्यमिति । जनवञ्चकानामित्यनुक्त्वा जनवञ्चनकर्मणामित्युक्तेः स्वारस्यं प्रकाशयति—जनवञ्चनमेव कर्म येषामित्यादिना । कामिनां चेत्यत्र श्रूयमाणस्य चकारस्य जनवञ्चनकर्मणामित्यनेन योजनाममिप्रेत्याह—चकारादिति । पाठक्रमेणान्वये तु चस्त्वर्थो ग्राह्यः । तेन कामशीलतायाः सर्वानर्थमूलत्वरूपो विशेषो द्योत्यते ॥ २७ ॥

भक्तिं वा ज्ञानमालम्ब्य स्त्रीद्रव्यरसलोलुभाः ।
पापे प्रवर्तमानाः स्युः कार्यस्तेषां न सङ्गमः ॥ २८ ॥

भक्तिमिति । किञ्च—ये इति शेषः । ये पुरुषाः भक्तिं—श्रीकृष्णभक्तिबलमालम्ब्य । वा—अथवा । ज्ञानं—आत्मज्ञानबलमालम्ब्य । स्त्री च द्रव्यं—वित्तं च रसः—रसास्वादश्च तेषु लोलुभाः—सतृष्णाः सन्तः । पापे—परस्त्रीसङ्गादौ पापकर्मणि । प्रवर्तमानाः स्युः । तेषां च सङ्गमः—सङ्गो न कार्यः । अयमर्थः— "नाम्नोऽस्ति यावती शक्तिः पापनिर्दहने हरेः । तावत्कर्तुं न शक्नोति पातकं पातकी जन"इत्यादिबृहद्विष्णुपुराणवाक्योक्तभगवन्नामोच्चारणादिलक्षणभक्तिमाहात्म्यमाश्रित्य भक्त्या सकलमपि पापं नश्यति किं पुनः पारदार्यादिद्वित्रिविधमिति बुद्ध्वा यथा स्वस्य पापे प्रवृत्तिः स्यात्तथा तत्सङ्गो न कर्तव्यः । भगवदपराधित्वापत्तेरिति भावः । तथा चोक्तं पाद्मे—"नाम्नो बलाद्यस्य च पापबुद्धिर्न विद्यते तस्य यमैर्विशुद्धि"रिति। पाञ्चरात्रे च—"नाम्नो बलाच्च पापानि ये कुर्युस्तेऽपराधिन" इति ।

एवं "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथे"त्यादिभगवद्गीतावाक्योक्तज्ञानमाहात्म्यमाश्रित्य ज्ञानिनो मे न कर्मबाध इति बुद्ध्वा च यथा स्वस्य पापे

---

ये पुनरुन्मर्यादा व्याकुलितधर्मपथा ज्ञानवादिनो वाचा ज्ञानाद्यवलम्बिनः, तेषां सङ्गो न कर्त्तव्य इत्याह—**भक्तिं वा ज्ञानमालम्ब्येति** । तच्छब्दश्रवणाद्यच्छब्दयोगः सिद्धः । ये स्त्रीद्रव्यरसलोलुभाः—वनितावित्तास्वादेषु भृशं लुब्धाः । न वस्तुतो ज्ञाननिष्ठा

---

स्त्रीद्रव्यरसलोलुभानां सङ्गो न कर्त्तव्य इत्येतत्पूर्वश्लोकेनैव यद्यपि गतार्थम्, चोराणां कामिनां च सङ्गस्य प्रागेव निषेधात् । तथापि भक्तिं वा ज्ञानमालम्ब्य पापे प्रवर्त्तमानानां सङ्गो न कर्त्तव्य इत्ययमंशोऽत्र विशिष्यत इत्यभिप्रेत्यावतारयति—**ये पुनरिति** । अयं भावः—कामिनः प्रायो विधिनिषेधावजानन्तो जानन्तोऽप्यप्रत्ययाः सप्रत्यया अपि तात्कालिकतीव्रतररागवेगेन यद्भावि तद्भवतु इति मत्वा प्रवर्त्तन्ते नाम परदारपरिग्रहादौ पापे । ये तु जानन्तोऽपि विधिनिषेधौ शास्त्रं नास्माननुशास्ति किन्त्वज्ञानिनः; ज्ञानिनां तु न विधिनिषेधगोचरतेत्यशास्त्रवश्यतामात्मन्यभिमत्य पापे प्रवर्त्तन्ते । त एते पापिष्ठतरास्तेषां सङ्गः सुतरां त्याज्य इति विशिष्य बोधनायोच्यते—**भक्तिं वेति** । विषयलोलुभा इत्यनुक्त्वा ये **पुनरुन्मर्यादा** इत्युक्त्या एषामात्मन्यशास्त्रवश्यत्वाभिमतिर्व्यज्यते । **व्याकुलितधर्मपथाः**—ज्ञानिनेपथ्यमाश्रित्य विधिनिषेधोल्लङ्घनवः । **ज्ञानवादिनः**—न तु ज्ञाननिष्ठाः । परेभ्यो ज्ञानमुपदिशन्तीति वा ज्ञानवादिनः। ज्ञानवादिन इत्येतदेव पदं व्याचष्टे—**वाचा ज्ञानावलम्बिन इति** । ज्ञान-

प्रवर्त्तनं स्यात्तथा तत्सङ्गो न कर्त्तव्यः । वैराग्यरहितस्य पुंसो ज्ञानित्वासम्भवादवश्यमेव पापफलनरकभोगापत्तेरिति भावः । अत एव ज्ञाननिष्ठपरमगुरुणाऽजगरवृत्तिमता श्रीदत्तात्रेयेणोक्तं मोक्षधर्मेषु—"अचलितमतिरच्युतः स्वधर्मा"दित्यादि । कामक्रोधलोभाद्यन्तःशत्रुवशतया यथेष्टाचरणे तु ब्रह्मविदां वसिष्ठादीनामपि तिर्यग्योनिप्राप्त्याद्यनर्थापत्तिः स्मर्यते—"त्रैशङ्कवो हरिश्चन्द्रो विश्वामित्रवसिष्ठयोः । यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिक"मिति । "मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामह" इति च । "अन्तर्जले वारिचरप्रसङ्गात्प्रच्यावितं ब्रह्म चिरं धृतं य"दिति सौभरिवाक्याच्च । किञ्च—ज्ञाननिष्ठावतां फलान्तरापेक्षारहितत्वेऽपि जनसङ्ग्रहार्थमपि सद्धर्माचरणमेवोक्तम्—"न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् । जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् । यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः" "यद्यच्छीर्षण्याचरितं तत्तदनुवर्त्तते लोकः ।" "लोकोऽग्रहीष्यदृषभस्य हि तत्प्रमाण"मित्यादि । तथा च क्व दुराचारप्रसङ्गः । अधर्माचरणे तु तेषां ब्रह्मधामप्राप्तिरेव न स्यात् । तथाच श्रूयते—"नाविरतो दुश्चरितान्नाशान्तो नासमाहितः । नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । तेषा-

---

न वा भक्तिनिष्ठाः, किन्तु विषयनिष्ठा एवेति यावत् । भक्तिं ज्ञानं वाऽऽलम्ब्य पापे प्रवर्त्तमानाः–प्रकर्षेण वर्त्तमानाः प्रवर्त्तमानाः, निष्ठिता इत्यर्थः । प्रायः पुरुषाः पापभीरवो न प्रवर्त्तेरन्पापे, प्रवर्त्तेरन्वा दुर्वासनापहृतविवेकाः परमनुशयमुपेयुर्वा जातु पश्चात्, पशव इव वा स्युरज्ञाः । इमे तु शास्त्रज्ञतामप्यभिनयन्तोऽसत्यामपि ज्ञाननिष्ठायामसत्यामपि भक्तिनिष्ठायां शास्त्रतः सकृदात्मस्वरूपाधिगममात्रेण सकृन्नामोच्चारणमात्रेण चात्मानं ज्ञानिनं भक्तं चाभिमत्य—"नाम्नोऽस्ति यावती शक्तिः पापनिर्दहने हरेः । तावत्कर्तुं न शक्नोति पातकं पातकी जनः ॥" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति हि स्मर्यते, तत् पापे कृते का नो हानिरिति शब्दमात्रेण ज्ञानं भक्तिमवलम्ब्यातिवादमाचरन्तो निर्विशङ्कं परदारपरिग्रहादिषु निष्ठिता इति यावत । एतेन ज्ञाननिष्ठस्य भक्तिनिष्ठस्य वा न घटेत पापे प्रवृत्तिरिति भक्तिं वा ज्ञानमालम्ब्य पापे प्रवर्त्तमाना इति कथमिति शङ्का परास्ता ।

यद्वा—ज्ञाननिष्ठैर्भक्तिनिष्ठैर्वा स्वस्य ज्ञानबलं भक्तिबलं वा प्रबलमवलम्ब्य विषयसङ्गिनां सङ्गः किं नः करिष्यतीत्यवधीरणया तैः सङ्गो न कर्त्तव्य इत्याह—भक्तिं वेति । स्त्रीद्रव्यरसलोलुभाः पापे प्रवर्त्तमाना ये स्युस्तेषां सङ्गः स्वस्य ज्ञाननिष्ठायां भक्तिनिष्ठायां

---

फलं वाच्येव न मनसि न शरीरे, शरीरशुद्धिर्वा मनःशुद्धिर्वा न, केवलमुपदेशमात्रकुशला इति यावत् । प्रवर्त्तमाना इत्यत्रोपसर्गस्वारस्यमाह—प्रकर्षेणेति । पूर्वश्लोके कामिशब्देन विवक्षितेभ्य इमेऽन्ये पापिष्ठतरा इत्येतद्विशदयति—प्राय इत्यादिना । शङ्का परास्तेति । मूले भक्तिं वा ज्ञानमालम्ब्येत्यस्य भक्ति

ससौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं च माया ॥ आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठ" इत्यादि ॥ २८ ॥

प्रचलायामपि न कर्त्तव्यः, विषयसङ्गिनां सङ्गो हि परिनिष्पन्नादपि ज्ञानादितश्च्यावयेदेव पुरुषमिति भावः ॥ २८ ॥

ज्ञानं वाऽऽत्मन्यालम्ब्य-बुद्ध्या गृहीत्वेत्यर्थः, आरोप्येति यावत् । यद्वा—आदाय-वादमात्राय गृहीत्वेत्यर्थः । यद्वेति । अस्यां योजनायां तु शङ्काबीजमेव नेति विशेषः ॥ २८ ॥

---

कृष्णकृष्णावताराणां खण्डनं यत्र युक्तिभिः ।
कृतं स्यात्तानि शास्त्राणि न मान्यानि कदाचन ॥ २९ ॥

कृष्णेति । कृष्णः—यः परं ब्रह्म सर्वकारणकारणम् । "स श्रीकृष्णः परं ब्रह्मे"त्यनेन वक्ष्यमाणेनैकार्थ्यात् । तस्यास्य येऽवताराः—धर्मत्राणार्था रामकृष्णवराहादयः । तेषां च यत्र युक्तिभिः खण्डनम्—"नास्त्येव सर्वेश्वरः कश्चित्, अस्तु वा सर्वेश्वरः कश्चित् स न कृष्णः, भवतु वा कृष्णः सर्वेश्वरः, परंब्रह्म तु ततोऽप्युत्तीर्णमतिपतितैश्वरभावमत एव निराकारं निर्गुण"मिति कृष्णैश्वर्यखण्डनप्रकारभेदः सर्वोऽपि विवक्षितः । "एवं परंब्रह्म कृष्णो नैवावतरति, अवतरन्नपि परमेश्वरः परंब्रह्म कृष्णो मायिकेनैव रूपेणे"त्यवतारखण्डनप्रकारो विवक्षितः । तत्र प्रथमः प्रकारश्चार्वाकादीनाम् । ते हि निरीश्वरं जगदाहुः । "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् । अपरस्परसम्भूतं किमन्यत्कामहेतुक"मिति चार्वाकाः, कर्मैकप्रभवस्यास्य जगतो नेश्वरापेक्षेत्यार्हताः, पुरुषसंसर्गतः प्रक्षुभ्यतः प्रधानस्य गुणमयस्य

पापिपाखण्डप्रभृतीनामसतां सङ्गं निषिध्य, अथासच्छास्त्रसङ्गं निषेधति—कृष्णेति । सकलवेदान्तवेद्यस्य सकलजगदुदयविभवलयलीलस्याक्षरपरमव्योमनिलयस्य पुरुषोत्तमस्य श्रीकृष्णस्य, साधुपरित्राणाय सङ्कल्पितानां तदवताराणां च । इदं तद्विभूतेरप्युपलक्षकम् । युक्तिभिः-स्वमतिमात्रोत्प्रेक्षिताभिः । खण्डनं कृतं स्यात्तानि शास्त्राणि-वेद-

सकलवेदान्तवेद्यस्येति । अनेन नित्यनिर्दोषशास्त्रगम्यत्वमुच्यते । सकलजगदुदयविभवलयलीलस्येति । अनेन परब्रह्मासाधारणलक्षणमुच्यते । अक्षरपरमव्योमनिलयस्येति । अनेन दिव्यविभूतियोगः । पुरुषोत्तमस्येति । अनेन क्षराक्षरातीतत्वम् । एषु विशेषणेष्वेकैकं परतरत्वे पर्याप्तं लिङ्गम् । स्वमतीति । प्रमाणमूलका ह्येव युक्तयः सद्युक्तयः, अन्यास्त्वसद्युक्तय एवेत्याशयः । शास्त्रा-

नैसर्गिकविविधपरिणतिरूपस्यास्य जगतो न काप्यपेक्षा सर्वेश्वरस्येति कापिलाः, त एते भ्रातृव्या रिपवः । एवमादयोऽन्येऽपि कतिचन सन्ति । तदेषामीश्वरखण्डनप्रकारावबोधककुयुक्तिजालसम्भृतानि शास्त्राणि न मान्यानि—नादरणीयानि । आह च चार्वाकादिकल्पितशास्त्राधिगमस्योपपातकत्वं याज्ञवल्क्यः—"असच्छास्त्राधिगमनमाकारेष्वधिकारिता। भार्याया विक्रयश्चैषामेकैकमुपपातकम्॥" व्याख्यातं च विज्ञानेश्वरेण—"असच्छास्त्रं चार्वाकादीना"मिति। कौर्मे च—येषां न कारणं वेदा न विप्रा न जनार्दनः । तन्त्राणि धर्मशास्त्राणि तेषां वाक्यं विवर्जयेदिति । यश्चायं कापिलः पक्षः स लेशतस्तत्त्वावबोधकोऽपीश्वरनिरपेक्षप्रधानकारणवादैकप्रवृत्त्या वेदशिरसां विरुद्ध इत्यनादरणीय एव । भगवान्बादरायणः पक्षमेनं विशेषतो निराकृतवान् शारीरकमीमांसायाम् ।

यश्च द्वितीयः प्रकारः—हिरण्यगर्भो रुद्रो वा स्यात्सर्वेश्वरः, "हिरण्यगर्भः समवर्तताग्रे" "प्रजाकामो वै प्रजापतिः स तपोऽतप्यत" "न सन्न चासच्छिव एव केवलः" "विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं जनयामास पूर्वम्" "कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः" इति हि श्रूयते । कृष्णस्तु न, नह्येकं वास्य तथात्वे प्रमाणमिति । अयं हि पक्षः पाशुपतादिपरिदृष्टो वेदविद्भिरनादरणीयः । भगवान्बादरायणः "एतेन सर्वे व्याख्याता व्याख्याता" इति सूत्रयामास । तद्विवरणं त्वन्यतो बोध्यम् । श्रूयते स्मर्यते च नारायणस्य श्रीकृष्णस्य पारम्यम्—"सर्वे वेदा यत्पदमामनन्ति" "सर्वे वेदा यत्रैकं भवन्ति" "नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती" "वेदैश्च सर्वैरहमेव वेद्यः" "वेदे रामायणे चैव भारते भरतर्षभ । आदौ मध्ये तथा चान्ते विष्णुः सर्वत्र गीयते" "नारायणपरा वेदाः" "वासुदेवपरा वेदाः" "एको ह वै नारायण आसीत् न ब्रह्मा नेशानो नेमे द्यावापृथिवी" "बुद्बुदाद्यक्षः शूलपाणिः पुरुषोऽजायत" "दिव्यो देव

---

शास्त्राणि कदाचन न मान्यानि-प्रतिक्षेपावसरेऽपि तत्रत्ययुक्त्याभासमधिकृत्यापि न श्लाघार्हाणि । सर्वथाऽसाराण्यतितुच्छानि हेयान्येवेति यावत् । स्मरति च याज्ञवल्क्यः—"असच्छास्त्राधिगमनमाकारेष्वधिकारिता । भार्याया विक्रयश्चैषामेकैकमुपपातकम् ॥" इति ।

---

णीति । परदस्मा शास्त्रत्वनिर्देशः । असदर्थबोधकत्वेनासच्छास्त्रतया वा शास्त्रत्वम् । कदाचनेत्यस्याशयमाह—प्रतिक्षेपावसरेऽपीति ।

एको नारायणः" "अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति अथापः संसृज्य नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणे प्रलीयन्ते" "सर्वस्य वशिनं देवं सर्वस्यायतनं हरिम्" "यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड् विश्वरूपः" "स्थाणुरव्यक्तादभवन्महेशः" "यतो जज्ञे रुद्रस्त्वेष नृम्णः" "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै" "तत्र ब्रह्मा चतुर्मुखोऽजायत" "स प्रजापतिरेकः पुष्करपर्णे समभवत्" "ब्रह्म वै ब्रह्माणं पुष्करेऽसृजत्" "तत्सवितुर्वरेण्यं ध्रुवममृतमचलं विष्णुसंज्ञं सर्वाधारं धाम" "कतमः परमो देवः कुतो मृत्युर्बिभेति केनेदं विश्वं सञ्चरतीति तदुहोवाच ब्राह्मणः कृष्णो वै परमं दैवतम्" "नारायणः परं ब्रह्म तत्त्वं नारायणः परः । नारायणः परो ज्योतिरात्मा नारायणः परः" "तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः । सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित्कचित्" "अण्डाद्ब्रह्मा समभवत्तेन सृष्टमिदं जगत्" "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" "वेदवेद्यो हि भगवान् वासुदेवः सनातनः । गीयते स परो वेदैर्यो वेदैनं स वेदवित्" "सर्वे वेदाः सपितरो ब्रह्माद्याश्चाण्डमध्यगाः । विष्णोः सकाशादुत्पन्ना इतीयं वैदिकी श्रुतिः" "नारायणात्परो देवो न भूतो न भविष्यति । एतद्रहस्यं वेदानां पुराणानां च सत्तमम्" "तत्त्वं जिज्ञासमानानां हेतुभिः सर्वतोमुखैः । तत्त्वमेको महायोगी हरिर्नारायणः परः" "सत्यं सत्यं पुनः सत्यमुद्धृत्य भुजमुच्यते । वेदाच्छास्त्रं परं नास्ति न देवः केशवात्परः" "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय!" । "कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः । कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्" इत्यादि ।

यश्चानन्दवल्ल्यां "भीषास्माद्वातः पवते भीषोदेति सूर्यः" इत्यादिना सर्वलोकप्रशासनकर्त्ता सर्वेश्वरः निरवधिकातिशयानन्दघनः प्रस्तुतः सोऽयमानन्द-

यद्यपि वैदिकेष्वपि कतिचन कापिलाः प्रतिक्षिपन्ति नामानादिनिधनमागमैकगम्यं परमात्मानमखिलेश्वरम् । मन्यन्ते च प्रकृतिपुरुषमात्रं तत्त्वम् । तत्र प्रकृत्युपरक्तेष्वेवैकमा-

ननु कृष्णकृष्णावताराणां खण्डनं यत्र तानि चेन्न मान्यानि साङ्ख्यशास्त्रस्याप्यनादरणीयत्वमापतेदित्याशङ्कते—यद्यपीत्यादिना । कापिला इति निर्देशात्कपिलस्येश्वरप्रतिक्षेपे न हार्दमिति निगूढाशयो व्यज्यते । उपपादयिष्यति चेदमनुपदम् । तैरपि कश्चिदीश्वरः स्वीक्रियते नाम, नाखिले-

मयमूर्त्तिः कृष्णशब्देनोच्यते। नारायणशब्दवदयं शब्दोऽस्मिन्योगरूढः। अत एव सदात्मादिसामान्यशब्दैस्तत्र तत्र सर्वजगत्कारणत्वेन प्रस्तुत एव नारायणशब्देन कृष्णशब्देन च श्रुतिस्मृतिषु विशेषतो निर्दिश्यते। अत एव भगवतो वसुदेवगृह आविर्भावात्प्रागेव कृष्णशब्देन सङ्कीर्त्तनं सङ्गच्छते। तथाहि भागवते पृथुचरिते—"आरिराधयिषुः कृष्णमचरत्तप उत्तम"मिति। अजामिलोपाख्याने च—"अजामिलोऽप्यथाकर्ण्य दूतानां यमकृष्णयोः" "कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान्" "यथा कृष्णार्पितप्राणस्तत्पुरुषनिषेवया" "कृष्णाङ्घ्रिपद्ममधुलिण्न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेष्वि"ति। भरताख्याने च—"सा मां स्मृतिर्मृगदेहेऽपि वीर! कृष्णार्चनप्रभवा नो जहाती"ति। प्रह्लादचरिते च—"कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम्" "मतिर्न कृष्णे परतः स्वतो वा मिथोऽभिपद्येत गृहव्रतानाम्" "एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः। अवतारकथा पुण्या वधो यत्रादिदैत्ययो"रिति। ध्रुवाख्याने च—"इत्युत्तानपदः पुत्रो ध्रुवः कृष्णपरायणः" "तं कृष्णपादाभिनिविष्टचेतस"मिति। पुरञ्जनोपाख्याने च—"आरिराधयिषुः कृष्णं स जगाम कुलाचल"मिति। ययातिचरिते च—"सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी। कृष्णे मनः समावेश्य व्यधुनोल्लिङ्गमात्मन" इति। देवस्तुतौ च—"ग्रस्तानि येन नः कृष्ण! तेजांस्यस्त्रायुधानि च" "हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाये"ति। व्यासनारदसंवादे च—"तत्रान्वहं कृष्णकथाः प्रगायताम्" "एवं कृष्णमतेर्ब्रह्म"न्निति। वैकुण्ठवर्णने च—"कृष्णात्मनां न रज आदधुरुत्स्मयाद्यै"-

---

दिपुरुषमभ्युपगच्छन्ति च। तं च बद्धसजातीयत्वादनुत्तीर्णं मन्यन्ते। प्रमाणयन्ति चात्र कापिलानि सूत्राणि—"ईश्वरासिद्धेः" "मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिः" "उभयथाऽ-

---

श्वरः, व्यष्ट्यपेक्षयैव तथात्वाभ्युपगमात्। नापि परमात्मा, बद्धत्वाभ्युपगमात्। नाप्यागमैकगम्यः, अनुमानेनाप्यवगम्यमानत्वस्वीकारात्। नाप्यनादिनिधनः, उत्थानविलययोरभ्युपगमात्। ईश्वरासिद्धेरिति। पराभ्युपेतस्य नित्यमुक्तस्य स्वतन्त्रस्येश्वरस्यासिद्धेरित्यर्थः। तत्प्रत्यक्षस्येदमलक्षणमित्येष न दोष इति भावः। मुक्तबद्धयोरन्यतराभावान्न तत्सिद्धिरिति। मुक्तबद्धयोरन्यतरात्मता यस्मादीश्वरे न घटते तस्मान्न तत्सिद्धिः। कुतो नान्यतरात्मता? आह—उभयथाप्यसत्करत्वमिति। बद्धस्य

रिति । रुद्रगीते च—"नमो धर्माय बृहते कृष्णायाकुण्ठमेधसे" इति । वृत्रोपाख्याने च—"इत्थं दृढमतिः कृष्ण आसीत्सङ्ग्राम उल्बणे" इति । प्राचेतसाख्याने च—"वासुदेवाय कृष्णाय सात्वतां पतये नम" इति । निमिजायन्तेयसंवादे च—"एवं कृष्णात्मनाथेषु मनुष्येषु च सौहृद"मित्यादि । तस्मात्—"सर्वे वेदा यत्पदमामनन्ति" "नारायणपरा वेदाः" "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादिश्रुतिस्मृतिसमधिगतस्य परस्य ब्रह्मणो नारायणस्य श्रीकृष्णस्य यत्सर्वैश्वर्यं परब्रह्मलिङ्गं तद्रुद्रादिदेवतान्तरे समारोपणेन श्रीकृष्णस्यैश्वर्यनिराकरणं येषु शास्त्रेषु कृतं स्यात्तानि व्यासहार्दविरुद्धानीति न मान्यानि ।

यस्तु तृतीयः पक्षः—परं ब्रह्म अतिपतितसकलविशेषमत एव समुत्तीर्णसर्वेश्वरभावमखण्डं ज्ञप्तिमात्रलक्षणमकायमपाणिपादममूर्त्तम् । सर्वेश्वरस्तु यः कृष्ण उच्यते स हि ईशेशितव्यादिविभागास्पदव्यावहारिकदृष्टिसत्ताकः शास्त्रेषु सगुणब्रह्मभावेन ख्यायते । अत एव श्रुतिषु परस्मिन्ब्रह्मणि निर्गुणवादो निराकारवादश्च तत्र तत्र श्रूयमाणः सङ्गच्छते । तथाच श्रूयते—"निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "साक्षी चेता केवलो निर्गुणश्च" "निर्गुणं" "अद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्" "अशब्दमस्पर्शमरूपम्" "स पर्यगाच्छुक्रमकायमव्रणमस्नाविरं शुद्धमपापविद्धम्" "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" "नचेशिता नैव च तस्य लिङ्गम्" "दिव्यो ह्यमूर्त्तः पुरुषः" "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" स्मर्यते च—"त्वमकरणः स्वराडखिलकारकशक्तिधरः" "निर्गुणस्याप्रमेयस्य" "रूपवर्णादिनिर्देशविशेषणविवर्जित" इति । तस्मात्समतिलङ्घ्य सर्वमैश्वरं परं ब्रह्म वर्तत इति ।

---

प्यसत्करत्वम्" "मुक्तात्मनः प्रशंसोपासासिद्धस्य वा" "प्रमाणाभावान्न तत्सिद्धिः" "सम्बन्धाभावान्नानुमानम्" "श्रुतिरपि प्रधानकार्यस्य" इति ।

---

धर्माधर्मयोगावश्यम्भावेन तदात्मतायामकिञ्चित्करत्वम्, ईश्वरत्वं न सिद्ध्येदित्येतत् । मुक्तस्य ज्ञानचिकीर्षाद्यसम्भवात्तदात्मतायां सुतरामकिञ्चित्करता, नेश्वरत्वं घटेतेत्यर्थः । नन्वेवं सति "स हि सर्ववित्सर्वस्य कर्त्ते"त्यादिश्रुतीनां व्याकोप इत्यत आह—मुक्तात्मनः प्रशंसा, उपासासिद्धस्य वेति । मुक्तप्रायस्यात्मनः प्रशंसेयं, उपासनया सिद्धस्य वा प्रशंसेयं श्रुतिः । प्रमाणाभावान्न तत्सिद्धिरिति । प्रत्यक्षप्रमाणाभावान्नेश्वरसिद्धिरित्यर्थः । सम्बन्धाभावान्नानुमानमिति । अत एव साध्यहेत्वोर्योऽयमसाधारणः सम्बन्धोऽव्यभिचारलक्षणस्तस्याभावात्–असिद्धेर्नानुमानं प्रमाणमित्यर्थः । श्रुतिरपि प्रधानकार्यस्येति । श्रुतिरपि प्रधानकार्यतां जगतो बोधयति । तथाच श्रुतिः—"प्रधानाज्जगदुत्पद्यत" इति ।

अयं च वादो भगवद्रामानुजाचार्यैर्विस्तरतो निरस्तः, समर्थितं च सर्वेश्वरस्य श्रीकृष्णस्यैव परब्रह्मत्वम् । तत्प्रकारः सर्वोऽपि तत एव बोध्यः । तस्माद्यानि गुणनिषेधपराणि वचनानि तानि प्राकृतहेयगुणनिषेधपराणि । यानि च शरीरनिषेधपराणि तानि तु प्राकृतशरीरनिषेधपराणि । भगवतः कृष्णस्य कल्याणगुणसद्भावे, अप्राकृतशरीरसद्भावे च न कश्चिद्विरोधः । श्रावयति च परस्य ब्रह्मणः कृष्णस्य कल्याणगुणयोगं दिव्यविग्रहयोगं च श्रुतिः—"अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "यः सर्वज्ञः सर्ववित्" "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "सेयं देवतैक्षत" "तदैक्षत बहु स्यां प्रजायेय" "स ऐक्षत लोकान्नु सृजा" "सोऽकामयत बहु स्यां प्रजायेय" "स तपोऽतप्यत । स तपस्तप्त्वा इदं सर्वमसृजत" "ज्ञः कालकालो गुणी सर्वविद्यः" "ज्ञाज्ञौ द्वावजावीशनीशौ" "भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः" "यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन" "रसो वै सः रसं ह्येवायं लब्ध्वा आनन्दी भवति" "एष ह्येवानन्दयाति" "सोऽश्नुते सर्वान् कामान्सह ब्रह्मणा विपश्चिता" "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" "सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः" "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्" "ईशानो भूतभव्यस्य न ततो विजुगुप्सते" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिम्" "आत्मैवेदमग्र आसीत्पुरुषविधः" "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णः तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः

---

तदेषां तन्त्रमप्यनादरणीयं नाम । तथापि वेदबाह्यवन्न कात्स्न्येंनानादरणीयम्, प्रकृतिपुरुषविवेकस्य निरूप्यमाणस्योपादेयत्वात् । यस्त्वीश्वरनिषेधाद्यंशः स तु नादरणीयः । अत एव जगत्कारणत्वं ब्रह्मणः समर्थयता बादरायणेन शारीरकमीमांसायां "रचनानुपपत्तेश्च

---

समाधत्ते—तथापीति । स तु नादरणीय इति । यस्मिन् शास्त्रे यस्मिन्भागे कृष्णकृष्णावताराणां खण्डनं, तस्मिन्नंशेऽनादरणीयमिति मूलार्थो बोध्यः । वैदिकार्थविरुद्धो भागोऽनादरणीय इति यावत् । ननु कपिलेन भगवता प्रवर्त्तिते सिद्धान्तेंऽशतोऽप्यप्रामाण्यवर्णनमनुचितमिति शङ्कायामाह—अत एवेत्यादिना । वेदान्तार्थविनिर्णयाय प्रवृत्तेन भगवता नारायणावताररूपेण व्यासेनैवांशतोऽप्रामा-

परस्तात्" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "तस्यैष आत्मा विवृणुते तनूं स्वाम्" "तस्य ह वा एतस्य पुरुषस्य रूपं यथा महारजनं वासः" "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" "रुक्माभं स्वप्नधीगम्यम्" "तस्मिन्नयं पुरुषो मनोमयोऽमृतो हिरण्मय" इति ।

स्मरन्ति च—"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते । मैत्रेय! भगवच्छब्दः सर्वकारणकारणे ॥ सम्भर्त्तेति तथा भर्त्ता भकारोऽर्थद्वयान्वितः । नेता गमयिता स्रष्टा गकारार्थस्तथा मुने! ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ वसन्ति तत्र भूतानि भूतात्मन्यखिलात्मनि । स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः ॥" "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ एवमेष महाशब्दो मैत्रेय! भगवानिति । परमब्रह्मभूतस्य वासुदेवस्य नान्यगः ॥" "तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥" "समस्तकल्याणगुणात्मकोऽसौ" "सर्वेश्वरः सर्वदृक् सर्ववेत्ता समस्तशक्तिः परमेश्वराख्यः" "तवानन्तगुणस्यापि षडेव प्रथमे गुणाः । यस्त्वयैव जगत्कुक्षावन्येऽप्यन्तर्निवेशिताः" "यथा रत्नानि जलधेरसङ्ख्येयानि पुत्रक! । तथा गुणा ह्यनन्तस्य असङ्ख्येया महात्मनः" "सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तदृष्टिः । अनन्तशक्तिश्च विभोर्विभुज्ञाः" "सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः । स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु" "योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हीनः स उच्यते" "नहि तस्य गुणाः सर्वे सर्वैर्मुनिगणैरपि । वक्तुं शक्या वियुक्तस्य सत्त्वाद्यैरखिलैर्गुणैः" "युक्तं

---

नानुमानम्"इत्यादिना कापिलं मतं निरस्तम् । तेनैव भारते—"साङ्ख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥" इति कापिलस्याप्यादरणीयताऽपि वर्णिता । अत्रेदं तत्त्वम्—प्रकृतिपुरुषविवेचनार्थं प्रवृत्तेन भगवता कपिलेन तत्प्रधाने

---

ऽयमुक्तमिति न काचित्क्षतिरिति भावः । ननु सर्वांश एवाप्रामाण्यं किं नेष्येत तत्राह—तेनैवेत्यादिना । ननु तत्र तत्र तत्त्वविदामग्रेसरतया गण्यमानो भगवदवतारभूतः "ऋषिं प्रसूतं कपिल"मिति श्रूयमाणः सोऽपीश्वरनिरासमकरोदिति कथमेतत्, तथा सति तन्मतनिरासो व्यासेन कथं क्रियेत, यत् व्यासेनैव "यस्मिन्न विभ्रमाः केचि"दित्यादिना भारते श्लाघा विहितेत्याशङ्कायामाह—अत्रेदं

तद्गुणकोपासनात्” “वर्षायुतैर्यस्य गुणा न शक्या वक्तुं समेतैरपि सर्वदेवैः । महात्मनः शङ्खचक्रासिपाणेर्जिष्णोर्विष्णोर्वसुदेवात्मजस्य” “चतुर्मुखायुर्यदि कोटिवक्त्रो भवेन्नरः क्वापि विशुद्धचेताः । स ते गुणानामयुतैकमंशं वदेन्न वा देववर! प्रसीद” “गुणात्मनस्तेऽपि गुणान्विमातुम्” “मां भजन्ति गुणाः सर्वे निर्गुणं निरपेक्षकम् । सुहृदं प्रियमात्मानं साम्यासङ्गादयोऽगुणाः” “सत्यं शौचं दया क्षान्तिस्त्यागः सन्तोष आर्जवम् । शमो दमस्तपः साम्यं तितिक्षोपरतिः श्रुतम् ॥ ज्ञानं विरक्तिरैश्वर्यं शौर्यं तेजो बलं स्मृतिः । स्वातन्त्र्यं कौशलं कान्तिर्धैर्यं मार्दवमेव च ॥ प्रागल्भ्यं प्रश्रयः शीलं सह ओजो बलं भगः । गाम्भीर्यं स्थैर्यमास्तिक्यं कीर्तिर्मानोऽनहंकृतिः ॥ एते चान्ये च भगवन्नित्या यत्र महागुणाः । प्रार्थ्या महत्त्वमिच्छद्भिर्न वियन्ति स्म कर्हिचित्”॥ “निर्दोषपूर्णगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः । आनन्दमात्रकरपादमुखोदरादिः” “परमात्मा वासुदेवो भगवान् दिव्यविग्रहः” “नित्यसिद्धे तदाकारे तत्परत्वे च पौष्कर! यस्यास्ति सत्ता हृदये तस्यासौ सन्निधिं व्रजेत्” इत्यादि ।

ननु—“आकाशशरीरं ब्रह्म” इत्यनेन निराकारत्वमेव ज्ञायत इति चेन्न आकाशशब्दस्य आ—समन्तात्काशत इति व्युत्पत्त्या प्रकाशमानदिव्यशरीरत्व एव तात्पर्यात् । यद्वा—अन्तर्यामिब्राह्मणोक्तप्रक्रियया पृथिव्यादिसर्वशरीरकस्या-

---

क्वचन तन्त्रे ब्रह्मणो निरूपणं न कृतमित्येतन्न तस्य तत्रानभिमतिं व्यञ्जयेत् । नहि दर्शपूर्णमासप्रकरणे वाजपेयानिरूपणमात्रेण वेदस्य वाजपेयेऽतात्पर्यम् । नापि कर्मप्रकरणे ब्रह्मणोऽनिरूपणेन

---

तत्त्वमिति । नन्वीश्वरनिरूपणं नास्तीत्येतावन्मात्रं न, किन्तु तन्निरासः खलु कृत इति शङ्कायां-

---

१ सत्यं—भूतहितत्वं वाचिकं वा । शौचं—हेयप्रतिभटत्वम् । दया—परदुःखासहनम् । क्षान्तिः—सापराधजनसहिष्णुता । त्यागः—अनादरः पूर्णकामत्वप्रयुक्तः, आत्मपर्यन्तवदान्यत्वं वा । सन्तोषः—कर्हिचिदपि क्लेशराहित्यम् । आर्जवं—मनोवाक्कायानामैकरूप्यम् । शमः—मनोनिग्रहः । दमः—बाह्येन्द्रियनिग्रहः । तपः—आलोचनं जगद्व्यापारोपयुक्तम् । साम्यं—अरिमित्रादिराहित्यम् । तितिक्षा—द्वन्द्वाप्रतिहतत्वम् । उपरतिः—व्यर्थव्यापारोपरतिः । श्रुतं—सर्वशास्त्रार्थयाथात्म्यवित्त्वम् । ज्ञानं—आश्रितानिष्टपरिहारेष्टप्रापणोपयुक्तम् । विरक्तिः—विषयेषु निस्पृहत्वं विषयानाकृष्टचित्तत्वं वा । ऐश्वर्यं—स्वव्यतिरिक्तसर्वनियन्तृत्वम् । शौर्यं—युद्धेष्ववैमुख्यम् । तेजः—अप्रधृष्यता । बलं—सर्वप्राणवृत्तिनियमनसामर्थ्यम् । स्मृतिः—सत्स्वपि विपुलेष्वपराधेषूपकारस्मरणम् । स्वातन्त्र्यं—अन्यानपेक्षत्वम् । कौशलं—नैपुण्यम् । कान्तिः—“न तत्र सूर्यो भाती”ति श्रुत्युक्तविधा दीप्तिः । धैर्यं—युद्धे स्वगृह इव प्रवेशसामर्थ्यम् । मार्दवं—अक्रूरता । प्रागल्भ्यं—सभासु धार्ष्ट्यम् । प्रश्रयः—महत्सु विनयः । शीलं—सद्वृत्तिः । सहः—प्राणस्य स्वाभाविकसामर्थ्यम् । ओजः—अभ्यासादिजनितं सामर्थ्यम् । बलं—धारणसामर्थ्यम् । भगः—ज्ञानाद्युत्कर्षः । गाम्भीर्यं—दुरवगाह्याभिप्रायत्वम् । स्थैर्यं—क्रोधनिमित्तेऽविकारः । आस्तिक्यं—शास्त्रार्थविश्वासः । कीर्तिः—यशः । मानं—पूजार्हता । अनहङ्कृतिः—गर्वाभावः ।

न्तर्यामिभावे यदाकाशशरीरकत्वं तदेवोच्यते । नैतावता निराकारत्वसिद्धिः । निर्लेपत्वव्यापकत्वसामान्यधर्ममादाय वाऽऽकाशशरीरमित्युक्तिः ।

**ननु**—परमेव ब्रह्म चेन्मूर्त्तिमत्तस्य देशविशेषस्थानविशेषनियमसापेक्षतया तस्य च तदश्रवणात्परिच्छिन्नतापत्तेरानन्त्यश्रुतिविरोधाच्च परित्यक्तो निगमान्तमार्गः स्यादिति चेन्मैवम् । अन्तर्यामिभावेन सर्वतः सम्बद्धस्याप्यस्य ज्ञानानन्दैकस्वरूपस्य देशविशेषे मुक्तोपभोग्यस्वासाधारणदिव्यरूपेण सद्भावो नापरिच्छिन्नतां निरुन्ध्यात् । श्रूयते चास्य स्थानविशेषः श्रुतिषु—"दिव्ये ब्रह्मपुरे ह्येष स व्योम्न्यात्मा प्रतिष्ठितः" "एतत्सत्यं ब्रह्मपुरम्" "अपहतपाप्मा ह्येष ब्रह्मलोकः" "स खल्वेवं वर्त्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते नच पुनरावर्त्तते" "तदक्षरे परमे व्योमन्" "तमसः परस्तात्" "क्षयन्तमस्य रजसः पराके" "स वेदैतत्परमं ब्रह्मधाम यत्र विश्वं निहितं भाति शुभ्रम्" "यो अस्याध्यक्षः परमे व्योमन्" "हिरण्मये परे लोके विरजं ब्रह्म निष्कलम्" "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" "ते ह नाकं महिमानः सचन्ते यत्र पूर्वे साध्याः सन्ति देवाः" "यथा पादोदरस्त्वचा विनिर्मुच्यते एवमिहैव स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकम्" "विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्" "यत्र गावो भूरिशृङ्गा अयासः अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" ।

स्मर्यते च—"तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः" "न तद्भासयते सूर्यो न शशाङ्को न पावकः । यद्गत्वा न निवर्त्तन्ते तद्धाम परमं मम" "ज्ञानविज्ञानिनः केचित् परं पारं तितीर्षवः । अतीव तत्सदः पुण्यं पुण्याभिजनसेवितम् ॥ तत्र गत्वा न शोचन्ति न च्यवन्ति व्यथन्ति च" "ते तु तद्ब्रह्मणः स्थानं प्राप्नुवन्तीह सात्त्विकाः । नैव ते स्वर्गमिच्छन्ति न यजन्ति यशोधनाः ॥ सतां वर्त्मानुवर्त्तन्ते यथाबलमहिंसया" "दिव्यं स्थानमजरं चाप्रमेयं दुर्विज्ञेयं चागमैर्गम्यमाद्यम् । गच्छ प्रभो ! रक्ष चास्मान्प्रपन्नान्कल्पे कल्पे जाय-

---

ब्रह्मण्यतात्पर्यम् । यथातिवादः सोऽपि विवक्षितार्थदार्ढ्यमात्राय न तत्त्वान्तरनिषेधाय । नहि "न किरिन्द्र त्वदुत्तरे न ज्यायानस्ति वृत्रहन्" । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्यतिवदनमात्रेण कर्मान्तरं तत्त्वान्तरं वाऽनभिमतं वेदस्य । वेदेऽन्यथाऽन्यस्य निरू-

---

माह—यथातिवाद इति । न तत्त्वान्तरनिषेधायेति । तत्र दृष्टान्तमाह—नहीत्यादिना ।

मानः स्वमूर्त्त्या" "योगसिद्धा महात्मानः तमोमोहविवर्जिताः। तत्र गत्वा पुनर्नेमं लोकमायान्ति भारत !॥ स्थानमेतन्महाराज ! ध्रुवमक्षरमव्ययम्। ईश्वरस्य सदा ह्येतत्प्रणमात्रं युधिष्ठिर !" "चतुर्णां लोकपालानां शुक्रस्याथ बृहस्पतेः। मरुतां विश्वदेवानां साध्यानामश्विनोरपि॥ रुद्रादित्यवसूनां च तथान्येषां दिवौकसाम्। स्थानानि निरयास्तात ! स्थानस्य परमात्मनः" "ओङ्काररथमारुह्य मनः कृत्वा तु सारथिम्। ब्रह्मलोकपदान्वेषी याति विष्णोः परं पदम्" "प्राप्यावध्यं ब्रह्मपुरं राजेव स्यामहं सुखी" "दर्शयामास लोकं स्वं गोपानां तमसः परम्" "एवमेतान्मयादिष्टाननुतिष्ठन्ति ये पथः। क्षेमं विन्दन्ति मत्स्थानं यद्ब्रह्म परमं विदुः" "ब्रह्माख्यं धाम ते यान्ति शान्ताः सन्न्यासिनोऽमलाः" "क्रान्त्वा दशोत्तरगुणाः प्राप गोलोकमद्भुतम्। धाम तेजोमयं तद्धि प्राप्यमेकान्तिकैर्हरेः॥ तत्रैककालसम्भूतकोटिकोट्यर्कसन्निभम्। स व्यचष्ट महत्तेजो दिव्यं सिततरं मुने !॥" एतदेव धाम वैकुण्ठशब्देनाप्युक्तम्—"लोकं विकुण्ठमुपनेष्यति गोकुलं स्म" इत्यादि॥

किञ्च—"न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे" "न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः" "न यत्र श्रूयते माया लोकसृष्टिविकल्पना" "तथा विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया" "माया परैत्यभिमुखे च विलज्जमाना"। एतेन—ज्ञानानन्दघनस्य परस्य व्यतीतमायस्य देशविशेषस्थानविशेषवादो विप्रतिषिद्धः, देशविभागस्थानविभागादीनां मायानियतत्वादिति शङ्का प्रत्युक्ता। कर्मार्जितेष्वेव मायानियतेः। भगवल्लोकस्य तु न तथात्वम्। उक्तवचनेन कण्ठरवेण तन्निषेधात्।

श्रूयते च परस्य ब्रह्मणः कृष्णस्य सर्वत्रान्तर्यामिभावेन स्थितिः—"वृक्ष इव दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम्" "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" "कर्माध्यक्षः

पणमिव कपिलदेवहूतिसंवादे, कपिलासुरिसंवादे च ब्रह्मनिरूपणं समुपलभ्यत एव। प्रदर्शितेश्वरनिषेधपरेषु सूत्रेषु भगवत्कपिलप्रणीतत्व एव केषाञ्चिद्विप्रतिपत्तिश्च। व्याख्यातारश्च केचन "एक देशिनामाशयमाश्रित्य प्रौढिवादोऽय"मिति व्याचक्षते च। ये चावहुश्रुताः

* व्याख्यातारश्च केचनेति। विज्ञानभिक्षुप्रभृतयः। नन्वेवं कपिलस्य परे ब्रह्मणि चेत्तात्पर्यं, व्यासेन शारीरकमीमांसायां तन्मतनिरासः कुतः क्रियत इत्यत्राह—ये चावहुश्रुता इत्यादिना।

सर्वभूताधिवासः" "एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः" "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरः……स त आत्माऽन्तर्याम्यमृतः" "य आत्मनि तिष्ठन्नात्मनोऽन्तरः……स त आत्माऽन्तर्याम्यमृतः" इत्यादिना । स्मर्यते च—"अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः" "मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" "मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिना" "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" "स एव सर्वभूतात्मा विश्वरूपो यतोऽव्ययः" तस्मात् व्यपेतपारमेश्वरं निर्विशेषं परं ब्रह्म, ईशेशितव्यविभागसापेक्षव्यावहारिकदृष्टिपरिकल्पिते श्रीकृष्ण एव साक्षात्परब्रह्मत्वसमर्थनमसङ्गतमिति यन्मतं तत्प्रतिपादकानि शास्त्राणि नैव ग्राह्याणि । सुतरां दूरतः परिहरणीयानि ।

यश्चैषां जीवात्मपरमात्मनोरभेदोपपादनमुखेन श्रीकृष्णे परमात्मनि परब्रह्मणि सम्भाव्यमानः कलङ्कः स तु सपदि परिहर्त्तव्य इति सुतरां तथाविधं शास्त्रमनादरणीयम् । श्रावयन्ति श्रुतयो जीवात्मपरमात्मनोर्भेदम् । तथाहि—"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" "ज्ञाज्ञौ द्वावजावीशनीशौ" "क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः" "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विद-

केचन तमिमं कपिलादीनां भावमजानन्त आपातप्रतिपन्नार्थमभिमन्यमानास्तार्किकंमन्याः प्रत्यवतिष्ठन्ते, तान्प्रति कपिलागमस्याऽऽपातमविपन्नार्थपरत्वमभ्युपेत्य तर्केण तन्निरासो भगवता बादरायणेन शारीरकमीमांसायां व्यरचि । अत एव भारते—"एवं तत्त्वमिदं कृत्स्नं साङ्ख्यानां विदितात्मनाम् । यदुक्तं यतिभिर्मुख्यैः कपिलादिभिरीश्वरैः ॥ यस्मिन्न विभ्रमाः केचिद्दृश्यन्ते मनुजर्षभ ! । गुणाश्च यस्मिन्बहवो दोषहानिश्च केवला ॥" इति तेनैव कपिलतन्त्रस्य विभ्रमादिदोषराहित्यं साद्गुण्यं चोक्तमिति ।

यद्यप्यर्वाचीनाः कतिचन कबन्धमीमांसकाः सूत्रकृतो हार्दमजानन्तः सर्वकर्मसमा-

जैमिनिमतेऽपि सम्भाव्यमानामाशङ्कां तुल्यन्यायेन परिहरति—यद्यपीत्यादिना । अर्वाचीनाः—

धाति कामान्" "य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्। ईशानं भूतभव्यस्य न ततो विजुगुप्सते" "स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" "प्रधानक्षेत्रज्ञपतिर्गुणेशः" "पतिं विश्वस्यात्मेश्वरम्" "आत्मा नारायणः परः" "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति" "भोक्ता भोग्यं प्रेरितारं च मत्वा" "अक्षरात्परतः परः" "ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः" "प्राज्ञेनात्मना सम्परिष्वक्तः" "प्राज्ञेनात्मनान्वारूढः" "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" "क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः" "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "योऽक्षरमन्तरे सञ्चरन्यस्याक्षरं शरीरं यमक्षरं न वेद" "ब्रह्मविदाप्नोति परम्" इति।

स्मरन्तिच—"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" इति।

भेदमेनं भगवान् बादरायणः समर्थयामास सूत्रैः—"नेतरोऽनुपपत्तेः" "भेदव्यपदेशात्" "अनुपपत्तेस्तु न शारीरः" "कर्मकर्तृव्यपदेशाच्च" "शब्दविशेषात्" "सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" "न च स्मार्त्तमतद्धर्माभिलापाच्छारीरश्च" "उभयेऽपि हि भेदेनैनमधीयते" "विशेषणभेदव्यपदेशाभ्यां च नेतरौ" "स्थित्यदनाभ्यां च" "इतरपरामर्शात्स इति चेन्नासम्भवात्" "सुषुप्त्युत्क्रान्त्योर्भेदेन" "पत्यादिशब्देभ्यः" "अधिकं तु भेदनिर्देशात्" "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" इत्यादिभिः।

---

राध्यं देवताविशेषं फलदमनभ्युपगच्छन्तो नानुमन्यन्ते नाम सर्वेश्वरम्। तथापि न तावता जैमिनिमतमनादरणीयम्। दर्शयति हि जैमिनेरपि ब्रह्मतद्गुणाभ्युपगमं बादरायणः—"साक्षा-

---

भाट्टप्रभृतयः। कर्मधर्ममीमांसकाः–कर्ममीमांसकाः। सूत्रकृतः–जैमिनेः। साक्षादप्यविरोधं जैमिनिः—जैमिनिराचार्यः साक्षात्–अव्यवधानेनापि, अग्निशब्दस्य परमात्मनि अविरोधं–उपपत्तिं

न चाविद्याकृतमुपाधिकृतं वा भेदमाश्रित्यैते निर्देशाः । "तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" "तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्" "अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च" "वीतरागभयक्रोधा मन्मया मामुपाश्रिताः । बहवो ज्ञानतपसा पूता मद्भावमागताः" "मुक्तोपसृप्यव्यपदेशाच्च" "उत्तराच्चेदाविर्भूतस्वरूपस्तु" "सम्पद्याविर्भावः स्वेनशब्दात्" "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" इति सर्वाविद्योपाधिविनिर्मुक्तमधिकृत्यैव भेदोपपादनात् ।

यश्चावताराणां खण्डनप्रकारः—नैव सर्वेश्वरः कदाचिदपीहावतरति, अवतरन्नपि मायिकेन रूपेणेत्यादिस्तत्प्रतिपादकानि शास्त्राण्यत्यन्तमनादरणीयानि । श्रूयते हि परस्य ब्रह्मणः स्वेनैव रूपेण स्वेच्छयाऽवतरणम्—"अजायमानो बहुधा विजायते" "तस्य धीराः परिजानन्ति योनिम्" स्मर्यते च—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ! । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥ परित्राणाय साधूनां विनाशाय च दुष्कृताम् । धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ! । तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ! ॥" "समस्ताः शक्तयश्चैता नृप ! यत्र प्रतिष्ठिताः । तद्विश्वरूपवैरूप्यं रूपमन्यद्धरेर्महत् ॥ समस्तशक्तिरूपाणि तत्करोति जनेश्वर ! । देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ॥ जगतामुपकाराय न सा कर्मनिमित्तजा । चेष्टा तस्याप्रमेयस्य व्यापिन्यव्याहतात्मिका" "इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ" "यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः । तदा तु भगवानीश आत्मानं सृजते हरिः" "लीलातनूः स्वकृतसेतुपरीप्सया यः काले दधत्" "धर्मावनायोरुकृतावतारः" इत्यादि ।

अवतरणसमये च रूपमप्राकृतं स्मर्यते—"अजोऽपि सन्नव्ययात्मा भूता-

---

दप्यविरोधं जैमिनिः" "सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति" "मध्वादिष्वसम्भवादनधिकारं

---

मन्यते । सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति—"उर एव वेदिर्लोमानि बर्हि"रित्यादिना विधीयमानमुरःप्रभृतीनां वेदित्वादिकल्पनं वैश्वानरविद्यालक्षणपरब्रह्मविद्याङ्गभूतप्राणाहुतेः सम्पत्तेः—अग्निहोत्रत्वसम्पत्त्यर्थमिति जैमिनिराचार्यो मन्यते । तथाहि दर्शयति श्रुतिः । मध्वादिष्वसम्भवादन-

नामीश्वरोऽपि सन्। प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया" "न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा" "न भूतसङ्घसंस्थानो देहोऽस्य परमात्मनः" "जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन!" इत्यादि।

**ननु**–आत्ममाययेति वचनाद्भगवतोऽवतरतो मायासम्बन्धो विज्ञायत इति चेन्न। अत्र **माया**शब्दो हि सङ्कल्पपरः, कृपापरो वा। माया वयुनमिति पर्यायः। सङ्कल्पश्च वयुनविशेषः। कृपा च तस्यैव विततिः। कृपापर्यायता च मायाशब्दस्य ज्ञायते—"माया दम्भे कृपायां चे"ति कोषात्। सङ्कल्पेन कृपया अवतरामीत्येतत्। स्मर्यते च—"मूर्त्तिं नः पुरुकृपया बभार सत्त्वम्" "कृपयाऽवतीर्य" इत्यादि।

स्मर्यते च वसुदेवसूनोः परब्रह्मत्वम्—"त्रय्या चोपनिषद्भिश्च साङ्ख्ययोगैश्च सात्वतैः। उपगीयमानमाहात्म्यं हरिं साऽमन्यतात्मजम्" "स वा अयं सख्यनुगीतसत्कथो वेदेषु गुह्येषु च गुह्यवादिभिः" "कृष्णं च तत्र छन्दोभिः स्तूयमानं सुविस्मिताः" "स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनि" "तं ब्रह्म परमं साक्षाद्भगवन्तमधोक्षजम्। मनुष्यदृष्ट्या दुष्प्रज्ञा मर्त्यात्मानो न मेनिरे" "नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने" "निरञ्जनं निर्गुणमद्वयं परं त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहम्" "शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम्" "एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः" इत्यादि।

अवतारस्यावज्ञां ये कुर्वन्ति तानासुरप्रकृतीनाह भगवान्—"अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्। परं भावमजानन्तो मम भूतमहेश्वरम्॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥ तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव

---

जैमिनिः" "अन्यार्थं तु जैमिनिः प्रश्नप्रतिवचनाभ्यामपि चैवमेके" "परं जैमिनिर्मुख्यत्वात्"

---

धिकारं जैमिनिः—मध्वादिषु ब्रह्मविद्यास्वनधिकारं देवानां जैमिनिर्मन्यते। अन्यार्थं तु जैमिनिः प्रश्नप्रतिवचनाभ्यामपि चैवमेके—अन्यार्थं–जीवातिरिक्तब्रह्मप्रतिबोधनार्थमिति जैमिनिराचार्यो मन्यते, प्रश्नप्रतिवचनाभ्यां चैवं विज्ञायत इति। अपि चैवमेके–एवमेवैके शाखिनः पठन्ति। परं जैमिनिर्मुख्यत्वात्—परंब्रह्मोपासीनानर्चिरादिर्नयतीति जैमिनिराचार्यो मन्यते। कुतः? मुख्यत्वात्–

योनिषु ॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि । मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम् ॥ अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ नाहं प्रकाशः सर्वस्य योगमायासमावृतः । मूढोऽयं नाभिजानाति लोको मामजमव्ययम्" इत्यादि ।

परस्य ब्रह्मणः कृष्णस्य तदवताराणां निराकारत्वनिर्गुणत्वप्रतिपादकशास्त्राणामनादरणीयत्वोक्त्या मुक्तानां निराकारत्वनिर्गुणत्वप्रतिपादकशास्त्रमप्यनादरणीयमिति व्यज्यते । तथाच मुक्तानां परमात्मना सह परमसाम्यस्यैव मुक्तिस्वरूपत्वमभिप्रेत्य कल्याणगुणयोगो दिव्यविग्रहयोगश्च श्रुत्या स्मृत्या च प्रतिपाद्यते—"तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" "अपहतपाप्मा विजरो विमृत्युर्विशोकोऽजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" "कामान्नी कामरूप्यनुसञ्चरन्" "स स्वराड् भवति" "स एकधा भवति द्विधा भवति त्रिधा भवति" "सूक्ष्मदेहं परित्यज्य सूर्यकोटिसमप्रभम् । शरीरं दिव्यमासाद्य भाति चारुचतुर्भुजम्" "देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्" प्राकृतैर्देहेन्द्रियासुभिर्हीनानाम् । दिव्यदेहानामित्यर्थः । "तं वीक्षमाणेन च तेन दृष्टा भक्तोत्तमाः श्रीपुरुषोत्तमस्य । अतीन्द्रिया निर्गतसर्वपापा निष्पन्दहीनाश्च सुगन्धिनश्च । द्विबाहवः केऽपि चतुर्भुजाश्च श्वेताश्च केचिन्नवनीरदाभाः ॥ पद्मच्छदाक्षाः सममानगात्राः सुरूपदिव्यावयवाः सुसाराः" "दिव्यं कृष्णस्य रूपं भवति च सततं तस्य लोकोऽपि दिव्यो दिव्या भोगाश्च भोग्यान्यपि च भगवतस्तस्य दिव्यानि सन्ति । दिव्या वै पार्षदाश्च प्रकटितनूतनोः शक्तयस्तस्य दिव्या दिव्या भक्ताश्च सर्वे जगति यदुपतेः सन्ति दिव्याः क्रियाश्च" इत्यादि ।

तस्मात् श्रीकृष्णस्य परब्रह्मत्वसकलकल्याणगुणाकरत्वहेयप्रत्यनीकत्वदिव्यविग्रहवत्त्वप्रतिपादकानि यानि शास्त्राणि, यानि च तदवताराणां हेयप्रत्यनीकत्वकल्याणगुणवत्त्वदिव्यविग्रहवत्त्वप्रतिपादनपराणि, यानि च मुक्तानां परब्रह्मधा-

---

"ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" इत्यादिषु । यश्चातिवादो जैमिनेः स तु कर्मणि श्रद्धासम्पादनाय । तदिदं वेदार्थसङ्ग्रहे सेश्वरमीमांसायां च स्फुटम् ।

---

"तत्पुरुषोऽमानवः स एनान्ब्रह्म गमयती"ति ब्रह्मशब्दस्य परस्मिन्नेव ब्रह्मणि मुख्यत्वात् । ब्राह्मेण जैमिनिरुपन्यासादिभ्यः—मुक्तस्य ब्राह्मेण रूपेणाविर्भाव इति जैमिनिराचार्यो मन्यते । कुतः ? "य आत्मा अपहतपाप्मे"त्यादिनोपन्यासादिभ्यः ।

मप्राप्तिकल्याणगुणयोगदिव्यविग्रहयोगप्रतिपादकानि शास्त्राणि, तान्येव मदाश्रितैर्मान्यानि न त्वन्यानीत्याशयः। इत्यलं विस्तरेण।

तत्तद्बीजसमुद्भवं जगदिदं, नास्तीश्वरः कश्चिदित्याहुः केचन पूर्वकर्मजमिदं कर्त्ता तु नेतीतरे। अन्ये रागिणमीश्वरं तमपरे नित्योज्झितं मायया लोकानां प्रभवाप्ययत्वरहितं मुक्तैरगम्यं जगुः॥ १॥ तं मायाशबलं परे जगदिरे रूपं परब्रह्मणः केचिद्ब्रह्म परं यदेव सकलैर्दिव्यैर्गुणैर्भूषितम्। सोऽयं सर्वनिदानमीश इतरः कृष्णादिति त्वूचिरे केचिद्ब्रह्म कदापि नावतरति क्वापीति चाचक्षते॥ २॥ व्याजह्रुः कतिचित्परस्य पुरुषस्यैवावतीर्णस्य यद्रूपं तत्तु न मायिकादितरदित्याहुर्गुणैकाश्रयात्। एतेषां कुदृशां कुतर्ककलिता वादा जगन्मोहनाः सत्त्वैकप्रचुरैस्त्रयीपथरतैर्ग्राह्या नचाप्यंशतः॥ ३॥॥ २९॥

ये च राहुमीमांसकास्ते तु सूत्रकृतस्तात्पर्यानभिज्ञा इति तेषां प्रक्रियाऽनादरणीयेति व्यज्यते॥ २९॥

निर्विशेषचिन्मात्रं ब्रह्मैव सत्यमन्यन्मिथ्येति समर्थयद्भिः परमार्थतः श्रीकृष्णादीनामनभ्युपगमात्तेषां प्रबन्धोऽप्यनादरणीय इति भगवतो हार्दमत्र व्यज्यत इत्याह—ये चेति। राहुमीमांसकाः—शाङ्कराः॥ २९॥

---

**अगालितं न पातव्यं पानीयं च पयस्तथा।**
**स्नानादि नैव कर्त्तव्यं सूक्ष्मजन्तुमयाम्भसा॥ ३०॥**

अगालितमिति। गालितं–वस्त्रपूतं, तद्भिन्नमगालितम्। पानीयं–उदकमात्रम्। न पातव्यं–न पेयम्। "वस्त्रपूताः पिबेदप" इति सामान्यविधेः। "मत्स्यग्राहस्य यत्पापं षण्मासाभ्यन्तरे भवेत्। एकाहे तत्समं ज्ञेयमपूतं यो जलं पिबेत्। अपूतजलपाने हि मांसभक्षणसम्भवात्। पुराणे दोष इत्युक्तः पेयं तद्गालितं जलम्।" "दृष्टिपूतं न्यसेत्पादं वस्त्रपूतं जलं पिबेत्। सत्यपूतां वदेद्वाचं मनःपूतं समाचरेत्" "चर्मवारि भवेन्मांसं मांसं तोयमगालितम्। ताम्रपात्रे

प्रायस्तोयप्रभृतिषु पानीयेषु सूक्ष्मजन्तूनामदृश्यतया सन्निधानादगालितं पिबतोऽवश्यम्भावि महदवद्यं सूक्ष्मजन्त्वशनरूपमिति तत्परिहाराय विशिष्याऽऽदिशति—अगालितमिति। पानीयमिति वारि लक्ष्यते। पय इति सूक्ष्मजन्तुसम्भावनास्पदस्य घृतादेरप्युपलक्षकम्। त-

पयसोऽपि पानयोग्यत्वादाह—वारि लक्ष्यत इति। पानीयपयसोरेव मूल उक्तत्वात् घृतादे-

स्थितं गव्यं सुरातुल्यं प्रकीर्तित"मित्यादिस्मृतिभ्योऽगालितोदकपानस्य मांसभक्षणतुल्यदोषत्वाच्च । अत्र ताम्रपात्रे गव्यनिषेधो घृतेतरगव्यविषय इति ज्ञेयम् । तदुक्तं स्मृतिसागरे—"गव्यं च ताम्रपात्रस्थं मद्यतुल्यं घृतं विने"ति । तथा दुग्धादेरपि क्वचित्प्रतिप्रसव उक्तस्तत्रैव—"होमे देवार्चने दोहे पाके च परिवेषणे । यतीनां भोजने चैव ताम्रे गव्यं न दुष्यती"ति । "पयोऽनुद्धृतसारं च ताम्रपात्रे न दुष्यती"ति च ।

तथा—पयः—दुग्धमात्रं चागालितं न पातव्यम्, तत्र क्वचिद्वाद्यङ्गच्युतरोमादिसम्भवात्तद्युक्तपयःपाने प्रायश्चित्तस्मरणात् । यथाह प्रचेताः—"नखकेशरोपमृल्लोष्टानामकामतः सकृद्भक्षणेऽहोरात्रमभोजनाच्छुद्धि"रिति । चकारात् घृतस्यापि ग्रहणम् । तत्राप्युष्णीकृत्य गालिते क्वचित्केशपिपीलिकामशकतत्कांशादिहेयदर्शनात् । "कृमिकीटपिपीलिकाजलौकःपतङ्गास्थिप्राशने गोमूत्रगोमयाहारस्त्रिरात्रेण शुद्ध्यती"ति मिताक्षरायां हारीतेन तद्भक्षणे प्रायश्चित्तोक्तेः । "रसानां वह्निगालना"दिति तच्छुद्धिविधानाच्च ।

किञ्च—सूक्ष्मजन्तुमयेन—बहुसूक्ष्मयादोवता, अम्भसा—जलेन । प्राचुर्यार्थे मयट् । स्नानादि कर्म नैव कर्त्तव्यम् । आदिशब्दात्स्नानाङ्गतर्पणादेरुदककर्मणो हस्तपादवस्त्रप्रक्षालनपात्रमज्जनादेश्च ग्रहणम् । अन्यथा तत्र सूक्ष्मजन्तुनाशनेनाऽहिंसाख्यपरमधर्मे दूषणापत्तेः । एतच्च सर्वैरपि वर्णाश्रमिभिर्मदीयैर्बुद्धिपूर्वकं कदाचिदपि न कर्त्तव्यमिति सर्वत्र योज्यम् । तथा कायिको दुष्कर्मनिषेधो वाचिकमानसिकदुष्कर्मनिषेधस्याप्युपलक्षणमित्यपि ज्ञेयम् । "शारीरजैः कर्मदोषैर्याति स्थावरतां नरः । वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिता"मिति मनुना वाचिकमानसिकदुष्कर्मणामपि तिर्यग्योन्यन्त्यजयोनिप्राप्तिहेतुत्वोक्तेः ॥ ३० ॥

---

थाच मनुः—"वस्त्रपूतं जलं पिबेत्"इति । "मत्स्यग्राहस्य यत्पापं षण्मासाभ्यन्तरे भवेत् । एकाहे तत्समं ज्ञेयमपूतं यो जलं पिबेत् ॥" इत्यादि स्मर्यते चान्यत्र । तथेति निषेधान्तरसमुच्चये । सूक्ष्मजन्तुमयाम्भसा—मयडत्र प्राचुर्यार्थे । स्नानादीत्यादिना तोयसाध्यस्य लौकिकस्यालौकिकस्य च कर्मणः सङ्ग्रहः । तत्र स्नानतोऽशुद्ध्यनपगमात्सूक्ष्मतमजन्तूपघातनिष्पत्तेश्च ॥ ३० ॥

---

तथाविधस्यागालितस्यापि प्राशनमनुमतं स्यादित्यत आह—घृतादेरप्युपलक्षकमिति । अगालितस्य प्राशने दोषे प्रमाणमाह—मत्स्येति । आदिशब्दार्थं व्याचष्टे—स्नानादीत्यादिनेति ॥ ३० ॥

**यदौषधं च सुरया सम्पृक्तं पललेन वा।**
**अज्ञातवृत्तवैद्येन दत्तं चाद्यं न तत्क्वचित्॥ ३१॥**

यदिति। यत् औषधं–भैषज्यमपि। सुरया–मदिरया। पललेन–मांसेन वा। सम्पृक्तं–मिश्रितं स्यात्। संसृष्टमिति पाठान्तरेऽप्ययमेवार्थः। तत्क्वचित्–कदाचिदपि नाद्यं–न भक्षणीयम्। पुनःसंस्कारापत्तेरिति भावः। "अज्ञानात्प्राश्य विण्मूत्रं सुरासंसृष्टमेव वा। पुनःसंस्कारमर्हन्ति त्रयो वर्णा द्विजातय" इति मनुस्मृतेः। "प्राणात्यये तथाऽज्ञानादाचरन्मदिरामपि। आदेशितो धर्मपरैः पुनःसंस्कारमर्हती"ति शान्तिपर्वणि राजधर्मोक्तेश्च। धर्मपरैः–चिकित्सकैरिति तट्टीका। "मांसमिश्रागदप्राशे तप्तकृच्छ्रं विशोधन"मिति मरीचिस्मृतेश्च। तथा न ज्ञातं वृत्तं–आचारो यस्य सोऽज्ञातवृत्तः स चासौ वैद्यश्च–भिषक् तेन दत्तं यदौषधं तच्च नाद्यम्। तत्रापि क्वचिदभक्ष्याशुचिद्रव्यसम्पर्कसम्भवादिति भावः। सम्यक्परिचितवैद्यस्यैवौषधं ग्राह्यं नान्यस्येत्यर्थः॥ ३१॥

---

यत्रौषधे सुरादिसंसर्गः समुपलभ्यते, शङ्क्येत वा न तदद्यादित्याह—**यदौषधं चेति**। यद्यप्योषधीभ्यः सम्भूतं मात्रया सुरया मांसेन वा स्पृष्टं नाद्यं तत्। यस्य भिषजो वृत्तं न ज्ञायते, तद्दत्त औषधे सुरादिसम्भावनया तदपि नाद्यम्। यदपि स्मृतिषु व्याध्यभिभवे मांसाभ्यनुज्ञानम्, तदपि कालभेदमधिकारिभेदमवलम्ब्येति तन्निवृत्तिरेवोत्तमधर्म इति स पक्षो नास्मदीयैरादरणीय इति भावः। एतेन—"अन्नाभावेन व्याध्यभिभवेन वा मांसभक्षणमन्तरेण यदा प्राणबाधा भवति तदा मांसं नियमेन भक्षयेत्" इति मिताक्षरावचनं कथमिति शङ्का परास्ता॥ ३१॥

---

सुरादीत्यत्रादिपदात्पललपरिग्रहः। अज्ञातवृत्तवैद्येनेत्यनेन विवक्षितमाह—**शङ्क्येत वेति**। चकारसमभिव्याहृतस्यौषधशब्दस्य स्वारस्यमाह—**यद्यप्योषधीभ्यः सम्भूतमिति**। तेन स्वतोऽदुष्टता व्यज्यते। अज्ञानवृत्तदत्तस्यानद्यतायां बीजमाह–**सुरादिसम्भावनयेति**। **कालभेदमिति**। युगभेदमित्यर्थः। प्राणरक्षणार्थं स्वस्त्यभ्यनुज्ञेति शङ्कायामाह—**अधिकारिभेदमिति**। ये पुनरमुमुक्षवः शरीररक्षणपरास्तान्प्रत्यस्तु नाम क्वचिदभ्यनुज्ञा, ये पुनर्मुमुक्षवः परमात्मन्याहितभरास्तदेकोपायनिष्ठाः न तान्प्रति तदनुज्ञा, ते हि कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिमिति भावः। **उत्तमो धर्म इति**। भगवदेकोपायनिष्ठैः सात्त्विकाग्रेसरैरुपसेव्यत्वादुत्तमो धर्म इत्यर्थः। **स पक्ष इति**। व्याध्यभिभवे मांसभक्षणाभ्यनुज्ञानपक्ष इत्यर्थः। **अस्मदीयैरिति**। उत्तमाधिकारिभिरित्यर्थः। **एतेनेति**। उत्तमाधिकारिपरतया व्याख्यानेनेत्यर्थः॥ ३१॥

---

**स्थानेषु लोकशास्त्राभ्यां निषिद्धेषु कदाचन ।**
**मलमूत्रोत्सर्जनं च न कार्यं ष्ठीवनं तथा ॥ ३२ ॥**

स्थानेष्विति । लोकश्च शास्त्रं च ताभ्यां निषिद्धेषु स्थानेषु । मलस्य—पुरीषादेर्मूत्रस्य चोत्सर्जनं—त्यागः कदाचन न कार्यम् । तथा ष्ठीवनं—नासामलत्यागः, तच्च न कार्यम् । तत्र लोकनिषिद्धं परगृहाङ्गणं राजकीयस्थानं शस्त्रपाणियवनस्थानादि । शास्त्रनिषिद्धंयथा स्कान्दे—"न गोव्रजे न वल्मीके नोदके न च भस्मनि । न गर्त्तेषु ससत्त्वेषु न तिष्ठन्न च वर्त्मनि । न गोविप्रार्कचन्द्राग्निगुरुस्त्रीदेवसन्मुखः । न फालकृष्टभूभागे नदीतीरे च सैकते । न जीर्णदेवतागारे न रथ्यायां न संस्कृते । नाप्रावृतशिराः कुर्यान्मलमूत्रविसर्जन"मिति । एतद्भिन्ने स्थाने कुर्यादित्यर्थः । अत्र मूत्रष्ठीवनयोः पृथग्ग्रहणं तु तयोर्मुहुरुद्गमसम्भवात्कचित्प्रमादवशतो निषिद्धस्थाने तत्त्यागो माभूदिति विशेषशिक्षार्थमवधेयम् ॥ ३२ ॥

---

यत्र मलोत्सर्गे लौकिकः प्रत्यवायो राजदण्डादिः, अलौकिकः प्रत्यवायो वा नारकस्तत्र स न कार्य इत्याह—स्थानेष्विति । राजादितो निषिद्धं लोकनिषिद्धम् । "न गोव्रजे न वल्मीके नोदके न च भस्मनि" इत्यादिना निषिद्धं शास्त्रतो निषिद्धम् । तेषु स्थानेषु मलमूत्रोत्सर्जनं न कार्यम् । अत्र मलशब्दो गोबलीवर्दन्यायेन मलविशेषपरः । तथेति चार्थे । ष्ठीवनं च न कार्यं—नासामलादित्यागोऽपि न कार्यः । जानतोऽपि स्थलविशेषं वासनया सपदि सर्वत्र ष्ठीवनसम्भावनया तत्परिहार्यतायै ष्ठीवनं तथेति विशिष्य निर्देशः ॥ ३२ ॥

---

अनिष्टसाधनत्वं प्रत्यवायपदप्रवृत्तिनिमित्तमाकलय्योच्यते—लौकिकः प्रत्यवायो राजदण्डादिरिति । ननु मूत्रेत्येतत्पुनरुक्तं मलशब्देनैव तत्सङ्ग्रहादित्यत आह—अत्रेत्यादिना । ननु ष्ठीवनस्यापि मलोत्सर्जनरूपतया ष्ठीवनं तथेति विशिष्य निर्देशो व्यर्थ इत्यत आह—जानतोऽपीत्यादिना ॥ ३२ ॥

---

**अद्वारेण न निर्गम्यं प्रवेष्टव्यं न तेन च ।**
**स्थाने सस्वामिके वासः कार्योऽपृष्ट्वा न तत्पतिम् ॥ ३३ ॥**

अद्वारेणेति । अल्पं द्वारमद्वारं—क्वचिदापत्काले गुप्तनिर्गमनागमनार्थं गृहे स्थापितं द्वारं, तेन । अल्पार्थे नञ्समासः । "नञभावे निषेधे च सरूपार्थे-

---

अद्वारेण प्रवेशादेर्दृष्टानर्थस्य पदे पदे विदुषामपि सम्भावितत्वाद्विशिष्य तन्निषेधः क्रियते—अद्वारेणेति । अद्वारेण—द्वारव्यतिरिक्तप्रदेशेन प्राकाराद्युल्लङ्घनेन वातायनविवरादिना वा ।

---

पदे पदे विदुषामपि सम्भावितत्वादिति । एतेन परस्मै नात्यनर्थावहत्वादद्वारेण प्रवेशादेर्विशिष्य निषेधो नातिप्रयोजक इति शङ्का परास्ता । गृह इत्यनिर्दिश्य स्थान इति निर्देशस्याशयमाह—

ऽप्यतिक्रमे। ईषदर्थे च सादृश्ये तद्विरुद्धतदन्ययो"रिति विश्वः। यद्वा—अद्वारेणेति। द्वारं विनैव वृतिप्राकारभित्त्युल्लङ्घनादिना। अमार्गेणेति पाठे कापथेनेत्यर्थः। न प्रवेष्टव्यं–प्रवेशो न कर्त्तव्यः। तेन–अद्वारेण न निर्गम्यं–बहिर्निर्गमनमपि न कर्त्तव्यम्। "नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्कचि"दिति याज्ञवल्क्यस्मृतेः। "अद्वारेण च नातीयाद्ग्रामं वा वेश्म वा वृत"मिति मनुस्मृतेश्च। "अद्वारेण न गन्तव्यं स्ववेश्मपरवेश्मनो"रिति काशीखण्डोक्तेश्च।

तथा सस्वामिके–विद्यमानरक्षके। स्थाने–धर्मशालायामपि। तत्पतिं–तस्य स्थानस्य यः पतिस्तम्। अपृष्ट्वा–अनापृच्छ्य। वासः–निवासः। एकरात्रमपीति शेषः। न कार्यः–न कर्त्तव्यः। अन्यथा रुष्टतत्स्वामिकृतभर्त्सननिष्कासनादिना स्वस्यापि कोपोत्पत्तिः स्यात्ततो महान्क्लेशश्चेत्यर्थः। "परशय्यासनोद्यानगृहयानानि वर्जयेत्। अदत्तान्यग्निहीनस्य नान्नमद्यादनापदि"इति योगीश्वरस्मरणात्। अदत्तानि–तत्स्वाम्यननुज्ञातानीति मिताक्षरा। यद्वा—वेति पृथक्पदं चार्थे। आसनमासः–उपवेशनम्। माध्याह्निकातपापनयनाद्यर्थं कश्चित्कालमासनमपीत्यर्थः। तत्पतिमपृष्ट्वा न कार्यः। प्रच्छनं चात्र स्वासनाद्यभ्यनुज्ञानस्य तज्जात्यादेश्चेति ज्ञेयम्। अन्यथा क्वचित्तस्य हीनजातित्वे सति तदनुज्ञयापि तत्स्थाने स्वच्छत्वसुच्छायत्वादिदर्शनेनोपवेशनादौ कृते जनोपहासापवादतत्प्रायश्चित्तापत्तेः। अत्र सस्वामिक इत्युक्तेरस्वामिकस्थानेषु न दोषः। तान्याह वसिष्ठः—"वनानि नद्यो गिरयस्तीर्थान्यायतनानि च। देवखाताश्च गर्त्ता ये तेषु स्वामी न विद्यते" इति॥ ३३॥

---

तथाच मनुः—"अद्वारेण च नातीयाद्ग्रामं वा वेश्म वा वृतम्। रात्रौ च वृक्षमूलानि दूरतः परिवर्जयेत्" इति। याज्ञवल्क्यश्च—"नाचक्षीत धयन्तीं गां नाद्वारेण विशेत्कचित्" इति।

एवं स्वाम्यनुज्ञां विना क्षणमपि तद्गृहे विश्रान्तिनिमित्तमपि वासो न कार्य इत्याह—स्थान इति। स्थानं–गृहं वान्यदारामादिकं वा, क्वचिदप्युपवेशनयोग्यस्थानमात्र इत्यर्थः। पत्युरप्रधानकर्मता। अवकाशप्रदानस्य च प्रधानकर्मताऽर्थसिद्धा। यद्वा—पतिमिति प्रधानकर्म। लोकतस्तत्पतिस्वरूपमज्ञात्वा वासो न कार्य इत्यर्थः। अन्यथा स्वामिदोषे स्वस्य तत्रावासेन दोषप्रसङ्गादिति भावः॥ ३३॥

---

गृहं वाऽन्यदारामादिकं वेति। पत्युः प्रधानकर्मताव्यावृत्तये आह—पत्युरप्रधानकर्मतेति। अन्यथाऽस्य स्थानस्य कः पतिरित्यविचार्य वासो न कार्य इति भ्रमः स्यात्। प्रधानकर्मत्वं कस्येत्यत्राह—अवकाशप्रदानस्येति। पत्युः प्रधानकर्मत्वमाश्रित्य भावमाह—यद्वेति॥ ३३॥

**ज्ञानवार्ताश्रुतिर्नार्या मुखात्कार्या न पूरुषैः ।**
**न विवादः स्त्रिया कार्यो न राज्ञा नच तज्जनैः ॥ ३४ ॥**

ज्ञानेति । पूरुषैः—नृभिः । नार्याः—स्त्रिया मुखात् । ज्ञानं च वार्त्ताश्च तासां श्रुतिः—श्रवणम् । तत्र ज्ञानमात्मपरमात्मस्वरूपनिरूपणलक्षणम्, "अमानित्वमदम्भित्व"मित्यादिना श्रीभगवद्गीतोक्तलक्षणं वा । वार्त्तास्तु भगवत्सम्बन्धिन्यः, राजादिवृत्तान्ताश्च । यद्वा—ज्ञायते भगवत्स्वरूपाद्यनेनेति ज्ञानं—ज्ञानशास्त्रं तत्सम्बन्धिन्यो वार्त्ता इति । वार्त्ताशब्दः कथागुणगायनादेरप्युपलक्षणम् । "न गायेत्सह नारीभिर्न स्वपेन्नाध्वनि व्रजेत् । ताभ्यः कथा न शृणुयाच्छ्रावयेत्ता न चैकला" इति धर्मसङ्ग्रहोक्तेः । न कार्या—नैव कर्त्तव्या । तच्छ्रवणासक्तौ स्त्रीप्रसङ्गजन्यदुर्भेद्यबन्धनापत्तेरिति भावः । तदुक्तं श्रीमद्भागवते—"न तथास्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः" "बलं मे पश्य मायायाः स्त्रीमय्या जयिनो दिशाम् । या करोति पदाक्रान्तान्भ्रूविजृम्भेण केवलम्" "शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् । हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टित"मिति । स्त्रीप्रसङ्गश्च विदुषामपि बन्धक इत्यप्युक्तं तत्रैव—"एवं स्त्रिया जडीभूतो विद्वानपि विदग्धये"त्यादि । वैदुरिके चोक्तम्—"यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता । मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इवे"ति ।

किञ्च—स्त्रियेति जात्यभिप्रायेणैकवचनम् । स्त्रीभिः सह विवादः—विरुद्धो वादः पुरुषैर्न कार्यः । विवादे क्रियमाणे हि तासां मूर्खत्वादिस्वाभाविकदुर्गुणवशतयाऽनर्थोत्पत्तेः । "अनृतं साहसं माया मूर्खत्वमतिलोभिता । अशौचं निर्दयत्वं च स्त्रीणामेतत्स्वभावज"मिति श्रीमहादेवस्तद्दुर्गुणानाह । "शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णतां तथा । गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषित"इति वाल्मीकीयेऽगस्त्योक्तिश्च । तथा राज्ञा—नृपेण, तज्जनैः—राजपुरुषैश्च सह विवादो न कर्त्तव्यः । तेषां प्रबलतयान्यदीयवाक्यग्रहणाभावादिति भावः । चकारान्मा-

---

ज्ञानवादोऽपि स्त्रीभ्यो न श्रोतव्यः, तथा सति तत्सङ्गेनानर्थापत्तेरित्यभिप्रायमाह—ज्ञानवार्त्तेति । ज्ञायत आत्मतत्त्वमनेनेति ज्ञानं—आत्मतत्त्वावबोधकं वचनम् । वार्त्ता—प्रवृत्तिः लौकिकी

---

ज्ञानवाद इति । ज्ञानप्रयोजको वाद इत्यर्थः । ज्ञानस्य श्रवणकर्मत्वाप्रसक्तेस्तन्निषेधो न घटत इत्यतो ज्ञानशब्दं व्याचष्टे—ज्ञायत आत्मतत्त्वमनेनेति ज्ञानमिति । आत्मतत्त्वावबोधकं वचन

त्रादिग्रहणम् । "स्त्रीभी राज्ञा च तत्पुम्भिः पोष्यैश्चातिथिमातुलैः । वृद्धबालातुराचार्यैर्वैद्यैर्न विवदेत्क्रुधे"ति बृहन्मनूक्तेः । वैद्यैः—वेदवेदिभिर्भिषग्भिश्च ॥ ३४ ॥

वृत्तान्तः, तस्योभयस्य श्रवणं नार्या मुखतो न कार्यम् । अत्र वार्त्ताग्रहणं दृष्टान्तार्थम् । यथा लोकवार्त्ताश्रवणं नारीमुखादनर्थावहं तथा ज्ञानश्रवणमप्यनर्थायैव, न ज्ञानमिति कश्चन विशेषः, सङ्गदोषस्याविशेषादितिभावः । सङ्गदोषेषु स्त्रीसङ्गो हि प्रबलो मोहकः प्रथितः । पुरुषैरिति मध्यमणिन्यायेनोभयतः सम्बध्यते । पुरुषैः स्त्रिया सह विवादो न कार्यः, न कार्यश्च राजादिभिः, अत्यन्तानर्थापत्तेरिति भावः ॥ ३४ ॥

चेन्नारीमुखतो न श्रोतव्य, वार्ताश्रवण दूरतोऽपास्तमिति ज्ञानश्रवणनिषेधेन सह वार्ताश्रवणनिषेधकरणमनुचितमित्याशङ्कायामाह—अत्रेति ॥ ३४ ॥

---

**अपमानो न कर्त्तव्यो गुरूणां च वरीयसाम् ।**
**लोके प्रतिष्ठितानां च विदुषां शस्त्रधारिणाम् ॥ ३५ ॥**

**अपमान** इति । गुरूणां—आचार्यादीनाम् । तानाह देवलः—"आचार्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः श्वशुरस्त्राता मातामहपितामहौ । वर्णश्रेष्ठः पितृव्यश्च पुंस्येते गुरवो मता" इति । तथा वरीयसाम्—अतिशयेन वराः—सद्गुणैः श्रेष्ठा वरीयासस्तेषाम् । यद्वा—ऊर्णुञ् आच्छादने इत्यस्मात् महति ह्रस्वश्चेति कुप्रत्ययो नुलोपो ह्रस्वश्चेत्युरुशब्दो महद्गुणवाचकः, ततो मतुपि उरुगुणयुक्ता उरवः, महान्तः पुरुषा इत्यर्थः, गुणवचनेभ्यो मतुपो लुगिष्ट इति मतुपो लुक् ततोऽतिशयार्थे ईयसुन्, अतिशयेनोरवो वरीयांसस्तेषां प्रख्यातसद्गुणानां महापुरुषाणाम् । प्रियस्थिरेत्युरुशब्दस्य वरादेशः । ते चोक्ता भगवता श्रीऋषभदेवेन—"महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां सङ्गिसङ्गम् । महान्तस्ते समचित्ताः प्रशान्ता विमन्यवः सुहृदः साधवो ये"इति । "कृपालुरकृतद्रोह" इत्यादिप्रागुक्तभगवदुक्तलक्षणसम्पन्नाः साधवः । तथा—लोके प्रतिष्ठिता-

इह परतश्चानर्थावहं गुर्वाद्यवमाननं न कर्त्तव्यमित्याह—अपमान इति । गुरवः—आचार्यादयः । तथाच वचनम्—"आचार्यश्च पिता ज्येष्ठो भ्राता चैव महीपतिः । मातुलः-

गुरुशब्द व्याचष्टे—आचार्यादय इति । आदिशब्देन बहुवचनार्थो व्याख्यातः । आचार्यादीना गुरुशब्दवाच्यत्वे प्रमाणमाह—तथाच वचनमिति । वेदाङ्गविज्ञान वेदार्थज्ञानैकप्रयोजनकमि-

नां—राज्ञां राजकीयानां च, उत्कृष्टजातिकुलाचारादिभिः प्रख्यातानां, जात्यादिहीनत्वेऽपि सद्गुणैर्विपुलधनादिभिर्वा लब्धप्रतिष्ठानां च । तथा—विदुषां—अधीतवेदसच्छास्त्रपुराणानां ब्राह्मणादीनाम् । तथा—शस्त्रधारिणां च । अपमानः—मानभङ्गो हेलनं च न कर्त्तव्यः । तत्करणे हि स्वस्य सर्वस्वनाशापत्तेः । सर्वदा तेषां बहुमान एव कर्त्तव्य इत्यर्थः । तदुक्तं याज्ञवल्क्यस्मृतौ—"विप्राहिक्षत्रियात्मानो नावज्ञेयाः कदाचन" । तथा "विद्याकर्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् । एतैः प्रभूतैः शूद्रोऽपि वार्धके मानमर्हती" ति । श्रीभागवते चोक्तम्—"आयुः श्रियं यशो धर्मं लोकानाशिष एव च । हन्ति श्रेयांसि सर्वाणि पुंसो महदतिक्रमः" इति । "यस्त्विह वा आत्मसम्भावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमतो वरीयसो न बहु मन्येत स मृतक एव मृत्वा क्षारकर्दमे निरयेऽवाक्शिरा निपतति ततो दुरन्ता यातना ह्यश्नुत" इति च । स्कान्दे च—"सतामतिक्रमादेव पुण्यानां महतामपि । सद्यः क्षयः स्यात्सर्वेषामायुषः सम्पदामपि" इति । आनुशासनिकपर्वणि च—"न जातु त्वमिति ब्रूयादापन्नोऽपि महत्तरम् । त्वङ्कारो वा वधो वेति विद्वत्सु न विशिष्यत" इति । "त्वङ्कारं नामधेयं च ज्येष्ठानां परिवर्जये"दिति च । "त्रीन्कृशान्नावजानीयाद्दीर्घमायुर्जिजीविषुः । ब्राह्मणं क्षत्रियं सर्पमेत आशीविषास्त्रय" इति च । गुरुगीतायां च—"हुङ्कारेण न वक्तव्यं प्राज्ञशिष्यैः कदाचन । गुरोरग्रे न वक्तव्यमसत्यं च कदाचन ॥ यो वै हुङ्कृत्य तुङ्कृत्य गुरुं निर्जित्य वादतः । अरण्ये निर्जले देशे स भवेद्ब्रह्मराक्षस" इति । श्रीभागवते च—"आचार्यं मां विजानीयान्नावमन्येत कर्हिचित् । न मर्त्यबुद्ध्याऽसूयेत सर्वदेवमयो गुरु" रिति । "यैः शिष्यैस्तु सदाऽऽराध्या गुरवो ह्यवमानिताः । पुत्रमित्रकलत्रादिसम्पद्भ्यः प्रच्यवन्ति ते" इति । बृहस्पतिश्चाह—"तपस्विनं भुजङ्गं च शस्त्रपाणिं पतिव्रताम् । वाचा कोपयतः पुंसो मरणं सद्य एव ही"ति ।

एतच्चापमानानाचरणमुपलक्षणं पथिदानादेरपि । तदुक्तमानुशासनिकपर्वणि—"पन्था देयो ब्राह्मणाय गोभ्यो राजभ्य एव च । वृद्धाय भारतप्ताय नारीभ्यो

---

श्वशुरस्त्राता मातामहपितामहौ ॥ वर्णश्रेष्ठः पितृव्यश्च पुंस्येते गुरवो मताः ।" इति । वरीयांसः—वयोवृद्धादिभिः । लोके प्रतिष्ठिताः—धनादिना, ते च राजपरिजनादयः । विदुषः—वेदार्थविदः ।

---

सत्यपि वेदार्थविज्ञाने तदङ्गमात्रविज्ञानमप्यज्ञानमेवेत्यभिप्रेत्य विद्वांसः—वेदार्थविद इति व्याख्यातम् ।

दुर्बलाय चे" ति । वृद्धशब्देन वयोवृद्धास्तपोवृद्धा विद्यादिगुणवृद्धा धनवृद्धाश्च ग्राह्याः । याज्ञवल्क्यश्चाह—"वृद्धभारिनृपस्नातस्त्रीरोगिवरचक्रिणाम् । पन्था देयो नृपस्तेषां मान्यः स्नातश्च भूपते" रिति । स्नातः–विद्यास्नातको व्रतस्नातक उभयस्नातकश्च । वरः–विवाहोद्यतः । चक्री–शाकटिकः । चकारान्मत्तोन्मत्तप्रव्रजितादिग्रहणमिति मिताक्षरा ॥ ३५ ॥

---

शस्त्रपाणयः–राजभटाः । एतेषामवमाननं हि इह वा परत्र वोभयत्र वा यथासम्भवमनर्थायेति न तत्कार्यम् । सुप्रसिद्धत्वादीदृशेऽर्थे न प्रमाणोपन्यासाय प्रयतामहे ॥ ३५ ॥

---

शस्त्रपाणय इत्यस्य विवक्षितमर्थमाह—राजभटा इति ॥ ३५ ॥

---

**कार्यं न सहसा किञ्चित्कार्यो धर्मस्तु सत्वरम् ।**
**पाठनीयाऽधीतविद्या कार्यः सङ्गोऽन्वहं सताम् ॥ ३६ ॥**

कार्यमिति । किञ्चित्–किमपि कर्म । सहसा–अविचार्य । न कार्यम् । यत्किञ्चित्स्वस्य व्यावहारिकं कर्म कर्त्तव्यं भवेत्तत्स्वबुद्ध्या सम्यग्विचार्य सत्पुरुषानापृच्छ्य वा कर्त्तव्यं न त्वकस्मादित्यर्थः । अविचार्यकारिणां महापदुपलब्धिदर्शनादिति भावः । अत्र भारतीयशान्तिपर्वस्थाचिरकारिब्राह्मणकथा प्रमाणार्थमनुसन्धेया । धर्मस्तु–धर्मकार्यं तु, सत्वरं–शीघ्रं, तादृशबुद्ध्युदयसमकालमेव कार्यः । तस्य परलोकसहायित्वादिति भावः । "धर्म एव सहायी स्यात्परलोके न चेतर" इति स्मृतेः । "धर्मस्य त्वरिता गति"रिति वाक्यात्क्षणान्तरे विपरीतबुद्ध्युदयसम्भवाच्च धर्मकार्ये सहसापि कृते न हानिः । "अजरामरवत्प्राज्ञो विद्यामर्थं च साधयेत् । गृहीत इव केशेषु मृत्युना धर्ममाचरे"दिति स्मृतेः । अत एवोक्तं मोक्षधर्मेष्वपि—"श्वःकार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । नहि प्रतीक्षते मृत्युः कृतं वास्य न वा कृत"मिति ।

---

कार्यं न सहसेति । यच्च लौकिकं कार्यं किञ्चित्कर्त्तव्यं तत्सहसैव न कर्त्तव्यं–अविचार्य न कर्त्तव्यम्, अन्यथाऽनर्थप्रसङ्गात् । धर्मस्तु सङ्कल्पोदयसमसमयमेव कर्त्तव्यः, विलम्बे

---

किञ्चिदित्यनेन विवक्षितमर्थमाह—लौकिकं कार्यमिति । सहसैव न कर्त्तव्यमित्यस्य भावमाह—अविचार्य न कर्त्तव्यमिति । धर्मस्त्वित्यत्र तुशब्दाद्वैलक्षण्यं व्यज्यते, तच्च श्रेयःसाधनतैकये-

तथा अधीता–स्वेन गुरुशुश्रूषाभ्यासादिनाऽधिगता या विद्या सा पाठनीया–सुशीलशिष्येभ्योऽर्पणीया । विद्यादानस्यातिदानत्वादिति भावः । "त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती"ति स्मृतेः । विद्याध्यापकस्य ब्रह्मलोकप्राप्तिरुक्ता दानखण्डे—"पराध्यापनसक्तो हि पुरुषस्तु यदश्नुते । तपस्तत्परमं तस्य ब्रह्मलोकगमं स्मृतम् । दानानामुत्तमं लोके तपसश्च तथोत्तमम् ॥ विद्यादानं महाभागाः ! सर्वकामफलप्रद"मिति । विद्यास्तु चतुर्दश मुख्या उक्ता नन्दिपुराणे—"षडङ्गाश्चतुरो वेदा धर्मशास्त्रं पुरातनम् । मीमांसा तर्कमपि च एता विद्याश्चतुर्दश । आसामवान्तरोत्पन्ना अन्या विद्याः सहस्रश"इति । धर्मशास्त्रं–मन्वादिस्मृतयः । पुरातनं–ब्राह्मपाद्मादिपुराणानि । एतासामपि तिस्रो मुख्या उक्तास्तत्रैव—"आत्मविद्या च पौराणी धर्मशास्त्रात्मिका च या । तिस्र एता मता मुख्याः सर्वदानक्रियाफलै"रिति । तत्राप्येका मुख्येत्युक्तं गरुडपुराणे—"विद्यानां च परा विद्या ब्रह्मविद्या समीरिता । अतस्तद्दानतो राजन् सर्वदानफलं लभे"दिति । पात्र्यपुरुषाश्चोक्ता मनुस्मृतौ—"आचार्यपुत्रः शुश्रूषुर्ज्ञानदो धार्मिकः शुचिः । आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्मत"इति । याज्ञवल्क्यश्चाह—"कृतज्ञाद्रोहिमेधाविशुचिकल्पानसूयकाः । अध्याप्या धर्मतः साधुशक्ताप्तज्ञानवित्तदा"इति । कृतं–उपकारं जानाति–न विस्मरतीति कृतज्ञः । अद्रोही–दयावान् । मेधावी–ग्रन्थग्रहणधारणशक्तः । शुचिः–बाह्याभ्यन्तरशौचवान् । कल्पः–आधिव्याधिरहितः । अनसूयकः–दोषानाविष्कारेण गुणाविष्करणशीलः । साधुः–शीलवान् । शक्तः–शुश्रूषायां समर्थः । आप्तः–बन्धुः । ज्ञानदः–विद्याप्रदः । वित्तदः–अपणपूर्वकमर्थप्रदाता । एते गुणाः समस्ता व्यस्ता वा यथासम्भवं द्रष्टव्या इति मिताक्षरा । नैष्ठिकव्रतिनस्तु विशेषेण पाठनीया इत्युक्तं दानखण्डे भविष्यपुराणे—"सुवर्णं याज्ञिकानां च विद्यां चैवोर्ध्वरेतसाम् । कन्यां चैवानपत्यानां ददतां गतिरुत्तमे"ति । अपरीक्षितः

---

तु धर्मे श्रद्धानिवृत्तेः । अधीतविद्या—अधीता त्रयी पाठनीया । पात्रेऽप्रदत्तायास्तस्या आनर्थक्यात् । यद्वा–अधीता–अधिगता विद्या साङ्गा सा, अन्यतमा वा याऽधिगता सा पात्रे प्रदेयेत्यर्थः । सतां सङ्गोऽन्वहं कार्यः, तस्यैव मुक्तिद्वारत्वात् । तथाच वचनम्—"सतां प्रसङ्गा-

---

पत्तम् । अधीतपदस्याध्ययनकर्मत्वार्थकताममिप्रेत्याह—अधीता त्रयीति । अध्ययनं ह्याचार्योच्चारणा-

कुशिष्यस्तु न पाठनीयः। तथाच श्रुतिः—"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायानृजवेऽव्रताय न मां ब्रूया वीर्यवती तथा स्या"मिति। स्मृतिश्च—"विद्या ब्राह्मणमित्याह शेवधिस्तेऽस्मि रक्ष माम्। असूयकाय मां मादास्तथा स्यां वीर्यवत्तमे"ति। "कुशिष्यमध्यापयतः कुतः सुख"मिति वृद्धचाणक्योक्तेश्च। "विद्यया सह मर्त्तव्यं न तु देया कुशिष्यके। विद्यया लालितो मूर्खः पश्चात्सम्पद्यते रिपु"रिति लघुचाणक्योक्तेश्च।

तथा—अन्वहं–अहन्यहनीत्यर्थः। सतां–स्वधर्मनिष्ठभगवदनन्यभक्तानाम्। "विष्णुभक्ताः स्वधर्मस्थाः प्रशान्तेन्द्रियवृत्तयः। विरक्ता आत्मनिष्ठाश्च ये ते सन्तः प्रकीर्त्तिता"इति विष्णुधर्मोत्तरोक्तेः। सङ्गः–दर्शनवन्दनपूजनवाक्यावधारणादिलक्षणः समागमः कार्यः। "नित्यं सन्तोऽभिगन्तव्या"इति वसिष्ठवाक्यात्, सत्सङ्गस्यैव भगवद्भक्तिहेतुत्वादिति भावः। उक्तं च श्रीमद्भागवते—"भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युत सत्समागमः। सत्सङ्गमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते मतिः" "सतां प्रसङ्गान्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः। तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति" "नष्टप्रायेष्वभद्रेषु नित्यं भागवतसेवया। भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकी"त्यादि। तन्माहात्म्यं च तत्रैवोक्तम्—"तुलयाम लवेनापि न स्वर्गं नापुनर्भवम्। भगवत्सङ्गिसङ्गस्य मर्त्त्यानां किमुताशिषः" "येषां संस्मरणात्पुंसां सद्यः शुद्ध्यन्ति वै गृहाः। किं पुनर्दर्शनस्पर्शपादशौचासनादिभिः" "न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः। ते पुनन्त्युरुकालेन दर्शनादेव साधव"इत्यादि। अत्र सत्सङ्गस्य सर्वसाधारणत्वेऽपि देहदैहिकासक्तिमोचनहेतुत्वाद्गृहस्थाना विशेषतस्तत्कर्त्तव्यताऽवगन्तव्या। तच्चोक्तं तत्रैव—"गृहेष्ववस्थितो राजन्! क्रियाः कुर्वन्गृहोचिताः। वासुदेवार्पणं साक्षादुपासीत महामुनीन्। तत्सङ्गाच्छनकैः सङ्गमात्मजायात्मजादिषु। विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः" "ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान्। सन्त एवास्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः" "निमज्ज्योन्मज्जतां घोरे भवाब्धौ परमायणम्।

---

न्मम वीर्यसंविदो भवन्ति हृत्कर्णरसायनाः कथाः। तज्जोषणादाश्वपवर्गवर्त्मनि श्रद्धा रतिर्भक्ति-

---

भूधारणरूपम्, सैव ग्रथ्या एव सत्, अध्ययनकर्मीभूता विद्या ग्रथ्येवेति भावः। सङ्कोचो न समुचित

सन्तो ब्रह्मविदः शान्ता नौर्दृढेवाप्सु मज्जताम् । अन्नं हि प्राणिनां प्राण आर्त्तानां शरणं त्वहम् । धर्मो वित्तं नृणां प्रेत्य सन्तोऽर्वाग्बिभ्यतोऽरणम् ॥ सन्तो दिशन्ति चक्षूंषि बहिरर्कः समुत्थितः । देवता बान्धवाः सन्तः सन्त आत्माहमेव च ॥" "ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं ये चान्वदः सुतसुहृद्गृहवित्तदाराः । ये त्वब्जनाभ भवदीयपदारविन्दसौगन्ध्यलुब्धहृदयेषु कृतप्रसङ्गाः" "नैषां मतिस्तावदुरुक्रमाङ्घ्रिं स्पृशत्यनर्थापगमो यदर्थः । महीयसां पादरजोऽभिषेकं निष्किञ्चनानां न वृणीत याव"दित्यादि ॥ ३६ ॥

रनुक्रमिष्यति ॥" इति । सत्सङ्गसम्पाद्यं श्रेयो निरवधीति बहुभिरपि वचनैस्तन्माहात्म्यं सम्यग्वक्तुं न पार्यत इति तन्महिमपरवचनानुवर्णनतो विरम्यते ॥ ३६ ॥

इत्यभिप्रायेणाह—यद्वेति ॥ ३६ ॥

---

गुरुदेवनृपेक्षर्थं न गम्यं रिक्तपाणिभिः ।
विश्वासघातो नो कार्यः स्वश्लाघा स्वमुखेन च ॥ ३७ ॥

गुरुदेवेति । गुरुः—स्वस्य श्रीकृष्णमन्त्रोपदेष्टा स च, देवः—स्वेष्टदेवता स च, नृपः—राजा च तेषामीक्षा—दर्शनं तस्यै इति तदर्थम् । रिक्तः—उपहाररहितः पाणिर्येषां तैर्नरैर्न गम्यं—तत्समीपे न गन्तव्यम् । गुर्वादिदर्शनार्थं किञ्चिदुपहारं गृहीत्वैव गन्तव्यमित्यर्थः । "स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठ"मिति श्रौतलिङ्गात् । समिदित्युपलक्षणमुपहारमात्रस्य । "रिक्तपाणिर्न गच्छेत्तु राजानं श्रोत्रियं गुरु"मिति स्मृतेश्च ।

गुर्विति । रिक्तपाणिभिः—शून्यहस्तैः, अनुपायनहस्तैरिति यावत् । गुरुदेवनृपेक्षार्थं—गुर्वादीनां दर्शनार्थं, तत्सन्निधौ न गन्तव्यम् । गुरुदेवनृपेक्षार्थमित्यतस्तेभ्यः फलविशेषमनाकाङ्क्षमाणेन दर्शनमात्रमेवेच्छताऽपि सोपहारहस्तेन गन्तव्यम्, अन्यैस्तु किं वक्तव्यमिति व्यज्यते, तेन तत्सन्निधौ सर्वथा विनीतवेषेण भाव्यमित्युक्तं भवति । अत एव श्रूयते—"समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति । स्मर्यते च—"रिक्तपाणिर्न गच्छेत्तु राजानं दैवतं गुरुम्" इति ।

ननु रिक्तपाणिभिश्चेन्न गन्तव्यं किं मुद्गरहस्तैर्गन्तव्यमित्याशङ्कायामाशयमाह—अनुपायनहस्तैरिति यावदिति । गुरुदेवनृपसन्निधावित्यनुक्त्वा गुरुदेवनृपेक्षार्थमित्युक्तेः स्वारस्यमाह—गुरुदेवनृपे-

किञ्च–विश्वासघातो नो कार्यः–त्वत्कार्यमहमवश्यं करिष्यामि त्वद्रक्षणं च करिष्यामीत्यादिवाक्यैः कञ्चिदाश्वास्य ततस्तदकरणं विश्वासघातः स न कर्त्तव्यः । "स महापातकी भूमौ यो विश्वास्यान्यमर्दये"दिति स्मृतेः । किञ्च–स्वस्य–आत्मनः श्लाघा–प्रशंसा स्वमुखेन न कर्त्तव्या । "निन्दाऽन्यस्याऽऽत्मनः श्लाघा द्वयं सुकृतनाशकृदि"ति व्यासोक्तेः । "अब्रुवन्कस्यचिन्निन्दामात्मश्लाघामवर्णयन् । विपश्चिद्गुणसम्पन्नः प्राप्नोत्येव महद्यश"इति भीष्मोक्तेश्च । परश्लाघा तु यथोचितं कर्त्तव्या ॥ ३७ ॥

---

**विश्वासघातो नो कार्यः**– कस्यचिद्विश्वासमुत्पाद्य तद्भङ्गो न कार्यः । तथाच वचनम्–"स महापातकी भूमौ यो विश्वास्यान्यमर्दयेत्" इति । स्वमुखेन स्वश्लाघा न कार्या, चकारात्परनिन्दाऽपि न कार्येति व्यज्यते । "निन्दाऽन्यस्यात्मनः श्लाघा द्वयं सुकृतनाशकृत्" इति च वचनम् । स्वमुखेनेत्यतो येन मुखेन परश्लाघा कार्या तेनैव स्वमुखेन स्वश्लाघा परनिन्देति महानयं कश्चन मुखदुर्विपाक इति व्यज्यते ॥ ३७ ॥

---

क्षार्थमित्यत इति । ननु स्वश्लाघा न कार्येत्यनेनैव स्वमुखेनेत्यस्यार्थतः सिद्धेः स्वमुखेनेत्येतद्व्यर्थमित्याशङ्कायामाह–स्वमुखेनेत्यत इति ॥ ३७ ॥

---

## यस्मिन्परिहितेऽपि स्युर्दृश्यान्यङ्गानि चात्मनः ।
## तद्दूष्ये वसने नैव परिधार्यं मदाश्रितैः ॥ ३८ ॥

**यस्मिन्निति** । किञ्च–यस्मिन्वसने परिहिते–परिधृतेऽपि । आत्मनः–स्वस्य । अङ्गानि–गोप्या अवयवाः । दृश्यानि–इतरजनदृग्गोचराः स्युः । चकाराल्लोकनिन्दा च स्यात् । तत् दूष्यं–शिष्टैर्दूषणीयम् । वसनं–वस्त्रम् । मदाश्रितैः पुम्भिः स्त्रीभिश्च । नैव परिधार्यम् । वस्त्रधारणं हि गोप्याङ्गाच्छादनार्थं विहितं तदभावे तु तद्धारणमधारणमेवेत्यर्थः । "अतिसूक्ष्मं च दृश्याङ्गं स्फाटितं जालसन्निभम् । न धार्यं मलिनं वासो धार्यं शुचि घनं च त" दिति सदाचारदीपोक्तेः । अतिदरि-

---

**यस्मिन्निति** । यस्मिन्वाससि विधृतेऽपि स्वस्याङ्गानि दृश्यानि स्युः, अङ्गानि चेति चकारात्प्रत्यङ्गान्यपीत्यर्थः । तत् दूषणार्हं वासो न धार्यम् । कैरित्यत्राह–मदाश्रितैरिति । सात्त्वि-

---

चकारस्य वैयर्थ्याशङ्कां परिहरति–चकारादिति । मदाश्रितैरित्यस्य विवक्षितमर्थमाह–

द्राणामतित्यागिनां तीव्रवैराग्यानादृतदेहानां च परेच्छालभ्यवस्त्रत्वान्नायं नियम इत्याहात्र विश्वरूपः ॥ ३८ ॥

कैरित्येतत्, तथाविधसूक्ष्माम्बरधारणं हि विलासिनां राजसानां रजोविलासः; तन्न समुचितं सात्त्विकानामिति भावः ॥ ३८ ॥

सात्त्विकैरिति । तद्धारण अनौचित्यमाह—तथाविधेति ॥ ३८ ॥

---

धर्मेण रहिता कृष्णभक्तिः कार्या न सर्वथा ।
अज्ञनिन्दाभयान्नैव त्याज्यं श्रीकृष्णसेवनम् ॥ ३९ ॥

धर्मेणेति । धर्मेण—सच्छास्त्रविहितस्वधर्मेण रहिता कृष्णस्य भक्तिः, भजनं भक्तिः सा श्रवणादिभेदैर्नवविधाऽपि सर्वथा न कार्या । धर्मेण सहितैव कार्येत्यर्थः । यथा—"एकादश्यां न भुञ्जीत वैष्णवः पक्षयोर्द्वयो" रित्यादिस्मृतिभिर्वैष्णवानामेकादश्याद्युपवासः स्वधर्मत्वेन विहितः, सच "षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्त्तितम् । विष्णोर्नैवेद्यसिक्थेन पुण्यं तद्भुञ्जतां कला" वितिस्मृत्युक्तभगवन्नैवेद्यभक्षणमाहात्म्यश्रवणयुजा भक्त्या न हातव्यः । "पितरो देवाश्च विष्णुनाऽशितमश्नन्ती"ति श्रुतेः, "विष्णोर्नैवेद्यशिष्टेन यष्टव्यं देवतान्तरम् । पितृभ्यश्चापि तद्देयं तदानन्त्याय कल्पत" इति स्मृतेश्च दैवपित्र्यकर्मनिष्ठानां कर्मठानामपि विष्णुनिवेदितान्नभक्षणं विहितं किं पुनर्वैष्णवानां वक्तव्यम् । तस्मादेकादश्यादौ भोजननिषेधो नित्यप्राप्तविष्णुनिवेदितान्नविषय एवेति न स्वधर्मस्त्याज्यः ।

तथा—शीतकालादौ "तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम

---

भक्तेरितिकर्त्तव्यतानियमं भयनिमित्तेऽप्यपरित्याज्यतां चाह—धर्मेणेति । धर्मोऽत्र यज्ञदानतपोऽनशनादिवर्णाश्रमनिमित्तकर्मविशेषः । तेन विना कृष्णभक्तिर्न कार्या । सकलेन्द्रियनिवृत्तिसाध्ये भक्तिशब्दवाच्ये ध्यानविशेषे सकलेन्द्रियप्रवृत्तिरूपस्य कर्मणो हि विरोधित्वमिति मत्वा परित्यज्य धर्मं भक्तिमात्रे प्रवृत्तिर्न कार्या, नहि परित्यक्तधर्मस्याऽप्रक्षीणमनःकल्मषस्य

---

इतिकर्त्तव्यता—अङ्गम् । यद्यपि भक्तिरपि धर्म एव, चोदनालक्षणार्थो हि धर्मः, अस्ति हि तत्रापि चोदनान्वयः, "उपासीते"ति हि श्रूयते, उपासनविशेष एव च भक्तिः, तथापि कर्मविशेष एवेह धर्मशब्देन विवक्षित इत्याह—धर्मोऽत्रेति । प्रसक्तस्यैव प्रतिषेधौचित्यात् धर्मेण रहिताया भक्तेः प्रसङ्गं ज्ञापयन्मूलाशयमाह—सकलेन्द्रियेत्यादिना । कीर्त्तनप्रणामार्चनादीनां भक्तितया तत्र

गृणन्ति ये ते" इति भगवन्नामोच्चारणमाहात्म्यावलम्बनेन प्राप्तः स्नानसन्ध्यावन्दनादिस्वधर्मत्यागो न कर्त्तव्यः। "ब्राह्मणोऽहरहः सन्ध्यामुपासीते"ति श्रुतेः। "प्रातःस्नानं विना नित्यं द्विजो भवति सूतकी"ति स्मृतेश्च। द्विविधस्यापि वाक्यस्य मर्यादास्थापकशिष्टाचारानुगृहीतविवेकेनैव ग्रहणौचित्यात्। अत एवैकादशस्कन्धे स्नानादीनां भगवदर्चनभक्तेरङ्गत्वेन विधानं स्मर्यते—"पूर्वं स्नानं प्रकुर्वीत धौतदन्तोऽङ्गशुद्धये। उभयैरपि च स्नानं मन्त्रैर्मृद्ग्रहणादिना। सन्ध्योपास्त्यादिकर्माणि वेदेनाचोदितानि मे। पूजां तैः कल्पयेत्सम्यक् सङ्कल्पः कर्मपावनी"मिति।

तथा—भगवन्मन्दिरे भगवत्समीपे वा स्थित्वाऽपि "सर्वं विष्णुमयं जग"दिति वाक्योक्तज्ञानबलावलम्बनेन योषिन्मुखनिरीक्षणपरिहासाद्यपि न कर्त्तव्यम्। "श्रीविष्णोर्मन्दिरे स्थित्वा सेवायां तस्य वा क्वचित्। मुदा ये स्त्रीर्निरीक्षन्ते योनिकीटा भवन्ति ते" इति हारीतवाक्यात्तत्र दृष्टिसंयमरूपः स्वधर्मो न त्याज्यः।

---

भक्तिः सिद्ध्येत्। अत एव श्रूयते—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति। "धर्मेण पापमपनुदति" इति च। "आप्रयाणात्तत्रापि हि दृष्ट"मित्युक्तेराप्रयाणमनुवर्त्तनीयस्याऽहरहरभ्यासाधेयातिशयस्य भक्तिशब्दवाच्यध्यानविशेषस्य सत्त्वोन्मेषसम्पाद्यमनोनैर्मल्यसापेक्षत्वेन कर्मसापेक्षतामाह च सूत्रकारः—"सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्" "सहकारित्वेन चे"ति। ननु—द्रव्यार्जनादिसाध्यस्य कर्मणोऽहङ्कारममकारगर्भत्वेन सकलेन्द्रियव्यापृतिसाध्यतया च सकलेन्द्रियोपशमसाध्ये ध्यानविशेषे भक्तियोगे कथं वोपकारः। मैवम्—"यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः। तदर्थं कर्म कौन्तेय! मुक्तसङ्गः समाचर॥" इति मुक्तसङ्गतया क्रियमाणस्याबन्धकत्वस्मरणात्। "नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्। कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः॥ कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्। इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते॥ यस्त्विन्द्रियाणि मनसा संयम्यारभतेऽर्जुन! । कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते॥" इत्यसङ्गपूर्वकस्य कर्मणः प्रशंसनाच्च।

---

सकलेन्द्रियनिवृत्तिसाध्यता कथमिति शङ्कायामाह—भक्तिशब्दवाच्ये ध्यानविशेष इति। स्नेहपूर्वकध्यानविशेषः प्रकृते भक्तिशब्देन विवक्षित इति भावः। भक्तिः सिध्येदिति। भक्तियोगः सिध्येदित्यर्थः। भक्तियोगो हि दर्शनसमानाकारं तैलधारावदविच्छिन्नं स्नेहपूर्वकमनुस्मरणम्। तच्चाष्टाङ्गयोगसाध्यम्। नह्यप्रक्षीणमनःकल्मषस्य योगः सिध्येदिति भावः। कर्मविशेषस्येतिकर्त्तव्यतायां प्रमाणं प्रदर्शयति—अत एवेत्यादिना। भक्तेः कर्मविशेषसापेक्षत्वं सङ्गमयति सप्रमाणम्—आप्रयाणादित्यादिना। उपाये विरोधमाशङ्कते—नन्वित्यादिना। परिहरति—मैवमिति। तथाच कर्मयोगो भक्तियोगाङ्गमिति सिद्धम्।

तथा—"जन्माष्टम्याद्युत्सवेषु दर्शनाद्दुरितक्षय" इतिस्मृत्युक्तभगवद्दर्शनमाहात्म्यश्रवणेन स्त्रीसङ्घातप्रवेशादिस्वधर्मत्यागश्च न कर्त्तव्यः । अनन्तरश्लोके वक्ष्यमाणनिषेधात् ।

"भक्तिः सिध्यति धर्मेण" "धर्मो मद्भक्तिकृत्प्रोक्तः" "यद्भक्तियोगोऽभयदः स्वधर्ममनुतिष्ठता"मित्यादि वाक्येभ्यो धर्मं विना स्वाभीष्टफलप्रदभक्तिसिद्धिर्न भवत्येव । अत उक्तं पराशरगीतायाम्—"धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् । न तत्सेवेत मेधावी न तद्धितमिहोच्यत" इति । भारतसावित्र्यां व्यासश्चाह—"न जातु कामान्न भयान्न लोभाद्धर्मं जह्याज्जीवितस्यापि हेतो"रिति । अत एव नारदश्चाह—"गृहस्थस्य क्रियात्यागो व्रतत्यागो वटोरपि । तपस्विनो ग्रामसेवा भिक्षोरिन्द्रियलौल्यता । आश्रमापसदा ह्येते खल्वाश्रमविडम्बकाः । देवमायाविमूढांस्तानुपेक्षेतानुकम्पये"ति । स्वधर्मत्यागे नरकपात उक्तश्च पञ्चमस्कन्धे—"यस्त्विह वै निजवेदपथादनापद्यपगतः पाखण्डं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरन्ति तत्र हासावितस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वाङ्गो हा हतोऽस्मीति परमया वेदनया मूर्च्छितः पदे पदे निपतति स्वधर्महा पाखण्डानुगतं फलं भुङ्क्ते" इति ।

"त्यक्त्वा स्वधर्मं चरणाम्बुजं हरेर्भज"न्नितिवाक्यं तु भक्तिरहितशुष्कधर्मनिन्दापरं, न तु वैष्णवानां स्वधर्मत्यागविधायकम् । "को वाऽर्थ आप्तोऽभजतां स्वधर्मत" इति तत्तुरीयपादोक्तेः । "धर्मः सत्यदयोपेतो विद्या वा तपसा-

---

ननु–यज्ञादेः कर्मणो विविदिषासाधनत्वमेव, न वेदने त्वदभिमतभक्तिरूपे, विविदिषन्तीति हि श्रूयते, न पुनर्विदन्तीति । न च सनन्तार्थैकदेशे वेदने करणान्वयः समुचितः । "असिना जिघांसति" "अश्वेन जिगमिषती"त्यादौ तु हननगमनादावगत्या करणान्वय इष्यते, अस्यादौ हननादीच्छासाधनत्वस्य बाधात्, अन्वयव्यतिरेकतो हननादिहेतुत्वावधारणाच्च । मैवम् । यद्यपि विविदिषन्तीति श्रूयते, तथापि "स विजिज्ञासितव्यः" "तद्धि विजिज्ञासितव्यम्" "निदिध्यासितव्यम्" इत्यादौ ध्यायीतेत्यादिविध्यन्तरैकार्थ्यात्सन्प्रत्ययार्थमना-

---

परेषां भूमिकामवलम्ब्याशङ्कते—नन्वित्यादिना । न वेदन इति । ननु सत्यं वेदने न साधनत्वं, भक्तौ तु तदस्तीत्याशङ्कां वारयन्नाह—त्वदभिमतभक्तिरूप इति । वेदनविशेष एव हि भक्तिरूपो विविदिषन्तीत्यत्र विदिधातोस्तात्पर्यविषयतयेष्यत इति भावः । ननु सन्प्रकृतितया श्रूयत एव विदिरित्यत्राह—न चेति । समुचित इत्यनेनान्वयः । पदार्थः पदार्थेनैवान्वेति न तु तदेकदेशेनेति भावः । ननु क्वचिदेकदेशेनाप्यन्वयो दृश्यत इत्याशङ्कायामाह—असिनेति । बाधादिति । 'औत्सर्गि-

न्विता। मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति ही"ति। "वर्णाश्रमवतां धर्म एष आचारलक्षणः। स एव मद्भक्तियुतो निःश्रेयसकरः पर" इति च भगवद्वाक्यात्। "दीक्षां प्राप्य गुरोः स्वीयं वर्णाश्रमवृषं चरन्। विषयेषु ह्यनासक्तो मुकुन्दोपासको भवे"दिति नारदपञ्चरात्रोक्तेश्च।

किञ्च—श्रीकृष्णप्रादुर्भावो धर्मस्थापनार्थमेवेति तद्विरुद्धाचरणं न भगवत्प्रीतिजननमित्यवधेयम्। तथा चोक्तं श्रीभगवद्गीतासु—"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत!। अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्। परित्राणाय साधूनां विनाशाय च दुष्कृताम्। धर्मसंस्थापनार्थाय सम्भवामि युगे युगे" इति। श्रीमद्भागवते च—"यदा ह्यधर्मेण तमोधियो नृपा जीवन्ति तत्रैष हि सत्त्वतः किल। धत्ते भगं सत्यमृतं दयां यशोभवाय रूपाणि दधद्युगे युगे" तथा—"यदा यदा हि धर्मस्य क्षयो वृद्धिश्च पाप्मनः। तदा तु भगवानीश आत्मानं सृजते हरिः"। तथा—"सञ्जज्ञ इत्यनुयुगं निजधर्मगुप्त्यै"। तथा—"त्वयोदितोऽयं जगतो हिताय यदा यदा वेदपथः पुराणः। बाध्येत पाषण्डपथैरसद्भिस्तदा भवान्सत्त्वगुणं बिभर्त्ति" तथा—"तिर्यङ्मनुष्यविबुधादिषु जीवयोनिष्वात्मेच्छयाऽऽत्मकृतसेतुपरीप्सया यः। रेमे निरस्तविषयोऽप्यवरुद्धदेहः" तथा—"त्वां दुःस्थमूनपदमात्मनि पौरुषेण सम्पादयन्यदुषु रम्यमबिभ्रदङ्गम्" तथा—"लीलातनूः स्वकृतसेतुपरीप्सया यः काले दधत्" तथा—"त्वत्तः सना-

---

इत्येच्छाया इष्यमाणप्रधानत्वेन प्रकृत्यर्थप्राधान्याश्रयणवत् "क्रियावानेष ब्रह्मविदां वरिष्ठः" "कर्मणैव हि संसिद्धिम्" "कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्त्तते" इत्यादिनैकार्थ्यात् वेदनपरत्वमेव समुचितम्। अन्वयव्यतिरेकाभ्यामसिप्रभृतिषु हननकरणत्वस्येव "क्रियावानेष ब्रह्मविदां वरिष्ठः" इत्याद्युक्तप्रमाणतः कर्मणि वेदनकरणत्वस्य सिद्ध्या "असिना जिघांसती"त्यत्रेव प्रकृत्यर्थे करणत्वान्वयसम्भवाच्च हननादीच्छायामस्यादिकरणकत्वस्येव विविदिषायां कर्मकरणकत्वस्य बाधितत्वाच्च।

---

कोऽयं नियम इति भावः। समाधत्ते—नैवमिति। इच्छाया इष्यमाणप्रधानत्वेनेति। इष्यमाणं प्रधानं यस्य तत् इष्यमाणप्रधानं, तत्त्वेनेत्यर्थः। इच्छाया इष्यमाणसिद्ध्यर्थत्वात्तस्यास्तथात्वं बोध्यम्। प्रकृत्यर्थप्राधान्याश्रयणवदिति। सनन्तप्रकृतिकोपस्थाप्यस्यापि विधेयत्वस्य प्रधाने धात्वर्थ एव यथान्वय इष्यते तथेहापीति भावः। ननु तत्रापि विधेयत्वस्य विषयवैलक्षण्याधीनायामिच्छाया बाधात् ज्ञानविशेषे तदुपपत्तेश्च सन्प्रकृत्यर्थेऽगत्या तस्यान्वय इष्यत इत्याशङ्कायामिहापि तथैवेत्याह—अन्वयव्यतिरेकाभ्यामित्यादिना।

तनो धर्मो रक्ष्यते तनुभिस्तव" तथा—"धर्मश्च स्थापितः सत्सु सत्यसन्धेषु वै त्वया" तथा—"हत्वा नृपानधर्मिष्ठान्घातयित्वाऽर्जुनादिभिः । अञ्जसा वर्त्तयामास धर्मं धर्मसुतादिभिः" तथा—"स त्वं भूधरभूतानां दैत्यप्रमथरक्षसाम् । अवतीर्णो विनाशाय सेतूनां रक्षणाय च" तथा—"तवावतारोऽयमकुण्ठधामन्धर्मस्य गुप्त्यै जगतो भवाय" तथा—"वक्ता कर्ताऽविता नान्यो धर्मस्याच्युत ! ते भुवि" तथा—"विज्ञापितो विरिञ्चेन पुराहं धर्मगुप्तये । अवतीर्णो यदुकुले गृह आनकदुन्दुभेः" तथा—"धर्मावनायोरुकृतावतारः" तथा—"अथापि काले स्वजनाभिगुप्तये बिभर्ति सत्त्वं खलनिग्रहाय च । स्वलीलया वेदपथं सनातनं वर्णाश्रमात्मा पुरुषः परो भवान्" तथा—"देवान्साधून् लोकसेतून् बिभर्षि" तथा—"ब्रह्मन् ! धर्मस्य वक्ताहं कर्त्ता तदनुमोदिता । तच्छिक्षयन् लोकमिममास्थितः पुत्र मा खिदः" तथा—"सत्त्वं हि मे हृदयं यत्र धर्मः" तथा—"आस्थितस्य परं धर्मं कृष्णस्य गृहमेधिनाम्" तथा—"इत्याचरन्तं सद्धर्मान्पावना-

---

तथाहि—यदि विविदिषासाधनं कर्म, तर्हि कर्मण्यधिकुर्वतः प्राग्विविदिषाकामनाऽपेक्ष्यते, ज्योतिष्टोमेऽधिकुर्वतः स्वर्गकामनेव । यदा च विविदिषाकामना तदा स किं वेदनं वाञ्छति ?, उत न वाञ्छति ?, यदि न वाञ्छति तर्हि वेदनस्यानिष्टत्वेन विविदिषाया अप्यनिष्टत्वात् विविदिषाकामनैव न घटेत । विविदिषा हि वेदनं साधयेत्, वेदनं चापवर्गमिति मत्वा हि विविदिषायै स्पृहयेत् । यदि च वेदनं तदानीं वाञ्छति, विविदिषाकामनासमसमयमेव विविदिषाऽप्यस्तीति विविदिषायै न कर्मापेक्षा । एवं विविदिषायाः स्वतःप्रयोजनत्वासम्भवेन वेदनार्थमेवोद्देश्यतया वेदनेच्छासापेक्षत्वेन वेदनेच्छातो विविदिषाकामना, तया च कर्म, तेन च विविदिषेति कार्यकारणभावे विविदिषाकामनादिद्वारा विविदिषासापेक्षत्वाद्विविदिषाया आत्माश्रयः । फलीभूतविविदिषार्थं कर्मणोऽपेक्षितत्वात् कर्मार्थं विविदिषाकामनार्थवेदनेच्छाया अपेक्षितत्वेन विविदिषाकर्मणोरन्योन्याश्रयः । विविदिषाकामना वेदनेच्छायत्ता,

---

वेदनस्यानिष्टत्वेनेति । इष्टत्वाभावेनेत्यर्थः । अनिष्टत्वादिति । इष्टत्वाभावादित्यर्थः । विविदिषाकामनैव न घटेतेति । तदिदमुपपादयति—विविदिषा हीत्यादिना । विविदिषायै न कर्मापेक्षेति । सिद्धेऽर्थे नह्युपायापेक्षेति भावः । कर्मणो विविदिषां प्रति हेतुत्वाभ्युपगमे दूषणचतुष्टयमाह—एवमित्यादिना । तत्र प्रथममात्माश्रयमाह—विविदिषाया इत्यादिना । स्वतः प्रयोजनत्वासम्भवेनेति । सुखस्यैकस्यैव तथात्वादिति यावत् । उद्देश्यतयेति । कर्मणि प्रवर्त्तमानस्येति शेषः । वेदनेच्छासापेक्षत्वेनेति । उपायेच्छायाः फलेच्छासापेक्षत्वादिति भावः । आत्माश्रय इति । उत्पत्तावात्माश्रय इति यावत् । अथ विविदिषाकर्मणोरन्योन्याश्रयमाह—फलीभूतेत्यादिना । फलीभूतेति । कर्मफलतया भवदभिमतेति यावत् । कर्मार्थं विविदिषाकामनार्थवेदनेच्छाया अपेक्षितत्वेनेति । फलकामनां

न्गृहमेधिनाम्" तथा—"स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन्" तथा—"एवं वेदोदितं धर्ममनुतिष्ठन्सतां गतिः" तथा—"प्रभुं प्रपद्येऽखिलधर्मभावन" मित्यादि । "अपहाय निजं धर्मं कृष्णकृष्णेति वादिनः । ते हरेर्द्वेषिणो ज्ञेया धर्मार्थं जन्म यद्धरे"रिति लघुहारीतस्मृतेश्च । विष्णुपुराणे चोक्तम्—"न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किञ्चिदुच्चैः सितमनसं तमवेहि विष्णुभक्त"मिति । वाराहे च—"श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । आज्ञाभङ्गी मम द्वेषी स मद्भक्तो न वै धरे !" इति । श्रीवल्लभाचार्याश्चाहुस्तत्त्वदीपनिबन्धे—"स्वधर्माचरणं शक्त्या विधर्माच्च निवर्तनम् । इन्द्रियाश्वविनिग्राहः सर्वथा न त्रयं त्यजे"दिति ।

किञ्च—अज्ञा–श्रीकृष्णतद्भक्ततद्धर्मानभिज्ञाः, मूर्खा इत्यर्थः । तेषां निन्दा–तत्कृता स्वस्य कुत्सा; तस्याः सकाशाद्भयं, तस्माद्धेतोः । निन्देत्युपलक्षणं ताडनादेरपि । श्रीकृष्णसेवनं नैव त्याज्यम् । नहि तत्कृतनिन्दया स्वस्य कापि क्षतिरिति भावः । "यो यस्य तत्त्वं पुरुषो न वेत्ति स तस्य निन्दां कुरुते

वेदनेच्छा कर्मद्वारा विविदिषाकामनायत्तेति विविदिषाविविदिषाकामनयोरन्योन्याश्रयः । विविदिषार्थत्वात्कर्मणो विविदिषार्थं कर्मापेक्ष्यते, कर्मार्थं च विविदिषाकामना तदर्थं च वेदनेच्छा, सा च विविदिषा कर्मफलत्वात्कर्मापेक्षते, कर्म च पुनर्विविदिषाकामनामिति चक्रकं च । ननु–दृश्यते नाम रोगार्त्तं प्रति बुभुक्षाकामनया भेषजोपदेशः, तद्भेषजं बुभुक्षायां हेतुरिति सिद्धम्, कथमिदं घटेत । बुभुक्षाकामनया भेषजे प्रवर्तमानस्तदानीं किं भोजनं वाञ्छति ?, उत न ?, न चेदनिष्टत्वेन तदर्था भेषजे प्रवृत्तिर्न घटेत, यदि वाञ्छति बुभुक्षा सिद्धैवेति न सा भेषजतः साध्येत्याद्याक्षेपस्यात्रापि सम्भवात् । यश्चात्र परिहारस्तवाभिमतः स एव विविदिषासाधनत्वेऽपि नः समानः । मैवम् । भेषजं हि न बुभुक्षायां हेतुः, भोजनस्य सामान्यतोऽनुकूलत्वज्ञानेन प्रागेवेष्टत्वात्, किन्तु भोजने प्रतिकूलस्य तदानीन्तस्य रोगात्मकदोषविशेषस्य निवर्त्तन एव, एतदर्थमेव तु भेषजोपदेशः । न पुनरिच्छास्वरूपसिद्धये ।

न च वाच्यम्—वयमपि प्रतिकूलनिवर्त्तनद्वारेणैव कर्मणो विविदिषासाधनत्वं वर्णयामः, प्रतिकूले च रजस्तमसी इति । रजस्तमसोः प्रातिकूल्यं कुत्र मन्यते भवान्, किं वेदने ? उत विविदिषायाम् ? यदि वेदने, हन्त !! तर्हि कर्मणां वेदनविरोधिनिरसनद्वारा वेदने स्यादुप-

विनोपाये प्रवृत्त्यसम्भवादिति भावः । विविदिषाविविदिषाकामनयोरन्योन्याश्रयमाह—विविदिषेत्यादिना । अथ चक्रकमाह—विविदिषार्थत्वादित्यादिना । इत्याद्याक्षेपस्येति । आदिशब्दादात्माश्रयान्योन्याश्रयचक्रकानां परिग्रहः । यदि बुभुक्षायां भोजनस्य हेतुता स्यात्तदा स्यान्नाम शङ्कावकाशः, न च तथेत्याह—मैवमिति । प्रागेवेष्टत्वादिति । बुभुक्षा तदानीं न साध्या, किन्तु सिद्धैवेति भावः । हन्त !!

न विद्या"निति पराशरोक्तेः । श्रीमद्भागवते चोक्तम्—"सतोऽत्रमन्यन्ति हरिप्रियान् खलाः" तथा—"नाश्चर्यमेतद्यदसत्सु सर्वदा महद्भिनिन्दा कुणपात्मवादिषु । सेर्प्यं महापूरुषपादपांसुभिर्निरस्ततेजःसु तदेव शोभन"मिति । दुर्जनानां तादृश एव स्वभाव इति भक्तैः स न गणनीयः । "यस्य त्राता चक्रपाणिर्दुर्जनस्तं करोति किम् । ततो न तद्भयाद्भक्तिं जह्याद्विष्णोर्नरः सुधीः । रोरूयमाणान्बहुशो यथा क्रोष्टून्मृगाधिपः । तृणवन्मन्यते धीरो विष्णुभक्तस्तथाऽबुधा"निति विष्णुधर्मोत्तरोक्तेः । "कुपितो जनकस्तथापि मे न विरामो हरिनामकीर्त्तने ।

योगः, न विविदिषायाम् । यदि विविदिषायां, तदा विविदिषाविरोधिनिरसनाय कर्मणि प्रवर्त्तमानस्तदानीं वेदनं वाञ्छति ? न वा ?, यदि न वाञ्छति, वेदनस्यानिष्टत्वे विविदिषाया अप्यनिष्टत्वेन तद्विरोधिनिरसनेऽपि न कामना स्यात्, तथा च कर्मणि प्रवृत्तिरेव न स्यात् । यदि वाञ्छति तर्हि विविदिषा सिद्धैवेति कोऽयं तद्विरोधिनिरसनायारम्भः ।

न च—विविदिषासाधनत्व इव भक्तिसाधनत्वेऽपि चोद्यमिदं समानं, नहि भगवति भक्तिविधुरो भक्तिं कामयेत, भक्तिमतस्तु भक्तिः सिद्धैवेति न सा साध्या, तत्र कर्मणि भक्तिकामनया प्रवृत्तिर्घटत इति वाच्यम् । भक्तिविधुरस्य भक्तेः फलविशेषसाधनत्वमवगच्छतस्तदर्थं प्रवृत्त्युपपत्तेः । किञ्च सत्यपि भगवति प्रेममात्रे प्रेमविशेषतः फलविशेषमवगच्छन्प्रेमविशेषकामनया प्रवर्त्ततैव तत्साधने, प्रेमविशेष एव तु भक्तिः, नहि प्रेमातिशयकामनामात्रेण प्रेमातिशयस्वरूपं निष्पद्येत ।

ननु—वयमप्येवं ब्रूमः, सत्यां सामान्यतो विविदिषायां विविदिषाविशेषकामनया कर्मणि प्रवृत्तिरिति । तथाप्यनिस्तारात् । तथाहि—कर्मणि प्रवर्तमानेनेष्यमाणो विविदिषाविशेषो यद्युत्कटेच्छारूपः, तर्हि स तत्कामनासमसमयं स्यादेव, असत्यां वेदने तीव्रेच्छायां वेदनस्य नात्यभिमतत्वेन विविदिषाया अपि नात्यभिमततयोत्कटेच्छारूपविविदिषाविशेषकामनाया एवासम्भवात् । यदि विषयावच्छेदकृतो विशेषस्तर्हीष्यमाणविविदिषाविशेषो वेदनविशेष एव पर्यवस्येत्, नहि तद्युज्यते, नहि प्रथमतः सामान्यतो वेदनं किञ्चिदिच्छति पश्चात्कर्मभिर्वेदनविशेषं कमपीति घटते, तद्युक्तं धर्मेण वेदनमिति । तदवश्यं धर्मेण सहितैव भक्तिः कार्या ।

तर्हीति । वेदने स्यादुपयोग इति । सिद्धं नः समीहितमिति भावः । विविदिषायां चेदुक्तदोषवादवश्यमित्याह—यदि विविदिषायामित्यादिना ।

परस्य प्रतिबन्द्या समाधानमाशङ्क्य परिहरति—नचेत्यादिना । नहि भगवति भक्तिविधुरो भक्तिं कामयेतेति । भगवत्कथानभिज्ञो नहि कश्चिद्भक्तिं कामयते, किन्तु स्निग्ध एव भगवति भक्तिं कामयत इति भावः । भगवति स्नेहरसशून्यस्यापि भगवद्भक्तिमहिमानं जानतो भवेदेव तत्र कामनेत्याह—भक्तिविधुरस्य भक्तेः फलविशेषसाधनत्वमवगच्छत इति । प्रेमविशेषत इति । प्रेमविशेषश्च दर्शनसमानाकारप्रीतिरूपापन्नानुसरणनैरन्तर्यम् । तथाप्यनिस्तारादिति । उक्तदोषेभ्य इति शेषः ।

मशकोपनिपातशङ्कया सदनं मुञ्चति किं महाजनः" इति नृसिंहचम्प्वां प्रह्लादोक्तेश्च। अत एवोक्तमुद्धवेनापि—"देवस्य मायया स्पृष्टा ये चान्यदसदाश्रिताः। भ्राम्यते धीर्न तद्वाक्यैरात्मन्युप्तात्मनो हरा"विति। अत्र भक्तिधर्मयोः साहचर्योक्तेर्यथाऽज्ञनिन्दाभयाद्भक्तिर्न त्याज्या तथा धर्मोऽपीत्यपि ज्ञेयम्। पूर्वोक्तभारतसावित्र्युक्तेः ॥ ३९ ॥

---

ये च निष्पन्नभक्तियोगास्तैरपि धर्मो न त्याज्य इत्याह—न सर्वथेति। भक्तियोगसिद्धावपीति भावः। लोकसङ्ग्रहार्थं तैरप्यवश्यं विहितधर्माणामनुष्ठेयत्वात्। तथा च स्मरति भगवान्—"लोकसङ्ग्रहमेवापि सम्पश्यन्कर्त्तुमर्हसि। यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतन्द्रितः॥ मम वर्त्मानुवर्त्तन्ते मनुष्याः पार्थ सर्वशः। उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥" इति। "श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्त्तते। आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न संशयः॥" इति च। सर्वथेत्यनेन भगवदेकोपायनिष्ठतायामपि भक्तेः फलतयाऽनुवृत्तिवत्कर्मणोऽपि शेषवृत्तिरूपतया फलकोटाववर्जनीयत्वेन कार्यमेव तदित्यपि बोध्यते। विशेषश्चात्र सत्सम्प्रदायतोऽवगन्तव्यः।

सत्यपि भयनिमित्ते श्रीकृष्णानुचिन्तनं कदाचिदपि न त्याज्यमित्याह—अज्ञेति। इदं भयान्तरस्याप्युपलक्षकम्, संसृतिभयान्नान्यदस्ति महद्भयम्, अस्यापि प्रशमयितरि सर्वानन्दमये श्रीकृष्णे सेव्यमाने किं नाम भयम्, तत्पामरदृष्ट्या भयतया प्रतीयमाने शरीरविपत्तिपर्यन्तेऽपि समुपस्थिते क्लेशे न कृष्णानुस्मरणं त्याज्यम्। नहि भगवद्भक्तिमत्यजद्धिरण्यकशिपुनाप्यापादितेषु भयेषु बालः प्रह्लाद इति भावः ॥ ३९ ॥

---

प्रासङ्गिकं परिसमाप्य मूलं व्याचष्टे—ये चेत्यादिना।

भयान्तरस्येति। ताडनादिनिमित्तकस्येत्यर्थः। ननु भये समुपस्थिते तदवधीरणं कथं घटेतेत्यत्राह—संसृतिभयादिति। ननु दुस्तरं संसृतिभयं कथं कृष्णचिन्तनेन निवर्त्तेतेत्यत्राह—अस्यापीति। कृष्णशब्दप्रवृत्तिनिमित्तमभिप्रेत्याह—सर्वानन्दमय इति। अज्ञनिन्देतिमूलस्याज्ञशब्दस्य भावमाह—पामरदृष्ट्येति ॥ ३९ ॥

उत्सवाहेषु नित्यं च कृष्णमन्दिरमागतैः ।
पुम्भिः स्पृश्या न वनितास्तत्र ताभिश्च पूरुषाः ॥ ४० ॥

उत्सवाहेष्विति । नित्यं–प्रतिदिनम् । तथा–उत्सवानां–भगवन्महापूजामुकुटधारणादीनां, अहानि–जन्माष्टम्यादितिथयस्तेषु च । "राजाहःसखिभ्यष्ट"जिति टच् । "रात्राह्नाहाः पुंसी"ति पुंस्त्वम् । कृष्णमन्दिरं प्रत्यागतैः पुम्भिः–गृहस्थैरपि नरैः । तत्र–कृष्णमन्दिरे । वनिताः–स्त्रियः । न स्पृश्याः–बुद्धिपूर्वकं न स्प्रष्टव्याः । स्त्रियोऽत्र सधवा अपीति ज्ञेयम्, विधवास्पर्शस्य तु कृष्णमन्दिरेतरस्थानेऽपि सर्वदा निषेधस्य वक्ष्यमाणत्वात् । तथा–ताभिः–सधवावनिताभिरपि । कृष्णमन्दिरमागताभिरिति लिङ्गविपरिणामेनान्वेतव्यम् । तत्र–कृष्णमन्दिरे पूरुषाः न स्पृश्याः । स्त्रीपुंसाना परस्परस्पर्शस्य मनःक्षोभहेतुत्वाद्भगवन्मन्दिरे विशेषतस्तन्निषेधो युक्त एव । तथा चाह नारदः— "मन्दिरे भगवतः पराङ्गनाङ्गानि यः स्पृशति दुष्टमानसः । वीक्षते च मुहुरङ्गनाननान्येष दुष्टतम आप्स्यति क्षय"मिति । अत्र नित्यपदेनैवोत्सवाहाना ग्रहणे जातेऽपि पृथक्तन्निर्देशस्तु तेषु जनसङ्घबाहुल्यादनवहिताना स्पर्शः सम्भवेदेवेति तत्र स्वकीयानां सर्वथा प्रमादपरिहारार्थं कृत इत्यवसीयते । चकाराद्वाक्चापल्याद्यपि त्याज्यम् । "वाक्पाणिपादचापल्यं वर्जयेच्चातिभोजन"मिति याज्ञवल्क्योक्तेः । "न पाणिपादचपलो न नेत्रचपलोऽनृजुः । न स्याद्वाक्चपलश्चैव न परद्रोहकर्म-

---

भक्तौ नियमविशेषमभिधाय भक्तानां भगवन्मन्दिरे सम्भाव्यमानं प्रामादिकं निक्षोभकं स्पर्शविशेष निषेधति—उत्सवेति । उत्सवाहेषु–यद्यप्यन्वहं प्रवर्त्तमानस्याऽऽराधनस्याप्युत्सवरूपत्वेन सर्वाण्यप्यहान्युत्सवाहान्येव । तथापि नित्यमिति पृथङ्निर्देशादुत्सवशब्दोऽत्र नैमित्तिकोत्सवपरः । जन्माष्टम्यादिनैमित्तिकोत्सवदिनेष्वित्यर्थः । नित्यं च—नैमित्तिकोत्सवदिनेष्वेव न वक्ष्यमाणो नियमः, किन्त्वन्वहमपि । सर्वदैव भगवन्मन्दिरे भक्तजनसंमर्दसम्भवादिति भावः । उत्सवाहेष्विति विशिष्य निर्देशस्तु संमर्दातिशयमात्रमभिप्रेत्य । भगवन्मन्दिरे भगवद्दर्शनायाहमहमिकया प्रसर्पतां स्त्रीपुरुषाणा मिथोऽङ्गस्पर्शो भवेदेव, स च प्रायो विक्षोभक एव, तस्मात् स्त्रिया वा पुरुषेण वा भगवत्सेवाविक्षोभकरः प्रामादिकोऽपि "मिथोऽङ्गस्पर्शोऽस्पृश्यचण्डालादिस्पर्शवत्सुदूरपरिहार्य इत्यभिप्रायेणाह—न स्पृश्या इति । अन्यत्राप्ययं परिहार्य एव,

---

नन्वूत्सवाहेष्विति गतार्थं, नित्यमिति निर्देशादित्याशङ्कायामाह—उत्सवाहेष्विति विशिष्य निर्देशस्त्विति । निषेधसङ्गतये प्रसङ्गं दर्शयति—भगवन्मन्दिर इत्यादिना । अस्पृश्यत्वे निमित्तमाह—

धी"रिति मनुस्मृतेश्च। अत एव मोक्षधर्मेषु तन्निग्रह उक्तः—"धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा। चक्षुःश्रोत्रे च मनसा मनो वाचं च विद्यये"ति ॥४०॥

---

विक्षोभकत्वाविशेषात्। तथापि यत्रैवावहितमनसा भाव्यं तत्रैव विक्षोभकसमावेशोऽत्यन्तप्रतिकूलः, स चावश्यं परिहरणीय इति ज्ञापनाय कृष्णमन्दिरमागतैरित्युक्तिः ॥ ४० ॥

---

सच विक्षोभक एवेति। ननु कृष्णमन्दिरमागतैरिति निष्प्रयोजनं, सर्वत्र तस्य त्याज्यत्वादित्याशङ्क्य समाधत्ते—अन्यत्राप्ययमित्यादिना ॥ ४० ॥

---

कृष्णदीक्षां गुरोः प्राप्तैस्तुलसीमालिके गले।
धार्ये नित्यं चोर्ध्वपुण्ड्रं ललाटादौ द्विजातिभिः ॥ ४१ ॥

कृष्णदीक्षामिति। गुरोः—गुरुपदस्थधर्मवंश्यब्राह्मणात्सकाशात्। तस्यैव स्वेन गुरुपदे स्थापितत्वादिति भावः। कृष्णस्य दीक्षा—मन्त्रार्चननियमोपदेशादिल-

---

आदिष्टा नामैतावता निषेधविशेषाः। अथ विधिविशेषानादिशति। तत्र सत्सम्प्रदायसिद्धस्य सात्त्विकशास्त्रावबोध्यस्य दीक्षाविशेषस्य मुमुक्षुभिरधिगन्तव्यतामधिगतदीक्षस्य नियमविशेषं चाह—कृष्णदीक्षेति। दीक्षा चात्र—"दीयते विमलं ज्ञानं क्षीयते कर्मवासना। तेन दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः॥ दिव्यं ज्ञानं यतो दद्यात्कुर्यात्पापस्य सङ्क्षयम्। तस्माद्दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः॥ दीयते ज्ञानसंभारः क्षालनात्पापसन्ततेः। ततो दीक्षेति सा प्रोक्ता मुनिभिस्तन्त्रवेदिभिः॥" इति निरुक्तप्रकारेण गुरुमुखान्मन्त्रविशेषग्रहणादिरूपा विवक्षिता। सामान्यतो दीक्षेत्यनुक्त्वा कृष्णदीक्षेतिविशेषणात्पाशुपताद्यवैदिकदीक्षाव्यावृत्तिः। निरस्तं चैतत्पाशुपतमतमवैदिकत्वात् "पत्युरसामञ्जस्या"दिति व्यासेन। यद्यपि वेदबाह्ये पाशुपताद्याचारे न निरुक्तो दीक्षाशब्दः प्रवर्त्तेत, तथापि तत्तत्समयनिष्ठैः प्रयुज्यमानतया तद्व्यावर्त्तनं ह्यपेक्षितम्। विष्णुदीक्षेत्यनुक्त्वा कृष्णदीक्षेत्युक्तेः षडक्षरादिव्यावृत्ताष्टाक्षरविशेषो व्यज्यते।

---

एतावतेति। ग्रन्थेनेति शेषः। तत्रेति। विधिविशेषेष्वित्यर्थः। निर्धारणे सप्तमी। दीक्षापदार्थमाह—दीक्षा चात्रेत्यादिना। दीक्षा चात्र गुरुमुखान्मन्त्रविशेषग्रहणरूपा विवक्षितेत्यन्वयः। दीक्षापदस्य उक्तार्थविवक्षा केन प्रकारेणेत्यत्राह—दीयते विमलमित्यादिना निरुक्तप्रकारेणेत्यन्तेन। इति निरुक्तप्रकारेणेति। इतिवचनतो यन्निरुक्तं विमलज्ञानप्रदत्वं कर्मवासनाक्षयहेतुत्वं तेन प्रकारेणेत्यर्थः। तृतीयार्थः–प्रयोजकत्वं, विवक्षायामन्वेति। तथाच दीक्षापदस्योक्तार्थबोधकत्वमुक्तप्रकारेणेत्युक्तं भवति। विशेषनिर्देशेन व्यज्यमानमाशयमाह—सामान्यत इत्यादिना। पाशुपतमतस्यावैदिकत्वे आप्तसंवादमाह—निरस्तं चैतदित्यादिना। ननु पाशुपतमतस्यावैदिकत्वे तदीयाचारे नरास्थिमालाधारणादिरूपे निरूपकं दीक्षापदप्रवृत्तिनिमित्तं नास्तीति न तस्येहावकाश एवेति तद्व्यावृत्तिरनावश्यकीत्याशङ्क्य परिहरति—यद्यपीत्यादिना। अष्टाक्षरविशेष इति। कृष्णपदघटित इत्यर्थः।

क्षणा ताम् । प्राप्तैः । गुरुलक्षणमुक्तं विज्ञानोपनिषत्संहितायाम्—"जितेन्द्रियः शुचिर्दक्षः सर्वाङ्गो धर्मसंस्थितिः । कर्मणा मनसा वाचा भीतेष्वभयदो गुरु"रिति । तादृशो धर्मवंश्योऽपि विष्णुभक्तिरहितश्चेत्तदा तु न गुरुः स्यात् । तथा चोक्तं नारदपञ्चरात्रे—"महाकुलप्रसूतोऽपि सर्वयज्ञेषु दीक्षितः । सहस्रशाखाध्यायी च न गुरुः स्यादवैष्णवः । अवैष्णवोपदिष्टेन मुक्तिं मन्त्रेण न भजेत् । पुनस्तद्विधिना सम्यग्गृह्णीयाद्वैष्णवाद्गुरो"रिति । सल्लक्षणरहितो गुरुर्दीक्षां दातुं नार्हः । तदुक्तं स्कान्दे—"सम्पन्नो ज्ञानभक्तिभ्यां स्वधर्मरहितस्तु यः । स गुरुर्नैव कर्तव्यः स्त्रीहृतात्मा च कर्हिचित् । प्राप्ता स्त्रैणाद्गुरोर्दीक्षा ज्ञानं भक्तिं च कर्हिचित् । फलेन्नैव यथाऽपत्यं युवतिः षण्ढसङ्गिनी"ति । "गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः । अन्धकारनिरोधित्वाद्गुरुरित्यभिधीयत" इति तन्निरुक्तेश्च । कृष्णपदेन दीक्षायाः सर्वोत्तमत्वं व्यञ्जयति । "गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत! । सर्वेषु मन्त्रवर्गेषु वैष्णवः श्रेष्ठ उच्यते । वैष्णवेष्वपि सर्वेषु कृष्णमन्त्राः फलाधिका" इति गौतमीयतन्त्रोक्तेः । दीक्षाशब्दश्च सात्त्वततन्त्रे निरुक्तः—"दीपयत्याशु विज्ञानं मोहं च क्षालयत्यतः । दीक्षेति कथिता सद्भिः प्राप्तव्या वैष्णवी तु से"ति ।

किञ्च—"न ह्यतोऽन्यः शिवः पन्था विशतः संसृताविह । वासुदेवे भगवति भक्तियोगो यथा भवेत् । भगवान्ब्रह्म कात्स्न्र्येन त्रिरन्वीक्ष्य मनीषया

---

भगवन्मन्त्राणां गुणराशिवदानन्त्येपि नित्यमुक्तानुभाव्यनिखिलजगत्कारणनिरवधिकानन्दमयक्षराक्षरातीतदिव्यस्वरूपावबोधकपदविशेषघटितत्तयात्र मन्त्रे मुमुक्षूणां निष्ठा समुचितेत्याशयः । कृष्णशब्दो हि स्वस्वारस्यादेवानन्दमयमाचष्टे । तस्यैव नित्यमुक्तानुभाव्यत्वं, निखिलजगत्कारणत्वं, क्षराक्षरातीतत्वं चोपरिष्टाद्वक्ष्यति भगवानेव—"कृष्णसेवा मुक्तिः" "स श्रीकृष्णः परं ब्रह्म""सर्वाविर्भावकारण"मिति । तत्रोपपादयिष्यामश्च तत्तत्सप्रमाणम् । स्मर्यते च गौतमीयतन्त्रे—"गाणपत्येषु शैवेषु तथा शाक्तेषु सुव्रत! । सर्वेषु मन्त्रवर्गेषु वैष्णवः श्रेष्ठ उच्यते ॥ वैष्णवेषु च सर्वेषु कृष्णमन्त्राः फलाधिकाः ॥" इति ।

गुरुमुखान्मन्त्रग्रहणस्यैव दीक्षारूपत्वाद्दीक्षाशब्देनैव गुरुतो ग्रहणलाभे गुरोरिति विशिष्य निर्देशः "श्रोत्रियं ब्रह्मनिष्ठं" इत्याद्युक्तलक्षणलक्षितत्वनियमं व्यञ्जयति । एतेनाभिजनमा-

---

गुणराशिवदिति । यथा भगवद्गुणानामानन्त्यं तथा नाम्नामानन्त्यात्तत्तद्घटिततया भगवन्मन्त्राणामप्या-
नन्त्यमित्यर्थः । यद्वा—गुणराशीनामानन्त्यात्तत्तद्गुणप्राधान्यमभिप्रेत्य प्रवृत्तानां मन्त्राणामप्यानन्त्यमिति
भावः । ननु कृष्णशब्दे तादृशस्वरूपप्रतिपादकतायां किं प्रमाणमित्यत्राह—तस्यैवेत्यादिना ।

गुरोरिति निर्देशे यो विशेषस्तमाह—गुरुमुखादित्यादिना । प्राप्तैरित्यस्य भावमाह—

तदध्यवस्यत्कूटस्थो रतिरात्मन्यतो भवे"दिति श्रीभागवतवाक्याद्वेदस्य भगवति सुदृढस्नेहरूपायां भक्तावेव तात्पर्यं निश्चीयते। "देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा। भजन्मुकुन्दचरणं स्वस्तिमान्स्याद्यथा वय"मित्यादिवाक्यैः सर्वेषां भक्तेरेवावश्यकत्वात्तदधिकारसम्पादको मन्त्रार्चननियमोपदेशादिलक्षणदीक्षाविशेष आवश्यक इति निर्णीतमुपदेशशङ्कानिरासे। तथा च भागवते—"लब्धानुग्रह

---

त्रेऽनादरः सूचितः। यद्यपि प्राप्तैरित्यनुवादरूपोऽयं निर्देशः, तथाप्यप्राप्तत्वाद्विधिर्योज्यः। प्राप्नुयात्, प्राप्य तुलसीमालिके धार्ये इति तदाशयः। एतेन दीक्षाया अविधानात्तदेकान्ततुलसीमालाधारणादिषु कोऽयं नियम इति शङ्का परास्ता। अर्थान्मुमुक्षुभिरित्यधिकारिसिद्धिः। मुमुक्षून्प्रति ह्ययमादेशः। यश्चात्र प्रबन्धे स्यादन्यसाधारणः कश्चिदादेशः स तु प्रासङ्गिकः। दीक्षाक्रमश्च भगवता स्वादेशेन समलङ्कृतगुरुपदौ भ्रातृव्यावधिकृत्योपदिशताऽन्यत्र प्रपञ्चित इति नेह निरूपितः। स च पाञ्चरात्रोक्तप्रकारः सत्सङ्गिजीवनतो बोध्यः। यद्यपि तुलसीधारणादेर्दीक्षान्तर्गतत्वेनैव सिद्धेः पृथग्विधानमनर्थं, तथापि यज्ञोपवीतवदविच्छेदेन धार्यत्वज्ञापनायैतत्। अत एव च नित्यमित्युक्तिः। देहलीदीपन्यायेनोभयतस्तस्य सम्बन्धः।

नचेदं तुलसीमालाधारणादिकमप्रमाणम्, भगवद्वचनस्यास्य स्वतःप्रामाण्यात्। एतत्समानार्थस्मरणान्तरसत्त्वाच्च। तथाच स्मरणम्—"धारणीया कण्ठदेशे तुलसीकाष्ठमालिका। वैष्णवेन विशेषेण भगवत्प्रीतिवर्धनी॥ न धारयन्ति ये माला हैतुकाः पापबुद्धयः। पतन्ति ते तु नरके दग्धाः कोपाग्निना हरेः॥ न यस्य च पशोः कण्ठे तुलसीमालिका भवेत्। तस्यान्नं मांससदृशं जलं च मदिरासमम्॥ यज्ञोपवीतवद्धार्या तुलसीकाष्ठमालिका। निवेद्य हरये मालां तुलसीकाष्ठसम्भवाम्॥ वहते यो नरो भक्त्या तस्य नैवास्ति पातकम्। शयने भोजने स्नाने तथा चोत्सर्गकर्मणि। न त्यजेत्तुलसीमालां त्यजंस्तां दोषभाग्भवेत्॥' इति।

---

यद्यपीत्यादिना। विधिपरतया व्याख्यानेन सिद्धं विशेषमाह—एतेनेत्यादिना। ननु दीक्षाविशेषेऽस्मिन्नधिकार्यनुक्तेर्न्यूनतेत्याशङ्कायामाह—अर्थान्मुमुक्षुभिरित्यधिकारिसिद्धिरिति। अर्थतो वा तत्सिद्धिः कथमिति शङ्कायामाह—मुमुक्षून्प्रति ह्ययमादेश इति। नन्वस्मिन्प्रबन्धेऽन्यसाधारणोऽप्यादेशोऽस्तीति कथमयमादेशो मुमुक्षून्प्रत्येव प्रवृत्त इत्यवगम्यत इति शङ्कायामाह—यश्चात्र प्रबन्ध इति। स तु प्रासङ्गिक इति। तथा चायं निबन्धो मुमुक्षून्प्रत्येव प्रवृत्तः, प्रासङ्गिकस्त्वन्य आदेश इति भावः। स च–दीक्षाक्रमश्च। तत्पाञ्चरात्रोक्तप्रकार इति। पाञ्चरात्रोक्तः प्रकारो यस्मिन्निति बहुव्रीहिः। दीक्षान्तर्गतत्वेनेति। नियमविशेषयुक्तमन्त्रविशेषग्रहणरूपदीक्षाङ्गत्वेन तदन्तर्गतत्वादिति भावः। अविच्छेदेन धार्यत्वज्ञापनायेति। अत्र व्यञ्जकं पदमप्यस्ति मूल इत्याह—अत एवेति। उभयतस्तस्य सम्बन्ध इति। ऊर्ध्वपुण्ड्रं धार्यमित्यत्रापि सम्बध्यत इति भावः।

भगवद्वचनस्यास्येति। मूलवचनस्येत्यर्थः। स्वतःप्रामाण्यादिति। स्वर्तृवचनान्तरनैरपेक्ष्येण प्रमाणत्वादित्यर्थः। विवदन्तं प्रत्याह—एतत्समानार्थेति। न यस्य च पशोरिति। पशोः–नृपशोरित्यर्थः।

आचार्यात्तेन सन्दर्शितागमः । महापूरुषमभ्यर्चेन्मूर्त्याभिमतयाऽऽत्मनः" इति । पाद्मोत्तरखण्डे देवीं प्रति श्रीशंकरश्चाह—"अदीक्षितस्य वामोरु ! कृतं सर्वमनर्थकम् । पशुयोनिमवाप्नोति दीक्षाहीनो नरो मृत" इति । "सम्प्राप्य वैष्णवीं

नच तथाप्याम्नायानाम्नातमित्यनुपादेयत्वमस्य, आम्नायानामानन्त्यात्सर्वृणां च तत्साक्षात्कारसामर्थ्यात् । अत एव साक्षात्कृत्याम्नायविशेषांस्तदर्थान्स्मरन्ति सर्त्तारः । अत एव च स्मृतीनां प्रामाण्यम्, अन्यथा स्मृतिमात्राप्रामाण्यप्रसङ्गात् । स्पष्टं चैतत्स्मृतिप्रामाण्यसमर्थनाधिकरणे । यत्तु स्मृतेरप्यप्रामाण्यं कचित्तत्तु प्रत्यक्षश्रुतिविरोधेन मूलवेदानुमानस्य कालात्ययापदिष्टत्वात् । न चेहापि "नागन्धां स्रजं धारयेद्वते हिरण्मय्या" इति प्रत्यक्षश्रुतिविरोधः । पुरुषार्थधारणस्यैव निषेधात् । नानेन दीक्षाङ्गतया धारणविधायकस्मृत्युपमर्दः । तुलसीकाष्ठादौ गन्धस्य सद्भावाच्च । निषेधस्य लोहान्तरेषु प्रसरणेन सावकाशता । परमपुरुषार्थनिःश्रेयसावबोधनाय भगवता प्रोक्ते पाञ्चरात्रे प्रमाणतमे प्रतिपादितं चैतत्—"सामान्यं च विशेषं च द्विविधं दीक्षणं मतम् । अधिकारानुसारेण मुक्त्यर्थम्" इत्यारभ्य दीक्षामधिकृत्य प्रवृत्तेन "धारयित्वोर्ध्वपुण्ड्राणि तन्मध्ये कौङ्कुमं विधुम् । वृन्दोत्थमालिके कण्ठे हर्यङ्घ्रिस्पर्शसंयुते" ॥ इत्यादिवचनेन ।

अवैदिकत्वमाशङ्क्य परिहरति—न चेत्यादिना । नन्ववैदिकत्वं वेदानवबोधितत्वमुत वेदविहितार्थविरुद्धत्वमिति विकल्प्य तदुभयमपि नेत्याह—आम्नायानामित्यादिना । आनन्त्यादिति । अनन्ता वै वेदाः, श्रूयमाणास्तु परिच्छिन्नाः, तत् वेदानवबोधितत्वं श्रूयमाणश्रुत्यनवगतत्वमात्रेण निश्चेतुं न शक्यमिति भावः । ननु तदवबोधितत्वं वा कथं निश्चीयत इत्यत्राह—सर्वृणां च तत्साक्षात्कारसामर्थ्यादिति । नन्वस्तु तेषां तत्साक्षात्कारसामर्थ्यं, स्मृतीनां तन्मूलकत्वं तु कुत इत्यत्राह—अत एव साक्षात्कृत्येति । तदर्थान्स्मरन्ति सर्त्तार इति । ननु स्वमतिसमुत्प्रेक्षितं कथयन्तीति भावः । इत्थं चास्य दीक्षाविशेषस्य स्मृतिप्रोक्ततया सिद्ध्यत्येव वेदबोधितत्वमिति भावः । ननु नायं नियमो वेदार्थान्साक्षात्कृत्य स्मरन्तीति, किन्तु किमपि स्वमतिसमुत्प्रेक्षितमेव समादिशन्ति, तत् स्मृतिप्रोक्तमित्येतावता न वेदमूलकतास्येति शङ्कायामाह—अत एव स्मृतीनां प्रामाण्यमिति । अत एव—वेदार्थान्साक्षात्कृत्य स्मरन्तीत्यत एव । अन्यथा—तथा नियमानङ्गीकारे । स्मृतिमात्रस्येति । कृत्स्नस्मृतेरित्यर्थः । मन्वादिस्मृतिषु वा कस्ते पक्षपातावकाश इति भावः । कालात्ययापदिष्टत्वादिति । बाधितत्वादित्यर्थः । तथाच प्रकृते प्रत्यक्षश्रुतितो न कश्चन बाधः, तस्माद्वेदविहितार्थविरुद्धत्वरूपावैदिकत्वशङ्काया नावकाश इति भावः । नन्वस्ति नामेहापि प्रत्यक्षश्रुतितो बाध इत्याशङ्कते—न चेहापीति । परिहरति—पुरुषार्थधारणस्यैव निषेधादिति । अयं भावः— अगन्धस्रग्धारणस्य प्रतिषेधः प्रसङ्गं विना न घटते, तत् अगन्धस्रग्धारणे प्रसङ्गो वाच्यः, प्रसङ्गश्च सामान्यतो लावण्यमात्रेण सम्भाव्यते, तत् रागप्राप्तमगन्धस्रग्धारणं पुरुषार्थमिह निषिध्यते "नागन्धां स्रजं धारये"दिति । न दीक्षाङ्गतया विहितं तद्धारणमिति भावः । वस्तुतस्तुलसीकाष्ठस्य सुगन्धितया निषेधश्रुतिगोचरत्वाशङ्काया एव नावकाश इत्याह—तुलसीकाष्ठादाविति । नन्वेवं सति निषेधस्य कावकाश इत्यत्राह—लोहान्तरेष्विति । विशिष्टस्मृतिगोचरेऽखिलार्थे कथंवा नोचितेत्यभिप्रायेणाह—परमपुरुषार्थेति ।

दीक्षां विष्णुं भुवि भजन्ति ये। ते कृतार्था मनुष्या वै भारभूता भुवोऽपर" इति च। स्कान्दे चोक्तम्—"ते नराः पशवो लोके किं तेषां जीवने फलम्। यैर्न लब्धा हरेर्दीक्षा नार्चितो वा जनार्दन" इति।

द्विजातिभिरिति निर्देशात्–द्विजानां नैष धर्मः, द्विजा हि गायत्र्युपदेशादिना प्राप्तसंस्काराः, किं तेषामेतेन, ये पुनर्गायत्र्यादावनधिकारिणश्चतुर्थप्रभृतयस्तेषामेवायं धर्म इति शङ्का निरस्ता भवति। नहि वेदाधिकारमात्रेण यथाधिकारमनुष्ठितेन वैदिकेन कर्मणा वा कृतकृत्यता, विना भक्तिममृतत्वाप्राप्तेः। स्मर्यते च कृष्णभक्तेः सर्वतः श्रैष्ठ्यम्—"दृष्ट्वा स्त्रीणां भगवति कृष्णे भक्तिमलौकिकीम्। आत्मानं च तया हीनमनुतप्ता व्यगर्हयन्। धिग्जन्म नस्त्रिवृद्यत्तद्धिग्व्रतं धिग्बहुज्ञताम्। धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे। नासां द्विजातिसंस्कारो न निवासो गुरावपि। न तपो नात्ममीमांसा न शौचं न क्रियाः शुभाः। अथापि ह्युत्तमश्लोके कृष्णे योगेश्वरेश्वरे। भक्तिर्दृढा न चास्माकं संस्कारादिमतामपी"ति। "विप्राद्द्विषड्गुणयुतादरविन्दनाभपादारविन्दविमुखाच्छ्वपचं वरिष्ठम्। मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति सकुलं न तु भूरिमान" इति

---

ननु—कथं पाञ्चरात्रस्य श्लाघा परमनिःश्रेयसावबोधनाय भगवता प्रोक्तं प्रमाणतमं पाञ्चरात्रमिति। तद्धि मोहनाय प्रणीतम्। तथाच वचनम्—"एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा। चकार मोहशास्त्राणि केशवोऽपि शिवेरितः॥ कापालं लगुडं शाक्तं भैरवं पूर्वपश्चिमम्। पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः॥" इति। मैवम्। "ओङ्काररथमारुह्य मनः कृत्वा तु सारथिम्। ब्रह्मलोकपदान्वेषी याति विष्णोः परं पदम्॥ पाञ्चरात्रे तथा ह्येष भगवद्वाचकः स्मृतः॥" इत्यादिना स्वोक्तार्थे पाञ्चरात्रं प्रमाणयता याज्ञवल्क्येन पाञ्चरात्रस्य प्रामाण्यव्यञ्जनात्। "इदं शतसहस्राद्धि भारताख्यानविस्तरात्। आविध्य मतिमन्थानं दध्नो घृतमिवोद्धृतम्॥ नवनीतं यथा दध्नो द्विपदां ब्राह्मणो यथा। आरण्यकं च वेदेभ्य ओषधीभ्यो यथाऽमृतम्॥ इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम्॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्। ऋग्यजुःसामभिर्जुष्टमथर्वाङ्गिरसैस्तथा॥ भविष्यति प्रमाणं वै एतदेवानुशासनम्॥" इति परमनिःश्रेयावहत्वेन सर्वोत्तमत्ववर्णनात्।

---

पाञ्चरात्रे प्रमाणतमत्वमसहमानः परः शङ्कते—नन्वित्यादिना। प्रथितनियतानुपूर्वीकनिबन्धगतानन्यथासिद्धवचनशतनिर्धार्यमाणप्रामाण्ये पाञ्चरात्रे प्रक्षेपादिशङ्काकलङ्कितं कतिपयवचनं न प्रभवेदप्रामाण्यमुद्भावयितुमित्याशयेन परिहरति—मैवमित्यादिना। ब्रह्मविदग्रेसरजनकोपसेव्यत्वरूपं विशेषमभिप्रेत्य प्रथमं याज्ञवल्क्यस्य वचनं प्रमाणयति—ओङ्कारेत्यादिना। पञ्चमवेदतया प्रथितं भारतं प्रमाणयति—इदं शतसहस्राद्धीत्यादिना। तत्त्वविदामग्रेसरेण पराशरेण प्रणीतं प्रथमं पुराणं

च। "मामुपाश्रित्य कौन्तेय! येऽपि स्युः पापयोनयः। स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम्। किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथे"ति। तस्यां च भक्तौ कृष्णदीक्षा हि प्रथमसाधनमित्युक्तमेव प्राक्। तत् विना कृष्णदीक्षां कृष्णभक्त्यसिद्धेस्तत्सिद्ध्यै मुमुक्षुभिर्द्विजातिभिरवश्यं दीक्षा ग्राह्येति भावः।

गले—कण्ठे। तुलसीमालिके—तुलसीशब्देन तुलस्याख्यवृक्षकाष्ठं तस्या

---

तथा श्रीविष्णुपुराणे—"यज्वभिर्यज्ञपुरुषो वासुदेवश्च सात्वतैः। वेदान्तवेदिभिर्विष्णुः प्रोच्यते यो नतोऽस्म्यहम् ॥" इति सर्ववेदवेद्यपरब्रह्मभूतवासुदेवपरत्वं निरूपितम्। वाराहे च वचनम्—"यदिदं पाञ्चरात्राख्यं शास्त्रं परमदुर्लभम्। तद्भवान्वेत्स्यते सर्वं मत्प्रसादान्न संशयः॥ वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विज!। प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षैरपि द्विज! ॥" इति। तथा—"योगेश्वरं तु सौवर्णं दापयेत्प्रयतो नरः। वेदाध्ये तु समं दत्तं द्विगुणं त्वर्थचिन्तये॥ आचार्ये पाञ्चरात्राणां सहस्रगुणितं भवेत्॥" इति च। तथा श्रीभागवते—"तृतीयमृषिसर्गं वै देवर्षित्वमुपेत्य सः। तन्त्रं सात्वतमाचष्ट नैष्कर्म्यं कर्मिणां यतः॥" इति नैष्कर्म्यावहता सात्वतस्योक्ता। तथा तत्रैव—"य आशु हृदयग्रन्थिं निर्जिहीर्षुरिहात्मनः। विधिनोपचरेद्देवं तन्त्रोक्तेन च केशवम्॥" इति तान्त्रिकाराधनस्य हृदयग्रन्थिविनिर्हरणसाधनत्वमुक्तम्। ब्रह्माण्डे च—"ऋगाद्या भारतं चैव पाञ्चरात्रमथाखिलम्। मूलरामायणं चैव पुराणं चैतदात्मकम्॥ ये चानुयायिनस्तेषां सर्वे ते च सदागमाः॥" इति पाञ्चरात्रस्य सदागमत्वमुक्तम्। कौर्मे च—"वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन च द्विज!। प्राप्योऽहं नान्यथा प्राप्यो वर्षलक्षशतैरपि॥" इति भगवत्प्राप्तिहेतुत्वमुक्तम्। तथा स्कान्दे—"शास्त्रं च वेदाः स्मृतयः पुराणं च तदात्मकम्। इतिहासः पाञ्चरात्रं भारतं च महामते!॥ एतैरेव महाविष्णुर्ज्ञेयो नान्यैः कथञ्चन॥" इति भगवज्ज्ञानसाधनत्वमुच्यते। तदेवं बहुतरप्रमाणोपमर्देन मोहकत्वप्रतिपादकताया असम्भवादुदाहृतकूर्मवचनं प्रक्षेपशङ्काकलङ्कितमप्रमाणमेव। नच वैपरीत्यं किं न स्यादिति शङ्क्यम्, बाहुल्येन तदयोगात्। पञ्चमवेदत्वेन प्रथितस्य भारतस्योपमर्दायोगाच्च।

सान्नाम तदप्रक्षिप्तं, परितः पर्यालोचने तन्नाप्रामाण्यमवगमयति पाञ्चरात्रस्य। तत्र हि—"स तेषां मायया जातं गोवधं गौतमो मुनिः। केनापि हेतुना ज्ञात्वा शशाप तीव्रकोपनः॥" इत्यादिना सन्दर्भेण गौतमशापतस्त्रयीबाह्यत्वं गतानां चिन्ताकुलानां कथञ्चित्सन्तरणोपायमाकाङ्क्षमाणानां कथञ्चित्सन्तरणाय स्वाराधनरूपमिदं पाञ्चरात्रं प्राचीकशदिति विज्ञायते। तथाहि—इमानि हि पूर्वं वचनानि—"ततः स भगवान्विष्णुः शरण्यो भक्तवत्सलः। गोपतिं प्राह विप्रेन्द्रानालोक्य प्रणतान्हरिः॥ वेदबाह्ये तु पुरुषे पुण्यलेशोऽत्र शङ्कर!। न विद्यते महादेव! धर्मो वेदाद्विनिर्गमी॥ तथापि भक्तवात्सल्याद्रक्षितव्या महेश्वर!। तस्माद्वै वेदबाह्यानां रक्षणार्थं च पापिनाम्॥ विमोहनाय शास्त्राणि करिष्यावो वृषध्वज!। एवं सञ्चोदितो रुद्रो माधवेन मुरारिणा॥" इति। अत्र रक्षणाय मोहनाय च कर्त्तव्यतयाऽभिसंहितत्वे नह्येकस्य शास्त्रस्य सम्भवतः, अतो

---

प्रमाणयति—तथा श्रीविष्णुपुराण इति। अथ पुराणान्तरवचनान्याह—वाराहे चेत्यादिना।

तुष्यतु दुर्जन इति न्यायेनाह—सान्नाम तदप्रक्षिप्तमित्यादिना। परितः पर्यालोचन इति।

माले एव मालिके–द्वे स्रजौ। नित्यं–अव्यवधानेन। धार्ये–धारणीये। तदुक्तं स्कान्दे—"धारणीया कण्ठदेशे तुलसीकाष्ठमालिका। वैष्णवेन विशेषेण भगवत्प्रीतिवर्धनी"ति। अधारणे दोष उक्तः पाद्मे—"न धारयन्ति ये मालां हैतुकाः पापवुद्धयः। पतन्ति ते तु नरके दग्धाः कोपाग्निना हरे"रिति। तन्नित्यधार्यत्वमुक्तमागमे—"यज्ञोपवीतवद्धार्या तुलसीकाष्ठमालिके"ति। पाद्मे च—"न यस्य च पशोः कण्ठे तुलसीमालिका भवेत्। तस्यान्नं मांससदृशं जलं च मदिरासम"मिति।

ननु—"पूजाकाले तथा ध्याने सन्ध्यादौ नित्यकर्मणि। तुलसीं दधते

---

मोहनाय कानिचिद्रक्षणाय कानिचिदित्येवाभिसन्धिर्वाच्या। तत्र विष्णोर्मोहनशास्त्रप्रवर्त्तकत्ववर्णनं तु नोचितम्, अत्रैव शरण्यत्वभक्तवत्सलत्वविशेषणयो रक्षणौपयिकयोर्विष्णावुपादानात्। तद्गौतमशापतः पतितानां शापानुगुणं मोहनाय शास्त्रं शिवेन प्रावर्त्तयत्। स्वयं स्वाराधनप्रतिपादकं पाञ्चरात्रं परित्राणाय प्राचीकशदित्येव न्याय्यम्। न चान्यतरवैयर्थ्यम्, गौतमशापाभिभूतानां पाशुपताद्यसच्छास्त्रप्रवृत्त्या चिरमनुभूय निरयं मानुषे लोके जातानां पाञ्चरात्राभिहितभगवदाराधनादिप्रवृत्त्या संसृत्तरणसम्भवात्। तथाच तत्रैव स्मर्यते—"ये चान्ये शापनिर्दग्धा गौतमस्य महात्मनः। सर्वे ते जनयिष्यन्ति ब्राह्मणाद्यासु योनिषु॥ निन्दन्ति च हृषीकेशं ब्राह्मणान्ब्रह्मवादिनः। वेदबाह्यव्रताचारा दुराचारा दुरागमाः॥ मोहयन्ति जनान्सर्वान्दर्शयित्वा फलानि तु। तमसाऽऽविष्टमनसो बैडालव्रतिकाधमाः॥ पाञ्चरात्रविदो ये तु यथाकामं परं नृप!। एकान्तभावोपगतास्तं हरिं प्रविशन्ति तु॥ पञ्चकालविधानज्ञाः पूजयन्ति जनार्दनम्। पूजां तु तेषां द्विगुणां स तु देवः प्रयच्छति॥" इति। एतेन पाञ्चरात्रस्यैव मोहकत्वमन्यस्यैव रक्षकत्वं किं न स्यादिति शङ्का परास्ता, उक्तवचनात्, पाञ्चरात्रप्रवर्त्तकस्य भगवतो विष्णोः शरण्यत्वेन भक्तवत्सलत्वेन विशेषणात्, "शैवान्पाशुपतान्दृष्ट्वा लोकायतिकनास्तिकान्। विकर्मस्थान्द्विजांश्चैव सवासा जलमाविशेत्॥" इति पाशुपताद्यागमनिन्दाया इव कचिदपि पाञ्चरात्रनिन्दाया अकृतत्वाच्च।

ननु—निन्द्यत एव पाञ्चरात्रमपि पाशुपतादिवत्—"अथांशोः सात्त्वतो नाम विष्णुभक्तः

---

पूर्वापरपर्यालोचन इत्यर्थः। अतो मोहनाय कानिचिद्रक्षणाय कानिचिदित्येवाभिसन्धिर्वाच्येति। नन्वस्तु तथा, तथापि पाञ्चरात्रं रक्षकमिति कथमवगम्यत इत्यत्राह—तत्रेति। विष्णावुपादानादिति। तथाच मोहकत्वे पाञ्चरात्रस्येदमेव वचनं व्याहन्येतेति भावः। मोहनशास्त्रप्रवर्तनस्य प्रयोजनमाह—तदिति। पाञ्चरात्रस्य प्रवर्त्तने प्रयोजनमाह—स्वयमिति। अन्यतरवैयर्थ्यमाशङ्क्य परिहरति—न चान्यतरवैयर्थ्यमित्यादिना। पाञ्चरात्रस्य रक्षकत्वं तत्रैव स्फुटं कण्ठरवेणोच्यत इत्याह—तथाच तत्रैवेति। शिवेन प्रवर्त्तितस्य पाशुपतस्यातथात्वे ज्ञापकं प्रदर्शयन्पाशुपतात्पाञ्चरात्रस्य विशेषमाह—शैवान्पाशुपतानित्यादिना।

ननु पाशुपतस्येव पाञ्चरात्रस्यापि निन्दाऽस्त्येवेत्याशङ्कते—नन्वित्यादिना। परिहरति—

कण्ठे ते भक्ता हरिवल्लभाः । भोजने शयने चैव मलमूत्रविसर्जने । तुलसी धार्यते येन विष्णुद्रोही स उच्यत" इत्यादिपाद्मवाक्यात्पूजादिसमय एव तद्धारणमुचितं, नतु सर्वदेति चेन्न । निषेधवाक्यानां भगवदसमर्पितमालाधारणविषयत्वात् । "निवेद्य हरये मालां तुलसीकाष्ठसम्भवाम् । वहते यो नरो भक्त्या तस्य नैवास्ति पातक"मिति स्कान्दद्वारिकामाहात्म्योक्तेः । "शयने भोजने स्नाने तथा चोत्सर्गकर्मणि । न त्यजेत्तुलसीमालां त्यजंस्तां दोषभाग्भवे"दिति पाद्मोत्तरखण्ड एवोक्तेश्च । "तुलसीं कण्ठसंलग्नां विसर्गाद्येऽपि न त्यजेत् । नाशौचं धारणे तस्या यतः सा ब्रह्मरूपिणी"ति गारुडोक्तेश्च ।

---

प्रतापवान् । महात्मा दाननिरतो धनुर्वेदविदां वरः । स नारदस्य वचनाद्वासुदेवार्चने रतः । शास्त्रं प्रवर्त्तयामास कुण्डगोलादिभिः श्रितम् ॥ तस्य नाम्ना तु विख्यातं सात्वतं नाम शोभनम् । प्रवर्त्तते महाशास्त्रं कुण्डादीनां हितावहम् ॥" इति । एवम्—"बुद्धश्रावकनिर्गन्धाः पाञ्चरात्रविदो जनाः । कापालिकाः पाशुपताः पाखण्डा ये हि ते द्विधा ॥ यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तद्भवेच्छ्राद्धं प्रेत्य चेह न तत्फलम् ॥ वामाः पाशुपताचारास्तथा वै पाञ्चरात्रिकाः । भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा ॥ शैवान्पाशुपतान् जैनान् लौकायतिकनास्तिकान् । पाञ्चरात्रमतान्दृष्ट्वा सवासा जलमाविशेत्" ॥ इति च । मैवम् । तत्र यत्कौर्मं वचनं "अथांशो" रित्यारभ्य "कुण्डादीनां हितावह"मित्यन्तम्, तद्धि "शैवान्पाशुपता"नित्यादिवन्न निन्दकम् । तत्र हि—"सात्वतो नाम विष्णुभक्तः प्रतापवान् । महात्मा दाननिरतो वासुदेवार्चने रतः ॥ शास्त्रं प्रवर्त्तयामास" इति प्रवर्त्तकस्य भगवदेकान्तभक्तत्ववर्णनात् । नहि भगवदेकान्तभक्तः कस्यचिदनर्थाय किञ्चित्प्रवर्त्तयेत् । न वा तेन प्रवर्त्तितं पाशुपतादिवदसच्छास्त्रं स्यात् । न वा तत्र तस्य प्रवृत्तिर्मोहनार्था निरूपिता । श्रूयते तु विशेषणं 'शोभनं' 'महाशास्त्र'मिति । तत्कथमिदं विनिन्दकं स्यात् । एतावत्तु विशेषणमुपात्तं "कुण्डादीनां हितावहं" "कुण्डगोलादिभिः श्रितम्" इति च । नैतावता तस्य निन्दा, किन्तु वैदिककर्मस्वनधिकृतानां कुण्डादीनामपि भगवदाराधनरूपपाञ्चकालिकानुष्ठानादिसद्धर्मप्रदर्शनेनोत्तारकत्वेन प्रशंसायामेव तात्पर्यम् । अन्यथोक्तश्रीरामायणमहाभारतविष्णुपुराणवाराहश्रीभागवतादिवचनविरोधापत्तेः । नापि "कुण्डगोलकादिभिः श्रित"मितिविशेषणतस्तन्मात्रोपजीव्यं न वैदिकार्हमिति शङ्क्यम् । पुरुषार्थतदुपायावेदके वेदेऽनधिकृत्या सीदमानानां परमपुरुषार्थप्रापकभगवदाराधनद्वारोपकारकस्यास्य किं वक्तव्यं वेदेष्वधिकुर्वतामन्येषाम् ।

एतदुक्तं भवति—कुण्डादीनामुपकारकं नाम, नान्येषामिति वदन्तः प्रष्टव्याः। किमिदमुपकारकत्वं? किं हितावबोधकत्वात्? उताहितावबोधकत्वात्? । अहितावबोधकं तु नोपका-

---

मेवमिति । "कुण्डगोलादिभिः श्रित"मित्यत्र एवेदमनादरणीयमिति वदतः प्रतिक्षिपति—नापीति । अनधिकृत्येति । अनधिकारेणेत्यर्थः ।

उक्तमर्थं विवृणोति—एतदुक्तं भवतीत्यादिना । हितावबोधकत्वं दृष्टमिह उताहितावबो-

नच—"नागन्धां स्रजं धारयेद्दते हिरण्मय्या" इति श्रुतेर्धारणवचसां निर्बलत्वं शङ्क्यं, तस्या लोहान्तरनिषेधपरत्वात्। विस्तरस्तु तुलसीमालाधारणवादादवगन्तव्यः। ननु–मालाद्वयधारणे को हेतुरिति चेच्छ्रीराधाकृष्णाख्ययुगलस्वरूपोपासकत्वसूचनार्थमित्यवगम्यताम्। क्वचिदतिप्रेम्णा तदैक्यस्यापि वक्ष्यमाणत्वादेकस्या अपि मालाया धारणे न दोषः। अत एव क्वचिच्छ्रीकृष्ण इति कचित्कृष्ण इति च द्वेधा भगवन्नामनिर्देशोऽत्रास्तीति ज्ञेयम्। मालाधारणमन्त्रश्च विष्णुधर्म उक्तः—"तुलसीकाष्ठसम्भूते ! माले ! विष्णुजनप्रिये ! । बिभर्मि त्वामहं कण्ठे कुरु मां कृष्णवल्लभ"मिति।

किञ्च—ललाटं–भालमादिर्यस्य–हृदयादेस्तस्मिन्स्वाङ्गे। ऊर्ध्वं–दण्डाकारं च तत्पुण्ड्रं च तिलकम्। धार्यम्। तद्धारणं विना सकलसत्कर्माचरणानधिकारात्। तथा चोक्तं बृहन्नारदीये—"यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च। वृथा भवति विप्रेन्द्र! ऊर्ध्वपुण्ड्रं विना कृत"मिति। मात्स्ये च—"यो विना चोर्ध्वपुण्ड्रेण यत्कुर्यात्कर्म वैदिकम्। निष्फलं तस्य तत्कर्म भस्मन्येवाहुतिर्यथे"ति। हारीते च—"ऊर्ध्वपुण्ड्रविहीनस्तु सन्ध्याकर्म समाचरेत्। तत्सर्वं राक्षसैर्नीतं नरकं स च गच्छति। नित्यं नैमित्तिकं काम्यं त्रिविधं श्रुतिनोदितम्। ऊर्ध्वपुण्ड्रविहीनस्य सर्वं तन्निष्फलं भवे"दिति।

---

रकम्। हितावबोधकत्वेन चेत्तद्धितं किं वेदबोधिततो विप्रतीपं? उताविप्रतीपम्?। विप्रतीपं चेन्न तदुपकारकं, अवैदिकत्वापातात्। अविप्रतीपं चेत् किं वेदबोधितपुरुषार्थचतुष्टयतदुपायान्यतमावबोधकत्वेन? उत तदतिरिक्तावबोधनेन?। तदतिरिक्तावबोधनेन तु न घटेत, नहि तदतिरिक्तः कश्चित्पुरुषार्थो वोपायो वाऽस्ति, तत् अन्यतमावबोधकत्वेन तु वक्तव्यम्। तत्र च न मोक्षतोऽर्वाचीनः पुरुषार्थो वर्ण्यत इति वक्तुं शक्यते, परमपुरुषार्थोपायभूतस्य परमपुरुषैकान्तभक्तिरूपस्य तदाराधनस्य नितरां वर्णनात्। तदेवं श्रुतितोऽनतिरिक्तहिततात्पर्यकं भक्तिप्रचुरमिदं पाञ्चरात्रं शास्त्रमधिकृतवेदानां त्रैवर्णिकानामपि सम्रुज्जीवनाय किं न स्यात्। सद्वारकभगवदाराधनपराया-

---

धकत्वादिति विकल्पः। हितावबोधकं नामेदं, परन्तु वेदबोधितादन्यदेव ततो विरुद्धं वात्र प्रतिपाद्यत इतीदं न वैदिकपरिग्रहार्हमित्याशङ्कां परिहरति—तद्धितमित्यादिना। विप्रतीपं चेन्न तदुपकारकमिति। तथाच कुण्डादीनां कथमिदं हितं भवेदिति भावः। नहि तदतिरिक्तः पुरुषार्थो वोपायो वाऽस्तीति। येनैतदवबोध्येन कुण्डानां वा समुत्तरणं भवेत्तथाविधस्तदतिरिक्तो न कश्चिदिति भावः। अन्यतमावबोधकत्वेन तु वक्तव्यमिति। नन्वस्तु तस्य तथात्वं, तथाप्यर्वाचीनपुरुषार्थपरतया न तन्निःश्रेयसकामैः परिग्राह्यमिति शङ्कायामाह—तत्र चेति। किं न स्यादिति। कैमुतिकन्यायेन भवेदेवेति भावः। तथाच सर्वाधिकारिकताऽस्य सिद्धा। अन्या विशेषमाह—सद्वारकेति।

केचित्तु—"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च। निराशाः पितरो यान्ति दृष्ट्वा च वृषलीपति"मित्यादिस्मृतिवाक्याच्छ्राद्धकाल ऊर्ध्वपुण्ड्रं नेच्छन्ति, तदसमञ्जसम्। तादृशवाक्यानां श्राद्धकाले चन्दनकृतोर्ध्वपुण्ड्रविषयत्वात्। "प्राक्पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्यात्स्वविग्रह"मित्याश्वलायनस्मृतेः। आद्यशब्देन कुङ्कुमादिग्रहणम्। पृथ्वीचन्द्रस्तु—पुण्ड्रकं-त्रिपुण्ड्रकमित्याह। "ऊर्ध्वं तु तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्ड्रकम्। निराशाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रक"मिति वृद्धपराशरोक्तेः। तस्माच्छ्राद्धकालेऽपि गोपीचन्दनेनोर्ध्वपुण्ड्रं विधेयम्।

---

स्त्रय्या अद्वारकतदाराधनपरमिदं न मात्रयाऽपि न्यूनमिति। "दैवमेवापरे यज्ञ" मिति कर्मयोगावान्तरनिरूपणावसरे देवार्चनरूपः कर्मयोगो यः प्रस्तुतः स चैतच्छास्त्रैकगम्यः। तत्सर्वेषामेवैतच्छास्त्रं समुज्जीवनम्। अत एव महाभारते स्मर्यते—"ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः। अर्चनीयश्च सेव्यश्च नित्ययुक्तैः स्वकर्मसु॥ सात्त्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः। वसन्ते दीक्षयेद्विप्रं ग्रीष्मे राजन्यमेव च॥ शरदः समये वैश्यं हेमन्ते शूद्रमेव च। स्त्रियं च वर्षाकाले तु पाञ्चरात्रविधानतः॥" इति। सर्ववर्णानामिव सर्वाश्रमाणामपि हिताधायकत्वं च स्मर्यते तत्रैव—"गृहस्थो ब्रह्मचारी च वानप्रस्थोऽथ भिक्षुकः। य इच्छेत्सिद्धिमाधातुं देवतां कां यजेत सः॥" इत्यादिना "इदं महोपनिषदं चतुर्वेदसमन्वितम्। साङ्ख्ययोगकृतान्तेन पाञ्चरात्रानुशब्दितम्॥ इदं श्रेय इदं ब्रह्म इदं हितमनुत्तमम्।" इत्यन्तेन पाञ्चरात्रप्रक्रियानिरूपणेन। स्मर्यते च तत्रैवोपरिचरनामकस्य राज्ञो महात्मानः सात्त्वतेन विधिना वासुदेवाराधनं तच्छेषेण पित्रादितर्पणं च—"राजोपरिचरो नाम बभूवाधिपतिर्भुवः। आखण्डलसमः ख्यातो भक्तो नारायणं हरिम्॥ सात्त्वतं विधिमास्थाय नारायणमुखोद्भवम्। पूजयामास देवेशं तच्छेषेण पितामहान्॥ पितॄनृषींश्च विप्रांश्च संविभज्याश्रितांश्च सः॥" इति। निरूपिते च वाराहवचने "वेदेन पाञ्चरात्रेण भक्त्या यज्ञेन चे"ति पाञ्चरात्रस्य वेदादिना समुच्चयो निरूपितः। वेदपाञ्चरात्रावबोधितकर्मानुगृहीतया वेदपाञ्चरात्रोदितया भक्त्याऽहं प्राप्यः। यद्वा—वेदेन-वेदानुवचनेन, पाञ्चरात्रेण-पाञ्चरात्रोदितेन भगवदर्चनेन, यज्ञेन-वर्णाश्रमविहितेन पञ्चमहायज्ञादिनेति तदाशयः। एतेन—"पाञ्चरात्रं भागवतं तन्त्रं वैखानसाश्रितम्। वेदभ्रष्टान्समुद्दिश्य कमलापतिरुक्तवान्॥" इति वचनमपि व्याख्यातम्। दुरधिगमावबोधतया वा, वर्णतोऽनधिकारेण वा, सत्यप्यधिकारे प्रच्युत्या वा, अलब्धत्रय्युक्तनिस्तरणप्रकारानधिकृत्य प्रवर्त्तितत्वमात्रेणाधिकृतत्रयीकानुपसेव्यत्वस्यासिद्धेः, अहिंसासत्यवचनादेरिव सर्वोपसेव्यत्वात्।

---

सद्वारकभगवदाराधनं नामेन्द्रादिद्वारा भगवदाराधनम्, इन्द्रादयो हि भगवतः शरीरम्, तदिदमाराधनं श्रूयते पूर्वभागे कर्मपरे। अद्वारकतेति। साक्षाद्वासुदेवाराधने प्रवृत्तत्वादित्यर्थः। मात्रयेति। लेशतोऽपीत्यर्थः। इदं चाराधनं गीतायामनुवर्णितमित्याह—दैवमेवापर इत्यादिना। अस्य पाञ्चरात्रस्य सर्वसमुज्जीवनं कण्ठरवेण श्रूयत इत्याह—अत एवेति। सर्वसमुज्जीवनहेतुत्वादेवेत्यर्थः।

"ऊर्ध्वपुण्ड्रधरो यस्तु श्राद्धं कुर्याच्छुभानने ! । कल्पकोटिसहस्राणि गयाश्राद्धफलं लभे"दिति पाद्मोक्तेः । स्मृतिसारसमुच्चय ऊर्ध्वपुण्ड्रं प्रक्रम्योक्तं च—"ललाटे तिलकं कृत्वा कुर्युः शैवाश्च वैष्णवाः । तर्पणं चापि वै श्राद्धमन्यथा निष्फलं भवे"दिति ।

यत्तु—"ऊर्ध्वपुण्ड्रं द्विजः कुर्यात्क्षत्रियस्तु त्रिपुण्ड्रकम् । अर्धचन्द्रं तु वैश्यानां वर्त्तुलं शूद्रजातिष्वि"ति ब्राह्मवाक्यं तदवैष्णवक्षत्रियादीनां त्रिपुण्ड्रादिविधायकं न तु वैष्णवानाम् । "ऊर्ध्वपुण्ड्रं तु सर्वेषां न निषिद्धं कदाचन । धारयेयुः क्षत्रियाद्या विष्णुभक्ता भवन्ति ये" इति पाद्मोत्तरखण्डोर्ध्वपुण्ड्राध्यायोक्तेः । ललाटादावित्यनेन सामान्यतः सर्वेषां ललाटं हृदयं बाहुमूलद्वयं चेत्यङ्गचतुष्टयमेवाभिप्रेतं, दीक्षाविधौ तथैवोक्तेः । ब्रह्मचारिणां तु कण्ठाधिकमेतदेवाङ्गपञ्चकमित्यपि तत्रोक्तम् । धारणविधिस्त्वाह्निकप्रकरणे वक्ष्यते ।

---

परितः परिस्फुरत्स्वपि कूपसहस्रे ततः पानीयमधिगन्तुमक्षमान्पिपासाकुलान्पशूनवलोक्य कृपया परयाऽऽविष्टो यदि महाराजस्तटाकमेकं सुखावतरणमिक्षुरसेनेवाऽऽपूर्णमुपकल्पयेन्न किमुपसेवेतान्यः पिपासुर्मानुषः । किं वा पशूनामपि सुखावतरं मानुषस्य दुरवतरणं भवेत्, किं वा न स्वदेत, तृषा वा न शाम्येत, रज्ज्वादिसाधनान्वेषणक्लेश एव तु निवर्त्तते, सेयं समाधिराख्येयाऽत्रापीत्युक्तमेवैतत् । "वैदिकेन विधानेन पूजां कुर्याद्धरेस्ततः । अलाभे वेदमन्त्राणां पाञ्चरात्रोदितेन वा ॥" इति वचनमप्युक्ताभिप्रायमेव । अलाभेऽनधिकारादित्यर्थः ।

यत्तु—"बुद्धश्रावकनिर्ग्रन्था" इत्यादि "सवासा जलमाविशे"दित्यन्तं, तत् उक्तभारतादिग्रथितानेकवचनविरोधादनादरणीयम् । "अपाञ्चरात्रिका ये च ये च वेदविनिन्दकाः । ये नास्तिकमता ये च पाञ्चरात्रविनिन्दकाः । तान्दृष्ट्वाप्यथवा श्रुत्वा पातित्यं याति तत्क्षणात् ॥" इति पाञ्चरात्रनिविन्दकनिन्दादर्शनाच्च । पाञ्चरात्रविद इत्यस्य अब्भक्ष इतिवत् तदेकविद इत्यर्थमाश्रित्य पाञ्चरात्रमात्रनिष्ठया वेदविदूषणे प्रवृत्ता इति वा तात्पर्याश्रवणात् ।

---

वचनशतावगतं पाञ्चरात्रस्य सर्वसमुज्जीवनहेतुत्वं दृष्टान्तोपन्यासेन सुखमवगमयति—परित इत्यादिना । कूपदृष्टान्ततस्त्रयीधर्मस्य वर्णाश्रमविशेषादिविविधपरिकरसापेक्षता, अल्पेऽपि फले प्रयासबाहुल्यं च व्यज्यते । दृष्टान्ते करतलपरिमितजलसम्पादनेऽपि कलशरज्ज्वाद्यन्वेषणादिक्लेशोऽपरिहार्यः । दार्ष्टान्तिके च स्वर्गादिक्षुद्रफलार्थे ज्योतिष्टोमादियागानुष्ठानसमुत्थो महान् क्लेशः स्फुटः । ततः पानीयमधिगन्तुमक्षमान्पिपासाकुलान्पशूनित्यनेन जन्मतस्त्रय्यामनधिकृतिः, तापत्रयाभिहत्या चार्थिता, अभ्युदितोपायानभिज्ञता च व्यज्यते । कृपया परयाविष्ट इत्यनेन भगवतः परमकारुणिकता पाञ्चरात्रप्रवर्त्तनहेतुभूता व्यज्यते । महाराज इत्यनेन सर्वेश्वरत्वं सर्वरक्षणसङ्कल्पौपयिकं सर्वसंरक्षणसमुचितसुकरतरोपायसङ्कलनसमर्थता च व्यज्यते । सुखावतरणमिति कूपतो वैषम्यं, तेन वर्णाश्रमादिवैषम्यसम्भाव्यमानस्खलनराहित्यं व्यज्यते । इक्षुरसेनेवेत्यतः स्वच्छता माधुर्यं चोच्यते, तेनेन्द्रादिद्वाराराहित्यं भगवदेकान्तभक्तिपर्यायरूपतया सदाराधनस्य माधुर्यातिशयश्च व्यज्यते ।

चकाराच्चतप्तमुद्राधारणमपि वैष्णवानां नित्यत्वात्समुच्चीयते। तदुक्तं पाद्मे—"अग्निहोत्रं यथा नित्यं वेदस्याध्ययनं यथा । ब्राह्मणस्य तथैवेदं तप्तमुद्रादिधार-

---

ननु—न वयमधुना पाञ्चरात्रस्य कार्त्स्न्येनाप्रामाण्यमातिष्ठामहे । संवदामो वासुदेवाराधनांशे । यस्तु श्रुतिस्मृतिविरुद्धोऽशस्तप्तचक्राङ्कनादिघटितदीक्षाविधानादिः—"ब्राह्मणः क्षत्रियो वैश्यः शूद्रो नारी तथेतरः । चक्राद्यैरङ्कयेद्गात्रमात्मीयस्याखिलस्य च ॥" इति । तत्रैव तु विवादः । निषिध्यते च श्रुत्या तप्तचक्राङ्कनम्—"चमूषच्छ्येनः शकुनो विभृत्वा गोविन्दुर्द्रप्स आयुधानि बिभ्रत् । अपामूर्मिं सचमानः समुद्रं तुरीयं धाम महिषो विवक्ति ॥" इति । अस्य चायमर्थः—तुरीयं धाम—परंब्रह्म, सचमानः—परब्रह्मध्यानशील इति यावत् । अत एव चमूषत्—चम्वोर्निषीदतीति चमूषत्, "चम्वौ रोदसी"इति वेदनिघण्टुः । परमात्मध्यानशीलोऽत एवेहलोकपरलोकयोर्निषीदन् । श्येनः—शंसनीयपदभाक् । तथाच निरुक्तम्—शंसनीयं गच्छतीति । शकुनः—आत्मोन्नयनसमर्थः । तथाच निरुक्तम्—शक्नोत्यात्मानमुन्नेतुमिति । विभृत्वा—न केवलमात्मोच्चारणमात्रसमर्थः, किन्तु स्वसम्बन्धिनोऽपि तारयितुं समर्थः । द्रप्सः अंशभूतः, जीवो ह्यंशः परमात्मनः । एवम्भूतो गोविन्दुः—गोविन्दस्यायुधानि बिभ्रत्—बिभर्त्ति । स महिषो भूत्वा—तिर्यग्भूत्वा, अपामूर्मिं—अपां विकारभूतं, समुद्रं—संसारसागरमिति यावत् । विवक्ति—सेवेत । परमात्मध्यानशीलोऽपि यदि चक्राङ्कनादिलिङ्गं धारयेत् स तु तिर्यग्योनिमाविश्य संसारनिमग्नो भवतीति तदाशयः । तदेवं प्रत्यक्षश्रुत्या बाधादप्रामाणिकं तद्विधानम् । एवं स्मृत्या च तद्बाध्यते । तथाच वचनम्—"स्वशरीरेऽन्यदेहे वा भवेदत्रिकिणी द्विजः" इति । इदं च मानवम् । किणत्रयं च ब्रह्मादिदेवत्रयचिह्नाङ्कनजनितम् । "अङ्गेषु नाङ्कयेद्विप्रो देवतायुधलाञ्छनैः । अङ्कयेद्यदि वा मोहात्पतत्येव न संशयः ॥ नाङ्कयेन्न दहेद्गात्रं दहेच्चेत्कामकारतः । नाधिकुर्वन्ति दग्धाङ्गाः श्रौतस्मार्त्तेषु कर्मसु ॥ तप्तचक्रधराश्चैव ये चायुधधरा अपि ।

---

दीक्षाप्रसङ्गात्तप्तचक्राङ्कनस्यावैदिकत्वं निराकर्त्तुं प्रथमं परेषामाशङ्कामनुवदति—नन्विति । श्रुतिं व्याचष्टे—अस्य चेत्यादिना । अस्येति सामान्ये नपुंसकम् । वचनस्येति वा शेषः । तुरीयशब्दस्य त्रिमूर्त्त्यतीततत्त्वपरतां धामशब्दस्य प्राप्यार्थकतां चाभिप्रेत्याह—तुरीयं धाम—परं ब्रह्मेति । चमूशब्दस्य वक्ष्यमाणार्थपरतायां प्रमाणमाह—चम्वौ रोदसीइति वेदनिघण्टुरिति । श्येनशब्दस्योक्तार्थत्वे निरुक्तं प्रमाणमाह—तथा चेति । शकुनशब्दस्योक्तार्थत्वे प्रमाणमाह—तथा चेति । जीवो ह्यंशः परमात्मन इति । प्रतिबिम्बरूपतया, उपाध्यवच्छिन्नत्वेन वा, परिणतेर्वा, विशिष्टैकदेशतया वा तस्य तथात्वं सिद्धान्तभेदेन बोध्यम् । गोविन्दुरित्युकारान्तश्छान्दसः प्रयोगः षष्ठीलोपश्च तथेत्यभिप्रायेण व्याचष्टे—गोविन्दस्येति । महिषशब्दस्योपलक्षकतामभिप्रेत्याह—तिर्यग्भूत्वेति । तस्यार्थमाह—संसारसागरमिति । प्रत्यक्षश्रुतिविरोधं निरूप्य प्रत्यक्षश्रुतिमूलकस्मृतिविरोधमाह—एवं स्मृत्या च तद्बाध्यत इति । ननु न्यूनबलेन समबलेन वा विरोधो न दोषाय इत्याशङ्क्य परिहरति—न चेत्यादिना ।

ण"मिति। तथा—"अङ्कयेत्तप्तचक्राद्यैरात्मनो वाहुमूलयोः। कलत्रापत्यभृत्येषु पश्वादिषु च सर्वशः" इति। काशीखण्डे च—"ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा यदि वेतरः। शङ्खचक्राङ्किततनुस्तुलसीमालिकाधरः। गोपीचन्दनलिप्ताङ्गो

शिरोलिङ्गधराश्चैव कण्ठलिङ्गधरा अपि॥ पाखण्डाः सर्व एवैते सर्वकर्मबहिष्कृताः। पाखण्डं पतितं व्यङ्गं तप्तचक्रधरं द्विजम्। सूतिकामग्निदं स्पृष्ट्वा सवासा जलमाविशेत्॥ शैवान्पाशुपतान् जैनान् लोकायतिकनास्तिकान्। तप्तचक्रधरान्दृष्ट्वा सवासा जलमाविशेत्॥ शिवलिङ्गधरा ये तु ये जटामुण्डधारिणः। तप्तचक्रधरा ये च तान्द्विजान्नावलोकयेत्॥ कुक्कुटश्च वराहश्च तप्तचक्रधरस्तथा। रजस्वला च पाखण्डः पञ्चैते श्राद्धदूषकाः॥ श्रौतस्मार्तक्रियो नित्यं नाङ्कयेदङ्गमङ्कनैः। अपि विष्ण्वादिसम्बन्धैस्तप्तैर्वा पतितो भवेत्॥ अज्ञानादथवा लोभाद्रागतो वा सुदर्शनम्। धत्ते कुलघ्नं तं दृष्ट्वा सवासा जलमाविशेत्॥ चक्राङ्किततनुर्वापि राजन् लिङ्गाङ्कितोऽपि वा। नाधिकारी परिज्ञेयः श्रौतस्मार्तेषु कर्मसु॥ शङ्खं चक्रं च लिङ्गं च यो मूढो धारयत्यसौ। पाखण्डः स हि विज्ञेयः सर्वकर्मबहिष्कृतः॥" इति च। न च स्मृतिविरोधेन का हानिः पाञ्चरात्रस्य, तथासति पाञ्चरात्रवचनेन तप्तचक्राङ्कनविधायकैर्नैतेषामेवोपमर्दः किं न स्यादिति वाच्यम्। उक्तप्रत्यक्षश्रुतिलिमूलकैरेभिर्वचनैरतथाविधस्य तस्यैवोपमर्दात्।

मैवम्। ब्रह्मविद्यानिष्ठस्तप्तचक्राङ्कनजनितप्रत्यवायतः संसारमवाप्नोतीति श्रुत्यर्थवर्णनस्यासङ्गतत्वात्। चक्राङ्कनस्य प्रत्यवायावहत्वाभिमतावपि ब्रह्मविद्यानिष्ठे तत्संश्लेषासम्भवात्। उत्तरपूर्वाघयोरश्लेषविनाशयोः शारीरके निर्णीतत्वात्। तथाच सूत्रम्—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति। न च यतमानस्यानेन प्रत्यवायोऽत्र वर्ण्यत इति वक्तुं शक्यम्। यतमाने लोकान्तरगमनशंसनीयावास्यात्मात्मीयोद्धारणसामर्थ्यानां चमूपदादिशब्दविवक्षितानां गुणानामसम्भवात्। ते हि गुणा निष्पन्नयोगस्यैव स्युः, तस्मिंस्तु नोत्तराघप्रसक्तिः। तिर्यग्भवनस्यैव संसारप्रवेशरूपत्वेन महिषो भूत्वा संसारं विशतीत्यस्यासङ्गतत्वाच्च। नहि संसारप्रवेशो महिषभावोत्तरकालिकः, मुखं व्यादाय स्वपितीत्यादाविव निर्वाहेऽप्येकतरवैयर्थ्येना-

प्रत्यक्षश्रुतिविरोधो नेति परिहरति—मैवमित्यादिना। तत्र चमूपदिति श्रुतेः परोक्तार्थकतां प्रतिक्षिपति—ब्रह्मविद्यानिष्ठ इत्यादिना। तुरीयं धाम सचमान इत्यनेन विवक्षितः किं निष्पन्नब्रह्मविद्यः, उतानिष्पन्नब्रह्मविद्यो यतमानो वेति विकल्प्य दूषयति—चक्राङ्कनस्येत्यादिना। प्रत्यवायावहत्वाभिमतावपीति। अपिना वस्तुतस्तप्तचक्राङ्कनस्य परमनिःश्रेयसोपकारकत्वैवेति, स्वोत्प्रेक्षितकतिपयवचनतस्तथाभिमतिर्भवतु नाम भवतस्तथापीयं श्रुतिस्तु प्रत्यवायावहत्वं नैवावगमयेदिति च व्यज्यते। ब्रह्मविद्यानिष्ठे—निष्पन्नब्रह्मविद्ये। शारीरके—ब्रह्ममीमांसायाम्। तदधिगम इत्यादि। तदधिगमे—ब्रह्मविद्याधिगमे। उत्तराघस्याश्लेषः पूर्वाघस्य विनाश इत्यर्थः। द्वितीयं शिरो दूषयति—न चेत्यादिना। विवक्षितानां गुणानामसम्भवादिति। ननु यतमानस्यापि तदर्हताऽस्त्येवेति विशेषणानां नानुपपत्तिरित्यतो दूषणान्तरमाह—तिर्यग्भवनस्यैवेति। नहि संसारप्रवेशो महिषभावोत्तरकालिक इति। "समानकर्तृकयोः पूर्वकाले क्त्वा" इति समानकर्तृके भूतार्थ एव क्त्वाप्रत्ययविधानादिति भावः। निर्वाहेऽपीति। महिषभवनस्य संसारप्रवेशरूपत्वेऽपि संसारप्रवेशस्य सुचिरमनुवर्तमानतया पश्चात्तनसंसा-

दृष्टश्चेत्तदघं कुत" इति । स्कान्दे च—"तप्तमुद्राधरो विप्रो विशेषेण च

सारस्याच । विवक्षितार्थे व्यवहितान्वयरूपदोषश्च । तुरीयं धाम सचमान इत्यन्वये समुद्रमित्यनेन व्यवधानात्, महिषो भूत्वा समुद्रं विवक्तीत्यन्वये तुरीयं धामेत्यनेन व्यवधानात्। तस्मान्नेह विरोधाधिकरणन्यायावसरः। नापि स्मृतितो बाधः, मनुनाऽनिषेधात्। तेन हि विप्रे व्याघातद्यूतयुद्धार्थनिरन्तरासिकानिमित्तकिणत्रयस्यैव निषेधात्। नच द्विजशब्दस्य क्षत्रियपरस्य विप्ररूपविशेषपरत्वाश्रयणेन क्लेशः। द्विजशब्दस्य "दन्तविप्राण्डजा द्विजा" इति कोशेन विप्रत्वावच्छिन्नवाचिताया अप्यवगमात्। बहुषु कोशेषूक्तवचनस्यैवानुपलम्भाच । यान्यन्यानि वचनानि दर्शितानि, तेषां चक्राङ्कनविधायकपाञ्चरात्रवचनतः प्राबल्येऽप्रामाण्यात्। प्रत्यक्षश्रुत्यमूलकासु स्मृतिषु तरतमभावासम्भवात्। श्रुत्यनुमापकत्वे चाविशेषात्। वस्तुतो निषेधवचनानां प्रत्यक्षश्रुत्या बाधेन विरोधाधिकरणन्यायेनाप्रामाण्यात्। सैव हि श्रुतिर्विदधाति चक्राङ्कनम्। श्रुतेश्चायमर्थः—अपामूर्मिं समुद्रं–अपामिति भूतानामुपलक्षकम्। ऊर्मिशब्दो विकारपरः, भूतपरिणामभूतं समुद्रमित्यर्थः, देहात्मकसंसारसमुद्रमित्येतत्। सचमानः–षच समवाये- पूर्वपूर्वकर्मणा पुनः पुनः संयोजयन्, कर्मणा स्वस्य पुनः पुनः शरीरसम्बन्धमापादयन्निति यावत्। तथाविधो द्रप्सः–ईश्वरांशभूतो जीवः। तस्य तदंशत्वं तदपृथक्सिद्धविशेषणत्वेनेत्यन्यत्र स्फुटम्। गोविन्दुरिति पञ्चम्यन्तं छान्दसमिति तूक्तमेव। आयुधानि बिभ्रत्–सुदर्शनादीनि बिभ्रत्, भगवदायुधलाञ्छितः सन्निति यावत्। अत एव शकुनः–संसारतः स्वात्मोद्धारणे समर्थः। विभृत्वा-निजानामपि भरणसमर्थः, उद्धरणसमर्थ इति यावत्। अत एव चमूपत्–प्रकृतिविनिर्मोकेन नित्यसूरिपरिषदि सङ्गतः। श्येनः–शंसनीयं स्वरूपं गतः। एवंविधो भूत्वा तुरीयं धाम–ब्रह्मविष्णुरुद्राधिष्ठितस्थानत्रयतोऽप्यतिरिक्तं चतुर्थमप्राकृतमित्येतत्। महिषः–महनीयः सन्, विवक्ति–प्रविशति, इति। अनेन चक्राङ्कनसोपासनप्रपदनान्यतरद्वारा मोक्षसाधनत्वावबोधनात्, एतद्विरुद्धानि निषेधवचनानि विरोधाधिकरणन्यायेनाप्रमाणान्येव।

स्प्रवेशतः पूर्वभावित्वं महिषभवनेऽस्तीति भूतत्वनिर्वाहो बोध्यः। समानकर्तृकत्वमात्रविवक्षया तत्र क्त्वाप्रत्ययं मन्यन्ते केचित्। असारस्याचेति। ननु नास्वारस्यं, महिषो भवति, न केवलं तावन्मात्रं किन्तु ततस्तु ततोऽपि निहीनतरतिर्यग्जन्म प्राप्नोतीत्यधोऽधस्तस्य निहीनजन्मप्राप्तिः संसारं विवक्तीत्यनेन व्यज्यत इत्यतो दूषणान्तरमाह—विवक्षितार्थे व्यवहितान्वयरूपदोषश्चेति। स्मृतितो विरोधं परिहरति—नापीति। ननु मनुवचनतोऽविरोधनिरूपणमात्रेण स्मृतिविरोधः कथं परिहृतः स्यात्, प्रदर्शितानि नाम बहूनि वचनानि तप्तचक्राङ्कननिषेधपराणीत्याशङ्कायामाह—यान्यन्यानि वचनानीत्यादिना। प्राबल्येऽप्रामाण्यादिति। पाञ्चरात्रवचनत एव त्वदुदाहृतवचनानामुपमर्दः किं न स्यादिति भावः। ननु वेदमूलकत्वेन तेषां प्राबल्यमिति शङ्कां परिहरति—प्रत्यक्षेति। नहि त्वदुदाहृतवचनमूलभूता श्रुतिः श्रूयते, स्मर्यते इति चेदेतन्मूलभूताऽपि तथैवेत्यत्र कस्ते प्रद्वेष इति भावः। ननु स्मृत्योर्विरोधे विकल्पः स्यादिति शङ्कां परिहरन्नाह—वस्तुत इत्यादिना। सैवेति। या विरोधसाधकतया त्वयाऽऽश्रिता सैवेत्येवकाराशयः। ईश्वरांशभूतो जीव इति। ननु जीवस्येश्वरतो भिन्नस्य कथं तदंशत्वमित्यत आह—तस्य तदंशत्वमिति। ननु चक्राङ्कनस्य कथं मोक्षसाधनत्वं, ज्ञानान्मुक्तिर्हि श्रूयत इत्यत आह—उपासनप्रपदनान्यतरद्वारेति। तस्य तदङ्गत्वादिति भावः।

वैष्णवः । दृष्ट्वा पूज्यो न सन्देहो निन्दको नारकी भवे"दिति । तथा—"चक्राङ्कितभुजाः सर्वे प्रह्लादेन ध्रुवेण च । विभीषणेन बलिना रुक्माङ्गदशुकेन च । मांधात्रा ह्यम्बरीषेण मार्कण्डेयमुखैर्बुधैः' । शङ्खादिचिह्नितं सर्वदेहं कृत्वा च

नच—पवमानसोमदेवताके पठ्यमानस्यास्य मन्त्रस्य क चक्राङ्कनपरता, किन्तु सोमप्रशंसा ह्यत्र । अयं चार्थः—चमूरत्र चमनसाधनं चमसः, तत्र सीदन् चमूषत्, श्येनः-शंसनीयः, शकुनः-शक्तः, विभृत्वा-पात्रेषु विभरणशीलः, गोविन्दुः-गवां लम्भकः, विन्दुरिच्छुरिति उप्रत्ययान्तो निपातः । द्रप्सः-द्रवणशीलः, आयुधानि-स्फ्यकपालादीनि, "स्फ्यश्च कपालानि चाग्निहोत्रहवणी च शूर्पं च कृष्णाजिनं च शम्या चोलूखलं च दृषचोपला चैतानि वै दश यज्ञायुधानि" इति श्रुतौ स्फ्यादीनामायुधत्वेन कीर्त्तनात् । बिभ्रत् धारयत्, अपां–उदकानां ऊर्मि-प्रेरकं, समुद्रं, सचमानो महिषः–महनीयः, ईदृशः सोमः तुरीयं धाम–चन्द्रमसः स्थानम् । "यमः पृथिव्या वायुरन्तरिक्षस्य सूर्यो दिवश्चन्द्रमा नक्षत्राणाम्" इति तस्य तुरीयत्वावगमात्तुरीयं धामेति तदुच्यते । तत्स्थानं विवक्ति–सेवत इतीति वाच्यम् । यत् यद्देवताकत्वेनाधीयते तत्तत्परमित्यत्रानियमात् । नहीन्द्रदेवताकत्वेनाधीयमानो निवेशः संगमनो वसूनामिति मन्त्र इन्द्रपरः, सहि गार्हपत्यपरः, ऐन्द्र्या गार्हपत्यमिति गार्हपत्ये विनियोगात् । तथा च तार्तीयाधिकरणे गार्हपत्ये विनियोगेन गार्हपत्यपरता समर्थिता । नच तथाप्यस्य सोम एव विनियुक्ततया तत्परत्वमेव न्याय्यमिति वाच्यम् । भगवच्छास्त्रे चक्रप्रतिष्ठायां "तत्तत्स्थापनकाले तु तत्तत्संज्ञान्मनून् जपेत् । विद्यां गदामित्याद्यं यत्पाठयेत् तद्विदो जनान् । चमूपच्छ्येन इति च प्रते विष्णो इति त्वृचौ" इत्यादिना चक्रधारणे विनियोगदर्शनादेतत्परताया अप्यक्षतेः ।

ननु—चक्राङ्कनेऽप्रामाण्यशङ्काकलङ्कितं पाञ्चरात्रमवलम्ब्य चमूपन्मन्त्रस्य चक्रधारणे विनियोगवर्णवमसम्भावितमिति नायं मन्त्रस्तत्परो भवितुमर्हति । वस्तुत उक्तवचनेन चक्रप्रतिष्ठायामेव तन्मन्त्रस्य विनियोगनिरूपणात्, चक्राङ्कने विनियोगस्य तेनाप्यनिरूपणाच्च । तस्मादुक्तश्रुतेरतत्परत्वेन न तच्छ्रुतिसिद्धमिति तन्निषेधवचनानां स्मार्त्तानां न विरोधाधिकरणन्यायेना-

शङ्कते—न चेति । पवमानसोमदेवताके पठ्यमानस्यास्य क चक्राङ्कनपरतेति । यद्देवताकत्वेन पठ्यते तदनुगुणेनैव ह्यर्थेन भाव्यमिति भावः । प्रकरणानुगुणमर्थं निरूपयति—अयं चार्थ इति । नन्वायुधशब्दस्य कथं स्फ्यकपालाद्यर्थतेत्याशङ्कायां प्रमाणमाह—स्फ्यश्च कपालानि चेति । चन्द्रस्थानस्य तुरीयत्वे प्रमाणमाह—यमः पृथिव्या इति । परिहरति—यदित्यादिना । अनियमादिति । अनियमं क्वचित्प्रदर्शयति—नहीति । गार्हपत्यपरत्वे हेतुमाह—ऐन्द्र्येति । ननु गार्हपत्ये विनियोगेन गार्हपत्यपरता कथं निश्चीयत इत्यत्राह—तथा चेति । शङ्कते—न चेति । सोम एव विनियुक्ततयेति । चक्रधारणादिषु विनियोगाभावादित्यर्थः । परिहरति—भगवच्छास्त्र इति । एतत्परताया अप्यक्षतेरिति । सोमे विनियोगदर्शनेन तत्परतेव भगवच्छास्त्रे चक्रधारणे विनियोगदर्शनादस्यैवैतत्परतापीति भावः ।

ननु श्रुतेरर्थे विप्रतिपन्ने तन्निर्णय उपबृंहणेनैव, उपबृंहणेन त्वविप्रतिपन्नेन भाव्यं, पाञ्चरात्रे तु प्रकृते विप्रतिपत्तिः, कथमिदमवलम्ब्य त्वदभिमतः श्रुत्यर्थः सिद्ध्येदित्याशयेन शङ्कते—ननु चक्राङ्कन

पुत्रक !" इति । कौर्मे च—"चक्रादिधारणं पुंसां परसम्बन्धवेदनम् । पातिव्रत्य-

प्रामाण्यशङ्कावकाश इति चेत् । मैवम् । "गोविन्दस्यायुधान्यङ्गे बिभ्रत्सुश्रोणि ! वै द्विजः । तुरीयं धाम तद्विष्णोर्महिष्ठः प्राप्नुयादिति ॥ चमूपच्छचेनः शकुनो बिभृत्वेति ऋगब्रवीत्" इति स्कान्दवचनेनास्याः श्रुतेस्तत्परत्वावगमात् ।

तुष्यतु वा दुर्जनः, तथाप्यनन्यथासिद्धप्रत्यक्षश्रुत्यन्तरसिद्धमपलपितुं कः शक्नुयात् । तथा च श्रुतिः शतपथे—"अथ कात्यायनः पप्रच्छ याज्ञवल्क्य इति होवाच परं ब्रह्मेत्येको दवो विश्वतश्चक्षुरुत विश्वात्मा विश्वतोबाहुरुत एष पुरुषोऽन्तर्यामोऽन्तर्यामः स विश्वतोमुखः सर्वात्मा विश्वतःपात्" इति । "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते" इति । "सम्बाहुभ्यां नमति सम्पतत्रैर्द्यावाभूमी जनयन्देव एकः पुरुषोऽन्तर्यामोऽन्तर्यामः स आदित्यतेजो भवति स आदित्यलोको भवति स विष्णुरेव भवति स विष्णुलोको भवति तस्मै चक्रं द्विभुजे धार्यमित्यग्निहोत्रमेव भवति भूः स्वयंभूर्ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद" ।

"अथ कात्यायनः पप्रच्छ याज्ञवल्क्य इति होवाच ज्ञानं वै पुरुषो ब्राह्मणो जायते ब्राह्मणो भवति वसिष्ठः काश्यपोऽत्रिर्जमदग्निर्विश्वामित्रोऽयं व्यासः पाराशर्यः सनकादयो देवाः स ब्रह्मलोको भवति तस्मै चक्रं द्विभुजे धार्यमिति स विष्णुलोको भवति सोऽनन्तलोको भवति स पुण्यलोको भवति स वै पुण्यो भवति य एवं वेद" ।

"अथ कात्यायनः पप्रच्छ याज्ञवल्क्य इति होवाच आदित्यः पुरुषः स आदित्यः कस्मिन्प्रतिष्ठितश्चाध्यात्मं च प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वमेति पापं हरति सुदर्शनं धार्यमित्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद ।"

"अथ कात्यायनः पप्रच्छ याज्ञवल्क्य इति होवाच आप एव यस्यायतनं हृदयं लोको मनो ज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणं नारायणं पुरुषं सर्वस्यात्मनः परायणं विष्णुरेव भवति तस्मै चक्रं द्विभुजे धार्यमिति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद ।"

"अथ कात्यायनः पप्रच्छ याज्ञवल्क्य इति होवाच इदं वै तत्पुरुषस्य परायणो भवति तस्मै चक्रं द्विभुजे धार्यमिति ।"

"अथ कात्यायनः पप्रच्छ याज्ञवल्क्य इति होवाच पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र पुरुषस्य नाभिः । ब्रह्मणोऽजायत इति देवासः पितरो यने विधृतेन बाहुना सुदर्शनेन प्रयतात् स्वर्गं लोकमायन् येनाङ्किता मनवो लोकसृष्टिं वितन्वन्ति ब्राह्मणास्तद्वहन्त्यग्निना वै होत्रा तस्मै चक्रं द्विभुजे धार्यमित्यूर्ध्वपुण्ड्रमालिखेत्तसाद्द्विरेखं भवति पुनरागमनं न याति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद" ।

"अथ कात्यायनेति होवाच विष्णुरिन्द्रो वै देवा इन्द्रो वै नारायणात्तु जायते किंदैवतोऽस्यां विष्णुर्दैवत इति स विष्णुः कस्मिन्प्रतिष्ठित इति रूपाणि प्रतिष्ठितानीति हृदय इति होवाच तस्मै चक्रं द्विभुजे धार्यमिति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद ।"

इत्यादिना । अविप्रतिपन्नेनोपबृंहणवचनेनोक्तश्रुतेरुक्तार्थतेत्यभिप्रेत्य समाधत्ते—मैवमित्यादिना । स्फुटार्थकश्रुत्यन्तरे सति कुतोऽयं क्लेश इत्याशयेनाह—तुष्यतु वेति । श्रुतीरुदाहृत्य स्मृतीरुदाहरति—

निमित्तं हि वलयादिविभूषण"मिति । बृहन्नारदीये च—"सुदर्शनेन यस्याङ्गं लाञ्छितं तु भवेत्सदा । देहे तस्य वसेन्नित्यं श्रिया युक्तः स्वयं हरिः । चक्रायुधाङ्कितं दृष्ट्वा यमोऽपि हृदि शङ्कितः । प्रणामं दूरतः कृत्वा विष्णुभक्तं विमत्सर"मिति । शाण्डिल्यस्मृतौ च—"पशुपुत्रादिकं सर्वं गृहोपकरणानि च । अङ्कयेच्छङ्खचक्राभ्यां नाम कुर्याच्च वैष्णवम् । स्त्रिया सहैव कर्त्तव्यं गृहस्थस्य विधानतः । संस्कारपञ्चकं तेन भवेत्सा धर्मचारिणी। तापादिपञ्चसंस्कारा गृहस्थस्य यथा-

"अथ कात्यायनेति होवाच परमपुरुषो ह वै देवा मनो ब्रह्म मनोऽनन्तानन्तलोके निवसति तप्तं चक्रं द्विभुजे धार्यमिति ब्राह्मणास्तद्दहन्त्यग्निना वै होत्रा तप्तं तनुरित्यापोऽन्तरिक्षं समुद्रं गच्छन्त्यथापो देवाः समुद्रं गच्छन्ति यथाह वै देवा ब्राह्मणाः केशवं प्रति गच्छन्ति ।"

"अथ कात्यायनेति होवाच पुरुषश्चन्द्रमस्यादित्यः कस्मिन्प्रतिष्ठित इत्यादित्यान्तः पुरुषस्य देवस्य देवनादिगुणयुक्तस्य हिरण्यगर्भोपाध्यवच्छिन्नेति ब्राह्मणा भगवन्तो यो वः कामयते मनो वै कामं मनोऽनन्ता मनो वै विष्णुरिति ब्राह्मणा धारयन्त्यूर्ध्वपुण्ड्रं द्विरेखं भवति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद ।"

"अथ कात्यायनेति होवाच सर्वं तदिदं सर्वात्मनः परायणं नारायणं महाज्ञेयं विश्वास्मानं परायणमिति देवो भूत्वा देवासः पितरो विदुरित्यात्मा गुहायां निहितोऽस्य इत्यन्तर्यामो मघवन् मादयस्व स्वाहोर्वन्तरिक्षमन्वेति स्वां कुतोऽसीति ब्रह्मणेति होवाच तप्तं चक्रं द्विभुजे धार्यमिति ब्रह्मणः सायुज्यं सलोकतां जयति य एवं वेद" इति ।

एवं खिलश्रुतिषु—"निचक्षेप सुपर्णं भिद्यमानं मध्ये बाहुमदधत्सुदर्शनं विष्णोरिदं भूरिदं भूरितेजः प्रधर्षयति दिवा नक्तं विभृयुस्तज्जनासः" इति । साम्नि मैत्रायणीयशाखायाम्—"पवित्रमित्यग्निः अग्निर्वै सहस्रारः सहस्रारो नेमिः नेमिना तप्ततनूः ब्रह्मणः सायुज्यं सलोकतामाप्नोति" इति । ऋग्वेदे खिले—"चक्रं बिभर्त्ति वपुषाभितप्तं बलं देवानाममितस्य विष्णोः । स एति नाकं दुरिता विधूय प्रयान्ति यद्यतयो वीतरागा" इति । अथर्वणि—"एभिर्वयमुरुविक्रमस्य चिह्नैरङ्किता लोके सुभगा भवाम तद्विष्णोः परमं पदं ये गच्छन्ति लाञ्छिताः" इति । ऋचि बाष्कलशाखायाम्—"प्र ते विष्णो अब्जचक्रे पवित्रे जन्माम्भोधिं तर्तवे चर्षणीन्द्राः । मूले बाह्वोर्दधतेऽन्ये पुराणा लिङ्गान्यङ्गे तावकान्यर्पयन्ति" इति । यजुषि कठशाखायाम्—"धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम्" इति । अथर्वणि महोपनिषदि ब्रह्मसूक्ते—"दक्षिणे तु भुजे विप्रो बिभृयाद्वै सुदर्शनम् । सव्ये तु शङ्खं बिभृयादिति ब्रह्मविदो विदुः ॥" इति च । तदाभिः श्रुतिभिस्तप्तचक्राङ्कनस्य प्रतिपन्नत्वादेतद्विरोधिनां स्मृतिवचनानां विरोधाधिकरणन्यायेनाप्रामाण्यमनपायमेव । पवित्रमित्याद्याः श्रुतयो नेह वितन्यन्ते विस्तरभयात् ।

स्मरन्ति च महर्षयस्तप्तचक्राङ्कनम् । तथा च वृद्धमनुः—"ऊर्ध्वपुण्ड्रं तथा चक्रं नित्यं

स्मरन्ति चेति ।

विधि । आचार्येण सदा कार्याः स्वगृह्योक्तविधानत" इति । पाराशरस्मृतौ च—"प्रथमं तापसंस्कारं तापसैर्मुनिभिः स्मृतम् । सर्वाश्रमेषु वसतां स्त्रीणां च द्विजसत्तमाः ! । अग्नितप्तेन चक्रेण बाहुमूलेषु लाञ्छिताः । ते यान्ति परमं स्थानं पुनरावृत्तिवर्जित"मिति । विष्णुरहस्ये च—"वैष्णवा मुनयः सर्वे विष्णुचक्रेण मुद्रिताः । तेषां दर्शनमात्रेण महापातकनाशनम् । अतिपापप्रसक्तोऽपि विष्णुचक्राङ्कितस्य तु । पादोदकं पिबेद्यस्तु सर्वपापैः प्रमुच्यत" इति । विष्वक्सेनसंहितायां च—"शरीरे यस्य कस्यापि दृश्यते वै सुदर्शनम् । तस्मै कुर्वीत पक्षीन्द्र ! नम-

---

धारयते नरः । तेन तस्याशुभं नश्येच्छुभमस्य विवर्द्धते ॥" इति । वृद्धपराशरश्च—"अग्निनैव तु संयुक्तं चक्रमादाय वै द्विजः । धारयेत्सर्ववर्णानां हरिसालोक्यसिद्धये ॥" यमश्च—"उपवीती शिखायुक्तश्चक्रलाञ्छनसंयुतः । चक्रलाञ्छनहीनस्य विप्रस्य विफलाः क्रियाः ॥" शङ्खः—"उपवीतादिवद्धार्याः शङ्खचक्रगदादयः । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषतः ॥" व्यासः—"ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्च श्रद्धयान्वितः । चक्रं च पाञ्चजन्यं च बिभृयादग्निसंयुतम् ॥" इति । तदेवं श्रुतिस्मृतिविहितस्यैव तप्तचक्राङ्कनादेः पाञ्चरात्रं विधायकमिति न तदंशेऽपि तस्याप्रामाण्यम् । तुष्यन्ति ये जनास्तप्तचक्राङ्कनविनिन्दया । तान्प्रत्यत्र प्रसङ्गेन विधानमुपदर्शितम् ॥

नच—"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥ आयुर्वेदो धनुर्वेदो गान्धर्वं चार्थशास्त्रकम् । इति विद्याश्चतस्रोऽन्तो विद्या ह्यष्टादश स्मृताः ॥" इति वचनेन पाञ्चरात्रस्य विद्यास्थानेष्वपरिगणनान्न तस्य प्रामाण्यमिति वाच्यम् । तेनापरिगणनमात्रेणाप्रामाण्यासम्भवात् । तथा सति तत्रापरिगणितस्य भारतस्याप्यप्रामाण्यापत्तेः । यदि पुनर्विभाव्यते भारतस्य तत्रागणनेऽपि विद्यास्थानतया गणिते ब्रह्मयज्ञप्रकरणे—"यद्ब्राह्मणानीतिहासान्पुराणानि कल्पान्" इतीतिहासस्य गणनया स्यादेव प्रामाण्यमिति । तद्विभाव्यतां पाञ्चरात्रस्यापि भारते परिगणनात्प्रामाण्यम् । एकायनशाखामूलकत्वाच्च तस्य प्रामाण्यमनपायम् । सा च श्रुतेरेका शाखा भूमविद्यायां परिगणिता । "आद्यमेकायनं वेदं सद्ब्रह्मप्रतिपादकम् । एकायनीयशाखोक्तान्मन्त्रान्सर्वासु दिक्षु च ॥" इति पाद्मवचनं च । ईश्वरप्रत्यक्षमूलत्वाच्च श्रुतेरिवास्य प्रामाण्यम् । विस्तरस्त्वागमप्रामाण्यादिप्रबन्धेष्ववगन्तव्यः ।

---

प्रासङ्गिकं तप्तचक्राङ्कनस्य प्रामाणिकत्वं स्थिरीकृत्य पाञ्चरात्रस्य प्रामाण्यं दृढीकर्तुं पुनराशङ्क्य परिहरति—न चेत्यादिना । तत्रापरिगणितस्य भारतस्याप्यप्रामाण्यापत्तेरिति । भारतं हीतिहासकोटावन्तर्गतं, पुराणान्येव तु तत्र गणितानीति भावः । सा च भूमविद्यायां परिगणितेति । छान्दोग्ये सप्तमप्रपाठके—"सहोवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायन"मिति श्रूयते । एकायनं—एकायनशाखामिति च व्याख्यातं रङ्गरामानुजमुनिना । ननु भूमविद्यायां श्रूयमाणमेकायनपदं वेदैकदेशभूतैकायनशाखासद्भावे न प्रमाणं, तत्पदं तत्परमिति च यस्य कस्यचिद्व्याख्यानं न प्रमाणमित्यतस्तत्र प्रमाणं निरूपयति—आद्यमेकायनमिति । स्मृत्यन्तरतः पाञ्चरात्रस्य विशेषमाह—ईश्वरेति । स्मृत्यन्तराणां

स्काराम्प्रयत्नत" इति । ब्रह्माण्डपुराणे च—"नारायणायुधैर्नित्यं चिह्नितो यस्य विग्रहः । पापकोटिशतं दग्धं तस्मिन्दृष्टे भवेत्सदा । श्राद्धादिसर्वकर्मार्हे इत्युक्तं

इत्थं च पाञ्चरात्रोदितवर्त्मना दीक्षाविशेषस्तुलसीमालाधारणं च विधीयमानं नानुपपन्नम् । स्मर्यते च भारतेऽपि—"अवश्यं वैष्णवो दीक्षां प्रविशेत्सर्वयत्नतः । दीक्षिताय विशेषेण प्रसीदेन्नान्यथा हरिः ॥" इति । तथा स्कान्दे—"तस्माद्धार्या प्रयत्नेन माला तुलसिसंभवा । तदूर्ध्वपुण्ड्रशङ्खाद्यैर्युक्तस्तुलसिभूषणैः ॥ सन्ध्योपास्त्यादिकं कुर्यात्कुशपाणिर्हि मां स्मरन् ।" इति । किञ्च—कस्यामपि शाखायां तप्तचक्राङ्कन इव तुलसीमालाधारणे निषेधाभासस्याप्यभावेन पाञ्चरात्रस्य कपिलादिस्मृतिवत्कार्त्स्न्येन प्रामाण्यमनभिमन्वानानामप्यसिन्नप्रामाण्योद्भावनस्य नावसरः । वस्तुतः कार्त्स्न्येन तस्य प्रामाण्यं शारीरके उत्पत्त्यसम्भवाधिकरणे श्रीभाष्ये समर्थितमन्यदेतदिति नेह तन्निरूप्यते ।

न च—साङ्गेषु वेदेषु निष्ठामलभमानः शाण्डिल्यः पञ्चरात्रशास्त्रमधीतवानिति वेदविनिन्दाया दर्शनादप्रमाणं पाञ्चरात्रमिति वाच्यम् । "प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति येऽग्निहोत्र"मिति श्रूयमाणाया अनुदितहोमनिन्दाया यथोदितहोमप्रशंसार्थत्वम्, तथा भूमविद्याप्रक्रमे—"ऋग्वेदं भगवोऽध्येमी"त्यादिना सर्वासु विद्यास्वात्मवेदनालाभवचनस्य वक्ष्यमाणभूमविद्याप्रशंसार्थत्वम्, तथाऽत्रापि पाञ्चरात्रप्रशंसामात्रार्थत्वात् । वस्तुतस्तु साङ्गवेदप्रतिपाद्यपरतत्त्वालाभकृतो यथा नारदस्य वादस्तथा शाण्डिल्यस्यापीत्येव तात्पर्यात् । अत एव तत्रैव शास्त्रे परमसंहितायां स्मर्यते—"अधीता भगवन्वेदाः साङ्गोपाङ्गाः सविस्तराः । श्रुतानि च मयाङ्गानि वाकोवाक्ययुतानि च ॥ न चैतेषु समस्तेषु संशयेन विना क्वचित् । श्रेयोमार्गं प्रपश्यामि येन सिद्धिर्भविष्यति ॥ वेदान्तेषु यथा सारं सङ्गृह्य भगवान्हरिः । भक्तानुकम्पया विद्वान्सञ्चिक्षेप यथासुखम् ॥" इति च ।

श्रुतिसाक्षात्कारमूलत्वेऽपि साक्षात्कर्त्तारो महर्षयः, पाञ्चरात्रस्य त्वेकायनशाखामूलकस्य मूलशाखासाक्षात्कारकर्त्ता सर्वेश्वरः, तथाच यस्तावदपौरुषेयाः श्रुतीः साक्षात्कृत्य हिरण्यगर्भमध्यापयति स एवैकायनशाखां साक्षात्कृत्य तदर्थान्स्मरति तत् पाञ्चरात्रशास्त्रं स्मृतिकोटौ प्रविष्टमपि श्रुतितुल्यमिति भावः ।

साक्षात्प्रकृतमुपसंहरति—इत्थं चेति । तुलसीमालाधारणे विवादावसरोऽपि नेत्याह—किञ्चेति ।

प्रकारान्तरेण पाञ्चरात्रस्याप्रामाण्यमाशङ्कते—न चेति । साङ्गेष्वित्याद्यधीतवानित्यन्त पाञ्चरात्रवचनम् । समाधत्ते—प्रातः प्रातरित्यादिना । पाञ्चरात्रप्रशंसामात्रार्थत्वादिति । न तु वेदनिन्दायां तस्य वचनस्य प्रवृत्तिरिति भावः । आपाततः प्रतीयमानार्थतः सम्भाव्यमानशङ्का परिहृता नहिनिन्दान्यायेन । वस्तुतस्तदर्थपर्यालोचने शङ्काया एव नावकाश इत्याशयेनाह—वस्तुतस्त्विति । साङ्गेषु वेदेषु निष्ठामलभमानेनेत्यतो वेदेषु चिरकालं स्वयं प्रविश्य पश्यताऽपि तदर्थतत्त्वं स्वेन नावगतमित्येवावगम्यते नतु वेदे तत्त्वावबोधकत्वाभावः । एतदर्थकत्व एव वचनान्तरसाङ्गत्यमपीत्याह—अत एवेति । तत्रैवेत्येवकारेण यस्मिन् शास्त्रे वेदनिन्दाशङ्का तस्मिन्नेव शास्त्रे वेदस्य परमनिःश्रेयसावबोधकताऽवगम्यत इति व्यज्यते ।

किमतः पर"मिति । आचारदीपे च—"उपवीतादिवद्धार्याः शङ्खचक्रगदादयः । ब्राह्मणस्य विशेषेण वैष्णवस्य विशेषत" इति ।

---

न चात्रैव प्रबन्धे "वेदाश्च व्याससूत्राणी"ति प्रमाणपरिगणनावसरे पाञ्चरात्रस्यापरिगणनेन नास्य प्रामाण्यं भगवदभिमतमिति वाच्यम् । प्रमाणेयत्तायास्तत्राप्रसक्तेः । वेदादिष्वत्यन्ताभिमतिमात्रस्यैव तत्राभिरूपणात्, तावताऽर्थनिर्णये प्रमाणान्तरस्यानादरणीयत्वानवगमात् । अन्यथा सर्वप्रमाणसङ्क्षोभप्रसङ्गात् । "एतान्यष्टौ ममेष्टानि" इत्येव हि वचनव्यक्तिः । अन्येषामपि प्रामाण्ये वेदादीनामष्टानामियत्त्वं किंनिबन्धनमिति चेन्निरूपयिष्यामस्तद्व्याख्यानावसरे । अत एव भगवान्सुधासिन्धौ पाञ्चरात्रतो भगवद्दिव्यविग्रहाद्यवगन्तव्यमित्याह । किञ्च—स्वेनैव वासुदेवरूपेण प्रवर्तितं पाञ्चरात्रं स्वस्य कथं वाऽनभिमतं भवेत् । अत एव भगवच्चरणारविन्दपरिचर्यापरायणैस्तदपाङ्गदिव्यधारापात्रभूतैर्मुक्तानन्दस्वामिभिरुत्पत्त्यसम्भवाधिकरणविवरणावसरे पाञ्चरात्रस्य परमप्रामाण्यमभ्यधायि । वेदाश्चेति चकाराद्भगवत्प्रत्यक्षमूलत्वेन समप्रामाण्यस्य पाञ्चरात्रस्य सङ्ग्रहाद्वा नोक्तशङ्कावकाश इति कृतं प्रसङ्गेन ।

प्रकृतमनुसरामः । धार्ये इत्यस्य लिङ्गविभक्तिविपरिणामेनानुषङ्गः, ऊर्ध्वपुण्ड्रं धार्यमित्यन्वयः । श्रुतिस्मृतिसिद्धं चैतत् । श्रुतयस्तु—"धृतोर्ध्वपुण्ड्रः परमेशितारं नारायणं साङ्ख्ययोगाधिगम्यम् । ध्यात्वा विमुच्येत नरः समस्तैः संसारपाशैरिह चैति विष्णुम्" इति । महोपनिषदि—"धृतोर्ध्वपुण्ड्रः कृतचक्रधारी विष्णुं परं ध्यायति यो महात्मा । स्वरेण मन्त्रेण सदा हृदि स्थितं परात्परं यन्महतो महान्तम् ॥" इति । कठशाखायाम्—"धृतोर्ध्वपुण्ड्रो धृतचक्रलाञ्छनो नारायणं पूजयति स भक्त्या । अर्घ्यादिभिः पौरुषसूक्तमन्त्रैः स प्राप्नुयाद्विष्णुपदं महात्मा ॥" इति । तथा शतपथब्राह्मणेऽपि । ताश्च तप्तचक्राङ्कनप्रसङ्गे निरूपिता एव उदाह्रियन्ते स्मृतयः । यथा भारते शान्तिपर्वणि मोक्षधर्मे—"स्नातो निर्मलसूक्ष्मशुद्धवसनो धौताङ्घ्रिपाण्याननः स्वाचान्तः सपवित्रमुद्रितकरः शुद्धोर्ध्वपुण्ड्रोज्ज्वलः" इति । पाद्मे—"मत्प्रियार्थं शुभार्थं च रक्षार्थं चतुरानन ! । मत्पूजाहोमकाले च सायं प्रातः समाहितः । मद्भक्तो धारयेन्नित्यमूर्ध्वपुण्ड्रं भयापहम् ॥" इति । स्कान्दे—"मन्त्रेणैवाभिमन्त्र्याथ ललाटादिषु वैष्णवः । धारयेदूर्ध्वपुण्ड्राणि यथासङ्ख्यमतन्द्रितः ॥" इति । बृहन्नारदीये—"तदूर्ध्वपुण्ड्रग्रह्याद्यैर्युतस्तुलसिभूषणैः । सन्ध्योपास्त्यादिकं कुर्यात्कुशपाणिर्हरिं स्मरन् ॥" इति ।

---

पाञ्चरात्रप्रामाण्ये मूलविरोधमाशङ्कते—न चात्रैवेति । परिहरति—प्रमाणेयत्तायास्तत्राप्रसक्तेरिति । तर्हि तत्परिगणना कुत इत्यत्राह—वेदादिष्वत्यन्ताभिमतीति । तावता–अत्यन्ताभिमतिनिरूपणमात्रेण । अन्यथा–प्रमाणान्तरस्यानादरणीयत्वे । इत्येवहि वचनव्यक्तिरिति । यदि प्रमाणेयत्ताज्ञापनाय प्रवृत्तं स्यात्तदा "एतान्यष्टौ विभक्तानी"ति हि श्रूयेत न तु ममेष्टानीति भावः ।

लिङ्गविभक्तिविपरिणामेनेति । लिङ्गं–स्त्रीलिङ्गं, विभक्तिः–द्विवचनं; तयोर्विपरिणामः–विपरिवर्तनम् । नपुंसकैकवचनान्वयया विपरिणम्येति यावत् । साङ्ख्ययोगाधिगम्यमिति । साङ्ख्यं–ज्ञानयोगः, योगः–कर्मयोगस्ताभ्यामधिगम्यमित्यर्थः । निरूपिता एवेति । नातोऽत्र निरूप्यन्त इति भावः । यथासङ्ख्यमिति । द्वादश वा चत्वारि वा यथासम्प्रदायम् ।

तद्रहितानां चापकर्षः स्मर्यते । तथा च पाराशरस्मृतौ—"विना यज्ञोपवीतेन विना चक्रस्य धारणात् । विना ह्येन वै विप्रश्चाण्डालत्वमवाप्नुयात् । शङ्खचक्रोर्ध्वपुण्ड्रादिरहितो ब्राह्मणाधमः । स जीवन्नेव चाण्डालः सर्वधर्मबहिष्कृत" इति । हारीतस्मृतौ च—"अचक्रधारिणो विप्राः सर्वकर्मसु गर्हिताः । अवैष्णवत्वमापन्ना नरकं यान्ति निश्चयम् । चक्रचिह्नादिरहितं प्राकृतं कलुषान्वितम् । अवैष्णवं तु तं दूराच्छ्वपाकमिव सन्त्यजे"दिति । भविष्यपुराणे च—"चक्राङ्कितभुजं दृष्ट्वा यस्तु तं नाभिवादयेत् । तिर्यग्योनिशतं प्राप्य विष्ठायां जायते कृमिः । यज्ञो दानं तपो होमो भोजनं पितृतर्पणम् । चक्रलाञ्छनहीनस्य

---

ननु—अथात्र साधारणाध्ययनादिप्रसङ्गेन बुद्धिस्थं साधारणमाह्निकं सङ्क्षिप्याहेत्यवतार्य "सन्ध्या स्नानं जपो होम" इति पराशरवचनं व्याचक्षाणेन माधवाचार्येण ब्राह्ममुहूर्त्तोत्थानप्रभृति वस्त्रधारणपर्यन्तं निरूप्यानन्तरमथोर्ध्वपुण्ड्रविधिरिति प्रक्रम्योर्ध्वपुण्ड्रधारणस्य निरूपणात्, "पूजाकाले जपे होमे सायं प्रातः समाहितः । नामान्युच्चार्य विधिना धारयेदूर्ध्वपुण्ड्रकम् ॥ स्नानं दानं जपो होमः सन्ध्या स्वाध्यायकर्म च । ऊर्ध्वपुण्ड्रविहीनेन तत्सर्वं निष्फलं भवेत् ॥" "यज्ञो दानं जपो होमः स्वाध्यायः पितृकर्म च । वृथा भवति विप्रेन्द्र ! ऊर्ध्वपुण्ड्रं विना कृतम् ॥ उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं विना कृतम् । अपवित्रकरं कर्म विप्रस्य विफलं भवेत् ॥" इति वचनाच्च सामान्यतः सिद्धस्याप्यस्य कृष्णदीक्षां प्राप्य धारयेदिति विशेषतो विधानमनर्थकम् । मैवम् । सामान्यतः प्राप्तस्यानृतवदननिषेधस्याग्निहोत्र इव विधानोपपत्तेः, ऊर्ध्वपुण्ड्रस्य सामान्यतः प्राप्तत्वेऽपि द्रव्यविशेषस्य वक्ष्यमाणस्याप्राप्तेः, तदन्वितस्यैवेह विशेषतो विधानाच्च कर्माङ्गतया सामान्यतः प्राप्तस्य कर्मनिष्पत्त्यनन्तरमनपेक्षितत्वसिद्धेस्तद्व्यतिरेकेण सदाधार्यत्वविधानाच्च । एतेनोर्ध्वपुण्ड्रस्यावैदिकत्वं वदन्तः प्रतिक्षिप्ताः । उक्तश्रुतिस्मृतिभ्यां तद्विधानात् । निखिलतन्त्रनिष्णातैर्माधवाचार्यैराह्निकप्रकरणे समुदाहृतत्वाच्च । मदनपारिजातादावपि गृहस्थोपयोगित्वादाह्निकमारभ्यत इत्युपक्रम्य, अथ क्रमप्राप्तस्तिलकविधिरित्यादिना प्रबन्धेनोर्ध्वपुण्ड्रनिरूपणाच्च ।

---

स्नानादिवदविशेषेण प्राप्तस्य पुण्ड्रधारणस्य दीक्षाङ्गतया विशेषतो विधानं कथमुपपद्यत इत्याशङ्कते—नन्विति । परिहरति—मैवमिति । विधानोपपत्तेरिति । नहि सामान्यतः प्राप्तमित्येतावता कर्मविशेषेऽङ्गत्वानुपपत्तिः, उपकारकतया ह्यङ्गत्वं, तथाच नित्यप्राप्तं पुण्ड्रधारणं दीक्षायामप्युपकारकत्वेनाङ्गं भवेदेव, तस्यास्य प्रहाणे दीक्षाभङ्गो नित्यकर्मानर्हता च, यथानृतभाषणेऽग्निहोत्रानिष्पत्तिः प्रत्यवायश्चेति भावः । द्रव्यविधाने वास्य पर्यवसानमिति समाधत्ते—ऊर्ध्वपुण्ड्रस्येत्यादिना । नित्यशब्दे निधाय दृष्टिमाह—कर्माङ्गतयेति । कर्मनिष्पत्त्यनन्तरमनपेक्षितत्वसिद्धेरिति । इदं ह्यनिष्टमिति भावः । तद्व्यतिरेकेणेति । अनपेक्षितत्वविरहेणेत्यर्थः । नित्यस्य नैमित्तिकस्य वा कस्यापि कर्मणः प्रसङ्गेऽसति पुण्ड्ररहितेनापि दीक्षितेन स्थातुं शक्यमिति शङ्का स्यात् तत्परिहाराय विशिष्यैवद्विधानमिति भावः ।

विप्रस्य विफलं भवे"दिति । पद्मपुराणे च—"संलापादर्शनाद्दानाद्यजनाद्वन्दनादपि । चक्राङ्कितस्य विप्रस्य विष्णुसायुज्यमाप्नुयात् । तथैव चक्रहीनस्य पूजनाद्वन्दनादपि । वैष्णवो निरयं याति यावदाभूतसम्प्लवम् । अचक्रधारिणं विप्रं श्रुतिस्मृतिसमन्वितम् । त्यजेच्चाण्डालभाण्डस्थं तं विप्रं चामृतं यथे"ति । ऊर्ध्वपुण्ड्रधारणादिकं वैष्णवानामसाधारणलिङ्गमित्युक्तमूर्ध्वपुण्ड्रधारणवादे—"ऊर्ध्वपुण्ड्रं च तुलसीमालाचक्रादिधारणम् । शालग्रामशिलार्चा च लिङ्गं विष्णुजनस्य ही"ति॥४१॥

यद्यपि—ऊर्ध्वपुण्ड्रस्याऽऽकृतयो विविधाः स्मर्यन्ते—"वर्त्तिदीपाकृतिं वाऽपि वेणुपत्राकृतिं तथा । पद्मस्य मुकुलाकारं तथैव कुमुदस्य च ॥ मत्स्यकूर्माकृतिं वाऽपि शङ्खाकारमतः परम् ॥" इति । तथापि मुमुक्षोर्हरिपदाकृत्यैवोर्ध्वपुण्ड्रं बोध्यम् । तथा च श्रुतिस्मृती—"हरेः पदाकृतिमात्मनो हिताय मध्ये छिद्रमूर्ध्वपुण्ड्रं यो धारयति स परस्य प्रियो भवति स पुण्यभाग्भवति" । "एकान्तिनो महाभागाः सर्वे मम हिते रताः । सान्तरालं प्रकुर्वीरन्नूर्ध्वपुण्ड्रं पदाकृतिम् ॥ ऊर्ध्वपुण्ड्रं ऋजुं सौम्यं सुपार्श्वं सुमनोहरम् । एकान्तिनो महाभागाः सर्वभूतहिते रताः ॥ सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृतिम् ।" इति । अन्यान्यपि पाञ्चरात्रवचनानि विस्तरभयान्नोदाहृतानि । एतेन तस्य सान्तरालत्वमपि सिद्धम् । "चतुरङ्गुलमूर्ध्वाग्रं द्व्यङ्गुलं विस्तृतं मुदा । ऊर्ध्वपुण्ड्रं द्विजः कुर्यात्सान्तरालं मनोहरम् ॥ द्व्यङ्गुलं त्र्यङ्गुलं वाऽपि मध्ये छिद्रं प्रकल्पयेत् । निरन्तरालं यः कुर्यादूर्ध्वपुण्ड्रं द्विजाधमः ॥ स हि तत्र स्थितं लक्ष्म्या सह विष्णुं व्यपोहति । मध्यच्छिद्रेण संयुक्तं तद्धि वै हरिमन्दिरम् ॥" इत्यादिवचनाच्च । क्वचिदाकारभेदनिबन्धनमच्छिद्रत्वविधानमन्यदेतदिति नेह वितन्यते । यच्च दण्डाकृतित्ववचनं तदप्यनेनाविरुद्धमिति तदपि मुमुक्षून्प्रति प्रवर्तत एव ॥ ४१ ॥

मूल ऊर्ध्वपुण्ड्रं धार्यमित्युक्तं तस्याकारविशेषास्तु विकल्प्यन्ते तत्र तत्र, तदवधारयति—यद्यपीत्यादिना । परस्य प्रियो भवति—परस्य हरेः प्रियो भवतीत्यर्थः ॥ ४१ ॥

---

**तत्तु गोपीचन्दनेन चन्दनेनाथवा हरेः ।**
**कार्यं पूजावशिष्टेन केसरादियुतेन च ॥ ४२ ॥**

ऊर्ध्वपुण्ड्रद्रव्यमाह—तदिति । तत्—ऊर्ध्वपुण्ड्रं तु । गोपीचन्दनेन—

अथ कृष्णदीक्षां प्राप्तेन धार्यतया विहित ऊर्ध्वपुण्ड्रे द्रव्यविशेषमाह—तत्त्विति । मुमुक्षूनधिकृत्य श्वेतमृत्स्नया क्वचित्पुण्ड्रविधानस्य मन्त्रादिभेदेन विभिन्ने वैष्णवे दीक्षान्तरे सावका-

अथेति । तुलसीमालादिधारणविधानानन्तरमित्यर्थः । ऊर्ध्वपुण्ड्र इति । अपेक्षितमिति शेषः । द्रव्यविशेषमित्यनेनान्वयः । "श्वेतं वैष्णवमुच्यते" इत्यादिवचनतः क्वचित् श्वेतमृत्तिकाया अपि पुण्ड्रद्रव्यतया विधानमस्ति, सन्ति च गोपीचन्दनपराणि वक्ष्यमाणानि वचनानि, तयोः समबलयोर्विकल्पे विकल्पश्च व्यवस्थित आस्थेय इत्याशयेनाह—मुमुक्षूनधिकृत्येत्यादिना । क्वचित्पुण्ड्रविधानस्येति ।

द्वारिकामाहात्म्यप्रसिद्धगोपीचन्दनाख्यमृदा । कार्यं—कर्त्तव्यमित्याद्यः पक्षः । अथवेति पक्षान्तरे । समस्तमव्ययमेतत् । हरेः—श्रीकृष्णस्य । पूजायाः—अर्चनादवशिष्टं तेन । चन्दनेन—प्रसिद्धेन श्रीखण्डेन । कार्यम् । चकारो वाशब्दार्थे । केसरं—प्रसिद्धं पीतसुरभिद्रव्यं तदादिर्यस्य—कुङ्कुमादेस्तेन युतेन—मिश्रीकृतेन चन्दनेन कार्यम् । अत्रापि हरेः पूजावशिष्टेनेति सम्बध्यते । अत्र गोपीचन्देनेति तीर्थमृद उपलक्षणम् । तदुक्तमाचारमाधवे ब्रह्माण्डे—"पर्वताग्रे नदीतीरे मम क्षेत्रे विशेषतः । सिन्धुतीरे च वल्मीके तुलसीमूलमाश्रिते । एता मृदस्तु गृह्णीयाद्वर्जयेदन्यमृत्तिका" इति । मदनपारिजाते व्यासश्चाह—"जाह्नवीतीरसम्भूतां

---

शत्वं व्यञ्जयन्वैलक्षण्यं निर्दिशति तुशब्दः । तथा चायमर्थः—कृष्णदीक्षां प्राप्तेन धार्यमूर्ध्वपुण्ड्रं तु गोपीचन्दनेन कार्यमिति । कृष्णदीक्षां प्राप्तेन गोपीचन्दनेनोर्ध्वपुण्ड्रं धार्यमित्येकवाक्यतया विधिः फलितः । गोपीचन्दने विशेषश्च श्रुतिसिद्धः । श्रुतिश्च—"तं होवाच भगवान्वासुदेवो वैकुण्ठस्थानादुत्पन्नं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमाख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्थान्तःस्थितं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति" इति । तमिममप्राकृतदेशोद्भवत्वभगवत्प्रियत्वब्रह्मादिभक्तजनसेवितत्वश्रीकृष्णदिव्याङ्गरागत्वतदेकान्तभक्तगोपीकरस्पर्शादिरूपं मृत्तिकातो विशेषमाश्रित्यैव श्रीकृष्णदीक्षां प्राप्तानामनेन द्रव्येणोर्ध्वपुण्ड्रं भगवता विहितम् । एतेन—"पर्वताग्रे नदीतीरे बिल्वमूले जलाशये । सिन्धुतीरे हरिक्षेत्रे विष्णुपादोदकाश्रिते ॥ पुण्ड्राणां धारणार्थाय गृह्णीयात्तत्र मृत्तिकाम् ॥" इत्यादिवचनतो मृत्तिकाया गोपीचन्दनेन तुल्यविकल्पो निरस्तः, उक्ताद्विशेषात् । गोपीचन्दनेनोर्ध्वपुण्ड्रं श्रुतिस्मृतिसिद्धं च। श्रुतिश्च तत्रैव—"अथ गोपीचन्दनं नमस्कृत्योद्धृत्य गोपीचन्दन पापघ्नेत्यारभ्य तस्मादूर्ध्वपुण्ड्रं धारये"दिति । स्मृतयश्च—"द्वारवत्युद्भवाद्गोपीचन्दनादूर्ध्वपुण्ड्रकम् । कारयेन्नित्यमेवं हि पापं हन्ति दिने दिने ॥ आचम्य तिलकं कुर्याद्गोपीचन्दनमृत्स्नया । ऊर्ध्वपुण्ड्रं ऋजुं सौम्यं दण्डाकारं प्रकल्पयेत् ॥" "गोपीचन्दनसम्भवं सुरुचिरं पुण्ड्रं ललाटे द्विजो नित्यं धारयते यदि प्रतिदिनं रात्रौ दिवा सर्वदा । यत्पुण्यं कुरुजाङ्गले रविग्रहे माघ्यां प्रयागे तथा यत्प्राप्नोति खगेन्द्र ! विष्णुसदने सन्तिष्ठते देववत् ॥" "गोमतीतीरसम्भूतां गोपीवापीसमुद्भवाम् । मृदं मूर्ध्ना वहेद्यस्तु सर्वपापात्प्रमुच्यते ॥ अम्बरीष ! महापस्य क्षयार्थं कुरु वीक्षणम् । ललाटे यैः कृतं नित्यं गोपीचन्दनपुण्ड्रकम् ॥ ब्रह्मघ्नो वाऽथ गोघ्नो वा हैतुकः सर्वपापकृत् । गोपीचन्दनसम्पर्कान्मुक्तो भवति तत्क्षणात् ॥ ब्रह्महा वाऽथ गोघ्नो वा पाखण्डी सर्वपापकृत् । गोपीचन्दनसम्पर्कात्पूतो भवति मानवः॥" "गोपीचन्दनधारी सूर्यरूपं बिभर्ति केवलं तमोनाशाय" इति । वचनानि चेमानि निबन्धकारपरिगृहीतानि ॥

---

क्वचिद्विहितस्य पुण्ड्रविधानस्येत्यर्थः । विशेष इति । द्रव्यान्तरस्य इति यावत् । तुल्यविकल्पो निरस्त इति । तदनुपपत्त्या व्यवस्थितविकल्प एव ग्राह्य इति भावः ।

मृदं मूर्ध्ना बिभर्त्ति यः । बिभर्त्ति रूपं सोऽर्कस्य तमोनाशाय केवल"मिति । तत्रैव सत्यतपाश्चाह—"गोमतीतीरसम्भूतां गोपीदेहसमुद्भवाम् । मृदं मूर्ध्ना वहेद्यस्तु सर्वपापैः प्रमुच्यत" इति । पाद्मे च—"यत्र दिव्यं हरिक्षेत्रं ततो वै मृदमाहरेत् । धारयेदूर्ध्वपुण्ड्राणि सर्वकामाप्तये तथे"ति । स्कान्दे मार्गशीर्षमाहात्म्ये च—"तुलसीमृत्स्नया पुण्ड्रं श्रीगोपीचन्दनेन वा । हरिचन्दनेन तथा कार्यमूर्ध्वं हि वैष्णवै"रिति । हरिचन्दनं—हरिप्रसादिचन्दनम् । आचारमयूखे ब्रह्माण्डे तु कालभेदेन द्रव्यविशेष उक्तः—"मृत्तिका चन्दनं चैव भस्म तोयं चतुर्थकम् । एभिर्द्रव्यैर्यथाकालमूर्ध्वपुण्ड्रं भवेत्सदा । स्नात्वा पुण्ड्रं मृदा कुर्याद्धुत्वा चैव तु भस्मना । देवानभ्यर्च्य गन्धेन सर्वपापापनुत्तये । जलेन तिलकं कुर्याज्जलान्तः कर्मसिद्धय" इति । विस्तरस्तूर्ध्वपुण्ड्रधारणवादात्पाद्मीयोर्ध्वपुण्ड्राध्यायाच्चावगन्तव्यः ॥ ४२ ॥

---

पक्षान्तरेण विदधाति—अथवेति । हरेः पूजावशिष्टेन चन्दनेन । प्राशस्त्यनिमित्तस्य भगवदङ्गसम्बन्धस्य तौल्यादित्याशयः । स्मर्यते च—"शालग्रामशिलालग्नं कुङ्कुमं चन्दनं वा यस्तु धारयते स मुक्तो भवति" । "तिलकं तु द्विजः कुर्याच्चन्दनेन यदृच्छया । एवं तदीया विप्राश्च क्षत्रिया वैश्यजातयः ॥ मृदैव वा चन्दनेन कल्पितैरूर्ध्वपुण्ड्रकैः ॥" इति । भगवत्सपर्याशेषभूतेनेत्यर्थः ।

केसरादियुतेन चेति विकल्पान्तरम् । चकारो वाऽर्थे । हरेः पूजावशिष्टेनेत्येतदत्रापि सम्बध्यते । यद्यपि केसरे न पूजाविशिष्टत्वान्वयः, तथापि विशिष्टेऽन्वयाद्विशेषणे तत्र तल्लाभः । यद्यपि नात्र पक्षे द्रव्यान्तरविधानं, तथापि विशेषणभेदमात्रेण विकल्पः कथञ्चिन्नेयः । यद्वा—केसरादियुतेनेति न पक्षान्तरम्, किन्तु विशेषणमात्रम् । चकारः पादपूरणे । यद्वा-हरिपूजावशिष्टेन केसरादियुतेन तच्चरणावनेजनसलिलद्रव्येण वेत्यर्थः । तेन चन्दनाघटितेन केसरादिमात्रघटितेनेत्यपरः पक्षः सिद्धः । विकल्पश्चात्र समविकल्प इति केचित् । लाभालाभव्यवस्थावद्ध इत्यपरे । गोपीचन्दनपूजावशिष्टचन्दनयोर्भगवत्सम्बन्धस्य पारोक्ष्यापारोक्ष्यरूपविशेषतः स विशेष इत्यन्ये ॥ ४२ ॥

---

गोपीचन्दनेन सह चन्दनस्य विकल्पे हेतुतया मूलोक्तं पूजावशिष्टेनेति पदं शेषपूरणेन व्याचष्टे—हरेः पूजावशिष्टेनेति । तत्र प्रमाणमाह—स्मर्यते चेति । विशिष्टेऽन्वयाद्विशेषणे तत्र तल्लाभ इति । विशेषणेऽनन्वये विशिष्टेऽन्वयासम्भवादिति भावः । कथञ्चिदिति । गुणविधिर्बोध्य इति भावः । समविकल्प इति । समे विकल्पे रुचिरेव नियामिका । लाभालाभव्यवस्थावद्ध इत्यपर इति । व्यवस्थितो विकल्पः, व्यवस्था च गोपीचन्दनालाभे पूजावशिष्टचन्दनं, लाभे तु गोपीचन्दनमेवेति । पारोक्ष्यापारोक्ष्यरूपविशेषतः स विशेष इत्यन्य इति । एषामयमाशयः—व्यवस्थित एव विकल्पः, पूजावशिष्टचन्दनलाभे न गोपीचन्दनं ततो ह्यत्र विशेषः भगवदङ्गसङ्गो ह्यस्मिन्नपरोक्ष इति, अयं च पक्षो न भगवदभिमतः, नहि कस्यचित्परोक्षमित्येतावता साक्षाद्भगवदङ्गसम्बद्धे गोपीचन्दने लघिमा, तथात्वलश्रद्धैवापद्येत ॥ ४२ ॥

---

## तन्मध्य एव कर्त्तव्यः पुण्ड्रद्रव्येण चन्द्रकः ।
## कुङ्कुमेनाथवा वृत्तो राधालक्ष्मीप्रसादिना ॥ ४३ ॥

तन्मध्य इति । तस्य–ऊर्ध्वपुण्ड्रस्य मध्यं–मध्यभागस्तस्मिन्नेव, न तूर्ध्वमधो वा। पुण्ड्रद्रव्येण–येन द्रव्येण गोपीचन्दनादिनोर्ध्वपुण्ड्रं क्रियेत तेनैव द्रव्येण। वृत्तः–वर्त्तुलः । चन्द्र इव चन्द्रकः–बिन्दुः । कर्त्तव्यः ।

"ऊर्ध्वपुण्ड्रस्य मध्ये तु हरिद्राचूर्णकुङ्कुमम् । धारयेद्वैष्णवो नित्यं कमलाप्रीतये नृपे"ति सारसङ्ग्रहधृतविष्णुधर्मोत्तरवाक्यमालम्ब्य तद्द्रव्यान्तरमाह––कुङ्कुमेनेति । अथवा राधालक्ष्मीप्रसादिना–राधाया लक्ष्म्या वा प्रसादः–अनुग्रहः सोऽस्यास्तीति तथोक्तं तेन । तत्पूजावशिष्टेनेत्यर्थः । कुङ्कुमेन चन्द्रकः कर्त्तव्यः । "ऊर्ध्वपुण्ड्रं सचन्द्रक"मिति दीक्षाविध्युक्तेः ॥ ४३ ॥

---

अथ विहिते पुण्ड्रे विधेयान्तरमाह––तन्मध्य इति । तन्मध्ये–पुण्ड्रस्य मध्य इत्यर्थः । अनेनोक्तप्रमाणगम्यं सान्तरालत्वं व्यञ्जितम् । एवकारस्योत्तरेण सम्बन्धः, तेन कर्त्तव्य एवेति नियम्यते । वृत्तश्चन्द्रकः–चन्द्रवद्वर्त्तुलाकारो बिन्दुः । "निवसत्यूर्ध्वपुण्ड्रे तु श्रिया सह हरिः स्वयम्" इति वचनेन श्रीसान्निध्यस्याप्यवगमात्तत्स्थानतया मध्ये चन्द्रककल्पनमावश्यकमित्याशयः । तत्र द्रव्यमाह––पुण्ड्रद्रव्येणेति । तच्चोक्तं गोपीचन्दनादि पुण्ड्रद्रव्यम् ।

"हारिद्रेण तु चूर्णेन कुङ्कुमेन सुगन्धिना । ऊर्ध्वपुण्ड्रस्य मध्ये तु लक्ष्मीस्थानं प्रकल्पयेत् ॥ ऊर्ध्वपुण्ड्रस्य मध्ये तु दिव्यं चूर्णं तु धारयेत् । श्रीकरं विजये पुण्यं सर्वदोषप्रणाशनम् ॥ ऊर्ध्वपुण्ड्रं मृदा धार्यं सच्छिद्रं सौम्यमेव च । तदलङ्करणार्थाय हरिद्रां धारयेच्छ्रियम् ॥ ऊर्ध्वपुण्ड्रस्य मध्ये तु हरिद्राचूर्णकुङ्कुमम् । धारयेद्वैष्णवो नित्यं कमलाप्रीतये नृप ! ॥" इति वचनानुसारेणाह––कुङ्कुमेनाथवेति । भगवदङ्गसङ्गतावशिष्टेन चन्दनादिना राधालक्ष्मीप्रसादभूतेन कुङ्कुमादिना वा चन्द्रकः कार्यः, अविशेषादित्याशयः ॥ ४३ ॥

---

मूले तन्मध्य एव कर्त्तव्य इत्यत्र श्रूयमाणस्यैवकारस्य यथाश्रवणमन्वयस्वीकारेऽन्यत्र चन्द्रककरणस्य सुतरामप्रसक्तयाऽन्यत्र चन्द्रककरणनिषेधफलकस्य तन्मध्य एव कर्त्तव्य इति विधानस्यासाङ्गत्यम्, तन्मध्ये कर्त्तव्यतानियमालाभेनापेक्षितासिद्धिश्चेत्यत आह––एवकारस्योत्तरेण सम्बन्ध इति । निष्पन्नमाशयमाह––तेन कर्त्तव्य एवेति नियम्यत इति । कुङ्कुमेनाथवेति कल्पान्तरमवतारयति––हारिद्रेणेत्यादिना । अविशेषादित्याशय इति । तेन समविकल्प एव न व्यवस्थितविकल्प इति भावः ॥ ४३ ॥

**सच्छूद्राः कृष्णभक्ता ये तैस्तु मालोर्ध्वपुण्ड्रके ।**
**द्विजातिवद्धारणीये निजधर्मेषु संस्थितैः ॥ ४४ ॥**

"ब्राह्मणः क्षत्रियो वैश्यः शूद्रस्तेषां च योषितः । गृह्णीयुः सद्गुरोर्दीक्षां वैष्णवीं सर्वथा भुवी"ति विष्णुधर्मोत्तरोक्तेश्चातुर्वर्ण्यस्यापि विष्णुदीक्षाधिकारात्तुरीयवर्णस्य तुलसीमालोर्ध्वपुण्ड्रधारणे व्यवस्थामाह—सच्छूद्रा इति । ये सच्छूद्राः । कृष्णभक्ताः । स्युरिति शेषः । निजधर्मेषु संस्थितैस्तैस्तु मालोर्ध्वपुण्ड्रके द्विजातिवद्धारणीये इत्यन्वयः । अत्र शूद्रा द्विविधाः—सच्छूद्रा असच्छूद्राश्च । तत्राद्या गोपनापितकुम्भकारादयः, इतरे कुविन्दादय इति केचित् । स्वधर्मनिष्ठाः सन्तः, स्वधर्मभ्रष्टा असन्त इत्येके । वस्तुतस्तु—"विशुद्धान्वयसञ्जातो निवृत्तो मद्यमांसतः । द्विजभक्तो वणिग्वृत्तिः सच्छूद्रः स प्रकीर्त्यत" इति स्मृत्युक्तलक्षणाः सच्छूद्रास्तद्विपरीता असच्छूद्रा इति । सङ्करजातयस्तु शूद्रसमधर्माण एवेति न पृथगुक्ताः । "शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृता" इति मिताक्षरायां स्मृतेः । अपध्वंसजाः—व्यभिचारजाता अनुलोमजाः प्रतिलोमजाश्च । तत्राप्याद्याः सन्तोऽपरे त्वसन्तश्च । तथा च स्मृतिः—"विप्रान्मूर्धावसिक्तस्तु क्षत्रियायां विशः स्त्रियाम् । जातोऽम्बष्ठश्च शूद्रायां निषादपार्शवोऽपि वा । माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात् । शूद्रायां करणो वैश्याद्विन्नास्वेष विधिः स्मृतः । ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहकस्तथा । शूद्राज्जातस्तु चण्डालः सर्वधर्मबहिष्कृतः । क्षत्रिया मागधं वैश्याच्छूद्रात् क्षत्तारमेव च । शूद्रादायोगवं वैश्या जनयामास वै सुतम् । माहिष्येण करण्यां तु रथकारः प्रजायते । असत्सन्तस्तु विज्ञेयाः प्रतिलोमानुलोमजा" इति । तद्भेदविस्तरस्तु जातिविवेकादिभ्योऽवगन्तव्यः । तत्र ये सच्छूद्राः श्रीकृष्णभक्ता मुमुक्षवः स्युः । निजधर्मेषु—त्रैवर्णिकसेवादिलक्षणेषु वक्ष्यमाणस्वधर्मेषु । संस्थितैः—सम्यग्वर्त्तमानैः । धर्मभ्रष्टानां त्वत्र नाधिकार

---

अथ द्विजेषु दीक्षाङ्गतया विहितमूर्ध्वपुण्ड्रधारणादि सच्छूद्रेऽप्यतिदिशति—सच्छूद्रेति । अतिदेशश्च द्विजेषु नित्यप्राप्तस्योर्ध्वपुण्ड्रधारणस्यैव दीक्षाङ्गत्वोक्तिवत् "शूद्रे तु वर्त्तुलं प्रोक्त"मिति स्मृतिप्राप्तस्य वर्त्तुलाकारपुण्ड्रधारणस्यैव दीक्षाङ्गत्वं स्यादिति शङ्काया निवृत्तये ।

---

सच्छूद्रेऽप्यतिदिशतीति । नन्वतिदेशे को हेतुः, सत्यां शङ्कायां तत्परिहाराय ह्यतिदेशः कर्त्तव्य इत्यत आह—अतिदेशश्चेति । दीक्षाङ्गत्वं स्यादिति । नित्यप्राप्तस्योर्ध्वपुण्ड्रधारणस्य द्विजेषु दीक्षाङ्गत्वविधानाच्छूद्रे नित्यप्राप्तं वर्त्तुलपुण्ड्रधारणमेव दीक्षाङ्गं भवत्वित्याशङ्का प्रसजतीति भावः । द्विजाती-

इत्यर्थः । तैः सच्छूद्रैः । माला–तुलसीकाष्ठस्रक्, पुण्ड्रमेव पुण्ड्रकं, ऊर्ध्वं च तत्पुण्ड्रकं चेति द्वे । द्विजातिभिः–त्रैवर्णिकैस्तुल्य इति द्विजातिवत् । धारणीये । तद्धारणस्य मन्त्रदीक्षाङ्गत्वेन नित्यप्राप्तत्वादिति भावः । "ब्राह्मणाः क्षत्रिया वैश्याः सच्छूद्राश्च मुमुक्षवः । वृन्दास्रगूर्ध्वपुण्ड्राङ्का गृह्णीयुर्वैष्णवं मनुम् । दीक्षावाञ्छूद्रवर्णोऽपि कृतोर्ध्वतिलको भवे"दित्यादिनारदपञ्चरात्रोक्तेः । दीक्षाविधिविशेषस्तु विज्ञानोपनिषत्संहिताया अवगन्तव्यः । तत्रापि यथाशक्ति तद्विधानं साम्प्रदायिकेभ्योऽवसेयम् । शूद्राणां द्विजातिवैलक्षण्यं तु—"शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति । वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विने"त्यादिस्मृतिभिः प्रदर्शितम् । तद्विशेषश्च शूद्रकमलाकरे द्रष्टव्यः । तेषां दीक्षा तु—"चातुर्वर्ण्यस्य वक्ष्यामि दीक्षामद्य यशस्विनी"त्युपक्रम्य द्विजानां दीक्षामुक्त्वा "शूद्रस्यापि प्रवक्ष्यामि मद्भक्तस्य वराङ्गने" इत्यादिना वाराहोक्ता द्रष्टव्या ॥ ४४ ॥

---

द्विजातिवत्सच्छूद्रस्य धर्मेऽधिकारात् । स्मर्यते च शूद्रमात्रस्य दीक्षायामधिकारः—"ब्राह्मणः क्षत्रियो वैश्यः शूद्रस्तेषां च योषितः । गृह्णीयुः सद्गुरोर्दीक्षां वैष्णवीं सर्वथा भुवि ॥" इति । सच्छूद्राः–गोपादयः । कृष्णभक्ता इति दीक्षाधिकारो व्यज्यते । निजधर्मेषु संस्थितैरिति विशेषणाद्द्विजानामिव कर्मविशेषेष्वधिकारो व्यज्यते । तद्विशेषश्च शूद्रकमलाकरे प्रपञ्चितः ॥ ४४ ॥

---

नाभिवोर्ध्वपुण्ड्रधारणस्य सच्छूद्रे दीक्षाङ्गत्वविधाने तस्मिन्विशेषमाह—द्विजातिवदिति । ननु तस्य दीक्षायामधिकारे सति हीदं सर्वं तदेव नेत्याशङ्कायामाह—स्मर्यते च शूद्रमात्रस्य दीक्षायामधिकार इति । कृष्णभक्ता इति दीक्षाधिकारो व्यज्यत इति । एतेन भक्तिरेव दीक्षायामधिकारापादकं नान्यज्जन्मादिकमिति सिद्धम् ॥ ४४ ॥

---

भक्तैस्तदितरैर्माले चन्दनादीन्धनोद्भवे ।
धार्ये कण्ठे ललाटेऽथ कार्यः केवलचन्द्रकः ॥ ४५ ॥

भक्तैरिति । तेभ्यः–सच्छूद्रेभ्य इतरे तदितरे–असच्छूद्रादयस्तैर्भक्तैः । मनुष्यमात्रस्य भगवन्नामकीर्तनादिभक्तावधिकारादिति भावः । "लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्गमयत्नतोऽनघ ! । पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः ॥ किरातहूणान्ध्रपुलिन्दपुष्कसा आभीरकङ्का यवनाः खसा-

---

अथासच्छूद्रे वर्तुलाकारपुण्ड्रधारणमात्रस्यापि दीक्षाङ्गत्वं घटेतेत्यभिप्रेत्याह—भक्तै-

---

वर्तुलाकारपुण्ड्रधारणमात्रस्यापीति । ऊर्ध्वपुण्ड्रधारणेऽपि न क्षतिरित्यपिना व्यज्यते । मूले

दयः । येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥ दौष्कुल्यमाधिं विधुनोति शीघ्रं महत्तमानामभिधानयोग" इत्यादिभिः श्रीभागवतोक्तेः । चन्दनमादिर्यस्य—धात्र्यादिवृक्षस्य, तस्येन्धनं—सूक्ष्मकाष्ठं, तस्मादुद्भवो ययोस्ते । तन्निर्मिते इत्यर्थः । माले—स्रजौ कण्ठे धार्ये । अथेति चार्थे । ललाटे—भालमध्यदेशे । केवलः—पुण्ड्ररहितश्चासौ चन्द्रकश्च । कार्यः—कर्त्तव्यः ।

यद्यपि—"ऊर्ध्वपुण्ड्रमृजु सौम्यं ललाटे यस्य दृश्यते । चण्डालोऽपि स शुद्धात्मा पूज्य एव न संशय" इत्याचारमाधवे सत्यव्रतवचनादाचाण्डालमूर्ध्वपुण्ड्रधारणेऽपि न दोषस्तथाप्यसच्छूद्रादीनां प्रत्यक्षभगवत्प्रतिमार्चनाद्यनधिकारात्केवलं भगवत्प्रतिमादर्शननामकीर्त्तनादावेवाधिकारादूर्ध्वपुण्ड्रधारणस्याप्रयोजकत्वात् "वर्त्तुलं शूद्रजातिष्वि"ति सामान्यवाक्येन विन्दुमात्रधारणं युक्तम् । "यागो दानं तपो होमः स्वाध्यायः पितृतर्पणम् । भस्मीभवति तत्सर्वमूर्ध्वपुण्ड्रं विना कृत"मिति मदनपारिजाते ब्राह्मोक्तेरूर्ध्वपुण्ड्रधारणस्य यागाद्यङ्गत्वाद्द्विजातीनां सच्छूद्राणां च तत्राधिकारात्तेषामेव तद्विहितमिति ज्ञेयम् । शूद्राणां यागादिप्रकारस्तु शूद्रकमलाकरतोऽवगन्तव्यः । ब्राह्मवाक्यं तूर्ध्वपुण्ड्रस्तावकमित्यन्यत्र विस्तरः । एवं तुलसीमालाधारणेऽपि ज्ञेयम् ॥ ४५ ॥

रिति । भक्तैरिति दीक्षाधिकारो व्यज्यते । केवलचन्द्रकः—ऊर्ध्वपुण्ड्रेण रहितः ॥ ४५ ॥

भक्तैरिति पदमधिकारज्ञापकमित्याह—भक्तैरिति ॥ ४५ ॥

---

**त्रिपुण्ड्ररुद्राक्षधृतिर्येषां स्यात्स्वकुलागता ।**
**तैस्तु विप्रादिभिः क्वापि न त्याज्या सा मदाश्रितैः॥ ४६ ॥**

एवं दीक्षाङ्गतयोर्ध्वपुण्ड्रतुलसीमालाधारणनियमं विधाय, अथ ये पुनः

एवमूर्ध्वपुण्ड्रतुलसीमालाधारणविधानात्सम्भाव्यमानां स्वाश्रयणे त्रिपुण्ड्ररुद्राक्षधारणस्य प्रातिकूल्यशङ्कामपाकरोति—त्रिपुण्ड्रेति । त्रिपुण्ड्रस्य—भस्मना तिर्यग्रेखात्रयरूपेण विरच्यमानस्य पुण्ड्रस्य, रुद्राक्षस्य च धृतिर्येषां कुलागता—अन्वयतोऽनुवृत्ता, शिवभक्तिभूयिष्ठानामवधृतशैवलिङ्गानां पितृपितामहादीनां समवायतः समागतेत्येतत् । एतेन तेषामतन्नि-

अनन्तरश्लोकमवतारयति—एवमिति । कुलागतेत्यस्यार्थमाह—अन्वयतोऽनुवृत्तेति । आशयं विवृणोति—शिवभक्तिभूयिष्ठानामिति । त्रिपुण्ड्ररुद्राक्षधारणं हि शाम्भवव्रताङ्गतया स्मर्यते तत्र तत्र एतेनेति । कुलागतेत्युक्त्येत्यर्थः । रुचिव आगता इत्यनुक्तेः कुलतः भिन्नेत्यप्यनुक्तेस्तत्स्थाने कुलागते

शैवकुलोत्पन्ना वैष्णवसमागमादिना विष्णुभक्तिरुचावुत्पन्नायामपि भस्मत्रिपुण्ड्रादिशैवलिङ्गपरित्यागे ऊर्ध्वपुण्ड्रादिवैष्णवलिङ्गधारणे च स्वजनक्लेशाद्युद्विग्नमनस्तया श्रीकृष्णदीक्षावसरमलब्ध्वा नितरां खिन्नमानसास्तान्प्रति बाह्यलिङ्गापेक्षयाऽऽभ्यन्तरभावशुद्धिमेव भगवत्तोषहेतुं सूचयन्स्वकुलपरम्पराप्राप्तलिङ्गान्तरात्यागमभ्यनुजानन्नाह—त्रिपुण्ड्रेति। येषां—पुरुषाणाम्। त्रिपुण्ड्ररुद्राक्षधृतिः—त्रिरेखं पुण्ड्रं त्रिपुण्ड्रमिति मध्यमपदलोपी समासः। भस्मादिना तिर्यक्त्रिरेखालक्षणं पुण्ड्रमित्यर्थः।

---

एता कुलसङ्गतोऽपरिहरणीयता च तस्य व्यज्यते। एवम्भूतैर्मदाश्रितैः, आशंसायां क्तः। मदाश्रयणमाकाङ्क्षमाणैरित्यर्थः। क्वापि—मदाश्रयणविषयेऽभीप्सितार्थसिद्धौ वा। त्याज्या न—त्याज्येति नियमो न। त्यज्यतां वा ध्रियतां वेत्यर्थः।

ननु—कथमनियमपरतया व्याख्यायते, न त्याज्येत्यतो धार्येत्येव हि प्रतीयेत। सत्यम्। यदि नञा प्रवर्त्तनाविरोधिनी निवर्त्तना बोध्येत तदा त्यागप्रवर्त्तनाविरोधिनी निवर्त्तना उपादेयत्वपर्यवसन्ना प्रतीयेत, इह तु न तथा। नञा त्याज्येत्यतस्त्यागे प्रतीयमानस्य नियमतो विधेयत्वस्याभावमात्रस्यैव बोधनात्। नच नञ्समभिव्याहृतविधिप्रत्ययस्य निवर्त्तनाबोधकत्वमेव व्युत्पन्नम्। क्वचिद्व्यभिचारात्। विषकण्टकादिवदप्रतिकूले सुधाकनकादिवदननुकूले चोदासीने काष्ठलोष्ठादौ नापि त्याज्यं नाप्युपादेयमिति प्रयोगसम्भवात्। यदि न त्याज्यमित्येतदुपादेयतामेव बोधयेत्, नोपादेयमिति व्याहन्येत। यदि नोपादेयमित्येतत्त्याज्यतामेव बोधयेत्, न त्याज्यमित्येतद्व्याहन्येत। तत्तत्र हि त्यागे यद्विधेयत्वं, यच्चोपादाने विधेयत्वं तयोरभावमात्रस्य बोधः। न च—न त्याज्यं नाप्युपादेयमिति समभिव्याहारविशेष एव तथा बोधने व्युत्पन्न इति वक्तुं शक्यमविशेषात्। नहि न त्याज्यं नोपादेयमिति च पृथक् श्रूयमाणात्सङ्गत्य श्रूयमाणे पदवैलक्षण्यम्। तस्मात्पृथक्श्रवणे तदर्थेऽव्युत्पन्नस्य तदानीमपि तत्र

---

त्युक्तेरिति भावः। आश्रयणतः पश्चाद्यथापूर्वमनुवर्त्तमाने पुण्ड्रधारणे प्रातिकूल्यशङ्कायाः प्रायोऽनवकाशमभिप्रेत्य व्याचष्टे—आशंसायां क्त इति। त्याज्या नेत्यतो धार्यैवेत्यर्थः प्रतीयेतेत्यतस्तादृशभ्रमं व्यावर्त्तयन्व्याचष्टे—त्याज्येति नियमो नेति।

शङ्कते—नन्विति। समाधत्ते—सत्यमिति। सत्यमित्यर्धाङ्गीकारे, न त्याज्येत्यस्य धार्यत्वबोधनसामर्थ्येऽङ्गीकारः, प्रकृते तस्य तत्परत्वेऽनङ्गीकारो बोध्यः। अतत्परत्वमुपपादयति—यदीत्यादिना। ननु नञ्समभिव्याहृतविधिप्रत्ययस्य निवर्त्तनाबोधकत्वमेवेति प्रकृतेऽपि धार्यत्वमेव प्रतीयेतेति शङ्कां व्युदस्यति—न चेत्यादिना। क्वचिद्व्यभिचारादिति। व्यभिचारमुपपादयति—विषकण्टकादीत्यादिना। ननु प्रदर्शितसमभिव्याहारविशेषादन्यत्रैव नञ्समभिव्याहृतविधिप्रत्ययस्य निवर्त्तनाबोधे हेतुत्वमिष्यत इति न व्यभिचार इत्याशङ्कते—न चेति। तथा बोधन इति। त्यागे यद्विधेयत्वमुपादाने च यद्विधेयत्वं तयोरभावबोधन इत्यर्थः। समभिव्याहारविशेषस्योक्तबोधहेतुत्वं निरस्यति—अविशेषादिति। अविशेषमेवोपपादयति—नहीत्यादिना। प्रकारतया विशेष्यतया वा शाब्दबोधे पदजन्यपदार्थोपस्थितेरेव हेतुत्वात्पदादनुपस्थितस्यार्थस्य समभिव्याहारमात्रेण तथा शाब्दबोधे भानं नोपपद्येत तस्मादनुपादेयत्वार्थबोधकत्वादि नञ्समभिव्याहृतविधिप्रत्ययस्यासत्यपि समभिव्याहारविशे-

तच्च रुद्राक्षाश्च तेषां धृतिः—धारणम् । क्वापि—क्वचिन्निमित्ते, शिवपूजाफलसिद्ध्यर्थमिति यावत् । स्वकुलागता—स्वस्य कुलं—वंशस्तस्मादागता—पारंपर्यप्राप्ता स्यात् । मदाश्रितैस्तैस्तु विप्रादिभिः, सा—त्रिपुण्ड्ररुद्राक्षधृतिः न त्याज्या । वैष्णवराजश्रीशङ्करलिङ्गत्वादिति भावः । श्रीशङ्करस्य वैष्णवश्रेष्ठत्वमुक्तं श्रीभागवते—"वैष्णवानां यथा शम्भु"रिति । "अस्यानुभावं भगवान्वेद गुह्यतमं शिव" इति च । "सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः । सत्त्वे च

व्युत्पत्तिरङ्गुचितैव । लाक्षणिकताश्रयणं तु गौणम् । समभिव्याहारविशेषस्यैव व्युत्पत्तिवैचित्र्यकल्पनमपि न साधीयः । असत्यपि समभिव्याहारविशेषे तथा प्रतीतेः । तथाहि—यदि नाम सन्न्यासिनमधिकृत्य धनं त्वया नार्जितव्यमिति प्रयुङ्क्ते, तदा तु धनतो निवर्त्तनीयत्वं, तत्प्रवृत्तेः प्रत्यवायावहत्वं च प्रतीयते । यदि नाम गृहस्थं वणिजं धनपूर्णमधिकृत्य धनं त्वया नार्जितव्यमिति कथयेत्तदा तु धनतो न निवर्त्त्यता प्रतीयते न वा प्रवृत्तेः प्रत्यवायावहता प्रतीयते । किन्तु—अर्जनस्य यन्नियमतो विधेयत्वं तदभावमात्रमेव । ईदृशार्थवैलक्षण्यं तु निवर्त्तनाबोधनाबोधनाभ्यामुपपद्यते । नञो विरोध्यर्थकत्वाभावार्थकत्वभेदेन तन्निर्वाहो बोध्यः ।

अथ स्यादभ्यनुज्ञाने त्रिपुण्ड्रादेरूर्ध्वपुण्ड्रादिधारणेऽप्यनियमः । अत्र कश्चित्—नानियमः, अभ्यनुज्ञातं त्रिपुण्ड्रादिधारणं दीक्षाङ्गतया प्राप्तमूर्ध्वपुण्ड्रादिधारणं न प्रतिबध्नीयात् । नहि तयोरेकव्यक्तौ समावेशो दुर्घट इति । तत्तु न साधीयः । युगपदुभयोरेकत्र समावेशानो-

पेऽङ्गीकार्यैवेति भावः । प्रदर्शितसमभिव्याहारविशेषे लक्षणाश्रयणेन निर्वाहं दूषयति—लाक्षणिकताश्रयणं तु गौणमिति । ननु निरूढलक्षणाश्रयणे न दोषः, सा हि शक्तितुल्येत्याशङ्कां परिहरन्समभिव्याहारविशेषस्य व्युत्पत्तिवैचित्र्याश्रयणमेव व्यभिचारनिरूपणेन दूषयति—समभिव्याहारेति । नञो, विरोध्यर्थकत्वाभावार्थकत्वभेदेनेति । "तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्चे"त्यनुशासनसिद्धः । अयं भावः—विधितः प्रवर्त्तना प्रतीयते, निषेधतस्तु निवर्त्तना, तत्र निवर्त्तनोपस्थापने नञ्समभिव्याहार एव प्रयोजकः, प्रवर्त्तनेव निवर्त्तनापि लिङुपस्थाप्यैव, नञस्तु तात्पर्यग्राहकता । सा च तेन शक्त्योपस्थाप्यते ? उत लक्षणया ? शक्त्या चेच्छक्यतावच्छेदकं किमुभयसाधारणमेकम् ? उत पृथगेव ? तच्च किंरूपमित्याद्यन्यदेतदिति नेह प्रपञ्च्यते । निवर्त्तनातात्पर्यग्राहकता तु न नञ्सामान्यस्य, किन्तु विरोध्यर्थस्यैव तस्य । तत्समभिव्याहारे लिङोपस्थापिताया निवर्त्तनायाः स्वविषयकज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसम्बन्धेनाऽऽख्यातार्थे धात्वर्थान्वितेऽन्वयः । यत्र त्वभावपरनञ्समभिव्याहारस्तत्र नञा लिङोपस्थापितायाः प्रवर्त्तनाया अभावमात्रमाख्यातार्थे प्रतीयते । 'अयमत्र प्रवर्त्ततामितीच्छाविशेषः प्रवर्त्तना, अयमितो निवर्त्ततामितीच्छाविशेषो निवर्त्तना, लोक आप्तस्य कस्यचित्, वेदे चेश्वरस्येति ।

शङ्कते—अथ स्यादिति । अनियम इति । दीक्षाङ्गतया विहितस्योर्ध्वपुण्ड्रधारणस्यानियमे सत्याद्वैफल्यं स्यादिति शङ्कितुराशयः । नहि तयोरेकव्यक्तौ समावेशो दुर्घट इति । भिन्नतां नाम

तस्मिन्भगवान्वासुदेवो ह्यधोक्षजो मे मनसा विधीयत" इत्यादि च । गरुडपुराणे ब्रह्माणं प्रति श्रीशङ्करेण चोक्तम्—"अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम्। सर्वदं सर्वगं सर्वं सर्वप्राणिहृदि स्थितम्। भस्मोद्धूलितदेहस्तु जटारुद्राक्षमण्डितः। विष्णोराराधनार्थं मे व्रतमेतत्पितामहे"ति । नैतावता तस्य वैष्णवपरमधर्मानभिज्ञत्वमिति वाच्यम्। "स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः। प्रह्लादो जनको

चित्वात्। तथा च स्कान्दे—"ऊर्ध्वपुण्ड्रे त्रिपुण्ड्रं यः कुरुते तु नराधमः। भङ्क्त्वा विष्णुगृहं पुण्यं स याति नरकं ध्रुवम् ॥ त्रिपुण्ड्रे यस्य विप्रस्य ऊर्ध्वपुण्ड्रं प्रदृश्यते । तं दृष्ट्वाप्यथवा स्पृष्ट्वा सचैलं स्नानमाचरेत् ॥" इति । नापि समयभेदेन तथा, दीक्षाङ्गतया मालादीनां सदा धार्यतया प्राग्विधानात्।

परे तु—आर्तो जिज्ञासुरर्थार्थी वा यः कश्चिदसदाश्रयणोन्मुखः स्यान्न तेनासदाश्रयणमात्राय लिङ्गान्तरं त्याज्यं, यथाकाममाश्रयतां नाम, यो हि नियमः प्राक् प्रादर्श्यूर्ध्वपुण्ड्रादिषु स हि मुमुक्षूनधिगतदीक्षाविशेषानधिकृत्येति भगवदाशय इति ।

वस्तुतस्त्वर्थार्थी वा स्यात् मुमुक्षुर्वा स्यात्, यो यत्कामयमानो ममाश्रयणमाकाङ्क्षते, स यथाकाममपरित्यक्तलिङ्गान्तर एवाश्रयतां नाम, तस्य वाञ्छितमपि मोक्षं विनापि कृष्णदीक्षां मन्नामस्मरणमत्सेवादिभिरकृत्रिमं रचिताभिरुदारोऽहं वत्सलतरः प्रयच्छाम्येवेति स्वीयमौदार्यमत्र श्लोके भगवता प्रकाशितम्। कृष्णदीक्षामित्यत्र तु मुमुक्षोरधिकारानुरूपं स्वरूपं शिक्षितमिति सर्वं समञ्जसम्। एतेन दीक्षास्वरूप ऊर्ध्वपुण्ड्राद्यनियमेनाङ्गवैकल्यमिति शङ्का परास्ता ।

केचित्तु—बाह्यकतिपयाङ्गवैकल्यमपि न दोषायेति भगवदाशय इति वदन्ति । केचित्तु न त्याज्या-धार्यैवेत्यर्थः। प्रवर्त्तनाविरोधिनी निवर्त्तनैवात्र नञा प्रत्याय्यते। अन्वयतः प्राप्तस्य पुण्ड्रस्य धारणमेव तु धर्मः। तथाच श्रूयते—"श्रोणामेक उदकं गामवाजति, मांसमेकः पिंशति सूनया भृतं, आनिम्लुचः शकृदेको अपाभरद्, किंस्वित्पुत्रेभ्यः पितरावुपावतु॥" इति । अयमर्थः—

युक्तः प्राप्तं त्रिपुण्ड्रम्, तदुपरि दीक्षाङ्गतया प्राप्तमूर्ध्वपुण्ड्रमपि, को वाऽत्र द्वयोर्विरोध इत्याशयः।

अधिकारिभेदेन तयोर्विरोधं परिहरतां पक्षमाह—परे त्विति । मुमुक्षुव्यतिरिक्तविषयं त्रिपुण्ड्रधारणाभ्यनुज्ञानम्, मुमुक्षूनधिकृत्य तु दीक्षाङ्गतयोर्ध्वपुण्ड्रधारणविधानमित्यविरोध इति भावः।

सर्वज्ञस्य सर्वशक्तस्याश्रितवत्सलस्य भगवतो मोक्षोपायतायामूर्ध्वपुण्ड्रधारणाद्यङ्गविशेषसंवलितदीक्षासापेक्षतानैयत्यकल्पनमनुचितमित्याशयेन प्रकारान्तरेण समाधत्ते—वस्तुतस्त्विति । स्वरूपमिति । सहजदास्यानुगुणं स्वरूपमित्यर्थः । एतेनेति । त्रिपुण्ड्रधारणाभ्यनुज्ञानतः प्राप्ताया ऊर्ध्वपुण्ड्रधारणानियमाशङ्कायाः परिहरणेनेत्यर्थः।

भगवतो मोक्षोपायत्वं सर्वथा दीक्षानिरपेक्षं न, किन्तु दीक्षासापेक्षमेव, दीक्षायामितिकर्त्तव्यतावैकल्येऽपि न क्षतिरित्याशयेन समादधतां मतमनुवदति—केचित्त्विति । भगवदाशय इति । स्वर्गुणानन्येषां स्वाश्रमेतिकर्त्तव्यताविशेष आग्रहः, भगवतस्तु भक्तैकप्रणयिनः पुण्ड्रधारणरूपाङ्गवै-

भीष्मो बलिर्वैयासकिर्वयम् । द्वादशैते विजानीमो धर्मं भागवतं भटाः ! । गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुत" इति यमोक्तेः ॥ ४६ ॥

एकः श्लक्ष्णां मृदं जलं गमयति, पुण्ड्रार्थं मृदं जलेन पिनष्टीत्येतत् । अपरस्तु सौनिकैराहृतं गोरोचनं पिनष्टि । अपरस्तु अग्निं प्राप्यास्तं गतं गोमयं गोमयभस्म उपादत्ते । कुतोऽयं मतभेदः, यत् व्रतं पुत्रहिताय पित्रादयः परिपालयामासुः, यत्पुण्ड्रं पूर्वैः पितृपितामहादिभिर्धृतं तद्धार्यमिति यावत् । व्याख्यातं चैतद्भारतटीकायां नीलकण्ठेनाप्येवमिति व्याचक्षते ॥ ४६ ॥

कल्यमात्रेणाऽऽश्रितो नाप्रियो भवेदित्याशय इति भावः । केचित्त्विति । व्याचक्षत इत्यनेनान्वयः । अस्मिन्पक्षे येषामन्वयतो न प्राप्तं त्रिपुण्ड्रधारणं, तद्विषये दीक्षाविधिर्नेयः । उक्ताङ्गसाकाङ्क्षता वा तथा नेया ॥ ४६ ॥

---

## ऐकात्म्यमेव विज्ञेयं नारायणमहेशयोः ।
## उभयोर्ब्रह्मरूपेण वेदेषु प्रतिपादनात् ॥ ४७ ॥

त्रिमूर्तिषु केषाञ्चिद्विष्णौ केषाञ्चिच्छिवे च स्वेष्टदेवतोत्कर्षनिरूपणप्रसङ्गेन सम्भाव्यमानो द्वेषो नोचित इत्याह—ऐकात्म्यमिति । नारायणः—"आपो नारा इति प्रोक्ता आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृत" इति स्मृतिनिरुक्तो विष्णुः स च, महेशः—शङ्करः सच, तयोः । ऐकात्म्यम्—एक

अथ प्रसङ्गादादिशत्याश्रितानखिलान्—अपि नारायणपरायणैरस्मदीयैस्त्रिमूर्त्तिषु महेशेऽपि तमःप्रवर्त्तके विष्णाविव सत्त्वप्रवर्त्तके प्रणयिभिरेव भाव्यम् । यदयमपि परब्रह्मणांशतोऽनुप्रविष्टः संहरणपदमधिकुर्वन्नुपयाति पदतस्तत्साम्यमिति । ऐकात्म्यमेवेति । नाराणमहेशयोः—नारायणोऽत्र त्रिमूर्त्तिष्ववतीर्णो विष्णुः स्थितिनिर्वाहकः, महेशः—रुद्रः संहृति-

अनन्तरश्लोकस्य सङ्गतिमाह—अथेति । प्रसङ्गादिति । शैवलिङ्गभूतभस्मत्रिपुण्ड्रधारणविचारतः प्रसक्तिरस्यादेशस्येति बोध्यम् । आदेशप्रकारमेवाह—अपीत्यादिना । तमःप्रवर्त्तक इति । इदं च विशेषणं सत्त्वैकनिष्ठैरनुपसेव्यत्वव्यञ्जकम् । प्रणयिभिरेवेति । एवकाराद्विद्वेषो व्यावर्त्यते । ननु तमःप्रवर्त्तके महेशे विष्णाविव प्रणयः कथं योग्य इत्यत्राह—यदयमपीत्यादिना । परब्रह्मणेति परशब्दादर्वाचीनब्रह्मव्यावृत्तिः । जन्मादिकारणत्वलक्षणलक्षितेन परेण ब्रह्मणेति यावत् । अंशत इति । शक्तिलेशद्वारेत्यर्थः । अनुप्रविष्ट इति । इदं च हेतुगर्भं विशेषणम् । यदि परब्रह्मणः शक्तितोऽनुप्रवेशो न स्यादस्य संहरणपदाधिकारोऽपि न स्यादिति भावः । पदतस्तत्साम्यमिति । सृष्टिस्थितिसंहारान्यतमरूपजगद्व्यापारनिर्वहणपदतस्तत्साम्यमित्यर्थः । नारायणशब्दस्य प्रकृते सर्वावतारकारणपरतां व्यावर्त्तयन्नाह—नारायणोऽत्रेति । संहृतिद्वारमिति । भगवत्कर्तृकसंहारे द्वारभूतः, न तु

आत्मा ययोस्तावेकात्मानौ तयोर्भाव ऐकात्म्यं–एकात्मकत्वम्। विज्ञेयम्। तत्र हेतुमाह—उभयोरिति। वेदेषु। उभयोः–नारायणमहेशयोः। ब्रह्मरूपेण–परस्य ब्रह्मणो यद्रूपं–असाधारणो धर्मः स्थित्यादिकारणत्वं तेन, तद्वत्तया प्रतिपादनात्।

तथाहि—अथर्वशिखाथर्वशिरःश्वेताश्वतरीयमन्त्रोपनिषत्कैवल्योपनिषदादिषुशिवो ब्रह्मणो यद्रूपं–जगज्जन्मादिहेतुत्वं तेन रूपेण प्रतिपादितः। तथा महानारायणोपनिषन्नारायणोपनिषन्महोपनिषत्सुबालोपनिषदादिषु विष्णुर्ब्रह्मणस्तेन

---

द्वारं, तयोरैकात्म्यमेव विज्ञेयम्। सर्गादिनिर्वहणाय स्वयं परमकारणं परं ब्रह्मैव यस्मादंशतस्त्रिमूर्त्तिषु सन्निहितं तस्मात्प्रत्यग्भेदेऽप्यैकात्म्यं परमात्मनाऽस्तीति तदिदमैकात्म्यमेव युष्माभिस्तयोरनुसन्धेयमस्यैव पदनिर्वाहकत्वात्, स्वरूपतः पार्थक्यस्याप्रयोजकत्वात्। तदेवमैकात्म्यानुसन्धानं कुर्वतां भगवद्विभूतित्वदृष्ट्या भवेदेव तस्मिन्विष्णाविव प्रणयः। तदेवमनुसन्दधानैस्तस्मिन्नस्मदीयैः प्रणय एव धार्यः। अन्यथा विद्वेषप्रसङ्गेन दक्षस्येवापराधभूयस्तयाऽनर्थमापतेदिति भावः। उक्तैकात्म्ये ज्ञापकमाह—उभयोरिति। उभयोरनयोः। परब्रह्मणो यद्रूपं–असाधारणो धर्मः स्थित्यादिहेतुत्वं तेन, तद्वत्तया वेदेषु प्रतिपादनात्। अयं भावः—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ती"ति परब्रह्मणो ह्यसाधारणं श्रूयते सकलसर्गादिहेतुत्वम्। आह च सूत्रकारः—"जन्माद्यस्य यत" इति। तदिदमसाधारणं निखिलसर्गादिहेतुत्वं वेदेषु क्वचित्त्रिमूर्त्तिष्वाम्नायमानं तदनुप्रवेशाहितशक्तिकतामेवावगमयतीति तदवतारविशेषरूपत्वमेनयोर्विज्ञायत इति। स्वरूपैक्यपरतया व्याख्याने तु न भगवतो हार्दम्। अन्यत्रैतयोर्भगवतैव प्रत्यग्भेदनिरूपणात्। अस्य नारायणादन्यत्वमर्वाचीनत्वमित्यादि श्रुतिस्मृत्यादिसिद्धं नेह वितन्यते।

यद्वा—नारायणः–परमकारणभूतः परमात्मा, अस्मिन्नेवास्य शब्दस्य योगरूढेः। महेशः–यश्च तदवतारविशेषः, तयोः। ऐकात्म्यमेव विज्ञेयम्–नह्यवतीर्ण इत्येतावता स्वरूपे भेदः।

---

संहारे साक्षात्साधनमिति भावः। ऐकात्म्यमेव विज्ञेयमित्यस्य भावमाह—सर्गादीत्यादिना। ज्ञापकमाहेति। लिङ्गमाहेति यावत्। अर्वाचीनेऽपि क्वचिद्ब्रह्मशब्दप्रयोगात्तद्व्यावर्त्तयन्व्याचष्टे—परब्रह्मणो यद्रूपमिति। रूपशब्दस्य स्वरूपपरताभ्रमं व्यावर्त्तयति—असाधारणो धर्म इति। तद्वत्तयेति। तेनेत्यत्र तृतीयया प्रकारत्वमुपस्थाप्यते, तस्य च प्रतिपादनशब्दार्थैकदेशे प्रतिपत्तावन्वय इति भावः। ननु शिवनारायणयोः सर्गादिहेतुतया वेदेषु प्रतिपादनमुभयोः परमब्रह्मणैकात्मकत्वे कथं लिङ्गं स्यादिति शङ्कां वारयन्नुभयोरित्यादि विशदयति—अयं भाव इत्यादिना। ननु परमब्रह्मासाधारणतया प्रसिद्धं सर्गादिहेतुत्वं शिवनारायणयोः श्रूयमाणं तयोर्ब्रह्मस्वरूपेणैक्यमेव किं नावगमयेत्, तदस्य श्लोकस्यापि तादृशाभिप्रायकत्वैवास्त्वित्याशङ्कायामाह—स्वरूपैक्येति।

नारायणशब्दस्य सर्वान्तर्यामिभूते परमात्मन्येव मुख्यप्रवृत्तेरवतारविशेषपरतया व्याख्यानमनुचितमित्यभिप्रायेणाह—यद्वेति। श्रूयते हि—"अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायण" इति। अन्तर्बहिश्च तत्सर्वं व्याप्येत्यनेन सर्व-

रूपेण प्रतिपादितः । इदमुभयोः परब्रह्मासाधारणगुणेन प्रतिपादनं हि परस्य ब्रह्मणः स्थितिसंहारार्थावतारविशेषावेवेति, अवतीर्णेन तेन परमकारणेन परब्रह्मणैकात्मकावित्यभिप्रायेण । तथाच परस्य ब्रह्मणः स्थित्यर्थावतारभूते विष्णौ, संहारार्थावतारभूते शिवे च वैदिकानां विद्वेषो नोचित इति भावः । तदुक्तं श्रीमद्भागवते—"त्रयाणामेकभावानां यो न पश्यति वै भिदाम्। सर्वभूतात्मनां ब्रह्मन् स शान्तिमधिगच्छति ॥ न ते मय्यच्युतेऽजे च भिदामण्वपि चक्षत" इत्यादि ।

अत्रेदं बोध्यम्—त्रिमूर्त्तिषु विष्णोः सत्त्वप्रवर्त्तकस्य निःश्रेयसार्थिभिरुपास्यत्वमन्यस्य तु न तथेति । अत एवावतारे विशेषश्चास्मिंस्ततो बोध्यः । स्मर्यते च—"सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्यादये हरिविरिञ्चिहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनोर्नृणां स्युः"

---

इयान्विशेषः—अवतारः कश्चित्साक्षात् कश्चिदनुप्रवेशेनेति । यमनुप्रविश्यावतरति तत्स्वरूपे सत्यप्यपकर्षे नावतारे न्यूनता । यश्च संहरणार्थो रुद्रावतारः स तु नारायणस्यैवेति, अवतारविशिष्टे महेशे माननैव समुचिता न तु विद्वेषः । असति तस्य तदवतारत्वे नारायणस्यैव परब्रह्मासाधारणधर्मपुरस्कारेण वेदेषु रुद्रस्य क्वचित्प्रतिपादनं नोचितम् । तदाह—उभयोरिति । नारायणस्यैव रुद्रस्यापीति यावत् ।

यद्वा—ये च शिवपारम्यवादिनः, ये च नारायणपारम्यवादिनः, प्रसङ्गात्तान्प्रत्युच्यते—तत्तत्पारम्यवादिभिरन्यत्र नावधीरणा कार्या, किन्तु प्रणतिरेवेत्यभिप्रायेणाह—ऐकात्म्यमिति । तैरुभयैरपि नारायणे महेशे वाऽन्यतरानुप्रवेशतोऽन्यतरात्मकत्वमेव ज्ञातव्यम्, न तु देवकोटिप्रविष्टत्वमात्रम् । उभयोरपि हि ब्रह्मणो रूपेण-जगज्जन्मादिकारणत्वेन वेदेष्वस्ति प्रतिपादनम् । एतदुक्तं भवति । वेदेषु क्वचित् "नारायण एक एवासीदि" त्यादिना नारायणे, क्वचित्तु—"देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति, सोऽब्र-

---

भूतान्तरात्मेत्यनेन च नारायणशब्दस्यावयवार्थः प्रवृत्तौ निमित्तं ज्ञाप्यते । अयं च नारायणशब्दस्यावयवार्थः—नाराः-सकलचेतनाचेतनजातम्, तस्यायनम्, तदयनं यस्येति च, अतश्चान्तर्बहिर्व्याप्तिरन्तर्यामिता च ज्ञाप्यते । तदुक्तमवतारपरतया व्याख्यानादवतारमूलस्वरूपपरतया व्याख्यानम् । ऐकात्म्योपपादकं विशेषणमाह—यश्च तदवतारविशेष इति । नन्ववतारो ह्ययं, तस्मादन्य एव सतोऽयमिति शङ्कां वारयति—नहीति । अवतारे विशेषमाह—इयानिति । माननायां हेतुगर्भं विशेषणमाह—अवतारविशिष्ट इति ।

भयगादेशः परान्मतीत्यमभिप्रेत्य प्रकारान्तरेण व्याचष्टे—यद्वेति । ज्ञातव्यमित्यत्र कर्तृपदं पूरयन्व्याचष्टे—तैरुभयैरपीति । नारायणपारम्यवादिभिः शिवपारम्यवादिभिश्चेत्यर्थः । ज्ञातव्यं—मन्तव्यम्, अङ्गीकर्तव्यमिति यावत् । ननु ततः किं तत्तत्पारम्यवादिभिर्देवतान्तरे प्रणतैर्भाव्यमित्याशङ्काया-

"यत्सत्त्वं स हरिर्देवो यो हरिस्तत्परं पदम्" "सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम्" "सात्त्विकैः सेव्यते विष्णु"रित्यादि ॥ ४७ ॥

वीत् अहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त"इत्यादिना रुद्रे ब्रह्मणो लक्षणं सङ्गमय्यते। तदिदमुभयत्र तु न घटते, ब्रह्मद्वित्वप्रसङ्गात्। तदवश्यं शिवपारम्यवादिभिर्नारायणे शिवस्यानुप्रवेशात्तदाहितशक्तिके तस्मिंस्तदात्मके तद्वाद इत्याश्रयणीयम्। नारायणपारम्यवादिभिस्तु शिवे नाराणस्यानुप्रवेशात्तदाहितशक्तिके तदात्मके तस्मिंस्तद्वाद इत्याश्रयणीयम्। इत्थं च शिवे नारायणात्मकत्वं, नारायणे शिवात्मकत्वं वाऽभ्युपगच्छतां तत्तारतम्यवादिनामन्यस्मिन्प्रणतिरेवोचिता न तु द्वेषः, स ह्यधिकानर्थदः स्वसमयानुसारेणापीति। अन्वयश्चेत्थं बोध्यः। नारायणमहेशयोरुभयोरैकात्म्यमेव विज्ञेयम्। उभयोरिति निर्धारणे सप्तमी। ऐकात्म्यं–अन्यतरात्मकत्वम्। शिवपारम्यवादिभिर्नारायणपारम्यवादिभिश्चेति शेषः। उभयोरित्यस्य षष्ठ्यन्ततया विपरिणतस्य प्रतिपादनादित्यत्रान्वयः। ननु वस्तुतो द्वयोर्मध्ये कस्य परब्रह्मतेति चेद्वक्ष्यति तु—"स श्रीकृष्णः परं ब्रह्मे" ति ॥ ४७ ॥

माशयं स्फुटतरमुपपादयति—एतदुक्तं भवतीत्यादिना। अन्यतरात्मकत्वमिति। उभयोरेको ह्यन्यतरः ॥ ४७ ॥

---

**शास्त्रोक्त आपद्धर्मो यः स त्वल्पापदि कर्हिचित्।**
**मदाश्रितैर्मुख्यतया ग्रहीतव्यो न मानवैः ॥ ४८ ॥**

शास्त्रोक्त इति। शास्त्रेषु–स्मृतिपुराणादिषु, उक्तः–वर्णितः। य आपद्धर्मः–आपत्काले विहितो धर्मः। स तु। अल्पापदि। मदाश्रितैर्मानवैः। मुख्यतया–अवश्यविहिततया। कर्हिचिदपि न ग्रहीतव्यः। यथा–"आर्त्तो व्रताहेऽप्यश्नीयादन्नं विष्णुनिवेदितम्"इत्यार्त्तस्य भोजनविधायकं शास्त्रं तदेव मुख्यतया

एवं प्रासङ्गिकमुपदिश्याथाश्रितानामन्वहं कर्त्तव्यविशेषमादिशन्भगवदाश्रितानामपि धर्मस्यावश्यानुष्ठेयत्वं ज्ञापयितुमापद्धर्मस्य गौणत्वं प्राणावसादसमयमात्रोपयोगित्वं च बोधयति—शास्त्रोक्त इति। शास्त्रेषु–मन्वादिषु—"अजीवंस्तु यथोक्तेन ब्राह्मणः स्वेन कर्मणा। जीवेत्क्षत्रियधर्मेण स ह्यस्य प्रत्यनन्तरः॥ उभाभ्यामप्यजीवंस्तु कथं स्यादिति चेद्भवेत्। कृषिगोरक्षमास्थाय जीवेद्वैश्यस्य जीविकाम्॥ जीवेदेतेन राजन्यः सर्वेणाप्यनयं गतः। वैश्यो जीवन्स्वधर्मेण शूद्रवृत्त्याऽपि वर्त्तयेत्॥ अशक्नुवंस्तु शुश्रूषां शूद्रः कर्तुं द्विजन्मनाम्। पुत्रदारात्ययं प्राप्तो जीवेत्कारुककर्मभिः॥ जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः। आकाशमिव पङ्केन न स पापेन लिप्यते॥" इत्यादिना य उक्त आपत्कालिको धर्मो वृत्त्यन्तराश्रयणसर्वान्नाशनादि-

मन्वादिष्विति। स्वयंभुवो मनोः प्राथम्यात् "यद्वै किञ्चन मनुरवदत्तद्भेषज"मिति प्रसिद्धतेः

गृहीत्वा किञ्चिज्ज्वरे ललाटदुःखे वाऽऽपदि भोजनं न कर्त्तव्यमित्यर्थः। "यथा शरीरं न ग्लायेन्नेयान्मृत्युवशं यथा। तथा कर्मसु वर्त्तेत समर्थः सर्वमाचरे"दिति मोक्षधर्मोक्तेः। एवं सर्वत्रापद्धर्मेषु ज्ञेयम्। विस्तारभयान्नात्र प्रपञ्च्यते ॥ ४८ ॥

---

रूपः। सः, अल्पापदि, प्राणात्ययप्रसङ्गभृत इत्येतत्। सत्तारोऽपि तामेवापदमभिप्रयन्त्यापद्धर्मप्रकरणे। तथाच वचनम्—"अवृत्तिकर्शितः सीदन्निमं धर्मं समाचरेदि"ति। व्याख्यातं चैतत्—वृत्त्यभावपीडितोऽवसादं गच्छन्निति। जीवितात्ययमापन्न इत्यादि स्फुटार्थं वचनान्तरं च। कर्हिचित्–कदापि–विद्यासम्पत्तावपि न ग्राह्यः–न सेव्यः। "न ह वा एवंविदि किञ्चनानन्नं भवति न ह वास्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवती"ति च श्रवणमात्रमवलम्ब्याप्रसक्तेऽपि प्राणात्यये विद्यावष्टम्भेन नाश्नेयमापत्कालमात्रेऽभ्यनुज्ञातमभक्ष्यभक्षणम्। विज्ञायते च विद्यावतामपि प्राणात्यय एव सर्वान्नाभ्यनुज्ञानम्। यन्मटचीहतेषु कुरुष्विल्यसिन्ब्राह्मणे विद्यावतामग्रेसरश्चाक्रायणः किलर्षिः प्राणात्ययमापन्न इभ्येन सामि खादितान्कुल्मापान्भिक्षित्वा चखाद, अनुपानं तु तदीयमुच्छिष्टदोषात्मत्याचचक्ष इत्याख्यायिका श्रूयते। "न ह वा एवंविदि" इत्यादि त्वर्थवाद एवेति भावः। आह च सूत्रकारोऽपि—"सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात्" इति। मुख्यतया न ग्राह्यः। प्राणपरित्राणाय कदाचिदाश्रितोऽपि स प्राप्य प्राणलाभं सपदि परित्याज्य एवेति व्यज्यते। चतुर्णामपि वर्णानां समनन्तरवृत्त्याश्रयणरूपापद्धर्मस्य साधारण्यान्मानवैरिति सामान्यतो निर्देशः। आपद्धर्मस्य विना प्राणसंशयमनाश्रयणीयत्वोपदेशस्य मानवमात्रसाधारण्येऽपि मदाश्रितैरित्युक्तिर्भगवदवलम्बबलमभिमत्य न प्रमदितव्यमिति स्फोरणाय। मदाश्रितैरपीत्युक्तं भवति ॥ ४८ ॥

---

श्रयाद्य मानवस्य कण्ठरवेण ग्रहणम्। अल्पापदीत्यस्याशयमाह—प्राणात्ययप्रसङ्गभृत इति। नन्वन्याप्यापत्तदाश्रयणे कुतो निमित्तं न स्यादित्यत्राह—सत्तारोऽपि तामेवेति। सीदन्नित्यस्य यथाकथञ्चित्खिद्यमानेऽपि प्रयोगसम्भवात्तद्व्यावृत्तये विवक्षितमर्थं ज्ञापयन्नाह—व्याख्यातं चैतदिति। व्याख्यातुर्वचने कस्यचिदप्रामाण्यशङ्का स्यादित्यत आह—स्फुटार्थं वचनान्तरं चेति। विद्याभेदेनार्थवादमात्रदृष्ट्या च सर्वान्नाशनादेः प्रसङ्गोऽस्तीत्यभिप्रेत्य व्याचष्टे—कदापि–विद्यासम्पत्तावपीति। श्रवणमात्रमवलम्ब्येति। अपर्यालोच्य निषेधवचनानीति यावत्। सामि—ईषत्। ननु "न ह वा एवंविदि किञ्चनानन्नं भवती"त्यपि श्रूयत इत्याशङ्कायामाह—न ह वेति। तस्यार्थवादत्वाश्रयणे सूत्रकृतां सम्मतिमाह—आह चेति। मानवैरिति निर्देशस्य स्वारस्यमाह–चतुर्णामपीति। नन्वस्योपदेशस्य सर्वसाधारण्ये मदाश्रितैरित्यसङ्गतमित्यत आह—आपद्धर्मस्येत्यादिना। प्रदर्शितविवक्षानुगुणमन्वयं प्रदर्शयति—मदाश्रितैरपीत्युक्तं भवतीति। मानवैर्न ग्राह्यः, मदाश्रितैरपि न ग्राह्य इत्यन्वयभेदो बोध्य इति यावत् ॥ ४८ ॥

---

प्रत्यहं तु प्रबोद्धव्यं पूर्वमेवोदयाद्रवेः ।
विधाय कृष्णस्मरणं कार्यः शौचविधिस्ततः ॥ ४९ ॥
उपविश्यैव चैकत्र कर्त्तव्यं दन्तधावनम् ।
स्नात्वा शुच्यम्बुना धौते परिधार्ये च वाससी ॥ ५० ॥
उपविश्य ततः शुद्ध आसने शुचिभूतले ।
असङ्कीर्ण उपस्पृश्यं प्राङ्मुखं वोत्तरामुखम् ॥ ५१ ॥
कर्त्तव्यमूर्ध्वपुण्ड्रं च पुम्भिरेव सचन्द्रकम् ।
कार्यः सधवनारीभिर्भाले कुङ्कुमचन्द्रकः ॥ ५२ ॥
पुण्ड्रं वा चन्द्रको भाले न कार्यो मृतनाथया ।
मनसा पूजनं कार्यं ततः कृष्णस्य चाखिलैः ॥ ५३ ॥
प्रणम्य राधाकृष्णस्य लेख्यार्चां तत आदरात् ।
शक्त्या जपित्वा तन्मन्त्रं कर्त्तव्यं व्यावहारिकम् ॥ ५४ ॥

सामान्यत आह्निकमाह—प्रत्यहमिति षड्भिः। तुशब्दो भिन्नप्रकरणार्थः। प्रत्यहं—अहरहः प्रति। वीप्सार्थेऽव्ययीभावः। रवेः—सूर्यस्य। उदयात्—"पञ्च-पञ्च उषः कालः सप्तपञ्चारुणोदयः। अष्टपञ्च भवेत्प्रातः शेषः सूर्योदयः स्मृत" इत्युक्तलक्षणादुदयकालात्। पूर्वं—प्रागेव, ब्राह्मे मुहूर्त्ते इत्यर्थः। स चोक्त आचारमयूखे—"रात्रेरुपान्त्यो मुहूर्त्तो ब्राह्मसंज्ञ" इति। प्रयोगपारिजाते तु—"रात्रेस्तु पश्चिमो यामो मुहूर्त्तो ब्राह्म उच्यत" इत्युक्तः। स तु वेदाभ्यासार्थ इति ज्ञेयम्। प्रबोद्धव्यम्—निद्रा त्याज्येत्यर्थः। अत्र निद्रायां प्रायश्चित्तमुक्तं स्मृतिरत्नावल्याम्—"ब्राह्मे मुहूर्त्ते या निद्रा सा पुण्यक्षयकारिणी। तां करोति द्विजो मोहात्पादकृच्छ्रेण शुध्यती"ति।

---

अखिलैरप्याश्रितैरविशेषेणान्वहमनुष्ठेयं विशेषमादिशति—प्रत्यहं त्वित्यादिभिः षड्भिः श्लोकैः। यद्यपि—ब्राह्ममुहूर्त्तोत्थानशौचदन्तधावनस्नानवासःपरिधानाद्यनुगतमखिलानां, तन्नायमाश्रितानधिकृत्य विधेयो विशेषांशः, नाप्याश्रितैरिति पदं श्रूयते, येनाधिकारिविशेषनिर्देशस्वारस्यानुरोधेनासाधारणं किञ्चिद्विधेयमाश्रयणीयं स्यात्। तथापि स्मृतिषु—"ब्राह्मे

---

अविशेषेणेति। वर्णाश्रमविशेषनियन्धनो विशेषो नास्मिन्निति यावत्। नन्वाश्रितान्प्रत्यविशेषेणानुष्ठेयविशेषादेशपरा अमी श्लोका इत्यवतरणमनुचितमित्याशङ्कते—यद्यपीत्यादिना। समाधत्ते—

ततः—प्रबोधानन्तरम् । कृष्णस्य स्मरणं—ध्यानं नामसङ्कीर्त्तनं च । कृष्णेति तद्भक्तानां तत्स्थानादीनां चोपलक्षणम् । सविस्तरमेतच्छ्रीमद्भागवताष्टमस्कन्धचतुर्थाध्यायादवगन्तव्यम् । विधाय—कृत्वा । शीघ्रोत्थाने मुहूर्त्तपर्यन्तं विलम्बोत्थान एकघटिकामिति ज्ञेयम् । शौचस्य—उत्सर्गशुद्धेर्विधिः कार्यः । तमाह मनुः—"एका लिङ्गे गुदे तिस्रो दश वामकरे मृदः । उभयोः सप्त दातव्यास्तिस्रस्तिस्रस्तु पादयो" रित्यादिना। "गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः । तावन्मृद्वारि चादेयं सर्वासु द्रव्यशुद्धिष्वि"ति च । तत्र वर्ज्या मृद उक्ता धर्मप्रवृत्तौ—"अन्तर्गृहे देवगृहे वल्मीके मूषकस्थले । कृतशौचावशेषा च न ग्राह्याः पञ्च मृत्तिकाः । अलाभे मृद उक्ताया यस्मिन्देशे तु या भवेत् । तया शौचं प्रकुर्वीत द्विजो मृत्तिकयाऽपि च । अनापदि विना मार्गमनिशायामनातुरः । मृत्तिकाशौचहीनस्तु नरो भवति किल्बिषी"ति । अन्योऽत्र विशेषो धर्मशास्त्रादवगन्तव्यः । क्वचिदापद्युदकालाभे त्वाह शातातपः—"अनुदकमूत्रपुरीषकरणे लब्धोदकं सचैलस्नानं महाव्याहृतिहोमो घृतहिरण्योदकपाने चे"ति । अत्र घृतादिपानस्य प्रायश्चित्तार्थत्वाद्भोजननिवृत्तिरिति प्रायश्चित्तमयूखे भास्कराचार्या आहुः ॥ ४९ ॥

उपविश्येति । एकत्र—एकस्मिन्नेव स्थाने । उपविश्य—निपद्य । "न तिष्ठन्न व्रजन्कुर्यान्न स्वपन्दन्तधावन"मिति स्मृतेः । चकारान्मौनी भूत्वा । दन्तानां धावनं—शोधनं दन्तधावनम् । कर्त्तव्यम् । विहितकाष्ठोदकाभ्यामिति शेषः । दन्तधावनकाष्ठं सप्रमाणमुक्तं विष्णुना—"कण्टकिक्षीरवृक्षोत्थं द्वादशाङ्गुलसम्मितम् । कनिष्ठिकाग्रवत्स्थूलं पर्वार्धकृतकूर्चक"मिति । स्कान्दे तु—"एकैकाङ्गुलह्रासेन वर्णेष्वन्येषु कीर्त्तित"मिति वर्णभेदेन तत्प्रमाणभेद उक्तः । मार्कण्डेयोऽत्र

---

मुहूर्त्ते बुध्येत धर्मार्थावनुचिन्तयेत् । ब्राह्मे मुहूर्त्त उत्थाय मानसे मतिमान्नृपः ॥ विबुध्य चिन्तयेद्धर्ममर्थं चास्याविरोधिनम् ।" इति धर्मार्थचिन्तनमात्रस्याप्यभ्यनुज्ञानात् । इह तु "विधाय कृष्णस्मरण"मिति प्रबोधे कृष्णस्मरणस्यैवावश्यकर्त्तव्यत्वनिरूपणात्, पुण्ड्रविशेषविधानात्कृष्णमन्त्रजपतत्पूजाविधानाच्चाऽऽश्रितान्भक्तानधिकृत्यैव विशेषविधिरिति विज्ञायते । न च तथा सति शौचादिविधानमस्वरसमिति वाच्यम् । सामान्यतः प्राप्तांशमनूद्य विशेषस्य विधानात् । तत्र तत्र विधिप्रत्ययसत्त्वेऽपि "तद्विज्ञानार्थं स गुरुमेवाभिगच्छे"दित्यादाविव विधावतात्पर्यात् ।

---

तथापीत्यादिना । विज्ञायत इति । असत्यपि मामकैरिति पदे उक्तैर्लिङ्गैर्गम्यत इति भावः । अनूद्येति । ननु कथमनुवादपरता घटेत, कार्य इति विधिर्हि श्रूयत इत्याशङ्कायामाह—तत्र तत्रेति । तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यादाविवेति । परीक्ष्य लोकान्कर्मचितान्निर्विण्णस्य नास्त्यकृतः कृतेनेति विजा-

विशेषमाह—"प्रक्षाल्य भक्षयेन्मौनी प्रक्षाल्यैव विसर्जये"दिति । "उपवासे तथा श्राद्धे न कुर्याद्दन्तधावन"मित्ययं निषेधः काष्ठविषयः । तथा चाह व्यासः— "अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ तथा । अपां द्वादश गण्डूषैर्मुखशुद्धिर्विधीयते । जिह्वोल्लेखश्च कर्त्तव्यः पर्णोल्लेखनिकादिभि"रिति । सामगानां त्वष्टाङ्गुलं दन्तकाष्ठमित्याह कृत्यचिन्तामणिकारः ।

ततः शुच्यम्बुना–पवित्रोदकेन स्नात्वा । तदुक्तं पाद्मे—"नद्यां नदे वा सरसि तडागे वापिकूपयोः । स्नानं प्रशस्तमुदितमद्भिः शीताभिरन्वह"मिति । पराशरश्चाह—"वृथा ह्युष्णोदकस्नानं वृथा जाप्यमवैदिक"मिति। अशक्तस्य तूष्णोदकेन स्नानमुक्तं षड्त्रिंशन्मते—"आपः स्वभावतो मेध्याः किं पुनर्वह्निपाविताः। अतोऽशक्तस्य शंसन्ति स्नानमुष्णेन वारिणे"ति । क्वचित्तन्निषेधमाह वृद्धमनुः— "मृते जन्मनि सङ्क्रान्तौ श्राद्धे जन्मदिने रवौ । दुष्टस्पर्शे चोपरागे न स्नायादुष्णवारिणे"ति। कात्यायनश्चाह—"प्रातः सङ्क्षेपतः स्नानं मध्याह्ने तु सविस्तर"मिति । मिताक्षरायां शातातपश्चाह—"प्रातःस्नानं विना नित्यं द्विजो भवति सूतकी"ति । स्कान्दे चोक्तम्—"प्रातःस्नानाद्यतोऽर्हः स्याद्दैवे पित्र्ये च कर्मणि । मनःप्रसन्नताहेतुं तत्कुर्यादन्वहं तत" इति ।

ततश्च धौते–शुद्धे पुरुषेणैव प्रक्षालिते ततः शोषिते च । "न च शुद्धं स्त्रिया धौत"मिति धर्मप्रदीपोक्तेः स्त्रीधौतयोरप्यशुद्धत्वात् । तथा चोक्तं कर्मतत्त्वदीपिकायाम्—"ईषद्धौतं स्त्रिया धौतं शूद्रधौतं तथैव च । अधौतं तच्च विज्ञेयं शुष्कं दक्षिणपल्लवैः । अधौतं कारुधौतं च पूर्वेद्युर्धौतमेव च । त्रयमेतदसम्बद्धं सर्वकर्मसु वर्जये"दिति । क्षालने विशेष उक्तः स्मृतिसङ्ग्रहे—"कटिमुक्तं तु कार्पासं कौशेयं भोजनान्तिकम् । मलिनं सकलं वस्त्रं पुनः क्षालनमर्हती"ति ।

---

विधाय कृष्णस्मरणमित्यत्र विधिप्रत्ययाश्रवणेऽप्यपूर्वत्वाद्विधियोगः । न च सन्ध्यादीनां कुतो नानुवाद इति वाच्यम्। तस्य सर्ववर्णसाधारण्याभावेनाऽऽश्रितमात्रमधिकृत्य विधेयैऽशेऽनुवाद्यतयाऽपि तस्यानन्वयात् । एतेनान्वहं कर्त्तव्यनिरूपणप्रकरणे सन्ध्याद्यनिरूपणेन न्यूनतेति शङ्का परास्ता । कर्त्तव्यसामान्यस्येहाविधानात्, उक्तरीत्याऽश्रितानधिकृत्य विशेषस्यैव विधेयतयाऽभिप्रेतत्वात् । प्रकरणान्तरे चाभिहितमेव तु वर्णाश्रमधर्माणामवश्यकर्त्तव्यत्वम्—"स्वव-

---

नतो ब्राह्मणस्य ब्रह्मविज्ञानार्थं गुरोरभिगमनं हि रागतः प्राप्तम्, प्राप्ते तस्मिन्विधिस्तु न घटत इति यथा तत्र विधावतात्पर्यमनुवाद एव, तथेति भावः । एतेनेति पदं व्याचष्टे—कर्तव्यसामान्यस्येहाविधानादित्यादिना । न्यूनताशङ्कां प्रकारान्तरेण वारयति—प्रकरणान्तरे चेत्यादिना । केषाञ्चि-

धाससी–परिधानीयमुत्तरीयं चेति द्वे वस्त्रे परिधार्ये। तत्प्रमाणमुक्तं हरिहरकारिकायाम्—"कर्मण्यं विधिवद्धौतं शोषितं दोषवर्जितम्। सप्ताष्टहस्तप्रमितं तंतुरीयांशविस्तृतम्। सदशं स्वं नवं श्वेतं वर्णोक्तं वा शणादिजम्। अधोवसनमस्यार्धप्रमाणं चोत्तरीयक"मिति। एकवस्त्रधारणस्य धर्मशास्त्रे नग्नप्रकरणे गणितत्वाद्वाससी इति द्विवचनम्। दरिद्रविप्रादीनां द्वितीयवस्त्राभावे तत्स्थाने तृतीयं यज्ञोपवीतं योगपट्टो वा ज्ञेयः। "यज्ञोपवीते द्वे धार्ये श्रौते स्मार्ते च कर्मणि। तृतीयमुत्तरीयार्थं वस्त्राभावे तदिष्यत" इति विश्वामित्रोक्तेः। "उपवीतं बटोरेकं द्वे द्वे चेतरयोः स्मृते। एकमेव यतीनां स्यादिति धर्मो व्यवस्थित" इति देवलोक्तेरेकयज्ञोपवीतिना ब्रह्मचारिणापि द्वितीयवस्त्राभावे द्वितीयं यज्ञोपवीतं धार्यम्, अन्यथा तत्कृतजपादीनामासुरत्वं स्यात्। तदाह कृत्यचिन्तामणौ जातूकर्ण्यः—"नग्नः स्यान्मलवद्वासा नग्नः कौपीनकेवलः। अकच्छोऽनुत्तरीयश्च द्विकच्छोऽवस्त्र एव च। नग्नः काषायवासाः स्यान्नग्नश्चार्द्रपटः स्मृतः। नग्नो द्विगुणवस्त्रः स्यान्नग्नो रक्तपटः स्मृतः। नग्नस्तु स्निग्धवस्त्रः स्यान्नग्नः स्यूतपटस्तथे"ति। अत्र काषायवस्त्रनिषेधो गृहस्थविषयः। "काषायमगृहस्थाना"मिति स्मृतिसङ्ग्रहोक्तेः। स्यूतपटनिषेधश्च त्यागिदरिद्रभिन्नविषयः। तदुक्तं तत्रैव—"जीर्णवस्त्रं नवाभावे धार्यं स्यूतमपि क्वचित्। गृहिणां धनहीनानां विरक्तानां च तद्धित"मिति। "एकवासा जपेद्यस्तु यद्ददाति जुहोति च। तत्सर्वमसुरेन्द्राणां ब्रह्मा भागमकल्पय"दिति च। "एकवस्त्रो न भुञ्जीते"ति जातूकर्ण्य एवाह। आचारतिलके चोक्तम्—"एकद्वित्र्यङ्गुलं पट्टं योगपट्टमथापि वा। अलाभे कुशरज्जुं वा दध्यादस्त्रान्तमेव वे"ति॥ ५०॥

उपविश्येति। ततः–वासःपरिधारणानन्तरम्। शुचि–पवित्रं च तद्भूतलं च तस्मिन्। मृद्गोमयोपलिप्तेऽशुचिद्रव्यस्पर्शरहिते च भूमिभागे देवमन्दिरादौ वा। तदसम्भवे सम्मार्जितप्रोक्षितस्थले। निःक्षिप्त इति शेषः। असङ्कीर्णे शुद्ध

---

र्णाश्रमधर्मो यः स हातव्यो न केनचित्" इत्यनेन प्रागेव। किञ्च—पूर्वश्लोक आपद्धर्माणां प्राणावसादावसर एवाश्रयणीयत्वकथनेन यो यस्य वर्णस्य धर्मो विहितः स चानापद्यनुल्लङ्घनीय इत्यस्यार्थसिद्धत्वाच्च। अत्रैव—"कर्त्तव्यमूर्ध्वपुण्ड्रं चे"ति चकारात्सन्ध्यादेरपि समुच्चयः। यथासम्भवं तदनुवाद इति केचित्। पूर्वमेवोदयाद्रवेः–ब्राह्मे मुहूर्ते इत्यर्थः। तुशब्दस्य

---

न्मतमाह—अत्रैवेत्यादिना। स्त्रीशु तदन्वयासम्भवादुक्तं यथासम्भवं तदनुवाद इति। तुशब्दस्य

आसन उपविश्यैवेत्यन्वयः । "आसनान्तरसंसृष्टं दीर्घं द्वित्रासनोचितम् । स्वस्य देवस्य चैकं यत्तत्सङ्कीर्णं नृपाऽऽसन"मिति विष्णुधर्मोत्तरोक्तं सङ्कीर्णं, तद्भिन्नमसङ्कीर्णं तस्मिन् । स्वस्यैव सुखोपवेशमात्रोचित इत्यर्थः । तथा शुद्धे–अशुचिद्रव्यस्पर्शरहिते । आसने–आस्यते–उपविश्यतेऽस्मिन्नित्यासनं तस्मिन् । कम्बलादिनिर्मिते पीठ इत्यर्थः । अधिकरणे ल्युट् । तदुक्तं पाद्मे शिवगीतायाम्—"सर्वान्कामानवाप्नोति मनुष्यः कम्बलासने। कृष्णाजिने भवेन्मुक्तिस्तपःश्रीर्व्याघ्रचर्मणि। कुशासने भवेज्ज्ञानमारोग्यं पत्रनिर्मिते। प्राङ्मुखोदङ्मुखो वापि जपपूजां समाचरेत्। पाषाणे दुःखमाप्नोति काष्ठे नानाविधान्गदान् । वस्त्रे दारिद्र्यमाप्नोति भूमौ मन्त्रो न सिध्यती"ति । "वस्त्रे श्रियमवाप्नोती"ति क्वचित्पाठः । तत्र प्रत्यहं धौतवस्त्रपरो विधिः, प्रत्यहाधौतमलिनास्नातस्पृष्टवस्त्रपरो निषेध इति व्यवस्थेत्याहानन्तभट्टः । काष्ठासननिषेधस्त्वघटितायज्ञियकाष्ठविषयः । तदुक्तं व्यासेन—"कौशेयं कम्बलं चैव अजिनं पट्टमुत्तमम् । दारुजं पत्रजं कौशमासनं परिकल्पये" दिति । तस्मिन्नासने प्राङ्–प्राच्यां मुखं यस्यां क्रियायां यथा तथा। वा–अथवा । उदङ्–उत्तरस्यां मुखं यस्यां क्रियायां यथा तथा । उपविश्य–निषद्यैव, न तु तिष्ठद्भिः । मदाश्रितैरित्यध्याहारः । उपस्पृश्यं–आचमनं कार्यमित्यर्थः । "उपस्पर्शस्त्वाचमन"मित्यमरः । आचमनविधिमाहाचारमयूखे कण्वः—"आयतं पूर्वतः कृत्वा गोकर्णाकृतिवत्करम् । संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरे" दिति । गोकर्णलक्षणमुक्तं धर्मप्रवृत्तौ जमदग्निना—"अङ्गुष्ठाग्रं समाकुञ्च्य मध्यमामध्यपर्वणि। गोकर्णं तद्धि विज्ञेयं सर्वेष्वाचमनेष्विहे"ति। मुक्ताङ्गुष्ठकनिष्ठेनेति सामगव्यतिरिक्तविषयम् । "होमः प्रतिग्रहो दानं भोजनाचमनानि च। अबहिर्जानु कार्याणि साङ्गुष्ठान्येव सामगै" रिति कृत्यचिन्तामणौ गृह्यसङ्ग्रहवाक्यात् । तच्च द्विजातिभिस्त्रिः कार्यमित्याह तत्रैव याज्ञवल्क्यः—"मापमज्जनमात्रं

---

कृष्णसरणमित्यनेनान्वयः । तेन स्मृत्या सामान्यतः सिद्धेभ्यः प्रबोधादिभ्यः कृष्णसरणेऽधिकारविशेषमपेक्ष्यावश्यकर्तव्यत्वरूपं वैलक्षण्यमाश्रितान्प्रति विशिष्यादेश्यत्वे नियामकं व्यज्यते । विधीयते इति विधिः, शौचरूपो विधिः शौचविधिः, यथाविधि शौचं विधायेत्येतत् । शौचस्य विधिर्वा, येन विहितेन शौचं स्यात्तं विधायेत्यर्थः ।

---

यथाश्रवणमन्वयवैयर्थ्यं पर्यालोच्याह—तुशब्दस्य कृष्णसरणमित्यनेनान्वय इति। एवं सति तुशब्दस्यार्थवत्तां दर्शयति—तेनेति । शौचमित्येतावदनुक्त्वा शौचविधिरिति निर्देशतो निष्पन्नमाशयमाह—यथाविधि शौचं विधायेत्येतदिति ।

तु सङ्गृह्य त्रिः पिबेदप" इति। तच्च वामहस्तस्पर्शपूर्वकमेव कार्यमित्युक्तं यमेन—"तावन्नोपस्पृशेत्प्राज्ञो यावद्वामं न संस्पृशे"दिति। दिङ्नियमोऽपि याज्ञवल्क्येनोक्तः—"अन्तर्जानुः शुचौ देश उपविष्ट उदङ्मुखः। प्राग्वा ब्राह्मेण तीर्थेन द्विजो नित्यमुपस्पृशे"दिति। "अन्तर्जानुः—जानुनोर्मध्ये हस्तौ कृत्वा दक्षिणेन हस्तेन। नित्यमित्याश्रमान्तरगतोऽपी"ति मिताक्षरा। ब्राह्मतीर्थं स एवाह—"कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमा"दिति। शूद्रस्य तु सकृदेवाचमनमुक्तं शूद्रकमलाकरे—"शुचौ देशे प्राङ्मुख उदङ्मुखो वोपविश्यान्तर्जानुकरं गोकर्णाकृतिं कृत्वा शुद्धाभिरफेनाभिरद्भिः सकृदाचामेत्। त्रिर्वेति स्मृतिकौमुद्याम्। ओष्ठमात्रं स्पृशेदिति गौडा" इति॥ ५१॥

ततः किं कर्त्तव्यमित्यत आह—कर्त्तव्यमिति। पुम्भिः—पुरुषैरेव, न तु स्त्रीभिः। चन्द्रकेण—बिन्दुना सहितं सचन्द्रकम्। ऊर्ध्वपुण्ड्रं—प्रागुक्तद्रव्येण ललाटादौ दण्डाकाररेखं तिलकम्। कर्त्तव्यम्। चकारात्तदनन्तरमाचमनं च कर्त्तव्यम्। ऊर्ध्वपुण्ड्रधारणविधिस्तु वासुदेवोपनिषदि—"ॐ नमस्कृत्य भगवान्नारदः सर्वेश्वरं वासुदेवं पप्रच्छ भगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादियुतं मे ब्रूही"त्यादिनोक्तस्तत एव वेदितव्यः। ऊर्ध्वपुण्ड्राणि च गृहस्थैः साधुभिश्च ललाटे हृदि बाह्वोश्चेति चत्वारि वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धनाममन्त्रैर्धार्याणीत्युक्तं दीक्षाविधौ। ब्रह्मचारिभिस्तु पञ्च धार्याणि। ब्रह्मचारी वानप्रस्थो वा ललाटकण्ठहृदयबाहुमूलेषु विष्णुगायत्र्या कृष्णादिपञ्चनामभिर्वा धारयेदित्यूर्ध्वपुण्ड्रवादे वासुदेवोपनिषदुक्तेः। आचारमाधवे ब्रह्माण्डे वर्णाङ्गुलिभेदेनोर्ध्वपुण्ड्रफलभेदोऽप्युक्तः—"श्यामं शान्तिकरं प्रोक्तं रक्तं वश्यकरं भवेत्। श्रीकरं पीतमित्याहुर्वैष्णवं श्वेतमुच्यते। अङ्गुष्ठः पुष्टिदः प्रोक्तो मध्यमायुष्करी भवेत्। अनामिकान्नदा नित्यं मुक्तिदा च

---

उपविश्यैव, "न तिष्ठन्न व्रजन्कुर्यान्न स्वपन्दन्तधावनम्" इति स्मृतेः। शुच्यम्बुना—शुद्धेन जलेन। शुद्धिरिह दृष्टविधयाऽदृष्टविधयाऽपि विवक्षिता। नहि कृमिकर्दमादिदूषितेन स्नायात्, न वा निर्मलेनापि चण्डालादिदूषितेन। स्नानमात्रेण पापापनोदकत्वरूपं पावनत्वमपि शुचिशब्देन विवक्षितम्। एतेन तीर्थोदकमुक्तं भवति। तीर्थता च महात्मनां चरणरजः-

---

उपविश्यैव दन्तधावनं कर्त्तव्यमित्यत्र प्रमाणं प्रदर्शयति—न तिष्ठन्नित्यादिना। अम्बुनि शुचित्वं न केवलं दृष्टविधया न केवलमदृष्टविधया किन्तूभयथापि विवक्षितमिति व्याचष्टे—शुद्धिरिहेति। तथाविवक्षणे निमित्तमाह—नहीति। इह विवक्षितमदृष्टविधया शुचित्वं च चण्डालाद्यदूषितत्वमात्रं न, किन्त्वन्यदपीत्याह—स्नानमात्रेणेत्यादिना। ननु तथाविधं तीर्थोदकं न

प्रदेशिनी। एतैरङ्गुलिभेदैस्तु तत्कुर्यान्न नखैः स्पृशे"दिति। आचारमयूखे तल्लक्षणमुक्तम्—"ऊर्ध्वपुण्ड्रमृजु सौम्यं कनिष्ठाङ्गुलिवत्स्मृतम्। नासादिं केशपर्यन्तं प्रयत्नाद्धारयेद्विज"इति। "सान्तरालं प्रकुर्वन्ति पुण्ड्रं हरिपदाकृति" इति च। पाद्मे चोक्तम्—"ऊर्ध्वपुण्ड्रमृजु सौम्यं सुपार्श्वं सुमनोहरम्। दण्डाकारं सुशोभाढ्यं मध्यच्छिद्रं प्रकल्पये"दिति। तत्परिणाहस्त्वङ्गुलिकृतत्वादङ्गुलेरेव। तत्रैव—"महाभागवतः शुद्धः पुण्ड्रं हरिपदाकृति। दण्डाकारं तु वा देवि! धारयेदूर्ध्वपुण्ड्रक"मिति विकल्प उक्तः। उपरि किञ्चिद्विस्तीर्णत्वे पदाकृति ज्ञेयं, समत्वे तु दण्डाकृति। निबन्धे तु स्थानविशेष आकारविशेषो नियमितः—"दण्डाकारं ललाटे स्यात्पद्माकारं तु वक्षसि। वेणुपत्रनिभं बाह्वोरन्यद्दीपाकृति स्मृत"मिति। एतच्चादर्शादि दृष्ट्वैव कार्यम्—"वीक्ष्यादर्शे जले वापि यो विदध्यात्प्रयत्नतः। ऊर्ध्वपुण्ड्रं महाभागः स याति परमां गति"मिति स्कान्दमार्गशीर्षमाहात्म्यवाक्यात्। यस्तु—"न पादुकास्थो नादर्शे न जले चावलोकयन्। न प्रावृतशिराः कुर्यात्तिलकं धर्मसाधन"मिति धर्मप्रवृत्तौ विष्णुवाक्य आदर्शादिनिषेधः, स पुण्ड्रान्तरपरः। मध्यच्छिद्रकरणे विशेष उक्तः पाद्मे—"आरभ्य नासिकामूलं ललाटे विलिखेन्मृदा। समारभ्य भ्रुवोर्मूलमन्तरालं प्रकल्पये"दिति। मृदेत्युपलक्षणम्, द्रव्यान्तरस्यापि तत्रैवोक्तेः। अन्यथाकरणे तु तत्रैव निन्दा स्मर्यते—"वर्त्तुलं तिर्यगच्छिद्रं ह्रस्वं दीर्घं ततं तनु। वक्रं विरूपं वक्राग्रं छिन्नमूलं पदच्युतम्। अशुभ्रं रूक्षमारक्तं तथानङ्गुलिकल्पितम्। विगन्धमवसह्यं च पुण्ड्रमाहुरनर्थक"मिति। दीर्घमिति नासाग्रादारभ्य कृतं, यथा चेदिदेश्यानाम्। ततं–बहुपरिणाहम्। तनु–अल्पपरिणाहम्। रूक्षं–जलेन विनैव कृतम्। अवसह्यं–असह्यम्। शेषं स्फुटम्। विस्तरस्तूर्ध्वपुण्ड्रधारणवादादिभ्योऽवगन्तव्यः।

---

संसर्गेण। क्वचिदाजानसिद्धा च। गुणविशेषालाभेऽपि दोषाभावस्त्ववश्यमपेक्ष्यते। वाससी–अधोवसनमुत्तरीयं च। "होमदेवार्चनाद्यासु क्रियासु पठने तथा। नैकवस्त्रः प्रवर्त्तेत द्विजो नाचमने जपे॥ एकवस्त्रो न भुञ्जीत न कुर्याद्देवतार्चनम्। विकच्छोऽनुत्तरीयश्च नग्नश्चावस्त्र एव च॥ श्रौतं स्मार्त्तं तथा कर्म न नग्नश्चिन्तयेदपि॥" इत्यादिवचनात्। अत्र विशेषः—"नोत्तरीयमधः कुर्यान्नोपर्यधस्थमम्बरम्। नान्तर्वासो विना जातु निवसेद्वसनं बुधः॥" इति व्यासवचनादवगन्तव्यः।

---

सर्वत्र सुलभं, यत् शुच्यम्बुना स्नानं केषाञ्चिद्दुर्घटमापतेदित्याशङ्कायामाह—गुणविशेषालाभेऽपीति। अधोवसनमुत्तरीयं च धार्यमित्यत्र प्रमाणं प्रदर्शयति—होमेत्यादिना।

स्त्रीणां विशेषमाह—कार्य इति । सधवनारीभिः—सभर्तृकाभिः स्त्रीभिः । भाले—ललाटमध्ये । कुङ्कुमेन चन्द्रकः कार्यः, न तूर्ध्वपुण्ड्रम् । "ललाटे कुङ्कुमं नासाभूषणं करकङ्कणम् । कण्ठसूत्रं च सधवा दूरयेन्न कदाचने"ति भृगूक्तेः ॥ ५२ ॥

पुण्ड्रमिति । मृतो नाथः—पतिर्यस्यास्तया, विधवया नार्या । भाले । पुण्ड्रं—ऊर्ध्वपुण्ड्रम् । चन्द्रकः—कुङ्कुमादिविन्दुश्च । वाशब्दश्चार्थे । न कार्यः—न धार्यः । पुण्ड्रचन्द्रकयोर्भूषणत्वात्तस्याश्च तद्धारणनिषेधात् । तमाह भृगुः—"विधवा धारयेन्नैव सूक्ष्मवस्त्रमलङ्कृति" मिति ।

ततः—पुण्ड्रधारणानन्तरम् । अखिलैः—पुरुषैः स्त्रीभिश्च । मनसा—मनःकल्पितैर्महोपचारैरित्यर्थः । कृष्णस्य—यथादृष्टस्य यथाश्रुतस्य वा हृदये ध्यातस्य श्रीराधाकृष्णस्य पूजनं कार्यम् । मानसमिति पाठे पूजनस्य विशेषणम् । सर्वत्र पूजाविधौ ध्यानस्य प्राथम्यादादौ ध्यानं कृत्वा ततः पूजनं कर्त्तव्यमित्यर्थः ।

---

शुचिभूतले—गोमयाद्यनुलिप्ते परिशुद्धे प्रदेशे । असङ्कीर्णे—असाधारणे, बहुजनोपवेशानर्ह इत्यर्थः, पृथक्परिकल्पिते इति यावत् । शुद्ध आसने—कौशेयकम्बलाजिनादौ यत्र कचित् । तथाच व्यासवचनम्—"कौशेयं कम्बलं चैव" इत्यादि । प्राङ्मुख उदङ्मुखो वोपविश्य, आचम्य, ऊर्ध्वपुण्ड्रं धारयेत् ।

इदं चोर्ध्वपुण्ड्रधारणं पुंसामेवेत्याह—पुम्भिरिति । यद्यप्यूर्ध्वपुण्ड्रधारणं "कृष्णदीक्षां गुरोः प्राप्ये"ति श्लोके विहितं नाम । तथापि वक्ष्यमाणकृष्णार्चनेऽवश्यापेक्षितत्वं दृढीकर्त्तुमिह पुनरनुवादः । ननु पुंसामिव स्त्रीणामपि वक्ष्यमाणजपाद्यङ्गतया पुण्ड्रमपेक्षितं स्यादिति शङ्कायामाह—कार्यः सधवनारीभिरित्यादि । अयं भावः—स्त्रीणां न तदङ्गतया पुण्ड्रापेक्षा, ताः प्रति तस्य कचिदप्यविधानात् । स्त्रीणां सधवानाम्—"ललाटे कुङ्कुमं नासाभूषणं करकङ्कणम् । कण्ठसूत्रं च सधवा दूरयेन्न कदाचन ॥" इति कुङ्कुमस्य विधानात् । तदेव कुङ्कुमं ताभिर्ध्रियमाणं वर्त्तुलतया धार्यं न तिर्यगित्ययं विशेष एव वक्ष्यमाणकृष्णपूजादिष्वङ्गतयाऽपेक्ष्यते, तिर्यगाकारस्य शैवचिह्नत्वात् ।

---

शुचिभूतल इति । भूतले शुचित्वं दृष्टविधयाऽदृष्टविधया च विवक्षितम् । गोमयाद्यनुलिप्त इत्यनेन दृष्टविधया शुचित्वमुक्तम् । परिशुद्ध इत्यनेन चादृष्टविधया । तच्च चण्डालादिभिरदूषितत्वं स्वतः पावनत्वं चेति बोध्यम् ।

ननु कर्त्तव्यमूर्ध्वपुण्ड्रमिति पुनरुक्तं प्रागेवास्य विधानादित्याशङ्कते—यद्यपीत्यादिना । समाधत्ते—तथापीति ।

ध्याने विशेष उक्तो भगवता—"स्त्रीणां स्त्रीसङ्गिनां सङ्गं त्यक्त्वा दूरत आत्मवान्। क्षेमे विविक्त आसीनश्चिन्तयन्मामतन्द्रित"इति।

अत्रोर्ध्वपुण्ड्रधारणानन्तरं ब्राह्मणादिभिः सन्ध्यावन्दनं विधायैव श्रीकृष्णस्योभयविधार्चनं कार्यमिति वक्ष्यमाणविशेषधर्मानुरोधादत्र सामान्यप्रकरणत्वादनुक्तमप्यनुसन्धेयम्। तथाच द्विजानां सर्वाश्रमसाधारणधर्म उक्तो भगवतैव—"शौचमाचमनं स्नानं सन्ध्योपासनमार्जवम्। तीर्थसेवा जपोऽस्पृश्याभक्ष्यासम्भाष्यवर्जनम्। सर्वाश्रमप्रयुक्तोऽयं नियमः कुलनन्दन!। मद्भावः सर्वभूतेषु मनोवाक्कायसंयम" इति ॥ ५३ ॥

**प्रणम्येति** । ततः—मानसपूजनानन्तरम् । राधाकृष्णस्य—स्वेष्टदेवस्य

---

विधवानां तु कुङ्कुमस्यैवाप्रसक्तेर्नाकारविशेषनियमस्य प्रसङ्गोऽपीति भावः। "पुण्ड्रं वा चन्द्रको भाले न कार्यो मृतनाथया" ऊर्ध्वपुण्ड्रस्य स्त्रीमात्रेऽप्रसक्त्या कुङ्कुममात्रस्य विधवास्वप्रसक्त्या ताभिः शून्यललाटाभिरेव भाव्यमित्यर्थः। पुम्भिः स्त्रीभिर्वा ब्राह्मणैरन्यैर्वाऽखिलैरप्यसदाश्रितैरन्वहं विधाय स्नानादिकमनुल्लङ्घितस्वस्वमर्यादैरवश्यमेव कृष्णपूजनं विधेयम्। तत्र प्रथमं विधाय मानसाराधनं पश्चाद्बाह्याराधनं विधेयमित्याह—**मनसेत्यादि**। मनसैव निध्यासमानस्य कृष्णस्य मनसैव कल्पितैरर्घ्यादिभिरुपचारैराराधनं कार्यमित्यर्थः।

एवं मानसपूजां परिसमाप्य तमेव मनसि निध्यातं बहिरर्चायां सन्निहितं विभाव्य सन्निहित इव स्वामिनि ससम्भ्रममुत्थाय प्रणिपत्य धरातले दण्डवद्बाह्यैरुपचारैस्तदाराधनं कार्यमित्याह—**प्रणम्येति**। अनेन बाह्याराधनोपक्रम उक्तः। राधाकृष्णस्य लेख्यार्चामादरात्प्रणम्य कृष्णस्य पूजनं कार्यमिति पूर्वेणान्वयः। लेख्यार्चां प्रणम्य पूजनं कार्यमित्यत इदं पूजनं बाह्यमित्युक्तं भवति। अत्र लेख्यार्चोक्तिर्मन्त्रविशेषनिरपेक्षं सर्वसाधारण्येन पूजासौकर्याय। लेख्यार्चायां स्नानानुलेपनाद्युपचारो भावमात्रतो न बाह्यतः। अथ पूजावसान आचार्येण प्रदत्तः श्रीकृष्णमन्त्रोऽवश्यं जप्य इत्याह—**शक्त्येति**। "यज्ञानां जपयज्ञोऽस्मि" इति जपय-

---

पुम्भिरित्यादिनाऽसदाश्रितैरित्यन्तेनाखिलैरित्येतद्व्याख्यातम्। विधाय स्नानादिकमित्यनेन तत इत्येतद्व्याख्यातम्। पाञ्चरात्रे भगवद्यागो मानसो बाह्यश्चेति द्वेधा वर्णितस्तमिमं विभागमभिप्रेत्य व्याचष्टे—**तत्रेति**।

ननु प्रणामोक्तिमात्रेण बाह्ययागविधानपरता कथं सङ्गच्छत इत्यत आह—**अनेनेति**। ननूपक्रमोक्तिमात्रेण कथं तद्विधानसिद्धिरित्यतोऽन्वयं प्रदर्शयति—**राधाकृष्णस्येत्यादिना**। लेख्यार्चाग्रहणे विशेषमाह—**अत्रेत्यादिना**। अथेति स्वोक्तमेव व्याचष्टे—**पूजावसान इति**। पूजायामवसितायामित्युक्त्या पूजावसान इत्युक्त्या मन्त्रजपस्य पूजायामन्तर्भावो व्यज्यते। तेन तन्मन्त्रजपं विना कृतापि पूजा न परिपूर्णा भवेदिति भावः फलितः। अवश्यं जप्यत्वे हेतुमाह—**यज्ञानामित्यादिना**। पञ्चम्यन्तपदुष्टयस्य जप्यमित्यनेन पूर्वेणान्वयः। तथात्वे—सकलफलसाधनत्वे सर्वत उत्तमत्वे मुमुक्षूपादेयत्वे चेत्यर्थः।

भगवतः लेख्यार्चा—लिख्यत इति लेख्या—चित्रमयी सा चासावर्चा—प्रतिमा च तां, स्वगुरुदत्तां चित्रप्रतिमाम् । "अर्चा पूजाप्रतिमयो"रिति विश्वः । आदरात् प्रणम्य—प्रकर्षेण नत्वा, साष्टाङ्गं नमस्कृत्य । साष्टाङ्गनमस्कारस्तु—"पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा । मनसा वचसा चेति प्रमाणोऽष्टाङ्ग ईरित" इत्युक्तलक्षणः । स्त्रीणां तु पञ्चाङ्गः प्रणामो विहितः—"कराभ्यां शिरसा दृष्ट्या मनसा वचसा च स" इति । अत्र चित्रार्चायाः स्नानानुलेपनाद्यनौचित्यात्प्रणाम एव सकलपूजोपचारस्थाने विहितः । धात्वादिप्रतिमायास्तु यथामिलितोपचारैर्यथाधिकारं समन्त्रकमेव पूजनं कर्त्तव्यमित्यवसेयम् । शक्त्या—स्वशक्त्यनुसारेण यथावकाशम् । तन्मन्त्रं—तस्य श्रीकृष्णस्य मन्त्रं—अष्टाक्षरं शरणमन्त्रम् । जपित्वा । जप्त्वाथेति पाठे त्वागमशास्त्रस्यानित्यत्वादिडभावः । व्यावहारिकं—व्यवहारेण निर्वृत्तं व्यावहारिकम् । "निर्वृत्तेऽक्षद्यूतादिभ्य" इति ठक् । स्वाधिकारानुसारिव्यवहारेण स्वनिर्वाहोपयोगिपदार्थार्जनं कर्त्तव्यम् ॥ ४९ ॥ ५४ ॥

---

न्त्रस्य श्रेष्ठत्ववर्णनात्, तत्रापि कृष्णमन्त्रस्य सफलफलसाधनत्वात्सर्वत उत्तमत्वान्मुमुक्षूपादेयत्वाच्च । "कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः । कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम् ॥ ये च वेदविदो विप्रा ये चाध्यात्मविदो जनाः । ते वदन्ति महात्मानं कृष्णं धर्मं सनातनम् ॥ पवित्राणां हि गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ॥" इत्यादिना कृष्णस्य सर्वतः परतरत्वेन निरूपणात्तन्मन्त्रस्य तथात्वे किमु वक्तव्यम् । यद्यपि जपित्वेत्यत्र न विधिः श्रूयते, तथाप्यप्राप्तत्वात् व्यावहारिकस्य कर्त्तव्यतायां विध्यनपेक्षणाच्च जप एव विधिः पर्यवस्यति । जपेत्ततो व्यावहारिकं कुर्यादित्यर्थः । हुतायां वपायां दीक्षितस्यान्नमश्नीयादित्यत्रेव कर्त्तव्यं व्यावहारिकमित्यत्र विधिप्रत्ययस्याभ्यनुज्ञामात्रे तात्पर्यम् । देहधारणोपयोगिद्रव्यार्जनादौ धर्माविरोध्यर्थकामयोश्च प्रवृत्तिर्व्यावहारिकशब्देनोच्यते ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

---

ननु जपित्वेत्युक्तेरनुवाद एव जपे, न तु विधिरिति शङ्कायामाह—यद्यपीत्यादिना । अभ्यनुज्ञामात्रे तात्पर्यमिति । अन्नाशनस्य रागप्राप्तत्वात्तत्र न विधिः, अपि तु वपाहोमानन्तरदीक्षितान्नाशनेऽभ्यनुज्ञामात्रं यथा प्रतीयते, तथा कर्त्तव्यमिति विधिप्रत्ययश्रवणे सत्यप्यभ्यनुज्ञामात्रं प्रतीयत इति भावः । व्यवहारस्य लौकिकक्रियामात्ररूपत्वेन तत्र चेदभ्यनुज्ञा दुर्वृत्तेऽप्यभ्यनुज्ञा प्राप्ता स्यादित्यतस्तद्व्यावृत्तये व्याचष्टे—देहेति ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥

**ये त्वम्बरीषवद्भक्ताः स्युरिहात्मनिवेदिनः।**
**तैश्च मानसपूजान्तं कार्यमुक्तक्रमेण वै॥ ५५॥**

अत्र शिक्षणीयाः स्वशिष्या द्विविधाः—वैष्णवापरपर्यायाः सत्सङ्गिनः, वैष्णवोत्तमापरपर्याया आत्मनिवेदिनश्चेति। तत्राद्यानां सामान्यत आह्निकमुक्तम्। द्वितीयानां ततो विशेषमाह—ये त्विति पङ्क्तिः। इह—अस्मिन् लोके, एषु भक्तेषु मध्ये इति वा। ये तु। अम्बरीषवत्—सूर्यवंशोत्पन्नाम्बरीषाख्यनृपतिना तुल्यम्। आत्मानं निवेदयन्तीत्यात्मनिवेदिनः—भगवदधीनीकृतात्मानः। भगवदिच्छानुकूलमेव भगवत्सम्बन्धिनीरेव वा सर्वाः क्रियाः कुर्वाणा न तु स्वेच्छानुकूलवर्त्तना इत्यर्थः। अम्बरीषनृपतिवर्त्तनमुक्तं श्रीभागवतनवमस्कन्धे—"अम्बरीषो महाभागः सप्तद्वीपवतीं महीम्। अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि॥ मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम्। विद्वान्विभवनिर्वाणं तमो विशति यत्पुमान्॥ वासुदेवे भगवति तद्भक्तेषु च साधुषु। प्राप्तो भावं परं विश्वं येनेदं लोष्टवत्स्मृतम्॥ स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठ-

---

ये पुनराश्रित्यापि भगवन्तं सुकृतलाघवेन न त्वरन्ते निःश्रेयससाधने, तानपि कथञ्चिदाश्रितकोटावाकलय्यानुजिघृक्षुर्भगवान् श्रीकृष्णभक्त्यङ्कुरानुवृत्तय आदिश्य सेवाविशेषमभ्यनुजानाति स कर्त्तव्यं व्यावहारिकमिति। अथ ये पुनस्त्वरमाणाः परमपुरुषार्थस्य परस्य ब्रह्मणः पुरुषोत्तमस्य लाभे, तैस्तु विनिवर्त्तितव्यं व्यावहारिकतः, वर्त्तितव्यं च तत्सेवापरैराप्रबोधादास्वापं सदा प्रेम्णा पुष्पोपहरणमालाग्रथननामसङ्कीर्त्तनस्तुतिनमस्कारप्रदक्षिणादिनानाप्रकारैः। अन्यथा तल्लाभे हेतुभूतस्य निरतिशयप्रेमगर्भस्मृत्यभ्यासातिशयसम्पाद्यस्य

---

वृत्तवर्त्तिष्यमाणयोः श्लोकयोराशयानुवर्णनपूर्वकं सङ्गतिमाह—ये पुनरिति। भगवन्तमिति। अत्र भगवच्छब्देनादेष्टा श्रीस्वामिनारायणभगवान् विवक्षितः। आश्रित्यापीत्यपिशब्देन परमपुरुषार्थप्रदानायैव यस्य भगवतोऽवतरणं तं प्राप्यापीति व्यज्यते। सुकृतलाघवेनेति। सुकृतलेशेनेत्यर्थः। न त्वरन्ते निःश्रेयससाधन इति। न भक्तियोगनिष्ठायां प्रवर्त्तन्त इति यावत्। तानपि कथञ्चिदनुजिघृक्षुरित्यन्वयः। इदानीं भक्तियोगनिष्ठाया असम्भवेऽपि भक्त्यङ्कुरसंरक्षणमात्रेण कालान्तरे तत्प्रापणसङ्कल्प इह कथञ्चिदनुजिघृक्षा। कथञ्चिदनुजिघृक्षायां हेतुमाह—आश्रितकोटावाकलय्येति। आ—समन्तात् श्रिता आश्रितास्तेषां कोटावित्यर्थः। अर्थपरा वा कामपरा वा स्युः स्वयं तान्सर्वप्रकारेणात्मानं श्रितानाकलय्येति यावत्। परमपुरुषार्थस्य परस्य ब्रह्मण इति। परमपुरुषार्थता च परस्य ब्रह्मणो निरवधिकातिशयानन्दरूपत्वादुपपद्यते। तत्तु समन्वयादिति सूत्रेणैतत्समार्थितम्। असाध्ये तस्मिंस्त्वरत्वं कथमित्यादिशङ्कापरिहारस्तु तद्भाष्यतोऽवगन्तव्यः। ननु यदि निवर्त्तितव्यमेव व्यावहा-

गुणानुवर्णने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् । घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥ एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे । सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ ईजेऽश्वमेधैरधियज्ञमीश्वरं महाविभूत्योपचिताङ्गदक्षिणैः ॥ ततैर्वसिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः । तुल्यरूपाश्चानिमिषा

---

भक्तियोगस्य कथञ्चिदप्यसम्भवात् । यानि पुनर्लौकिकानि देहयात्रशेषभूतानि तान्यपि परमपुरुषाराधनशेषतयैवास्य प्रसक्तानीति न व्यावहारिकाणि । यान्यपि वर्णादिविभागतोऽनुवृत्तानि तान्यपि स्वाम्याज्ञानुपालनरूपाणि दासवृत्तिसमुचितानीति तदाराधनाकारेणैव प्रसक्तानि।

अम्बरीषो हि पुराऽऽत्मानमात्मीयमखिलं तच्छेषभूतमवधृत्य सर्वेन्द्रियैः सर्वदा तमेव सेवमानः परां भक्तिमवाप । तथाच भागवते—"स वै मनः कृष्णपदारविन्दयोर्वचांसि वैकुण्ठगुणानुवर्णने । करौ हरेर्मन्दिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ मुकुन्दलिङ्गालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेऽङ्गसङ्गमम् । घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवन्दने । एवं सदा कर्मकलापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ॥ सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥ स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ।" इति । तस्मात्त इव ये भक्तियोगे प्रवर्त्तन्ते—"कृष्णसेवापरैः प्रीत्या भवितव्यं च तैः सदा ।" इतीममर्थविशेषमादिशंस्तानुक्तेषु मानसपूजान्तस्यैतत्साधारण्यमाह—ये त्विति । तुशब्दादुक्तेभ्यः सुकृतगौरवं वैलक्षण्यममीषां व्यज्यते । सुकृतगौरवेण हि भगवदेकपरायणता भगवत्प्राप्तौ त्वराविशेषश्च भवति । आत्मनिवेदिनः-आत्मानं शेषभूतं निवेदयन्ति । अपहृतं द्रव्यं स्वामिनः सन्निधाविव भगवतः

---

रिक्तस्तदा देहयात्रा न सिद्ध्येदित्याशङ्कायामाह—यानि पुनरिति । परमपुरुषाराधनशेषतयैवास्य प्रसक्तानीतीति । यागे हुतशेषभक्षणस्येव भगवद्यागे भगवन्निवेदितावशिष्टप्राशनस्य प्राप्ततया भगवदाराधनशेषत्वैव देहयात्रादेर्न व्यावहारिकतेति भावः । नन्वस्तु तेषां तथात्वं, वर्णाश्रमधर्माणां तु न तथात्वमिति शङ्कायामाह—यान्यपीति । तदाराधनाकारेणैवेति । अस्याधिकारिणो नित्यनैमित्तिकान्यपि कर्माणि नेतरेषामिव फलतः स्वरूपतो वा प्राप्तानि, परं त्ववगतपरमात्मदासभावस्यास्य स्वाम्याज्ञानुवर्त्तनरूपाण्येतानि, स्वामिमनःप्रीणनरूपतया प्राप्तानीत्याराधनरूपाण्येवेति भावः ।

इममर्थविशेषमादिशन्निति । "ये त्वम्बरीषव"दित्यादिश्लोकानां न स्वतन्त्रार्थविशेषावबोधनपरता, किन्तु "कृष्णसेवापरैः प्रीत्या भवितव्यं च तैः सदे"त्यत्रैव पर्यवसानमिति भावः । सुकृतगौरवं वैलक्षण्यमिति । सुकृतगौरवरूपं वैलक्षण्यमित्यर्थः । आत्मनिवेदिन इत्येतद्व्याचष्टे—आत्मानमिति । भावमाह—अपहृतमिति । ननु किमिदमुच्यते-अपहृतं द्रव्यं स्वामिनः सन्निधाविवेति, नहि कस्यचिद्-

व्यदृश्यन्त सुवाससः ॥ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः। शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम्॥ समर्धयन्ति यत्कामाः स्वाराज्यपरिभाविताः। दुर्लभा नापि सिद्धानां मुकुन्दं हृदि पश्यतः॥ स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः। स्वधर्मेण हरिं प्रीणन्सङ्गान्सर्वान् शनैर्जहौ ॥ गृहेषु दारेषु सुतेषु बन्धुषु द्विपोत्तमस्यन्दनवाजिपत्तिषु। अक्षय्यरत्नाभरणायुधादिष्वनन्तकोशेष्वकरोदसन्मति" मिति। भक्ताः–विष्णुभक्ताः। स्युः–भवेयुः। तुशब्देन तेषां दुर्लभत्वमुक्तम्।

---

शेषिणः सन्निधौ प्रत्यर्पयन्तीत्यात्मनिवेदिन उच्यन्ते। ये ह्यवधीर्य परमात्मशेषतामात्मनः स्वतन्त्रोऽहं ज्ञाता कर्त्ता भोक्तेत्येवं मन्वाना यक्ष्ये दास्यामि मोदिष्य इति प्रयतन्ते स्वप्रीणनायैव, ते हि चोरा एव। यत्परार्थमात्मद्रव्यं स्वार्थे कल्पयन्ति। "किं वा तैर्न कृतं पापं चोरैरात्मापहारिभिः"। ये पुनः समुन्मिषितसत्त्वाः स्वरूपमात्मनोऽवगच्छन्ति यथाऽवस्थितम्, सपदि समर्पयन्त्येव त आत्मद्रव्यं शेषिणः परस्य सन्निधौ। नात्र कटकमुकुटादिवद्धस्तेनोपनीय स्वामिनः सन्निधौ स्थाप्यं किञ्चित्। तदात्मनः प्रत्यर्पणं नाम भगवच्छेषत्वानुसन्धानपूर्वकं तदविरोधेन वर्त्तनमेव। तथा चाम्बरीषवदात्मनिवेदिन इत्यनेनाम्बरीषवदवधृतभगवच्छेषतैकवेषात्मस्वरूपा इत्युक्तं भवति। भक्ताः–भजमाना इत्यर्थः। आद्यकर्मणि क्तः। भक्तियोगे प्रवृत्ता इत्येतत्। इह–जगति आश्रितकोटौ वा। "तैश्च मानसपूजान्तं कार्यमुक्तक्रमेण वै"। अम्बरीषवदवधृत्यात्मानं भगवदेकशेषं भक्तियोगे प्रवृत्तैः परिहृत्य व्यावहारिकमन्यन्मानसपूजान्तं प्राग्विहितमनुष्ठेयमेव।

अयं भावः—भक्तियोगो हि नियमितयोगकाले निष्पन्देन मनसा सप्रणयमनुचिन्तनमवलोकनाकारं भगवतः। तदेव चिरानुवृत्तं परिपाकदशापन्नं भगवत्प्राप्तावव्यवहितसाधनमिष्यते। स चायं साक्षात्कारपर्यन्तो भक्तियोगो मनसि तस्मिन्ननिष्पन्दे न सिध्येत्। तदर्थं

---

र्व्यं केनचित् हृतमित्याशङ्कायामाह—ये ह्यवधीर्येति। शेषशेषिभावश्च "पतिं विश्वस्ये"ति श्रुत्या, "यस्यात्मा शरीर"मिति श्रुत्या, "इतस्त्वन्यां प्रकृतिं विद्धि मे परा"मिति गीतावचनेन च तत्र तत्र प्रतिपादितः। किं वा तैर्न कृतं पापमिति। देहात्मभ्रम एवानर्थद इति न भ्रमितव्यम्, देहादिव्यतिरिक्तात्मविज्ञाने सत्यपि यावत्परमात्मशेषताप्रतिपत्तिर्न तावदनर्थपरम्परैव, देहातिरिक्तात्मविज्ञानमात्रेण न कश्चिद्विशेषः, यतस्स्वतन्त्रात्मभ्रमेण ज्ञाता कर्त्ताहं देहाद्विलक्षणः स्वर्गसुखाय प्रभवामीति स्वप्रीणनायैव यतेरन्निति भावः। समर्पयन्त्येव त इति। समर्पणं व्याचष्टे—नात्रेत्यादिना। तदविरोधेनेति। शेषत्वाविरोधेनेत्यर्थः। भक्तशब्दस्य निष्पन्नभक्तियोगपरत्व इह क्रियमाण उपदेशो न घटेत, तेषामेतदनपेक्षणादत आह—भजमाना इत्यर्थ इति। ननु क्तप्रत्ययस्य कथमेतदर्थतेत्यत्राह—आद्येति। तात्पर्यमाह—भक्तियोगे प्रवृत्ता इत्येतदिति।

ननु भक्तियोगे प्रवृत्तान्प्रति मानसपूजादिविधानं किमर्थमित्याशङ्कायामाह—अयं भाव इत्यादिना। तदेवेति। तत्–अवलोकनाकारमनुचिन्तनमित्यर्थः। स चायमिति। चिरानुवृत्त इत्यर्थः। मनसि तस्मिन्ननिष्पन्द इति। तस्मिन्–उक्तसाक्षात्कारसाधन इत्यर्थः। तस्मिंस्तेन चेति। मनसि नैष्प-

"मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने !" इति श्रीभागवतवाक्यात् । तैश्च–तैरपि । मानसपूजान्तं–मन एव मानसम्, प्रज्ञादित्वादण्, मानसेन पूजा मानसपूजा । यद्वा–मनसा निर्वृत्ता मानसी । तेन निर्वृत्तमित्यण् । सा चासौ पूजा चेति समासः । पुंवत्कर्मधारयेति पुंवद्भावः । सा अन्ते यस्य तत् । नित्यकर्मेति शेषः । उक्तक्रमेण–प्रत्यहमित्यादि-श्लोकोक्तानुक्रमेणैव कार्यम् । वै इत्यवधारणे । नात्र संशयः । पादपूरणे वा ॥५५॥

---

शयनाटनादिषु सर्वदैव निरतिशयप्रेमगर्भमनुसरणं तस्य विधेयम् । अनेन स्मृत्यभ्यासेन मनसो नैष्पन्द्यं, तस्मिंस्तेन चावलोकनसमानाकारानुचिन्तनमनुवर्त्तेत चिरं योगकाले । अयं च स्मृत्यभ्यासो ज्ञानेन्द्रियेषु कर्मेन्द्रियेषु वा यथायथं व्यापृतेषु न सिध्येदिति, अवश्यमेवादौ भक्तियोगे प्रवृत्तेन सर्वाण्यपीन्द्रियाणि परमप्रेम्णा तदर्थमेव विनियोज्यानि । यथाम्बरीषेण—मुकुन्दलिङ्गालयदर्शने दृशौ वचांसि वैकुण्ठगुणानुवर्णने । उक्तं चैतद्गीतायाम्—"अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव । मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥" इति । व्याख्यातश्चायं श्लोको भाष्यकृता—"अथैवंविधस्मृत्यभ्यासेऽप्यसमर्थोऽसि, मत्कर्मपरमो भव–मदीयानि कर्माण्यालयनिर्माणोद्यानकरणप्रदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पपोहरणपूजाप्रवर्त्तननामसङ्कीर्त्तनप्रदक्षिणस्तुतिनमस्कारादीनि तान्यत्यर्थप्रियत्वेनाचर, अत्यर्थप्रियत्वेन मदर्थं कर्माणि कुर्वन्नप्यचिरादभ्यासयोगपूर्विकां मयि स्थिरां चित्तस्थितिं लब्ध्वा मत्प्राप्तिरूपां सिद्धिमवाप्स्यसि" इति । तदिदमखिलेन्द्रियाणां भगवत्कर्मणि विनियोजनं भक्तियोगाङ्कुरभूतमिह भक्तियोगे प्रवृत्तानधिकृत्यादिश्यते । यद्यप्यत्र सर्वेन्द्रियाणां सर्वदा भगवदर्थेष्वेव कर्मसु विनियोज्यता न स्फुटं प्रतीयते । तथापि पूजाप्रवर्त्तनतन्मन्त्रजपतत्स्तुतिपठनतन्नामसङ्कीर्त्तनादिकमुक्त्वा सदा प्रीत्या कृष्णसेवापरैर्भाव्यमिति कथनात्कतिपयेन्द्रियाणां तत्कर्मपरतामादिश्य, एवमेव सर्वेन्द्रियाणां तत्प्रीणने कर्मणि विनियोगः कार्य इत्यादिष्टं भवति । विधिश्चात्र सदा प्रीत्या कृष्णसेवापरैर्भाव्यमित्यत्रैव पर्यवस्यति । अर्च्य एव तैरित्यादयस्तु तच्छेषभूता एव । तथा चाप्रबोधमास्वापं कृष्णसेवायामखिलेन्द्रियाणामुपयोज्यत्वेऽभिधित्सिते प्राग्विहितं यत्प्रबोधसमये भगवद्गुणसरणं, यच्च स्नातेन शुचिना धृतोर्ध्वपुण्ड्रेण कर्त्तव्यतयोक्तं मानसपूजनं, तदुभयमपि मनोविनियोगरूपमेतदनुष्ठेयान्तर्गतमेवेति तैश्च मानसपूजान्तं कार्यमित्युक्तिरिति ॥ ५५ ॥

---

न्येनेत्यर्थः । प्रदर्शिततात्पर्यकताऽस्य श्लोकस्य न घटत इत्याशङ्कते—यद्यपीति । समाधत्ते—तथापीति । आदिष्टं भवतीति । शैली वेत्यादिकमुपलक्षकमिति भावः ॥ ५५ ॥

**शैली वा धातुजा मूर्त्तिः शालग्रामोऽर्च्य एव तैः ।**
**द्रव्यैर्यथाप्तैः कृष्णस्य जप्योऽथाष्टाक्षरो मनुः ॥ ५६ ॥**

ततः किं कर्त्तव्यमित्यत आह–शैलीति । शिलाया विकारः शैली । तस्य विकार इत्यण् । वा—अथवा । धातुजा–स्वर्णादिधातुनिर्मिता । धातवश्चोक्ताः षट्त्रिंशन्मते—"सुवर्णं रजतं ताम्रमारकूटं तथैव च । लोहं त्रपु तथा सीसं धातवः सप्त कीर्त्तिता" इति । अत्र धातुषु सुवर्णरौप्यताम्ररीतय इति चत्वारो ग्राह्याः । अयस्त्रपुसीसानि तु न ग्राह्याणीत्युक्तं विष्णुप्रतिमानिर्णये । श्रीभागवते तु प्रतिमाऽष्टविधोक्ता—"शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाऽष्टविधा स्मृते"ति । लौही–स्वर्णरजताद्यन्यतमधातुमयी । कृष्णस्य मूर्त्तिः–प्रतिमा । स्मर्यते च प्रतिमार्चने विशेषो भगवदर्चावतारमाहात्म्ये—"सुरूपां प्रतिमां विष्णोः प्रसन्नवदनेक्षणाम् । कृत्वाऽऽत्मनः प्रीतिकरीं सुवर्णरजतादिभिः । तस्यां ब्रह्म समारोप्य मनसा तन्मयो भवेत् । तामर्चयेत्तां प्रणमेत्तां यजेत्तां विचिन्तयेत् । विशत्यपास्तदोषस्तु तामेव ब्रह्मरूपिणीम्" । "सर्वातिशायिषाड्गुण्यं संस्थितं मन्त्रबिम्बयोः । तेनार्च्यो भगवान् साक्षान्नोपचारधिया क्वचि" दिति । प्रतिमाप्रमाणमुक्तं भार्गवार्चनदीपिकायां भविष्योत्तरे—"अङ्गुष्ठपर्वादारभ्य वितस्तिं यावदेव तु । गृहेषु प्रतिमा कार्या नाधिका शस्यते बुधै"रिति । वसिष्ठस्तु—"नार्च्या गृहेऽश्मजा मूर्त्तिश्चतुरङ्गुलतोऽधिका । न वितस्त्यधिका धातुसम्भवा श्रेय इच्छते"ति विशेषमाह ।

वेत्याकृष्यते । वा शालग्राम एव । तैः–आत्मनिवेदिभिर्भक्तैः । यथाप्तैः–यथामिलितैर्द्रव्यैश्चन्दनादिभिः । अर्च्यः–समन्त्रकं षोडशोपचारैः पूजनीयः, न तु चित्रार्चावत्केवलं दर्शनीयः । अर्च्येति लिङ्गविपरिणामेन मूर्त्या सहान्वेतव्यम् ।

---

बाह्येन्द्रियाणां भगवदर्थे विनियोगायावश्यमाश्रयणीयैवार्चेत्यभिप्रेत्याह—शैली वेति । अन्यथा बाह्यकरणागोचरे तस्मिन्बाह्यानां विनियोजनं हि न घटेत, यावदिदं न घटेत भगवति, प्रेमपूर्वस्मृत्यभ्यासोऽपि न घटेत, यावत्स न घटेत तावद्भक्तियोगोऽपि न निष्पद्येत, असति च तस्मिन्संसरणमेव स्यात् । अत एव भगवान्करुणानिधिर्यथामनोरथमाश्रितानां सन्निधत्ते क्वचिदर्चाविशेषे ।

---

अन्यथेति । अर्चाया अनाश्रयण इत्यर्थः । यथामनोरथमाश्रितानामिति । आश्रितानां यथामनोरथमित्यन्वयः ।

शालग्रामपरीक्षा प्रणवप्रकाशिकाया ज्ञेया । अत्र शालग्रामार्चने ब्राह्मणानामेवाधिकारो न तु तत्स्त्रीणां क्षत्रियादीनां चेत्युक्तं निर्णयसिन्धौ प्रयोगपारिजाते विष्णुधर्मे स्कान्दे च—"शालग्रामशिलां वापि चक्राङ्कितशिलां तथा । ब्राह्मणः पूजयेन्नित्यं क्षत्रियादिर्न पूजये"दिति । इदं स्पर्शसहितपूजाविषयम् । तथा चोक्तं स्कान्दे—"ब्राह्मण्यपि हरं विष्णुं न स्पृशेच्छ्रेय इच्छती । सनाथा मृतनाथा वा तस्या नास्तीह निष्कृति"रिति । वाराहे च—"शालग्रामं न स्पृशेत्तु हीनवर्णो वसुंधरे ! । स्त्रीशूद्रकरसंस्पर्शो वज्रस्पर्शाधिको मतः । यदि भक्तिर्भवेत्तस्य स्त्रीणां वापि वसुंधरे ! । दूरादेवास्पृशन्पूजां कारयेत्सुसमाहित" इति । शालग्राम एवायं निषेधो न भगवत्प्रतिमासु । "सर्ववर्णैस्तु सम्पूज्याः प्रतिमाः सर्वदेवताः । लिङ्गान्यपि तु पूज्यानि मणिभिः कल्पितानि वै" इति तत्रैवोक्तेः । वैष्णवाचार्यास्तु शालग्रामार्चने क्षत्रियादीनां दीक्षितादीक्षितत्वेन व्यवस्थामाहुः । तथा चोक्तं हरिभक्तिविलासे स्कान्दे—"ब्राह्मणक्षत्रियविशां सच्छूद्राणामथापि वा । शालग्रामेऽधिकारोऽस्ति न चान्येषां कदाचन । अतो निषेधकं यत्तु वचनं श्रूयते स्फुटम् । अवैष्णवपरं तत्तद्विज्ञेयं तत्त्वदर्शिभि"रिति । "पञ्चसंस्कारसम्पन्नो मन्त्ररत्नार्थकोविदः । शालग्रामशिलायां तु पूजयेत्पुरुषोत्तम"मिति पाद्मोक्तेश्च । अर्च्यशालग्रामसङ्ख्याविशेषश्चोक्तस्तिथितत्त्वे वाराहपाद्मयोः—"गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा । देवीद्वयं तथा नार्च्यं गणेशत्रयमेव च । द्वे चक्रे द्वारिकायास्तु नार्च्ये सूर्यद्वयं तथा । द्वौ शङ्खौ नार्चयेच्चैव भग्नां च प्रतिमां तथे"ति । तथा "शालग्रामाः समाः पूज्याः समेषु द्वितयं नहि । विषमा नैव पूज्याश्च विषमेष्वेक एव हि । शालग्रामशिला भग्नाप्यर्चनीया सचक्रके"ति ।

भगवदर्चनं च ध्यानावाहनासनपाद्यार्घ्याचमनीयपञ्चामृतस्नानाभिषेकवस्त्रयज्ञोपवीतालङ्कारचन्दनपुष्पधूपदीपनैवेद्यताम्बूलफलदक्षिणानीराजनपुष्पाञ्जलिप्रदक्षिणानमस्कारस्तुतिविसर्जनानीत्यनुक्रमेण कार्यम् । तत्र शालग्रामे स्थिरप्रतिमायां चावाहनविसर्जने न कर्त्तव्ये ।

पुष्पे विशेष उक्तः सदाचारचन्द्रोदये—"न शुष्कैः पूजयेद्देवं कुसुमैर्न

---

कतिचन पुनरासुराः शिशुपाल इव कृष्णे तदर्चायां विद्विष्यन्ति । सर्वतः सन्निहितस्य

---

अर्चाविद्वेषिणामाशङ्कां परिहरन्नाह—सर्वत इति । सर्वतः सन्निहितस्येत्यनेन देशविप्रकर्षनिव-

महीगतैः । नागन्धैः पूतिगन्धैश्च न श्मशानसमुद्भवैः । नाघ्रातैर्नान्यदेवस्थैरधोवस्त्रधृतैस्तथा । न गृहे करवीरोत्थैर्नार्कजैर्न शिरीषजैः । न कण्टकारिकापुष्पैर्न च पर्युषितैरपि"। तथा "उत्तमं स्वाहृतं पुष्पं क्रयक्रीतं तु मध्यम"मिति । तथा "तुलस्यां बिल्वपत्रेषु सर्वेषु जलजेषु च । न पर्युषितदोषोऽस्ति मालाकारगृहेषु चे"त्यादिः । तुलसीग्रहणनिषेधकालोऽप्युक्तो विष्णुधर्मोत्तरे—"सङ्क्रान्तावर्कपक्षान्ते द्वादश्यां निशि सन्ध्ययोः । तुलसीं न विचिन्वीत व्यतीपाते च वैधृता"विति । सर्वथा पुष्पाभावे तु निषिद्धदिनेऽपि तद्ग्रहणं मन्त्रपूर्वकमुक्तं पाद्मे—"देवार्थे तुलसीच्छेदो होमार्थे समिधां तथा । इन्दुक्षयेऽपि नो दुष्येद्गवार्थे तृणस्य चे"ति । मन्त्रोऽपि तत्रैवोक्तः—"तुलस्यमृतजन्मासि सदा त्वं केशवप्रिया । केशवार्थे विचिन्वामि वरदा भव शोभने ।" इति । मम दोषो न दीयतामिति तुरीयपादे क्वचित्पाठः । एवमन्योऽपि विशेष आचारदीपादिभ्यो ज्ञेयः ।

पूजकैश्च भगवन्मन्दिरे जायमाना अपराधाः पञ्चरात्रवाराहपुराणरामार्चनचन्द्रिकास्वाचार्यग्रन्थादिभ्यो विदित्वा सर्वथा परिहर्त्तव्याः । अन्यथा महादोषापत्तेः । तत्र तदुक्ता एव कतिचित्प्रदर्श्यन्ते—"कुर्वद्भिर्भगवद्भक्तिं पुरुषैरिह सर्वशः । अपराधो यथा न स्याद्धरेर्वृत्यं तथा सदा । यानेन वा पादुकाभ्यां गमनं भगवद्गृहे । जन्मोत्सवाद्यसेवा च ह्यप्रणामस्तदग्रतः । उच्चासनारोहणं च भगवन्मन्दिरे तथा । एकाकिन्या स्त्रिया सार्कं स्वस्यैकस्य क्षणस्थितिः । उच्छिष्टे चैव वा शौचे भगवत्स्पर्शनादिकम् । एकहस्तेन नमनमपशब्देन भाषणम् । पादप्रसारणं चाग्रे हरेः पर्यङ्कबन्धनम् । शयनं भक्षणं वापि मिथ्या भाषणमेव च । उच्चैर्भाषा रोदनं च निग्रहः कलहस्तथा । स्त्रीणां निरीक्षणं स्पर्शस्ताभिश्च क्रूरभाषणम् । शक्तौ गौणोपवासश्चाप्यनिवेदितभक्षणम् । अधोवायुसमुत्सर्गः प्रौढपादासनं तथा । ग्राम्यवार्ताप्रसक्तिश्च स्वश्लाघाऽपाङ्मुखासनम् । श्रीहरेर्नवधा भक्तावपराधा इमे मताः । तस्मादेतान्प्रयत्नेन नैव कुर्यादनापदि । भगवत्प्रीतिकामस्तु विशेषेण तदर्चकः । एतेष्वन्यतमे जाते त्वपराधे प्रमादतः । भक्तेनोपोषणं कार्यं दिनमेकं रमापतेः । दण्डवत्प्रणिपातेन स्तुत्या च विनयेन च । क्षमापनीयो भगवान्मन्त्रे-

सर्वशरीरिणः सर्वशक्तस्याश्रितभावविशेषानुगुण्येन मूर्त्तिविशेषावच्छेदेनाविर्भावः कुतो न विश्व-

व्यनाशङ्का निरस्ता । शरीरिण इत्यनेनाचोशरीरकत्वं परस्य ब्रह्मणो न घटत इति शङ्का निरस्ता । आश्रितभावविशेषानुगुण्येनेत्यनेन निमित्तं नेति शङ्का परास्ता । मूर्त्तिविशेषावच्छेदेनेत्यनेन परिच्छि-

णानेन चादरात् । अपराधसहस्राणि क्रियन्तेऽहर्निशं मया । दासोऽयमिति मां मत्वा क्षमस्व पुरुषोत्तमे"ति ।

अथ—अर्चनानन्तरम् । कृष्णस्याष्टाक्षरो मनुः—मन्त्रः । "मनुर्मुख्यनृपे मन्त्र" इति मेदिनी । जप्यः—यथाशक्ति जपनीयः । जपविधिरुक्तः पराशरेण—"स्नातः शुचिर्धौतवासाः पीठ और्णादिके शुचौ । स्वस्तिकेनासनेनैव निषद्य स्थिरमानसः । मौनी जपेन्मन्त्रराजं तदर्थं हृदि भावयन् । उपांशुं तु जपं कुर्यात्कुर्याद्वा मानसं शनैः । विवृतोष्ठ उपांशुः स्यादचलोष्ठस्तु मानसः । न चङ्क्रमन्नोपहसन्न पार्श्वमवलोकयन् । नान्यासक्तो न जल्पंस्तु नाप्रावृतशिरास्तथा । न पदा पादमाक्रम्य चालयन्न करं जपेत् । छादयेदुत्तरीयेण गोमुख्या तु द्विजोत्तमः । तर्जन्या न स्पृशेन्मालामङ्गुष्ठेनाहरेन्मणी"निति । मालाविधिस्तु पद्मपुराणादौ "आत्मज्ञानं कुशग्रन्थौ रुद्राक्षः सर्वकामद"इत्यादिना विस्तृतः । तत्रापि वैष्णवानां तुलसीमालयैव जपो मुख्यतया विहितः । "तुलसीकाष्ठघटितैर्मणिभिर्जपमालिका । सर्वकर्मणि सर्वेषामीप्सितार्थफलप्रदे"ति रामार्चनचन्द्रिकावाक्यात् । "तुलसीसम्भवा या तु मोक्षं वितनुतेऽचिरा"दिति गौतमीयतन्त्रवाक्याच्च । पुरश्चरणचन्द्रिकायां "वैष्णवे तुलसीमाले"ति वाक्याच्च । धर्मप्रवृत्तौ चोक्तम्—"तुलसीमणिभिश्चैव गणितं चाक्षयं भवे"दिति । अगस्त्यसंहितायां चोक्तम्—"यः कुर्यात्तुलसीकाष्ठैरक्षमालां सुरूपिणीम् । कण्ठमालां प्रयत्नेन कृतं तस्याक्षयं भवे"दिति । जपमालामणिसङ्ख्यामाचारमाधवे प्रजापतिराह—"अष्टोत्तरशता माला उत्तमा परिकीर्तिता । चतुःपञ्चाशिका वत्स ! मध्यमा परिकीर्तिता । अधमा प्रोच्यते नूनं सप्तविंशतिसङ्ख्यये"ति । मुख्याया गौण्या वा मणिमालाया अलाभे तूक्तं विष्णुकाण्डे—"कनिष्ठानामिका मध्या चतुर्थी तर्जनी मता । तिस्रोऽङ्गुल्यस्त्रिपर्वाः स्युर्मध्यमा

---

सनीयः । किमसावसर्वज्ञो भावबन्धमाश्रितस्य न जानाति ? । किं वा जानन्नपि सर्वतः सन्निधातुमसमर्थोऽयमविभुरिति ? । किं वा प्राकृतशिलामयेषु बिम्बेषु सन्निधानं दोषायेति परिहृत्य दूरत आस्तेऽयमसमस्तवपुः ? । किं वा सर्वतः सन्निहितेऽप्यस्मिन् शिलादिषु परिकल्प्यमानो हस्तपादादिसन्निवेश एव ततोऽपगमयति तम् ? । किं वा सर्वतनोः सर्वाकारस्य तदाकारकल्पनं विरोधाय ? । किं वा श्रुतिप्रतिपन्नदिव्याकारस्य स्मारकमिदमाकारपरिकल्पनं समाधिवैपरीत्याय ? । ये तु प्रतिबोधिता अपीत्थं न विश्वसन्ति विद्विष्यन्ति च हिरण्यवत्, तद्धृदयविदारणाय पुनरवतरितव्यं तेनैव स्तम्भत इव बिम्बतोऽपि । अपसरामस्तावदसदालापात् ।

---

न्नत्वशङ्का निरस्ता । आविर्भाव इत्यनेनोत्पत्त्यादिविकाराशङ्का परस्ता । शङ्कानिरसनप्रकारमेव स्फुटतरमुपपादयति—किमसावित्यादिना । ततोऽपगमयति तमित्युपहासोक्तिः ।

चैकपर्वणी। पर्वद्वयं मध्यमाया जपकाले विवर्जये"दिति। सनत्कुमारसंहितायां च—"अनामामध्यमारभ्य कनिष्ठादित एव च। तर्जनीमूलपर्यन्तं दश पर्वसु सञ्जपे"दिति। मध्यमाधःपर्वद्वयस्य मेरुत्वकल्पनात्। तथा चोक्तं पुरश्चरणचन्द्रिकायाम्—"पर्वद्वयं मध्यमाया मेरुत्वेनोपकल्पये"दिति। मेरुनिषेधश्चोक्तस्तन्त्रसारे—"पर्वद्वयं मध्यमाया जपकर्मणि वर्जयेत्। एनं मेरुं विजानीयाद्दूषितं ब्रह्मणा स्वय"मिति।

नन्वयं जप्यः श्रीकृष्णमन्त्रो न श्रूयते श्रुतौ, तदस्य कथं जप्यता?। अत्रोच्यते—किं श्रुतावश्रूयमाणतैवाजप्यतायां निमित्तं? उत श्रुत्या विप्रतिषिद्धत्वम्?। प्रतिषेधस्तु न श्रूयते। स्मृत्या प्रतिषेध इति चेत्, स्मृत्यैव विहित इति किं न सेव्येत। प्रतिषेधकस्मृतेः प्रामाण्यं न विधायकस्मृतेरित्यत्र कस्ते हेतुः?। श्रुतिमूलकेयं प्रतिषेधस्मृतिर्न विधायकस्मृतिरिति चेत्, तत्र वा किं गमकम्?। स्मर्तॄणामाप्ततातिशयादिति चेत्, किं पाञ्चरात्रप्रवर्त्तको भगवाननाप्तः?। तथा सति वेदानां प्रथमप्रवर्त्तकः स एवेति वेदेष्वप्यतिशङ्का स्यात्। यच्च प्रतिषेधकं वचनं मन्यते भवान् किं तत्?। इदं तत् "वृथा जाप्यमवैदिक"मिति। अत्रावैदिकशब्दस्य कोऽर्थः?, न पठ्यमाने वेदेऽश्रूयमाणता, पठ्यमानवेदेऽश्रूयमाणानां स्मार्त्तकर्मणामपि विप्रलोपप्रसङ्गात्। तदवैदिकत्वं नाम वेदतो वेदमूलकस्मृतितो वा विरुद्धत्वमेव, तच्च न कृष्णमन्त्रे, भगवत्प्रवर्त्तितपाञ्चरात्रे विशेषतः स्मरणात्। पाञ्चरात्रस्य वेदतुल्यप्रामाण्यमन्यत्र समर्थितं च। श्रूयते च गोपालतापिन्युपनिषदि कृष्णशब्दो भगवदसाधारणः, य एव मन्त्रमूलभूतः। प्रणवनमःशब्दादियोगेन मन्त्रोद्धारश्च स्मृतिप्रसिद्धः। स्मृतीनां च वेदोपबृंहणतया प्रामाण्यमनपायमेव। "इतिहासपुराणाभ्यां वेदं समुपबृंहये"दिति चोक्तम्। तस्मान्न पुराणोक्तमन्त्रेऽप्यवैदिकत्वम्। भगवन्नामैकावलम्बिषु मन्त्रेषु स्मृत्युक्त इत्येतावता नापकर्षः कश्चित्, प्रत्युतोत्कर्ष एव। तथाच भगवन्नाममहिमा श्रूयते—"मर्त्त्या अमर्त्यस्य ते भूरि नाम मनामहे। विप्रासो जातवेदस" इति। "आस्य जानन्तो नाम चिद्विवक्तने"ति च। अनयोरयमर्थः—मर्त्त्याः–मरणधर्माणः। विप्रासः–विप्राः।

---

लेख्यार्चातः शैल्यादिषु परिपूर्णसपर्याद्यानुकूल्यमभिप्रेत्य शैल्यादीनां ग्रहणम्। आवाहननिरपेक्षं सान्निध्यविशेषमभिप्रेत्य विशिष्य शालग्रामनिर्देशः। द्रव्यैर्यथाप्तैः–लब्धेन द्रव्ये·

---

परिपूर्णसपर्येति। सांस्पर्शिकादिसकलभोगप्रदानरूपपरिचर्यासम्भवादिति भावः। द्रव्यैर्यथाप्तैरित्य·

वयम् । अमर्त्यस्य—अमृतमूर्त्तेः । जातवेदसः—यज्ञनारायणस्य । ते—तव । नाम भूरि—वैदिकमन्त्राद्वेदोक्तयज्ञादिकर्मणश्चाधिकम् । मनामहे—मन्यामहे इत्यर्थः । आ अस्येति छेदः । अस्य—विष्णोः । आ—सम्यक्प्रकारेण । नाम विवक्तन—जपत, कीर्त्तयतेति वा । किं कुर्वन्तः ? चित्—किञ्चिज्जानन्तः, अपारनाममाहात्म्यं किञ्चिज्जानन्त इति । स्मर्यते च तथा । विष्णुधर्मोत्तरे—"अधीताः सकला वेदाः साङ्गोपाङ्गा हि तेन तु । भगवन्नाम येनात्र जप्तं सर्वार्थसिद्धिद"मिति । "ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः । अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वय"मिति च । पाद्मे च—"विष्णोरेकैकनामापि सर्ववेदाधिकं मत"मिति । कपिलगीतायां च—"तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृणन्ति ये त" इति । किञ्च—वैदिकमन्त्रकृतानां यज्ञादिकर्मणां वैदिकमन्त्रजपस्यापि साद्गुण्यं भगवन्नाम्नैवेत्युक्तं श्रीभागवते—"मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः । सर्वं करोति निश्छिद्रं नामसङ्कीर्त्तनं तवे"ति । स्कान्दे च—"यस्य स्मृत्या च नामोक्त्या जपयज्ञक्रियादिषु । न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युत"मिति । श्रीशङ्कराचार्यकृतविष्णुसहस्रनामभाष्यान्ते च—"प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुति"रिति । भगवन्नाममन्त्रजपफलमुक्तं हरिभक्तिविलासे नाममाहात्म्ये पाद्मे यमब्राह्मणसंवादे—"वासुदेवजपासक्तानपि पापकृतो नरान् । नोपसर्पन्ति वै विप्रा मम दूताश्च दारुणाः । वासुदेवप्रतापेन मुच्यन्ते ते त्वघौघतः । भुक्तिं मुक्तिं च दुष्प्रापामपि ते प्राप्नुवन्ति ही"ति । बृहद्विष्णुपुराणे च—"क्व नाकपृष्ठगमनं पुनरावृत्तिलक्षणम् । क्व जपो वासुदेवस्य मुक्तिबीजमनुत्तम"मिति । जाबालसंहितायां च—"हरेर्नाम परं जप्यं निर्वृतिं बहुधेच्छते"ति ।

श्रीकृष्णनामविशेषमाहात्म्यमुक्तं ब्रह्माण्डपुराणे—"सहस्रनाम्नां पुण्यानां त्रिरावृत्त्या तु यत्फलम् । एकावृत्त्या तु कृष्णेति नामैकं तत्प्रयच्छती"ति । विष्णुधर्मोत्तरे च—"कृष्णेति मङ्गलं नाम यस्य वाचि प्रवर्त्तते । भस्मीभवन्ति तस्याशु महापातककोटय" इति । नारसिंहे च—"कृष्णकृष्णेति कृष्णेति यो मां जपति नित्यशः । जलं भित्त्वा यथा पद्मं नरकादुद्धरामि त"मिति । गारुडपाद्मयोश्च—"संसारसर्पसंदष्टनष्टचेष्टैकभेषजम् । कृष्णेति वैष्णवं मन्त्रं जप्त्वा मुक्तो भवेन्नर" इति । स्कान्दे प्रभासखण्डे च—"नाम्नां मुख्यतमं नाम कृष्णाख्यं मे

परन्तप ! । प्रायश्चित्तमशेषाणां पापानां मोचकं पर"मिति । विष्णुरहस्ये च— "सत्यं ब्रवीमि ते शम्भो ! गोपनीयमिदं मम । मृत्युसञ्जीवनीं नाम कृष्णाख्यामवधारये"ति । भारतविभागे च—"कृष्णः कृष्णः कृष्ण इत्यन्तकाले जल्पन् जन्तुर्जीवितं यो जहाति। आद्यः शब्दः कल्पते तस्य मुक्त्यै व्रीडानम्रौ तिष्ठतोऽन्यावृणस्था"विति। वैष्णवचिन्तामणौ च—"मधुरमधुरमेतन्मङ्गलं मङ्गलानां सकलनिगमवल्लीसत्फलं चित्स्वरूपम् । सकृदपि परिगीतं श्रद्धया हेलया वा भृगुवर ! नरमात्रं तारयेत्कृष्णनामे"ति । पाद्मे च—"नामचिन्तामणिः कृष्णश्चैतन्यरसविग्रहः । पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनो"रिति । तस्मादष्टाक्षरमन्त्रजपोक्तिः सप्रमाणत्वाद्युक्तैवेत्यलं विस्तरेण ।

अत्र केचित्पण्डितंमन्या भगवन्नाम्न्यपि साधारणाक्षरबुद्ध्या तन्माहात्म्यमर्थवादमात्रमित्याहुस्तन्न समीचीनम् । तथा चोक्तं पाञ्चरात्रे—"सर्वोत्तमे हरेर्नाम्नि ह्यर्थवादेति बुद्धयः । नाम्नो बलाच्च पापानि ये कुर्युस्तेऽपराधिन" इति । तत्प्रायश्चित्तं वाराहपुराणादेरवगन्तव्यम् । हरिभक्तिविलासे चोक्तम्—"ईदृशे नाममाहात्म्ये श्रुतिस्मृतिविनिश्चिते । कल्पयन्त्यर्थवादं ये यान्ति ते घोरयातना" इति । कात्यायनसंहितायां च—"अर्थवादं हरेर्नाम्नि सम्भावयति यो नरः । स पापिष्ठो मनुष्येषु निरये पतति स्फुट" मिति । जैमिनिसंहितायां च—"श्रुतिस्मृतिपुराणेषु नाममाहात्म्यवाचिषु । येऽर्थवाद इति ब्रूयुर्न तेषां निरयक्षय" इति । पाद्मे च— "गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं तथार्थवादो हरिनाम्नि कल्पितः । नाम्नो बलाद्यस्य च पापबुद्धिर्न विद्यते तस्य यमैर्विशुद्धि"रिति । ब्रह्मसंहितायां च—"मन्नामकीर्त्तनफलं विविधं निशम्य न श्रद्दधाति मनुते च तदर्थवादम् । यो मानुषस्तमिह दुःखचये क्षिपामि संसारघोरविविधार्त्तिनिपीडिताङ्ग"मिति ॥ ५६ ॥

---

णार्चयेत् । सौवर्णमयादिकमेव किमप्यर्चोपकरणं सम्पाद्यमिति न नियमः, पत्रं पुष्पं फलं तोयं यत्किञ्चिदस्तु, भावबन्ध एवापेक्ष्यत इति भावः । अनेन पूजाविधानेन बाह्यकरणानां यथासंभवं भगवत्परत्वमादिष्टं भवति । जप्योऽथाष्टाक्षरो मनुः । उपदेशगम्योऽयं प्रबन्धे न प्रकाश्यते ॥ ५६ ॥

---

स्य भावमाह—सौवर्णेत्यादिना ॥ ५६ ॥

स्तोत्रादेरथ कृष्णस्य पाठः कार्यः स्वशक्तितः ।
तथाऽनधीतगीर्वाणैः कार्यं तन्नामकीर्त्तनम् ॥ ५७ ॥

स्तोत्रादेरिति । अथ—जपानन्तरम् । कृष्णस्य स्तोत्रादेः—स्तूयतेऽनेनेति स्तोत्रं विष्णुसहस्रनामादिस्तवस्तदादिर्यस्य, आदिशब्दाद्धर्मादिग्रहणम्, तस्य । पाठः—पठनम् । स्वशक्तितः—यथाशक्ति । कार्यः—कर्त्तव्यः । न अधीता गीर्वाणाः—संस्कृतग्रन्था यैस्ते तथाभूतास्तैस्तु । तस्य कृष्णस्य नाम्नां कीर्त्तनं तन्नामकीर्त्तनम् । तथा—स्तोत्रादिपाठवन्नियमेन । कार्यम् । "तद्गुणकीर्त्तन"मिति पाठे—प्राकृतभाषाबद्धश्रीकृष्णगुणवर्णनात्मकगद्यपद्यपठनमित्यर्थः । "स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि । स्तुत्वा प्रसीद भगवन्निति वन्देत दण्डव"दिति श्रीभागवतोक्तेः ॥ ५७ ॥

---

"स्तोत्रादेरथ कृष्णस्य पाठः कार्यः स्वशक्तितः" । अनेन वागिन्द्रियस्य भगवत्कर्मणि विनियोग आदिष्टः । अयं च मनोवृत्त्या सहितः, अर्थानुसन्धानयुक्तत्वात् । जपस्तोत्रादिष्वर्थानुसन्धानस्य प्रायोऽपेक्षितत्वात् । "तथाऽनधीतगीर्वाणैः कार्यं तन्नामकीर्त्तन"मित्युक्त्या जपस्तोत्रादिष्वर्थज्ञानापेक्षाया व्यञ्जनात् । अन्यथाऽनधीतगीर्वाणानामपि स्तोत्रपठनमात्रसम्भवात् । नामकीर्त्तनं चाधिगतगीर्वाणैरपि कर्त्तव्यमेव । अनधीतगीर्वाणैरर्थज्ञानविधुरैर्नामकीर्त्तनं वा कार्यमित्येव तात्पर्यात् । यद्यपि वर्णाश्रमधर्मैरपि तदाराधनतयाऽनुष्ठितैस्तत्कर्मपरता सम्भवत्येव, तथापि तन्नेह निरस्यते, अपि तु तेष्ववसरेषु विधीयतां नाम तत्, अन्येष्ववसरेष्वेवमिन्द्रियाण्य, साधारण्येन तस्मिन्योज्यानि, तथा सत्येव सर्वदा तत्कर्मपरतया तत्स्मृत्यभ्यासो भवेदित्याशयः । किञ्च—यद्यपि वर्णाश्रमादिधर्मा भगवदाराधनतया विहिता भवन्ति नाम भगवत्पराणि कर्माणि-तथापि तेषां भगवत्परत्वं शरीरशरीरिभावानुसन्धानेन सद्वारकतया सम्पाद्यम् । इह तु साक्षादेव भगवत्परत्वमिति विशेषमाहत्येमानि कण्ठतः प्रदर्शितानि ॥ ५७ ॥

---

स्तोत्रादेः पाठे प्रकृतोपयोगिनं विशेषमाह—अयं च मनोवृत्त्या सहित इति । इत्येव तात्पर्यादिति । अनधीतगीर्वाणैरेव कर्त्तव्यमित्यत्र तात्पर्याभावादित्यर्थः । तत्कर्मपरता सम्भवत्येवेति । तदर्थं कर्म तत्कर्म, भगवत्कर्मेत्यर्थः । तथाच कर्त्तव्यतया प्राप्तैस्तैरेव भगवत्कर्मपरतासम्भवे परित्यज्यताननपेक्षितान्यकर्मविधानमनुचितमिति भावः । तन्नेह निरस्यत इति । तेषामपीदमुपलक्षकमिति भावः । विधीयतां नाम तदिति । भगवत्प्रीणनरूपतयेति शेषः । नन्वर्चाविशेषपूजनादेरुपलक्ष्यतामाकलय्य वर्णाश्रमधर्माणामेव भगवत्प्रीणनरूपतया कर्त्तव्यता किमिति कण्ठतो नोक्तेत्याशङ्कायामाह—किञ्चेति ॥ ५७ ॥

---

हरेर्विधाय नैवेद्यं भोज्यं प्रासादिकं ततः ।
कृष्णसेवापरैः प्रीत्या भवितव्यं च तैः सदा ॥ ५८ ॥

हरेरिति । ततो हरेः–श्रीकृष्णस्य । नैवेद्यं–नैवेद्याख्यमुपहारम् । विधाय–स्वयं पाकं कृत्वा ग्राह्यान्नेनान्येन कारयित्वा वा, हरये तन्निवेदनं कृत्वेत्यर्थः । हरेरिति सम्बन्धसामान्ये षष्ठी । केचित्तु—हरेः पृथक्संप्रदानत्वविवक्षया "निवेद्य हरयेऽन्नाद्य"मिति पठन्ति । ततः–नीराजनादिसहितमहानैवेद्यविधिसमाप्त्यनन्तरम् । प्रसादः–भगवदीक्षणाद्यनुग्रहोऽस्त्यस्येति प्रासादिकं; भगवद्भुक्तावशिष्टमन्नादीत्यर्थः । भोज्यं–भोक्तव्यम् । अनिवेदितान्नभक्षणे दोष उक्तः पाद्मे गौतमेन—"अम्बरीष ! गृहे पक्वं सदाभीष्टं यदात्मनः । अनिवेद्य हरेर्भुञ्जन्सप्त जन्मानि नारकी"ति । निवेदितान्नभक्षणे पुण्यं चोक्तं तत्रैव—"नैवेद्यशेषं तुलसीविमिश्रं विशेषतः पादजलेन सिक्तम् । योऽश्नाति नित्यं पुरतो मुरारेः प्राप्नोति यज्ञायुतकोटिपुण्य"मिति ।

किञ्च—तैः–आत्मनिवेदिभिर्वैष्णवैः । सदा–सर्वस्मिन्काले, अहनि रात्रौ चेत्यर्थः । प्रीत्या–महता हर्षेण, अनन्यभावेनेति यावत् । न तु किञ्चिदपि क्लेशेन दम्भेन वा । कृष्णसेवापरैः–कृष्णस्यैव सेवा–भजनं तस्यां परैः–तत्परैः, कृष्णसेवैव परं–प्रधानं येषां तैरिति वा । कृष्णार्थसकलक्रियैरित्यर्थः । भवितव्यम् । भावरहितसेवाया भगवताऽनङ्गीकारात्प्रीत्येत्युक्तम् । तदुक्तं भगवतैव—"श्रद्धयोपहृतं प्रेष्ठं भक्तेन मम वार्यपि । भूर्यप्यभक्तोपहृतं न मे तोषाय कल्पते । गन्धो धूपः सुमनसो दीपोऽन्नाद्यं च किं पुनः" । "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतमश्नामि प्रयतात्मन" इति च । मोक्षधर्मे च—"याः क्रियाः संप्रयुक्ताः स्युरेकान्तगतबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥" "परिपूर्णोऽपि भगवान् भक्तैर्यत्किञ्चिदीरितम् । सापेक्षवत्तदादत्ते तेन प्रीतो ददात्यल"मिति । पञ्चरात्रे च—"अण्वप्युपहृतं भक्तैर्मम भोगाय जायते । भूर्यप्यभक्तोपहृतं न मे भोगाय जायत" इति । पुराणान्तरे च—"पृथिवीं रत्नसम्पूर्णां यः कृष्णाय प्रयच्छति । तस्याप्यन्यमनस्कस्य सुलभो न जनार्दन" इति ।

---

यदपि देहधारणाय क्रियमाणं किञ्चिदार्जनाशनादि तदपि नानेन स्वार्थेऽनुष्ठेयम् ।

---

"हरेर्विधाय नैवेद्यं भोज्यं प्रासादिकं तत"इत्येतत् द्रव्यार्जनप्रभृतिपाकान्तस्य भगवद्यागशेषतयैव

आत्मनिवेदिनां धर्मा भगवतैवोक्ताः—"श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम्। परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम। आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम्। मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः। मदर्थेष्वङ्गचेष्टा च वचसा मद्गुणेरणम्। मय्यर्पणं च मनसः सर्वकामविवर्जनम्। मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च। इष्टं दत्तं हुतं जप्तं मदर्थं यद्व्रतं तपः। एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम्। मयि सञ्जायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते"। "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्। यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पण"मिति। तत्फलं चोक्तं तेनैव—"मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे। तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै" इति। आत्मभूयाय—आत्मभावाय, स्वाभाविकापहतपाप्मत्वादिस्वभावाविर्भावायेति यावदिति। श्रीभगवद्गीतासु चोक्तम्—"ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते॥ तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि नचिरात्पार्थ! मय्यावेशितचेतसा"मिति।

सदेत्यनेन भगवन्नामस्मरणादिकं तु क्षणमात्रमपि न त्याज्यमिति शिक्षयति। तथा चोक्तं श्रीभागवते—"त्रिभुवनविभवहेतवेऽप्यकुण्ठस्मृतिरजितात्मसुरादिभिर्विमृग्यात्। न चलति भगवत्पदारविन्दाल्लवनिमिषार्धमपि यः स वैष्णवाग्र्यः॥" "आयुर्हरति वै पुंसामुद्यन्नस्तं च यन्नसौ। तस्यर्ते यत्क्षणो नीत उत्तमश्लोकवार्त्तया॥" "अविस्मृतिः कृष्णपदारविन्दयोः क्षिणोत्यभद्राणि शमं तनोति च।" "तस्मात्सर्वात्मना राजन्! हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान्नृणा"मित्यादि। श्रीभगवद्गीतासु च—"तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य चे"ति। "सततं कीर्त्तयन्तो मां यतन्तश्च दृढव्रता" इति च। विष्णुरहस्ये च—"सा हानिस्तन्महच्छिद्रं स मोहः स च विभ्रमः। यन्मुहूर्त्तं क्षणं वापि वासुदेवं तु विस्मरे"दिति। "वासुदेवं न चिन्तये"दिति तुर्यचरणपादो नारदपञ्चरात्रेऽस्ति। वैष्णवचिन्तामणौ च नारदः—"न देशनियमो राजन्न कालनियमस्तथा। विद्यते नात्र सन्देहो विष्णोर्नामानुकीर्त्तने" इति। वाराहे च—"नारायणाच्युतानन्त वासुदेवेति यो नरः। सततं कीर्त्तयेद्भूमौ प्रयाति मम धाम स" इति। विष्णुधर्मोत्तरे क्षत्रबन्धूपाख्याने च—"न देशनियमस्तस्मिन्न कालनियमस्तथा। नोच्छिष्टादिनिषेधश्च श्रीहरेर्नाम्नि लुब्धके"ति। स्कान्दे च—"चक्रायुधस्य नामानि

सदा सर्वत्र कीर्त्तयेत् । नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः । न देशकालावस्थात्मशुद्ध्यादिकमपेक्षते । किन्तु स्वतन्त्रमेवैतन्नाम कामितकामद"मिति । ब्रह्माण्डपुराणे च—"महापातकयुक्तोऽपि कीर्त्तयन्ननिशं हरिम् । शुद्धान्तःकरणो भूत्वा जायते पङ्क्तिपावन" इति । नारदीये च—"एकस्मिन्नप्यतिक्रान्ते मुहूर्त्ते हरिवर्जिते । दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं भृश"मिति । विष्णुपुराणे च—"जनार्दनं भूतपतिं जगद्गुरुं स्मरन्मनुष्यः सततं महामुने ! । दुःखान्यशेषाण्यपि हन्ति साधयत्यशेषकार्याणि च यान्यभीप्सत" इति । नामकौमुद्यां च—"स्मर्त्तव्यः सततं विष्णुर्विस्मर्त्तव्यो न जातुचित् । सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्करा" इति । भारते च—"एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदे"ति ॥ ५८ ॥

---

किन्तु तद्भगवदर्थकर्मशेषतयैव विधेयमित्याह—हरेरिति । देहधारणसमुचितद्रव्यार्जनप्रभृतिपाकान्तं भगवद्यागायैवेति प्रेमपूर्वं कुर्यात् । कृत्वा भगवते इज्याकाले तन्निवेद्य ततस्तच्छेषभूतं च प्रतिपत्तिबुद्ध्याऽश्नीयात् । भुक्तमिदं भगवति भक्त्युन्मेषकरमिति वाऽश्नीयात् । तदेवं सर्वमेवेदमार्जनाशनादि भगवदर्थेष्वन्तर्भावयेदिति भावः । उपलक्षकमेतत् । तदेवं क्रमेण कृष्णार्थमेव सर्वमिन्द्रियं सदा विनियोज्यमित्याह—कृष्णसेवेति । चस्त्वर्थे । तैस्तु इत्यर्थः ॥ ५८ ॥

---

कर्त्तव्यत्व उपलक्षकमित्यभिप्रायेण व्याचष्टे—देहेति । प्रतिपत्तिबुद्ध्येति । प्रतिपत्तिकर्मेति बुद्ध्येत्यर्थः । अयं च कर्मविशेषो मीमांसकैरभ्युपगतः । यथा यागेऽवसिते यजमानेन दत्तासु दक्षिणासु ऋत्विग्भिर्नीतासु यजमानः स्वहस्ते धृतं कृष्णमृगस्य शृङ्गं चात्वालनामके गर्त्तविशेषे प्रक्षिपेत्, अयं प्रक्षेपः प्रतिपत्तिकर्म, यथा च श्राद्धे दत्तस्य पिण्डस्य कुशमयब्राह्मणपक्षे जले प्रक्षेपः, यथाच पूजितायाः प्रतिमाया जले प्रक्षेपः, एवमिह भगवद्यागे विनियुक्तस्य हविषो यजमानकृतं तत्परिजनकृतं च प्राशनं प्रतिपत्तिकर्मेति भावः । ततोऽप्यतिशयितं निमित्तमाह—भुक्तमिदमिति । भगवदर्थेष्विति भगवानेवार्थो येषां तानि भगवदर्थानि, प्रीतिविशिष्टत्ववेषेण भगवतोऽर्थता बोध्या, भगवत्प्रीणनेष्विति यावत् ॥ ५८ ॥

प्रोक्तास्ते निर्गुणा भक्ता निर्गुणस्य हरेर्यतः ।
सम्बन्धात्तत्क्रियाः सर्वा भवन्त्येव हि निर्गुणाः ॥ ५९ ॥

प्रोक्ता इति । यतः—यस्माद्धेतोः । सर्वा अपि तत्क्रियाः—तेषां भक्तानां क्रियाः—सकलेन्द्रियव्यवहाराः । निर्गुणस्य—पूर्वोक्तप्रकारेण प्राकृतहेयगुणरहितस्यानन्तकल्याणगुणमणिगणमण्डनस्य दिव्यमूर्तेः । हरेः—हरति स्वाश्रितानां कालमायायमभयानीति हरिस्तस्य श्रीकृष्णस्य । "नास्ति मायाभयं तेषां नास्ति कालभयं क्वचित् । नास्त्येव कृष्णभक्तानामर्कसूनुभयं तथे"ति विष्णुधर्मोक्तेः । सम्बन्धात्—तदर्थत्वादित्यर्थः । निर्गुणाः—गुणमयत्वेन दृश्यमाना अपि गुणातीता एव भवन्तीत्यर्थः । हीत्यवधारणे । तासां भगवत्प्रापणेतरफलाभावादित्यर्थः । तदुक्तं श्रीभगवद्गीतासु—"मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु । मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥" इति । श्रीभागवते च—"सत्त्वे प्रलीनाः स्वर्यान्ति नरलोकं रजोलयाः । तमोलयास्तु निरयं यान्ति मामेव निर्गुणाः॥" इति । "यथा गङ्गाम्बुनो योगाद्रथ्यावार्यपि गाङ्गताम् । याति निर्गुणतामेवं क्रिया गुणमयी हरे"रिति विष्णुधर्मोत्तरोक्तेर्भगवद्धर्मस्य निर्गुणत्वमविवादम् । अत एव तच्छ्रैष्ठ्यमुक्तं भगवतैवैकादशस्कन्धे—"न ह्यङ्गोपक्रमे ध्वंसो मद्धर्मस्योद्धवाण्वपि । मया व्यवसितः सम्यङ्निर्गुणत्वादनाशिषः" इति । अत एव ते भक्ताः । भगवतेति शेषः । निर्गुणा इति प्रोक्ता इति । भवद्भिर्ज्ञेयमित्यध्याहार्यम् । त इत्युपलक्षणं तदीयभक्तिज्ञानादीनामपि । तत्र भक्तेर्निर्गुणत्वमुक्तं तृतीयस्कन्धे—"मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये । मनोगति-

---

नन्विन्द्रियोपरतिसम्पाद्या हि ध्यानसम्पाद्या मुक्तिः, कर्माणि त्विन्द्रियव्यापृतिगर्भाणि तत्कथं विधीयन्ते तानि मुक्तावुपायतयेत्यत्राह—प्रोक्तास्ते निर्गुणा इति । ते भक्ताः—आत्मानं भगवदेकशेषमवबुध्य सर्वथा स्वामिनः समाराधनाय यतमानाः, अत्यर्थप्रीतिपूर्वकं सर्वैरपीन्द्रियैरुक्तप्रकारेण तदर्थमेव कर्म कुर्वाणा ये भक्तास्ते निर्गुणा एव प्रोक्ताः, निर्गुणाः—मुक्ताः, मुक्तौ हि प्रकृत्यपगमेन तद्गुणोऽप्यपगच्छति । यद्यपि यावत्प्रारब्धावसानं प्रकृतिर्न जहात्येनमिति निर्गुणा इति नोचितम् । तथापि सत्यपि प्रकृतिरीदृशे भक्ते जन्मबीजं नवं नादधातीति मुक्ता एव प्रोच्यन्ते—प्रकर्षेणोच्यन्ते उद्घुष्योच्यन्ते नाम, सत्यपि प्रकृतिः किमेनं कर्तुं शक्नुयादिति भावः । मुक्तगोष्ठ्यां गणने हेतुमाह—निर्गुणस्य हरेरिति ।

---

ते भक्ता इति प्रतीकग्रहणम् । तत्र भक्तशब्दव्याख्यानमात्मानमित्यादि यतमाना इत्यन्तम् । तच्छब्दव्याख्यानमत्यर्थप्रीतिपूर्वकमित्यादि कुर्वाणा इत्यन्तम् । न जहात्येनमिति । प्रारब्धकर्मणां

रविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ । लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृत"मिति । तज्ज्ञानादीनां तेषां च निर्गुणत्वं तूक्तमेकादशस्कन्धे—"कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं तु यत् । प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ वनं तु सात्त्विको वासो ग्रामो राजस उच्यते । तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् । राजसं चेन्द्रियप्रेष्ठं तामसं चार्त्तिदाशुचि ॥ अत्र चशब्दान्मन्निवेदितं निर्गुणमित्यभिप्रेतमिति श्रीधरस्वामिन आहुः । सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् । तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रय"मिति । पाञ्चरात्रे तु स्वधर्मनिष्ठा अनन्यभक्तिमन्त एत एव ज्ञानवैराग्ययुक्ताः सन्त एकान्तिका इत्युक्तम्—"स्वधर्मज्ञानवैराग्यभूषाजुष्टां तु येऽच्युते । अनन्यभक्तिं साध्वीवत्कुर्युरेकान्तिका हि त" इति ॥५९॥

---

नहीन्द्रियव्यापृतिगर्भं कर्मेत्येतावता बन्धकं भवेत् । यदि नाम ममेति स्वार्थं सङ्कल्प्य किञ्चिदाचरेत्तदा भवेन्नाम बन्धः । अनेन क्रियमाणाः क्रियाः सर्वा हि गुणैः सत्त्वादिभिः सर्वथा शून्ये हेयप्रत्यनीके परस्मिन्पुरुषोत्तमे श्रीकृष्णे सम्बद्धाः प्रीतिपूर्वं तदर्थमेवानुष्ठिताः स्वयं निर्गुणा एव–अबन्धका एव । गुणशब्देन गुणगतं बन्धकत्वं लक्ष्यते । भगवति प्रेमपूर्वकं सर्वेन्द्रियैरपि तदर्थतया क्रियमाणं हि कर्म क्रमशो भगवतो निरतिशयप्रेमपूर्वकस्मृत्यभ्यासमेव वर्धयतीति तद्भक्तियोगनिष्पत्तये परिपूर्णमुपकरणं भवत्कथं बन्धाय, प्रत्युत मुक्तय एवेति भावः ॥ ५९ ॥

---

भोगादेव क्षयादिति यावत् । प्रोक्ता इत्यत्रोपसर्गतो ध्वन्यमानमर्थमाह—उद्घुष्येति । तदा भवेन्नाम बन्ध इति । कर्मणां न स्वरूपेण बन्धकता किन्तु सङ्कल्पदोषत एव, सङ्कल्पे चेन्न दोषः, न तदा बन्धकता, यद्भगवदेकप्रीणनायैवेदं करोमीति सङ्कल्पो गुण एव, अत एवोक्तं गीतायां—"योगः कर्मसु कौशल"मित्याशयः । निर्गुणा इत्यस्य शक्यार्थबाधाल्लक्ष्यार्थमाह—अबन्धका एवेति । प्रेमपूर्वकस्मृत्यभ्यासमेव वर्धयतीति । इन्द्रियव्यापृतीनामपि प्रेमपूर्वकस्मरणाभ्यासे पर्यवसानादिति भावः ॥ ५९ ॥

---

**भक्तैरेतैस्तु कृष्णायानर्पितं वार्यपि क्वचित् ।**
**न पेयं नैव भक्ष्यं च पत्रकन्दफलाद्यपि ॥ ६० ॥**

भक्तैरिति । एतैरात्मनिवेदिभिर्भक्तैस्तु । कृष्णाय । अनर्पितं—अनिवेदितम् । वार्यपि—पानीयमपि । अपिशब्दाद्दुग्धादि दूरापास्तम् । क्वचिदपि न पेयं—

---

एवं भगवति प्रेमपूर्वध्रुवानुस्मृतये निखिलमेव कर्म तदर्थतया कुर्वद्भिर्भगवदनिवेदितं कन्दमूलफलादिकमपि परिहरणीयमित्याह—भक्तैरेतैरिति । अन्यथा तत्सेवनेन कदाचित्सत्त्वोन्मेषह्रासप्रसङ्गात् । ध्रुवानुस्मृतये ह्याहारशुद्धिरपि प्रतिपाद्यते—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रिति । आहारशुद्धिश्च भगवदेकभक्तस्य भगवदनिवेदितान्नतो निवृत्तिः प्रधानतमा । अत एव स्मर्यते—"पत्रं पुष्पं फलं तोयमन्नपानादिकं हरेः । अनिवेद्य न भुञ्जीत विष्णुभक्तः कदाचन ॥" इत्यादि । यद्यप्येषां सर्वं कर्म भगवदर्थे कुर्वाणानामन्वहं विधाय भगवद्यागं तच्छेषाङ्गीकरणरूपतयैव देहधारणं प्रसक्तम् । विहितं च प्राक् । तथापि यदि कदाचिदेनान्स्वगृहमानीयाराधयन्कश्चित्प्रेमपूर्वं फलाद्युपहरेत्तदापि भगवतेऽनिवेद्य न तत्सेव्यमिति स्फुटप्रतिपत्तयेऽयमादेशः ।

यद्वा—सर्वं कर्म भगवदर्थं कुर्वाणैर्यद्यल्लभ्यते यदृच्छया भोग्यजातं सर्वमेव तद्भगवत एव निवेद्यम् । न तत्र स्वयं भोग्यताबुद्धिं कुर्यादित्याह । अत्र वार्यादिकं यदृच्छोपनतस्योपलक्षकम् । वार्यादिषु हि नातीव यत्नोऽपेक्ष्यते । यत्किञ्चिद्यदृच्छोपनतमसमर्प्य कृष्णाय नोपभुञ्जीत । स्वयं भोग्यताबुद्धिं न कुर्यादित्यर्थः । तथाच वचनं—"सर्वलाभोपहरण"मिति ।

यद्वा—एवम्भूतानां भक्तानां वर्त्तनमनुवर्ण्यते—भक्तैरिति । भक्तैरेतैः पेयं वार्यपि क्वचिदपि कृष्णाय नानर्पितं, भक्ष्यं पत्रकन्दमूलफलाद्यपि कृष्णाय नानर्पितमित्यन्वयः । भक्ष्यं फलं कन्दं पत्रं वा, पेयं वारि वा, यत्किञ्चिदेतैर्भक्तैर्लभ्येत तत्तैः कृष्णायानर्पितमिति कदापि न । प्रेमपूर्वं भगवते सपदि निवेदयेयुरेव तदिति भावः । एतेन भक्तानां भगवति प्रेमरसपेशला वृत्तिरत्र ज्ञापिता ।

---

भगवदनिवेदितान्नभक्षणे हानिमाह—अन्यथेति । सत्त्वोन्मेषह्रासप्रसङ्गादिति । सत्त्वोन्मेषस्य ह्रासप्रसङ्गादित्यर्थः । ननु सत्त्वोन्मेष आहारशुद्धेर्हेतुत्वे किं प्रमाणमित्यत्राह—ध्रुवानुस्मृतय इति । नन्वस्त्वाहारशुद्धेरपेक्षा, आहारशुद्धिश्च स्मर्तृभिः परिगण्यमाना जात्याश्रयाद्यदूषितत्वैव, नेदृशीत्यत्राह—आहारशुद्धिश्चेति । तत्र प्रमाणमाह—अत एव स्मर्यत इति । पुनरुक्तोऽयमादेश इत्याशङ्क्य परिहरति—यद्यपीत्यादिना ।

स्फुटप्रतिपत्तय इति तु मन्दप्रयोजनमित्यभिप्रेत्य प्रकारान्तरेण व्याचष्टे—यद्वेति । अस्मिन्पक्षे वार्यादिग्रहणं भोग्यस्य सर्वस्योपलक्षकम् । न पेयं न भक्ष्यमिति च न सेव्यमित्यस्य प्रदर्शकमिति भावः ।

अत्र च न भक्ष्यं न पेयमिति विशिष्य प्रयोगे स्वारस्याभावमाकलय्य प्रकारान्तरेण भावमाह—यद्वेति । वर्त्तनं—वृत्तिः, व्यापार इति यावत् । अनुवर्ण्यते—अनूद्यत इत्यर्थः ।

---

१ गन्धपुष्पधूपादेरिति यावत् ।

रविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ । लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृत"मिति । तज्ज्ञानादीनां तेषां च निर्गुणत्वं तूक्तमेकादशस्कन्धे—"कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं तु यत् । प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतम् ॥ वनं तु सात्त्विको वासो ग्रामो राजस उच्यते । तामसं द्यूतसदनं मन्निकेतं तु निर्गुणम् ॥ सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः । तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रयः ॥ सात्त्विक्याध्यात्मिकी श्रद्धा कर्मश्रद्धा तु राजसी । तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणा ॥ पथ्यं पूतमनायस्तमाहार्यं सात्त्विकं स्मृतम् । राजसं चेन्द्रियप्रेष्ठं तामसं चार्तिदाशुचि ॥ अत्र चशब्दान्मन्निवेदितं निर्गुणमित्यभिप्रेतमिति श्रीधरस्वामिन आहुः । सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् । तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रय"मिति । पाञ्चरात्रे तु स्वधर्मनिष्ठा अनन्यभक्तिमन्त एत एव ज्ञानवैराग्ययुक्ताः सन्त एकान्तिका इत्युक्तम्—"स्वधर्मज्ञानवैराग्यभूषाजुष्टां तु येऽच्युते । अनन्यभक्तिं साध्वीवत्कुर्युरेकान्तिका हि त" इति ॥५९॥

---

नहीन्द्रियव्यापृतिगर्भं कर्मेत्येतावता बन्धकं भवेत् । यदि नाम ममेति स्वार्थं सङ्कल्प्य किञ्चिदाचरेत्तदा भवेन्नाम बन्धः । अनेन क्रियमाणाः क्रियाः सर्वा हि गुणैः सत्त्वादिभिः सर्वथा शून्ये हेयप्रत्यनीके परस्मिन्पुरुषोत्तमे श्रीकृष्णे सम्बद्धाः प्रीतिपूर्वं तदर्थमेवानुष्ठिताः स्वयं निर्गुणा एव–अबन्धका एव । गुणशब्देन गुणगतं बन्धकत्वं लक्ष्यते । भगवति प्रेमपूर्वकं सर्वेन्द्रियैरपि तदर्थतया क्रियमाणं हि कर्म क्रमशो भगवतो निरतिशयप्रेमपूर्वकस्मृत्यभ्यासमेव वर्धयतीति तद्भक्तियोगनिष्पत्तये परिपूर्णमुपकरणं भवत्कथं बन्धाय, प्रत्युत मुक्तय एवेति भावः ॥ ५९ ॥

---

भोगादेव क्षयादिति यावत् । प्रोक्ता इत्यत्रोपसर्गतो ध्वन्यमानमर्थमाह—उद्धुष्येति । तदा भवेन्नाम बन्ध इति । कर्मणां न स्वरूपेण बन्धकता किन्तु सङ्कल्पदोषत एव, सङ्कल्पे चेन्न दोषः, न तदा बन्धकता, यद्भगवदेकप्रीणनायैवेदं करोमीति सङ्कल्पो गुण एव, अत एवोक्तं गीतायां—"योगः कर्मसु कौशल"मित्याशयः । निर्गुणा इत्यस्य शक्यार्थबाधाल्लक्ष्यार्थमाह—अबन्धका एवेति । प्रेमपूर्वकस्मृत्यभ्यासमेव वर्धयतीति । इन्द्रियव्यापृतीनामपि प्रेमपूर्वकस्मरणाभ्यासे पर्यवसानादिति भावः ॥ ५९ ॥

भक्तैरेतैस्तु कृष्णायानर्पितं वार्यपि क्वचित् ।
न पेयं नैव भक्ष्यं च पत्रकन्दफलाद्यपि ॥ ६० ॥

भक्तैरिति । एतैरात्मनिवेदिभिर्भक्तैस्तु । कृष्णाय । अनर्पितं–अनिवेदितम् । वार्यपि–पानीयमपि । अपिशब्दाद्दुग्धादि दूरापास्तम् । क्वचिदपि न पेयं–

एवं भगवति प्रेमपूर्वध्रुवानुस्मृतये निखिलमेव कर्म तदर्थतया कुर्वद्भिर्भगवदनिवेदितं कन्दमूलफलादिकमपि परिहरणीयमित्याह—भक्तैरेतैरिति । अन्यथा तत्सेवनेन कदाचित्सत्त्वोन्मेषह्रासप्रसङ्गात् । ध्रुवानुस्मृतये ह्याहारशुद्धिरपि प्रतिपाद्यते—"आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रिति । आहारशुद्धिश्च भगवदेकभक्तस्य भगवदनिवेदितान्नतो निवृत्तिः प्रधानतमा । अत एव स्मर्यते—"पत्रं पुष्पं फलं तोयमन्नपानादिकं हरेः । अनिवेद्य न भुञ्जीत विष्णुभक्तः कदाचन ॥" इत्यादि । यद्यप्येषां सर्वं कर्म भगवदर्थे कुर्वाणानामन्वहं विधाय भगवद्यागं तच्छेषाङ्गीकरणरूपतयैव देहधारणं प्रसक्तम् । विहितं च प्राक् । तथापि यदि कदाचिदेनान्स्वगृहमानीयाराधयन्कश्चित्प्रेमपूर्वं फलाद्युपहरेत्तदापि भगवतेऽनिवेद्य न तत्सेव्यमिति स्फुटप्रतिपत्तयेऽयमादेशः ।

यद्वा—सर्वं कर्म भगवदर्थं कुर्वाणैर्यद्यल्लभ्यते यदृच्छया भोग्यजातं सर्वमेव तद्भगवत एव निवेद्यम् । न तत्र स्वयं भोग्यताबुद्धिं कुर्यादित्याह । अत्र वार्यादिकं यदृच्छोपनतस्योपलक्षकम् । वार्यादिषु हि नातीव यत्नोऽपेक्ष्यते । यत्किञ्चिद्यदृच्छोपनतमसमर्प्य कृष्णाय नोपभुञ्जीत । स्वयं भोग्यताबुद्धिं न कुर्यादित्यर्थः । तथाच वचनं—"सर्वलाभोपहरण"मिति ।

यद्वा—एवम्भूतानां भक्तानां वर्तनमनुवर्ण्यते—भक्तैरिति । भक्तैरेतैः पेयं वार्यपि क्वचिदपि कृष्णाय नानर्पितं, भक्ष्यं पत्रकन्दमूलफलाद्यपि कृष्णाय नानर्पितमित्यन्वयः । भक्ष्यं फलं कन्दं पत्रं वा, पेयं वारि वा, यत्किञ्चिदेतैर्भक्तैर्लभ्येत तत्तैः कृष्णायानर्पितमिति कदापि न । प्रेमपूर्वं भगवते सपदि निवेदयेयुरेव तदिति भावः । एतेन भक्तानां भगवति प्रेमरसपेशला वृत्तिरत्र ज्ञापिता ।

भगवदनिवेदितान्नभक्षणे हानिमाह—अन्यथेति । सत्त्वोन्मेषह्रासप्रसङ्गादिति । सत्त्वोन्मेषस्य ह्रासप्रसङ्गादित्यर्थः । ननु सत्त्वोन्मेष आहारशुद्धेर्हेतुत्वे किं प्रमाणमित्यत्राह—ध्रुवानुस्मृतय इति । नन्वस्त्वाहारशुद्धेरपेक्षा, आहारशुद्धिश्च स्मर्तृभिः परिगण्यमाना जात्याश्रयाद्यदूषितैव, नेदृशीत्यत्राह—आहारशुद्धिश्चेति । तत्र प्रमाणमाह—अत एव स्मर्यत इति । पुनरुक्तोऽयमादेश इत्याशङ्क्य परिहरति—यद्यपीत्यादिना ।

स्फुटप्रतिपत्तय इति तु मन्दप्रयोजनमित्यभिप्रेत्य प्रकारान्तरेण व्याचष्टे—यद्वेति । अस्मिन्पक्षे वार्यादिग्रहणं भोग्यस्य सर्वस्योपलक्षकम् । न पेयं न भक्ष्यमिति च न सेव्यमित्यस्य प्रदर्शकमिति भावः ।

अत्र च न भक्ष्यं न पेयमिति विशिष्य प्रयोगे स्वारस्याभावमाकलय्य प्रकारान्तरेण भावमाह—यद्वेति । वर्तनं–वृत्तिः, व्यापार इति यावत् । अनुवर्ण्यते–अनूद्यत इत्यर्थः ।

१ गन्धपुष्पधूपादेरिति यावत् ।

न पातव्यम्। तथा–कृष्णायानर्पितं पत्रकन्दफलाद्यपि नैव भक्ष्यम्। आदिशब्दान्मूलबीजादिग्रहणम्। अपिशब्दादन्नं तु दूरापास्तम्। उपलक्षणमेतन्नवीनवस्त्रालङ्कारादिग्रहणस्यापि। उक्तं हि ब्रह्माण्डपुराणे—"पत्रं पुष्पं फलं तोयमन्नपानाद्यमौषधम्। अनिवेद्य न भुञ्जीत यदाहाराय कल्पित"मिति। पाद्मे च—"अम्बरीष! नवं वस्त्रं फलमन्नं रसादिकम्। कृत्वा विष्णूपभोग्यं तु सदा सेव्यं हि वैष्णवै"रिति। स्कान्दे च—"इक्षुदण्डफलापूपाः खाद्यानि विविधानि च। गन्धो मृगमदश्चैव कर्पूरं तैलमञ्जनम्। रत्नाभरणजातं च वस्त्रं सकलवाहनम्। प्रसादमेव भोक्तव्यमन्यथा दोषभाग्भवे"दिति। श्रीभागवते च—"यद्यदिष्टतमं

---

यद्वा—भक्तान्स्तौति—भक्तैरिति। एतैर्भक्तैः कृष्णायानर्पितं–प्रीतिपूर्वमेतैरर्पितेष्वनन्तर्गतं यद्वारि, तत्कचिदपि न पेयम्। अपेयमित्येव वयं गणयामः। यदपि तथाविधं पत्रादि तदप्यभक्ष्यमित्येव वयं गणयामः। अयं भावः—बहुभिर्विदितद्रव्यशुद्धियाथात्म्यैः केवलं जात्या शुद्धिमात्रमाकलय्य मनोनिग्रहाय फलकन्दपत्रवारीणि क्रमशः कायक्लेशमात्रफलकानि सेव्यन्ते नाम, तानि प्रेमपूर्वकभगवदर्पणरूपसंस्काररहितान्यपेयानीव, अभक्ष्याणीव तामसान्येव केवलानि। न भगवदेकान्तिकात्यन्तिकभक्तोपनीतभगवदुपभुक्तावशिष्टवत्सत्त्वोन्मेषकराणि। किं कौशिकः कन्दमूलमुपसेवमानो नान्वपद्यत कामक्रोधयोर्वशमिति। यद्यपि भगवन्निवेदितान्नप्रशंसा नामेयम्। तथापि निवेदयितुर्भावशुद्ध्युपजीव्यत्वादस्योत्कर्षस्य भक्तप्रशंसायामेव पर्यवसानम्।

वस्तुतस्तु—प्रावप्रस्तुता कृष्णदीक्षा हि द्विविधा। एका मुमुक्षामात्रेणाधिक्रियमाणा, अपरा तु ज्ञानवृत्ताद्विवैलक्षण्ये सत्यधिक्रियमाणा। तत्र—परीक्ष्य लोकान्कर्मचितान्नास्त्यकृतः कृतेनेति नितरां निर्विण्णो यदि कश्चिद्गुरुमुपगच्छेत्, सपदि तेन कृपासान्द्रेण देशिकेन्द्रेण माऽस्तु ते निर्वेदः, अविदितनिस्तरणोपायस्यापि तवानधिगतात्मयाथात्म्यज्ञानस्य ज्ञानाद्युपायं स एव भगवान्सकललोकगतिः श्रीकृष्णः साधयिष्यति, तदित्थं तमेव चिन्तयन्नास्व समयं प्रतीक्षमाणः, इति साभिसन्धिकं यस्यां दीक्षायां मन्त्रविशेषः प्रदीयते सा प्रथमा साधारणी प्रोक्ता। सञ्जातभगवच्छेषतैकवेषात्मस्वरूपज्ञानेन गुरुद्वारा भगवत्यात्मीयनिवेदनपूर्वकं भगवद्दास्यैकवेषनिष्कृष्टस्वात्मानुसन्धानव्यञ्जकमन्त्रविशेषग्रहणं यस्यां दीक्षायां सा द्वितीया। सेयं महादीक्षेति पाञ्चरात्रे भारद्वाजसंहितायां निगद्यते। एतन्निष्ठाश्चात्मनिवेदिन इति। एत एव "ये त्वम्बरी-

---

अत्र च पक्षे नञो दूरान्वयक्लेशमालोच्य प्रकारान्तरेण व्याचष्टे—यद्वेति। अपेयमित्येवेति। नञो विरोधार्थकत्वमिदानीमभिप्रेतम्।

सम्प्रदायप्राप्तमर्थमाह—वस्तुतस्त्विति। मुमुक्षामात्रेणेति मात्रशब्देन निष्कृष्टात्मस्वरूपं तु नावधृतमिति ज्ञाप्यते। कर्मणामस्थास्थिरफलत्वावगमेन जननमरणतो भीत्या मुमुक्षा तु सञ्जातेति भावः। ज्ञानवृत्तादीति। अत्र भगवच्छेषतैकरूपात्मस्वरूपविज्ञानं ज्ञानविशेषो बोध्यः। वृत्तविशेषश्चाशेषशेषतैकरतिरूपता। अनधिगतात्मयाथात्म्यज्ञानस्येति। याथात्म्यं चेह शेषतैकरूपता। एतन्निष्ठा-

लोके यच्चातिप्रियमात्मनः । तत्तन्निवेदयेन्मह्यं तदानन्त्याय कल्पते ॥" "त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः । उच्छिष्टभोजिनो दासास्तव मायां जयेमहि ॥" "सर्वलाभोपहरणं दास्येनात्मनिवेदन"मित्यादि । सर्वस्य लाभस्य—उपलब्धपदार्थमात्रस्य, उपहरणं—भगवते निवेदनमित्यर्थः ॥ ६० ॥

---

पव"दितीह निर्दिश्यन्ते । तथाच प्रथमं सामान्यदीक्षानिष्ठान्प्रति नियमविशेषं षड्भिरभिधाय, अथात्मनिवेदिनां विशेषमाह—शैली चेत्यादिभिः पञ्चभिः । अत्र दीक्षाभेदे निदानं मन्त्रभेदादिकं च रहस्यग्रन्थतो ज्ञेयम् । नेह निबन्धे प्रकाश्यते ॥ ६० ॥

---

आत्मनिवेदिन इति । निगद्यन्त इति वचनविपरिणामेनानुषङ्गः ॥ ६० ॥

---

**सर्वैरशक्तौ वार्धक्याद्गरीयस्याऽऽपदाऽथवा ।**
**भक्ताय कृष्णमन्यस्मै दत्वा वृत्यं यथाबलम् ॥ ६१ ॥**

सर्वैरिति । वार्धक्यात्—वृद्धस्य भावो वार्धकं, वार्धकमेव वार्धक्यं, तस्माद्धेतोः । वृद्धत्वादिति पाठस्तु सुगमः । अशक्तौ—पूजनादिसामर्थ्याभावे सति । अथवा । वार्धक्यं विनापि गरीयस्या—अतिशयेन गुर्व्या । आपदा—महारोगदेशभङ्गाद्युपद्रवेण । अशक्तौ सत्याम् । सर्वैः—आत्मनिवेदिभिः सामान्यैश्च वैष्णवैर्जनैः । *अन्यस्मै—पूजनानुकूल्यवते स्वस्मादितरस्मै । भक्ताय—श्रीकृष्णसेवकाय ।*

---

सेयमन्वहमुपसेव्यमाना भगवदर्चा वयोवैगुण्यादिना बाह्याभ्यर्चनस्य प्रसक्ते लोपे भक्तहस्ते समर्पणीया, अन्यथा प्रतिष्ठितायाः पूजाभङ्गेनापराधप्रसङ्गात्समर्प्य तां स्वयं च यावदानुकूल्यं सपर्यां कुर्यादित्याह—सर्वैरिति । सर्वैः—सामान्यदीक्षानिष्ठैर्विशेषदीक्षानिष्ठैर्वा सर्वैर्भक्तैः । वार्धक्यात्—वार्धकनिमित्तकरणशैथिल्यादित्यर्थः । इदं रोगनिमित्तशैथिल्यस्याप्युपलक्षकम् । अथवा गरीयस्याऽऽपदा—देशभङ्गाद्युपद्रवेण । अशक्तौ—बाह्याभ्यर्चनभङ्गप्रसङ्गे । कृष्णमर्चारूपं दत्वा । असत्यां पुनरानुकूल्यसम्भावनायाम् । सत्यां तु न्यासविशेषरूपतया तदायत्तीकृत्य । वृत्यं यथाबलं—यथाप्रज्ञाबलं वर्तितव्यम् । बाह्यकरणशैथिल्येऽपि यदि प्रज्ञा पटीयसी स्यात्, मानसपूजनं साकल्येन कार्यम् । यदि तत्राप्यन्तिमसमयानुरोधेन किञ्चिद्वैकल्यं तदा तच्चिन्तनमात्रं वा कार्यमिति भावः । शुभाश्रयस्य चिरानुध्यातस्य प्रेमपूर्व-

---

स्वयं च यावदानुकूल्यं सपर्यां कुर्यादित्याहेति । इदं च वृत्यं यथाबलमिति वचनमभिप्रेत्योक्तम् । एतेनापाततः प्रतीयमानो यथाबलं लौकिके व्यवहारे वर्तितव्यमित्यर्थो नोचितः, अम्बरीषवदात्मनिवेदिषु तदप्रसक्तेस्तत्कथनस्याप्रसक्तेश्चेति भावः । बलशब्दस्य देहबलपरत्वे प्रकृतानुपयोगादाह—यथाप्रज्ञाबलमिति । अन्तिमसमये तच्चिन्तनाया आवश्यकत्वे प्रयोजनमाह—शुभाश्रयस्येति । नन्व-

कृष्णं—स्वसेव्यं श्रीकृष्णस्वरूपं शालग्रामं च। दत्वा—प्रार्थनापूर्वकं समर्प्य। स्वयं तु यथाबलं—यथाशक्ति, देशकालवयोऽवस्थासामर्थ्यानुरूपमित्यर्थः। वृत्यं—वर्त्तनीयम्। मानसपूजनेन स्ववैष्णवत्वरक्षणं कर्त्तव्यमिति भावः। "आपत्काले वैष्णवानां विहितं मानसार्चनम्। एकमेव न वाह्यं तु द्वितीयं शक्त्यभावत" इति लघुहारीतस्मृतेः॥ ६१॥

मनुचिन्तनं ह्यन्तिमसमयेऽपि सम्भवदात्यन्तिकश्रेयसे। यदि कदाचित्सुतरामन्तिमसमये प्रज्ञा लुप्येत तदानीं स्मरति तु भगवान्प्रपन्नपरित्राणे स्वयमवहितमनाः। यावत्प्रज्ञाऽस्ति तावद्यथाबलं मानसीवृत्तिस्तस्मिन्विधेयेत्यस्य स्वरूपं शिक्षितम्॥ ६१॥

न्तिमसमये शुभाश्रयचिन्तनमावश्यकं चेत् कदाचिन्न घटेतापि, तदानीं प्रज्ञालेशस्य प्रमोपसम्भवादित्याशङ्कायामाह—यदि कदाचिदिति। अन्तिमसमये शुभाश्रयचिन्तनस्यावश्यकताकथनं सति प्रज्ञावसर इत्यभिप्रायेणाह—यावदिति। अन्तिमस्मरणनिरपेक्षं भगवानङ्गीकरोत्यधिकारिविशेषमितीदमुपरिष्टाद्भाष्ये व्यक्तीभविष्यति॥ ६१॥

---

## आचार्येणैव दत्तं यद्यच्च तेन प्रतिष्ठितम्।
## कृष्णस्वरूपं तत्सेव्यं वन्द्यमेवेतरत्तु यत्॥ ६२॥

आचार्येणेति। आचार्योऽत्र स्वस्य भक्तिमार्गोपदेष्टा धर्मवंश्यो गुरुः, न तु "उपनीय ददद्वेदमाचार्यः स उदाहृत" इति स्मृत्युक्तः, तस्येहाप्रसङ्गात्। स च निरुक्तो लैङ्गे—"स्वयमाचरते यस्मादाचारे स्थापयत्यपि। आचिनोति च शास्त्रार्थानाचार्यस्तेन चोच्यत" इति। तेनैव यद्दत्तम्। स्वस्मै इति शेषः। तथा तेन—आचार्येण। यत्प्रतिष्ठितं—देवप्रतिष्ठाविधिना स्थापितं भवेत्। णिजर्थोऽत्र विवक्षितः। तच्च कृष्णस्वरूपं सेव्यं—प्रतिदिनं सेवनीयम्। उक्ताद्वक्ष्यमाणाद्वानन्तरश्लोकात्सर्वैरिति पदमत्राप्याकृष्यते। इतरत्—आचार्येणादत्तमप्रतिष्ठितं वा। यत् तत्तु वन्द्यं—भगवद्भावेन वन्दनीयमेव, न तु प्रतिदिनमर्चनी-

कृष्णार्चायाः शुभाश्रयतया परिगणनेऽपेक्षितं विशेषमाह—आचार्येणैवेति। आचार्येण या दत्ता प्रत्यहमाराधनाय सा, या च तेन सर्वार्थतया प्रतिष्ठिता, ते एव कृष्णार्चे सेव्ये—शुभाश्रयतया ग्राह्ये। आचार्योपदिष्ट एव मन्त्रो यथा ध्याने करणतयाऽऽलम्बनं तथा ध्येयस्वरूपमपि तेन निर्दिष्टं विषयतया ध्यानालम्बनं भवितुमर्हति। यथा वेदस्याध्ययनं संस्कारो

आचार्येण दत्तस्य प्रतिष्ठितस्यैव वा ध्येयत्वं नान्यस्येत्यत्र युक्तिमाह—यथेत्यादिना। अध्ययनं

यम् । सेवकैश्च भगवच्छ्रीमूर्त्तौ शिलादिबुद्धिर्न कर्त्तव्या । "शिलादिधीः कृष्णमूर्त्तौ स्वगुरौ नरधीस्तथा । वैष्णवे जातिधीर्येषां तेऽपराधपरा जना" इति पञ्चरात्रे तस्या अपराधत्वोक्तेः । तथाऽभियुक्तवचनमपि—"अर्चाविष्णौ शिलाधीर्गुरुषु नरमतिर्वैष्णवे जातिबुद्धिर्विष्णोर्वा वैष्णवानां कलिमलमथने पादतीर्थेऽम्बुबुद्धिः । शुद्धे तन्नाममन्त्रे पुरुकलुषहरे शब्दसामान्यबुद्धिर्विष्णौ सर्वेश्वरेशे तदितरसमधीर्यस्य वा नारकी स" इति । अत्र भगवत्प्रतिमाया वन्द्यत्वे विशेष उक्तो निर्णयसिन्धौ नारदीये—"यः शूद्रेणार्चितं लिङ्गं विष्णुं वा प्रणमेन्नरः । न तस्य निष्कृतिर्दृष्टा प्रायश्चित्तायुतैरपि । योषिद्भिः पूजितं लिङ्गं विष्णुं वापि नमेत्तु यः । स कोटिकुलसंयुक्त आकल्पं रौरवं वसे"दिति ॥ ६२ ॥

मन्त्रस्य गुरूपदेशः संस्कारस्तथाऽर्चाया अप्याचार्येण निध्यातत्वं संस्कारः । असति तस्मिन्संस्कारे शिष्यस्य ध्याने विषयीभूय नोपकुर्यादर्चाविशेषोऽपि । अन्यास्त्वर्चाः कृष्णस्य वन्द्याः, भगवद्रूपत्वात् ॥ ६२ ॥

नाम—आचार्योच्चारणानूच्चारणरूपमक्षरराशिग्रहणफलकम् ॥ ६२ ॥

---

भगवन्मन्दिरं सर्वैः सायं गन्तव्यमन्वहम् ।
नामसङ्कीर्त्तनं कार्यं तत्रोच्चै राधिकापतेः ॥ ६३ ॥

भगवदिति । सर्वैरपि भक्तैः । अन्वहं—अहरहरनु । सायं—दिनान्तसमये । भगवन्मन्दिरं—भगवतः स्थिरमूर्त्तेश्चलमूर्त्तेर्वा श्रीकृष्णस्य मन्दिरं प्रति । गन्तव्यम् । दर्शनार्थमिति शेषः । तत्र च राधिकापतेः—श्रीकृष्णस्य । नामसङ्कीर्त्तनं—नाम्नां—गुणकर्माभिधानानां सम्यक्—एकाग्रचेतसा कीर्त्तनं—उच्चारणम् । उच्चैः—उच्चस्वरेण । कार्यम् । मुहूर्त्तमिति ज्ञेयम् । कलौ भगवन्नामसङ्कीर्त्तनस्यैव परममुक्तिसाधनत्वेन विधानादिति भावः । उक्तं हि श्रीमद्भागवते—"कलेर्दो-

अर्चाप्रसङ्गादादिश्यते—भगवदिति । यद्वा-सायंसमये कर्त्तव्यमादिश्यते सामान्यतः । सर्वैरसदाश्रितैः सर्वार्थमस्माभिरसदीयैर्वा प्रतिष्ठापितं भगवन्मन्दिरमन्वहं सायमनुप्राप्य तत्र भगवद्दर्शनजनितानन्दपरवशैरुच्चैस्तन्नामसङ्कीर्त्तनं कार्यम् । अत्र गन्तव्यं, नामसङ्कीर्त्तनं

* प्रासङ्गिकतयाऽवतरणेऽस्वारस्यमभिप्रेत्य प्रकारान्तरेणावतारयति—यद्वेति । पूर्वं हि "प्रत्यहं तु प्रबोद्धव्यं पूर्वमेवोदयाद्रवे"रिति प्रस्तुलाऽऽप्रबोधात्कर्त्तव्यताया निरूपणादस्मिन्प्रकरणे सायं कर्त्तव्यतानिरूपणं सङ्गतमिति भावः । वाक्यभेदोऽपि सह्येत, अवश्यमर्थभेदो विधेयश्चेत्, स च नास्तीत्याशये-

षन्निधे राजन्नस्ति ह्येको महान् गुणः । कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥ कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः । द्वापरे परिचर्यायां कलौ तद्धरिकीर्त्तनात् ॥ कृष्णवर्णं त्विषाऽकृष्णं साङ्गोपाङ्गास्त्रपार्षदम् । यज्ञैः सङ्कीर्त्तनप्रायैर्यजन्ति हि सुमेधसः ॥ कलिं सभाजयन्त्यार्या गुणज्ञाः सारभागिनः । यत्र सङ्कीर्त्तनेनैव सर्वः स्वार्थोऽभिलभ्यत" ॥ इति । वैष्णवे च—"ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ सङ्कीर्त्य केशव"मिति । वाराहे च—"धन्यास्ते ते कृतात्मानस्तैरेव सुकृतं कृतम् । तैराप्तं जन्मनः प्राप्यं ये कलौ कीर्त्तयन्ति मा"मिति । स्कान्दे च—"कलिकालकुसर्पस्य तीक्ष्णदंष्ट्रस्य मा भयम् । गोविन्दनामदावेन दग्धो यास्यति भस्मता"मिति । बृहन्नारदीये च—"हरिनामवदा ये च घोरे कलियुगे नराः । त एव कृतकृत्या वै न कलिर्बाधते हि ता"निति । पाद्मे च—"हरे ! केशव ! गोविन्द ! वासुदेव ! जगत्प्रभो ! । इतीरयन्ति ये नित्यं नहि तान्बाधते कलि"रिति । विष्णुधर्मोत्तरे च—"ये प्रत्यहं जगद्धातुर्वासुदेवस्य कीर्त्तनम् । कुर्वन्ति तान्नरव्याघ्र ! न कलिर्बाधते नरा"निति । विरिञ्चिसर्वस्वे च—"नाम्नां हरेः कीर्त्तनतः प्रयाति संसारपारं दुरितौघमुक्तः । नरः स सत्यं कलिदोषजन्मपापं निहन्त्याशु किमत्र चित्र"मिति । सौपर्णे च—"मुहूर्त्तमपि यः कीर्त्तेन्नारायणमतन्द्रितः । सोऽपि सिद्धिमवाप्नोति किं पुनस्तं सदोच्चर"न्निति । एतच्च स्त्रीपुंसानामसाङ्कर्येणैवोक्तं नारदपञ्चरात्रे—"स्त्रियः स्त्रीणां सभामध्ये पुमांसश्च तथा नृणाम् । उपविश्यान्वहं कुर्युः कृष्णकीर्तिं न चान्यथे"ति ॥ ६३ ॥

---

कार्यमिति न विधिद्वयं, विधेयभेदेन वाक्यभेदापत्तेः, गमनमात्रस्याविधेयत्वाच्च । यद्वा—गन्तव्यं, गत्वा तत्र वागिन्द्रियसम्पन्नैर्नामसङ्कीर्त्तनं कर्त्तव्यमिति विधिद्वयमेव । एतेन नामसङ्कीर्त्तनशेषत्वे गमनस्य मूकानामगमनमभ्यनुज्ञातं स्यादिति शङ्का परास्ता । उच्चैरित्यनेन लज्जाराहित्यं विवक्षितम् ॥ ६३ ॥

---

नाह—गमनमात्रस्याविधेयत्वाच्चेति । नामसङ्कीर्त्तनस्यैव विधेयत्वे न्यूनतां पर्यालोचयन्नाह—यद्वेति । उच्चैरित्यनेन शब्दे न स्वरूपतो गुणविशेषो विवक्षितः, किन्तु लज्जाराहित्यमित्याशयेनाह—उच्चैरित्यनेनेति ॥ ६३ ॥

कार्यास्तस्य कथावार्त्ताः श्रव्याश्च परमादरात् ।
वादित्रसहितं कार्यं कृष्णकीर्त्तनमुत्सवे ॥ ६४ ॥

कार्या इति । नामसङ्कीर्त्तनानन्तरम् । तस्य—श्रीकृष्णस्य सम्बन्धिनी कथा—कथनं कथा । दशमस्कन्धादेर्यथावकाशं वाचनमित्यर्थः । तथा तस्य श्रीकृष्णस्य सम्बन्धिन्यो वार्त्ताः । प्राकृतभाषया सोपपत्तिकं गुणवर्णनमित्यर्थः । सा च ताश्च । कार्याः—कर्त्तव्याः । परमादरात्ताः श्रव्याश्च । भगवत्कथाश्रवणकीर्त्तनादेर्मोक्षहेतुत्वादिति भावः । तथा चोक्तं श्रीभागवते—"शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥ शृण्वन्गृणन्संस्मरयंश्च चिन्तयन्नामानि रूपाणि च मङ्गलानि ते । क्रियासु यस्त्वच्चरणारविन्दयोराविष्टचेता न भवाय कल्पते ॥ इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः । अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णनम् ॥ पिबन्ति ये भगवत आत्मनः सतां कथामृतं श्रवणपुटेषु सम्भृतम् । पुनन्ति ते विषयविदूषिताशयं व्रजन्ति तच्चरणसरोरुहान्तिकम् ॥ ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्रमात्मप्रसाद उभयत्र गुणेष्वसङ्गः । कैवल्यसम्मतपथस्त्वथ भक्तियोगः को निर्वृतो हरिकथासु रतिं न कुर्यात् ॥ अशेषसङ्क्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः ॥ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च । तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् । मद्वार्त्तायातयामानां न बन्धाय गृहा मताः ॥ नोत्तमश्लोकवार्त्तानां जुषतां तत्कथामृतम् । स्यात्सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुज"मित्यादि ।

उत्सवे—एकादश्यादौ । वादित्रैः—वीणामृदङ्गादिभिर्वाद्यैः सहितम् । कृष्णस्य कीर्त्तनम् । उपलक्षणमेतन्महापूजादेरपि । कार्यं—कर्त्तव्यम् । "अभ्यङ्गोन्मर्दनादर्शदन्तधावाभिषेचनम् । अन्नाद्यं गीतनृत्यानि पर्वणि स्युरुतान्वह"मिति भगवदुक्तेः ॥६४॥

---

अथ भगवतो गुणचेष्टितानुवर्णनं परमादरेण कार्यं, परैः क्रियमाणं श्रोतव्यं च तथेत्याह—कार्या इति । तस्य—राधिकापतेः । कथावार्त्ताः व्याख्याताः परमादरात्कार्याः, परमादराच्छ्रव्याश्च । उत्सवदिने विशेषमाह—वादित्रेति । वीणावेणुमृदङ्गादिसहितं भगवतो गुणगीतानि गेयानीत्यर्थः ॥ ६४

---

कथावार्त्ता व्याख्याता इति । कथाशब्दो वार्त्ताशब्दश्च प्रागेव व्याख्याताविति भावः । परमादरादित्यस्योभयत्रान्वयमाह—परमादरात्कार्याः परमादराच्छ्रव्याश्चेति ॥ ६४ ॥

**प्रत्यहं कार्यमित्थं हि सर्वैरपि मदाश्रितैः।**
**संस्कृतप्राकृतग्रन्थाभ्यासश्चापि यथामति ॥ ६५ ॥**

प्रत्यहमिति । इत्थं हि–"प्रत्यहं तु प्रबोद्धव्य"मित्यादिश्लोकोक्तप्रकारेणैव। हीत्यवधारणे। सर्वैरपि मदाश्रितैः पुरुषैः। प्रत्यहं–प्रतिदिनम् । कार्यं–कर्त्तव्यम्। नित्यकर्मेति ज्ञेयम्। तथा–संस्कृताः–देवभाषाशब्दरचिताः, प्राकृताः–लौकिकभाषाशब्दरचिताश्च ग्रन्थाः–आस्तिकसन्दर्भास्तेषामभ्यासः–मुहुरालोचनं सोऽपि। यथामति–स्वस्वबुध्यनुसारेण प्रत्यहं कर्त्तव्यमित्यर्थः। तस्यैव धर्माधर्मस्वरूपज्ञानमूलत्वादिति भावः। "यथा यथा हि पुरुषो नित्यं शास्त्रं निषेवते। तथा तथा विजानाति विज्ञानमथ रोचत" इति भारतीयराजधर्मोक्तेः। "तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थिता"विति श्रीभगवद्गीतायां भगवदुक्तेश्च। "पशुतुल्यो नरो ज्ञेयः सच्छास्त्राभ्यसनं विने"ति पाद्मोक्तेश्च। विदुरश्चाह—"अविद्यः पुरुषः शोच्य" इति ॥ ६५ ॥

---

प्रत्यहं त्वित्यादिना प्रसक्तं निगमयति—प्रत्यहमिति । सर्वैरपि–अभ्यनुज्ञातव्यावहारिकैरपीत्यर्थः। इत्थं हि–इत्थमेव । अव्ययानामनेकार्थत्वात् । यद्वा–इत्थं कार्यं हि। नेदमपूर्वमधुनातनं शासनं, वैष्णवधर्मप्रतिपादकेष्वार्षग्रन्थेषु सुप्रसिद्धं नामेति भावः। अथोपदिष्टार्थदार्ढ्यायात्महितपरा ये प्रबन्धास्ते परिशीलनीया इत्याह—संस्कृतेति। मदाश्रितैरित्यनुषज्यते। ग्रन्थाः–प्रबन्धाः। ते च तत्त्वदर्शिभिरुपनिबद्धा देवभाषया देशभाषया च, तत्त्वहितपराः प्रबन्धा इत्येतत् । ग्रन्थः-शब्दसन्दर्भो वा, तेनोपनिषदामपि सङ्ग्रहः। तेषां–तदर्थानामभ्यासः–पुनःपुनर्मननम्। उपदेशसमधिगततत्त्वार्थेन सहैकीकृत्य पर्यालोचनं यथामति कार्यम्। न्यायसंस्कारसमुचितमतिविशेषशालिना कर्त्तव्यम् ॥ ६५ ॥

---

हिशब्दस्यैवकारार्थतया व्याख्यानं कथमिति शङ्कायामाह—अव्ययानामनेकार्थत्वादिति । अप्रसिद्धार्थकत्वेत्यस्वरसादाह—यद्वेति । नहि यः कश्चित्संस्कृतप्राकृतग्रन्थाभ्यास आदेष्टुं योग्यः, मुमुक्षूणामनुपयोगात्प्रातिकूल्याच्चातं आह—तत्त्वहितपराः प्रबन्धा इत्येतदिति । प्रकरणवशादस्यार्थस्य लाभः। ग्रन्थः—शब्दसन्दर्भो वेति । अयं भावः—ग्रथनकर्मत्वमिह न विवक्षितं, तथा सत्युपनिषदामिह सङ्ग्रहो न स्यात्, ता ह्यनादिनिधनाः, तथासति सर्वप्रमाणभूतस्यापौरुषेयस्य वेदस्याभ्यासेऽनादरः कृत इत्याशङ्का स्यात्, तस्मादत्र ग्रन्थशब्दस्य शब्दसन्दर्भमात्रपरतैव, तथा चोपनिषदामपि सङ्ग्रहो भवतीति न न्यूनतेति ॥ ६५ ॥

यादृशैर्यो गुणैर्युक्तस्तादृशे स तु कर्मणि ।
योजनीयो विचार्यैव नान्यथा तु कदाचन ॥ ६६ ॥

यादृशैरिति । यः—मनुष्यः । यादृशैः—यादृग्भिः । गुणैः—धार्मिकत्वादिभिः । युक्तः—विशिष्टः स्यात् । स तु । तादृशे—तद्गुणानुसारिण्येव कर्मणि । विचार्य—तद्गुणनिश्चयं कृत्वा । योजनीयः । अन्यथा—उक्तवैपरीत्ये तु । कदाचन—क्वापि । न योजनीयः । यथाह याज्ञवल्क्यः—"धर्मकृत्येषु धर्मज्ञानर्थकृत्येषु पण्डितान् । स्त्रीषु क्लीबान्नियुञ्जीत नीचान्नीचेषु कर्मस्वि"त्यादि । विदुरश्चाह—"त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः । नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मस्वि"ति । सभापर्वणि नारदश्चाह—"कच्चिद्विदित्वा पुरुषानुत्तमाधममध्यमान् । त्वं कर्मस्वनुरूपेषु नियोजयसि भारते"ति ॥ ६६ ॥

---

एवमादिश्यात्यन्तिकश्रेयसेऽन्वहमनुष्ठेयं धर्मम्, अथ "कर्त्तव्यं व्यावहारिक"मित्यभ्यनुज्ञाते व्यावहारिके विशेषं प्रसङ्गादादिशति श्रेयसे—यादृशैरित्यादिभिः । यो यद्गुणः स तद्गुणानुगुणकर्मसु योजनीयः, नान्यथा, तथासत्यर्थहानिप्रसङ्गादिति भावः । सत्यपि परितो विभवेऽपर्यालोच्य विनियोज्यगुणं विनियोजनं हि विभवहानये, तद्विनियोज्यगुणपरिशीलनमेव तु व्यावहारिके प्रवृत्तानामवश्यापेक्षितो विवेकः ॥ ६६ ॥

---

विनियोज्यगुणमिति । विनियोज्यस्य गुणमित्यर्थः ॥ ६६ ॥

---

अन्नवस्त्रादिभिः सर्वे स्वकीयाः परिचारकाः ।
सम्भावनीयाः सततं यथायोग्यं यथाधनम् ॥ ६७ ॥

अन्नेति । स्वकीयाः—स्वस्येमे स्वकीयाः, स्वसम्बन्धिनः । परिचारकाः—परिचर्यां कर्त्तारः । उपलक्षणमेतत्पोष्यवर्गस्य । पोष्या उक्ताः काशीखण्डे—"माता पिता गुरुः पत्नी चापत्यानि समाश्रिताः । अभ्यागतः प्रपन्नोऽग्निः पोष्यवर्गा अमी नवे"ति । ते सर्वेऽपि । अन्नवस्त्रादिभिः । आदिशब्दाद्रसौषधादिग्रहणम् । यथायोग्यं—यथाधिकारम् । तथा यथाधनं—निजधनानुसारतश्च । सततं—प्रतिदिनम् । सम्भावनीयाः—सन्तोषणीयाः, न तु क्लेशनीयाः । तदुक्तं स्कान्दे—

---

ये परिचरन्त्यात्मानमात्मीयान्वा, ते काले कालेऽन्नवस्त्रादिदानेन तोषयितव्याः । प्रभोः परिजने दाक्षिण्यमेव हि महान्गुणः परतोऽपि कल्याणायेत्याह—अन्नेति । सम्भाव-

---

प्रभोरिति । महान्गुण इत्यनेनान्वयः । परतोऽपि कल्याणायेति' । अपिनैहिककल्याणस्य

"भरणं पोष्यवर्गस्य दृष्टादृष्टफलोदयम्। प्रत्यवायो ह्यभरणे भर्त्तव्यस्तत्प्रयत्नत" इति। तथा–"स जीवति पुमान्योऽत्र बहुभिश्चोपजीव्यते। जीवन्मृतोऽथ विज्ञेयः पुरुषः स्वोदरंभर" इति। भारते च—"एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम्। असंविभज्य भृत्येभ्यः को नृशंसस्ततः पर" इति। "अक्रोधः सत्यवचनं संविभागः क्षमा घृणा। प्रजनः स्वेषु दारेषु शौचमद्रोह एव च। आर्जवं भृत्यभरणं दशैते सार्ववर्णिका" इति च ॥ ६७ ॥

नीयाः–तोषयितव्याः। सततं–काले काले। यथायोग्यं–परिजनवृत्त्यानुगुण्येन। यथाधनं स्वस्य ॥ ६७ ॥

सम्पत्तिः सुप्रसिद्धेति ज्ञाप्यते। काले काल इति। प्राप्तकालेष्विति यावत्। यथायोग्यमित्यस्यार्थमाह—परिजनवृत्त्यानुगुण्येनेति। स्वस्येति। स्वामिन इति यावत् ॥ ६७ ॥

---

**यादृग्गुणो यः पुरुषस्तादृशा वचनेन सः।**
**देशकालानुसारेण भाषणीयो न चान्यथा ॥ ६८ ॥**

**यादृग्गुण** इति। किञ्च–यः पुरुषः। यादृग्गुणः–यादृशो गुणा यस्य सः, यादृग्जातिकुलविद्यातपोयोगैश्वर्यप्रतापादिगुणविशिष्टो भवेत्। सः। तादृशा–तत्तद्गुणविशिष्टेन। तथा–देशकालानुसारेण–देशश्च कालश्च तयोरनुसरणं यस्य तेन। तत्तद्देशकालावनुसृत्य योजितेनेत्यर्थः। वचनेन। भाषणीयः। न त्वन्यथा। "वर्णाश्रमकुलोपेतान्योगिनश्च सतो नरान्। राजकीयांश्च शूरांश्च भाषयेत यथोचितं"-मिति नीतिविवेकोक्तेः। तत्र देशानुसारेण यथा–स्वशिष्यो गुणसम्पन्नः स्वगृहादावेकवचनेनाऽऽभाष्यमाणोऽपि सभादौ बहुवचनेनैवाभाषणीय इति। काला-

प्रायो मिथः प्रणयो ह्याभाषणेन भवति, यद्याभाषणे वैगुण्यं न स्यादेव प्रणयानुबन्धः, तद्देशकालाद्यानुगुण्येनाभाषणकौशलमवश्यापेक्षितमित्यभिप्रेत्याह—यादृगिति। जातिकुलविद्यादिभिर्यदि महत्तरः कश्चित्, स तु वयसा बालोऽपि तदनुगुणेन गौरवगर्भितेनैव भाषणीयः। यदि च परिमिताभाषणशीलः स तु परिमितेनैव कतिपयगभीरशब्दविन्यासेन। यदि बह्वालापनपरः स तु प्रियतराधिकतरवचनविन्यासेन। पुरुषगुणानुगुण्यमिव देशाद्यानुगुण्यमप्याभाषणेऽवश्याश्रयणीयमित्याह—देशेति। बाल्यमित्रमपि प्राड्विवेकादिरधिकरणस्थाने

देशकालगुणानुगुण्येन सम्भाषणस्य कर्त्तव्यत्वे निमित्तं प्रदर्शयन्नवतारयति—प्राय इत्यादिना। यादृग्गुणो य इत्येतद्व्याचष्टे—जातीत्यादिना। जातिः–ब्राह्मणादिः। कुलं–अन्ववायः। तत्र महत्तरत्वं प्रतिष्ठितमूलपुरुषकत्वनिबन्धनम्। विद्या–त्रयीप्रभृति। गौरवगर्भितेनेति। वचनेनेति शेषः। देशानुगु-

नुसारेण यथा—स्वशिष्योऽपि वयसा वृद्धश्चेद्बहुवचनेनैवाभापणीय इत्यादि स्वयमूह्यम् । अत्र गुणस्यैव ग्रहणात्तद्विपरीतदोषविशिष्टानां न तथोच्चारणं कर्त्तव्यमिति गम्यते ॥ ६८ ॥

न मैत्र्यानुगुण्येन यथेच्छं भापणीयः । किन्तु देशानुगुण्येन राजसन्निधाविव सप्रश्रयमेव । एवं परस्य शोकसमयमालक्ष्य स्वयमपि तत्समयानुगुणं तेन सह भाषेत न तु प्रहृष्टभावेन । एवमाभापमाणो हि व्यवहारेऽपि श्रेयो लभेत् ॥ ६८ ॥

ण्यमाभापणीयतामुदाहरति—बाल्येति । कालानुगुण्यमुदाहरति—एवं परस्येति ॥ ६८ ॥

---

गुरुभूपालवर्षिष्ठत्यागिविद्वत्तपस्विनाम् ।
अभ्युत्थानादिना कार्यः सन्मानो विनयान्वितैः ॥ ६९ ॥

गुर्विति । विनयान्वितैः—विनयोपेतैर्मदाश्रितैः । गुरुः—मन्त्रोपदेष्टा, विद्याध्यापकः, पित्रादिश्च । भूपालः—नृपतिः । वर्षिष्ठः—वयोवृद्धः । त्यागी—वैराग्यबलेन भगवत्प्रीत्यर्थं त्यक्तगृहाश्रमः साधुः । विद्वान्—अधीतवेदशास्त्रपुराणादिः । तपस्वी—भगवदाराधनार्थं कृच्छ्रचान्द्रायणादिव्रतपरः । एतेषां द्वन्द्वः । तेषाम् । अभ्युत्थानं—तं दृष्ट्वैव स्वासनादुत्थानं तदादिर्यस्य प्रणामासनोपवेशनादेः सत्कारस्य तेन । सन्मानः—आदरः । कार्यः । अन्यथा भूयनर्थापत्तिः स्यादिति भावः । श्रूयते हि श्रीभागवते षष्ठस्कन्धे बृहस्पत्यनभ्युत्थानेन देवेन्द्रस्य स्वाराज्यच्यवनाद्यनर्थापत्तिः, अष्टमे चागस्त्यानादरेणेन्द्रद्युम्नस्य गजयोनिप्राप्त्याद्यनर्थापत्तिरिति ।

अथाभ्युत्थानयोग्येष्वभ्युत्थानस्य कर्त्तव्यतामाह—गुर्विति । गुरोः, गुरोरिव भूपालस्य, वर्षिष्ठस्य, वर्षिष्ठस्येव त्यागिनः, विदुषः, विदुष इव च तपस्विनः, अभ्युत्थानादिना सत्कारः कार्य इत्यर्थः । यो विद्यातस्तं जनयति स गुरुः, स चाभ्युत्थानादिना । गुरुरिव वयसाऽवरोऽपि भूपालः सत्कार्यः—अभ्युत्थानेन सत्कार्यः । गुरुरिव राजाऽपि हि धर्मस्याभिरक्षकः । वर्षिष्ठः—वयसा वृद्धः सत्कार्यः, स इव आश्रमतो वृद्धस्त्यागी । विद्वान्—अधिगतशास्त्रः, अधिगतवेदार्थ इत्यर्थः । शास्त्रं हि वेद एव, अन्यत्तु तदङ्गमात्रं, स च, स इव तपस्वी च

गुरुभूपालौ, वर्षिष्ठत्यागिनौ, विद्वत्तपस्विनौ, तेषामित्यर्थः । एवं द्वन्द्वगर्भितद्वन्द्वविवक्षया तत्तद्द्वन्द्वप्रतिपाद्ययोः सत्कार्यत्वे मिथः साम्यं व्यज्यत इत्याशयेन व्याचष्टे—गुरोरिव भूपालस्येत्यादिना । धर्मस्याभिरक्षक इति । एको बोधनेन, अन्यस्तु दण्डादिना प्रवर्त्तनेन । ननु विद्वानित्यविशेषेण श्रूयते, तस्याधिगतवेदार्थ इति विशेषपरतया कथं विवरणमित्यत्राह—शास्त्रं हि वेद एवेति । अन्यत्तु तदङ्गमात्रमिति । तथा च न स्वतः शास्त्रत्वं तस्य, यद्विज्ञानाय यद्विज्ञानं तस्मिन्वेदविज्ञानेऽसत्यन्येन तदङ्गविज्ञानेन किं फलमिति भावः । उपमानोपमेयभावविवक्षया नातीव प्रकृतोपयोग इत्यभिप्रेत्याह—

तत्र वर्षिष्ठेतरे गुर्वादयो बालास्तरुणा वृद्धा वा माननीयाः। "वयोऽवरेऽपि गुर्वादावभ्युत्थानं नमस्क्रियाम्। आतिथ्यं चादरेणैव शक्त्या कुर्वन्सुखी भवे"दिति वायवीयोक्तेः। "ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति। प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यत" इति मनुस्मृतेश्च। "कच्चिद्गुरूंश्च वृद्धांश्च तापसान्देवतातिथीन्। चैत्यांश्च सर्वान्सिद्धार्थान्ब्राह्मणांश्च नमस्यसी"ति वाल्मीकीये भरतशिक्षोक्तेश्च ॥ ६९ ॥

सत्कार्यः। कृच्छ्रचान्द्रायणादिना कायशोषणनिष्ठस्तपस्वी। अयमनधिगतशास्त्रार्थोऽपि तपोनिष्ठतया सत्कार्यः। यद्वा-नात्रोपमानोपमेयभावविवक्षा। अभ्युत्थानादीत्यत्रादिपदेन प्रणिपातो गृह्यते। स च यथायोग्यमन्वेति। अत्र व्यावहारार्थोपक्रमे राज्ञोऽन्वयेन सङ्गतिः, गुर्वादीनामभ्युत्थानादिना सत्करणमैहिकश्रेयसेऽपीत्यपि सुसङ्गतम् ॥ ६९ ॥

यद्वेति। ननु प्रणिपातः क्वचिन्न घटते, नहि भूपालो ब्राह्मणकर्तृकप्रणामपात्रमत आह—स च यथायोग्यमन्वेतीति। ननु व्यावहारिकनिरूपणप्रकरणे गुर्वादीनामभ्युत्थानादिविधानं न समुचितम्, अकरणे परतः प्रत्यवायावहत्वादस्य, तद्धर्मनिरूपण एवास्य विधानमुचितमित्याशङ्कायामाह—अत्रेति ॥६९॥

---

**नोरौ कृत्वा पादमेकं गुरुदेवनृपान्तिके।**
**उपवेश्यं सभायां च जानू बद्ध्वा न वाससा ॥ ७० ॥**

नोराविति। गुरुश्च देवश्च नृपश्च तेषामन्तिकं-समीपं तस्मिन्। अत्र पूर्वश्लोकोक्ता वर्षिष्ठत्यागिविद्वत्तपस्विनोऽपि ज्ञेयाः। एकं पादमूरौ-सक्थ्नि। कृत्वा-निधाय। नोपवेश्यं-न निषद्यम्। वामपादं दक्षिणोरौ निधाय दक्षिणपादं वामोरौ वा निधाय नोपवेश्यम्। अत्रैकशब्दग्रहणादुभौ पादावुभयोर्वोर्निधायोपवेशने तु न दोष इति गम्यते। सभायां चोरौ पादं कृत्वा नोपवेश्यम्। "आचार्यस्य च वृद्धादेरन्तिके च सदस्यपि। वीरासनेन पुरुषो नासीत प्रौढपान्न चे"ति स्मृतेः। वीरासनमाह वसिष्ठः—"एकं पादमथैकस्मिन्विन्यस्योरुणि संस्थितः। इतरस्मिंस्तथा चोक्तं वीरासनमुदाहृत"मिति।

किञ्च-वाससा-उत्तरीयवस्त्रादिना। जानू-जानुद्वयमेकं वा जानुम्।

एवं गुर्वादीनामभ्युत्थानादिना सत्कार्यतामुक्त्वा, अथ तत्सन्निधौ वर्ज्यमासनविशेषमाह—नोराविति। गुरुदेवनृपान्तिके-देवोऽत्रार्चायां सन्निहितो बोध्यः। अन्तिके-सन्निधौ। वर्षिष्ठादिसन्निधेरप्युपलक्षकमेतत्। पादमेकमूरौ कृत्वा वाससा जानुनी बध्वा च

देवस्याप्रत्यक्षत्वादाह—देवोऽत्रार्चायामिति। वर्षिष्ठादीनामपि प्रागभ्युत्थानादिना सत्कार्यताया

वद्धा-पृष्ठतः पर्यावेष्ट्य । जानू इति मध्यदेशग्रहणेन तत्पूर्वापरभागग्रहणमभिप्रेतम् । गुर्वाद्यन्तिके सभायां च नोपवेश्यमिति सम्बन्धः । "पर्यावेष्ट्य श्रोणिपादं वाससाऽग्रे महात्मनाम् । नोपाविशेच्च सदसि पृष्ठे कृत्वा न चोत्तमा"निति सदाचारदीपोक्तेः ॥ ७० ॥

---

नोपवेश्यमित्यन्वयः । सभायामप्येतदासनं वर्ज्यमित्याह—सभायां चेति । सभायां चैवं नोपवेश्यमित्यर्थः ॥ ७० ॥

---

उक्तत्वात्तेषामिहानिर्देशान्न्यूनतेत्याशङ्कायामाह—वर्षिष्ठादिसन्निधेरप्युपलक्षकमिति ॥ ७० ॥

---

**विवादो नैव कर्त्तव्यः स्वाचार्येण सह क्वचित् ।**
**पूज्योऽन्नधनवस्त्राद्यैर्यथाशक्ति स चाखिलैः ॥ ७१ ॥**

विवाद इति । स्वस्याचार्यः—गुरुस्तेन सह । क्वचिदपि । विवादः—तदुक्तिप्रत्याख्यानादिलक्षणो वाक्कलहावमानः । न कर्त्तव्यः । "पालनीयं गुरोर्वाक्यं सर्वथा परमादरा"दिति ब्राह्मोक्तस्वशिष्यधर्मक्षतेः । "गुरोरवज्ञा श्रुतिशास्त्रनिन्दन"मिति प्रागुक्तसनत्कुमारवाक्यान्नरकपातापत्तेश्चेति भावः । अगस्त्यसंहितायां तु गुर्ववमाननादैहिकानर्थापत्तिरप्युक्ता—"यैः शिष्यैस्तु सदाराध्या गुरवो ह्यवमानिताः । पुत्रमित्रकलत्रादिसम्पद्भ्यः प्रच्यवन्ति ते ॥ ये गुर्वाज्ञां न कुर्वन्ति पापिष्ठाः पुरुषाधमाः । न तेषां क्लेशनिस्तारो वर्त्तते मुनिसत्तमे"ति ।

किञ्च—अखिलैर्मनुष्यैः कर्तृभिः । सः—स्वाचार्यः । अन्नं च धनं च वस्त्रं च तान्याद्यानि येषां तैरुपहारैः करणैः । यथाशक्ति पूज्य एवेति । आद्यशब्देन

---

देहयात्राशेषतया प्रवृत्तैरपि लौकिककर्मसु प्रायो विवादः परिहरणीय एव, प्रसक्तानुप्रसक्त्याऽऽचार्येण सह सम्भवन्विवादः सर्वतोऽनर्थायेति सुदूरपरिहरणीय इत्याह—विवाद इति । आवृत्त्या भाव एवं विभाव्यते । विवादो न कर्त्तव्यः—न्याय्येऽप्यर्थेऽसति जीवितक्लेशे विवादो न कार्यः । ममैवेदं नैतस्येत्यर्थिप्रत्यर्थिनोर्मिथो विरुद्धो वादो विवादः । आचार्येण सह तु क्वचिदपि निमित्ते—सत्यपि जीवितक्लेशे न्याय्येऽप्यर्थे विवादो नैव कार्यः । स्वाचा-

---

निषेधद्वयाभिप्रायकतयाऽवतारयति—देहयात्रेत्यादिना । एतेन विवादसामान्यस्य परिहरणीयत्वादाचार्येण सह विवादस्यैकस्य निषेधो नातीव समुचित इत्याशङ्काऽपास्ता । प्रसक्तानुप्रसक्त्येति । एतेनाचार्येण सह विवादस्याघटमानता व्यज्यते । निषेधद्वयाभिप्रायकता कथं घटत इत्यत आह—आवृत्त्या भाव एवं विभाव्यत इति । आचार्येण सह त्विति । तुशब्दादितरेभ्य आचार्ये वैलक्षण्यं व्यज्यते । क्वचिदित्यस्य भावमाह—सत्यपि जीवितक्लेशे न्याय्येऽप्यर्थ इति । विवादशब्दस्य विवादवि-

---

१ आचार्येणेति पाठान्तरम् ।

गवादिग्रहणम् । "उपहारैर्यथाशक्ति काले काले निजं गुरुम् । अर्चयेद्देववत्प्राज्ञः सर्वदेवमयो गुरु"रिति विष्णुरहस्योक्तेः ॥ ७१ ॥

र्येणेति पाठे साक्षादुपकारकता व्यज्यते । यद्वा—वाक्कलहो न कार्यः, सुतरामाचार्येण सहेत्याह—विवाद इति । विवादः–विरुद्धवादः, वाक्कलह इत्येतत् । स न कार्यः । आचार्येण सह तु क्वचिदपि–रहस्यपि नैव कार्यः । तत्र हेतुरुच्यते—पूज्य इति । अखिलैः–वयोवृद्धैरपि । अन्नधनवस्त्राद्यैरभ्युत्थानप्रणिपातात्मात्मीयार्पणादिभिराचार्यः पूज्यो हि । चो ह्यर्थे । तदित्थं पूज्येन सह विवादो हीहामुत्रानर्थायेति भावः ॥ ७१ ॥

शेषपरतया व्याख्यानेऽस्वारस्यादाह—यद्वेति । वाक्कलह इति । वाक्कलहोऽपीति यावत् । सुतरामाचार्येण सहेति । वाक्कलहो न कार्य इति शेषः ॥ ७१ ॥

---

तमायान्तं निशम्याशु प्रत्युद्गन्तव्यमादरात् ।
तस्मिन्यात्यनुगम्यं च ग्रामान्तावधि मच्छ्रितैः ॥ ७२ ॥

तमिति । मच्छ्रितैः–मदाश्रितैः पुरुषैः । तं–स्वाचार्यम् । आयान्तं–स्वग्राममागच्छन्तम् । निशम्य–श्रुत्वा । आशु–शीघ्रम् । आदरात्–वादित्रादिसहितमित्यर्थः । प्रत्युद्गन्तव्यं–तत्सन्मुखगमनं कर्त्तव्यम् । तथा–तस्मिन्–स्वाचार्ये । याति–स्वग्रामाद्ग्रामान्तरं गच्छति सति । मच्छ्रितैः । ग्रामस्यान्तः–उपशल्यं सोऽवधिर्यस्मिन्कर्मणि यथा तथा । अनुगम्यं–अनुव्रजनं कार्यम् । "प्रत्युद्गच्छेत्समायान्तं यान्तं चानुव्रजेद्गुरुम् । ग्रामान्तावधि सीमान्तावधि वाम्ब्वाशयावधी"ति माधवीयपराशरस्मृतिव्याख्यायां स्मृतेः । ग्राम इत्युपलक्षणं पुरादेरपि । चकाराद्यथाशक्त्युपहारनिवेदनं च कर्त्तव्यम् ॥ ७२ ॥

किञ्च-आचार्यस्तच्छ्रितैरागच्छन्निर्गच्छन्वा यावद्ग्रामान्तं प्रत्युद्गमनानुगमनाभ्यां समर्हणीयो हि । तदेवं प्रत्युद्गमनानुगमनादिसत्कारार्हेणाचार्येण सह विवादो नैव कार्य इत्याह—तमायान्तमिति । चो ह्यर्थे । अयमपि श्लोको हेत्वनुवादरूप एव । मच्छ्रितैरिति पाठे त्वाचार्यस्य प्रत्युद्गमनादिसत्कारविधिपरोऽयं श्लोकः । आश्रितानधिकृत्यायमर्थ आदिश्यते प्रत्युद्गन्तव्यमनुगन्तव्यं चेति । चः समुच्चये । "प्रत्युद्गच्छेत्समायान्तं यान्तं चानुव्रजेद्गुरुम्" इति च वचनम् ॥ ७२ ॥

आगच्छन्निर्गच्छन्वेति । ग्रामादिति शेषः । पूर्वश्लोकशेषतयाऽस्यान्वयमाह—तदेवमिति । विवक्षानुगुण्येनार्थमाह—चो ह्यर्थ इति । अयमपीत्यनेन पूर्वश्लोकोत्तरार्धस्य यथा हेतुपरता तथास्यापीति व्यज्यते ॥ ७२ ॥

---

१ तच्छ्रितैरिति पाठान्तरम् ।

अपि भूरिफलं कर्म धर्मापेतं भवेद्यदि ।
आचर्यं तर्हि तन्नैव धर्मः सर्वार्थदोऽस्ति हि ॥ ७३ ॥

अपीति । भूरि—प्रचुरं फलं—धनलाभादि यस्य तत् । कर्म—या काचित्क्रिया । धर्मादपेतं—रहितं, स्वधर्मविरुद्धमित्यर्थः । तथाभूतं यदि भवेत्तर्हि तन्नैवाचर्यं—नाचरणीयम् । कुतः ? हि—यस्माद्धेतोः । धर्मः—स्वधर्म एव । सर्वानर्थान्—स्वेप्सितपदार्थान्ददातीति तथोक्तोऽस्ति । नहि धर्मानुष्ठातॄणां किञ्चिदपि भोगभोगोपकरणाद्यप्राप्यमित्यर्थः । "धर्मादपेतं यत्कर्म यद्यपि स्यान्महाफलम् । न तत्कुर्वीत मेधावी न तद्धितमिहोच्यत" इति प्रागुक्तपराशरस्मृतेः । "ऐहिकं तु सुखं यत्तद्यच्चाप्यामुष्मिकं सुखम् । धर्मेणैव तदाप्नोति धर्मभ्रष्टो विनश्यती"ति स्मृत्यन्तराच्च ॥ ७३ ॥

---

प्रथममभ्यनुज्ञातं नामाश्रितानामपि देहयात्रानिष्पत्तये लौकिकं कर्म । तत्र लौकिके कर्मणि प्रवर्त्तमानानामवश्यापेक्षितानर्थानेतावता न्यरूपयत् । तत्रादावन्तरङ्गं नियोज्यगुणपरीक्षणं, ततः परिजनेषु दाक्षिण्यं, ततो बहिरापणकौशलं, भूपालादिसत्कार्यजनसत्करणस्य कर्त्तव्यतां, विवादस्यानुचितस्य परिहरणीयतां च क्रमश उक्त्वा, इदानीमेवमादिविशेषानवधृत्य लौकिके प्रवर्त्तमानेन शास्त्राविरुद्ध एव प्रवर्त्तितव्यं न तु तद्विरुद्ध इत्याह—अपीति । दृष्टबहुलाभमपि कर्म, धर्मापेतं—शास्त्रनिषिद्धं यदि तन्न सेव्यं, धर्मो हि चोदनाचोदितः, तदपेतता निषिद्धतैव । धर्मापेतस्य त्याज्यत्वे हेतुमाह—धर्मः सर्वार्थदोऽस्ति हि । धर्म एव ह्यनुष्ठितोऽर्थाय, कामाय, अनभिसंहितफलमनुतिष्ठतो मोक्षाय । तदीदृशधर्मातिलङ्घनं तत्प्रतीपाधर्माचरणमनर्थायैव हि । तद्दृष्टलाभमपि कर्म निषिद्धकोट्यन्तर्गतं चेत् परिहरणीयमेवेति भावः ॥ ७३ ॥

---

दृष्टबहुलाभमपीति । अनेन लोभे प्रबलनिमित्तमुक्तम् । धर्मापेतमित्यस्यापगतश्रेयःसाधनभावमात्रार्थकताभ्रमं व्यावर्त्तयन्व्याचष्टे—धर्मो हीत्यादिना । नन्वैहिकश्रेयःकामेन दृष्टलाभं धर्मापेतमप्यनुष्ठेयमेवेत्याशङ्कायामुच्यते मूले—धर्मः सर्वार्थदोऽस्ति हीति । तदिदं व्याचष्टे—धर्मापेतस्येत्यादिना । दृष्टफलस्येति शेषः । त्याज्यत्वे हेतुमाहेति । दृष्टफलकामैरपीति शेषः । धर्म एव हीति । दृष्टार्थसिद्धिरपि धर्मत एव, ततोऽन्यस्मिन्फलभ्रम एव, मरीचिकायां जलभ्रमवदिति भावः । सर्वार्थसाधनतामुपपादयति—अनभिसंहितेति ॥ ७३ ॥

---

**पूर्वैर्महद्भिरपि यदधर्माचरणं क्वचित्।**
**कृतं स्यात्तत्तु न ग्राह्यं ग्राह्यो धर्मस्तु तत्कृतः ॥ ७४ ॥**

पूर्वैरिति। पूर्वैः–पूर्वकालवर्त्तिभिः। महद्भिः–तपोयोगैश्वर्यादिगुणप्रथितैः शिष्टैरपि। क्वचित्–देशकालादिवैषम्यादापद्दशाद्वा। यत्। अधर्मस्य–अभक्ष्यभक्षादेराचरणम्। कृतं स्यात्। तत्तु न ग्राह्यं–आचरणीयत्वेन नोपादेयम्। अलौकिकाविगीतशिष्टाचारस्यैव प्रामाण्याच्छिष्टकृतमसदाचरणं नैव ग्राह्यम्। शिष्टाचारलक्षणमुक्तं मात्स्ये—"दानं सत्यं तपोऽलोभो विद्येज्या पूजनं दमः। अष्टैतानि चरित्राणि शिष्टाचारस्य लक्षणम्। शिष्टा यस्माच्चरन्त्येनं मनुः सप्तर्षयस्तथा। मन्वन्तरेषु सर्वेषु शिष्टाचारस्ततः स्मृत" इति। दानादीनां लक्षणानि तत एव ज्ञेयानि। शिष्टानामप्यसदाचरणं तु न शोभनम्। "तेजीयसामपि ह्येतन्न सुश्लोक्यं जगद्गुरो!। यद्वृत्तमनुतिष्ठन्वै लोकः क्षेमाय कल्पत" इति श्रीभागवतोक्तेः। तत्कृतः–तैर्महद्भिराचरितः। धर्मः–तपोयोगसत्यदयादिलक्षणः सदाचारस्तु ग्राह्य एव। तेषां हि सदाचारस्यास्मदादिशिक्षणार्थत्वादिति भावः। "धर्मं ग्राहयितुं प्रायः प्रवक्तारश्च देहिनाम्। आचरन्त्यनुमोदन्ते क्रियमाणं स्तुवन्ति चे"ति श्रीभागवते मार्कण्डेयमुनिवाक्यात्। एतद्द्वयमपि भारतीयमोक्षधर्मेषु भीष्मेणोपदिष्टम्—"कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा। नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्। सञ्चिन्त्य मनसा राजन्विदित्वा शक्यमात्मनः। करोति यः शुभं कर्म स वै भद्राणि पश्यती"ति ॥ ७४ ॥

---

ननु–कदाचित्केनचिद्योगेन धर्मतः क्वचित्प्रस्खलनं नातीवानर्थाय, यद्देवेषु ऋषिषु च चोदितादपि धर्मतो निम्नोन्नतमाचरितं श्रूयते, आचारो हि महतामस्माकं प्रमाणमित्यत्राह—पूर्वैरिति। पूर्वैर्महद्भिर्देवैर्महर्षिभिर्वा धर्मतोऽपेतमपि यत्किञ्चिदाचरितं नाम स्यात्तथापि न तदुपादेयमस्माभिः। यत्तु तेषामेव प्रशस्तमाचरणमन्यत् तदेव नः प्रमाणम्। ये हि तपोमहिम्ना वेदान्साक्षात्कृत्य धर्मनिबन्धने प्रभवन्ति, ते हि देवा महर्षयो वा वन्द्याः पर्यनुयोगानर्हचरिताः। तत्तदादिष्टे साधुवर्त्मन्येवास्माभिः स्थेयमिति भावः। तथा च भारते—"कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा। नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्॥" इति ॥ ७४ ॥

---

पर्यनुयोगानर्हचरिता इति। ते हि न विधिनिषेधगोचराः, यत्ते विधिनिषेधावस्मभ्यमादिशन्ति सम्पन्नवेदार्थसाक्षात्काराः, न त आक्षेपार्हा इति भावः। तत्र प्रमाणमाह—तथा चेति ॥ ७४ ॥

**गुह्यवार्त्ता तु कस्यापि प्रकाश्या नैव कुत्रचित्।**
**समदृष्ट्या न कार्यश्च यथार्हार्चाव्यतिक्रमः ॥ ७५ ॥**

गुह्येति। कस्यापीति सामान्ये नपुंसकम्। पुरुषस्य स्त्रिया नपुंसकस्य वा। गुहितुं—परेभ्यः संवरितुं योग्या गुह्या। "शंसिदुही"ति क्यप्। सा चासौ वार्त्ता—वृत्तान्तश्च सा तु। कुत्रचित्—कस्यापि समीपे। नैव प्रकाश्या—नैवोद्घाटनीया। "न कश्चिन्मर्मणि स्पृशे"दिति याज्ञवल्क्योक्तेः। कस्यचिदपि रहस्यवृत्तं न प्रकाशयेदिति तट्टीका। अत एव नरनारायणीयाख्याने नारदेन भगवत्प्रीतिहेतुः स्वगुण उक्तः—"परस्य गुह्यं न च भिन्नपूर्व"मिति।

किञ्च—समदृष्ट्या—सर्वत्रैकमेव ब्रह्मास्तीति बुद्ध्या हेतुभूतया। यथार्ह—यथोचितमर्हा—पूजा तस्या व्यतिक्रमः—अन्यथाकरणम्। न कार्यः। सुकृतिदुष्कृतिषु पूजनसत्कारसाम्ये सदसद्विवेकोच्छेदापत्तेरिति भावः। स च विवेकः श्रीकपिलदेवेन स्पष्टमुपदिष्टः। यथा—"जीवाः श्रेष्ठा ह्यजीवानां ततः प्राणभृतः शुभे!। ततः सचित्ताः प्रवरास्ततश्चेन्द्रियवृत्तयः॥ तत्रापि स्पर्शवेदिभ्यः प्रवरा रसवेदिनः। तेभ्यो गन्धविदः श्रेष्ठास्ततः शब्दविदो वराः॥ रूपभेदविदस्तत्र ततश्चोभयतोदतः। तेषां बहुपदाः श्रेष्ठाश्चतुष्पादस्ततो द्विपात्॥ ततो वर्णाश्च चत्वारस्तेषां ब्राह्मण उत्तमः। ब्राह्मणेष्वपि वेदज्ञो ह्यर्थज्ञोऽभ्यधिकस्ततः॥ अर्थज्ञात्संशयच्छेत्ता ततः श्रेयान्स्वकर्मकृत्। मुक्तसङ्गस्ततो भूयानदोग्धा धर्ममात्मनः॥ तस्मान्मय्यर्पि-

---

गुह्यप्रकाशनं ह्युभयतोऽनर्थाय, तल्लौकिकप्रवृत्तावपि परिहार्यमित्यभिप्रेत्य गुह्यं न कदापि प्रकाश्यमित्याह—गुह्यवार्त्तेति। गुह्यवार्त्ता—गुह्या प्रवृत्तिः। कस्यापि—शत्रोरपि न प्रकाश्या, किं पुनरुदासीनस्य मित्रस्य च। कुत्रचित्—क्वापि निमित्ते, प्रबललाभे सत्यपीति यावत्।

शुनि चैव श्वपाके च ब्राह्मणे गवि हस्तिनि। ज्ञानैकाकारमात्मानमवबुध्य कदाचन॥ औपाधिकाकारभेदमवधूय धृतादरः। सपर्यां सर्वतः कुर्यात्समां वाक्कायतो यदि॥ तदा त्वनर्थमेव स्यान्मर्यादाया विलोपतः। तदधिगतात्मतत्त्वविवेकैरप्यौपाधिकाकारभेदानुरोधेन सपर्याविधौ तारतम्यमवश्यमास्थेयमित्याह—समेति। इदमेव ह्याश्रितेभ्यो विशेषत आदेश्यं, ते ह्यधिगतात्मस्वरूपाः। केचिन्मनोवृत्तिमात्रेण सत्कार्याः, केचिदभ्युत्थानेन, केचिदभ्यु-

---

उभयत इति। इहामुत्र चेत्यर्थः। कुत्रचिदित्यस्यार्थमाह—क्वापि निमित्त इति। निमित्त इति शेषपूरणादयमर्थः। वैवक्षिको वाऽयमर्थः।

अथोत्तरार्धमवतारयति—शुनि चैवेत्यादिना। स्वीयवचनेन सह गीतावचनस्यैकवाक्यतया प्रथनमाह्लादविशेषाय। औपाधिकाकारभेदमिति। ब्राह्मणादिभेदमित्यर्थः। मर्यादाया इति। भगवदाज्ञारूपशास्त्रमर्यादाया इत्यर्थः। केचिन्मनोवृत्तिमात्रेण सत्कार्या इति। ते च जात्याऽन्त्याः, ज्ञान-

ताशेषक्रियार्थोतमा निरन्तरः । मय्यर्पितात्मनः पुंसो मयि सन्न्यस्तकर्मणः ॥ न पश्यामि परं भूतमकर्त्तुः समदर्शना"दिति ॥ ७५ ॥

त्थानप्रणामाभ्याम्, केचिदभ्युत्थानप्रणामपादग्रहणैः । ते ते तेन क्रमेणैव सत्कार्याः । नान्यथा । चण्डालस्त्वात्मविदा मनसैव सत्कार्यः, शुच्यशुचिपिण्डसंश्लेषकृतशास्त्रमर्यादाया अनुल्लङ्घनीयत्वादिति भावः ॥ ७५ ॥

तत्त्वप्रभवाः । अभ्युत्थानेन सत्कार्यास्तु क्षत्रिया ब्राह्मणानामपि । गुरुपत्न्यादयस्तु युवत्यः पादग्रहणानर्हा इति विशेषो बोध्यः ॥ ७५ ॥

---

विशेषनियमो धार्यश्चातुर्मास्येऽखिलैरपि ।
एकस्मिञ्छ्रावणे मासि स त्वशक्तैस्तु मानवैः ॥ ७६ ॥

विशेषेति । चातुर्मास्ये–चत्वारो मासा एव चातुर्मास्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । तस्मिन् आषाढादिमासचतुष्टये । तत्राप्याषाढशुक्लैकादश्या आरभ्य कार्त्तिकशुक्लद्वादशीपर्यन्ते काल इति धर्मशास्त्रानुसारेण तदर्थोऽवगन्तव्यः । अखिलैरपि–मदाश्रितैः पुम्भिः स्त्रीभिश्च । विशेषनियमो धार्यः । चातुर्मास्ये बहवो नियमाः सामान्यतो विशेषतश्च धर्मशास्त्रे स्वस्वधर्मनिष्ठानां चतुर्णां वर्णाश्रमिणां विहिताः सन्ति । तत्र भगवत्सम्बन्धेनोत्तमेषु मया वक्ष्यमाणेषु विशेषनियमेष्वेकतमोऽप्यवश्यं धारणीय इत्यर्थः । अशक्तैः–चतुरो मासान् विशेषनियमधारणासमर्थैर्मानवैस्तु । श्रावणे–श्रावणाख्य एकस्मिन्नेव मासि । स तु–विशेषनियमो धार्यः । तुशब्दोऽवधारणे । चातुर्मास्यव्रतधारणावश्यकत्वमुक्तं हेमाद्रौ भारते–"आषाढे तु सिते पक्ष एकादश्यामुपोषितः । चातुर्मास्यव्रतारम्भं कुर्वीत नियतो नरः । कार्त्तिके शुक्लपक्षे तु द्वादश्यां तत्समापयेत् । अकुर्वंस्तद्व्रतं याति किल्बिषं वत्सरोद्भवम् । एकमासमशक्तस्तु धारयेदेव तद्व्रत"मिति । व्रतारम्भविधिस्तु व्रतराजादवगन्तव्यः ॥ ७६ ॥

अथ कांश्चन नैमित्तिकान्धर्मविशेषानादिशति–विशेषेति । विशेषस्य–धर्मविशेषस्य नियमो धार्यः, वक्ष्यमाणो धर्मविशेषश्चातुर्मास्ये नियमेन विधेय इत्येतत् । अशक्तैस्तु श्रावणे वैकस्मिन् । नन्वशक्तौ त्यज्यतां नाम किमित्ययं निर्बन्धस्तत्राह–मानवैरिति । हन्त !! विहिताननुष्ठाने पशवो नाम ते, कथं निगद्यन्ते मानवा इति, तन्मानवा इति मत्वा वयमादिशामः, यदि पशवस्त्यजन्तु नामेति भावः ॥ ७६ ॥

सामान्यशब्दस्य विशेषपरतामभिप्रेत्य व्याचष्टे–विशेषस्य–धर्मविशेषस्येति । भावमाह–वक्ष्यमाण इति । मानवशब्दस्य हेतुगर्भपरतामभिप्रेत्य व्याचष्टे–नन्वित्यादिना ॥ ७६ ॥

**विष्णोः कथायाः श्रवणं वाचनं गुणकीर्त्तनम् ।**
**महापूजा मन्त्रजपः स्तोत्रपाठः प्रदक्षिणाः ॥ ७७ ॥**
**साष्टाङ्गप्रणतिश्चेति नियमा उत्तमा मताः ।**
**एतेष्वेकतमो भक्त्या धारणीयो विशेषतः ॥ ७८ ॥**

विशेषनियमानेवाह—विष्णोरिति । विष्णोः—श्रीकृष्णस्य । कथायाः—श्रीकृष्णभक्तेन वाच्यमानायाः श्रीमद्भागवतपुराणादिकथायाः । श्रवणं—प्रतिदिनं नियमेन यथाविधि श्रवणं कर्त्तव्यमित्येको नियमः । श्रवणविधिस्तु विधाननिधानस्थश्रीमद्भागवतमाहात्म्यादवसेयः । श्रोतृवक्तृलक्षणान्यपि तत्रैवोक्तानि—"यथार्थवक्ता श्रुतिशास्त्रसूत्रवेत्ता सुवाग्बोधनदक्ष आर्यः । श्रीकृष्णभक्तो निजधर्मनिष्ठो जात्या द्विजन्माऽस्य मतो हि वक्ता ॥ स्वधर्मनिष्ठः शुचिरेकचित्तो भक्तश्चतुर्वर्णज आदृतश्च । पूगाद्यचर्वन्वनिता न पश्यन्तुष्णीपहीनोऽनलसश्च मौनी ॥ न प्रौढपादो नच चञ्चलोऽङ्घ्रिं पादे दधन्नांशुकवेष्टिताङ्घ्रिः । श्रोता मतः पूजितवक्तृवाणिर्दुराग्रहं क्रोधमपि त्यजंश्चे"ति । तथा—विष्णोः—श्रीकृष्णस्य । कथायाः—श्रीमद्भागवतादिरूपायाः । वाचनं—प्रत्यहं नियमेन शुश्रूषुभ्यः श्रावणम्, भगवत्समीपे पारायणं वा । उभयत्रापि विरतिनिषिद्धाध्यायान्ते विरतिर्न कर्त्तव्या । विरतिनिषिद्धाध्याया यथाशक्ति प्रत्यहवाचनीयाध्यायसङ्ख्यानियमश्च विधाननिधानादेवावगन्तव्याः । तत्कर्त्तव्यमित्यपरो नियमः । तथा—विष्णोर्गुणानां—तत्तद्गुणानुसृतानां नाम्नां कीर्त्तनं—प्राकृतभाषानिबद्धानामपि तेषां वाचनं कर्त्तव्यमित्यन्यो नियमः । सर्वत्र प्रत्यहं नियमेनेति ज्ञेयम् । तथा—विष्णोर्महापूजा—पञ्चामृतस्नानमहाभिषेकमहानैवेद्यमहानीराजनादिसहितमर्चनं कर्त्तव्यमिति नियमः । तथा—विष्णोर्मन्त्रस्य—अष्टाक्षरमन्त्रराजस्य जपः—यथाविधि यथाशक्ति जपनमिति नियमः । तथा—विष्णोः स्तोत्राणां—विष्णुसहस्रनामादीनां स्तवानां पाठः—यथाविधि यथासङ्ख्यं प्रतिदिनं पठनं कर्त्तव्यमिति नियमः । तथा—विष्णोः प्रदक्षिणाः—अष्टोत्तरशतादिसङ्ख्यया प्रदक्षिणावर्त्तनानि कर्त्तव्या इति नियमः ॥ ७७ ॥

---

धर्मविशेषमाह—विष्णोरित्यादिना । नियमाः—नियम्यन्ते—कर्त्तव्यतया नियमेन विधीयन्ते ते नियमाः, अवश्यं विधेया इत्येतत् । भगवत्कथाश्रवणतत्पठनगुणकीर्त्तनमहापूजामन्त्रजपस्तोत्रपठनप्रदक्षिणसाष्टाङ्गप्रणामप्रभृतयो नियमा उत्तमा मताः, भगवति

---

श्रवणादिषु नियमत्वमुपपादयन्व्याचष्टे—नियम्यन्त इत्यादिना । भगवति साक्षात्प्रवृत्तत्वा-

साष्टाङ्गेति। अष्टभिरङ्गैः सहिता साष्टाङ्गा प्रणतिः–प्रणामः । तल्लक्षणं प्रागुक्तम्। इत्येतेऽष्टौ नियमाः। मयेति शेषः। **उत्तमा** इति। श्रीकृष्णसम्बन्धात्स्वाभीष्टादप्यधिकोत्कृष्टफलदायिन इत्यर्थः। मताः सन्ति । **चकारो**ऽन्येषामपि विशेषनियमानां समुच्चयार्थः। तथा चोक्तं स्कान्दे चातुर्मास्यमाहात्म्ये ब्रह्मनारदसंवादे—"नियमश्चक्षुरादीनामिन्द्रियाणां हरिं विना। विषयेभ्यः सदा कार्यश्चातुर्मास्ये विशेषतः॥ मनोनियमने यत्नः कार्यः प्रज्ञावता सदा। चातुर्मास्ये विशेषेण कृष्णसञ्चिन्तनादिना॥ अहङ्कारो विषमिदं शरीरे वर्त्तते नृणाम्। तस्मात्स सर्वदा त्याज्यः सुप्ते देवे विशेषतः॥ सत्यमेव सदा भाष्यं नानृतं तु मनीषिणा। चातुर्मास्ये कृष्णप्रीत्यै भाष्यं तद्धि विशेषतः॥ सर्वोपायैर्विष्णुरेव प्रसाद्यो योगिध्येयः प्रवरैः सर्ववर्णैः। विष्णोर्नाम्ना मुच्यते घोरबन्धाच्चातुर्मास्ये स्मर्यतेऽसौ विशेषात्॥ ब्रह्मचर्यात्परं नास्ति सर्वधर्मप्रसिद्धिदम्। चातुर्मास्ये विशेषेण पालनीयं तदुत्तमम्॥ काम एष महाञ्छत्रुः क्रोधो लोभो रसस्तथा। चातुर्मास्ये विशेषात्ते जेयाः स नियमो महा"नित्यादि। एतेषु–नियमेषु मध्ये। "यतश्च निर्धारण"मिति सप्तमी। एकतमः–एक इत्येकतमः। "एकाच्च प्राचा"मिति डतमच्। एकोऽपि नियमः। विशेषतः–विशेषेण। अवश्यमेव भक्त्या धारणीयः। **भक्त्येति** भगवत्प्रीत्यर्थमेव न तु तदतिरिक्तफलान्तरप्राप्तय इति भावः।

विशेषत इत्युक्तेः सामान्यनियमा अपि यथाशक्ति धारणीया इति सूचयति। ते चोक्ता भविष्योत्तरे—"श्रावणे वर्जयेच्छाकं दधि भाद्रपदे तथा। दुग्धमाश्वयुजि मासे कार्त्तिके द्विदलं त्यजे"दिति। "माषमुद्गमसूराश्च चणकाश्च कुलत्थकाः। निष्पावा राजमाषाश्च ह्याढक्यो द्विदलं स्मृत"मिति स्मृतेः। अत्र श्रावणादिशब्दैः प्रथमद्वितीयतृतीयचतुर्था मासा इत्यर्थं इत्याहुः शिष्टाः। स्कान्दे च—"वार्षिकांश्चतुरो मासान्प्रसुप्ते वै जनार्दने। मञ्चखट्वासु शयनं वर्जयेद्भक्तिमान्नरः॥ वृन्ताकं च कलिङ्गं च मूलकं नैव भक्षयेत्। लशुनादि नित्यदुष्टं विशेषेणात्र वर्जयेत्॥ अपि स्वां वर्जयेन्नारीं मासमेकं तु वा गृही। नित्यदानं यथाशक्ति कुर्वीत विजितेन्द्रिय" इति। आचारदीपे च—वृन्ताकं च कलिङ्गं च बिल्वौदुम्बरिभिः सह। उदरे यस्य जीर्यन्ते तस्य दूरतरो हरि"रिति। अपरार्के च—

साक्षात्प्रवृत्तत्वात्। यद्यपि चातुर्मास्ये शाकादिवर्जनरूपोऽपि धर्मविशेषो वर्णितः, ततोऽप्ययं रिति। इन्द्रादितनुमहारीत्वस्य प्रवृत्तत्वादित्यर्थः। ननु चातुर्मास्ये शाकवर्जनस्य विहितत्वात्तदनुक्त्या

"ब्रह्मचर्यं तथा शौचं सत्यमामिषवर्जनम् । व्रतेष्वेतानि चत्वारि वरिष्ठानीति निश्चय" इति । आमिषाण्युक्तानि पराशरादिभिः—"प्राणिरोमादि चर्माम्बु बहुबीजं च यत्फलम् । धान्ये मसूरिका चैव द्विजक्रीता रसास्तथा ॥ भुजि प्रत्यक्षलवणमन्नं विष्ण्वनिवेदितम् । अगालितं च पानीयं दुग्धं लवणयुक् तथा ॥ गोछागीमहिषीदुग्धादन्यदुग्धादिकं च यत् ।तत्सर्वमामिषं प्रोक्तं मांसं च प्राणिसम्भवम् ॥ एतद्वर्ज्यं सदा प्राज्ञैश्चातुर्मास्ये विशेषत" इति । अन्ये काम्यनियमास्तु व्रतहेमाद्रेरवगन्तव्याः ॥ ७८ ॥

---

सारतमः, भगवद्गुणश्रवणादिरूपत्वात् । यद्यप्येते सर्वे नैकेनानुष्ठातुं शक्येरन्, तद्यथासम्भवमेष्वन्यतमो वाऽवश्यं भक्त्याऽनुष्ठेयः, प्रेम्णैव, न तु फलाभिसन्ध्या । अन्यथा काम्यत्वेन मुमुक्षूणामनुपादेयत्वादिति भावः ॥ ७७ ॥ ७८ ॥

---

न्यूनतेत्याशङ्कां निराकुरुते—यद्यपीत्यादिना । ततोऽप्ययं सारतम इति । सारतमत्वादेषां प्राधान्येन निरूपणमिति भावः । भक्त्येत्येतद्व्याचष्टे—प्रेम्णैवेति ॥ ७७ ॥ ७८ ॥

---

## एकादशीनां सर्वासां कर्त्तव्यं व्रतमादरात् ।
## कृष्णजन्मदिनानां च शिवरात्रेश्च सोत्सवम् ॥ ७९ ॥

**एकादशीनामिति** । सर्वासां—शुक्लानां कृष्णानां च । एकादशीनां व्रतं—उपवासपूजाजागरणादिलक्षणो नियमः । आदरात्सोत्सवं कर्त्तव्यं, न तु कायक्लेशभयात्परिहर्त्तव्यम्, तस्य नित्यत्वादिति भावः । तथा च निर्णयसिन्धौ नारदः प्राह—"नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः । पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषण"मिति । कालमाधवे कात्यायनश्च—"अष्टवर्षाधिको मर्त्त्यो ह्यशीतिन्यूनवत्सरः । एकादश्यामुपवसेत्पक्षयोरुभयोरपी"ति । हेमाद्रौ लघुनारदीये चोक्तम्—"एकादश्यां तु यो भुङ्क्ते नरोऽन्नं स तु पातकी । विण्मूत्रपूयवा-

---

भगवतोऽत्यन्तप्रीणनमकरणेऽनर्थावहं व्रतविशेषं प्रीतिपूर्वकं कर्तव्यतया विधत्ते—एकादशीति । सम्बन्धसामान्ये षष्ठी, एकादशीनिमित्तकं व्रतमित्येतत् । सर्वासामित्यतोऽविशेषेणैकादशीत्वेन व्रतनिमित्तत्वमेकादश्यामवगम्यते । व्रतं चोपवासादिनियमरूपमा-

---

अकरणेऽनर्थावहमिति । तेन नित्यत्वं व्यज्यते । प्रीतिपूर्वकमिति । तेन फलाभिसन्धिर्व्यावर्त्यते । सम्बन्धसामान्ये षष्ठीति । निमित्तनिमित्तिभावरूपः सम्बन्धः सम्बन्धत्वेनेह विवक्षित इत्याशयेनाह—एकादशीनिमित्तकं व्रतमित्येतदिति । फल एव सर्वेषामादरः स्वाभाविक इत्यभिप्रेत्य

हिन्यां पतत्येव न संशय"इति । कचिद्गृहिणां चातुर्मास्येतरकृष्णैकादश्युपवासनिषेधः स्मर्यते स त्ववैष्णवविषयः । "यथा शुक्ला तथा कृष्णा यथा कृष्णा तथोत्तरा । तुल्ये ते मन्यते यस्तु स वै वैष्णव उच्यत"इति तत्त्वसागरे भविष्योत्तरोक्तेः । विस्तरो हेमाद्रेर्ज्ञेयः । व्रतघ्नान्याह देवलः—"असकृज्जलपानाच्च सकृत्ताम्बूलचर्वणात् । उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात् ॥ वृथा व्रतमश्रद्धस्य क्रोधितस्य वृथा व्रतम् । ब्रह्मचर्यविहीनस्य व्रतं न फलदं क्वचित् ॥ स्त्रीणां तु प्रेक्षणात्स्पर्शात्ताभिः सङ्कथनादपि । विपद्यते ब्रह्मचर्यं स्वदारेषु तु सङ्गमात् ॥ अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा । उपवासाद्व्रताद्वापि सद्यो भ्रंशयति स्त्रियम् ॥ ( स्त्रियमित्युपलक्षणम् । ) दानं व्रतानि नियमा ज्ञानं ध्यानं हुतं जपः । यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवे"दिति ।

उपवासस्वरूपं कात्यायनवृद्धवसिष्ठाभ्यां दर्शितम्—"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह । उपवासः स विज्ञेयः सर्वभोगविवर्जितः ॥ तज्जप्यजपनध्यानतत्कथाश्रवणादयः । उपवासकृतामेते गुणाश्चान्ये दयादय" इति । अत्र तच्छब्देन स्वोपास्यदेवता व्रतदेवता वोच्यते । एवं च पापनिवृत्त्या गुणानुष्ठानेन च सहितो निराहारस्य वासः—अवस्थानमुपवास इत्यर्थः । अत्र काष्ठेन दन्तधावननिषेधः प्रागुक्तः । "अपां द्वादशगण्डूषैर्जिह्वोल्लेखनया तथा । पर्णाद्यैर्मुखशुद्धिं वा कुर्यादुपवसन्पुमा"निति नारदश्चाह । व्रतार्के तु पकान्नस्यावलोकनाद्यपि निषिद्धम्—"अन्नस्य दर्शनाघ्राणे स्मरणं गुणकीर्त्तनम् । नैव कुर्यादुपवसन्पचनं चान्यहेतव"इति । उपवासाशक्तस्तु किञ्चित्फलाद्याहारं कुर्यात् । तदुक्तं निर्णयसिन्धौ नारदीये—"अनुकल्पो नृणां प्रोक्तः क्षीणानां वरवर्णिनि ! । मूलं फलं पयस्तोयमुपभोग्यं भवेच्छुभे ! । न त्वेव भोजनं कैश्चिदेकादश्यां बुधैः स्मृत"मिति । आषाढ्यादौ तु तदपि निषिद्धं भगवता तत्रैव—"शयने च मदुत्थाने मत्पार्श्वपरिवर्त्तने । नरो मूलफलाहारी हृदि शल्यं ममार्पये"दिति । रोगार्त्तस्य त्वन्नभक्षणेऽपि न दोषः । "बालवृद्धातुरान्विने"ति तत्पर्यु-

---

दरात्कर्त्तव्यम् । यथा फलेऽत्यादरस्तथाऽऽदरेण स्वयंप्रयोजनबुद्ध्या कर्त्तव्यम् । कृष्णशब्दोऽत्र नावतारविशेषपरः, जन्मदिनानामिति बहुवचनासङ्गतेः । किन्त्ववतरणनिरपेक्षं साक्षाद्भगवत्परः, अवतरणनिरपेक्षं कृष्णशब्दस्य भगवदसाधारणनामत्वेन भूरिशः प्रयोगात् । तस्य

---

व्याचष्टे—यथा फलेऽत्यादरस्तथेति । पर्यवसितमर्थमाह—स्वयंप्रयोजनबुद्ध्येति । नन्वजस्य जन्मेति विरुद्धमित्याशङ्कायामाह—अवतरणमिति । तत्र प्रमाणमाह—अजायमान इति । व्रतमित्य-

दासात् । तत्रापि शक्त्यनुसारेण नक्ताद्यनुकल्पविशेष उक्तो वायवीये—"नक्तं हविष्यान्नमनोदनं वा फलं तिलाः क्षीरमथाम्बु चाज्यम् । यत्पञ्चगव्यं यदि वापि वायुः प्रशस्तमत्रोत्तरमुत्तरं ही"ति । स्रक्चन्दनादिभोगत्यागस्तु व्रताहपूर्वापरदिनयोरप्युक्तो लघुनारदीये—"दशम्यादि महीपाल ! त्रिदिनं परिवर्जयेत् । गन्धताम्बूलपुष्पादि स्त्रीसंभोगं दिवाशयम् ॥ जागरं विष्णुपूजां च विना त्वर्धफलं व्रतम् । अतस्ताभ्यां युतोपोष्या वैष्णवेन हरेस्तिथि"रिति । व्रतविधिस्तु व्रतचन्द्रिकादेरवगन्तव्यः ।

तथा—कृष्णस्य जन्मानि–प्रादुर्भावास्तेषां दिनानि–जन्माष्टमीरामनवम्यादीनि पुराणप्रसिद्धानि तेषां–तत्सम्बन्धिव्रतं चादरात्सोत्सवं कर्त्तव्यमित्यन्वयः। तथा–शिवरात्रेर्व्रतं च सोत्सवं कर्त्तव्यम् । तेषां विधिस्तु व्रतग्रन्थेभ्य एव ज्ञेयः । एतेषु सर्वेषु व्रतदिनेषूत्सवास्तु नानाविधगीतवादित्रनादोपेतभगवन्महापूजनसाधुब्राह्मणसमर्चनकृष्णकथाकीर्त्तनश्रवणाद्युपेतजागरणरूपाः कर्त्तव्याः । न तु तद्दिनेष्वपि लौकिकव्यवहारप्रसङ्गेन दिननिर्वाहः कार्य इत्यर्थः । व्रतदिने शावसौत्याशौचयोस्तु शारीरनियमैः सहोपवासः स्वयं कार्यः, देवार्चनादि त्वन्येन शुचिना कारणीयम् । एवं स्त्रीणां रजोदर्शनेऽपीति निर्णीतं धर्मशास्त्रे । एतेषां च व्रतानामकरणे प्रत्यवायश्रुतेर्नित्यत्वादवश्यं कार्यत्वं ज्ञेयम् । "एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणं चरे"दिति माधवीये कात्यायनोक्तेः । "न करोति यदा विष्णोर्जयन्तीसम्भवं व्रतम् । यमस्य वशमापन्नः सहते नारकीं व्यथा"मिति भविष्योक्तेश्च । "शिवरात्रिव्रतं यस्तु न करोति परात्परम् । जन्तुर्जन्मसहस्रेषु भ्रमते स न संशय" इति स्कान्दोक्तेश्च । एतेषां व्रतानां नित्यत्वमुक्तं नारदपञ्चरात्रे—"व्रतानि

---

जन्म–अवतरणं "अजायमानो बहुधा विजायते" इति श्रुतेः । अवतरणदिनानि च श्रीकृष्णजयन्त्यादिरूपाणि, तन्निमित्तकं व्रतमुपवासप्रभृति, सोत्सवं–भगवदुत्सवपूर्वकं कर्त्तव्यम् । तेषु दिनेषु भगवत उत्सवो विशेषतः कार्य इत्येतत् । एवं भगवत्सम्बन्धिव्रतमभिधाय भागवतसम्बन्धिव्रतमाह—शिवेति । शिवो हि भागवताग्रगण्यः, "शिवं महाभागवत" मित्युक्तेः । शिवरात्रेश्च व्रतमित्यनुषज्यते । तन्निमित्तकं व्रतमित्यर्थः । तदपि सोत्सवं–

---

नुषज्यत इति । यद्यप्येकादशीनां कृष्णजन्मदिनानां शिवरात्रेश्च व्रतं कार्यमित्येकान्वये सम्भवत्यनुषङ्गतो व्याख्यानमनुचितम् । तथाप्येकान्वये कृष्णजन्मदिनानां शिवरात्रेश्च व्रते साम्यप्रतिपत्तिः स्यादित्यतो वाक्यभेदेन योजयन्नाह—अनुषज्यत इति । केचित्तु—"एकादशीनां सर्वासां कर्त्तव्यं व्रतमादरा"दित्यन्तेनैव क्रियाकारकसमभिव्याहारात्सपदि बोधोदयादन्वयभेदोऽवर्जनीय इत्यभिप्रेत्यानुषङ्गतो

विष्णुभक्तानां नित्यानीमानि सञ्जगुः। एकादश्योऽखिलाः शुद्धा द्वादशी वामनस्य च। श्रीरामदेवसज्जन्मनवमी दिव्यसिद्धिदा। कृष्णजन्माष्टमी चाथ नृसिंहस्य चतुर्दशी। शिवरात्रेश्चेति मुख्यव्रतान्युक्तानि तत्त्वत" इति ॥ ७९ ॥

---

भगवदुत्सवपूर्वकं कार्यम्। इमानि च व्रतानि नित्यानि। तथा च वचनम्—"व्रतानि विष्णुभक्तानां नित्यानीमानि सञ्जगुः। एकादश्योऽखिलाः शुद्धा द्वादशी वामनस्य च॥ श्रीरामदेवसज्जन्मनवमी दिव्यसिद्धिदा॥" इत्यादि ॥ ७९ ॥

---

व्याख्यानं कृतम्। यद्यपि कृष्णजन्मदिनानामित्यत्राप्यनुपङ्गोऽपेक्ष्यते नाम, तथापीहोक्तिस्तत्राप्युपलक्षकैवेति ॥ ७९ ॥

---

**उपवासदिने त्याज्या दिवानिद्रा प्रयत्नतः।**
**उपवासस्तया नश्येन्मैथुनेनेव यन्नृणाम् ॥ ८० ॥**

लोके ह्युपवासदिनेष्वौदरिककार्याभावात्स्वास्थ्येन दिवानिद्रयैव प्रायशो दिनातिक्रमणं दृश्यत इति स्वभक्तानां तन्माभूदिति तामेव विशेषतो निषेधति—उपवासदिन इति। उपवासस्य दिने—एकादश्यादौ प्रायश्चित्तार्थोपवासदिवसे च। दिवानिद्रा प्रयत्नतः—सर्वप्रकारेण त्याज्या—न कर्त्तव्येत्यर्थः। यत्—यस्मात्। तया—दिवानिद्रया करणेन। नृणां—मनुष्याणाम्। मैथुनेनेव उपवासो नश्येदिति। "उपवासः प्रणश्येत दिवास्वापाच्च मैथुना"दिति देवलस्मृतावुभयोः साहचर्योक्तेर्यथा स्त्रीसङ्गेनोपवासस्य नाशो भवेत्तथैव दिवास्वापेनापीत्यर्थः ॥ ८० ॥

---

उपवासदिवसे परिहार्यमाह—उपवासदिन इति। प्रयत्नतः–उपवास आलस्यादिना दिवसेऽपि निद्रा प्रसजेन्नाम, सा प्रयत्नतः परिहार्या, यत्तया मैथुनेनेवोपवासभङ्गो भवेत्। तथा च वचनम्—"उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्" इति। यद्यपि दिवास्वापः सामान्यतो निषिद्धो नाम "दिवास्वापं न कुर्वीत स्त्रियं चैव परित्यजेत्" इति। तथापीह विशेषतो निषेधो व्रतभञ्जकत्वरूपविशेषानर्थक्यमवगमयितुम् ॥ ८० ॥

---

प्रयत्नत इत्यस्य भावमाह—उपवास इत्यादिना। शङ्कते—यद्यपीत्यादिना। समाधत्ते—तथापीति ॥ ८० ॥

---

**सर्ववैष्णवराजश्रीवल्लभाचार्यनन्दनः।**
**श्रीविठ्ठलेशः कृतवान् यं व्रतोत्सवनिर्णयम् ॥ ८१ ॥**
**कार्यास्तमनुसृत्यैव सर्वे एव व्रतोत्सवाः।**
**सेवारीतिश्च कृष्णस्य ग्राह्या तदुदितैव हि ॥ ८२ ॥**

सर्वेषामपि व्रतोत्सवानां ग्राह्यतिथिनिर्णयज्ञानार्थं श्रीकृष्णभक्तिप्रवर्त्तकवैष्णवाचार्यकृतनिर्णयमेवोपादेयतयोपदिशति—**सर्वेति** सार्धेन। सर्वेषां वैष्णवानां राजेति सर्ववैष्णवराजः। "राजाहःसखिभ्यष्टजि"ति टच्। राजेव राजा। आचार्यत्वादाज्ञापक इत्यर्थः। स चासौ श्रीवल्लभाचार्यश्चेति "विशेषणं विशेष्येण बहुल"मिति समासः। तस्य नन्दनः। श्रीविठ्ठलेशः। यं व्रतोत्सवनिर्णयं—व्रतान्येकादश्यादीनि, उत्सवा अन्नकूटादयश्च, तेषां निर्णयं—ग्राह्यतिथिनिश्चयम्। कृतवान्—प्रपन्नजनबोधार्थं चकार। तमनुसृत्येत्युत्तरेणान्वयः ॥ ८१ ॥

**कार्या** इति। तमनुसृत्यैव। एवकारो मतान्तरनिर्णयानुसरणनिरासार्थः। सर्वे एव, न त्वेकोऽप्यन्योक्तरीत्या। व्रतोत्सवाः कार्याः। तत्र तदुक्त एव निर्णयो दिङ्मात्रेण प्रदर्श्यते—"एकोनषष्टिपलाधिकचतुःपञ्चाशद्घटिकापरिमितदशमीसत्त्वे तु न दशमीवेधः। पञ्चपञ्चाशद्घटिका दशमी चेत्तदा तु दशम्या विद्धैकादशीति *सा नोपोष्या। दशमीवेधाभावेऽप्येकादश्या द्वादश्या वा वृद्धौ तु परैवोपोष्या* न तु पूर्वेति। तथा—जन्माष्टमी सूर्योदयव्यापिनी ग्राह्या। सप्तमीविद्धा तु नोपोष्या। विद्धायाः क्षये नवम्युपोष्या वृद्धौ वा पूर्वेति। तथा—वामनजयन्ती पूर्वदिने विष्णुशृङ्खलयोगे सैव ग्राह्या, अन्यथा द्वादश्यां श्रवणयोगे श्रवणयोगाभावे वा मध्याह्नव्यापिनी सैव ग्राह्येति। तथा—रामनवम्यष्टमीवेधरहिता ग्राह्या,

---

यच्च व्रतमादिष्टं, यश्च व्रतदिवसेपूत्सव आदिष्टस्तत्प्रकारः कथं ज्ञेय इत्यत्राह—**सर्वेति**। यद्यप्यन्ततो जगद्ब्रह्मणोः स्वाभाविकमेवाभेदमाचक्षाणोऽप्ययं वल्लभाचार्यो भेदावसरे श्रीकृष्णस्य सर्वसेव्यत्वं तस्मिन्परां भक्तिं च निःश्रेयसाय मन्यते, इत्येतन्मात्रेणापि सन्तुष्टो भगवान् दयानिधिः स्वयं स्तौति—**सर्वेति**। भगवतो ह्ययं स्वभावः, यदिन्द्रादीनेवोद्दिश्य यजन्नयोऽपि वस्तुतो मम शरीरमेवाराधितमिति सङ्कल्प्य फलमर्पयति, तदेवं सुहृदसौ यदा कदाचिद्वा साक्षात्स्वाराधकं किं न मन्येत वैष्णवाग्रेसर इति। वैष्णवसार्वभौमस्य श्रीवल्लभाचार्यस्य यो

---

स्वाभाविकमेवाभेदमिति। एवकारेण सर्वेऽपि दोषाः परमब्रह्मणि स्वाभाविकाः समापतन्तीतीदमनौचित्यं व्यज्यते। दयानिधिः स्वयं स्तौतीति। अनेन स्तोतरि गुण एव स्तुतौ निमित्तमित्युक्तं

विद्धाक्षये तु सैव, शुद्धावृद्धौ पूर्वेति। तथा–नृसिंहजयन्ती त्रयोदशीवेधरहिता ग्राह्या, विद्धाक्षये विद्धैव, शुद्धावृद्धौ च पूर्वेति। तथा–फाल्गुनपौर्णमास्यादिदिनेऽपररात्रव्यापिन्यामुत्तराफाल्गुन्यां दोलोत्सवः कार्यो नात्र तिथावाग्रहः। तथा–कार्त्तिकशुक्लप्रतिपदि चन्द्रदर्शने प्रागमावास्यायामेवान्नकूटोत्सव" इत्यादिः। शिवरात्रिव्रतनिर्णयस्तु तेन नोक्तस्ततस्तन्निर्णयः समयमयूखादावुक्तो ग्राह्यः। स यथा—शिवरात्रिर्निशीथव्यापिनी ग्राह्या, उभयदिने निशीथव्याप्तावव्याप्तौ वा परैवेति।

श्रीकृष्णसेवारीतिमपि तदुक्तामेव ग्राहयति—सेवेति। कृष्णस्य सेवायाः–प्रतिदिनं क्रियमाणस्य सेवनस्य रीतिः–प्रचारः, शैलीति यावत्। सा चामुकस्मिन्समये भगवत ईदृशानि वासांसि धारणीयानि, ईदृशा अलङ्काराश्च धारणीयाः, ईदृशा भोगाश्च निवेदनीया इत्यादिलक्षणा ज्ञेया। सा तदुदिता–तेन–श्रीविठ्ठलेशेनोदिता–प्रोक्तैव ग्राह्या, तदुक्तमार्गेणैव श्रीकृष्णसेवा कर्त्तव्येत्यर्थः। हीति तस्याः प्रसिद्धिं द्योतयति। सर्वं चैतद्वार्षिकव्रतोत्सवविधौ स्पष्टीकृतं तत एवावगन्तव्यम् ॥ ८२ ॥

---

नन्दनः श्रीमान् विठ्ठलेशः। एकादश्यादिव्रतस्यान्नकूटाद्युत्सवानां च श्रीकृष्णानुबन्धिनां निर्णयं–निर्णायकं यं प्रबन्धमकरोत् तमनुसृत्यैव व्रतोत्सवा अस्मदीयैः कार्याः, न तु तमुल्लङ्घ्य। एतेनानुक्तार्थस्यान्यत उपादानमभ्यनुज्ञातम्। व्रततिथिनिर्णयतत्प्रकारनिर्णयादि च ततो ज्ञेयम्। एवमुत्सवनिर्णयोऽपीति भावः। या चान्वहं कृष्णस्य सेवारीतिः–परिचरणप्रकारः। सान्दृष्टिकसांस्पर्शिकाभ्यवहारिकोपचारा भगवदर्थाः सर्वे तदुदितप्रकारेण विधेया इति भावः ॥ ८१–८२ ॥

---

भवति। अनुसृत्यैवेत्यस्य भावमाह—अनुल्लङ्घ्यैवेत्यादिना। सान्दृष्टिकोपचारो नीराजनम्। सास्पर्शिकोपचारः स्रक्चन्दनादिसमर्पणम् ॥ ८१ ॥ ८२ ॥

---

**कर्त्तव्या द्वारिकामुख्यतीर्थयात्रा यथाविधि।**
**सर्वैरपि यथाशक्ति भाव्यं दीनेषु वत्सलैः ॥ ८३ ॥**

कर्त्तव्येति। प्रशस्तानि द्वाराणि सन्त्यस्यामिति द्वारिका, द्वारिका

---

द्वारिकाप्रभृतितीर्थयात्राया यथाशक्ति विधेयत्वमाह—कर्त्तव्येति। श्रीकृष्णसम्बन्धविशेषमहिम्ना द्वारिकायाः प्राथम्येन ग्रहणम्। यथाविधि–स्वस्वविधिमनतिक्रम्य, अनभि-

---

विवक्षितमर्थमाह—अनभिसंहितफलमिति यावदिति। अयमेवार्थो विवक्षित इति कथं

मुख्या—अग्रगण्या येषां तेषु तीर्थेषु यात्रा—गमनम् सर्वैरपि मदाश्रितैर्यथाविधि यथाशक्ति च कर्त्तव्येत्यन्वयः । तरन्ति भवाब्धिं जना एभिरिति तीर्थानि—पुण्यक्षेत्राणि । यद्वा—तीर्थेषु यात्राः—उत्सवाः । तीर्थानि गत्वा तत्र भगवन्महापूजनसाधुब्राह्मणसन्तर्पणादय उत्सवाः कर्त्तव्या इत्यर्थः । "यात्रा तु यापनेऽपि स्याद्गमनोत्सवयोः स्त्रिया"मिति विश्वः । तीर्थयात्राया भगवद्भक्तिहेतुत्वात्सर्वानुद्दिश्य तद्विधानम् । तथा चोक्तमुग्रश्रवसा—"शुश्रूषोः श्रद्दधानस्य वासुदेवकथारुचिः । स्यान्महत्सेवया विप्राः! पुण्यतीर्थनिषेवणा"दिति । यथाशक्तीति । बहुतीर्थयात्राचरणासमर्थेन द्वारिकायात्रामात्रमपि कर्त्तव्यमित्यर्थः । द्वारिकाया मुख्यत्वं स्वेष्टदेवतायाः श्रीकृष्णस्य तत्र नित्यसन्निहितत्वात् । तदुक्तमेकादशस्कन्धे—"द्वारिकां हरिणा त्यक्तां समुद्रोऽप्लावयत्क्षणात् । वर्जयित्वा महाराज ! श्रीमद्भगवदालयम् ॥ नित्यं सन्निहितस्तत्र भगवान्मधुसूदनः । स्मृत्याशेषाशुभहरः सर्वमङ्गलमङ्गल"मिति ।

तद्विधिस्तूक्तः स्कान्दे काशीखण्डे—"तीर्थयात्रां चिकीर्षुः प्राग्विधायोपोषणं गृहे । गणेशं च पितॄन्विप्रान्साधूञ्छान्तान्प्रपूज्य च ॥ कृतपारणको हृष्टो गच्छेन्नियमधृत्पुनः । आगत्याभ्यर्च्य च पितॄन्यथोक्तफलभाग्भवेत् ॥ न परीक्षेद्द्विजांस्तीर्थे अन्नार्थी भोज्य एव च । तीर्थोपवासः कर्त्तव्यो मुण्डनं श्राद्धकर्म च ॥ दानं देयं यथाशक्ति कामान्नेक्ष्याश्च योषितः । जीवहिंसा न कर्त्तव्या बुद्ध्या भाष्यं न चानृतम् ॥ यस्य हस्तौ च पादौ च मनश्चैव सुसंयतम् । विद्या तपश्च कीर्त्तिश्च स तीर्थफलमश्नुते ॥ प्रतिग्रहादुपावृत्तः सन्तुष्टो येन केनचित् । अहङ्कारविमुक्तो यः स तीर्थफलमश्नुते ॥ अकोपनोऽमलमतिः सत्यवादी दृढव्रतः । आत्मोपमश्च भूतेषु स तीर्थफलमश्नुते ॥ तिर्यग्योनिं न गच्छेत्स कुदेशे न च जायते । न दुःखी स्यात्स्वर्गभाक्च मोक्षोपायं च विन्दति ॥ अन्यस्थाने कृतं पापं पुण्यक्षेत्रे विनश्यति । पुण्यक्षेत्रे कृतं पापं वज्रलेपो भवत्यल"मित्यादिः ।

---

संहितफलमिति यावत् । मुमुक्षून्प्रत्यखिलमेव कर्मजातं विनाफलाभिसन्धि खलु कर्त्तव्यतया विधीयते, तद्यथाविहितं मुमुक्षुभिः कार्यमित्येव कर्त्तव्यम् । एवं क्रियमाणमेव भक्तये स्यात् । सर्वैरपि—ये च प्राप्तभक्तयो निष्पन्नास्तैरपि । एतेनानिष्पन्नैरिव निष्पन्नैरपि पुण्यतीर्थयात्रा

---

विधायत इत्यत्राह—मुमुक्षून्प्रतीति । मुमुक्षून्प्रत्येवोपदेशप्रवृत्तेरियं विवक्षेति भावः । सर्वैरपीति । प्रकरणान्मुमुक्षुभिरिति शेषः । सर्वैरपीत्यत्रापिशब्देन ध्वन्यमानमर्थमाह—ये च प्राप्तभक्तयो निष्पन्न

अत्र शक्तस्य द्विर्भोजनादिनिषेधोऽप्युक्तः स्कान्दे—"द्विर्भोजनं तृतीयांशं हरेत्तीर्थफलस्य च। वाणिज्यं त्रींस्तथा भागान्हन्ति सर्वं प्रतिग्रहः॥ यानमर्धं चतुर्थांशं छत्रोपानहमेव चे"ति। दरिद्रब्राह्मणस्य तु तीर्थे प्रतिग्रहे विशेष उक्तः कृत्यरत्ने प्रभासखण्डे—"तीर्थे चेत्प्रतिगृह्णीयाद्ब्राह्मणो वृत्तिदुर्बलः। दशांशमर्जिताद्द्यादेवं कुर्वन्न हीयत"इति। अत एवोक्तं भगवता—"नैनः प्राप्नोति वै विद्वान्यावदर्थप्रतिग्रह"इति। मुण्डने विशेषमाह निर्णयसिन्धौ देवलः—"मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालं विरजं गयाम्॥ विरजं—लोणारम्। प्रसिद्धमहातीर्थपरः सर्वशब्दः। "ऊर्ध्वमब्दाद्विमासोनात्पुनस्तीर्थं व्रजेद्यदि। मुण्डनं चोपवासं च ततो यत्नेन कारये"दिति। श्राद्धेऽपि विशेष उक्तो हेमाद्रौ—"अर्घ्यमावाहनं चैव द्विजाङ्गुष्ठनिवेशनम्। तृप्तिप्रश्नं च विकिरं तीर्थश्राद्धे विवर्जयेत्॥" तथा—"यस्मिन्क्षेत्रे च यो देवः प्रसिद्धस्तस्य शक्तितः। महापूजाल्पपूजा वा कर्त्तव्या वा फलार्पणम्॥ सन्तर्पणीया विप्राश्च सद्भिर्भोज्यैः सदक्षिणैः। वैष्णवाः पूजनीयाश्च दानं देयं गवादि चे"ति।

तथा तृतीयचरण उत्तरत्रापि योजनीयः। सर्वैरपि दीनेषु—दुर्बलेषु प्राणिषु। वत्सलैः—स्निग्धैः। "स्निग्धस्तु वत्सलः" इत्यमरः। यथाशक्ति भाव्यं—अवश्यं भवितव्यम्। आवश्यके ण्यत्। स्वसुहृद्वद्यथाशक्ति तत्सम्भावनमेव कर्त्तव्यं न तु तदनादरादीत्यर्थः। "दरिद्रेष्वङ्गहीनेषु विपन्नेष्वामयाविषु। शक्त्याऽनुकम्पां कुर्वीत स्त्रीषु दैवहतेषु चे"ति व्यासवाक्यात्। एतच्च समदर्शिनां ब्राह्मणानामप्यावश्यकमित्युक्तं श्रीभागवते—"ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः। स्रवते ब्रह्म तस्यापि भिन्नभाण्डात्पयो यथे"ति। तदुपद्रवे तु भूयेन-

---

कार्या। तत्रानिष्पन्नानां तु मनोनैर्मल्यमापादयन् भक्तये भवति। निष्पन्नानां तु स्वयंप्रयोजनतया। इमानि खलु भगवत्सम्बन्धमहितानि स्थानानीति प्रेमपूर्वं सेव्यानि भवन्तीति भावः। यथाशक्ति–कर्त्तव्यैवेति नाग्रहः, सति हस्तपादादिशक्तौ कर्त्तव्या। बहूनि हि द्वाराणि

---

इति। स्वयंप्रयोजनतयेति। भक्तये भवतीत्यनुषज्यते। स्वयंप्रयोजनतामेवोपपादयति—**इमानि खल्वि**त्यादिना। यद्यपि **यथाशक्ती**त्यस्य भाव्यमित्यनेन सहान्वयः स्वरसतः प्रतीयते, "यथाशक्ति भाव्यं दीनेषु वत्सलै"रित्यव्यवधानेन पाठात्। तथापि तथासत्यनपेक्षितोक्त्यपेक्षितानुक्तिप्रसङ्गात्कर्त्तव्येत्यनेनान्वयमभिप्रेत्य व्याचष्टे—**कर्त्तव्यैवे**तीत्यादिना। ननु यदि नाग्रहस्तर्हि भक्तिसाधनं मनोनैर्मल्यं कथं सिद्ध्येदित्याशङ्कायामाह—**बहूनि ही**ति। **द्वाराणी**ति। साधनानीत्यर्थः। उपायान्तरेण मनोनैर्मल्यं स्यादेवेति

र्थापत्तिरित्युक्तं भारते—"दुर्बलं क्लेशयेद्यस्तु पुमानुपहसेच्च वा । आकस्मिकीमवाप्नोति विपदं स तु भूयसीम् ॥ यः कोऽपि दुर्बलं जीवं बलवान्पीडयेज्जनः । कुलं संमूलं दहति सोऽन्यायस्तस्य निश्चित"मिति ॥ ८३ ॥

भक्तिप्रवाहस्य, दीनवात्सल्यमेव तु सर्वतीर्थाटनतोऽपि गरीयः । असति तस्मिन् तीर्थयात्राया अपि वैयर्थ्यात्, तदवश्यमाश्रयणीयमित्याह—भाव्यं दीनेष्विति । यद्वा—यथाशक्ति तीर्थयात्रा कर्त्तव्या । एवं कुर्वद्भिस्तत्रत्येषु दीनेषु वत्सलैर्यथाशक्ति भाव्यं, यथाशक्ति तीर्थवासिभ्यो दीनेभ्यो देयमित्येतत् ॥ ८३ ॥

भावः । भाव्यं दीनेषु वत्सलैरित्यन्ततो निर्देशात्प्रथमतो निर्दिष्टतीर्थयात्रातोऽत्र विशेषो व्यज्यत इत्याशयेन व्याचष्टे—दीनवात्सल्यमेव तु सर्वतीर्थाटनतोऽपि गरीय इत्यादिना ॥ ८३ ॥

विष्णुः शिवो गणपतिः पार्वती च दिवाकरः ।
एताः पूज्यतया मान्या देवताः पञ्च मामकैः ॥ ८४ ॥

विष्णुरिति । मम इमे मामकाः—मदाश्रितास्तैः । एताः पञ्च देवताः पूज्यतया मान्याः—पूजनीया इत्यर्थः । एताः कास्ता आह—विष्णुः शिवो गणपतिः पार्वती च दिवाकर इति । तत्र विष्णुः—पद्मनाभो नारायणः, स तु पुरुषोत्तमस्याद्यवतारत्वात्पूज्य एव । श्रीशङ्करस्तु वैष्णवराजत्वाद्वैष्णवधर्मप्रवर्त्तकत्वाच्च पूज्यः । श्रीगणपतिस्तु ब्रह्मवैवर्तपुराणस्थगणपतिखण्डे श्रीकृष्णांशावतार इति सर्वदेवैरग्रपूज्यत्वेन स्थापित इति पूज्यः । पार्वती तु श्रीशङ्करार्धाङ्गमिति पूज्या । यद्वा—साक्षाच्छ्रीकृष्णप्राप्तिसहायत्वात्सा पूज्या । अत एव श्रीभागवते व्रजे श्रीगोपीजनानां, कुण्डिनपुरे श्रीरुक्मिण्याः, द्वारिकायां श्रीवसुदेवादीनां च तदाराधनवर्णनमित्यवधेयम् । श्रीसूर्यस्तु द्विजातित्वप्रापकगायत्रीमन्त्राधिष्ठातृभगवद्रूपत्वाद्वेदमूर्त्तितया धर्मप्रवृत्तिमूलत्वाच्च पूज्य इति नान्याश्रयदोषशङ्कावकाशः । तत्र वैष्णवानां विष्णुप्रमुखः पञ्चायतनसन्निवेशो ज्ञेयः । तद्यथा—स्वसन्मुखो विष्णुर्मध्ये, ईशाने शङ्करः, अग्नौ गणपतिः, नैर्ऋते सूर्यः, वायौ

मामकैरेकान्तभक्तैः परमपुरुषार्थपरायणैरपि या पञ्चायतनपूजा स्मृत्याचारप्राप्ता न सा देवतान्तरभजनप्रसङ्गबुद्ध्या परिहरणीया, किन्तु कर्त्तव्यैव, नहि पूज्यानां यथायोग्यं समर्हणमात्रं व्यतिक्रमाय, सर्वोत्कृष्टत्वेन समाश्रयणमेव हि व्यतिक्रमः, तत् पञ्चसु प्रधानं विष्णुं, तमभिव्याप्य शिवादींश्चाकलय्य विधेया नाम पञ्चायतनपूजाऽपीत्याह—विष्णुरिति ।

एकान्तभक्तैरिति । उपायभूताद्भगवतोऽनन्यदुपेयं येषां त एकान्तभक्ताः, भगवन्तमेवोपागनु-

देवीति । तदाह पदार्थादर्शः—"शम्भौ मध्यगते हरीनहरभूदेव्यो हरौ शङ्करेभास्येनागसुता रवौ हरगणेशाजाम्बिकाः स्थापिताः । देव्यां विष्णुहरेभवक्ररवयो लम्बोदरेऽजेश्वरेनाम्बाः शङ्करभागतोऽतिसुखदा व्यस्तास्तु ते हानिदा" इति । शङ्करभागतः–ईशानकोणादारभ्य प्रदक्षिणमित्यर्थः । अत्र दिक्स्वरूपमुक्तं प्रयोगपारिजाते—"देवस्य मुखमारभ्य दिशं प्राचीं प्रकल्पये"दिति ॥ ८४ ॥

विष्णुरिति प्रथमतो निर्देशाद्विष्णोः प्राधान्यं व्यज्यते । तमभिव्याप्य शिवो गणपतिः पार्वती दिवाकरश्च । एताः पूज्यतया पञ्च देवता मामकैर्मान्याः–ज्ञातव्याः ॥ ८४ ॥

पेय च मन्वाना इति यावत्, त एव च परमपुरुषार्थपरायणाः । स्मृत्याचारप्राप्तेति । स्मृतित आचारतश्च प्राप्तेत्यर्थः ॥ ८४ ॥

---

भूताद्युपद्रवे क्वापि वर्म नारायणात्मकम् ।
जप्यं च हनुमन्मन्त्रो जप्यो न क्षुद्रदैवतः ॥ ८५ ॥

भूतेति । क्वापि–क्वचिदशुचितादिदोषवशादित्यर्थः । भूतादीनामुपद्रवः–पीडा तस्मिन्सति तु । आदिशब्दः प्रेतपिशाचशाकिनीब्रह्मराक्षसादिग्रहणार्थः । नारायणः आत्मा–स्वरूपं देवता वा यस्य तत् नारायणात्मकम् । वर्म–श्रीमद्भागवतषष्ठस्कन्धोक्तं नारायणकवचमित्यर्थः । जप्यम्–"धौताङ्घ्रिपाणिराचम्य सपवित्र उदङ्मुखः । कृतस्वाङ्गकरन्यासो मन्त्राभ्यां वाग्यतः शुचिः ॥ नारायणपरं वर्म सन्नह्ये"दिति विश्वरूपोक्तविधिना जपनीयमित्यर्थः । च–पुनस्तदुपद्रवनिवारणार्थमेव हनुमतः–वीराख्यहनुमतो मन्त्रः–मूलमन्त्रो मालामन्त्रश्च । जप्यः–मन्त्रशास्त्रोक्तविधिनाऽऽवर्तनीयः । क्षुद्रदैवतः–क्षुद्रः–श्रीकृष्णतद्भक्तेतरो दैवतः–देवो यस्य स मन्त्रस्तु न जप्यः । तज्जपे ह्यन्याश्रयदोषप्रसङ्ग इति भावः । हनुमदाराधने तु नान्याश्रयदोषः । "महात्मानं हनूमन्तं यः समाराधयिष्यति । आराधितोऽहमेवात्र भविष्यामि हि तेन त्वि"ति रामायणे श्रीरघुनाथवाक्यात् ॥८५॥

देवतान्तरप्रसङ्गादाह—भूताद्युपद्रव इति । भूतप्रेतपिशाचाद्युपद्रवस्य निर्हरणाय नारायणकवचस्य हनुमन्मन्त्रस्य वा जपः कार्यः, न तु क्षुद्रदेवतानाम् । हनुमांस्तु भगवदेकान्तभक्तो महानयम् ॥ ८५ ॥

हनुमन्मन्त्रस्य क्षुद्रदैवतत्वशङ्कां परिहरति—हनुमांस्त्विति ॥ ८५ ॥

---

**रवेरिन्दोश्चोपरागे जायमानेऽपराः क्रियाः ।**
**हित्वाऽऽशु शुचिभिः सर्वैः कार्यः कृष्णमनोर्जपः ॥ ८६ ॥**

रवेरिति । रवेः—सूर्यस्य । इन्दोः—चन्द्रमसश्च । उपरागे—ग्रहणे । जायमाने स्पर्शकाले । सर्वैरपि । युष्माभिरिति शेषः । आशु—तत्क्षणमेव । अपराः—व्यावहारिकाः । क्रियाः—कर्माणि । हित्वा—त्यक्त्वा । शुचिभिः—स्नातैः सद्भिः । कृष्णस्य मनुः—मन्त्रोऽष्टाक्षरो नाममन्त्रो वा तस्य । जपः—जपनम् । कार्यः । न त्वस्नातैः स्थेयं तत्समये व्यावहारिकं वान्यत्किमपि कार्यं विधेयमित्यर्थः । "सर्वेषामेव वर्णानां सूतकं राहुदर्शने । स्नानं स्यादुपरागादौ मध्ये होमजपादि चे"ति वसिष्ठोक्तेः । पुरश्चरणचन्द्रिकायां चोक्तम्—"चन्द्रसूर्योपरागे च स्नात्वा प्रयतमानसः । स्पर्शादिमोक्षपर्यन्तं जपेन्मन्त्रं जगत्पते"रिति । स्नाने विशेषमाह मार्कण्डेयः—"शीतमुष्णोदकात्पुण्यमपारक्यं परोदकात् । भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकम् । ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम् । तीर्थतोयं ततः पुण्यं महानद्यम्बु पावनम् । ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधि"रिति । अत्रोष्णोदकं त्वातुरविषयमिति निर्णयकमलाकरः । इदं च सूतकादावपि कर्त्तव्यमित्याह माधवीये वृद्धवसिष्ठः—"सूतके मृतके चैव न दोषो राहुदर्शने । तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यत" इति । ग्रहणदर्शनेऽपि विशेष उक्तो ब्रह्मसिद्धान्ते—"सर्वैः पटस्थितं वीक्ष्यं खस्थं तैलाम्बुदर्पणैः । ग्रहणं गुर्विणी जातु न पश्येत पटं विने"ति । अत्र चन्द्रग्रहणयामात्पूर्वं यामत्रयं सूर्यग्रहणयामात्पूर्वं यामचतुष्टयं च भोजनं न कर्तव्यमित्यपि ज्ञेयम् । "सूर्यग्रहे तु नाश्नीयात्पूर्वं यामचतुष्टयम् । चन्द्रग्रहे तु यामांस्त्रीन्बालवृद्धातुरैर्विने"ति माधवीये वृद्धगौतमोक्तेः । बालवृद्धातुराणां तु ग्रहणयामात्पूर्वमेकयामो निषिद्ध इति निर्णयसिन्धावुक्तम् । सायंसन्ध्यायां सूर्यस्य ग्रस्तास्ते पूर्वेऽह्नि रात्रौ च न

---

बहवो ह्युपरागकाले मन्त्रसिद्धिमाकाङ्क्षमाणाः क्षुद्रमन्त्रजपे प्रवर्त्तन्ते, अस्मदीयैः सर्वथा परिहरणीयः स तुच्छो मार्गः । किन्तु तादृशे समये स्नातैः शुद्धैः सर्वश्रेयोमूलभूतस्य श्रीकृष्णमनोर्जपः कार्य इत्याह—रवेरिति । अपराः क्रियाः—लौकिकीर्हित्वेत्यर्थः । ननु क्रियामात्रं

---

क्रियान्तरपरित्यागविधानादापाततः प्रतीयमानं स्मृत्याचारविरोधं परिहरन्व्याचष्टे—लौकिकी-

भोक्तव्यम् । प्रातःसन्ध्यायां चन्द्रस्य ग्रस्तास्ते पूर्वरात्रावुत्तरेऽह्नि च न भोक्तव्यमित्यपि तत्रैवोक्तम् ॥ ८६ ॥

---

त्यक्त्वा श्रीकृष्णमन्त्रस्य जपः कार्य इति । तथासत्युपरागनिमित्तककर्मविशेषस्य तर्पणादेर्विलोपप्रसङ्गात् ॥ ८६ ॥

---

हिंत्वेत्यर्थ इति ॥ ८६ ॥

---

जातायामथ तन्मुक्तौ कृत्वा स्नानं सचेलकम् ।
देयं दानं गृहिजनैः शक्त्याऽन्यैस्त्वर्च्य ईश्वरः ॥ ८७ ॥

जातायामिति । अथ–जपानन्तरम् । तन्मुक्तौ–तस्य–उपरागस्य मुक्तौ जातायां सत्याम् । सचेलकं–चेलकेन सहितं सचेलकम्, परिहितवस्त्रसहितमित्यर्थः । स्नानं कृत्वा । गृहिजनैः–गृहस्थैः । दानं–दीयत इति दानं–हिरण्यादि । शक्त्या–यथाशक्ति । देयम् । मुक्तिसमये सङ्कल्पितं स्नात्वा देयमिति शिष्टा आहुः । "ग्रस्यमाने भवेत्स्नानं ग्रस्ते होमजपादिकम् । मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयत" इति हेमाद्रौ वचनात् । अत्र स्नानाकरणे दोष उक्तो भार्गवार्चनचन्द्रिकायां चतुर्विंशतिमते—"मुक्तौ यस्तु न कुर्वीत स्नानं ग्रहणसूतके । स सूतकी भवेत्तावद्यावत्स्यादपरो ग्रह" इति । इदं च स्नानममन्त्रकं कार्यमित्युक्तं स्मृतिरत्नावल्याम् । अन्यैः–गृहस्थेतरजनैस्तु देयपदार्थासङ्ग्रहात् ईश्वरः–विष्णुः, अर्च्यः–मनसा यथामिलितोपचारैर्वा पूजनीयः । तेनैव सकलदानफलसिद्धेरिति भावः । "दानैर्नानाविधैर्यज्ञैस्तपोभिश्च व्रतैरपि । यदाप्नोति तदाप्नोति पुमानभ्यर्च्य केशव"मिति विष्णुधर्मोक्तेः ॥ ८७ ॥

---

अथोपरागनिवृत्तौ विधाय शुद्धिस्नानं यथाशक्ति दानं गृहस्थैर्विधेयमन्यैस्तु भगवत्पूजामात्रं विधेयमित्याह—जातायामिति । तन्मुक्तौ–रवेरिन्दोर्वोपरागतो मुक्तौ । अन्यैः–गृहस्थेभ्योऽन्यैः, आश्रमान्तरस्थैरित्यर्थः । ईश्वरः केवलमर्च्यः, गृहस्थैस्तु दानमपि विधेयं, पूजाऽपि विधेया, उभयत्राधिकारसम्पत्तेरिति भावः ॥ ८७ ॥

---

"अन्यैस्त्वर्च्य ईश्वर" इत्यन्यान्प्रतीश्वरार्चनविधानादीश्वरार्चनं गृहस्थैर्न कार्यमिति भ्रमः कदाचित्स्यादिति तद्वारणाय भावमाह—गृहस्थैस्तु दानमपि विधेयमित्यादिना ॥ ८७ ॥

**जन्माशौचं मृताशौचं स्वसम्बन्धानुसारतः ।**
**पालनीयं यथाशास्त्रं चातुर्वर्ण्यजनैर्मम ॥ ८८ ॥**

जन्मेति । मम—मदाश्रितैः । चातुर्वर्ण्यजनैः—चत्वारो वर्णा एव चातुर्वर्ण्यम् । "चातुर्वर्ण्यादीनां स्वार्थ उपसङ्ख्यान"मिति स्वार्थे ष्यञ् । तच्च ते जनाश्च तैः—ब्राह्मणक्षत्रियवैश्यशूद्रैः । जन्मनः—प्रसवसम्बन्धि आशौचमशौचं वा, प्रसूतिनिमित्तकं सूतकमित्यर्थः। नञः शुचीश्वरेति वृद्धिविकल्पादैच्छिकः पदच्छेदः । तथा—मृताशौचं—मृतकनिमित्तमाशौचं चेति द्वयमपि । स्वसम्बन्धानुसारतः—स्वस्वसपिण्डादिसम्बन्धानुसारेण । यथाशास्त्रं—धर्मशास्त्रोक्तमर्यादामनतिक्रम्यैव । पालनीयम्। तद्यथा—स्वकुले कस्यचित्पुत्रस्य पुत्र्या वा जन्मनि सपिण्डानां दशरात्रं सूतकम् । कन्याजन्मनि त्रिरात्रमित्येके । तथा चाङ्गिरःस्मृतिः—"सर्वेषामेव वर्णानां सूतके मृतके तथा । दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवी"दिति । सोदकानां तु त्रिरात्रेणैव शुद्धिः । तदुक्तमग्निना—"पुंजन्मनि सपिण्डानां दशाहाच्छुद्धिरिष्यते । त्र्यहादेकोदकानां च एकाहाच्च क्वचिन्मते"ति । "स्त्रीजन्मनि सपिण्डानां सोदकानां त्र्यहाच्छुचि"रिति च । सूतकिस्पर्शे विशेषमाहाङ्गिराः—"सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते । संस्पर्शे सूतिकायास्तु स्नानमेव विधीयत" इति । हारलतायां प्रचेताश्च—"सूतिका सर्ववर्णेषु दशरात्रेण शुध्यति । दैवे पित्र्ये कर्मणि तु सा नार्हत्येव तावते"ति । तत्कर्माधिकारं त्वाह पैठीनसिः—"सूतिकां पुत्रवतीं विंशतिरात्रेण कर्माणि कारयेन्मासेन स्त्रीजननी"मिति । एतच्च दशरात्रसूतकानन्तरं ज्ञेयम् । जन्माशौचे दानप्रतिग्रहादिदोषाभावार्थं व्यासस्त्वाह—"प्रथमे दिवसे षष्ठे दशमे चैव सर्वथा । त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनी"ति । पुत्रशब्दोऽत्रापत्यमात्रपर इति निर्णयसिन्धुः ।

मृताशौचे तु विशेषः । तथा चाह बृहस्पतिः—"दशाहेन सपिण्डास्तु

---

उपरागनिमित्तकस्नानप्रसङ्गेन सुप्रसिद्धमपि ज्ञापयति—जन्मेति । मृतमिति भावे क्तः । जननिमित्तं मरणनिमित्तं च यदाशौचं पालनीयं तत्स्वसम्बन्धानुसारेण । दशाहाद्यवधिका काप्यदृष्टविषयाऽशुचिता शास्त्रैकगम्या कदापि नावधीर्या किन्त्वनुसरणीयैव ।

---

ननु जनने मरणे च न लक्ष्यते नाम किमप्याशौचमित्यत आह—अदृष्टविषयाऽशुचिता शास्त्रैकगम्येति । नन्वाशौचं सति निमित्ते सम्पद्यत एवेति का नाम तस्य पालनीयतेत्याशङ्कायां पाल-

---

१ सप्तमगोत्रापत्यपर्यन्तं सपिण्डसम्बन्धः । २ चतुर्दशगोत्रापत्यपर्यन्तं सोदकसम्बन्धः ।

शुध्यन्ति प्रेतसूतके। सोदकास्तु त्रिरात्रेण स्नात्वा शुध्यन्ति गोत्रिण" इति। याज्ञवल्क्यपराशरौ तु—"आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता। त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम्। क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु। त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्त्तिन" इत्याहतुः। माधवीये ब्राह्मे चोक्तम्—"दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा। तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभि"रिति। सम्बन्धविशेषादाशौचकालविशेषश्चोक्तो निर्णयसिन्धौ त्रिंशच्छ्लोक्याम्—"प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तूभयत्र। पक्षिण्याशौचमृत्विग्दुहितृसुतसहाध्यायिबन्धुत्रयान्तेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे॥ मातामह्यां च पित्रोः स्वसरि च विरतौ मातुले मातुलान्यां चाथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे। शिष्योपाध्यायबन्धुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरभृतौ मातुले चैकरात्रम्॥ रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसम्बन्धयुक्ते स्नानं वासोयुतं स्यादिदमपि सकलं सर्ववर्णेषु तुल्य"मिति। अत्र मूलं मिताक्षरादौ स्पष्टम्। दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रम्। अनुपनीतयोः पक्षिणी। तथा मातुलादौ सन्निधिविदेशाभ्यां पक्षिण्येकाहयोर्व्यवस्था। तथा श्रोत्रिये स्वगृहे मृते त्रिरात्रम्। एकग्रामे त्वेकाहः। ऋत्विक्षु बह्वल्पकालश्रौतस्मार्त्तयाजनपरेषु त्रिरात्रैकरात्रे ज्ञेये। एवमन्यत्रापि त्रिरात्रपक्षिण्यादौ देशकालशक्त्यादिना व्यवस्थेत्यविरोधः। अत्र वयोऽवस्थादिकृतो विशेषस्तु विस्तरभयान्न लिख्यते स च धर्मशास्त्रेभ्यो ज्ञेयः। मृताशौचवतां स्पर्शस्त्वन्यैर्न कार्यः।

आशौचदिनग्रहणव्यवस्थामाह पैठीनसिः—"अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु। दाहादग्निमतो विद्या"दिति। दशाहानन्तरं प्रसूतिज्ञाने तु न सूतकम्। तथा चाह माधवीये देवलः—"नाशौचं प्रसवाशौचे व्यतीतेषु दिनेष्वपी"ति। तत्र मरणज्ञाने तु विशेषमाह वृद्धवसिष्ठः—"मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा। अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यती"ति। इदं चैक-

---

शौचनिमित्तकं कर्म किमपि न कुर्यादिति यावत्। चतुर्णां वर्णानामेष धर्मः। यद्यपि मत्परायणा भवन्तु नाम, यावच्छरीरसम्बन्धं शारीरो वर्णो नापगच्छेत्। तत् तन्निमित्तका अपि

---

नीयमित्यस्याशयमाह—कदापि नावधीर्येत्यादिना यावदित्यन्तेन। ननु मूले ममेत्यनर्थकं, अस्य सर्वसाधारण्यादित्याशङ्कां परिहरन्नाह—यद्यपीत्यादिना। मत्परायणा भवन्तु नामेति। मुमुक्षवो भवन्तु।

देशे । देशान्तरे तु स्नानमात्रम् । तल्लक्षणं त्वाह बृहस्पतिः—"महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते । देशान्तरं वदन्त्येके षष्टियोजनमायत"मिति । एतच्च पित्रादिभिन्नविषयमित्युक्तं स्मृत्यर्थसारे—"मातापितृमरणे दूरदेशेऽपि संवत्सरोर्ध्वमपि पुत्रो दशाहादिकं पूर्णमाशौचं कुर्यात्स्त्रीपुंसयोः परस्परं सपत्नीषु चैव"मिति । विरक्तानां साधूनां तु मातापितृमरणे स्नानमात्रं न त्वाशौचमित्युक्तं हेमाद्रौ लैङ्गे—"योगिनां तु विरक्तानां नाशौचं न च सूतकम् । पित्रोरुपरमे तेषां स्नानमात्रं तथा गुरो"रिति । आशौचसम्पाते त्वाह माधवीये यमः—"जनने जननं चेत्स्यान्मरणे मरणं तथा। पूर्वशेषेण शुद्धिः स्यादुत्तराशौचवर्जन"मिति । "शावेन शुध्यति सूतिर्न सूतिः शावशोधिनी"ति च । तथा "*गुरुणा लघु शुध्येत्तु लघुना नैव गुर्विती*"ति ।

क्वचिदाशौचापवादोऽप्युक्तः कौर्मे—"नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् । नाशौचं कीर्त्तितं सद्भिः पतिते च तथा मृत" इति । "आहवे च तथा मृत" इति तुर्यचरणे पाठान्तरम्। शुद्धितत्त्वे कौर्मे च—"सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपद्रव" इति । शुद्धिरत्नाकरे दक्षश्चाह—"स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्त्तितम् । आपद्गतस्य सर्वस्य सूतकेऽपि न सूतक"मिति । स्नानमात्रं तु भवत्येव। त्रिंशच्छ्लोक्यां चोक्तम्—"तत्तत्कार्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्प्यातुराणाम् । सम्प्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥" इति । नाशौचमिति शेषः । एतच्छ्लोकार्थो निर्णयसिन्धोर्ज्ञेयः। याज्ञवल्क्यश्चाह—"ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा । दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यः शौचं विधीयत" इति । एतदर्थो मिताक्षराया अवगन्तव्यः । आशौचे सन्ध्यावन्दनादिकर्मनिषेधस्त्वग्रे वक्ष्यते ॥ ८८ ॥

---

विधेया यथाविधि विधिगोचरैरनुष्ठेया एवेत्यभिप्रेत्य ममेत्याह । मदीयैरपीति यावत् । आशौचनिर्णयस्तु तत्परेषु धर्मशास्त्रेषु बोध्यः । नाद्य तन्निर्णयाय वयं प्रयतामहे ॥ ८८ ॥

---

नामेति यावत् । मूले जनैरित्यनेन विधिगोचरता व्यज्यते, जनिमन्तो हि जनाः, जनिश्च शरीरसम्बन्धः, सति तस्मिन्वर्णविभेदोऽप्यवर्जनीयः, तथा च विधिगोचरतापि ॥ ८८ ॥

शुध्यन्ति प्रेतसूतके । सोदकास्तु त्रिरात्रेण स्नात्वा शुध्यन्ति गोत्रिण" इति । याज्ञवल्क्यपराशरौ तु—"आदन्तजन्मनः सद्य आचूडान्नैशिकी स्मृता । त्रिरात्रमाव्रतादेशाद्दशरात्रमतः परम् । क्षत्रस्य द्वादशाहानि विशः पञ्चदशैव तु । त्रिंशद्दिनानि शूद्रस्य तदर्धं न्यायवर्त्तिन" इत्याहतुः । माधवीये ब्राह्मे चोक्तम्—"दत्ता नारी पितुर्गेहे सूयेताथ म्रियेत वा । तद्बन्धुवर्गस्त्वेकेन शुचिस्तज्जनकस्त्रिभि"रिति । सम्बन्धविशेषादाशौचकालविशेषश्चोक्तो निर्णयसिन्धौ त्रिंशच्छ्लोक्याम्—"प्रेतेष्वाचार्यमातामहदुहितृसुतश्रोत्रियर्त्विक्सयाज्यस्वस्रीयेषु त्रिरात्रं त्रिदिवसमशुचिः सोदकस्तूभयत्र । पक्षिण्याशौचमृत्विग्दुहितृसुतसहाध्यायिबन्धुत्रयान्तेवासिश्वश्रूसुमित्रश्वशुरभगिनिकाभागिनेयप्रयाणे ॥ मातामह्यां च पित्रोः स्वसरि च विरतौ मातुले मातुलान्यां चाथो सज्योतिरेव स्वविषयनृपतौ ग्रामनाथे च नष्टे । शिष्योपाध्यायबन्धुत्रयगुरुतनयाचार्यभार्यासगोत्रानूचानश्रोत्रियेषु स्वगृहपरमृतौ मातुले चैकरात्रम् ॥ रात्रिं सब्रह्मचारिण्यथ तु कथमपि स्वल्पसम्बन्धयुक्ते स्नानं वासोयुतं स्यादिदमपि सकलं सर्ववर्णेषु तुल्य"मिति । अत्र मूलं मिताक्षरादौ स्पष्टम् । दौहित्रभागिनेययोरुपनीतयोस्त्रिरात्रम् । अनुपनीतयोः पक्षिणी । तथा मातुलादौ सन्निधिविदेशाभ्यां पक्षिण्येकाहयोर्व्यवस्था । तथा श्रोत्रिये स्वगृहे मृते त्रिरात्रम् । एकग्रामे त्वेकाहः । ऋत्विक्षु बह्वल्पकालश्रौतस्मार्त्तयाजनपरेषु त्रिरात्रैकरात्रे ज्ञेये । एवमन्यत्रापि त्रिरात्रपक्षिण्यादौ देशकालशक्त्यादिना व्यवस्थेत्यविरोधः । अत्र वयोऽवस्थादिकृतो विशेषस्तु विस्तरभयान्न लिख्यते स च धर्मशास्त्रेभ्यो ज्ञेयः । मृताशौचवतां स्पर्शस्त्वन्यैर्न कार्यः ।

आशौचदिनग्रहणव्यवस्थामाह पैठीनसिः—"अनग्निमत उत्क्रान्तेराशौचादि द्विजातिषु । दाहादग्निमतो विद्या"दिति । दशाहानन्तरं प्रसूतिज्ञाने तु न सूतकम् । तथा चाह माधवीये देवलः—"नाशौचं प्रसवाशौचे व्यतीतेषु दिनेष्वपी"ति । तत्र मरणज्ञाने तु विशेषमाह वृद्धवसिष्ठः—"मासत्रये त्रिरात्रं स्यात् षण्मासे पक्षिणी तथा । अहस्तु नवमादर्वागूर्ध्वं स्नानेन शुध्यती"ति । इदं चैक-

शौचनिमित्तकं कर्म किमपि न कुर्यादिति यावत् । चतुर्णां वर्णानामेष धर्मः । यद्यपि मत्परायणा भवन्तु नाम, यावच्छरीरसम्बन्धं शारीरो वर्णो नापगच्छेत् । तत् तन्निमित्तका अपि

नीयमित्यस्याशयमाह—कदापि नावधीर्येत्यादिना यावदित्यन्तेन । ननु मूले ममेत्यनर्थकं, अस्य सर्वसाधारण्यादित्याशङ्कां परिहरन्नाह—यद्यपीत्यादिना । मत्परायणा भवन्तु नामेति । मुमुक्षवो भवन्तु ।

देशे । देशान्तरे तु स्नानमात्रम् । तल्लक्षणं त्वाह बृहस्पतिः—"महानद्यन्तरं यत्र गिरिर्वा व्यवधायकः । वाचो यत्र विभिद्यन्ते तद्देशान्तरमुच्यते । देशान्तरं वदन्त्येके षष्टियोजनमायत"मिति । एतच्च पित्रादिभिन्नविषयमित्युक्तं स्मृत्यर्थसारे—"मातापितृमरणे दूरदेशेऽपि संवत्सरोर्ध्वमपि पुत्रो दशाहादिकं पूर्णमाशौचं कुर्यात्स्त्रीपुंसयोः परस्परं सपत्नीषु चैव"मिति । विरक्तानां साधूनां तु मातापितृमरणे स्नानमात्रं न त्वाशौचमित्युक्तं हेमाद्रौ लैङ्गे—"योगिनां तु विरक्तानां नाशौचं न च सूतकम् । पित्रोरुपरमे तेषां स्नानमात्रं तथा गुरो"रिति । आशौचसम्पाते त्वाह माधवीये यमः—"जनने जननं चेत्स्यान्मरणे मरणं तथा । पूर्वशेषेण शुद्धिः स्यादुत्तराशौचवर्जन"मिति । "शावेन शुध्यति सूतिर्न सूतिः शावशोधिनी"ति च । तथा "गुरुणा लघु शुध्येत्तु लघुना नैव गुर्विती"ति ।

क्वचिदाशौचापवादोऽप्युक्तः कौर्मे—"नैष्ठिकानां वनस्थानां यतीनां ब्रह्मचारिणाम् । नाशौचं कीर्त्तितं सद्भिः पतिते च तथा मृत" इति । "आहवे च तथा मृत" इति तुर्यचरणे पाठान्तरम् । शुद्धितत्त्वे कौर्मे च—"सद्यःशौचं समाख्यातं दुर्भिक्षे चाप्युपद्रव" इति । शुद्धिरत्नाकरे दक्षश्चाह—"स्वस्थकाले त्विदं सर्वं सूतकं परिकीर्त्तितम् । आपद्गतस्य सर्वस्य सूतकेऽपि न सूतक"मिति । स्नानमात्रं तु भवत्येव । त्रिंशच्छ्लोक्यां चोक्तम्—"तत्तत्कार्येषु सत्रिव्रतिनृपनृपवद्दीक्षितर्त्विक्स्वदेशभ्रंशापत्स्वप्यनेकश्रुतिपठनभिषक्कारुशिल्प्यातुराणाम् । सम्प्रारब्धेषु दानोपनयनयजनश्राद्धयुद्धप्रतिष्ठाचूडातीर्थार्थयात्राजपपरिणयनाद्युत्सवेष्वेतदर्थे ॥" इति । नाशौचमिति शेषः । एतच्छ्लोकार्थो निर्णयसिन्धोर्ज्ञेयः । याज्ञवल्क्यश्चाह—"ऋत्विजां दीक्षितानां च यज्ञियं कर्म कुर्वताम् । सत्रिव्रतिब्रह्मचारिदातृब्रह्मविदां तथा । दाने विवाहे यज्ञे च सङ्ग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यः शौचं विधीयत" इति । एतदर्थो मिताक्षराया अवगन्तव्यः । आशौचे सन्ध्यावन्दनादिकर्मनिषेधस्त्वग्रे वक्ष्यते ॥ ८८ ॥

---

विधेया यथाविधि विधिगोचरैरनुष्ठेया एवेत्यभिप्रेत्य ममेत्याह । मदीयैरपीति यावत् । आशौचनिर्णयस्तु तत्परेषु धर्मशास्त्रेषु बोध्यः । नात्र तन्निर्णयाय वयं प्रयतामहे ॥ ८८ ॥

---

नामेति यावत् । मूले जनैरित्यनेन विधिगोचरता व्यज्यते, जनिमन्तो हि जनाः, जनिश्च शरीरसम्बन्धः, सति तस्मिन्वर्णविभेदोऽप्यवर्जनीयः, तथा च विधिगोचरतापि ॥ ८८ ॥

भाव्यं शमदमक्षान्तिसन्तोषादिगुणान्वितैः ।
ब्राह्मणैः शौर्यधैर्यादिगुणोपेतैश्च बाहुजैः ॥ ८९ ॥
वैश्यैश्च कृषिवाणिज्यकुसीदमुखवृत्तिभिः ।
भवितव्यं तथा शूद्रैर्द्विजसेवादिवृत्तिभिः ॥ ९० ॥

चातुर्वर्ण्यधर्मानाह द्वाभ्याम्—भाव्यमिति । ब्राह्मणैः शमश्च दमश्च क्षान्तिश्च सन्तोषश्च ते आदयो येषां तैर्गुणैरन्वितैः–युक्तैर्भाव्यं–भवितव्यम् । तत्र शमो मनोनिग्रहः । तस्यैव सुखहेतुत्वात्प्राङ्निर्देशः । "अशान्तस्य कुतः सुख"मिति स्मृतेः। दमस्त्विन्द्रियनिग्रहः। तन्माहात्म्यं भारतीयापद्धर्मे द्रष्टव्यम्—"दमं निःश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः। ब्राह्मणस्य विशेषेण दमो धर्मः सनातन" इत्यादि । क्षान्तिः–परापराधसहिष्णुत्वम् । तस्या भगवत्तोषहेतुत्वाद्गुणत्वम् । तदुक्तं जमदग्निना—"वयं हि ब्राह्मणास्तात! क्षमयाऽर्हणतां गताः। यया लोकगुरुर्देवः पारमेष्ठ्यमगात्पदम् । क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा । क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वर" इति । सन्तोषः–अनायासलब्धान्नवस्त्रादिनाऽलंबुद्धिः । तं विना तु नरकपातापत्तेः । "पण्डिता बहवो राजन्बहुज्ञाः संशयच्छिदः। सदसस्पतयोऽप्येके असन्तोषात्पतन्त्यधः । असन्तुष्टस्य विप्रस्य तेजो विद्या तपो यशः । स्रवन्तीन्द्रियलौल्येन ज्ञानं चैवावकीर्यत" इति नारदोक्तेः । तस्यैव चाखिलार्थसम्पादकत्वाचाह भगवान्—"सन्तुष्टो यर्हि वर्तेत ब्राह्मणो येन केनचित्। अहीयमानः स्वाद्धर्मात्स ह्यस्याखिलकामधुक् ॥ पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः। यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते । तत्प्रशाम्यत्यसन्तोषादम्भसेवाशुशुक्षणि"रिति । आदिशब्दात्तपोदयादिग्रहणम् । "ब्राह्मणस्य हि देहोऽयं क्षुद्रकामाय नेष्यते । कृच्छ्राय तपसे चेह प्रेत्यानन्तसुखाय चे"त्यादिभगवदुक्तेः । भगवद्गीतायां च—"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावज"मिति । मोक्षधर्मेषु चोक्तम्—"न क्रुध्येन्न प्रहृष्येच्च मानितोऽमानितश्च यः । सर्वभूतेष्वभयदस्तं देवा ब्राह्मणं विदुः ॥ जीवितं यस्य धर्मार्थं धर्मो ह्यर्थ-

चातुर्वर्ण्यप्रसङ्गाच्चतुर्णां वर्णानां लक्षणमुच्यते—भाव्यमिति । शमः–अन्तरिन्द्रिय-

चतुर्णां वर्णानां लक्षणमुच्यत इति । इह लक्षणशब्देनोत्कर्षाधायको गुणविशेषो विवक्षितः,

मेव च । अहोरात्राश्च पुण्यार्थं तं देवा ब्राह्मणं विदु”रित्यादि । सनत्सुजातीये तु द्वादश गुणा उपादेया द्वादश दोषा हेयाश्चोक्ताः—“धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । यज्ञश्च दानं च धृतिः श्रुतं च महाव्रता द्वादश ब्राह्मणस्य ॥ क्रोधः कामो लोभमोहौ विधित्साऽकृपासूये मानशोकौ स्पृहा च । ईर्ष्या जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नराणा”मिति ।

तथा—बाहुजैः—वैराजपुरुषबाहूत्पन्नैः, क्षत्रियैरित्यर्थः । “बाहू राजन्यः कृतः” इति श्रुतेः । शौर्यं च धैर्यं च ते आदी येषां तैर्गुणैरुपेतैः—युक्तैर्भाव्यम् । शौर्यं—रणोत्साहः । धैर्यं—सहिष्णुत्वम् । आदिशब्दादौदार्यादिग्रहणम् । उक्तं चैकादशस्कन्धे—“तेजो बलं धृतिः शौर्यं तितिक्षौदार्यमुद्यमः । स्थैर्यं ब्रह्मण्यतैश्वर्यं क्षत्रप्रकृतयस्त्विमा” इति ॥ ८९ ॥

वैश्यैरिति । वैश्यैः—तृतीयवर्णैः । कृषिश्च वाणिज्यं च कुसीदं च तानि मुखानि—आदिभूतानि यासां ता वृत्तयो येषां तैस्तथोक्तैर्भवितव्यम् । तत्र कृषिः—वृद्धपराशरस्मृत्युक्तरीत्या कर्षणम् । वाणिज्यं—लाभार्थमनिषिद्धपदार्थक्रयविक्रयलक्षणो व्यापारः । कुसीदं—व्यवहाराध्यायोक्तयथोचितवृद्ध्यर्थं द्रव्यप्रयोगः । कुत्सितं कौ वा सीदन्त्यत्रेति कुसीदमिति क्षीरस्वामी । अत एवोक्तमारण्यके पर्वणि—“पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स वारिचर ! मोदत” इति ।

---

निग्रहः, दमः—बाह्येन्द्रियनिग्रहः, क्षमा—परैः पीड्यमानस्यापि तान्प्रत्यविकृतचित्तत्वं, सन्तोषो—यदृच्छालब्धेन, आदिना सत्यादीनां परिग्रहः । ब्राह्मणैरुक्तगुणलक्षणलक्षितैर्भाव्यमिति भावः । तथाच स्मर्यते—“सत्यं दानं तपः शौचमानृशंस्यं दमो घृणा । दृश्यन्ते यत्र विप्रेन्द्र ! स ब्राह्मण इति स्मृतः ॥ जितेन्द्रियो धर्मपरः स्वाध्यायनिरतः शुचिः । कामक्रोधौ वशे

---

येन विशिष्टदृष्टिः पतेत् । क्षमा न केवलमविकृतचित्तत्वं, अपीडितस्य वा स्वेनैव पीडितस्य वा तत्सम्भवादत आह—परैः पीड्यमानस्य तान्प्रत्यविकृतचित्तत्वमिति । अपेक्षितलाभे सन्तोषस्तु सर्वस्य

---

१ धर्मः—वर्णाश्रमनियतः सन्ध्योपासनादिः । सत्यं—हिंसावर्जं यथार्थभाषणम् । दमः—जिह्वोपस्थादिनिग्रहः । तपः—कृच्छ्रचान्द्रायणादि । अमात्सर्यं—मत्सरः—परगुणासहिष्णुत्वं तदभावः । ह्रीः—अकार्येषु लज्जा । तितिक्षा—सत्यपि क्रोधनिमित्ते तदनुत्पादः । अनसूया—परगुणेषु दोषाविष्करणमसूया तदभावः । यज्ञः—ब्रह्मयज्ञादिः । दानं—पात्रेषु द्रव्यार्पणम् । धृतिः—अत्यन्तापद्यपि मतादेरत्यागः । श्रुतं—अर्थग्रहणसहितं वेदाध्ययनम् । क्रोधः—इच्छाप्रतिघातोत्थ आक्रोशताडनादिहेतुर्मनस्तापः । कामः—व्यभिलाषः । लोभः—द्रव्यव्ययभीरुत्वम् । मोहः—कृत्याकृत्यविवेकराहित्यम् । विधित्सा—सत्यप्युत्तरोत्तरलाभे पिपासाख्याऽतृप्तिः । धेट् पाने इत्यस्य रूपम् । अकृपा—निर्दयत्वम् । असूया—परगुणेषु दोषदर्शनम् । मानः—आत्मनि पूज्यताबुद्धिः । शोकः—इष्टार्थनाशे मनोवैकल्यम् । स्पृहा—भोग्यवर्गेष्वादरः । ईर्ष्या—परोत्कर्षासहिष्णुत्वम् । जुगुप्सा—परनिन्दा बीभत्सता वा । इति नीलकण्ठो व्याचख्यौ ।

तथा–शूद्रैः–तुरीयवर्णैः । द्विजानां–ब्राह्मणादीनां सेवा–शुश्रूषा आदिर्यासां ता वृत्तयो येषां तैस्तथोक्तैर्भवितव्यम् । "द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छती"त्यानुशासनिकपर्वोक्तेः । आदिशब्दान्मातापितृशुश्रूषादिग्रहणम् । चकारादहिंसादिधर्मयुक्तैरिति ज्ञेयम् । "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दानं दमो दया क्षान्तिः सर्वेषां धर्मसाधन"मिति याज्ञवल्क्येन चातुर्वर्ण्यसाधारणधर्मोक्तेः । वर्णधर्मविस्तरस्तु धर्मशास्त्रादवगन्तव्यो विस्तरभयान्नात्रोक्तः ॥ ९० ॥

यस्य तं देवा ब्राह्मणं विदुः ॥ योऽध्यापयेदधीते यो याजयेद्वा यजेत वा । दद्याद्वापि यथाशक्ति तं देवा ब्राह्मणं विदुः ॥ क्षमा दया च विज्ञानं सत्यं चैव दमः शमः । अध्यात्मनिरतिर्ज्ञानं एतद्ब्राह्मणलक्षणम् ॥" इति । गीतायां च—"शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम् ॥" इति । बाहुजैः–क्षत्रियैः शौर्यादिगुणसम्पन्नैर्भाव्यम् । वैश्यैः कृष्यादिवृत्तिभिर्भाव्यम् । शूद्रैस्तु वर्णत्रयसेवावृत्तिभिर्भाव्यम् । तथा च वचनम्—"शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥ कृषिगोरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् । परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम्" इति ॥ ८९–९०

स्यादत आह—यदृच्छालब्धेनेति ॥ ८९ ॥ ९० ॥

---

**संस्काराश्चाह्निकं श्राद्धं यथाकालं यथाधनम् ।**
**स्वस्वगृह्यानुसारेण कर्त्तव्यं च द्विजन्मभिः ॥ ९१ ॥**

संस्कारा इति । द्विजन्मभिः–त्रैवर्णिकैः । संस्क्रियते पुमानेभिरिति संस्काराः। ते च गर्भाधानादयः षोडश। अह्नि भवमह्ना निर्वृत्तं वा आह्निकं–सन्ध्यावन्दनादिकं नित्यकर्म । तदुक्तं पराशरेण—"स्नानं सन्ध्या जपो होमः स्वाध्यायः पितृतर्पणम् । देवतापूजनं चेति षट् कर्माणि दिने दिन" इति । श्राद्धं च–

एवं वर्णलक्षणमभिधाय तत्र द्विजैः संस्कारादि यथाकालं विधेयमित्याह—संस्काराश्चेति । संस्काराः–गर्भाधानादयः । आह्निकम्–"स्नानं सन्ध्याजपो होमः स्वाध्यायः पितृतर्पणम् । देवतापूजनं चेति षट्कर्माणि दिने दिने" इत्युक्तमन्वहं कर्त्तव्यम् । श्राद्धं–

ननु कर्त्तव्यमित्येकवचनान्तनिर्देशो न सङ्गच्छते, "संस्काराश्चाह्निक"मिति बहूनां निर्देशादित्य-

श्रद्धाऽस्त्यस्मिन्निति श्राद्धं—श्राद्धाख्यं पितृकर्म । तथा चाह पृथ्वीचन्द्रोदये मरीचिः—"प्रेतं पितॄंश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः । श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्त्तित"मिति । एकवचनं तु जात्यभिप्रायेण । निर्णयसिन्धौ षण्णवतिः श्राद्धानि नित्यान्युक्तानि—"अमामनुयुगक्रान्तिधृतिपातमहालयाः । आन्वष्टक्यं च पूर्वेद्युः षण्णवत्यः प्रकीर्तिता" इति । स्वस्य स्वस्य गृह्यं—कल्पसूत्रं तस्यानुसारेण । शाखान्तरीयगुणोपसंहारेण, वैदिकानुष्ठानकर्मविशेषज्ञापकान्याश्वलायनकात्यायनलाट्यायनादिमुनिप्रणीतानि कल्पसूत्राणि बहूनि सन्ति तत्र स्ववेदशाखर्षिप्रणीतगृह्यसूत्रोक्तरीत्येत्यर्थः । गृह्यपदार्थ उक्तो गृह्यसङ्ग्रहे—"पत्न्यः पुत्राश्च कन्याश्च जनिष्याश्चापरे सुताः । गृह्या इति समाख्याता यजमानस्य दायदाः । तेषां संस्कारयोगेन शान्तिकर्मक्रियासु च । आचार्यविहितः कल्पस्तस्माद्गृह्य इति स्थिति" रिति । यथाकालम्—"पूर्वाह्णो वै देवानां मध्यंदिनो मनुष्याणामपराह्णः पितॄणा"मिति श्रुत्या, "पूर्वाह्णे दैविकं कर्माऽपराह्णे पैतृकं तथे"-त्यादिस्मृत्या चोक्तं तत्तत्कर्मकालमनतिक्रम्य । यथाधनं च—वित्तशाठ्यमकृत्वेत्यर्थः । कर्त्तव्यम् । एतत्पदं **संस्कारा** इत्यनेनापि लिङ्गवचनविपरिणामं कृत्वा **कर्त्तव्या** इति सम्बन्धनीयम् । यथाविधि संस्कारानुष्ठानेनैव सकलार्थसिद्धेरिति भावः । "बह्वल्पं वा स्वगृह्योक्तं यस्य कर्म प्रकीर्त्तितम् । तस्य तावति शास्त्रार्थे कृते सर्वः कृतो भवे"दिति गृह्यपरिशिष्टोक्तेः ।

यथाबलमिति पाठे यथाशक्तीत्यर्थः । **तद्यथा**—गर्भाधानादिसंस्काराणां तत्तत्काले पृथक्पृथक्करणासामर्थ्ये चौलकाल उपनयनकालेऽपि वा ते युगपदेव कार्या इति । एवं त्रिकालस्नानसन्ध्यावन्दनाद्यसामर्थ्ये माध्याह्निकं कर्मापि प्रातरेव कार्यम् । तत्रापि सम्पूर्णसन्ध्यावन्दनाद्यसामर्थ्ये आचमनप्राणायामार्घदानदशसङ्ख्याकगायत्रीमन्त्रजपमात्रमपि कार्यमिति । एवं षण्णवतिश्राद्धकरणासामर्थ्ये

---

पैतृकम् । इदमखिलं काले काले द्विजैः स्वस्वगृह्यानुसारेण विधेयम्-तत्तच्छाखिभिर्बोधायनादिमहर्षिप्रणीततत्तद्गृह्यानुसारेणैव विधेयम्, नतु भिन्नशाखीयगृह्यानुसारेणेति भावः । यथाधनमित्यतः श्राद्धादिषु मुख्यगौणाद्याश्रयणं द्रव्यानुकूल्यानुरोधेन कार्यमिति बोध्यते । नपुंसकैकशेषैकवद्भावाश्रयणेन कर्त्तव्यमिति निर्देशः । कर्त्तव्या इति लिङ्गविभक्तिविपरिणामेन

---

आह—नपुंसकैकशेषैकवद्भावाश्रयणेनेति । नपुंसकैकशेषस्यैकवद्भावस्य चाश्रयणादित्यर्थः । एकवद्भा-

महालयं सांवत्सरिकं चेति द्वे अपि कार्ये । तत्रापि सम्पूर्णश्राद्धकरणासामर्थ्ये तु–"पिण्डमात्रं प्रदातव्यमभावे द्रव्यविप्रयोः । श्राद्धीयाहनि सम्प्राप्ते भवेन्निरशनोऽपि वे"त्यादिधर्मशास्त्रोक्तोऽनुकल्पो ग्राह्य इति ।

उपवासदिने श्राद्धप्राप्तौ त्वाह माधवीये कात्यायनः—"उपवासो यदा नित्यः श्राद्धं नैमित्तिकं भवेत् । उपवासं तदा कुर्यादाघ्राय पितृसेवित"मिति । केचित्तूपवासदिननिमित्तकं श्राद्धं पारणादिन आहुः । तदुक्तं पाद्मे पुष्करखण्डे—"एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् । तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरे"दिति । ब्रह्मवैवर्त्ते च—"ये कुर्वन्ति महीपाल ! श्राद्धं त्वेकादशीदिने । त्रयस्ते नरकं यान्ति दाता भोक्ता परेतक" इति । चकारादिष्टापूर्त्तादिग्रहणम् ।

अत्र द्विजन्मभिरित्युक्तिस्तु शूद्राणामच्छान्दसत्वेन सकलसंस्काराद्यभावात्त्रवर्णिकभिन्नविधिना कतिपयसंस्काराद्युक्तेश्चेति ज्ञेयम् । "गायत्र्या ब्राह्मणमसृजत्त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्र"मिति श्रुतेः । शूद्रस्यापि दश संस्कारानाह संस्कारमयूखे व्यासः—"गर्भाधानं पुंसवनं सीमन्तो जातकर्म च । नामक्रियां निष्क्रमोऽन्नप्राशनं वपनक्रिया । कर्णवेधो व्रतादेशो वेदारम्भक्रियाविधिः । केशान्तः स्नानमुद्वाहो विवाहाग्निपरिग्रहः । त्रेताग्निसङ्ग्रहश्चैव संस्काराः षोडश स्मृता" इत्युक्त्वाह—"नवैताः कर्णवेधान्ता मन्त्रवर्जं क्रियाः स्त्रियाः । विवाहो मन्त्रतस्तस्याः शूद्रस्यामन्त्रतो दशे"ति । ब्राह्मे तु—"विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा । न केनचित्समसृजच्छन्दसा तं प्रजापति"रित्युक्तम् । तत्र सदसच्छूद्रगोचरत्वेन देशभेदाद्व्यवस्थेति निर्णयसिन्धुः । शूद्राणां सन्ध्यावन्दनादिवर्जं नाममन्त्रेणाह्निकं श्राद्धं च शूद्रकमलाकराज्ज्ञेयम् ॥ ९१ ॥

---

वाऽन्वयः । कर्त्तव्यानीति च क्वचित्पाठः ॥ ९१ ॥

---

वाश्रयणे क्लेशादाह—कर्त्तव्या इति लिङ्गविभक्तिविपरिणामेन वान्वय इति ॥ ९१ ॥

**अज्ञानाज्ज्ञानतो वापि गुरु वा लघु पातकम्।**
**क्वापि स्यात्तर्हि तत्प्रायश्चित्तं कार्यं स्वशक्तितः॥ ९२॥**

अज्ञानादिति। क्वापि—क्वचित्समये। अज्ञानात्—अबुद्धिपूर्वम्। ज्ञानात्—बुद्धिपूर्वकमपि वा। गुरु—महत्, पातित्यहेतुरित्यर्थः। लघु—अल्पमपि वा। पातकं—पापम्। स्यात्। कुसङ्गात्स्वभावदोषादिना वा स्वेन यदि कृतं भवेदित्यर्थः। **ननु**—पातयतीति पातकमिति व्युत्पत्त्या पातकशब्दस्य पतनहेतुब्रह्महत्यादिपापविशेषवाचकत्वाद्गुरुपदेन सम्बन्धो युक्त एव न तु लघुपदेनापीति चेत्सत्यम्। विशेषेण सामान्ये लक्षणेति न दोषः। यद्वा—लघुनः पापस्य सद्यःपातित्यहेतुत्वाभावेऽप्यभ्यासेन पातित्यहेतुत्वात्पातकशब्दवाच्यत्वमविरुद्धमिति न दोषः। तर्हि। स्वशक्तितः—यथाशक्ति। तस्य—पातकस्य प्रायश्चित्तं—विशोधनं सत्कर्म। कार्यं—कर्तव्यम्। "विहितस्याननुष्ठानान्निन्दितस्य च सेवनात्। अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति॥ तस्मात्तेनेह कर्त्तव्यं प्रायश्चित्तं विशुद्धये। एवमस्यान्तरात्मा च लोकश्चैव प्रसीदती"ति योगीश्वरोक्तेः। प्रायश्चित्तशब्दश्चायं पापक्षयार्थे नैमित्तिके कर्मविशेषे रूढ इति विज्ञानेश्वरः। "प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्नरकान्यान्ति दारुणा"निति प्रायश्चित्ताकरणे दोषस्मृतेश्च। पापं च सर्वथा न गोपनीयमित्युक्तं भारते—"तस्मात्पापं न गूहेत गूह्मानं विवर्धते। कृत्वा तु साधुष्वाख्येयमेतत्प्रशमयन्ति त" इति।

**ननु**—"प्रायश्चित्तैरपैत्येनो यदज्ञानकृतं भवे"दित्यादिस्मृतेः कथं ज्ञानकृतेऽपि पापे प्रायश्चित्तमिति चेन्न। तस्या असार्वत्रिकत्वात्। "विहितं यदकामानां कामात्तद्द्विगुणं भवे"दित्यादिवाक्यैर्ज्ञानकामयोः साहचर्याज्ज्ञानकृतेऽपि पापे प्रायश्चित्तविधानात्। यत्र च ब्राह्मणहननादौ विशेषवाक्यं तत्र तु न प्रायश्चित्तम्। यथा—"इयं विशुद्धिरुदिता प्रमाप्याकामतो द्विजम्। कामतो ब्राह्मणवधे निष्कृतिर्न विधीयत" इत्यादि। विस्तरो मिताक्षरायां द्रष्टव्यः।

पापानि च पञ्चविधान्याह कात्यायनः—"महापापं चातिपापं तथा पातकमेव च। प्रकीर्णकं चोपपापमित्येवं पञ्चको गण" इति। तत्र ब्रह्महत्या सुरापानं

---

एवं काले काले संस्कारादीनां कर्त्तव्यतामुक्त्वा, अथ तदतिलङ्घनादि यदि पापं

ब्राह्मणस्वामिकसुवर्णस्तेयं गुरुस्त्रीगमनमेतच्चतुर्विधपापिसङ्गश्चेति पञ्च महापापानि। मातृगमन–भगिनीगमन–स्नुषागमनादीन्यतिपातकानि। महापातकसमान्यनुपातकापरपर्यायाणि पातकानि। तत्र गुर्वधिक्षेपो नास्तिक्येन वेदनिन्दा अब्राह्मणस्यापि मित्रस्य वधोऽधीतवेदस्यालस्यादिना विस्मरणं चेत्यादीनि ब्रह्महत्यासमानि। लशुनादीनामभक्ष्याणां बुद्धिपूर्वं भक्षणं गुरौ कौटिल्यं राजकुलादौ स्वोत्कर्षार्थमनृतभाषणं रजस्वलामुखचुम्बनादीनि सुरापानसमानि। ब्राह्मणस्याश्वरत्नगोभूमिहरणं निक्षेपहरणादीनि च सुवर्णस्तेयसमानि। मित्रभार्याशिष्यभार्याकुमारीसगोत्रादिगमनं च गुरुपत्नीगमनसमानि। प्रकीर्णकानि तु स्वधर्मातिक्रमणं दिवा स्त्रीगमनं नग्नस्नानं बुच्चा खरोष्ट्रयानादीनि। उपपापानि तु गोवधो व्रात्यता ब्राह्मणसुवर्णतत्समव्यतिरिक्तपरद्रव्यापहरणं सत्यधिकारेऽनाहिताग्नित्वं ज्येष्ठे सोदरे विद्यमाने तदनाज्ञया कनिष्ठस्य दाराग्निसंयोगो गुरुदारतत्समव्यतिरिक्तपरदारसङ्गः स्त्रीहत्या नास्तिक्यं दारसुतविक्रयोऽपतितमातापित्रादिनिष्कासनमनीश्वरशास्त्राधिगमनं व्रतभङ्गो मृगया द्यूतं दिवास्वापादीनि। मनुना त्वन्यान्यपि जातिभ्रंशकरसङ्करीकरणापात्रीकरणमलिनीकरणसंज्ञानि पापानि गणितानि सन्ति। तत्र पुंसि मैथुनं मद्याघ्राणादीनि च जातिभ्रंशकराणि। अश्वाविकादिहननादीनि सङ्करीकरणानि। शूद्रसेवनानृतभाषणादीन्यपात्रीकरणानि। सूक्ष्मजन्तुहत्या मद्यानुगतभोजनादीनि मलिनीकरणानीति। तत्र महापापेषु द्वादशाब्दव्रतादिप्रायश्चित्तम्। अतिपापेषु नरकभोग एव। मरणान्तिकमित्येके। पातकेषु महापापप्रायश्चित्तार्धम्। प्रकीर्णकेषु यथासम्भवं पादकृच्छ्रोपवासादि। उपपापेषु त्रैमासिकव्रतादि। जातिभ्रंशकरेषु सान्तपनकृच्छ्रम्। सङ्करीकरणेषु कृच्छ्रातिकृच्छ्रः। अपात्रीकरणेषु तप्तकृच्छ्रः। मलिनीकरणेष्वपि तप्तकृच्छ्र इति विवेकः। तद्विधिस्तु मिताक्षरादेरवगन्तव्यः।

इदं च द्वादशाब्दव्रतादि साक्षात्कर्तुरेव। अनुमन्तृप्रयोजकादेस्तु तत्तद्दोषानुसारेण पादोनादिप्रायश्चित्ततारतम्यं ज्ञेयम्। तथा चाह पैठीनसिः—"हन्ता मन्त्रोपदेष्टा च तथा सम्प्रतिपादकः। प्रोत्साहकः सहायश्च तथा मार्गानुदेशकः। आश्रयः शस्त्रदाता च भक्तदाता विकर्मणाम्। उपेक्षकः शक्तिमांश्चेद्दोषवक्तानुमोदकः। अकार्यकारिणां तेषां प्रायश्चित्तं प्रकल्पयेत्। यथाशक्त्यनुरूपं च दण्डं

---

प्रसजेत्, तत्प्रायश्चित्तेन परिहार्यमित्याह—अज्ञानादिति। क्वापि–कदाचिदित्यर्थः। स्वशक्तितः–

चैषां प्रकल्पये"दिति । तथा बालवृद्धादीनां साक्षात्कर्तृत्वेऽप्यर्धमेव । "अशीतिर्यस्य वर्षाणि बालो वाऽप्यूनषोडशः । प्रायश्चित्तार्धमर्हन्ति स्त्रियो रोगिण एव चे"त्यङ्गिरःस्मरणात् । बालस्य विशेषमाह शङ्खः—"ऊनैकादशवर्षस्य पञ्चवर्षात्परस्य च । प्रायश्चित्तं चरेद्भ्राता पिता वाऽन्यः सुहृज्जनः । अतो बालतरस्यास्य नापराधो न पातकम् । राजदण्डो न तस्यास्ति प्रायश्चित्तं न विद्यत" इति ।

एतत्सर्वं प्रकाशपापप्रायश्चित्तविषयं ज्ञेयम् । रहस्यपापेषु त्वाह वसिष्ठः—"जपिनां होमिनां विष्णुध्यायिनां तीर्थसेविनाम् । निवसन्ति न पापानि ये च स्नाताः शिरोव्रतै"रिति । याज्ञवल्क्यश्चाह—"विख्यातदोषः कुर्वीत पर्षदोऽनुमतं व्रतम् । अनभिख्यातदोषस्तु रहस्यं व्रतमाचरे"दिति । कर्तृव्यतिरिक्तमनुष्यैरनभिख्यातो दोषो यस्यासौ । रहस्यं—अप्रकाशं जपहोमादिप्रायश्चित्तमनुतिष्ठेत् ।

ननु—यमभयात्पापस्य प्रायश्चित्तं विहितं, रहस्यपापं यमाय को निवेदयतीति चेच्छृणु । यमस्य भगवद्विभूतित्वेन सर्वज्ञत्वात्सर्वमपि जानात्येव, सूर्यादयश्च कर्मसाक्षिणः सन्तीत्यवधारय । तदुक्तं श्रीभागवते—"सूर्योऽग्निः खं मरुद्गावः सोमः सन्ध्याऽहनी दिशः । कं कुः कालो धर्म इति ह्येते दैह्यस्य साक्षिण" इति । भारते च—आदित्यचन्द्रावनलानिलौ च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्त"मिति । बृहस्पतिश्चाह—"पृथिवी वायुराकाशमापो ज्योतिर्मनोऽन्तकः । बुद्धिरात्मा च सर्वे ते धर्मं पश्यन्ति नित्यदे"ति । मनुश्चाह—"द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः । रात्रिः सन्ध्ये च धर्मश्च वृत्तज्ञाः सर्वदेहिना"मिति । तस्माद्रहस्यपापेऽपि प्रायश्चित्तं युक्तमेवेति । तत्र यदि कर्त्ता स्वयं धर्मशास्त्रकुशलस्तदा परस्मिन्नविभाव्य स्वनिमित्तोचितं प्रायश्चित्तमनुतिष्ठेत् । यस्तु स्वयमनभिज्ञोऽसौ 'केनचिद्रहोऽमुकं पापं कृतं तत्र किं रहस्यप्रायश्चित्त'मित्यन्यव्याजेन धर्मशास्त्रज्ञं सुशीलं ब्राह्मणं पृष्ट्वा रहोव्रतमनुतिष्ठेत् । तच्च देशाद्यनुसारेणैवेति स एवाह—"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः । प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृति"रिति । तच्च

---

गुरुलघुप्रायश्चित्तयोरेकं स्वीयशरीरशक्त्यनुसारेण कार्यम् । एतेन सति करणपाटवे न लघुप्रा-

---

शक्तिशब्दस्य शारीरशक्तिपरतया व्याख्यानतो गम्यमानमाशयमाह—एतेनेति । गुरुलघुप्राय-

मनुष्यदेहस्य क्षणभङ्गुरत्वाच्छीघ्रमेव कर्त्तव्यमित्याह श्रीशुकदेवः—"न चेदिहैवापचितिं यथांहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः। ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्त्तिता मे भवतस्तिग्मयातनाः॥ तस्मात्पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना। दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवि"दिति। तच्च भगवद्भक्तिसहितमेव कर्त्तव्यं न तु केवलम्। "प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम्। न निष्पुनन्ति राजेन्द्र! सुराकुम्भमिवापगा" इत्यपि तेनैवोक्तत्वात्।

तत्र प्रकाशपापस्य प्रायश्चित्तं पर्षदुपदिष्टमेव कर्तव्यम्। तथा चाहाङ्गिराः—"सचैलं वाग्यतः स्नात्वा क्लिन्नवासाः समाहितः। पर्षदानुमतस्तथ्यं सर्वं विख्यापयेन्नरः। व्रतमादाय भूयोऽपि तथा स्नात्वा व्रतं चरे"दिति। पर्षदमाह प्रायश्चित्तमयूखे लघुपराशरः—"चत्वारो वा त्रयो वापि वेदवेदाङ्गपारगाः। ब्राह्मणानां समर्था ये पर्षत्सा हि विधीयत" इति। याज्ञवल्क्यस्त्वाह—"चत्वारो वेदधर्मज्ञाः पर्षत्त्रैविद्यमेव वा। सा ब्रूते यं स धर्मः स्यादेको वाऽध्यात्मवित्तम" इत्यादि।."चत्वारो ब्राह्मणा वेदधर्मशास्त्रज्ञाः पर्षत्। तिस्रो विद्या अधीयत इति त्रैविद्यास्तेषां समूहस्त्रैविद्यम्, धर्मशास्त्रज्ञत्वमत्राप्यनुवर्तते, तद्वा पर्षत्। अध्यात्मज्ञानेषु निपुणतमो धर्मशास्त्रज्ञश्च स एकोऽपि वा पर्ष"दिति मिताक्षरा। पर्षदापि सम्यग् धर्मशास्त्रार्थं निश्चित्य देशकालाद्यनुसारेण व्रतमुपदेष्टव्यं नान्यथेत्याह वसिष्ठः—"अज्ञात्वा धर्मशास्त्राणि प्रायश्चित्तं ददाति यः। प्रायश्चित्ती भवेत्पूतः पर्षदं किल्बिषं व्रजे"दिति। "प्रायश्चित्तं चिकित्सां च ज्योतिषं धर्मनिर्णयम्। विना शास्त्रेण यो ब्रूयात्तमाहुर्ब्रह्मघातक"मिति मनुस्मृतेश्चेति दिक्॥ ९२॥

---

यश्चित्तमाश्रयणीयमिति भावः॥ ९२॥

---

श्चित्तयोर्व्यवस्थितविकल्पो ग्राह्य इति सिद्धम्॥ ९२॥

वेदाश्च व्याससूत्राणि श्रीमद्भागवताभिधम् ।
पुराणं भारते तु श्रीविष्णोर्नामसहस्रकम् ॥ ९३ ॥
तथा श्रीभगवद्गीता नीतिश्च विदुरोदिता ।
श्रीवासुदेवमाहात्म्यं स्कान्दवैष्णवखण्डगम् ॥ ९४ ॥
धर्मशास्त्रान्तर्गता च याज्ञवल्क्यऋषेः स्मृतिः ।
एतान्यष्ट ममेष्टानि सच्छास्त्राणि भवन्ति हि ॥ ९५ ॥

सच्छास्त्राणां सकलधर्मज्ञानहेतुत्वाद्बहुषु तेषु स्वाभीष्टान्याह त्रिभिः—वेदा इति । वेदाः–ऋगादयश्चत्वारोऽपि । ते च वेदशब्दवाच्यत्वादेकं शास्त्रम् । अत्र वेदशब्देन साङ्गानां वेदानां ग्रहणं विवक्षितम् । तुर्यश्लोकेऽध्ययनविधानात् । "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यो ज्ञातव्यश्चे"त्यादिश्रुतेः । अङ्गानि तु शिक्षा कल्पो व्याकरणं छन्दो ज्योतिर्निरुक्तमिति षट् । व्यासोक्तानि सूत्राणि व्याससूत्राणि । "अथातो ब्रह्मजिज्ञासे"त्यादीनि शारीरकाख्यानि सूत्राणीत्येकं शास्त्रम् । सूत्रलक्षणं तु—"अल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदु"रिति । तथा श्रीमद्भागवताभिधं पुराणं चेत्येकं शास्त्रम् । श्रीमदिति विशेषणं भागवताख्योपपुराणव्यावृत्त्यर्थम् । अस्य लक्षणमुक्तं भावार्थदीपिकायां पुराणान्तरे—"ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसम्मितः ।

---

एवं सामान्यतो धर्मान्निरूप्य मुमुक्षुभिरवश्यं ज्ञातव्यं तत्त्वोपायपुरुषार्थस्वरूपं निरूपयिष्यन्नेषां सर्वेषां शब्दैकप्रमाणकानां भ्रमविप्रलम्भादिसम्भावनाशून्यापौरुषेयवेदमूलकत्वं व्यञ्जयंस्तदुपबृंहणेषु मध्ये केषाञ्चिद्वेदानामिव स्वस्येष्टत्वं ज्ञापयति—वेदाश्चेति । वेदा इत्येतद्दृष्टान्तविषया । यद्वा–पूर्वं "स्वस्वगृह्यानुसारेणे"ति शास्त्रविशेषस्य ग्रहणात्तत्प्रसङ्गेन श्रुतितदुपबृंहणभेदेन भिन्नेष्वनेकेषु प्रमापकेषु मध्ये केषुचित्स्वप्रीतिं प्रदर्शयति—वेदाश्चेति ।

---

तत्त्वोपायपुरुषार्थस्वरूपं निरूपयिष्यन्निति । "ह्रस्वोऽणुसूक्ष्मश्चिद्रूप"इत्यादिना तत्त्वस्वरूपं, "धर्मो ज्ञेय" इत्यनेनोपायस्वरूपं, "तत्र ब्रह्मात्मना कृष्णसेवा मुक्ति"रित्यनेन पुरुषार्थस्वरूपं च निरूपयिष्यमाणं बोध्यम् । शब्दैकप्रमाणकानामित्यनेन प्रमाणान्तरतोऽप्राप्तिर्व्यज्यते । वेदमूलकत्वं व्यञ्जयन्निति । प्रमेयतः प्राक् प्रमाणनिरूपणं हि वक्ष्यमाणप्रमेयस्यैतत्प्रमाणगम्यत्वज्ञापनार्थैवेति भावः । स्वतःप्रमाणस्य वेदस्य तन्मूलकप्रमाणान्तरेण सह प्रमाणकोटावैलक्षण्येन ग्रहणमनुचितमित्याशयेनाह—वेदानामिव स्वस्येष्टत्वं ज्ञापयतीति । एतदनुरोधेन व्याचष्टे—वेदा इत्येतद्दृष्टान्तविषयेति ।

हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा । गायत्र्या च समारम्भस्तद्वै भागवतं विदु"-रिति । पुराणलक्षणं त्वाह सूतः—"पुराणलक्षणं ब्रह्मन्! ब्रह्मर्षिभिर्निरूपितम् । शृणुष्व बुद्धिमाश्रित्य वेदशास्त्रानुसारतः । सर्गोऽस्याथ विसर्गश्च वृत्ती रक्षान्तराणि च । वंशो वंश्यानुचरितं संस्था हेतुरपाश्रयः । दशभिर्लक्षणैर्युक्तं पुराणं तद्विदो विदुः । केचित्पञ्चविधं ब्रह्मन्महदल्पव्यवस्थये"ति । अत्र वृत्तिरक्षाशब्दाभ्यां स्थानपोषणे उच्येते । अन्तराणि–मन्वन्तराणि । वंशो वंश्यानुचरितमितीशानुकथाः । संस्था–निरोधः । अनेनैवात्यन्तिकलयरूपा मुक्तिरप्युक्ता । हेतुशब्देन जीवाश्रयवासनाशब्दवाच्या ऊतय इति श्रीधरस्वामिव्याख्या । अस्य पुराणस्यार्षानार्षत्वे बहवो विवदन्ते, तत्रानार्षत्वोक्तिर्बहुवाक्यविरोधात्कुतर्कविलसितैवेत्यनादरणीया । तद्विस्तरस्तु दुर्जनमुखचपेटिकाभागवतप्रकाशभागवतशङ्कानिरासादिभ्योऽवगन्तव्यः । भारते–वेदव्यासकृते महाभारते तु । श्रीविष्णोः सहस्रमेव सहस्रकं, नाम्नां सहस्रकं नामसहस्रकम् । आनुशासनिके पर्वणि प्रसिद्धं सहस्रनामाख्यं स्तोत्रमित्येकं शास्त्रम् । भारत इति विशेषणात्पाद्मोक्तविष्णुसहस्रनामस्तोत्रादस्य भेदो दर्शितः ॥ ९३ ॥

---

अनेन च प्रीतिप्रदर्शनेन विवक्षितः कश्चिदतिशयो व्यञ्जितो भवति, न त्वन्येषामुपबृंहणानामप्रमापकता, अन्यथा विष्णुपुराणप्रभृतीनां सात्त्विकानामप्यप्रामाण्यापत्तेः । ये च वेदा यानि सूत्रप्रभृतीनि तान्येतानि सच्छास्त्राणि हि । शासनाच्छास्त्रं सच्च तच्छास्त्रं सच्छास्त्रं, प्रमापकं शास्त्रमिति यावत् । तत्र वेदस्यापौरुषेयतया भ्रमविप्रलम्भादिपौरुषेयदोषानवकाशेन प्रमापकत्वं प्रसिद्धम् । तथा तन्मूलकेषु सूत्रादिष्वपीति भावः । एवं सच्छास्त्रतया प्रसिद्धान्येतान्यष्टौ ममेष्टानीत्याह—ममेष्टानीति । इष्टानि–प्रीतिविषयाणि । अनेन च तत्र तत्र विशेषो व्यज्यते । तत्र वेदानां जानतामजानतां च शुभावहत्वं मातृवत्प्रियहितपरता चेति विशेषः । तथाच

---

समुच्चयज्ञापकचकारास्वारस्यमभिप्रेत्याह—यद्वेति । मन्दानामापाततः सम्भाव्यमानां शङ्कां व्युदस्यति—न त्वन्येषामुपबृंहणानामप्रमापकतेति । नात्र प्रमाणविभागविनिर्णयार्थो प्रवृत्तिः, यतोऽन्यत्राप्रामाण्यशङ्का प्रसरेदिति भावः । प्रमापकं शास्त्रमिति यावदिति । सत्त्वमिह प्रमापकत्वरूपमिति भावः । प्रमापकतामेवोपपादयति—तत्रेत्यादिना । प्रीतिविषयत्वोक्तेः फलमाह—अनेन च तत्र तत्र विशेषो व्यज्यत इति । अनेन–प्रीतिविषयत्वकथनेन । विशेषमेव निरूपयति—तत्रेत्यादिना । तत्र–वेदप्रभृतिषु । जानतामजानतां चेति । आत्मयाथात्म्यस्वरूपं जानतामजानतां चेत्यर्थः । जानतां निःश्रेयसतदुपायप्रदर्शकतया शुभावहत्वं, अजानतां चैहिकामुष्मिकफलसाधनप्रदर्शकतया शुभावहत्वं बोध्यम् । मातृव-

तथेति । तथेति भारत इति पदमाकर्षति । श्रीभगवद्गीता—भारते भीष्मपर्वणि प्रसिद्धाऽष्टादशाध्यायिनी ब्रह्मविद्येत्येकं शास्त्रम् । भारत इत्यन्वेति । विदुरोदिता नीतिश्च । भारत उद्योगपर्वणि धृतराष्ट्रं प्रति विदुरेणोक्ता नवाध्यायात्मिका नीतिरित्येकं शास्त्रम् । स्कन्देन—कार्तिकेयेनोक्तं स्कान्दं—सप्तखण्डात्मकं स्कन्दपुराणं, तस्य वैष्णवखण्डः—विष्णोरयं वैष्णवः स चासौ खण्डः—भागश्च, तं गच्छति—प्राप्नोतीति तथोक्तम् । विष्णुखण्डस्थमित्यर्थः । श्रीवासुदेवमाहात्म्यं—नरनारायणोक्तद्वात्रिंशदध्यायं श्रीकृष्णमाहात्म्यमित्येकं शास्त्रम् ॥ ९४ ॥

धर्मशास्त्रेति । धर्मशास्त्रस्यान्तर्गता—मध्यगता । यज्ञवल्क्यः—देवराताख्यो ब्रह्मर्षिस्तस्यापत्यं पुमान् याज्ञवल्क्यः स चासौ ऋषिश्च तस्य । "ऋत्यकः" इति प्रकृतिभावः । स्मर्यत इति स्मृतिः । उत्सन्नविप्रकीर्णशाखास्थधर्मं योगबलेन स्मृत्वा कृतो ग्रन्थ इत्यर्थः । याज्ञवल्क्यकृतयोगस्मृतावतिव्याप्तिवारणार्थं धर्मशास्त्रान्तर्गतेति विशेषणमिति ज्ञेयम् । सा चेत्येकं शास्त्रम् । एवमेतान्यष्ट सच्छा-

---

वचनम्—"इदं शरणमज्ञानामिदमेव विजानताम् । इदमन्विच्छतां स्वर्गमिदमानन्त्यमिच्छताम् ॥" इति । निखिलवेदतात्पर्यविषयस्य परस्य ब्रह्मणो निर्णायकत्वं व्याससूत्रे विशेषः । अयं चेतरसूत्रतः । ब्रह्ममीमांसा हीयमेव । ब्रह्मप्राप्त्युपायभूतभक्तिप्रकाशनपौष्कल्यं भागवते विशेषः, विशिष्य भागवतधर्मावबोधनं च । भागवतधर्मानिरूपणनिमित्तोऽनुशोको व्यासस्य भागवतारम्भे विज्ञायते । भारते विष्णुनामसहस्रस्यायं विशेषः—सकलपुरुषार्थसम्पादकस्वादुतमलघुतरोपायत्वम् । भगवन्मुखारविन्दविनिर्गलितत्वं सर्वोत्कृष्टप्रपत्त्युपायपरता च गीतायां विशेषः । वक्तृवैलक्षण्यं धर्मपरता चेति विदुरनीतौ विशेषः । परब्रह्मभूतदेवताविशेषप्रतिपत्तिर्वासुदेवमाहात्म्ये विशेषः । अध्यात्मविचाराधिक्यं याज्ञवल्क्यस्मृतेः स्मृत्यन्तरतो विशेषः ।

---

त्प्रियहितपरता चेति । यथाधिकारसमविचारादिनिरूपणेन तत्परता बोध्या । तथा च वचनमिति । वचने पूर्वार्धस्यैव विवेचनमुत्तरार्धे बोध्यम् । अज्ञा ह्यन्विच्छन्ति फलभेदानव्यवसायिनस्ते । विजानन्तो ह्यानन्त्यमिच्छन्ति । व्याससूत्रे विशेषमाह—निखिलेति । ब्रह्ममीमांसारूपत्वात्तथात्वम् । ब्रह्मप्राप्त्युपायभूतेति भक्तौ विशेषणादव्यवहितसाधनत्वरूपः कर्मज्ञानाभ्यां विशेषो भक्तौ गम्यते । विशेषान्तरमाह—भागवतधर्मावबोधनं चेति । स्वादुतमेति । भगवन्नामामृतस्य तथात्वं हि सर्वत्र प्रसिद्धं, प्रणिधाननिरपेक्षत्वेन लघुत्वं च । सर्वोत्कृष्टप्रपत्त्युपायपरता चेति । आत्मस्वरूपयाथात्म्यानुगुणत्वादुत्कृष्टत्वमितरतो बोध्यम् । वक्तृवैलक्षण्यं—सत्त्वैकप्रचुरान्तःकरणता । परब्रह्मभूतदेवताविशेषप्रतिप-

स्त्राणि–सन्ति–ईश्वरस्वरूपसत्यत्वप्रतिपादनात्सत्यानि च तानि शास्त्राणि च–ग्रन्थाः। तानि मम इष्टानि–जीवहितावहत्वात्प्रियाणि भवन्ति। हीत्यवधारणे ॥ ९५ ॥

---

तत्र हि यतिधर्मनिरूपणप्रकरण आत्मस्वरूपं ब्रह्मस्वरूपं मुक्त्युपायस्वरूपमर्चिरादिमार्गनिरूपणमित्यादि बहु प्रपञ्चितम्। सर्वा च याज्ञवल्क्यो ब्रह्मविदामग्रेसरः ॥ ९३ ॥ ९४ ॥ ९५ ॥

---

त्तिरिति। योऽसौ प्रकटः पुरुषोत्तमस्तस्याक्षरनिलयस्य प्रतिपत्तिरित्यर्थः ॥ ९३ ॥ ९४ ॥ ९५ ॥

---

**स्वहितेच्छुभिरेतानि मच्छिष्यैः सकलैरपि।**
**श्रोतव्यान्यथ पाठ्यानि कथनीयानि च द्विजैः ॥ ९६ ॥**

ततः किमत आह—स्वहितेति। स्वस्य हितं–कल्याणमिच्छन्तीति तथोक्तैः। सकलैः–चातुर्वर्ण्यजैरपि। मच्छिष्यैः–मदाश्रितजनैः। एतानि–सच्छास्त्राणि। श्रोतव्यानि–श्रोतुमर्हाणि। अथेति भिन्नोपक्रमे। द्विजैः–त्रैवर्णिकैः। पाठ्यानि–पठनीयानि पाठनीयानि च। कथनीयानि–व्याख्यातव्यानि च। एषां कथा कार्येत्यर्थः।

अत्र सकलैरेतानि श्रोतव्यानीत्युक्तं तत्र शूद्रैर्वेदव्यतिरेकेणेति ज्ञेयम्, तेषां वेदमन्त्रस्य श्रवणेऽप्यनधिकारात्, "स्ववर्णाश्रमधर्मो यः स हातव्यो न केनचि"दित्युक्तत्वाच्च। वेदश्रवणं हि स्कान्दे शूद्राणां निषिद्धम्—"वेदश्रुतौ नाधिकारः क्वचिच्छूद्रस्य विद्यते। पुराणश्रवणे त्वस्ति देवब्राह्मणसन्निधा"विति। "शूद्रो वर्णश्चतुर्थोऽपि वर्णत्वाद्धर्ममर्हति। वेदमन्त्रस्वधास्वाहावषट्कारादिभिर्विने"ति च। तच्छ्रवणे दण्डमाह श्रुतिः—"अथ हास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां कर्णपूरण"मिति। जातिभ्रंशमपि स्मृतिराह—"कपिलाक्षीरपानेन ब्राह्मणीगमनेन च। वेदाक्षरविचारेण शूद्रश्चण्डालतामिया"दिति। अत एव पराशरपुराणे तेषां वेदद्वारा ज्ञानोपदेशोऽपि

---

हितावबोधकानीमानि हितेच्छुभिरस्मदीयैरखिलैः श्रोतव्यानीत्याह—स्वेति। आत्मनो हितमपेक्षमाणैरस्मदीयैरखिलैरेतानि श्रुतितदुपबृंहणभूतानि श्रोतव्यानि यथाधिकारमिति

---

श्रुतेः श्रवणे सर्वेषामनधिकारादाह—यथाधिकारमिति भाव इति। अथ पाठ्यानीत्यथशब्देन

निषिद्धः—"न शूद्राय परिज्ञानं दद्याद्वेदमुखेन त्वि"ति। पुराणश्रवणविधानादेव तदन्तर्गतवेदमन्त्रश्रवणे तु न दोष इत्याह कमलाकरभट्टः । आर्षपुराणादिपठने तु तेषां सर्वथा नैवाधिकारः । "छन्दोवदृषयः कुर्वन्ति" "छन्दोवत्पुराणानि" "वेदान्भारतपञ्चमान्" "भारतं पञ्चमो वेदः" "इतिहासपुराणानि पञ्चमो वेद उच्यते" इत्यादिस्मृतिभ्यः पुराणेतिहासादीनामप्यार्षत्वेन वेदतुल्यत्वात्। एतच्चोक्तं श्रीशङ्कराचार्यैर्विष्णुसहस्रनामभाष्यसमाप्तौ—"शूद्रः सुखमवाप्नुया"दिति श्रवणेनैव, न तु ( पठनलक्षण )जपयज्ञेन । "तस्माच्छूद्रोऽयज्ञेनावक्लृप्त" इति श्रुतेः। "नाधीयीत प्रतिषिद्धोऽस्य यज्ञ" इति भारतोद्योगपर्वोक्तेश्च । "श्रावयेच्चतुरो वर्णा"नित्यादिना भारतादौ तस्य श्रवणमेवानुज्ञातं न तु पठनम् । "सुगतिमियाच्छ्रवणाच्च शूद्रजाति"रिति हरिवंशे पर्वानुकीर्त्तने चोक्त"मिति । "अध्येतव्यं ब्राह्मणेन वैश्येन क्षत्रियेण च । श्रोतव्यमेव शूद्रेण नाध्येतव्यं कदाचन । श्रौतं स्मार्त्तं च वै धर्मं प्रोक्तमस्मिन्नृपोत्तम ! । तस्माच्छूद्रैर्विना विप्रं न श्रोतव्यमपि क्वचित् । देवार्चां पुरतः कृत्वा ब्राह्मणांश्च नृपोत्तम ! । श्रोतव्यमेव शूद्रेण तथान्यैश्च द्विजातिभि"रिति निर्णयसिन्धौ पुराणाधिकारे भविष्योत्तरोक्तेश्च । आर्षे रामायणे चोक्तम्—"पठन्द्विजो वागृषभत्वमीयात्स्यात्क्षत्रियो भूमिपतित्वमीयात् । वणिग्जनः पुण्यफलत्वमीयाच्छृण्वंश्च शूद्रोऽपि महत्त्वमीया"दिति । शूद्रैर्भगवद्भक्तप्राकृतभाषारचितभगवद्गुणप्रबन्धानामाधुनिककविविरचितसंस्कृतश्रीकृष्णपद्यानां च पाठः कर्त्तव्यः । न च शूद्राणां प्राकृतभाषाबद्धभगवद्ग्रन्थपठनेन फलापचयः शङ्क्यः, "पौराणैः प्राकृतैरपी"ति पूर्वोक्तश्रीभागवतवाक्यात्प्राकृतभगवत्सन्दर्भाणामपि पौराणस्तोत्रतुल्यत्वावगमात्तेनापि तेषां पौराणिकस्तोत्रपाठतुल्यफलप्राप्तिनिश्चयात् । गौडास्तु शूद्राणां पौराणिकमन्त्रस्तोत्रपाठमप्यनुजानते, तत्र शिष्टाचार एव प्रमाणम् ॥ ९६ ॥

---

भावः । ये चाध्ययनबोधनादिषु समर्थास्तैस्तदपि कार्यमित्याह—अथेति ॥ ९६ ॥

---

व्यवधानश्रवणादन्वयभेदमभिप्रेत्य व्याचष्टे—ये चेत्यादिना । मूले द्विजैरिति निर्देशाच्छूद्राणां पठने बोधने चानधिकारो व्यज्यते ॥ ९६ ॥

**तत्राचारव्यवहृतिनिष्कृतानां च निर्णये ।**
**ग्राह्या मिताक्षरोपेता याज्ञवल्क्यस्य तु स्मृतिः ॥ ९७ ॥**

तत्रेति । तत्र–तेषु सच्छास्त्रेषु मध्ये । "यतश्च निर्धारण"मिति संज्ञानिर्धारणे सप्तमी । आचारः–नित्यनैमित्तिकादिः सदाचारः स च, व्यवहृतिः–ऋणादानादिर्व्यवहारपदं सा च, निष्कृतं–ज्ञाताज्ञातकायिकादिपापविशोधनं प्रायश्चित्तं तच्च, तेषाम् । निर्णये–निश्चये । बहुवाक्यजन्यसंशयापनोदे कर्त्तव्ये सतीत्यर्थः । याज्ञवल्क्यस्य ऋषेः । स्मृतिः–धर्मसंहिता या वर्त्तते, सा त्विति सम्बन्धः । मिताक्षरया–विज्ञानेश्वरकृतमिताक्षरासंज्ञया टीकया उपेता–युक्ता । मिताक्षरोपेतैव ग्राह्या न तु केवला टीकान्तरोपेता वा । तत्रापि स्वसम्प्रदायाननुरोधि यत्तद्धेयमिति तुशब्देन ज्ञाप्यते । मिताक्षरेति पङ्कजादिवद्योगरूढः शब्दः । न चात्र मितान्यक्षराणि यस्या इति व्युत्पत्त्या ग्रन्थाल्प्येनापूर्णावगतिः शङ्क्या । मितशब्दस्य यावदुपयुक्तार्थप्रतिपादनपरत्वाद्द्वादशसहस्रश्लोकपरिमितग्रन्थेन सकलधर्मशास्त्रार्थसङ्ग्रहाच्च । तथा चोक्तं तत्रैव—"इति याज्ञवल्क्यमुनिशास्त्रगता विवृतिर्न कस्य विहिता विदुषः । प्रमिताक्षरापि विपुलार्थवती परिषिञ्चति श्रवणयोरमृतम् ॥ गम्भीराभिः प्रसन्नाभिर्वाग्भिर्नाम्ना मिताक्षरा । अनल्पार्थाभिरल्पाभिर्विवृतिर्विहिता मये"ति ॥ ९७ ॥

---

धर्मशास्त्रेषु याज्ञवल्क्यस्मृतावादरप्रदर्शनेनैव धर्मनिर्णये तस्य प्रामाण्ये सिद्धेऽपि तदर्थप्रतिपत्तौ व्याख्यान्तरतोऽपि मिताक्षराया एवादरणीयतामभिप्रेत्याह—तत्रेति । आचारव्यवहृतिनिष्कृतानां निर्णय इति विशिष्योपादानात् सा च मिताक्षरव्याख्याऽऽचारव्यवहारप्रायश्चित्तनिर्णयमात्रे प्रामाण्यमर्हति, न पुनरध्यात्मविचारप्रकरणेऽपीति व्यंज्यते । एतेनाध्यात्मप्रकरणे यज्जीवब्रह्मणोरैक्यपरतया व्याख्यानं तदंशेऽनादरणीयत्वं सिद्धम् । आचारादिनिर्णयाय प्रवृत्ते धर्मशास्त्र आत्मस्वरूपनिर्णयाय न पदमाधेयमस्माभिरिति कश्चित् ॥ ९७ ॥

---

मिताक्षरोपेतेति विशेषणे दृष्टिं निधायावतारयति—धर्मशास्त्रेष्वित्यादिना । सामान्यतो धर्मनिर्णय इत्यनुक्त्वाऽऽचारव्यवहृतिनिष्कृतानामिति कृतस्य विशिष्य निर्देशस्य स्वारस्यमाह—विशिष्योपादानादिति । तदंशेऽनादरणीयत्वं सिद्धमिति । याज्ञवल्क्यवचनानां त्वन्य एवाशय इति भावः । पक्षान्तरमाह—आचारादीति । कश्चिदित्यनेन याज्ञवल्क्यवचनस्यापि तदंशेऽनादरकल्पनमित्यस्वरसः सूच्यते ॥ ९७ ॥

श्रीमद्भागवतस्यैषु स्कन्धौ दशमपञ्चमौ ।
सर्वाधिकतया ज्ञेयौ कृष्णमाहात्म्यबुद्धये ॥ ९८ ॥

श्रीमद्भागवतस्येति । एषु—सच्छास्त्रेषु मध्ये । यच्छ्रीमद्भागवताख्यं पुराणं तस्य । दशमश्च पञ्चमश्च तौ । स्कन्धौ—द्वादशसु स्कन्धेषु मध्य एतौ द्वौ स्कन्धौ । स्कन्धाविव स्कन्धौ । एतेन श्रीमद्भागवतस्य कल्पवृक्षरूपकत्वं सूचितम् । कृष्णस्य माहात्म्यं—महान्—सर्वोत्कृष्ट आत्मा—स्वरूपं यस्यासौ महात्मा, तस्य भावो माहात्म्यम्, अक्षरपरत्वेनाक्षरकालमायादिनियामकत्वेन स्वतन्त्रत्वेन सकलैश्वर्यसम्पन्नत्वेन च सर्वोत्कृष्टपुरुषोत्तमत्वात्सर्वोपास्यत्वसकलकर्मबन्धमोचनसमर्थत्वादिलक्षणो महिमेत्यर्थः, तस्य बुद्धिः—ज्ञानं तस्यै । सर्वेभ्यो ग्रन्थेभ्योऽधिकता—आधिक्यं तया । ज्ञेयौ—सकलसच्छास्त्रमुख्यौ ज्ञातव्यौ । एताभ्यामनायासेनैव तज्ज्ञानसिद्धेरिति भावः । तत्र दशमस्कन्धे वृन्दावनादिषु कृपया स्थावरतिर्यग्जीवोद्धारादिना भगवतः कर्मबन्धमोचनसमर्थत्वादि माहात्म्यं प्रदर्शितम् । तदेव च स्कन्धमध्यभागे गुरुपुत्रानयनाध्याये—"गुरुपुत्रमिहानीतं निजकर्मनिबन्धनम् । आनयस्व महाराज! मच्छासनपुरस्कृत" इत्यादिना स्पष्टमेवोक्तम् । पञ्चमस्कन्धे च भगवत एवानेकरूपेणोपासनं तत्र तत्र स्पष्टमेवोक्तम् । न च तत्र श्रीकृष्णनामानुक्तेर्देवतान्तरोपासनं शङ्क्यम्, "सा

---

सकलवेदवेद्यस्य श्रीकृष्णस्य महिमावबोधने श्रीभागवतदशमपञ्चमस्कन्धयोराधिक्यमाह—श्रीमदिति । यद्यपि श्रुतिषु भगवत आनन्दादयो गुणा अनुवर्ण्यन्ते, किं बहुना परं ब्रह्म स्वरूपतो गुणतश्चानवधिकातिशयं सकलकल्याणगुणपरिपूर्णं प्रतिपाद्यते च । तथापि सर्वतः समुत्कृष्ट आश्रयणीयत्वोपयोगी महतो मन्दैः सह नैरन्ध्र्येण संश्लेषरूपो यः सौशील्यगुणः स तु ताभिर्न प्रकाश्यते, प्रकाश्यते तु दशमस्कन्धेन, तदयं दशमस्कन्धस्तन्महिमावबोधनेऽत्युपकारकः श्रुतिभ्योऽप्यधिको ज्ञेयः । एवमेव पञ्चमस्कन्धेऽपि विशेषो बोध्यः । तत्र हि

---

सर्वाधिकतया ज्ञेयावित्यत्र सम्भाव्यमानमाक्षेपमनूद्य परिहरति—यद्यपीत्यादिना । सर्वतः समुत्कृष्ट इति । निरवधिकानन्दमयत्वादपीत्यर्थः । आश्रयणीयत्वोपयोगीति । नहि परत्वमात्रेण कश्चिद्गुणो यदि दुर्लभः, अनादिकालप्राप्तानन्तपापसञ्चयेन चेतनेन स्वीयदोषजातं स्मृत्वा परतरस्य

पञ्चमस्कन्धस्य योगशास्त्रत्वोक्तिस्तु तत्र योगशास्त्रसिद्धान्तस्य स्फुटमुक्तत्वात् । तथाहि—योगशास्त्रस्याद्याचार्यो हिरण्यगर्भस्तेन भगवति श्रीनारायणे चित्तवृत्तिसमाधानलक्षणो योग इति स्वसिद्धान्तो निरूपितः । स चात्र स्फुटमेवोक्तः—"इदं हि योगेश्वर ! योगनैपुणं हिरण्यगर्भो भगवान् जगाद यत् । यदन्तकाले त्वयि निर्गुणे मनो भक्त्यादधीतोज्झितदुष्कलेवर" इति । ( अत्रान्तकालशब्दग्रहणात्पूर्वं तदभ्यासः सूचितः । अन्यथा सांसारिकविषयासक्तस्य मनसस्तत्काले भगवति समाधानासम्भवात् । "विषयाविष्टचित्तानां विष्ण्वावेशः सुदुर्लभ" इति वैष्णवोक्तेः। श्रीमद्भागवते प्रह्लादेन चोक्तम्—"को गृहेषु पुमान्सक्तमात्मानमजितेन्द्रियः । स्नेहपाशैर्दृढैर्बद्धमुत्सहेत विमोचितुम् ॥" "कोऽन्वर्थतृष्णां विसृजेत्प्राणेभ्योऽपि य ईप्सितः । यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ कथं प्रियाया अनुकम्पितायाः सङ्गं रहस्यं रुचिरांश्च मन्त्रान् । सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ पुत्रान्स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्वसॄर्वा पितरौ च दीनौ । गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीश्च कुल्याः पशुभृत्यवर्गान् ॥ त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः । औपस्थ्यजैह्व्यं बहु मन्यमानः कथं विरज्येत दुरन्तमोह" इत्यादि । अत एवोक्तं श्रीभग-

---

प्राप्य यमनियमाद्यष्टाङ्गकयोगाभ्याससुसंस्कृतेन मनसा प्राप्यस्य परमपुरुषस्य तैलधारावदविच्छिन्नमसकृदनुसरणं प्रेम्णा क्रियमाणं मानससाक्षात्कारपर्यवसायि यत्तु सारतरम् । यश्च स्वप्रयत्नशतेनाप्यनिष्पाद्यो जडभरतचरितमनुवर्त्तमानैरपि दुष्प्रापो. भगवदनुग्रहैकलभ्योऽविवेकिनां विषयेष्विव भगवति सुरूढो रागानुबन्धविशेषः फलभक्तिशब्दाभिलप्यः सोऽयं सारतमः, इतरवत्स्वप्रयत्नेन सम्पादयितुमनर्हत्वात्, "या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुसरतः सा मे हृदयान्माऽपसर्पतु" इति प्रार्थनीयः केवलम् । भगवांस्तु शरणागतवत्सलः समर्पयति स्वपदादधिकां तां प्रीतिं कदाचित्कस्मैचिद्भावशुद्ध्यानुगुण्येन । तदेवं त्रिविधेषु सारेषु सारतमपरतया दशमस्कन्धो ग्राह्यः, सारतरपरतया पञ्चमः स्कन्धो ग्राह्यः, सारपरतया याज्ञवल्क्यस्मृतिर्ग्राह्येत्याह—दशम इति। एषां तथात्वेन कथनं निर्दिष्टेषु वेदादिषु

---

इत्यादिना । परमपुरुषस्येति । नन्वात्मानुस्मरणं ज्ञानयोगशब्दवाच्यं कर्मयोगतो गरीयः सारतरं किं न स्यादिति चेत्सत्यम् । तथाप्यन्तर्गतात्मज्ञानस्य कर्मयोगस्य स्वातन्त्र्येण ज्ञानयोगनिरपेक्षमात्मावलोकने हेतुतया सौकर्यादप्रमादत्वादन्तर्गतज्ञानपरत्वादात्मावलोकनार्थं तस्यैवोपादेयतया न कर्मयोगाज्ज्ञानयोगे श्रेष्ठत्वमिति सारतरकोटौ न गणना कृता । नन्वन्यत्राप्येतत्प्रतिपादने समाने सति सारसारतरसारतमपरत्वेष्वेव विशेषतः किमित्युच्यत इत्यत आह—एषां तथात्वेन कथनमिति । ज्ञापनायेति । कथन-

वद्गीतोपनिषत्सु—"अनन्यचेताः सततं यो मां स्मरति नित्यशः। तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिन" इति। नित्याभ्यासवतामेवान्तकाले प्राणवियोगजन्यभूरितरकष्टाननुसन्धानपूर्वकं भगवत्स्मरणं जायत इत्युक्तं श्रीभागवते—"नोत्तमश्लोकवार्त्तानां जुषतां तत्कथामृतम्। स्यात्सम्भ्रमोऽन्तकालेऽपि स्मरतां तत्पदाम्बुज"मित्यलं प्रासङ्गिकेन।) हिरण्यगर्भस्य योगशास्त्राद्याचार्यत्वमुक्तं भारतीयमोक्षधर्मेषु नरनारायणीये—"साङ्ख्यस्य वक्ता कपिलः परमर्षिः स उच्यते। हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातन" इति। योगस्वरूपं भगवान्पतञ्जलिः सूत्रयामास—"योगश्चित्तवृत्तिनिरोध" इति। स चात्र स्कन्धे तद्गतां चरित्रनिरूपणेन मुहुः प्रतिपादित इत्यस्य योगशास्त्रत्वम्। तथाहि—प्रथमं प्रियव्रतचरित्रनिरूपणे—"भगवति वासुदेव एवाव्यवधानसमाधियोगेन समावेशितसकलकारकक्रियाकलाप" इति प्रियव्रतो विशेषितः। ततो ज्योतिर्मयदिव्यरथगमनादि तद्योगैश्वर्यमुक्तमिति। ततः साधिताष्टयोगाङ्गस्यापि स्वर्गादिसुखेच्छया भगवदितरदेवतोपासने तु तुच्छफलप्राप्तिरेवेति दर्शयितुं तत्सुतस्याग्नीध्रस्य तथाविधं चरित्रमुक्तम्। तत्र तस्य योगित्वसूचनार्थं "नरदेवकुमारः समाधियोगेनामीलितनयननलिनमुकुलयुगलमीषद्विकचय्य व्यचष्टे"ति स विशेषित इति। ततस्तत्पुत्रस्य नाभेश्चरित्रे—"समाधियोगेन नरनारायणाख्यं भगवन्तमुपासीनः कालेन तन्महिमानमवापे"ति स विशेषितः। ततस्तत्पुत्रत्वेनाविर्भूतो भगवानृषभदेवोऽपि मानुषनाट्यं विदधद्योगमेवाचचार। अत उक्तम्—"इति नानायोगचर्याचरणो भगवा-

---

सर्वत्र प्रवेष्टुमसमर्थैर्दशमस्कन्धमात्रं वा सम्यक्पर्यालोच्य ईदृशी हि भक्तिः प्रार्थनीयाऽस्माभिरित्यवधार्यम्, पञ्चमस्कन्धं वा विचार्य भगवद्योगे यतितव्यं नाम श्रेयस इत्यवगन्तव्यम्, नन्वपक्वकषायाणामस्माकं कथमयं योगाभ्यासो भवेदिति निर्वेदे ब्रह्मविदग्रेसरप्रोक्तस्मृतिविशेषं पर्यालोच्य स्वोपयुक्तधर्मपरतया स्थेयमिति ज्ञापनाय। भक्तिशास्त्रं, भक्तिपरं शास्त्रमित्यर्थः। अत्र भक्तिशब्देन कर्मयोगाद्यङ्गनिरपेक्षो व्यपेतसाधनभावः स्वयंप्रयोजनभूतो भक्तिविशेषोऽभिधीयते। दशमस्कन्धे हि गोपीप्रभृतीनां भक्तिरसो निरूप्यते, स हि न भक्तियोगः।

---

मिति पूर्वेणान्वयः। भक्तिशब्दस्य भक्तियोगपरताभ्रमं व्यावर्तयति—अत्रेति। कर्मयोगाद्यङ्गनिरपेक्ष इति। एतेन सर्वाधिकारिकतापि ज्ञापिता। व्यपेतसाधनभाव इति। भगवत्येव साधनत्वस्याध्यवसितत्वात् भगवत इव भक्तेः पुरुषार्थतया स्वादुतमत्वेन सेव्यमानत्वादिति भावः। ननु तथाविधभक्तिपरता दशमस्कन्धस्य कथं ज्ञायत इत्यत्राह—दशमस्कन्धे हीत्यादिना। फलभक्तेः सारतमत्वमुपपादयति—

मां स्मृतिर्मृगदेहेऽपि वीर! कृष्णार्चनप्रभवा नो जहाती"त्यादिवाक्यैः श्रीकृष्णस्यैव हिरण्मयपुरुषादिनामभिर्विवक्षितत्वात् ॥ ९८ ॥

भगवदुपासकमहिमानुवर्णनद्वारा भगवन्महिमा मोक्षप्रदत्वपर्यन्तो विशेषतोऽनुवर्ण्यते ॥ ९८ ॥

तस्याश्रयणे कथं निर्भीकता भवेद्यदि तस्य सौशील्यं नाम गुणो न स्यात्, तत् आश्रयणीयत्वोपयोग्ययं गुणविशेषः सौशील्यं नामेति भावः ॥ ९८ ॥

---

**दशमः पञ्चमः स्कन्धो याज्ञवल्क्यस्य च स्मृतिः ।**
**भक्तिशास्त्रं योगशास्त्रं धर्मशास्त्रं क्रमेण मे ॥ ९९ ॥**

दशम इति । श्रीमद्भागवतस्येत्यन्वेतव्यम् । दशमः स्कन्धः, पञ्चमः स्कन्धः, तथा याज्ञवल्क्यस्य स्मृतिश्चेति त्रयो ग्रन्थाः । क्रमेण—अनुक्रमेण । मे—मम, मन्मतमित्यर्थः । भक्तिशास्त्रं योगशास्त्रं धर्मशास्त्रं च ज्ञेयमिति सम्बन्धः । दशमः स्कन्धो मन्मतं भक्तिशास्त्रमिति ज्ञेयम् । पञ्चमः स्कन्धो मन्मतं योगशास्त्रं ज्ञेयम् । याज्ञवल्क्यस्मृतिर्मन्मतं धर्मशास्त्रं ज्ञेयमिति विवेकः । भवद्भिरिति कर्त्रध्याहारस्तु सर्वत्रानुक्तकर्तृस्थाने ज्ञेयः । तत्र याज्ञवल्क्यस्मृतेर्धर्मशास्त्रत्वं तु—"आचारो व्यवहारश्च प्रायश्चित्तं व्रतानि च । कालः कर्मविपाकश्च षड्विधं धर्मलक्षण"मिति स्मृत्युक्तं प्रसिद्धमेव । दशमस्कन्धस्य भक्तिशास्त्रत्वं तु भक्त्याश्रयस्य श्रीकृष्णस्यात्रैव स्कन्धे प्रत्यध्यायं वर्णनात्, "न पारयेऽहं निरवद्यसंयुजां स्वसाधुकृत्यं विबुधायुषापि वः । या माभजन्दुर्जरगेहशृङ्खलाः संवृश्च्य तद्वः प्रतियातु साधुने"ति भगवदुक्तगोपीकर्तृकनिरतिशयप्रेमरूपफलभक्तेरिहैव सविस्तरं निरूपणाच्च । ननु—गोपीनां पुरुषोत्तमस्य स्वरूपज्ञानावर्णनात्तद्विना कथं तत्र भक्तिरिति चेत् । ज्ञानं विनापि भक्तेः स्वातन्त्र्येणैव प्रवृत्तेरिति गृहाण । "ज्ञात्वाऽज्ञात्वाऽथ ये वै मां यावान्यश्चास्मि यादृशः । भजन्त्यनन्यभावेन ते मे भक्ततमा मता" इति ।

निर्दिष्टेषु प्रमाणेषु प्रविश्य परिशोध्य समग्रं विभज्य सारासारांशौ, उपादेयस्तु सारांशः । उक्तं च गीतायाम्—"यावानर्थ उदपाने सर्वतः सम्प्लुतोदके । तावान्सर्वेषु वेदेषु

अनन्तरश्लोकमवतारयति—निर्दिष्टेष्वित्यादिना । निर्दिष्टेषु प्रमाणेष्विति । वेदाश्चेत्यनेन निर्दिष्टेष्वित्यर्थः । उपादेयस्तु सारांश इति । तुशब्देनासारस्यानुपादेयता ज्ञाप्यते । ननु वेदेऽपि कोऽप्यसारांशः, योऽनुपादेयो भवेदित्याशङ्कायामाह—उक्तं च गीतायामिति । ग्रन्थ्यां नानाविधो

"तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहे"ति च भगवद्वाक्यात्, "ज्ञाने प्रयासमुदपास्य नमन्त एवे"ति ब्रह्मवाक्याच्च। निर्णीतश्चायमर्थः "कृष्णं विदुः परं कान्तं न तु ब्रह्मतया मुने!। गुणप्रवाहोपरमस्तासां गुणधियां कथ"मिति परीक्षित्प्रश्नस्योत्तरे श्रीशुकयोगीन्द्रेण—"नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप!। अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मनः। कामं क्रोधं भयं स्नेहमैक्यं सौहृदमेव वा। नित्यं हरौ विदधतो यान्ति तन्मयतां हि त" इति।

यद्वा—भगवति निरतिशयः स्नेहो भक्तिरिति ह्यग्रे वक्ष्यते। भगवांश्च व्रजे मथुरायां द्वारिकायां हस्तिनापुरे चेति चतुर्षु स्थानेषु प्रायोऽवात्सीत्। तस्मिंश्च तत्रत्यानां पुरुषाणां स्त्रीणां च सर्वाधिकः स्नेहोऽत्र भूयो निरूपितः। तत्र व्रजवासिनां स्नेहस्तु—"दुस्त्यजश्चानुरागोऽस्मिन्सर्वेषां नो व्रजौकसाम्। नन्द! ते तनयेऽस्मासु तस्याप्यौत्पत्तिकः कथ"मिति निरूपितः। मथुरावासिनां च—"समनन्दन्प्रजाः सर्वा दृष्ट्वा रामजनार्दनौ। अपश्यन्तो बह्वहानि नष्टलब्धधना इवे"ति निरूपितः। द्वारिकावासिनां च—"शय्यासनाटनालापक्रीडास्थानादिकर्मसु। न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस" इति निरूपितः। हस्तिनापुरवासिनां पाण्डवानां च—"दृष्ट्वा तमागतं पार्था मुकुन्दमखिलेश्वरम्। उत्तस्थुर्युगपद्वीराः प्राणा मुख्यमिवागत"मिति निरूपितः। पाण्डवानां भक्तिः स्नेहात्मिकैवेति नारदोऽप्याह—"गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः। सम्बन्धाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभो"रिति। अत एव तेषां भगवत्तिरोधानलीलाश्रवणक्षण एव राज्यादित्यागः प्रव्रज्या च वर्णिताऽस्ति। एवं स्थानचतुष्टयस्थे भगवति तत्तत्स्थानस्थितानां स्नेहातिशयस्यात्र स्कन्धे सविस्तरं निरूपणादस्य भक्तिशास्त्रत्वमुक्तमिति सङ्क्षेपः।

---

ब्राह्मणस्य विजानतः॥" इति। सारांशेऽपि सारसारतरसारतमभेदाद्विभेदो बोध्यः। तत्र सर्वं कर्मानभिसंहितफलकं क्रियमाणं सारभूतं, यदिदं न बन्धाय, परं मनोनैर्मल्यापादनद्वारोपासन उपयुज्यमानं सदुपयुज्यते नामापुनरावृत्तये। पक्के मनःकषाये योगयोग्यं मनः

---

वादो मन्दानविजानतोऽधिकृत्य, विजानद्भिस्तु स नोपादेयः, नैतावता वेदस्य कापि न्यूनतेति भावः। सारसारतरसारतमविभेदमुदाहरति—तत्रेत्यादिना। कर्मणः सारभूतत्वं कथमित्याशङ्कायामाह—यदिदं न बन्धायेति। अबन्धकतामुपपादयति—परमित्यादिना। अथ सारतरं निरूपयति—पक्क

न्कैवल्यपतिर्ऋषभ" इति। ततस्तत्पुत्रस्य भरतस्य योगस्थितिस्तु स्पष्टमेवोक्ता। "येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसी"दिति स च विशेषितः। रहूगणेन योगेश्वरादिपदैः सम्बोधितश्च। "तद्धृदयग्रन्थिमोचनं द्विजवरवच आश्रुत्य बहुयोगग्रन्थसम्मत"मिति तद्वचश्च विशेषितम्। ततः प्रतिखण्डं श्रीसङ्कर्षणादिरूपे भगवति श्रीशङ्करादीनामपि चित्तवृत्तिनिरोधलक्षणो योग एवोक्तः— "आत्मसमाधिरूपेण सन्निधाप्य" "परमेण समाधिना सन्निधाप्य" "अव्यवधानानन्यभक्तियोगेन परमसमाधियोगेन" "अस्खलितभक्तियोगेने"त्यादिवाक्येभ्यः। ततश्च खगोलवर्णनेऽपि योगमहिमप्रदर्शनार्थमेव पक्षान्तरमुक्तम्— "केचिदेतज्ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयन्ती"ति। ततोऽधोलोकवर्णनेऽपि योगाचार्यपतञ्जलिपूर्वरूपस्य भगवतः शेषनागस्य योगस्थि-

---

नहि तासां योगाभ्यासेऽन्वयः। आह चोद्धवः—"क्वेमाः स्त्रियो वनचरा व्यभिचारशीलाः कृष्णे क्व चैष परमात्मनि रूढभावः" इति। अयं हि प्रेमानुबन्धो भक्तियोगाद्विशिष्यते। स ह्यन्तिमप्रत्ययसापेक्षः, अयं च तन्निरपेक्षः। स च समाधिसमयमात्रे स्मर्यमाणस्य भगवतो मानससाक्षात्कारमापादयेत्। अयं तु प्रेमानुबन्धः स्मर्यमाणं प्रियतमं तं प्रणिधानविशेषनिरपेक्षं परितः प्रकाशयेत्। योगोन्मीलितदृष्टीनां हि तदपेक्षानियमः, न तु प्रेमान्धानाम्। किं नाम नापश्यत्परितः कृष्णमुद्वेगान्धः कंसः। "स नित्यदोद्विग्नधिया तमीश्वरं पिबन्वदन्वा विचरन्स्वपन्श्वसन्। ददर्श चक्रायुधमग्रतः"। किमु वक्तव्यं प्रेमान्ध्ये तथाभवने। अत एव गोप्योऽप्यस्तेतरभावास्तमेवापश्यन् सर्वदा। तदेवंविधं भक्तिरसविशेषमविरतमनुभवतां नेतः परं प्राप्यं प्रार्थनीयं किञ्चिदस्ति। तदुच्यते सेयं भक्तिः फलभक्तिरिति। एवं च दशमस्कन्धस्तु ईदृशभक्तिविशेषपर इति मे मतं, तदस्मदीयैरेतत्परतयाऽयं ग्राह्य इति भावः। पञ्चम इति। पञ्चमस्कन्धो हि योगिनां चरितानुवर्णनद्वारा मुमुक्षून् योगे प्रवर्त्तयति, तदिदं योगपरं शास्त्रमिति मे मतमिति भावः। याज्ञवल्क्यस्मृतौ सर्वान्प्रत्यविशेषेण धर्मा निरूप्यन्ते। मम

---

अयं हीत्यादिना। स ह्यन्तिमप्रत्ययसापेक्ष इति। तथा च वचनं—"प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः।" "अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्। यः प्रयाति स्त्यजन्देहं स याति परमां गतिम्॥" "प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैवे"ति। अयं च तन्निरपेक्ष इति। अत्र च वचनं—"ततस्तु म्रियमाणं तं काष्ठपाषाणसन्निभम्। अहं स्मरामि मद्भक्तं नयामि परमां गति"मिति। प्रणिधानविशेषनिरपेक्षमिति। अष्टाङ्गयोगलक्षणसमाधिनिरपेक्षमित्यर्थः। योगे प्रवर्त्तयतीति। सारतरे भक्तियोगे प्रवर्त्तयतीत्यर्थः। योगो हि चित्तवृत्तिनिरोधः। अर्थेभ्यश्चित्तवृत्तेः परमात्मनि निरोधस्तु सः। स च परमात्मनि प्रीतिं विना तु नैव भवेत्। तथा च प्रेमगर्भं प्रणिधानं योग इति सिद्धम्। इत्थं चोक्तलक्षणभक्तियोगे प्रवर्त्तयतीति सारतरभक्तिप्रवर्त्तकत्वाद्भक्तिशास्त्रमिति पञ्चमस्कन्धो मान्य इति भावः। याज्ञवल्क्यस्मृतेः सारपरत्वमुपपादयति—याज्ञवल्क्यस्मृतावित्यादिना।

तिरेवोक्ता । तस्य योगेश्वरत्वं च "स्वमेव धिष्ण्यं बहु मानयन्तं यद्वासुदेवाभिधमामनन्ति । प्रत्यग्धृताक्षाम्बुजकोशमीषदुन्मीलयन्तं विबुधोदयाये"ति तृतीयस्कन्धोक्तं वेदितव्यम् । मयबलिप्रह्लादादीनामपि योगित्वं वाक्यान्तरेभ्योऽवसेयम् । अन्यत्तु प्रासङ्गिकमिति ज्ञेयम् । किञ्च—एतस्य योगशास्त्रत्वज्ञापनार्थमेव श्रीशुकयोगीन्द्रेणापि "अथ योगानुशासन"मिति योगशास्त्राद्यसूत्रमथशब्दरहितं स्कन्धमध्यभाग एव "यदिदं योगानुशासन"मिति गद्ये निवेशितं, तच्च देहलीदीपकन्यायेन स्कन्धपूर्वोत्तरभागावपि योगशास्त्रमेवेति सूचयति । ननु दशमपञ्चमस्कन्धयोर्भक्तियोगशास्त्रत्वमप्रसिद्धमित्याशङ्क्योक्तं—मे इति । इदं मम मतमित्यर्थः । नहि तात्विकेऽर्थे सम्प्रदायापेक्षेति भावः ॥ ९९ ॥

---

तु मतमेतावत्, यैर्धर्मैर्मनोनैर्मल्यं भवेत् तावत्परं तच्छास्त्रमिति तावत्परतया तच्छास्त्रं मुमुक्षुभिरस्मदीयैर्ग्राह्यमिति भावः ॥ ९९ ॥

---

तावत्परतयेति । तथाच कर्मयोगपरतया सारपरत्वं बोध्यमिति भावः ॥ ९९ ॥

---

शारीरकाणां भगवद्गीतायाश्चावगम्यताम् ।
रामानुजाचार्यकृतं भाष्यमाध्यात्मिकं मम ॥ १०० ॥

शारीरकाणामिति । शारीरकाणां—शारीरकाख्यानां व्याससूत्राणाम् । तथा भगवद्गीतायाश्च । रामानुजाचार्यकृतं—श्रीलक्ष्मणाचार्यविरचितं यद्भाष्यम्—

---

उक्तेषु प्रमाणेषु व्याससूत्राणां गीतायाश्चार्थनिर्णये कर्त्तव्ये न शाङ्करमन्यद्वा तत्सोदरं ग्राह्यं, मृषावादादिदूषितत्वात् । किन्तु श्रुतितात्पर्यसिद्धविशिष्टाद्वैतपरतया प्रवृत्तं भाष्यमेव ग्राह्यमित्याह—शारीरकाणामिति । शारीरः—परमात्मा, जगदखिलमस्य हि शरीरं, जीवस्तु न तथा, स हि प्रतिनियतैकशरीरः कर्मणा, असङ्कोचन्यायाच्च शारीरशब्दः परमात्मन्येवासाधारणः,

---

अन्यद्वा तत्सोदरमिति । भास्करस्य वा यादवप्रकाशस्य वेति यावत् । जगद्ब्रह्मणोः स्वरूपतोऽभेदवादावलम्बितया तत्सोदरत्वोक्तिः । मृषावादादीति । आदिशब्दाद्भेदाभेदवादपरिग्रहः । मूले शारीरकाणामिति बहुवचनान्तनिर्देशो यद्यप्यस्वरसः, तथापि पूर्वनिर्दिष्टस्य व्याससूत्राणामिति बहुवचनान्तस्य प्रत्यभिज्ञापकतया विशेषो बोध्यः । तथा च सर्वेषामेव व्याससूत्राणामर्थनिर्णये रामानुजाचार्यकृतं भाष्यमेव प्रमाणं न परोक्तमेकस्याप्यर्थनिर्णय इति व्यज्यते । शारीरकशब्दं व्याचष्टे—शारीर इत्यादिना । ननु शारीरपदं शरीरसम्बन्धमात्रमवगमयति न तु जगच्छरीरतां, तत्कथं व्याख्यायते शारीरः परमात्मेतीत्याशङ्कायामाह—असङ्कोचन्यायाच्चेति । मूले व्याससूत्राणामिति ब्रह्मसूत्राणामिति वा

श्रीभाष्यसंज्ञा शारीरकसूत्रव्याख्या भगवद्गीताव्याख्या चेत्यर्थः। भाष्यलक्षणं तु—"सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुसारिभिः। स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदु"रिति। तत् मम—मन्मतम्। आध्यात्मिकं—आत्मनीत्यध्यात्मं; अध्यात्मं भवमाध्यात्मिकम्। अध्यात्मशास्त्रमित्यर्थः। इति अवगम्यतां—भव-

तत्पराणि सूत्राणि शारीरकाण्युच्यन्ते। तानि च भगवता बादरायणेन प्रणीतानि "अथातो ब्रह्मजिज्ञासे"त्यादीनि "अनावृत्तिः शब्दादनावृत्तिः शब्दा"दित्यन्तानि। एषामेव हि शारीरकमीमांसेत्यभियुक्तानां व्यपदेशः। तथाच सिद्धं सूत्राणां हार्दं शारीर इति। इदं च शारीरत्वं परस्य ब्रह्मणः परमार्थतो ये समर्थयन्ति त एव सूत्राशयविदो गण्येरन्। ये पुनरपरमार्थं व्यवहृतिमात्रेण प्रवृत्तं मन्यन्ते कथं ते सूत्राशयविदः स्युः। इदं च शारीरत्व-मन्तर्यामिब्राह्मणे सुविदितम्। तदिदमन्यथा नयतां परेषां व्याख्यानानि नैतदर्थावगमे प्रमाणानि। तद्भगवद्रामानुजाचार्यप्रणीतव्याख्यानत एवैषामर्थो विनिश्चेयः। तत एव हि परस्य ब्रह्मणोऽन्तर्यामिब्राह्मणावगतस्याखिलशरीरस्य परमार्थतः प्रतिपत्तिः सङ्गतिश्च सर्ववेदान्त-वाक्यानामिति भावः। व्यज्यते चैतत् शारीरकाणामिति निर्देशात्।

भगवद्गीतायाश्च—गीता हि भगवतो भगवता वा। भगवांश्च परंब्रह्म वासुदेवः। तथाच स्मर्यते—"एवमेष महाशब्दो भगवानिति सत्तम!। परमब्रह्मरूपस्य वासुदेवस्य नान्यगः॥ शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः॥" इति। प्रवृत्तौ निमित्तं च निखिल-हेयप्रत्यनीकत्वमखिलकल्याणगुणाकरत्वं च। तथाच स्मर्यते—"ज्ञानशक्तिबलैश्वर्यवीर्यतेजां-स्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥" इति। तदिदं भगवच्छब्द-प्रवृत्तिनिमित्तं परे ब्रह्मणि परमार्थतो ये न मन्यन्ते मायिकमाहुस्तेषां व्याख्या कथं भगवद-भिमता भवेत्। ये पुनर्वस्तुतस्तत्पदप्रवृत्तिनिमित्तयोगमभ्युपगच्छन्ति तेषां व्याख्यैव तदभि-मता भवेत्। भगवद्रामानुजाचार्यैस्तु समर्थितमेतदुभयलिङ्गाधिकरणे। तद्भगवद्रामानुजाचा-र्यविरचितं भाष्यमेव भगवदभिमतमित्याशयः। तदिदं व्यज्यते भगवच्छब्देन। रामानु-जाचार्यकृतं—आचार्यान्तनिर्देशादात्मीयान्प्रत्याचार्यकोटाववश्यमनुसरणीयता व्यज्यते।

निर्देशमकृत्वा शारीरकाणामिति कृतस्य निर्देशस्य स्वारस्यं ज्ञापयन्नाह—तथाच सिद्धमिति। ततः किमित्यत्राह—इदं च शारीरत्वमिति। अन्यथेति। अपरमार्थतयेति यावत्। न केवलमन्तर्यामिब्रा-ह्मणमात्रानुगुण्यं किन्तु सर्वश्रुतीनामप्यविरोध इत्याह—सङ्गतिश्च सर्ववेदान्तवाक्यानामिति।

भगवद्गीताया इति सविशेषनिर्देशस्य स्वारस्यं निरूपयन् भगवच्छब्दं व्याचष्टे— भगवांश्चेति। परं ब्रह्म वासुदेव इति। एतेन वासुदेवादन्यदेव परं ब्रह्मेति निरस्तम्। अन्यत्र ह्युपचारत इति। अन्यत्रौपचारिकतां परे ब्रह्मणि मुख्यतां च ज्ञापयन्नाह—प्रवृत्तौ निमित्तं चेति। ननु भगवद्गीता नाम, भगवांश्च हेयप्रत्यनीकः कल्याणगुणाकरश्च, ततः किं तदर्थनिर्णये रामानुजाचार्यकृतभाष्यादरणे बीजमित्याशङ्कायामाह—तदिदमित्यादिना। रामानुजकृतमित्यनुक्त्वा रामानुजाचार्येत्युक्तेः स्वारस्य-माह—आचार्यान्तनिर्देशादिति। रामानुजाचार्यकृतं भाष्यमित्यन्तमुद्देश्यसमर्पकं, आध्यात्मिक-

न्निर्धार्यताम् । कर्मणि लोट् । अत्र स्वाभिमतभगवत्साकारत्वस्य सप्रपञ्चं प्रतिपादितत्वादिदमेवास्मदध्यात्मज्ञानशास्त्रमिति भवद्भिरप्येतदध्येतव्यं श्रोतव्यं चेति भावः । रामानुजाचार्यकृतमिति विशेषणोपादानाद्भाष्यान्तरारुचिः सूचितेति ज्ञेयम् ॥ १०० ॥

आध्यात्मिकं–आत्मनि अध्यात्मं, विभक्त्यर्थेऽव्ययीभावः, अध्यात्मं–प्रवृत्तमाध्यात्मिकं, यः सर्वात्मा तमधिकृत्य प्रवृत्तमित्यर्थः । यद्यपि शारीरकमीमांसाया गीतायाश्च व्याख्यानरूपतया प्रवृत्ताः प्रबन्धाः सन्ति नाम कतिचन । न ते यथावदात्मस्वरूपावबोधकाः । श्रीमद्रामानुजाचार्यविरचितं भाष्यमेव तु तथेति भावः । मम । मतमिति शेषः । तदेव भाष्यमाध्यात्मिकमिति मे मतम् । अध्यात्मशास्त्रप्रतिपाद्यस्य ममायमाशयः । अवगम्यतां–अवधार्यतामेतत्, न प्रमदितव्यम् ॥ १०० ॥

मिति च विधेयसमर्पकं, निर्देशस्वारस्यात्पूर्वनिर्दिष्टं ह्युद्देश्यं पश्चात्तनं तु विधेयमित्यभिप्रेत्य ततः परिनिष्पन्नं भावमाह—यद्यपीत्यादिना । भाष्यमेव तु तथेति । सर्वं वाक्यं सावधारणमिति न्यायात्तथा बोध्यम् । मम मतमिति निर्देशस्य विशेषमाह—अध्यात्मशास्त्रप्रतिपाद्यस्य ममायमाशय इति ॥ १०० ॥

---

एतेषु यानि वाक्यानि श्रीकृष्णस्य वृषस्य च ।
अत्युत्कर्षपराणि स्युस्तथा भक्तिविरागयोः ॥ १०१ ॥
मन्तव्यानि प्रमाणानि[1] तान्येवेतरवाक्यतः ।
धर्मेण सहिता कृष्णभक्तिः कार्येति तद्रहः ॥ १०२ ॥

स्वोक्तसच्छास्त्रतात्पर्यावधारणे विशेषमाह—एतेष्विति द्वाभ्याम् । एतेषु–उक्तसच्छास्त्रेषु । यानि वाक्यानि–वचनानि । श्रीकृष्णस्य । अत्युत्कर्षः परः–तात्पर्यविषयो येषां तानि तथोक्तानि, स्फुटमेव त्रिगुणातीतदिव्यविग्रहत्वादिस्थापकानि स्युः । भक्तिमूलत्वात्तेषामिति भावः । तथा वृषस्य–धर्मस्य । अत्युत्कर्षपराणि स्युः । तथा भक्तिविरागयोः–भगवति प्रेमरूपा या भक्तिस्तदितरत्र वैराग्यस्य च । अत्युत्कर्षपराणि स्युः ॥ १०१ ॥

यद्यपि प्रमाणतया निरूपितेषु वेदादिष्वमुमुक्षूपादेयानि निरूप्यन्ते नाम बहूनि । तथापि न तत्परता तेषाम् । अधिकारानुगुण्येन तु तत्तदावेदयन्ति तानि । न तु सर्वत्र

तथापि न तत्परता तेषामिति । एतेन–परपीडोपायादिप्रतिपादनाद्वेदस्यानाप्तवचनता स्यात् स्याद्वा तदुदितानां सर्वेषामेवाविशेषेणोपादेयतेति शङ्का परास्ता । तदेवोपपादयति—अधिकारानुगु-

[1] प्रधानानीति पाठान्तरम् ।

मन्तव्यानीति। तानि–वाक्यानि। इतरवाक्यतः–इतराणि–क्वचिदसुरव्यामोहादिकार्यवशात् श्रीकृष्णाद्यपकर्षबोधकत्वेनाभासमानानि वाक्यानि तेभ्यः। पञ्चम्यास्तसिल्। प्रमाणानि–प्रमीयते सिद्धान्तार्थ एभिरिति प्रमाणानि। करणे ल्युट्। मन्तव्यानि–एतान्येव सिद्धान्तार्थज्ञानहेतुभूतानि वाक्यानीति ज्ञातव्यानीत्यर्थः।

प्रधानानीति पाठान्तरे मुख्यानीत्यर्थः। तदानीं त्ववान्तरवाक्यभेदविवक्षया बहुत्वमिति समाधेयम्। प्रधानशब्दस्य मुख्यवाचकत्वे क्लीबैकवचनान्तत्वात्। "प्रधानं स्यान्महामात्रे प्रकृतौ परमात्मनि। प्रज्ञायामपि च क्लीबमेकत्वे तूत्तमे सदे"ति मेदिनी। सिद्धान्तवाक्यैरेवेतरवाक्यनिर्णयः कर्त्तव्य इति भावः। तथाहि—कंसजरासन्धकालयवनसाल्वादिभ्यो भयपलायनमोहादिवर्णने भगवदपकर्ष इवाभासते। स च "एवं वदन्ति राजर्षे ऋषयः केचनान्विताः। यत्स्ववाचो विरुध्येरन्नूनं ते न स्मरन्त्युत॥ क्व शोकमोहौ स्नेहो वा भयं वा येऽज्ञसम्भवाः। क्व चाखण्डितविज्ञानज्ञानैश्वर्यस्त्वखण्डित" इति सिद्धान्तवाक्यानुसारेण निर्णेतव्यः। तथा प्रभासलीलायां "भूभारः क्षपितो येन जहौ तच्च कलेवर"मित्यादिवाक्यैर्भगवतोऽपि देहत्यागोक्तेरितरगुणात्मकदेहतुल्यत्वं तस्य न तु नित्यदिव्यविग्रहत्वमित्यर्थः प्रतीयते स तु न मुख्यार्थो मन्तव्यः किन्तु "मर्त्येन यो गुरुसुतं यमलोकनीतं त्वां चानयच्छरणदः परमास्त्रदग्धम्। जिग्येऽन्तकान्तकमपीशमसावनीशः किं स्वावने स्वरनयन्मृगयुं सदेहम्॥ राजन्परस्य तनुभृज्जननाप्ययेहा मायाविडम्बनमवेहि यथा नटस्ये"त्यादिसिद्धान्तवाक्यैर्भगवतोऽन्तर्धानलीलैवेयं प्रदर्शिता न तु देहत्यागः। एवं "उवाह कृष्णो भगवान् श्रीदामानं पराजित" इत्यादिमनुष्यलीलानुकरणवाक्यानामपि "यस्यानुभूतिः कालेन लयोत्पत्त्यादिनाऽस्य वै। स्वतोऽन्यस्माच्च गुणतो न कुतश्चन रिष्यति॥ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम्। विनैकमुत्पत्तिलयस्थितीश्वरं

---

सहार्दम्। हार्दं तु हिततममेव किञ्चित्। सा चात्यन्तिकदुःखनिवृत्तिपूर्वकपरमानन्दप्राप्तिः। इयं च परंज्योतिरूपसम्पन्नस्यैव। तस्मात्प्राप्यः परमपुरुषः श्रीकृष्णः, तत्प्राप्त्युपयोगी धर्मः, तस्मिन्भक्तिः, अन्यत्र वैराग्यमित्येतेष्वेव तात्पर्यं वेदानामपि। तस्मादुक्तेषु प्रमाणेष्वेतत्प्रतिपादकान्येव वाक्यानि प्रधानानि बोध्यानीत्याह—एतेष्विति। वृषस्य–धर्मस्य, कृष्णप्राप्त्युपायेन तु तत्तदावेदयन्ति तानीति। चोदनालक्षणोऽर्थो धर्म इत्युक्ते त्रैवर्गिकसाधनस्यापि सत्यात्वमस्त्येवेति तत्पराणां वाक्यानामपि मुमुक्षूपादेयता स्यादित्यतो भाषमाह—कृष्णप्राप्त्युपयोगिनो

सर्वज्ञमाद्यं पुरुषं सनातन"मित्याद्यखण्डैश्वर्यप्रतिपादकसिद्धान्तवाक्यैरेव निर्णयः कर्त्तव्यो न तु सर्वाण्यपि वाक्यानि समानानीति मन्तव्यमिति तात्पर्यम् । ब्राह्मे त्वयमर्थः स्पष्टमेव निर्णीतः—"अज्ञत्वं पारवश्यत्वं विधिभेदादिकं तथा । तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहाय दोषा विष्णोर्नहि क्वचि"दिति।

एवं धर्मस्यापि "तस्मात्त्वमुद्धवोत्सृज्य चोदनां प्रतिचोदना"मित्यादिधर्मापकर्षाभासवाक्यानां "वर्णाश्रमवतां धर्म एष आचारलक्षणः । स एव मद्भक्तियुतो निःश्रेयसकरः पर" इत्यादिसिद्धान्तवाक्यैर्निर्णयो ज्ञेयः । त्यागवाक्यानां भक्तिहीनशुष्कधर्मविषयत्वात् । अन्यथा "गच्छोद्धव ! मयादिष्टो वदर्याख्यं ममाश्रमम् । तत्र मत्पादतीर्थोदे स्नानोपस्पर्शनैः शुचि"रित्यादिवाक्यैर्महाभागवतस्य तस्य वक्ष्यमाणधर्मोपदेशासङ्गतेः । एतच्च प्रागेव प्रपञ्चितम् ।

एवं भक्तेरपि मुक्तिहेतुज्ञानाङ्गत्वबोधकानां "एवं प्रसन्नमनसो भगवद्भक्तियोगतः । भगवत्तत्त्वविज्ञानं मुक्तसङ्गस्य जायते" "भक्त्या मामभिजानाती"त्यादिवाक्यानां "केवलेनैव भावेन गोप्यो गावो नगा मृगाः । येऽन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा । यं न योगेन साङ्ख्येन दानव्रततपोऽध्वरैः । व्याख्यास्वाध्यायसन्न्यासैः प्राप्नुयाद्यत्नवानपी"त्यादिसिद्धान्तवाक्यैर्निर्णयो ज्ञेयः । ब्रह्मज्ञानस्य भक्त्यङ्गत्वादिति भावः । "ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावत" इति भगवदुक्तेः ।

एवं वैराग्यस्यापि "यामाश्रित्येन्द्रियारातीन् दुर्जयानितराश्रमैः । वयं जयेम हेलाभिर्दस्यून् दुर्गपतिर्यथा" "यः षट् सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्व"मित्याद्यपकर्षवाक्यानां "न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गतः ॥ यः स्वकात्परतो वेद जातनिर्वेद आत्मवान् । हृदि कृत्वा हरिं गेहात्प्रव्रजेत्स नरोत्तमः ॥ तत्साधु मन्येऽसुरवर्य ! देहिनां सदा समुद्विग्नधियामसद्ग्रहात् । हित्वाऽऽत्मपातं गृहमन्धकूपं वनं गतो यद्धरिमाश्रयेत ॥ हित्वा गृहं संसृतिचक्रवालं नृसिंहपादं भजताकुतोभय"-मित्यादिसिद्धान्तवाक्यैर्निर्णयो ज्ञेय इति दिक् ।

---

पयोगिनो धर्मस्येति यावत् । अत्युत्कर्षपराणि—अतिशयप्रतिपादकानि, अतिशयिततत्तद्बोध-

धर्मस्येति यावदिति । इह वृषशब्दः श्रेयःसाधनपरः, श्रेयश्च यदुःखासम्भिन्नं तदेवेति भावः । प्रधानश-

एतानि सच्छास्त्राणि स्वधर्मसहितभगवद्भक्तिप्रतिपादनपराणि सन्तीति तत्सिद्धान्तमाह—धर्मेणेति । कृष्णस्य भक्तिः । धर्मेण–यथाधिकारं सच्छास्त्रविहितेन स्वधर्मेण सहितैव, न तु तं त्यक्त्वा कार्या । तस्य भक्तिपोषकत्वादिति भावः । भक्तिधर्मसाहित्यं श्रीभागवते बहुश उक्तम् । तथाहि—"मयोदितेष्ववहितः स्वधर्मेषु मदाश्रयः । वर्णाश्रमकुलाचारमकामात्मा समाचरेत् ॥" "यः स्वधर्मेण मां नित्यं निराशीः श्रद्धयान्वितः । भजते शनकैस्तस्य मनो राजन्प्रसीदती"ति । तथा "इदं जपत भद्रं वो विशुद्धा नृपनन्दनाः । स्वधर्ममनुतिष्ठन्तो भगवत्यर्पिताशया" इति। तथा "इति मां यः स्वधर्मेण भजेन्नित्यमनन्यभागि"ति। तथा "यथा स्वधर्मसंयुक्तो भक्तो मां समियात्पर"मिति । तथा "स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः । स्वधर्मेण हरिं प्रीणन्सङ्गान्सर्वान् शनैर्जहा"विति । तथा "एते वर्णाः स्वधर्मेण यजन्ति स्वगुरुं हरि"मिति । तथा "स्वधर्मशीलैः पुरुषैर्भगवान् यज्ञपूरुषः । इज्यमानो भक्तिमता नारदेनेडितः किले"ति । तथा "अहो ममामी वितरन्त्यनुग्रहं हरिं गुरुं यज्ञभुजामधीश्वरम् । स्वधर्मयोगेन यजन्ति मामका निरन्तरं क्षोणितले दृढव्रता" इति । तथा "एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः । गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्नरः" इत्यादि । पञ्चरात्रे च—"स्वधर्मज्ञानवैराग्यभूषाजुष्टां तु येऽच्युते । अनन्यभक्तिं साध्वीं त्वत्कुर्युरेकान्तिका हि ते ॥ सुरूपाऽपि यथा नारी वस्त्रालङ्कारवर्जिता । न शोभते तथा भक्तिर्धर्मादिरहिता नृणाम् ॥ देशकालस्वभावादेः कचिद्वैषम्यसम्भवे । धर्मादिवर्जिता भक्तिस्तिरोधत्ते तडिद्यथा ॥ युक्ता धर्मादिभिः सा तु कापि विघ्नैर्महापदि । अचला नाभिभूयेत ह्यासारैरद्रिराडिवे"ति । इति तद्रहः–तेषां सच्छास्त्राणां रहः–तत्त्वं, सिद्धान्त इति यावत् । इति भवद्भिर्ज्ञेयमिति शेषः ॥ १०२ ॥

---

कानीत्येतत् । इतरवाक्यतः प्रधानानि मन्तव्यानि–प्रधानतया बोध्यानि । प्राधान्यं च हिततमावबोधकत्वादवश्यमुपसेव्यत्वम् । तत्र हेतुमाह—धर्मेणेति । यस्मात्सर्वेषां वेदानां तन्मूलकानां चान्येषामिदमेव रहस्यं–हृदयं धर्मेण सहिता कृष्णभक्तिः कार्येति । अन्यत्तु तत्तदधिकारिकामनानुगुण्येन प्रसक्तमिति भावः ॥ १०१ ॥ १०२ ॥

---

ष्दस्य वैवक्षिफमर्थमाह—प्राधान्यं चेति ॥ १०१ ॥ १०२ ॥

**धर्मो ज्ञेयः सदाचारः श्रुतिस्मृत्युपपादितः ।**
**माहात्म्यज्ञानयुग्भूरिस्नेहो भक्तिश्च माधवे ॥ १०३ ॥**
**वैराग्यं ज्ञेयमप्रीतिः श्रीकृष्णेतरवस्तुषु ।**
**ज्ञानं च जीवमायेशरूपाणां सुष्ठु वेदनम् ॥ १०४ ॥**

धर्मलक्षणमाहार्धेन—धर्म इति । श्रुतिः—वेदश्च, स्मृतिः—याज्ञवल्क्याद्यृषिप्रणीता धर्मसंहिता च ताभ्यामुपपादितः—यथाधिकारमवश्यकर्तव्यतया विहितः । "श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृति"रिति मनूक्तेः । सन्—लोकशास्त्राविरुद्धतया शोभनश्चासावाचारश्च । स धर्म इति ज्ञेयः । "अस्वर्ग्यं लोकविद्विष्टं धर्ममप्याचरेन्न त्वि"ति स्मृतेः सदिति विशेषणम् । धर्मलक्षणं जैमिनिः सूत्रयामास—"चोदनालक्षणोऽर्थो धर्म" इति । अत्र न्यायमालाविस्तरे माधवाचार्य आह—"अर्थत्वे सति चोदनागम्यो धर्म इति । अर्थो धर्म इत्युक्ते घटादावतिव्याप्तिस्तद्व्यवच्छेदार्थमुक्तं चोदनागम्य इति । तावत्येवोक्तेऽनर्थफलत्वेनानर्थरूपे श्येनाद्यभिचारकर्मण्यतिव्याप्तिस्तद्व्यवच्छेदायार्थ इत्युक्तम् । यद्यपि श्येनस्य शत्रुवधः फलं नतु नरकस्तथापि तस्य वधस्य नरकहेतुत्वाद्वधद्वारा श्येनोऽनर्थ"इति । अत एवोक्तं स्मृत्यन्तरेऽपि—"यमार्याः क्रियमाणं हि स्तुवन्त्यागमवेदिनः । स धर्मो यं च निन्दति तमधर्मं प्रचक्षत" इति । श्रीभागवते चोक्तम्—"वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्यय"इति ।

---

एवं मुमुक्षुजनसमुचितोपेयोपायविशेषपरतां शास्त्रस्योक्त्वा, अथोपायकोटिप्रविष्टस्य स्वरूपं निरूपयति—धर्मो ज्ञेय इत्यादिना सार्धश्लोकेन । उपेयस्वरूपं तु ज्ञानप्रसङ्गे निरूपयिष्यति । तत्रादौ धर्मं निरूपयति—धर्मो ज्ञेयः सदाचारः श्रुतिस्मृत्युपपादित इति । चोदनालक्षण इत्येतत् । यद्यपि श्येनादिरपि श्रुत्युपपादितस्तथापि स न सदाचार इति

---

मुमुक्षुजनसमुचितोपेयोपायविशेषपरतामिति । उपेयविशेषः, उपायविशेषश्च तत्परतामित्यर्थः । उपेयविशेषः श्रीकृष्णः । उपायविशेषो वृषवैराग्यसहिता भक्तिः । उपायकोटिप्रविष्टस्येति, विशेष्यतया विशेषणतया चोपायकोटिप्रविष्टस्येत्यर्थः । तथाच वृषस्य वैराग्यस्य च स्वरूपं निरूपयतीत्यर्थः । निरूपयिष्यतीति । "स श्रीकृष्णः परं ब्रह्मे"ति श्लोक इति यावत् । सदाचारः श्रुतिस्मृत्युपपादित इत्यन्तस्य धर्मलक्षणपरतामभिप्रेत्य व्याचष्टे—चोदनालक्षण इत्येतदिति । सदाचारशब्दं लक्षणघटकार्थपरतया व्याचक्षाण आह—यद्यपीति । सूत्रस्थेति । "चोदनालक्षणोऽर्थो धर्म" इति सूत्रस्थमि-

मनुश्चाह—"श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः। इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुख"मिति। अविसर्गपाठे तु सदाचारः–शिष्टाचारः सच, श्रुतिश्च, स्मृतिश्चेति द्वन्द्वः। श्रुतिस्मृतिवच्छिष्टाचारस्यापि प्रामाण्यात्। तदुक्तं मोक्षधर्मेषु—"सदाचारः स्मृतिर्वेदास्त्रिविधं धर्मलक्षण"मिति। मात्स्ये च—"साधूनां समयश्चापि प्रमाणं वेदवद्भवे"दिति। शिष्टाचारः प्राङ्निरूपितः। धर्मश्च षड्विध इत्युक्तं मिताक्षरायाम्—"वर्णधर्म आश्रमधर्मो वर्णाश्रमधर्मो गुणधर्मो निमित्तधर्मः साधारणधर्मश्चेति। तत्र–ब्राह्मणः सुरामद्यं नित्यं वर्जयेदित्यादिर्वर्णधर्मः। अग्नीन्धनभैक्षचर्यादिराश्रमधर्मः। पालाशो दण्डो ब्राह्मणस्येत्येवमादिर्वर्णाश्रमधर्मः। शास्त्रीयाभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनादिर्गुणधर्मः। विहिताकरणनिषिद्धसेवननिमित्तं प्रायश्चित्तं निमित्तधर्मः। अहिंसादिः साधारणधर्म"इति।

भक्तिलक्षणमाहार्धेन—**माहात्म्येति**। माहात्म्यस्य–भगवत्प्रतापस्य ज्ञानं––सच्छास्त्रसज्जनेभ्यः सम्यगवबोधस्तेन युज्यत इति तथोक्तः। माहात्म्यं

---

तद्व्यावृत्तिः। सहि परानर्थावहोऽसतामेवाचारः। एतेन–धर्मलक्षणे सूत्रस्थार्थपदं व्याख्यातं भवति। बुद्धीनां बहुशाखतयैव तु कर्मणो बन्धकता, बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम्। मुमुक्षूणां तु बुद्धिरेकैव, व्यवसायात्मिका बुद्धिरेकैव खलु। तद्धर्मस्वरूपे न वैलक्षण्यम्। तत्सामान्यतो धर्मस्वरूपनिरूपणं नानुचितं नाम मुमुक्षुप्रकरणे। यद्वा—धर्मो ज्ञेयः–मुमुक्षुभिरादरणीयो धर्मोऽयमेव ज्ञेयो यः श्रुतिस्मृत्युपपादितः सदाचारः। सन्तः–ब्रह्मविदः, "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततो विदु"रिति श्रुतेः। तेषामाचारः, निष्कामं कर्मेत्येतत्।

---

स्यर्थः। ननु ज्योतिष्टोमादेः श्रुतिचोदितस्य धर्मस्य मोक्षोपायकोटौ कथं प्रवेशः, स हि स्वर्गादिफलद्वारा बन्धकः, तथा चैषां मोक्षोपायस्वरूपनिरूपणप्रसङ्गे कथनमनुचितमित्याशङ्कायामाह—बुद्धीनां बहुशाखतयैव तु कर्मणो बन्धकतेति। अबन्धकत्वप्रकारमाह—मुमुक्षूणां तु बुद्धिरेकैवेति। भगवत्प्रीणनासकत्वेनैकेनैवाकारेण सङ्कल्प्य सर्वस्य कर्मणः क्रियमाणत्वान्न बन्धकतेति भावः। धर्मसामान्यस्य बुद्धिविशेषसंस्कृततयाऽबन्धकत्वमित्येतन्मूलवाक्यतो दुर्बोधमित्यस्वरसादाह—यद्वेति। मुमुक्षूणां धर्मो ज्ञेय इति शेषपूरणेनान्वयमभिप्रेत्याह—मुमुक्षुभिरादरणीय इति। शेषपूरणेनान्वयस्तु नेह क्लिष्टः, प्रकरणात्। अवधारणगर्भतामभिप्रेत्य व्याचष्टे—अयमेवेति। श्रुतिस्मृत्युपपादितः सदाचार एव मुमुक्षूणां धर्मो ज्ञेय इत्यन्वयो बोध्यः। श्रुतिस्मृत्युपपादित इति सामान्यनिर्देशपूर्वकः सदाचार इति विशेषनिर्देशः। श्रुतिस्मृत्युपपादितेषु यः सदाचार इति यावत्। सदाचारशब्दं व्याचष्टे—सन्तः–ब्रह्मविद इति। सच्छब्देन ब्रह्मविदां निर्देशे उपपत्तिमाह—अस्ति ब्रह्मेति चेदिति। निष्कामं कर्मेत्येतदिति। नहि सकामं कर्म ब्रह्मवित्सु घटेतेति भावः।

त्वक्षरपरत्वादि प्रागुक्तम् । अन्यच्च "नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ! ! अजामिलोऽपि येनैव मृत्युपाशादमुच्यत ॥" "किरातहूणान्ध्रपुलिन्दपुंक्सा आभीरकङ्का यवनाः खसादयः । येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः ॥" "सकृदेव प्रपन्नो यस्तवास्मीति च यो वदेत् । अभयं सर्वतस्तस्मै दद्यादेतद्व्रतं हरे"रित्यादि पुराणेपूक्तं वेदितव्यम् । मायाः—लक्ष्म्या धवः—स्वामी माधवः—श्रीकृष्णस्तस्मिन् । भूरिः—सर्वाधिकश्चासौ स्नेहः—प्रेम च । भजनं भक्तिः । स्त्रियां भावे क्तिन् । लिङ्गविपरिणामेन ज्ञेयेति सम्बन्धः । भक्तिलक्षणमुक्तं शाण्डिल्यविद्यायाम्—"अथातो भक्तिजिज्ञासा" "सा परानुरक्तिरीश्वरे" "तत्संस्थस्यामृतत्वोपदेश"इति । श्रीवल्लभाचार्याश्चाहुस्तत्त्वदीपनिबन्धे—"माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः । स्नेहो भक्तिरिति प्रोक्तस्तया मुक्तिर्न चान्यथे"ति । सा च "भक्त्या सञ्जातया भक्त्ये"त्यादिवाक्यात्साधनरूपा फलरूपा चेति द्विविधा ज्ञेया । तत्र फलरूपा श्रीभागवते श्रीगोपीजनेष्वेव प्रायशो वर्णिता—"गोपीनां परमानन्द आसीद्गोविन्ददर्शने । क्षणं युगशतमिव यासां येन विनाऽभवत् ॥" "यत्प्रेक्षणे दृशिषु पक्ष्मकृतं शपन्ति" । "गोप्यः कृष्णे वनं याते तमनुद्रुतचेतसः । कृष्णलीलाः प्रगायन्त्यो निन्युर्दुःखेन वासरान् ॥" "रामेण सार्धं मथुरां प्रणीते श्वाफल्किना मय्यनुरक्तचित्ताः । विगाढ-

---

अथ भक्तिस्वरूपमाह—माहात्म्येति । यद्यपि भूरिस्नेहः पुत्रादिष्वपि स्यात्, तथापि न सा भक्तिः, अवरविषयत्वात् । महनीयविषयकप्रीत्यतिशयः खलु भक्तिः । तदुक्तमभियुक्तैः—"महनीयेषु प्रीतिर्भक्ति"रिति । तदिदमभिप्रेत्योक्तं—माहात्म्यज्ञानयुगिति । माहात्म्यज्ञानं हि महनीयेष्वेव । महनीयश्च सर्वतो माधव एव । स हि सर्वेश्वरः । तस्मात्तद्विषयकस्नेहातिशयो भक्तिरिति सिद्धम् । तदिदमभिसन्धायाह—माधव इति । तथाच सूत्रम्—"सा परानुरक्तिरीश्वरे" इति । यद्वा—माधवे भूरिस्नेह इत्येतावद्भक्तिस्वरूपपरम् । भूरिस्नेहनिष्पत्तौ

---

माहात्म्यज्ञानयुगिति विशेषणस्यातिप्रसक्तिवारकतयाऽर्थवत्तामाह—यद्यपीत्यादिना । इन्द्राद्यवरदेवविषयकस्नेहातिशये भक्तिशब्दप्रवृत्तिर्गौणीत्येतद्ध्वनयन्नाह—महनीयश्चेति । माधव एवेति । माधवादन्यस्मिन्महनीयत्वस्य सापेक्षतया भक्तिशब्दप्रवृत्तिरौपचारिकीत्याशयः । भक्तिरिति सिद्धमिति । मुख्या भक्तिस्तस्मिन्नेवोपपद्यत इति भावः । तथाच सूत्रमिति । अयं सूत्रार्थः—ईश्वरे—सर्वेश्वरे, असङ्कोचन्यायात् । परानुरक्तिः—उत्कटो रागः, स्नेहातिशय इति यावत् । सा—प्रथमसूत्रे जिज्ञास्यतया प्रस्तुता भक्तिरिति । माधवे इतिविशेषणादेवावरविषयकस्नेहेऽतिप्रसङ्गवारणात् माहात्म्यज्ञानयुगिति विशेषणं व्यर्थमित्यभिप्रेत्य व्याचष्टे—यद्वेत्यादिना । माधवे भूरिस्नेह इत्येतावद्भ-

भावेन न मे वियोगतीव्राधयोऽन्यं ददृशुः सुखाय ॥" "ता नाविदन्मय्यनुषङ्ग-बद्धधियः स्वमात्मानमदस्तथेदम्। यथा समाधौ मुनयोऽब्धितोये नद्यः प्रविष्टा इव नामरूपे" इत्यादिना । साधनरूपा तु—"श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदन"मिति नवधोक्ता । तत्र भज्यते—सेव्यतेऽनयेति भक्तिरिति व्युत्पत्तिः । अन्तःकरणवाचकबुद्धिशब्दवद्बाहुलकात्करणे क्तिन् । स्नेहेन भगवत्सेवेत्यर्थः । यथाहुः श्रीवल्लभाचार्याः श्रीभागवतसुबोधिन्याम्—धात्वर्थः सेवा, प्रत्ययार्थः प्रेमेति ॥ १०३ ॥

वैराग्यलक्षणमाहार्धेन—वैराग्यमिति । श्रीकृष्णादितराणि वस्तूनि–पदार्थास्तेषु । अप्रीतिः–अरुचिः, भोगौदासीन्यमित्यर्थः । वैराग्यमिति ज्ञेयम्। विगतो रागः–प्रीतिर्विरागः, स एव वैराग्यम् । स्वार्थे ष्यञ् । श्रीकृष्ण एव गाढानुरागवशतया तृणादारभ्य मूलप्रकृतिपर्यन्तं चराचरपदार्थेषु कालग्रासबुद्ध्या सर्वथैव भोगवैतृष्ण्यमित्यर्थः । तदुक्तं स्कान्दे—"इत्थं प्रभोः कालशक्त्या लयैरेतैश्चतुर्विधैः । असद्बुद्ध्याऽखिलं तत्रारुचिर्वैराग्यमुच्यत"इति । तद्भेदास्तु पातञ्जलयोगशास्त्रीयसमाधिपादादवगन्तव्याः ।

---

स्नेहदार्ढ्ये च हेतुर्व्यज्यते—माहात्म्यज्ञानयुगिति । असति माहात्म्यज्ञाने जायमानोऽपि स्नेहो न दृढतरः स्यात्, न चोत्तरोत्तरमतिशयमाप्नुयात्, सति तु तस्मिन्भक्तिर्वर्द्धेतैव । भगवन्महिमविज्ञानस्य भगवद्भक्तिवर्धकत्वं गीतायाम्—"एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः । सोऽविकम्प्येन योगेन युज्यते नात्र संशयः ॥" इत्यत्र व्यक्तम् । तत्रैव भगवान्स्वमहिमविज्ञानविपाकरूपां भक्तिवृद्धिं दर्शयति च—"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥" इति ।

वैराग्यस्वरूपमाह—वैराग्यमिति । श्रीकृष्णेतरवस्तुष्वप्रीतिर्वैराग्यम् । यद्यपि मुमुक्षोर्विषयतो विरक्तस्याप्यवर्जनीय एव श्रीकृष्णादन्यस्मिन्परिशुद्धस्वस्वरूपे रागः, तथापि स्वस्वरूप-

---

क्तिस्वरूपपरमिति । "सा परानुरक्तिरीश्वरे" इतिसूत्रैककण्ठ्यादिति भावः । स्नेहदार्ढ्ये–उत्पन्नस्य भूरिस्नेहस्यानुदिनमभिवृद्धस्याविच्छेदे । माहात्म्यज्ञानस्य स्नेहनिष्पत्तौ स्नेहदार्ढ्ये च हेतुत्वामुपपादयति—असतीत्यादिना । एतामिति । एतां विभूतिं–सर्वस्य मदायत्तोत्पत्तिस्थितिरूपां विभूतिम् । योगं च–हेयप्रत्यनीककल्याणगुणयोगं च । योगेन–भक्तियोगेन ।

वैराग्यशब्दः प्रीतिसामान्यव्यवच्छेदमवगमयन्नीश्वरे प्रीतिमपि न सहेतेत्यतो व्याचष्टे—श्रीकृष्णेतरवस्तुष्वप्रीतिर्वैराग्यमिति । शङ्कते—यद्यपीति । परिशुद्धस्वस्वरूपे राग इति ।

ज्ञानलक्षणमाहार्धेन—ज्ञानमिति। जीवः–शरीरी च, माया–प्रकृतिश्च, ईशः–परमात्मा च तेषां रूपाणि–स्वरूपाणि तेषाम्। जीवयति–चेतयति शरीरमिति जीवः। पचाद्यच्। शरीराभिमान्यात्मा। यत् सुष्ठु–सम्यक् वेदनं–अवगमनं तत् ज्ञानमिति ज्ञेयम्। ज्ञायत इति ज्ञानम्। भावे ल्युट्। "क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं ममे"ति भगवदुक्तेः। तच्च श्रीभाष्यात्सविस्तरमवगन्तव्यम् ॥ १०४ ॥

स्यापि परशेषतैकरसत्वेन रसतया तद्रागशेषस्तद्राग इति युक्तं नाम श्रीकृष्णेतरवस्तुष्वप्रीतिर्वैराग्यमिति।

अथ निरूपितयोर्भक्तिवैराग्ययोर्ज्ञानसापेक्षत्वाज्ज्ञानं निरूपयति—ज्ञानं चेति। न ह्यसति विषयदोषानुचिन्तने स्याद्वैराग्यम्, नापि भगवत्स्वरूपापरिज्ञाने तन्महिमविज्ञानमूलकभक्तिः, तदपेक्ष्यत एव तत्त्वविज्ञानम्। जीव इति क्षेत्रज्ञवर्ग उच्यते। मायेति क्षेत्रादिविविधपरिणामाश्रयभूता प्रकृतिरुच्यते। अस्या मायाशब्दवाच्यत्वं विचित्रकार्योत्पादकत्वसामर्थ्यात्, न तु मिथ्यात्वात्। ईश इति तयोरन्तःप्रविश्य नियामकः परमात्मोच्यते। सुष्ठु वेदनं–यथावस्थितवेषेण ज्ञानमित्यर्थः। चिदचिदीश्वरतत्त्वत्रयं ज्ञातव्यमित्युक्तं भवति ॥१०३॥१०४॥

नह्यात्मावलोकनमन्तरा भक्तिर्वा सिद्ध्येत्। समाधत्ते—तथापीति। परशेषतैकरसत्वेन रसतयेति। नह्यात्मनि परिशुद्धे ज्ञानैकाकारतया रतिः, परन्तु भगवच्छेषतयैव, सा च रतिर्भगवद्रतावेव पर्यवस्यतीत्युक्तं श्रीकृष्णेतरवस्तुष्वितीति भावः।

ज्ञानसापेक्षत्वादिति। ज्ञानमिह हेयोपादेयविज्ञानं बोध्यम्। भक्तौ वैराग्ये च ज्ञानस्य हेतुतामुपपादयति—न ह्यसतीति। विषयदोषानुचिन्तन इति। तथाच हेयतया मायाज्ञानमपेक्ष्यत इति सिद्धम्। भगवत्स्वरूपापरिज्ञान इति। उपादेयतमस्य भगवतः स्वरूपापरिज्ञान इति यावत्। जीवस्य तच्छेषतैकरसतया तस्याप्युपादेयतया विज्ञानमपेक्ष्यत इति बोध्यम्। मायाशब्देन प्रकृतेर्निर्देशात्प्रकृतेर्मिथ्यात्वभ्रमः स्यादित्यतो मायापदप्रवृत्तिनिमित्तमाह—अस्या मायाशब्दवाच्यत्वमिति ॥ १०३ ॥ १०४ ॥

---

**हृत्स्थोऽणुसूक्ष्मश्चिद्रूपो ज्ञाता व्याप्याखिलां तनुम्।**
**ज्ञानशक्त्या स्थितो जीवो ज्ञेयोऽच्छेद्यादिलक्षणः ॥१०५॥**

जीवादीनां स्वरूपाणि सङ्क्षेपेण कथयन्नादौ जीवस्वरूपमाह—हृत्स्थ

ज्ञातव्ये तत्त्वत्रये प्रथमं जीवं निरूपयति—हृत्स्थ इति। हृत्स्थः–हृदयप्रदेशे वर्तमानः।

मूले हृदवच्छिन्न इत्यनुक्त्वा हृत्स्थ इत्युक्तेराकाशमिव मेर्यादिना जीवो हृदयप्रदेशेनानवच्छिद्यते सहि विभुरिति परेषां पक्षो व्यावर्त्यते, तदिदं स्फुटीकर्तुं व्याचष्टे—हृदयप्रदेशे

इति । हृदि–हृदयपद्मे तिष्ठतीति हृत्स्थः । "हृदि ह्ययमात्मा योऽयं विज्ञानमयः

---

तथाच श्रुतिः—"हृदि ह्ययमात्मा योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योति"रिति । ननु–स्यान्नाम कदाचित् हृदयप्रदेशे सन्निधानं जीवस्य न तु नियमेनावस्थानं तस्य तत्र, "नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं विनिर्दिशेत् । सुषुप्तं हृदयस्थं तु तुरीयं मूर्धनि स्थितम् ॥" इति जाग्रदादिदशासु स्थानान्तरश्रुतेः । मैवम् । अणोस्तस्य जाग्रद्दशायां नेत्रसन्निधानमात्रे श्रावणाद्यनुपपत्तेर्नेत्रशब्दः सर्वेन्द्रियपरो बोध्यः । तेषु तदा सन्निधानं जीवस्य तदधिष्ठातृत्वमेव । तच्चाधिष्ठानं न तेषु स्वरूपतः सन्निधाय, युगपदणोरनेकत्र स्वरूपतः सन्निधानासम्भवात् । क्रमेण स्वरूपतः सन्निधाय तत्तदधिष्ठाने तु पश्यतः शृण्वतो वा गमनादानादयो न घटेरन् । तत्सर्वेन्द्रियकन्दभूते हृदयदेशे सन्निहितस्यैव ज्ञानप्रसरणेन तत्तदधिष्ठानं वाच्यम् । अत एव श्रीभाष्ये—"जीवस्यापि सर्वेन्द्रियव्यापारानुगुणत्वाय सर्वेन्द्रियकन्दभूते स्थानविशेषे वृत्तिरिति चक्षुषि नावस्थान"मित्युक्तम् । यश्च कण्ठस्थानसम्बन्धः श्रूयते सोऽपि कण्ठसमीपस्थनाडीविशेषसम्बन्धपर एव । "आसु तदा नाडीषु सुप्तो भवती"ति नाडीविशेषाणां स्वप्नस्थानत्वश्रवणात् । स च नाडीसम्बन्धः सर्वनाडीमूलस्थानभूतहृदयद्वारैव । सर्वनाडीनां हृदयदेशत एव प्रसृतत्वं च—"शतं चैका च हृदयस्य नाड्यः" इत्यादिषु श्रूयते । यश्च हृदयशब्दः स हृद्गतपरमात्मपरः, "सता सोम्य तदा सम्पन्नो भवती"ति परमात्मनः सुषुप्तिस्थानत्वावगमात् । मूर्धनि स्थितिस्तु चरमशरीरादुत्क्रान्तिसमये एव, "तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेती"ति श्रुतेः । तस्मात्तुरीयशब्द उत्क्रान्त्यवस्थजीवपरः । तत्सिद्धं हृत्स्थत्वं जीवस्य । आह च सूत्रकारोऽपि हृदयप्रदेशावस्थितिं जीवस्य—"अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि ही"ति "गुहां

---

वर्त्तमान इति । ननु स्थानान्तरेऽपि सन्निधानश्रुतेर्हृत्स्थ इति निर्देशे को हेतुरित्याशयेनाशङ्कते—नन्विति । कदाचित्–सुषुप्तिसमये । नियमेनावस्थानं–सर्वदैवावस्थानम् । जाग्रतं–जाग्रदवस्थम् । सुषुप्तं–सुषुप्त्यवस्थम् । समाधत्ते—मैवमिति । पराभिमतं जीवस्य शरीरेऽनियतदेशसम्बन्धं निराकरोति—अणोस्तस्येत्यादिना । युगपदनेकत्राणोस्तस्य सन्निधानाभावेऽपि क्रमशः सन्निधानं स्यादित्याह—क्रमेणेति । तत्तदधिष्ठानं वाच्यमिति । नेत्रस्थमिति प्राधान्यश्रवणेऽपि न नेत्रे साक्षात्स्थितिर्बाध्यते, उक्तबाधात् । हृदि ह्ययमात्मेत्यनेन तु साक्षात्स्थितिरवगम्यते । उपपद्यते च नेत्राद्यधिष्ठानं ज्ञानप्रभया । तदुक्तमुक्तं हृत्स्थ इतीति भावः । जीवस्य हृत्स्थत्वे संवादप्रमाणमाह—अत एवेति । कण्ठे स्वप्नं विनिर्दिशेदित्यस्याशयमाह—यश्च कण्ठेति । नन्वणोः कण्ठसमीपस्थानेकनाडीसम्बन्धस्तत्राह—स च नाडीसम्बन्ध इति । सुषुप्तं हृदयस्थं त्वित्यनेनापाततः प्रतीयमानं जीवस्य नियतहृदयस्थानकत्वे विरोधं परिहरति—यश्च हृदयशब्द इत्यादिना । तुरीयं मूर्धनि स्थितमित्यस्य भावमाह—मूर्धनि स्थितिस्त्विति । उत्क्रान्तिसमये एवेति । एवकारेणान्यदा तत्सम्बन्धो व्यवच्छिद्यते । तथा चोत्क्रमणमार्गोऽयं न तु स्थितिस्थानमित्याशयः । तुरीयशब्दस्यार्थमाह—तस्मादिति । उपसंहृत्य हृत्स्थत्वं जीवस्य तत्र सूत्रकारसम्मतिं प्रदर्शयति—आह चेति । अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमात् हृदि हि—नन्वविरोधश्चन्दनविन्दुवदिति समर्थनं न घटते, हरिचन्दनस्यावस्थितिवैशेष्यात्–एकदेशावस्थानरूपविशेषाद्घटेत सर्वदेहाह्लादनं, जीवस्तु नैकदेशेऽप्यवस्थित इति चेन्न ।

प्राणेषु हृद्यन्तर्ज्योति"रिति श्रुतेः। अणुसूक्ष्मः—अणुवत्सूक्ष्मः। अणुपरिमाण

प्रविष्टावात्मानौ हि तद्दर्शना"दिति च। गुहा चात्र हृदयपुण्डरीकान्तरम्। यद्यपि स्वरूपमनिरूप्य प्रथमत एवाश्रयनिरूपणमनुचितं नाम। तथापि देहादतिरिक्तमात्मानं सूचयितुं तथोक्तिः। देहैकदेशे विद्यमानोऽयं न देह एवेति व्यज्यते।

ननु—नास्ति भूतसङ्घाताद्दते कश्चिच्चेतयिता जीवः। न च भूतसङ्घाते चैतन्यासम्भवाशङ्का, संहतिविशेषमुपगत एव तस्मिंश्चैतन्योत्पादात्। स चैषां धरणिसलिलतेजःपवनानामेव वपुरात्मना। अन्यतरस्मिन्ननवस्थितस्याप्यस्य संहतिविशेषे समुदयस्तु किण्वादिभ्यो मदशक्तिवदुपपद्यते। नाप्यहङ्कारनिर्वाहायाऽऽत्मा नामातीन्द्रियोऽपेक्ष्यते, आहितचैतन्येन वपुरात्मना भूतसङ्घातेनैव तदुपपत्तेः। अत एव स्थूलोऽहं कृशोऽहमिति सामानाधिकरण्यमपि सूपपद्यते। यच्चैकस्यैव देहस्येदङ्काराहङ्कारगोचरत्व एकस्यामेव दृशिक्रियायां कर्मत्वं कर्तृत्वं च। तत्तु देहातिरिक्तात्मवादे देवदत्त आत्मनाऽऽत्मानं निध्यायतीत्यादाविवाऽऽकारभेदेनैव निर्वाह्यम्। अथ यदि चैतन्यं तत्कार्यं सुखादि दृश्यस्य देहस्यैव धर्मः धर्मीव दृश्येत नाम। न। किन्तु दृश्यायाः पृथिव्या धर्मो गन्धो दृश्यते। तद्विषयाणामेष स्वभावो यदिन्द्रियविशेषसापेक्षत्वम्। इत्थं च चैतन्यं तु मानसमात्रगोचरं कथमिव धर्मी देह इव दृश्येत। एतेन—देहस्यैवात्मत्वेऽहमर्थेदमर्थयोरैक्येन स्वस्मिन्निव परस्मिन्नप्यहङ्कारप्रसङ्ग इति परास्तम्। धर्मिणो देहस्य बाह्यमानसोभयविषयत्वेऽपि विशेषणभूतस्य चैतन्यस्य मानसमात्रगोचरतयाऽहङ्कारस्य च चैतन्यावलम्बितया परस्मिन्स्थौल्यादिना दृश्येनेदङ्कारवदहङ्कारस्यासम्भवात्। स्थूलोऽहं कृशोऽहमिति स्थौल्यादिबाह्यसाक्षा-

अभ्युपगमात्—शरीरैकदेशावस्थित्यभ्युपगमात्। शरीरैकदेशो केति चेत्? हृदि हि—हृदयप्रदेशे हि तत्सन्निधिरिति सूत्रार्थः। गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्—गुहां—हृदयगुहां, प्रविष्टावात्मानौ—जीवात्मपरमात्मानौ, तद्दर्शनात्—जीवात्मपरमात्मनोरेव गुहाप्रवेशव्यपदेशस्यास्मिन्प्रकरणे दर्शनादिति तदर्थः। स्वरूपमनिरूप्येति। आत्मन इति शेषः। स्वं रूपं स्वरूपम्, लक्षणमिति यावत्। आश्रयनिरूपणमिति। स्थाननिरूपणमित्यर्थः।

प्रसङ्गाच्चार्वाकान्प्रतिक्षिपंस्तेषामाशङ्कामनुवदति—नन्वित्यादिना। स चेति। संहतिविशेषश्चेत्यर्थः। ननु चैतन्यं न धरणौ न सलिले न वा तेजसि न वा वायौ, तथाच चैतन्यानाश्रयाणामेषां सङ्घीभावमात्रेण तदाधारता कथं घटेतेत्याशङ्कां दृष्टान्तप्रदर्शनतः परिहरति—अन्यतरस्मिन्निति। अस्य—चैतन्यस्य। दृश्य इदङ्कारार्हे भूतसङ्घातेऽहङ्कारानुपपत्त्या भूतसङ्घाताद्विलक्षणेनैवात्मना भाव्यमिति शङ्कां परिहरति—नापीति। अतीन्द्रिय इति। अत्रेन्द्रियपदं बाह्येन्द्रियपरम्। यच्चेति। चस्त्वर्थे। कर्मत्वं कर्तृत्वं चेत्यनेनान्वेति। एकस्यामेव दृशिक्रियायामिति। अहं ममेदं वपुः पश्यामीत्याद्यनुसन्धान इति यावत्। आकारभेदेनैवेति। रूपाद्याश्रयत्वेनाकारेण कर्मत्वं, चैतन्याश्रयत्वेनाकारेण कर्तृत्वं बोध्यम्। दृश्यस्य धर्मेण दृश्येनैव भाव्यमिति नियममाकलय्य शङ्कते—अथेति। नियमे बाधकं प्रदर्शयति—किन्त्विति। एतेनेति। चैतन्यस्य मानसमात्रगोचरत्वेनेत्यर्थः। चैतन्यावलम्बितयेति। चैतन्यविशिष्टविषयतयेत्यर्थः। अहङ्कारस्यासम्भवादिति। परकी-

इत्यर्थः। अणुश्चासौ सूक्ष्मश्चेति विशेषणोभयपदकर्मधारयो वा, तत्राणुरिति परि-

त्कारेऽहन्ताया अलौकिकमर्यादया भानात्। वस्तुतस्त्वहमर्थेदमर्थयोरभेदे न काप्यनुपपत्तिः। स्वस्मिन्निव परस्मिन्नप्यहंव्यवहारस्तु शब्दस्वभावभेदान्न घटेत, सहि शब्द उच्चारयितृव्यक्तावेव व्युत्पन्नः। परस्मिन्नहंप्रत्ययापादनमपि शब्दतो बिभीषिकामात्रं, नहि पिण्डविशेषादृते रूपादिवत्किमप्यहमित्यस्ति। स्वस्मिन्निव परस्मिन्नपि विस्फारितनयनेन तत्तदाकारविशिष्ट आत्मा गृह्यत एव। अनुभूयमानस्यार्थस्योल्लेखमात्रं तु शब्दः। तत्र परानुभवस्योल्लेखे नाहंशब्दः समर्थः, अतो नाहङ्ग्रहः परस्मिन्निति प्रवादः। सुखादीनां सञ्जातचैतन्यदेहशब्दाभिलप्यभूतसङ्घातविशेषधर्मत्वेऽप्यान्तरत्वात्तेषु परेन्द्रियसम्प्रयोगासम्भवान्न तैराकारैः परस्य ग्रहणम्। तत्सिद्धमात्मतत्त्वं वपुषोऽनन्यदिति।

अत्र तत्त्वविदः—दुर्निरूपोऽयं वपुषि चैतन्यगुणयोगः, वपुरारम्भकेषु भूतेषु तस्यानुपलम्भात्, आरम्भके तद्विहीन आरभ्ये तदयोगात्। कार्यविशेषगुणस्य कारणविशेषगुणपूर्वकत्वनियमात्। घटे रूपादिकं कपालरूपादिपूर्वकं दृष्टम्। ननु—किण्वादिभ्यो मदशक्तिवदपूर्व-

यस्य मनसः परकीयान्तरपदार्थग्रहणेऽसामर्थ्यात्। मनसः पराव्याप्तसुखादिप्रत्यक्ष एव कारणत्वादिति भावः। ननु चैतन्यस्य न मानसमात्रगोचरता, स्थूलोऽहमिति चाक्षुषे ह्यहन्ता विषयीभवतीत्याशङ्कायामाह—स्थूलोऽहं कृशोऽहमिति। अलौकिकमर्यादयेति। अलौकिकसन्निकर्षेणेत्यर्थः। भानादिति। अयं चन्दनखण्डः सुरभिरिति प्रत्यक्षे चक्षुःसन्निकृष्टचन्दनांशे चाक्षुषेऽप्यसन्निकृष्टसौरभ्यस्यालौकिकसन्निकर्षेणेव स्थौल्यांशे चाक्षुषेऽप्यस्मिन्नसन्निकृष्टाहन्ताया अलौकिकसन्निकर्षेण भानादिति भावः। अहमर्थेदमर्थयोरभेदे परेणोद्भावितमाक्षेपमभ्युपगम्य विषयभेदव्यवस्थया परिहारः कृतः, इदानीमाक्षेप एव नावतरतीत्याह—वस्तुतस्त्विति। किमहंव्यवहार आपाद्यते? उताहङ्ग्रहः? इति विकल्प्योभयमपि न घटत इत्याह—स्वस्मिन्नित्यादिना। शब्दस्वभावभेदादिति। शब्दस्य स्वभावः शक्तिलक्षणः। उच्चारयितृव्यक्तावेवेति। उच्चारयितृत्वोपलक्षितव्यक्तावेवेत्यर्थः। किमप्यहमित्यस्तीति। येन सता तदनुभवः स्यादिति भावः। ननु तर्हि अहं घटं पश्यामीत्यनुभवो भवति खल्विति शङ्कायामाह—अनुभूयमानस्येति। जातस्यानुभवस्य मनोमात्रगोचरस्य परेषामवबोधनाय इतीत्यन्तः शब्दराशिरुल्लेख एव केवलमिति भावः।

एवमनूद्य चार्वाकपक्षं प्रतिक्षिपति—अत्र तत्त्वविद इत्यादिना। कार्यविशेषगुणस्य कारणविशेषगुणपूर्वकत्वनियमादिति। कार्यगतस्य विशेषगुणस्य कारणगतविशेषगुणजन्यत्वनियमादित्यर्थः। संयोगादिसामान्यगुणस्य कारणगुणपूर्वकत्वाभावेन व्यभिचाराद्विशेषपदोपादानम्। नियमं सङ्गमयति—घटे रूपादिकं कपालरूपादिपूर्वकं दृष्टमिति। अवयविरूपं प्रत्यवयवरूपस्यासमवायिकारणत्वात्तस्य तथात्वं बोध्यम्। अत्रायं प्रयोगः—चैतन्यं न देहधर्मः, अकार्यगतविशेषगुणत्वात्, यो ह्यकार्यगतविशेषगुणः स न देहधर्मः, यथा शब्दः, यश्च देहधर्मः स नाकार्यगतविशेषगुणः, यथा स्थौल्यादि तद्गतरूपादि च। चैतन्यं कार्यविशेषगुणभिन्नं, अकारणगुणपूर्वकत्वात्, यः कार्य-

१ चैतन्येत्यर्थः।

माणविशेषः, सूक्ष्म इति तु तत्र तत्र प्रविशतो व्याप्यपदार्थैर्न सप्रतिघतेत्येतदुच्यते ।

चैतन्याविर्भावस्य सङ्घातविशेषे प्रात्यक्षिकस्य का नाम बाधा रूपादिषु कचिदनुभूतेन कारणगुणपूर्वकत्वेन । नह्यानुमानिकेन प्रात्यक्षिकार्थबाधः । वस्तुतोऽनुमानं प्रमाणमेव न । धूमं पश्यतो वह्न्यर्था प्रवृत्तिस्तु संशयतो भ्रान्त्या वा न प्रमातः । अर्थलाभस्तु यादृच्छिकः । अथ व्याप्तिनिश्चये प्रमापके जाग्रति किमिति संशयादिकल्पनम् । मैवम् । न जागर्त्ति तु सः, दुःसम्पादत्वात्तस्य । न च वाच्यं साध्यहेत्वोः शतशः सहचारदर्शनात्तत्सम्पत्तिरिति । महानसादिषु कतिपयेषु स्थानेषु कतिपयवह्निधूमव्यक्तीनां दृष्टेऽपि साहचर्येऽतीतानागतानामनन्तानां वह्निधूमव्यक्तीनां वर्त्तमानानां च विप्रकृष्टदेशस्थानां साहचर्यादर्शनेनानुभूतसाहचर्यांशतोऽननुभूतसाहचर्यांशस्य भूयस्त्वात्तेषु व्यभिचारशङ्कया व्याप्तिनिश्चयस्यासम्भवात् । मैवम् । अनेकवह्निधूमव्यक्तिषु नियमतः सहचरिततया महानसाद्यधिकरणेषु सहस्रशः समुपलब्धासु सतीषु तत्सजातीयास्वन्यास्वतीतानागतादृष्टव्यक्तिषु विना संशायकलिङ्गं व्यभिचारशङ्काया अनुदयात् । नहि सुस्पष्टं दृष्टसजातीये वस्तुनि विना लिङ्गमदृष्टतामात्रेण संशयः प्रामाणिकः । तस्मात्सामान्यप्रत्यासत्तिबलात्कार्त्स्न्येन व्याप्तिनिश्चयः स्यादेवेति नानुमानमप्रमाणम् । किञ्चानुमानस्य सर्वथाऽप्रामाण्ये लोकव्यवहारोच्छेदः स्यात् । बाला हि विशालेनापि नयनेन तत्तद्द्रव्यमुपलभ-

विशेषगुणः स हि कारणगुणपूर्वको दृष्टः, यथा रूपादीति । द्वितीयानुमाने हेतोर्बाधितत्वं शङ्कते—नन्वित्यादिना । प्रात्यक्षिकस्य का नाम बाधेति । यथा पार्थिवत्वलोहलेख्यत्वयोः शतशः साहचर्ये सत्यपि वज्रमणौ लोहलेख्यत्वाभावस्य प्रत्यक्षसिद्धत्वाद्वज्रमणौ लोहलेख्यत्वे साध्ये पार्थिवत्वं बाधितं, तथाऽकारणगुणपूर्वकत्वकार्यविशेषगुणभिन्नत्वयोः कार्यविशेषगुणत्वकारणगुणपूर्वकत्वयोर्वा साहचर्ये शतशः सत्यपि देहारम्भकेषु भूतेष्वसतश्चैतन्यस्य देहे प्रात्यक्षिकत्वादकारणगुणपूर्वकस्यापि तस्य कार्यगतविशेषगुणत्वनिश्चयादुक्तहेतुर्बाधित एवेति भावः । यद्वा विरोधे बाधकं नेत्याशङ्कते—नन्वित्यादिना । प्रात्यक्षिकस्य का नाम बाधेति । तथा चानुकूलतर्काभावादुक्तानुमानमप्रयोजकमिति भावः । अनुमानप्रामाण्येऽनुमानं दूषितं, अनुमानस्य प्रामाण्यमेव नेत्याशङ्कते—वस्तुत इति । न प्रमात इति । प्रवृत्तिं प्रति भ्रमप्रमासाधारण्येनैव ज्ञानस्य हेतुताया वक्तव्यतया संशयस्यापि प्रवृत्तिहेतुता सङ्घटत इत्यसत्यामपि वह्न्यनुमितौ वह्निसंशयादपि प्रवृत्तिर्भवेदिति भावः । ननु विप्रतिपन्नं प्रमाणं, प्रमितिजनकतावच्छेदकरूपवत्त्वात्, प्रमितिजनकतावच्छेदकं च रूपं व्याप्तिविषयकनिश्चयत्वं तद्रूपावच्छिन्नयोगाद्धूमत्त्वेव ततः प्रमितिः, तत एव च प्रवृत्तिरित्याशङ्कते—अथेति । हेतोरसिद्धिमाह—मैवमित्यादिना । व्यभिचारशङ्कया व्याप्तिनिश्चयस्यासम्भवादिति । व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्यैव व्याप्तिनिश्चये हेतुत्वाद्व्यभिचारशङ्कायां सत्यां तदसिद्धेर्व्याप्तिनिश्चयो न भवेदेवेति भावः । नन्वदृष्टतैव संशयलिङ्गमित्यत्राह—न हीति । ननु माभूत्संशयलिङ्गं, माभूच्च व्यभिचारसंशयः, तथाप्यसन्निकृष्टेषु साहचर्यप्रत्यक्षासम्भवेन न तेषु व्याप्तिनिश्चयो घटेतेत्याशङ्कायामाह—सामान्यप्रत्यासत्तिबलादिति । लोकायतिकेनापि लोकव्यवहारं रक्षताऽनुमानप्रामाण्यं स्वीकार्यमेवेत्याह—किञ्चेति । तत्तद्द्रव्यमिति । अदृष्टपूर्वमिति यावत् । उपमानस्यानुमानकोटावेव समावेशादवर्जनीयमनुमानप्रामाण्य-

"एषोऽणुरात्मा चेतसा वेदितव्यः" "आराग्रमात्रो ह्यवरोऽपि दृष्टः" "वालाग्रश-

---

मानास्तदानीं पिण्डमात्रमेवावगच्छन्ति, न तु नामजात्यादिविशेषम्। तत्परिच्छेदश्च तेषां वृद्धव्यवहारादिपरामर्शमूलकानुमानेनैव। अपूर्वपरिदृष्टे क्वचनारण्यकेऽपि पिण्डविशेषे ग्रामीणस्य गोसदृशो गवय इत्यतिदेशवाक्यार्थस्मरणतो जायमानो गवय इति निश्चयोऽप्यनुमानमूलक एव। किंबहुना—अनुमानप्रामाण्यनिरासे लिङ्गविशेषमाश्रयतस्तव तत्रानुमानमेव शरणम्। यच्चोक्तम्—प्रात्यक्षिकेऽर्थे का नाम बाधानुमानेनेति तत्र वक्तव्यम्। अपि नाम गर्भे जायमानं चैतन्यगुणयोगं कश्चित्साक्षात्कर्त्तुमीष्टे ?, चैतन्यं वा रूपौष्ण्यादिवत्किं बाह्यम् ?। मानसं चेदपि तत्तदात्मसंवेद्यमेव तु तत्, परत्र तु चेष्टयानुमेयमेव तत्। न च स्वात्मना वा स्वस्य चैतन्याविर्भावप्रकारं साक्षात्कर्त्तुमीष्टे। तदुक्तानुमानेनापूर्वचैतन्याविर्भाववादो बाध्यत एव। न च किण्वादिभ्यो मदशक्तेराविर्भवन्त्या अकारणगुणपूर्वकत्वेनोक्तानुमानस्यानैकान्त्यमिति वाच्यम्। कार्यगतविशेषगुणस्यैव तथात्वनियमात्, मदशक्तेश्च सामान्यगुणत्वात्। यदि पुनरपूर्वचैतन्याविर्भाववादमपहाय कारणगुणपूर्वकचैतन्याविर्भाववादमाश्रयसे, हन्त!! तर्हि वपुषि चैतन्योपपादनाय तदारम्भकेषु हस्तपादादिषु चैतन्यं तेषु तदुपपादनाय तदारम्भकेषु केषुचिदिति यावद्देहारम्भकधाराविश्रान्ति तत्र तत्र चैतन्यं पर्याप्तमिति तैस्तैः परम्परयाऽऽरब्धस्यावयविनो वपुषो बहुचेतनारब्धत्वापातेन बहुचेतनसमुदायतापत्त्याऽङ्गाङ्गिभावव्यवस्था हीयेत। स्वमर्यादातिलङ्घनमपि।

ननु—पाकेन घटादिषु रूपान्तरस्याकारणपूर्वकस्योदयात्पाकजस्थल उक्तनियमाभावेन विलक्षणपाकबलाद्गर्भ एव सहसा चैतन्यमपूर्वमाविर्भवेदेव। संश्लेषविशेषमात्रेण क्वचिदपूर्वरू-

---

मित्याह—अपूर्वपरिदृष्ट इति। लोकायतिकस्यानुमानप्रामाण्यनिरासारम्भोऽप्यनुमानप्रामाण्य एव पर्यवस्यतीत्याह—किं बहुनेति। एवमनुमानस्य प्रामाण्यं प्रसाध्य चैतन्यस्य कार्यगतविशेषगुणभिन्नत्वसाधकानुमाने परोक्तं बाधितत्वमप्रयोजकत्वं च परिहरति—यच्चोक्तमिति। तत्रेति। प्रात्यक्षिकेऽर्थ इत्यत्र। वक्तव्यमिति। कोऽसाविह प्रात्यक्षिकोऽर्थः ? पृच्छामो वक्तव्यमुत्तरमिति भावः। साक्षात्कर्त्तुमीष्ट इति। वज्रमणौ पार्थिवे लोहलेख्यत्वस्येवाकारणगुणपूर्वके चैतन्ये कार्यविशेषगुणभिन्नत्वस्य बाधः प्रत्यक्षेण कथं सिद्ध्येत्; येन प्रबलप्रमाणतः साध्याभावनिश्चयाद्बाधशङ्का स्यादनुकूलतर्कस्य वा भङ्गो भवेदिति भावः। देहे चैतन्यस्यानध्यक्षतामेवोपपादयति—चैतन्यमित्यादिना। तच्चैतन्यं तत्तन्मानसयोग्यमपि न कोऽपि तद् दृश्यदेहे एवोत्पन्नं नान्यत्रेति विविच्य निश्चेतुमीष्टे, येनानुमानिकार्थस्य बाधशङ्का स्यादित्याशयेनाह—नच स्वात्मनेति। तथात्वनियमादिति। कारणगुणपूर्वकत्वनियमादित्यर्थः। कारणगुणपूर्वकचैतन्याविर्भाववादमिति। अयं च पक्षो यद्यप्यनभिमतः परस्य, अथाप्यनभिमतपक्षाश्रयणेऽपि न निस्तार इति ज्ञापनार्थोऽयमारम्भः। पर्याप्तमिति। एतेनाङ्गप्रत्यङ्गानामपि प्रत्येकं चेतनत्वसिद्धिरिति भावः।

अपाकजत्वविशिष्टाकारणगुणपूर्वकत्वस्यैव कार्यविशेषगुणभिन्नत्वव्याप्यता न तु केवलस्याकारणगुणपूर्वकत्वस्य, चैतन्यस्य तु पाकजतया हेतोरसिद्धिरित्याशङ्कते—ननु पाकेनेति। अपाक-

तभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेय"इत्यादिश्रुतेः । चित्-

---

पाविर्भावाव्यभिचरितश्च स नियमः । दृश्यते हि सपदि सलिले सुधाहारिद्रचूर्णसंश्लेषमात्रतो रक्तिमा । अस्तु नामैवम् । तथापि सपदि सञ्जातस्य तस्य चैतन्यस्य कुतो न यावद्द्रव्यभाविता, पाकजस्य यावद्द्रव्यभाविता दृष्टा, नहि चैतन्यं वपुषि तथोपलभ्यते, दृढेऽपि चैतन्यं सुषुप्त्यादिषु विलीयते, सुखादिकमप्येवमेव । नापि विलक्षणवस्तुसंश्लेषमात्रेण जातस्यापि रक्तिम्नः कदाप्यपगमः सलिलतः । तस्मादिदं चैतन्यसुखादि प्रतिदिनमपगच्छदुपगच्छद्यावद्द्रव्यभावितया न वपुषो धर्म इति विज्ञायते । पाकबलाद्वा संश्लेषविशेषाद्वोत्पन्नस्य पुनः पुनरपगमोपगमयोरसम्भवात् । न च सुषुप्तौ नापगच्छति चैतन्यं न वा प्रबोधे पुनरागच्छति, किन्तु सुषुप्तावनुद्भूतं प्रबोधे तूद्भूतमिति तु भिदा, तच्चैतन्यं यावद्द्रव्यभाव्येवेति न काचित्क्षतिरिति वाच्यम् । चैतन्यस्य घटादिवदजडस्य स्वरूपसत्तयैव प्रकाशावश्यम्भावात्, अस्ति परमनुद्भूतमिति वक्तुमशक्यत्वात् । यथा वेदान्तिनो बाह्यवृत्तिविधुरा केवलाऽहमिति चैतन्यमात्रस्फूर्त्तिः सुषुप्तावप्यस्तीति कथयन्ति तथा वयमपि कथयाम इति भवता न शक्यते वक्तुम् । गुणस्य हि चैतन्यस्य न निराश्रयस्फूर्त्तिः सम्भाविता, अपि तु साश्रयैव । वेदान्तिनां तु देहातिरिक्ताभ्युपगमेन सहैवाश्रयेण विना बाह्यसंश्लेषं स्फूर्त्तिर्भवेत् । तव तु देहस्यैव चैतन्याश्रयतयाऽऽश्रयेण सह यदि स्फुरेत्, तदा देहेन सहैवेति बाह्यसंश्लेषं विना केवलान्तरस्फूर्त्तिश्चैतन्यस्य कथं घटेत । निर्विशेषज्ञानवादिभिरिव सर्वथा निर्विषयं ज्ञानमस्माभिः सुषुप्तिसमयेऽभ्युपगम्यत इति तु न साम्प्रतम् । ते हि तदेवात्मस्वरूपमभ्युपगच्छन्ति, अतस्तेषां तथोक्तिर्घटेत नाम । बाह्यं पिण्डविशेषं चैतन्यगुणकमभ्युपगच्छतस्तव तथोक्तिर्न घटेत । यदि तन्मतमनुसरस्यत्र, तर्हि देहविलक्षणस्य तस्यैवात्मत्वमभ्युपगतप्रायम् । वस्तुतो ज्ञानस्य तथात्वमेव तु न

---

जत्वमिव संश्लेषविशेषपूर्वकत्वमपि व्याप्यतावच्छेदककोटौ प्रविष्टमतश्चासिद्धिरित्याशयेनाह—संश्लेषविशेषमात्रेणेति । अस्तु नामैवमिति । पाकजत्वं वा संश्लेषविशेषजन्यत्वं वेष्यतां नामेत्यर्थः । यावद्द्रव्यभाविता—आश्रयद्रव्यं यावत्कालमस्ति तावत्कालं तत्र द्रव्ये सत्त्वम् । यावद्द्रव्यभाविता दृष्टेति । रूपादिष्विति शेषः । नन्वनपायमेव यावद्द्रव्यभावित्वं रूपादेरिवास्य चैतन्यस्येत्याशङ्कते—न चेत्यादिना । निराकरोति—चैतन्यस्येति । स्वरूपसत्तयैवेति । एवकाराद्रूपादाविव स्वरूपातिरिक्तस्य प्रकाशस्यापेक्षा नेति ज्ञाप्यते । ननु देहधर्मस्यापि चैतन्यस्य सुषुप्तावपीष्यतेऽस्माभिः प्रकाशो बाह्यवृत्तिविधुरो वेदान्तिभिरिवेति परस्य वादमुद्भाव्य प्रतिक्षिपति—यथेत्यादिना । भवतेति । चैतन्यस्य देहधर्मत्वं वदता भवतेति यावत् । अपि तु साश्रयैवेति । ननु तावता का हानिरित्यत्राह—वेदान्तिनां त्विति । बाह्यसंश्लेषः—स्थूलत्वकृशत्वब्राह्मणत्वक्षत्रियत्वादिसम्बन्धः । तव त्विति । कथं घटेतेत्युत्तरेण सम्बन्धः । तदेवात्मस्वरूपमिति । निराश्रयं निर्विषयमेव ज्ञानमिति यावत् । अतस्तेषां तथोक्तिर्घटेतेति । स्वभावतो निराश्रयं निर्विशेषमेव ज्ञानमात्मतयाऽभ्युपगच्छतामाश्रयादिविशेषासङ्कलितचैतन्यमात्रस्फूर्त्तिर्घटेतेत्यर्थः । तव तथोक्तिर्न घटेतेति । प्रकारतैकस्वरूपस्य प्रकारिस्फुरणं विना स्फुरणस्यासम्भवादिति भावः । यदि तन्मतमनुसरस्यत्रेति ।

चैतन्यमेव रूपं–स्वरूपं यस्य सः, ज्ञानस्वरूप इति यावत्। "विज्ञानात्मा पुरुष"

---

घटते। सर्वथा निर्विषयं तथापि तज्ज्ञानमित्युक्तिर्हि वन्ध्या वीरप्रसूश्चेतिवद्विप्रतिपिद्धा। नापि शब्दस्येव चैतन्यस्याव्याप्यवृत्तित्वाश्रयणमुचितम्। आविर्भूतचैतन्यविशेषस्यैव सङ्घातविशेषस्य तव मत आत्मत्वेन तच्छून्यदशायामात्मन एव विलोपप्रसङ्गात्। किञ्च–शब्दो वा किमित्ययावद्द्रव्यभावी, नहि भवता नित्याकाशधर्मत्वं तस्याभ्युपगम्यते। आकाशस्यैवानङ्गीकारात्। यदि वायोर्धर्मः, आश्रयनाशेनैव तन्नाशोपपादनसम्भवात्।

देहानतिरिक्ताहमर्थवादिना त्वया निरुद्धसकलबाह्येन्द्रियवृत्तेरवहितमनसोऽहमित्यात्मानमनुभवतो मानसप्रत्यक्षे विषयो धर्मी क इति विवेचनीयम्। देहातिरिक्तात्मानभ्युपगमेन स्थूलोऽयं देह एव धर्मी प्रतीयत इति वक्तव्यम्। एवं च सति करचरणाद्यवयवानामपि तत्र भानमवर्जनीयमापतेत्। रूपित्वेन प्रत्यक्षे स्पर्शाप्रतिभानवदिति तु न। तयोरिन्द्रियभेदनियमात्। इह त्ववयविनो भूतसङ्घातस्य मानसग्राह्यत्वे तदवयवानामपि तथात्वस्यौचित्यात्। न च लोके कश्चिदप्यवयवाननुभवन्नवयविनमनुभवति। अवयविनि समुपलभ्यमानेऽवयवानां सहोपलम्भनियमो बाह्यवृत्तावेव नान्तरवृत्ताविति त्वसम्भवदुक्तिकमविशेषात्।

वैषयिकसुखविशेषमेव पुरुषार्थं मन्यमानानामेषां कस्तिर्यगर्थतो भेदः पुमर्थे, तदेषां पुरुषार्थव्यवहारो विलुप्येत, व्यवह्रियेत च प्राण्यर्थ इत्येवेत्यलमनाकलितोर्ध्वदेशानामधोदृष्टीनामजानामिवैषां प्रसङ्गेन।

---

धर्मिणो देहस्येन्द्रियसन्निकर्षसापेक्षधीगोचरतास्वभावकतया तद्धर्मभूतस्य चैतन्यस्य तु स्वयंप्रकाशतया सर्वेन्द्रियोपरतिरूपसुषुप्तिसमये धर्मिणो देहस्यास्फुरणं धर्मभूतस्य चैतन्यस्य केवलं स्फुरणं च घटत इति भावः। अभ्युपगतप्रायमिति। तथा सति चैतन्यस्यैवाजडत्वात्तस्यैवात्मत्वमिष्यतां, देहस्य तु तदवच्छेदकतामात्रं समुचितमिति भावः। अयावद्द्रव्यभावीति। द्रव्यमभिव्याप्य वर्तमानमिह यावद्द्रव्यभावीत्यनेन विवक्षितं, तदन्यदयावद्द्रव्यभावीत्युच्यते, अव्याप्यवृत्तिरिति यावत्। तन्नाशोपपादनसम्भवादिति। किमित्ययावद्द्रव्यभावीति पूर्वेणान्वेति।

अवहितमनस इति। आत्मन्यवहितमनस इत्यर्थः। वक्तव्यमिति। त्वयेति शेषः। नन्वात्मन्यवहितमनसश्चैतन्यमात्रपुरस्कारेण धर्मिणोऽहमर्थस्य देहस्य सङ्घातविशेषस्य स्फूर्त्तावपि न करचरणाद्यवयवयोगस्यापि स्फूर्त्त्यवसरः। रूपित्वेन स्फुरतोऽर्थस्य तदानीमेव नहि स्पर्शयोगेनापि स्फूर्त्तिरित्याशयेनाशङ्क्य परिहरति—रूपित्वेनेत्यादिना। प्रकारान्तरेण प्रत्यवस्थानं परस्यानूद्य परिहरति—अवयविनीत्यादिना।

निरस्यैवं लोकायतमेषां दर्शने पुरुषाणामधिकार एव न घटत इत्याशयेनाह—वैषयिकेत्यादिना। यद्यसाधारणोऽर्थः स्याद्दर्शनेऽस्मिन्पुरुषस्य, तदा स्याद्दर्शनमिदं पुरुषमधिकृत्य प्रवृत्तम्, वैषयिकसुखमेव परमार्थं मन्यमानानां तत्सुखं तत्सुखसाधनं वा समानं प्राणिमात्रस्येति नासाधारणोऽर्थः पुरुषस्य। सुखसाधनकरणग्रामसाम्येऽपि हिताहितविवेचनौपयिकविज्ञानसम्पत्त्यनर्हत्वलक्षणोऽपकर्षो मनुष्येभ्यस्तिर्यग्जातीयानामस्त्येवेति चेत्। किं तेन। नहि तद्विवेचनमापाद्यतेऽनेन दर्शनेन,

इति श्रुतेः । एतेन स्वयंप्रकाशस्वभावतोक्ता । श्रुतिश्च—"अत्रायं पुरुषः स्वयं-

ननु—विभोरस्य जीवस्य कथं हृत्स्थ इति परिमितदेशतोच्यते तत्राह—अणुरिति । नायं विभुः किन्त्वणुरेव, तद्युक्तं शरीरैकदेशस्थत्वमिति भावः । ननु—"योऽयं विज्ञानमयः प्राणेष्वि"ति जीवं प्रस्तुत्य "महानज आत्मे"ति महत्त्वश्रुतेर्नाणुर्जीवः किन्तु विभुरेव । स्मर्यते च—"अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।" "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च । नित्यः सर्वगतः" इति । मैवम् । सर्वगतत्ववचनानां "वायुः सर्वत्रगो महा"नित्यादावि-वान्यथासिद्धत्वात् । नहि तत्रैकस्या वायुव्यक्तेः सर्वगतत्वं प्रत्याय्यते, वायुत्वजातीयेनानाक्रान्तः प्रदेशो नास्तीत्येतावदेव, तद्वदिहापि सर्वभूतजातमात्मत्वजातीयेन व्याप्तमित्येव प्रत्याय्यते । "स वा एष महानज आत्मे"त्येतत्तु परमात्मानमधिकृत्य प्रवृत्तम् । "योऽयं विज्ञानमयः प्राणेष्वि"ति सत्यप्युपक्रमे जीवप्रस्तावे, मध्ये "यस्यानुविद्धः प्रतिबुद्ध आत्मे"ति परमात्मनः प्रस्तुतत्वात् । विभुत्वे तस्योत्क्रान्तिगत्यागतयः "तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वाऽन्येभ्यो वा शरीरदेशेभ्यः" "ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" "तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इत्यादिभिः श्रूयमाणा व्याहन्येरन् । न च—प्राणवायुगतं शरीरादुत्क्रमणं प्राणविशिष्टे तस्मिन्नुपचर्यत इति न तस्य विभुत्वव्याघात इति वाच्यम् । प्राणोत्क्रमणस्यापि जीवोत्क्रमणजन्यत्वप्रतिपादिकायाः "तमुत्क्रामन्तं प्राणोऽनूत्क्रामती"त्यादिश्रुतेर्विरोधापत्तेः । अनुर्हत्र "यज्ञमनु प्रावर्ष"दित्यत्रेव हेतुत्वपरः । "अनुर्लक्षण" इति सूत्रे लक्षणपदं च कारकहेतुपरम् । कथञ्चिदौपचारिकत्वाश्रयणेनोत्क्रान्तिश्रुतिनय-

येन पुरुषाणामधिकारः स्यात् । परोक्षार्थनिरास एव हि पर्यवसानमस्य दर्शनस्येति भावः । ननु मृगतृष्णिकादिष्विव परोक्षसुखे प्ररूढचापलः पुरुषः क्लेशभाजनः सम्पादयन्पुरुषार्थात्प्रच्यवेन्नाम, सोऽनर्थो माभूदिति दर्शनस्यास्य प्रवृत्तिरित्यत्राह—अलमित्यादिना । प्रसङ्गेनालमित्यन्वयः । एतेनेदं व्यज्यते—नास्ति चेन्नास्ति नो हानिरस्ति चेन्नास्तिको हत इत्यभिसन्धाय परिहरणीयः प्रसङ्गोऽस्येति ।

किन्त्वणुरेवेति । अणुपरिमाण एवेत्यर्थः । शङ्कते—नन्विति । श्रुतिविरोधमाशङ्क्य स्मृतिविरोधमाशङ्कते—स्मर्यते चेति । इदं च जीवात्मनः प्रकरणम्, शरीरे नश्यत्यपि नास्य नाश इति नेह शोकावकाश इत्युपदेशो हि प्रवर्त्तते—"देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा । तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यती"ति । उत्तरार्धेश्चास्य "विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हती"ति । अन्तिमामपि स्मृतिविरोधशङ्कां प्रथमतः परिहरति परिहारग्रन्थतोऽव्यवधानेनोपस्थितौ लाघवात् । अन्यथासिद्धत्वादिति । अन्यथा—अभिमतविभुत्वार्थकतां विनैव; अर्थान्तरेणैव लब्धावकाशत्वादित्यर्थः । अन्यथासिद्धिमेवोपपादयति—न हीति । स्मृतिवचनस्य तथात्वेपि श्रुतेरतथात्वाद्विभुत्वमेव जीवस्य स्वीकार्यमित्याशङ्कायामाह—"स वा एष महानज आत्मे"त्येतत्तु परमात्मानमधिकृत्य प्रवृत्तमिति । ननूपक्रमे "योऽयं विज्ञानमयः प्राणेष्वि"ति जीवस्यैव प्रस्तुतत्वात्परमात्मपरताऽस्य वाक्यस्य कथं घटेतेत्यत्राह—योऽयमिति । अणुत्वे श्रुतिस्मृतिविरोधशङ्कां परिहृत्याथाणुत्वे श्रौतं लिङ्गमाह—विभुत्व इत्यादिना । नन्वियमुत्क्रमणश्रुतिर्विभुत्वे जीवस्योपपद्यत एवेत्याशङ्कते—न चेति । परिहरति—प्राणेत्यादिना । तमुत्क्रामन्तमिति । अनन्यथासिद्धवचनाविरोधेनैव वचनान्तरं नेय इत्यौ-

ज्योतिर्भवती"ति। न केवलं ज्ञानस्वरूपः, किन्तु ज्ञानाश्रयश्चेत्याह—ज्ञातेति।

नेऽपि गत्यागतिश्रुतयस्तु कथञ्चिदपि न सङ्गच्छन्ते । श्रूयते चाणुत्वं व्यक्तम्—"एषोऽणुरात्मा चेतसा वेदितव्यः" इति। न च–महानप्यात्मा चेतसोपाधिनाऽणुर्वेदितव्य इति तदर्थः। अन्वयस्वारस्यभङ्गात्। चेतसा वेदितव्य इत्येव ह्यन्वयः स्वरसः । न चायमणुत्वनिर्देशो न मानविशेषप्रमापकः, दुर्विज्ञेयत्वपर्यवसितसूक्ष्मत्वपरतयाऽन्यथासिद्धेरिति वाच्यम्। "आराग्रमात्रो ह्यवरोऽपि दृष्टः" "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः" इत्यादिभिर्मानविशेषपरानन्यथासिद्धवचनैकार्थ्यात्। आह च सूत्रकारो जीवस्याणुत्वं—"उत्क्रान्तिगत्यागतीनाम्" "स्वात्मना चोत्तरयोः" "नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्" "स्वशब्दोन्मानाभ्यां च" इति।

अणुत्वेऽप्यात्मनो धर्मभूतज्ञानप्रसरणतः सर्वावयवावच्छेदेन सुखाद्यनुभव उपपद्यते। निरूपितं चैतत्प्रभादृष्टान्तेन सूत्रकृता—"गुणाद्वाऽऽलोकवत्" इति । ननु–ज्ञानमणोरात्मनो धर्मः, प्रसरति चापादतलमस्तकमाश्रयदेशादन्यत्रापीत्येतत्कथं घटेत। कुतो न घटेत, न किं

पचारिकार्थपरिकल्पनं न घटेतेति भावः। अणुत्वे श्रौतं लिङ्गं प्रदर्शितं, अथ साक्षाच्छ्रुतिमेव प्रमाणयति—एषोऽणुरात्मेति । तस्याप्यन्यथासिद्धिमाशङ्क्य निरस्यति—न चेत्यादिना। प्रकारान्तरेणान्यथासिद्धिमाशङ्क्य परिहरति—न चेत्यादिना । उत्क्रान्तिगत्यागतीनाम्—देहादुत्क्रान्तेः, यथाकर्म लोकान्तरं प्रति गतेः, क्षीणे कर्मफले प्रत्यागतेश्च जीवात्मनस्तत्र श्रुतिषु प्रतिपादनादित्यर्थः। स्वात्मना चोत्तरयोः—उत्क्रान्तिगत्यागतिषु मध्य उत्क्रान्तेरौपचारिकतया कथञ्चिन्नयनेऽपि, उत्तरयोर्गत्यागत्योर्द्वयोः स्वात्मनैवोपपत्तेरुपचारतो नयनानुपपत्तेः । नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्—जीवो नाणुः, अतच्छ्रुतेः–अणुत्वविरोधिविभुत्वस्य "स वा एष महानज आत्मे"ति श्रुतेः, इति चेन्न, तत्र वाक्ये जीवादितरस्य परब्रह्मणोऽधिकारात् । स्वशब्दोन्मानाभ्यां च—जीवोऽणुरेव, स्वशब्दात्—स्वस्याणुत्वस्य यः साक्षाद्बोधकः शब्दः, श्रुतौ तत्सद्भावात्, उन्मानात्–उद्धृत्याणुं द्रव्यविशेषं निदर्शनतया माननिरूपणाच्च।

नन्वणुत्वे जीवस्य शरीरे कचिदेव प्रदेशे विद्यमानत्वस्याभ्युपगन्तव्यतया हस्तपादादिसर्वावयवावच्छेदेन सुखाद्युपलम्भो न स्यादित्याशङ्कायामाह—अणुत्वेऽपीति। यद्यपि मूलेऽस्मिन्नेव श्लोकेऽनुपदमणोरप्यस्य ज्ञानप्रभया व्याप्तिं वक्ष्यति; तद्र्यं विचारस्तत्रैव समुचितः, अथाप्यणुत्वसमर्थनावसरे तद्विरोध्याशङ्काः परिहरणीया इत्यभिप्रेत्येहैव प्रकृतः। गुणाद्वाऽऽलोकवत्—अणोरप्यस्यापादतलमस्तकमभिव्याप्तिः, गुणात्–स्वगुणभूतज्ञानेन द्वारेण, यथा मणिद्युमणिप्रभृतीनामेकदेशस्थितानामात्मगुणभूतालोकेन द्वारेण। ननु तद्धर्मतैकस्वभावस्य तदन्यस्मिन्सम्बन्धो ह्यसङ्गतः, नहि पटधर्मतैकस्वभावं रूपं पटादन्यस्मिन्सम्बद्धं दृष्टं, तथा चात्मधर्मतैकस्वभावस्य ज्ञानस्यात्मनोऽन्यस्मिन् हस्तपादादौ परितः सम्बन्ध इत्यसम्भवि इत्यभिप्रायेण शङ्कते—नन्विति। परिहरति—कुतो न घटेतेति। किमन्यस्मिन्सम्बध्नातीत्येतावता न तद्धर्मता? । किं प्रभा भित्तिप्रभृतिषु सम्बध्नाती-

१ अयुतसिद्धस्येति यावत्। २ व्यापनलक्षणः सम्बन्धः। ३ यद्यपि ज्ञानस्य स्वाश्रयजीवद्वारा सम्बन्धसत्त्वेऽस्त्येव, एकदेशावच्छेदेन स्यात् न तु सर्वदेशेनेत्यभिप्रेत्य परितः इति।

जानातीति ज्ञाता । "अथ यो वेदेदं जिघ्राणीति स आत्मा" "एष हि द्रष्टा

प्रभा प्रभावतो गुणभूता स्वाश्रयादन्यत्र देशे न प्रसरति । अद्रव्यस्य धर्मस्य खलु तथा नियमः । नहि शौक्ल्यादिवदद्रव्यं प्रभा ज्ञानं वा, किन्तु द्रव्यमेव । नन्वणुत्वे जीवस्य सङ्कोचविकासश्रुतिर्विरुध्येत । तथाच श्रूयते—"अथ सोम्य महतो वृक्षस्य यदेकां शाखां जीवो जहाति अथ सा शुष्यति" इति । मैवम् । धर्मभूतज्ञानसङ्कोच एव तस्यास्तात्पर्यात् । शाखादौ भोगावच्छेदकतामयोजकादृष्टनाशाधीनधर्मभूतज्ञानविभागानुकूलव्यापारस्यैव जहात्यर्थत्वादणुत्वे न कश्चिद्विरोधः । न च सौभरिप्रभृतीनामनेकशरीरधारणं विरुध्येत, यावद्धर्मभूतज्ञानप्रसरणमेकस्य वा बहूनां वा धारणसम्भवात् । धर्मभूतज्ञानप्रसरणस्यैव शरीरधारणप्रयोजकत्वात् । तच्च धर्मभूतज्ञानमाश्रयावच्छेदकशरीर आपादतलमस्तकं कर्मणा प्रसरति, अन्यत्र तु योगमहिम्नेति विशेषः । इदं च विकासपर्यवसितं ज्ञानप्रसरणं विलक्षणसंयोगरूपं कर्मनिमित्तके योगनिमित्तके वा शरीरे सुषुप्तिसमयेऽप्यनपायमिति तदानीमपि तत्तच्छरीरधारणं सङ्गच्छते । एतेन—सुषुप्तिसमये सर्वेन्द्रियोपरमात्प्रसरणद्वाराभावाद्धर्मभूतज्ञानं न प्रसरतीति धर्मभूतज्ञानप्रसरणनिबन्धनं शरीरधारणं कथमिति शङ्का निरस्ता । विषयतारूपस्य धर्मभूतज्ञानसंयोगस्य तदानीमभावेऽपि ततो विलक्षणस्योक्तसंयोगरूपस्य प्रसरणस्य कर्मादिनिमित्तकस्यानपायात् । सुषुप्तौ प्रवृत्तिस्तु जाग्रदवस्थाकालिकशरीरप्रेरणायासजनितदुःखोपशमार्था । एतेन—आत्मस्वरूपविधुरेषु

स्येतावता तस्या दीपधर्मता नास्ति ? । रूपादीनामतथात्वनियमस्त्वद्रव्यत्वनिबन्धनः । द्रव्यत्वाच्च प्रभायाः क्रियायोगादधिकदेशसंयोगे न काचिदनुपपत्तिः । दीपैकधर्मता प्रभायास्तत्सत्तैकायत्तसत्ताकत्वात् । दीपशिखायाः प्रभायाश्चापृथक्सिद्धिव्यवहारप्रयोजको विलक्षणः संयोगः । भित्तिप्रभृतिषु न तस्यास्तादृशः संयोग इति प्रभाया भित्तिसम्बद्धत्वेऽपि न तद्धर्मता । एवमेव ज्ञानप्रभाऽऽत्मधर्म इति भावः । नन्वणुत्वे जीवस्येति । यद्यपि विभुत्वेऽपीयं शङ्का स्यादेव, विभोः शाखातो विभागासम्भवात् । तथाप्यनियतपरिमाणत्वं निराकुर्वन्नाशङ्कते—नन्विति । न कश्चिद्विरोध इति । प्रत्युताणुत्ववाद आनुकूल्यमेव, विभुत्वे हि कथञ्चिदपि तन्निर्वाहो न भवेदिति भावः । ननु जीवस्याणुत्वे सौभरिप्रभृतिभिर्योगबलेन बहुशरीरपरिग्रहो यः कृतः स कथं स्यात्, अणोर्बहुषु युगपत्सन्निधानासम्भवाद्युगपद्बहुशरीरावच्छेदेन भोगासम्भवादित्याशङ्कां परिहरति—न चेत्यादिना । ननु ज्ञानप्रसरणस्येन्द्रियव्यापारसापेक्षतया सुषुप्तिसमये इन्द्रियाणामुपरतव्यापारतया ज्ञानप्रसरणासम्भवेन ज्ञानप्रसरणायत्तशरीरधारणं तदानीं कथं घटेतेत्याशङ्कां परिहरन्नाह—इदं च विकासेत्यादिना । विलक्षणसंयोगरूपमिति । प्रसरणं नामाधिकदेशसंयोग एव, तत्र घटाद्यर्थदेशेन संयोग एवेन्द्रियप्रणालिकापेक्षा, तत्सापेक्षसंयोगश्च विषयविषयिभावविभेदप्रयोजकः, तद्विलक्षणश्च शरीरधारणप्रयोजकः संयोगविशेषः, अत्र नेन्द्रियप्रणालिकापेक्षेति सुषुप्तावपि शरीरधारणं घटेतैवेति भावः । इममेवाशयमेतेनेत्यादिना विशदयति । नन्वेवं धर्मभूतज्ञानद्वाराऽनेकशरीरधारणस्योपपादनेऽप्यणोर्जीवस्य योगमहिम्ना परिगृहीतबहुशरीरस्य शरीरान्तरावच्छेदेन कथं सुषुप्त्युपपत्तिः, तदर्थं तस्य प्रवृत्त्यनुपपत्तेः, आत्मसुखानुभूत्यर्थं हि तत्र प्रवृत्तिः, आत्मस्वरूपं च क्वचिदेव सन्निहितं, न शरीरान्तरावच्छेदेन, अविभुत्वात्, इत्याशङ्कां परिहरन्नाह—सुषुप्तौ प्रवृत्तिस्त्विति । तुशब्दा-

श्रोता घ्राता रसयिता मन्ता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः" "एवमेवास्य

---

धर्मभूतज्ञानद्वाराऽवधृतेषु शरीरान्तरेष्वात्मस्वरूपसुखानुभवार्थं प्रवृत्त्यनुपपत्तेस्तदवच्छेदेन सुषुप्त्यर्था प्रवृत्तिः कथमिति शङ्का निरस्ता। तेष्वात्मस्वरूपाभावेऽपि धर्मभूतज्ञानमात्राधिष्ठितानां तेषां प्रेरणायासेन शरीरविशेषसंयुक्तस्यापि दुःखसम्भवात्, तदुपशमनार्थं तदवच्छेदेन तत्र प्रवृत्तेः। यत्तु सुषुप्त्यर्थप्रवृत्तेरात्मस्वरूपसुखानुभवार्थत्वाभिप्रायकमभियुक्तवचनम्—"स्वापे सुखत्वाभिज्ञानात्तद्विच्छेदे च रोषतः। तदर्थमन्यत्यागाच्च श्रुतिस्मृतिशतैरपि" इति, तत्त्वात्मस्वरूपवच्छरीरविषयम्। इत्थं च सुष्ठु तावदात्मनोऽणुत्वम्।

एतेन–आर्हता निरस्ताः। ते हि सङ्कोचविकासयोग्यमात्मस्वरूपमभ्युपगच्छन्तस्तत्तच्छरीरपरिमाणमात्मानं वर्णयन्ति। तथासति चर्मण इवात्मस्वरूपस्यापि बाल्याद्यवस्थाभेदेन योनिभेदेन च वृद्धिह्रासादिप्राप्त्या विकारित्वादनित्यत्वापत्तिः। निरस्तश्चायमार्हतः पक्षः सूत्रकृता। तथाच सूत्रम्—"एवं चात्मा कार्त्स्न्यम्" "न च पर्यायादप्यविरोधो विकारादिभ्यः" इति।

---

त्परस्य पक्षौ व्यावर्त्येते। नात्मसुखानुभवार्था सुषुप्तौ प्रवृत्तिर्येनेयमाशङ्का स्यादिति भावः। एतेनेति। वक्ष्यमाणदोषेणेत्यर्थः।

विकारित्वादनित्यत्वापत्तिरिति। ननु–धर्मभूतज्ञाने सङ्कोचविकासाभ्युपगमे सौगतस्येव तवाप्यात्मस्वरूपस्यानित्यत्वमापतेदेव। मैवम्। धर्मे तयोः सद्भावेऽपि धर्मिणि तयोरभावात्। ननु धर्मस्य परिणामो धर्मिण एव। केदं दृष्टम्?। घटस्य यः परिणामः स न किं मृत्पिण्डस्य?। किं तेन?। इदं तेन, धर्मगतो धर्मिण एवेति। किं घटो मृत्पिण्डस्य धर्मः, स हि सः, न तु तन्निष्ठः सः, मृत्त्वं पिण्डत्वं घटत्वमेवमादि तन्निष्ठम्। अथासत्कार्यवादः?। कुतः?। तव मते घटस्य प्राक् मृत्पिण्डे सूक्ष्मरूपेण सन्निधानस्य वक्तुमशक्यत्वात्। तत्र सन्निहितेन हि तन्निष्ठेन भाव्यम्। ऊधसि सूक्ष्मरूपेण सन्निहितं ततो निःसरद्दुग्धं तदीयम्। कूर्मकर्परे सूक्ष्मरूपेण सन्निहितः कूर्मावयवस्तदीयः। तथैव कनकादिषु सूक्ष्मरूपेण सन्निहितं कटकादिकं तदीयम्। नच तदीयमित्येतावता तन्न तत्। तदेव तु सत्तदीयमपि। तदेव तदीयमिति च वदन्धर्मधर्मिभावापलापमन्यत्र विवेचकेभ्यो निवेदयतु। मृद्द्रव्यमेकमेव पिण्डत्वघटत्वादिविविधावस्थायोगाद्विभिन्नव्यवहारास्पदं भवतीति सत्कार्यवादः. सुघटः। अवस्थानां तद्योगिनश्च द्रव्याद्रव्यविभेदेन धर्मधर्मिभावो दुरपह्नवः। इदमनुपदमुपपादयिष्यति च। कापिलेन क्वचिन्मैत्रीं क्वचिद्द्रोहेन दर्शयन्। धर्मे धर्मिणि च द्विष्यन् सर्वतः प्रच्यवेदसौ॥ ननु तथाप्यपरिहार्योऽन्यथाभाव आत्मस्वरूपे धर्मद्वारा। सत्यम्। स हि व्यवहितः। ननु यद्व्यवधानेनात्मस्वरूपं विकारित्वप्रसङ्गाद्रक्ष्यते, तस्यानित्यत्वमपरिहार्यं, साक्षात्सङ्कोचविकासयोगात्, न चैतदभिमतं भवतः, यद्यभिमतं, वैशेषिके कुतः कटाक्षो भवतः, आगन्तुकज्ञानधर्मकत्ववादो हि दूष्यते भवता। मैवम्। स ह्यात्ममनःसंयोगादिसामग्रीसंमवधानेऽपूर्वस्य ज्ञानस्योत्पत्तिं तदभावे तस्यात्यन्तिकापगमं च मन्यते, अतो जडत्वप्रसञ्जनेन तत्पक्षः प्रतिक्षिप्यतेऽस्माभिः, ज्ञानं तु धर्मभूतमप्यात्मनो न कादाचित्कं, परं त्रैकालिकमात्मस्वरूपानुबन्धिद्रव्यविशेषमभ्युपगच्छामः, सङ्कोचविकासयोगेन तु पूर्वपूर्वावस्थाविरोध्युत्तरोत्तरावस्थाप्राप्तिमात्रं त्वस्त्येव, न तावता तदभिमतं यादृशमनित्यत्वं तादृशमस्मत्पक्ष आपादयितुं शक्येत। ननु सत्यपि सङ्कोचे विकासे वा धर्मभूतज्ञान-

परिद्रष्टुरिमाः षोडश कलाः" "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यत" इत्यादिश्रुतेः।

"स चानन्त्याय कल्पते" इति श्रुतिस्तु धर्मभूतज्ञानानन्त्यमाह। एतेन–अणोरेव मुक्तावान-न्त्यश्रुत्यन्यथानुपपत्त्याऽणावप्यात्मस्वरूपे विकासाभ्युपगमोऽपरिहार्य इत्येतदपास्तम्। आसंसृतेरणुत्वं, ततो विभुत्वमपरे मन्यन्ते नाम, तथा सति स्वरूपनिर्विकारत्वमात्मनः कथं समर्थ्यते तैरिति तु पर्यालोचनीयम्। लिङ्गाच्छब्दविशेषाच्च तत्र तत्र श्रुतौ श्रुतात्। अविभुत्वमणुत्वं च सिद्ध्यतः प्रत्यगात्मनि॥

अत्र जीवस्य तत्र तत्र प्रविशतस्तैस्तैर्न सप्रतिघतेत्यभिप्रेत्याह—सूक्ष्म इति। आकाशादिवदस्पर्शवद्द्रव्यतया न सप्रतिघतेति भावः। अणुवत्सूक्ष्म इत्यपरे। इतः कर्मधारयमाश्रित्य व्याख्यातमेव तु समुचितम्, पदयोः स्वारस्यानपायात्। नन्वात्मनोऽस्पर्शवदणुद्रव्यत्वे निष्क्रान्त्यादयः कथं घटेरन्निति चेन्मनस इवेत्यवधारय। अदृष्टप्रेरणानुगुण्येन च तत्सम्भवो बोध्यः।

स चायं जीवो ज्ञानस्वरूप इत्याह—चिद्रूप इति। एतेन–आगन्तुकचैतन्यगुणकं स्वतः पाषाणकल्पमेव जीवमभ्युपगच्छन्तः प्रत्युक्ताः। आह च श्रुतिः ज्ञानस्वरूपतां—"विज्ञानात्मा

स्येव सौगतमत आत्मस्वरूपस्य नित्यत्वं घटेतैवेति तत्पक्षदूषणं त्वया क्रियमाणमनुचितमिति चेत्। मैवम्। स्वरूपेण नित्यस्य स्वाभाविकोऽयं ज्ञानाख्यधर्म इति नित्यता घटेत, परस्य तु न तथेत्यनित्यत्वप्रसङ्गोऽपरिहार्यः। सङ्कोचविकासशालित्वादालोकवत्पराक्त्वमप्यापद्येत। धर्मभूतस्यापि तथात्वं स्यादिति चेदिष्टमेवैतत्। एवं चात्माकार्त्स्न्यम्—एवं च सति–जीवो न नियतपरिमाणः किन्तु देहपरिमाण इति स्थिते सति, हस्तिशरीरे स्थितस्य तत्परिमाणस्य तदपगमात्परं पिपीलिकाशरीरं प्रविशतः पूर्वदेहपरिमाणस्य तस्य जीवात्मनः कार्त्स्न्येन प्रवेशानुपपत्त्या अकार्त्स्न्यं–अंशतः प्रवेश आपतेत्, तद्वासङ्गतम्। नच पर्यायादप्यविरोधो विकारादिभ्यः—नन्वनियतपरिमाणं जीवं वदतां नस्तत्परिमाणे पर्यायो ह्यभिमतः, तत्तच्छरीरप्रवेशसमये पूर्वपूर्वशरीरपरिमाणापगमेनोत्तरोत्तरशरीरपरिमाणलक्षणावस्थान्तरप्राप्तिर्ह्यभिमता, अतोऽविरोध इति नच वाच्यम्। विकारित्वप्रसङ्गात्। नन्वयं पर्यायस्त्वयाऽपि कदाचिदिष्ट इत्याशङ्क्य परिहरति—स चानन्त्याय कल्पत इति श्रुतिस्त्वित्यादिना।

मूलस्थं सूक्ष्मशब्दं सार्थयन्नवतारयति—अस्य जीवस्येति। सूक्ष्मशब्देन विवक्षितमर्थमाह—अस्पर्शवद्द्रव्यतयेति। सप्रतिघता–सप्रतिरोधकता। अस्य तत्र तत्र व्याप्तौ मूर्तस्येव न प्रतिरोधो व्याप्येनेति भावः। कथं घटेरन्निति। आत्मा क्रियाशून्यः, अस्पर्शवद्द्रव्यत्वादित्यनुमानमाशङ्कामूलम्। मनस इवेति। मनस्यनेकान्तो हेतुरिति भावः। ननु तत्र क्रियायां हेतुः क इत्यत्राह—अदृष्टप्रेरणानुगुण्येनेति।

ननु चिद्रूपो ज्ञातेत्यविशिष्टमित्याम्रेडितं स्यादित्याशङ्कां परिहरंश्चिद्रूप इति पदमवतारयति—स चायं जीवो ज्ञानस्वरूप इत्याहेति। अनेन व्यावर्त्यमाह—एतेनेति। काणादा हि ज्ञातारमपि जीवमात्ममनःसंयोगादिसामग्रीविरहदशायां पाषाणतोऽविशिष्टमेव मन्यन्ते, तत्पक्षो व्यावर्त्यते चिद्रूप इत्युक्त्येति भावः। नन्वात्मनः स्वयंप्रकाशत्वे निष्कृष्टात्मस्वरूपे विप्रतिपत्तिः कुतो लोकानां, स्वयमेत-

१ अनात्मविदां पामराणाम्।

ज्ञानशक्त्या–ज्ञानमय्या स्वप्रभयेत्यर्थः । अखिलां तनुं–आपादमस्तकं स्वदेहम् ।

पुरुष" इति । निर्दिष्टश्च जीवो विज्ञानशब्देन—"विज्ञानं यज्ञं तनुते" "विज्ञाने तिष्ठ"न्नित्यादौ । ज्ञानत्वाच्च स्वयंप्रकाशत्वं सिद्धम् । श्रुतिश्च—"हृद्यन्तर्ज्योतिः पुरुषः" "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इति । यद्यप्यात्मनोऽणुत्वशेषत्वनियाम्यत्वनित्यत्वादयो धर्मास्तथापि न तैराकारैरात्मस्वरूपस्य स्वयंप्रकाशता, तेषां मानान्तरावसेयत्वात् । किन्तु ज्ञानस्वरूपस्यास्य धर्मिस्वरूपमात्रावगाहित्वेनाहमित्येव स्वयंप्रकाशता । अहमिति सदा प्रकाशमानमात्मस्वरूपं प्रत्यक्त्वेनैकत्वेन च प्रकाशत इति विवेष्यते । एतेन–आत्मस्वरूपात्मकज्ञानस्य स्वरूपमात्रावगाहित्वे भाष्ये निष्प्रकारकज्ञाननिराकरणं विरुध्येतेति शङ्का परास्ता । एवमात्मस्वरूपस्य स्वयंप्रकाशता सुखमहमस्वाप्समिति प्रत्यभिज्ञानस्वारस्यसिद्धा । सुषुप्तिसमये आत्मनस्तेन रूपेणाप्रकाशत्वे तदिदं प्रत्यभिज्ञानं न घटेत, तेन रूपेण तदानीमात्मनोऽनुभवासम्भवात् । इदं हि प्रत्यभिज्ञानं सुषुप्तिसमयेऽनुकूलत्वेनानुभूतस्यात्मनः प्रत्यवमर्शरूपम् । ननु–नेदं प्रत्यभिज्ञानं, किन्त्वतीतस्य स्वापस्यानुमैव । प्रत्यभिज्ञारूपतां वर्णयताऽपि भवता स्वापांशेऽनुमैवेत्यभ्युपगन्तव्यम्, स्वापस्य बाह्याभ्यन्तरसकलज्ञानोपरतिरूपतया स्वापदशायां स्वापानुभवासम्भवात्स्वापांशे प्रत्यभिज्ञात्वस्य दुर्घटत्वात्, अंशतोऽनुमा, अंशतः प्रत्यभिज्ञेत्यस्य चानौचित्यात् । न च सुखस्वस्या-

स्यापि भानसम्भवादित्याशङ्कां परिहरन्नाह—यद्यपीत्यादिना । मानान्तरावसेयत्वादिति । नहि स्वयंप्रकाशस्य धर्म इत्येतावता स्वतःसिद्धिः, स चेन्मानान्तरनिरपेक्षः प्रकाशेत धर्मिणा सह नियमेन, स्यान्नाम तथा न चैषां तथात्वमिति भावः । ननु–धर्मिमात्रस्य स्वयंप्रकाशतेत्येतन्न घटते भवतः, निष्प्रकारकज्ञानस्य भवताऽनभ्युपगमात्, प्रकारविशेषं पुरस्कृत्य चेत्, कस्तादृशः प्रकारो येन रूपेण स्वयंप्रकाशता घटेत, ये पुनरिष्यमाणा अणुत्वशेषत्वादयस्ते मानान्तरसापेक्षाः, ये च ज्ञानसुखदुःखेच्छादयस्तेऽपि जाग्रद्दशाकालिकसामग्रीसापेक्षाः, तन्न तैः प्रकारैरात्मनः स्वयंप्रकाशता घटेत, सुषुप्तिसमये तदसम्भवादित्यत आह—किन्त्विति । अहमित्येवेति । अहमिति भासमानतया स्वस्मै भासमानत्वरूपप्रत्यक्त्वेन रूपेण सर्वदैव स्वयंप्रकाशताऽस्तीति सुषुप्तिसमयेऽपि सप्रकारकतयैव स्वयंप्रकाशताऽऽत्मस्वरूपस्यानपायेति भावः । एवमिति । अहन्त्वादिपूर्वकमित्यर्थः । तेन रूपेणेति । अहन्त्वादिरूपेणेत्यर्थः । तदानीमिति । सुषुप्तिसमय इत्यर्थः । ननु सुषुप्तिसमये तथाविधानुभवाभावे सुखमहमस्वाप्समिति प्रत्यभिज्ञानस्य कथमनुपपत्तिरित्यत्राह—इदं हीति । सुखमहमस्वाप्समिति प्रत्यभिज्ञाने सुखत्वोल्लेखेन सुखस्य चानुकूलज्ञानरूपतयाऽऽत्मस्वरूपस्य च तथात्वेनानुकूलत्वेनात्मनः सुषुप्तिसमयेऽनुभूतत्व एवेदं प्रत्यभिज्ञानं घटेतेति भावः । तथा च सुखत्वेनाहमर्थानुभवः सुषुप्तावप्यस्तीत्युक्तं भवति । ननु चेदिदं प्रत्यभिज्ञानं सिध्येत्तदा सुषुप्तावपि सप्रकारकाहमर्थस्फुरणं, तदेव तु न, इदं ह्यनुमितिरूपमित्याशङ्कते—नन्विति । बाह्याभ्यन्तरसकलज्ञानोपरतिरूपतयेति । इन्द्रियसापेक्षज्ञानसामान्योपरतिरूपतयेत्यर्थः । स्वापानुभवासम्भवादिति । आत्मस्वरूपस्य स्वयंप्रकाशतया सुषुप्तिसमयेऽपि तस्य स्फुरणं घटेत, स्वापस्य तु घटादिवदनुभवैकप्रकाश्यतया तत्प्रकाशकानुभवस्य तदानीमसम्भवेन सुषुप्तिसमये स्वापानुभवो न संभवेदिति भावः । अनौचित्यादिति । प्रत्यभिज्ञात्वानुमितित्व-

व्याप्य-अभिव्याप्य स्थितश्च । "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ।

---

नन्वयः, स्वापगतस्य तस्य भानात् । मैवम् । स्वापे सुखत्वस्यासम्भवात् । इदानीं यथा सुखं स्यात्तथाऽस्वाप्समिति तु न तया प्रतिपत्त्याऽवगम्यते, स्वापसमकालस्यैव सुखस्य स्वरसतस्तया प्रतिपत्तेः। नहि मन्दमगच्छं मधुरमगायमित्यतो गमनतो गानतो वा पश्चात्तनं मान्द्यं माधुर्यं वा बोध्यते, तस्मादात्मस्वरूपं स्वतः सुखत्वेन स्वापसमयेऽनुभूतं प्रत्यभिज्ञायत इत्येव समुचितम् । न च सुखस्य स्वापक्रियाविशेषणत्वे प्रतीयमाने कथमात्मस्वरूपविशेषणत्वमुच्यत इति वाच्यम् । क्रियायां सुखत्वस्य बाधात्पुरुषद्वारैव तदन्वयस्य वाच्यतयाऽऽत्मस्वरूपगतसुखत्वप्रत्यभिज्ञान एव पर्यवसानात् । वस्तुतः स्वापस्य बाह्याभ्यन्तरसकलज्ञानाभावरूपतयाऽभावस्याधिकरणस्वरूपत्वेन स्वापविशेषणस्यापि तस्यात्मस्वरूपगतत्वेन न काऽपि क्षतिः । नन्वेकांशे प्रत्यभिज्ञारूपताऽपरांशे चानुमारूपतेति नोचितम् । मैवम् । सुखमहमस्वाप्समिति प्रतीतेर्यस्मिन्नंशे प्रत्यवमर्शरूपतायां स्वारस्यं न भज्यते तस्मिन्नंशे प्रत्यवमर्शरूपतया अनपायात् । यस्मिन्नंशे स्वारस्यभङ्गस्तस्मिन्नंशेऽगत्याऽतद्रूपतायाः स्वीकर्त्तव्यत्वात् । तत्र स्वापस्यैन्द्रियकसकलज्ञाननिवृत्तिरूपस्य स्वापकालेऽनुभवासम्भवेन स्वापांशे प्रत्यवमर्शरूपत्वे स्वारस्यं भग्नमिति तदंशे प्रत्यवमर्शरूपत्वासम्भवेऽप्यहमर्थे वा तत्स्वरूपगतसुखत्वांशे वा प्रत्यवमर्शरूपत्वे स्वारस्यानपायेन तदंशे प्रत्यभिज्ञारूपत्वस्याक्षतेः । एतदुक्तं भवति—सुखमहमस्वाप्समिति प्रतिसन्धानेन पूर्वकालावच्छिन्नसुखरूपस्वापवानहमित्यर्थः प्रत्याय्यते । तत्रात्मगतमेव सुखत्वं स्वाश्रयाश्रयत्वसम्बन्धेन स्वापे भासते । तस्य च भासकः स्वापकालिकसुखरूपात्मानुभवजनितः संस्कारः । अतीतकालावच्छिन्नस्वापाश्रयत्वं च योग्यानुपलब्धिलिङ्गेन भासते । तस्मात्सुखत्वांशे प्रत्यभिज्ञारूपं स्वापां-

---

योर्विभिन्नयोर्विशेषधर्मयोरेकत्र समावेशोऽनुचित इति भावः । अनन्वय इति । अहमर्थे चेदतीतकालिकस्वापानुमितिरियं, तर्हि सुखमित्युल्लिख्यमानस्य सुखत्वस्य क्व विशेषणता, आत्मनि चेत्, व्यर्थविशेषणता, साध्यता च न तस्य प्रकृतेत्यनन्वय इति भावः । इदानीं यथा सुखं स्यात्तथेति । यद्यपि सुखत्वं वा सुखं वा न स्वापे, तथापि सुखसाधनताऽस्त्येव, अतीतस्यापि सुखसाधनता च समनन्तरानुभूयमानसुखसाधनतारूपैवेति सुखरूपस्वापानुमानसम्भवेन नानन्वयः । अत एव सुखमहमस्वाप्समिति क्रियाविशेषणतयोल्लेखोऽपि सङ्गच्छत इति भावः । नहि मन्दमगच्छमिति । इदमुपलक्षणम्—पश्चात्सुखकामनया धावति पुरुषे सुखं धावतीति प्रयोगापत्तिः, तदानीं दुःखजनकेऽपि धावने पाश्चात्यसुखप्रयोजकतायाः सम्भवात् । परम्परासम्बन्धेन सुखत्वस्य स्वापविशेषणत्वनिर्वहणमस्वरसमित्याशयेनाह—वस्तुत इति । सुखमहमस्वाप्समिति प्रतीतेर्यस्मिन्नंश इति । सुखमहमस्वाप्समिति प्रतीतेः प्रत्यवमर्शरूपतायां स्वारस्यं यस्मिन्नंशे न भज्यत इत्यन्वयः । प्रत्यवमर्शरूपतायामेवास्याः प्रतीतेः स्वारस्यं, तद्यस्मिन्नंशे न भज्यत इति भावः । यस्मिन्नंशे स्वारस्यभङ्ग इति । प्रत्यवमर्शरूपतायां यत्स्वारस्यं तस्य यस्मिन्नंशे भङ्ग इत्यर्थः । अतद्रूपताया इति । प्रत्यवमर्शानात्मताया इत्यर्थः । अनुमारूपताया इति यावत् । स्वाश्रयाश्रयत्वसम्बन्धेनेति । स्वाश्रय आश्रयो यस्येति बहुव्रीहिसमासो बोध्यः । संस्कार इति । तथाच संस्कारघटितसामग्रीप्रयुक्तत्वात्तदंशे स्मृतिरूपत्वं न्याय्यमिति भावः ।

क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥" "द्वासप्ततिः सहस्राणि हृदयादभि-

शेऽनुमारूपं चेदं प्रतिसन्धानम् । न च जातिसाङ्कर्यम्, अदोषात् । ननु—स्वापकालिकस्य धर्मिस्वरूपात्मकस्याऽनुभवस्य संस्कारे हेतुत्वमनुचितम्, स हि नित्यः, चिरातीतस्य स्मरणसमयेऽसम्भवेन स्मृतिनिर्वाहाय खलु संस्कारहेतुत्वमनुभवस्य स्वीक्रियते, यथानुभवो नित्यस्तत्रानुपपत्यभावेन तस्य संस्कारे हेतुत्वं तु व्यर्थम् । नित्यस्यापि तस्य संस्कारहेतुत्वे प्रतिक्षणं संस्काराः सजातीयाः समुत्पद्यन्ताम् । मैवम् । स्मृतिं प्रति नित्यानित्यानुभवभेदेन कार्यकारणभावभेदकल्पने गौरवात् । स्वजन्यसंस्कारसम्बन्धेनाऽनुभवत्वेनैककारणताया एवौचित्यात् । नित्यानुभवेन संस्कारोत्पत्तिसम्भवात् । नित्यानुभवेन संस्कारोत्पत्तौ स्वापकालस्य सहकारिताऽभ्युपगमेन च सर्वदा संस्कारोत्पादवारणसम्भवात् । स्वापदशायामपि प्रतिक्षणं संस्कारोत्पादो यद्यनभिमतस्तदा तदानीमेकस्य संस्कारस्य जातस्य संस्कारान्तरोत्पत्तौ प्रतिबन्धकत्वमङ्गीकार्यम् ।

ज्ञप्तिमात्रात्मवादिनो निरस्यन्विशेषान्तरमाह—ज्ञातेति । ज्ञानस्वरूपस्यास्य ज्ञातृत्वमपि स्वाभाविकमित्यर्थः । ननु–कथमात्मनो ज्ञातृत्वं स्वाभाविकं, सहि चिद्रूपो निर्विकारः, ज्ञातृत्वं तु ज्ञानक्रियाकर्तृत्वं विक्रियारूपम् । मैवम् । नहि ज्ञातृत्वं विक्रियारूपम् । स्वरूपान्यथाभावो हि विक्रिया । नहि ज्ञातृत्वमात्रेणात्मनः स्वरूपान्यथाभावः । नच तृज्योगो विक्रियारूपतामवगमयेत् । अस्ति भवतीत्यादियोगेनापि संविदस्तथात्वापातात् । तज्ज्ञातृत्वं ज्ञाना-

लिङ्गेन भासत इति । न तु संस्कारेणेत्यर्थः । जातिसाङ्कर्यमिति । अनुमात्वप्रत्यभिज्ञात्वयोः परस्पराभावसमानाधिकरणयोरेकत्र समावेशप्रसङ्गः स्यादित्यर्थः । अदोषादिति । जातित्वे बाधकं नेत्यर्थः । ननु सुषुप्तिकालिकस्यात्मस्वरूपसुखानुभवस्य यदि संस्कारे हेतुत्वं स्यात्तदा घटेत नाम सुखांशे प्रत्यभिज्ञारूपत्वं, तदानीं प्रत्यभिज्ञासामग्रीसम्पत्तेः, तदेव नेत्यंशतोऽपि नास्यानुभवस्य प्रत्यभिज्ञारूपतेत्याशङ्कते—ननु स्वापेति । ननूपपन्नोऽर्थः स्वीकार्यः किं तस्य सार्थक्यचिन्तयेत्यत आह—नित्यस्यापि तस्य संस्कारहेतुत्व इति । प्रतिक्षणमिति । जाग्रद्दशायामपीति भावः । गौरवादिति । कालान्तरेऽनुभवः कालान्तरे स्मृतिरित्येव बहुशो दर्शनात्स्मृतावनुभवस्य स्वजन्यसंस्कारसम्बन्धेन कारणत्वस्य सिद्धेः, नित्यानुभवस्यैकस्य स्मृत्यव्यवधानसम्भवमात्रेण सिद्धं कार्यकारणभावं परित्यज्य तत्र मुखान्तरेण कार्यकारणभावपरिकल्पने गौरवमापतेदिति भावः । ननूपपन्नेऽर्थे गौरवलाघवचर्चा, आत्मस्वरूपभूतो नित्यानुभवः संस्कारे हेतुरित्यनुपपन्नं, तत्किं लाघवचिन्तयेत्यत आह—नित्यानुभवेन संस्कारोत्पत्तिसम्भवादिति । ननु कथं तेन तत्सम्भवः ? तथासति सर्वदा संस्कारोत्पादप्रसङ्ग इत्यत्राह—नित्यानुभवेन संस्कारोत्पत्ताविति । यद्यनभिमत इति । तदानीं तथासति न हानिरिति व्यज्यते । इदमत्र बोध्यम्—नित्यस्य संस्कारमद्वारीकृत्य हेतुत्वे कदाचित्स्मृतिः कदाचिन्नेत्यनियमो नोपपद्येत, प्रयोजकस्य तस्य सर्वदा सत्त्वात्, संस्कारस्य द्वारत्वे तु तदुद्बोधानुद्बोधवैषम्येण तदुपपत्तिरिति ।

. ज्ञातृत्वमपि स्वाभाविकमित्यर्थ इति । अनेन ज्ञातृत्वमात्मन औपाधिकमारोपितं वेति पक्षो व्यावर्त्यते । तृज्योग इति । ज्ञातेत्यत्र तृज्योगः । अस्ति भवतीति । संविदस्ति भवतीत्यादिप्रयोग

१ गीता १।

निःसृताः । हिताहिता नाम नाड्यस्तासां मध्ये शशिप्रभम् । मण्डलं तस्य

श्रयत्वमात्रम् । प्रभावतः प्रभेवास्य ज्ञानं स्वाभाविकमिति न तत्र कापि क्षतिः । ज्ञानप्रसरणादिवैषम्ये तु निमित्तं कर्म । यदि तु ज्ञातृत्वमात्मनो न, तर्हि जानाम्यहमित्यवगम्यमानं ज्ञातृत्वं कस्य धर्मः, ? नहि जडे तस्य सम्भवः । नच जडेऽप्यन्तःकरणे चिच्छायापत्त्या तदारोपमात्रम् । केयं चिच्छायापत्तिः ? । कुसुमस्य स्फटिक इव चितः किमन्तःकरणे प्रतिफलनम् ? । नैतदरूपस्य घटते । चाक्षुषयोरेव तु बिम्बप्रतिबिम्बयोगः । यदि सान्निध्यादध्यासमात्रं तत्, तथापि वास्तवं ज्ञातृत्वं संविद्यन्तःकरणेऽप्यनभ्युपगच्छतः सान्निध्यात्तदध्यासो नैव सिध्येत्, अग्निसम्पर्कादयःपिण्डेऽध्यस्यमानमौष्ण्यं ह्यग्नेर्वास्तवो धर्मः ।

नाप्यभिव्यञ्जकानां दर्पणादीनां स्वगततयैवाभिव्यङ्ग्याभिव्यञ्जकत्वस्वाभाव्यादभिव्यञ्जकत्वस्वभावयदन्तःकरणमभिव्यङ्ग्यं ज्ञप्तिस्वरूपं दर्पण इव मुखं स्वगततयाऽभिव्यनक्तीति जानाम्यहमिति भ्रमोपपत्तिरिति । स्वयंज्योतिषो ज्ञप्तिस्वरूपस्याभिव्यञ्जकान्तरनिरपेक्षं सदैवाभिव्यक्तस्वरूपत्वात्, अपेक्षायामपि जडस्याहङ्कारस्य संविदभिव्यञ्जकत्ववर्णनस्य शान्ताङ्गारस्यादित्याभिव्यञ्जकत्ववर्णनसमानयोगक्षेमत्वात् । नाप्यभिव्यञ्जकानां स्वगततयाऽभिव्यङ्ग्याभिव्यञ्जकत्वं स्वभावः । नहि घटाद्यभिव्यञ्जको दीपादिर्घटादिकं स्वनिष्ठतयाऽभिव्यनक्ति । ननु—

इति यावत् । ज्ञातृत्वं च ज्ञानाश्रयत्वमात्रमिति । छेदनाद्यपेक्षयेव नात्राश्रयत्वातिरिक्तो व्यापारोऽपेक्ष्यत इति भावः । ननु ज्ञातृत्वं चेत्स्वाभाविकं कथं ज्ञानसङ्कोचविकासरूपवैषम्यमित्यत्राह—ज्ञानप्रसरणादिवैषम्ये त्विति । अथ परपक्षं प्रतिक्षिपति—यदीत्यादिना । छायापत्तिशब्दस्य मुख्यार्थविवक्षां दूषयति—कुसुमस्य स्फटिक इवेत्यादिना । चाक्षुषयोरेव तु बिम्बप्रतिबिम्बयोग इति । नन्वचाक्षुषमरूप्यपि गगनं साभ्रनक्षत्रं प्रतिफलति जलाशये, तत् रूपिणश्चाक्षुषस्यैव प्रतिफलनार्हतेत्यसङ्गतमिति चेत् । मैवम् । गगनमपि हि रूपि चाक्षुषं च । यदि नेत्याग्रहस्तर्हि गगनस्य न प्रतिफलनं, किन्त्वभ्रनक्षत्रादीनामेवेत्यभिनिवेशः किं न स्यात् । यदि जलाशये साभ्रनक्षत्रं गगनं पश्यतोऽस्ति गगनोल्लेख इति चेत् । उपरि तथाविधं तत्पश्यतो भवति तदुल्लेख इति तत्र किमुत्तरम् । छायापत्तिशब्दस्यौपचारिकार्थविवक्षायामाह—यदि सान्निध्यादित्यादिना ।

ननु न ज्ञातृत्वाध्यासः, यदाश्रयणेनेयमाशङ्का "कस्यायं वास्तवो धर्म" इति, किन्तु ज्ञानस्यैव सन्निहितेऽन्तःकरणेऽध्यासः, अभिव्यञ्जकस्वाभाव्याचाभिव्यञ्जकाहमर्थान्तःकरणधर्मतया जानाम्यहमिति ज्ञातृत्वोल्लेख इत्याशयेनाशङ्कते—नाप्यभिव्यञ्जकानामिति । मुखदर्पणयोरिव नेहाभिव्यङ्ग्याभिव्यञ्जकभाव उपपद्येत, अभिव्यङ्ग्यतयाऽभिमतस्य, अभिव्यञ्जकतयाऽभिमतस्य च मुखदर्पणतः स्वभाववैषम्यादित्याशयेनाह—स्वयंज्योतिष इत्यादिना । अपेक्षायामपीति । अपिना अपेक्षा नास्त्येव, परं तु संविदपेक्ष्याऽभिव्यञ्जकत्वमन्तःकरणस्य न घटेतेत्येतदुपपाद्यत इति व्यज्यते । स्वभाव इति । नियतमिति यावत् । अनैयत्यमेवोपपादयति—नहीति । ननु दीपस्याभिव्यञ्जकतैव नास्तीति न तत्रानियम इत्याशङ्कते—नन्विति । न चेद्दीपो घटस्याभिव्यञ्जकस्तमस्यनभिव्यक्तो घटः सति दीपे कथमभिव्यज्यत

१ छेदनाद्यपेक्षयेति वैधर्म्योदाहरणम् ।

मध्यस्थ आत्मा दीप इवाचलः" "स्वरूपतोऽणुभूतोऽपि प्रकाशेन शरीरगः।

दीपो नाभिव्यञ्जकः, विरोधितमोनिरसनमात्रे हेतुः। अभिव्यक्तिस्त्विन्द्रियत एवेति चेत्। अस्तु नाम तथा, किं तावता इन्द्रियं वा किं स्वगततयाऽभिव्यनक्ति। ननु–दर्पणस्येवान्तःकरणस्यायं स्वभावः, यत्स्वगततयाऽभिव्यङ्ग्याभिव्यञ्जकत्वमित्येवाचक्ष्महे। नाभिव्यञ्जकानां सर्वेषामयं स्वभाव इति चेत्। दर्पणस्य वा क्वाभिव्यञ्जकता, नयनमेव तु तत्राप्यभिव्यञ्जकम्, दर्पणस्य तु स्वस्मिन्निपतितानां नायनालोकानां प्रतिस्रोतःप्रवृत्त्यापादकत्वमेव स्वभावः, तथाच तत्र दर्पणप्रतिहतगतिना प्रतिस्रोतःप्रवृत्तेन नायनालोकेन देशवियुक्तं मुखमात्रं गृह्यते, अनुकूलस्रोतसा च दर्पणदेशः। तत्र च देशे देशत्वसाम्यात्, मुखदेशभेदाग्रहाच्च मुखदेशत्वारोपः। इह तु न तथा वक्तुं शक्यते। नहि नायनरश्मिवच्चेतनप्रभा काचिदन्तःकरणेन निरुद्धगतिरिति सम्भाव्यते। तथा सति सैव प्रभा ज्ञानस्वरूपेति तदाश्रयत्वेन ज्ञानाश्रयत्वरूपं ज्ञातृत्वं स्वाभाविकं सिध्येत्। स्वरूपानतिरिक्ता चेत् चेतनप्रभा स्वरूपस्य विभुत्वेन नयनरश्मेर्दर्पणेनेव गतिनिरोधो दुर्वचः। विषमश्चायं दृष्टान्तो मृषावादिनः। तत्र सत्ये हि दर्पणे सत्यमुखारोपः। इह तु सत्यभूतायाः संविदोऽसत्येऽन्तःकरणे। ननु–क्वापि न सर्वांशे दृष्टान्तसङ्गतिः स्यात्, नच तथा विवक्षा, सन्निहिते दर्पणे मुखदेशत्वारोपवदिह सन्निहितेऽन्तःकरणे संविद्देशत्वारोप इत्येतावत्तु दृष्टान्ततो ग्राह्यमिति चेत्। निर्विशेषज्ञप्तिमात्रवादिनो देशाद्यभावेन देशत्वसाम्यनिबन्धनस्तथाविधाध्यासो दुर्वचः। अध्यासप्रयोजको भेदाग्रहश्च दुरुपपादः, स्वरूपातिरिक्तभेदानभ्युपगमात्। किञ्च–कुतोऽयमभिनिवेशः, ज्ञातृत्वेनाध्यस्तेनैव भाव्यमिति। निर्विकारत्वश्रुतिविरोधादिति चेत्। ज्ञातृत्वमपि श्रुतिभिरेवावगम्यत इति कथमस्यापलापः। तथाच श्रुतयः—"अथ यो वेदेदं जिघ्राणीति स आत्मा मनसैवैतान्कामान्पश्यन् रमते य एते ब्रह्मलोके" "सत्यकामः सत्यसङ्कल्पः" "न पश्यो मृत्युं पश्यति" "एष हि द्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः" "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः" "न विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इत्येवमाद्याः। नच–निर्विकारत्वश्रुतिविरोधादेव ज्ञातृत्वप्रतिपादकश्रुतीनामारोपितविषयता। विपरिवृत्तिरेव किं न स्यात्। वस्तुतो ज्ञातृत्वमात्रेण नात्मनो विकारित्वप्रसङ्गः, स्वरूपान्यथाभावाभावादितीदमुक्तमेव प्राक्। तस्मादात्मा ज्ञातेति सिद्धम्।

इत्यत्राह—विरोधितमोनिरसनमात्र इति। ननु मास्त्वयं स्वभावोऽभिव्यञ्जकसामान्यस्य, अथाप्यभिव्यञ्जकविशेषस्य त्वस्त्ययं स्वभावः, यदात्मगततयैवाभिव्यङ्ग्यमभिव्यनक्तीत्याशङ्कते—नन्विति। दर्पणस्य वेति। दीपस्येव दर्पणस्यापि नाभिव्यञ्जकतेति भावः। देशवियुक्तमिति। मुखाश्रयदेशं विहायेति यावत्। अनुकूलस्रोतसेति। स्वाभाविकनायनगत्येति यावत्। ननु यादृशस्तादृशो वा दर्पणस्येवान्तःकरणस्यापि स्वभावविशेष इष्यत इत्यत्राह—इह त्विति। विषमश्चायं दृष्टान्तो मृषावादिन इति। कापिलपरिगृहीतमिमं दृष्टान्तं विषममपि स्वस्य, सिद्धान्त्यभिमतपक्षनिराकरणाभिनिवेशव्याक्षिप्तहृदयो निदर्शयतीति व्यज्यते। अथ श्रुतितः परपक्षं प्रतिक्षेप्तुमुपक्रमते—किञ्चेत्यादिना। विपरिवृत्तिरेव किं न स्यादिति। ज्ञातृत्वप्रतिपादकश्रुतिविरोधान्निर्विकारत्वश्रुतीनामेवारोपितविषयता किं न स्यादिति भावः। ननु प्रतिबन्दीमात्रेण न वस्तुतत्त्वं व्याहन्येतेत्यत्राह—वस्तुत इति।

एकदेशस्थितो वेत्ति हरिचन्दनबिन्दुवत् ॥ प्रभया भास्करो यद्वद्ब्रह्माण्डं व्याप्य

. एतेन–अहमर्थो नात्मा, किन्त्वन्तःकरणमेव, आत्मनि तत्प्रत्ययस्तु भ्रम इत्यपास्तम् । श्रूयते हि—"अहं मनुरभवं सूर्यश्च" त्यहङ्कारेणैवात्मसाक्षात्कारो निर्धूताविद्यस्य वामदेवस्य । तथा मुक्तानामपि—"अहमन्नमहमन्नमहमन्नादोऽहमन्नादः अहं श्लोककृदहं श्लोककृत्" इति । तथैवेश्वरसङ्कल्पश्च—"हन्ताहमिमास्तिस्रो देवता" इति । किञ्च–अहमर्थश्चेदन्तःकरणं, मोक्षे तदुच्छेदस्यैव भावितयाऽपसर्पेयुरेव ततः सर्वे । मम सुखं भावीति खलु सर्वः प्रयतते । तथोक्तं सिद्धित्रये यामुनाचार्यैः—"अहमर्थो न चेदात्मा प्रत्यक्त्वं नात्मनो भवेत् । अहंबुद्ध्या परागर्थात्प्रत्यगर्थो हि भिद्यते ॥ निरस्ताखिलदुःखोऽहमनन्तानन्दभाक्स्वराट् । भवेयमिति मोक्षार्थी श्रवणादौ प्रवर्त्तते ॥ अहमर्थविनाशश्चेन्मोक्ष इत्यध्यवस्यति । अपसर्पेदसौ मोक्षकथाप्रस्तावगन्धतः ॥ मयि नष्टेऽपि मत्तोऽन्या काचिज्ज्ञप्तिरवस्थिता । इति तत्प्राप्तये यत्नः कस्यापि न भविष्यति ॥ स्वसम्बन्धितया ह्यस्याः सत्ताविज्ञप्तितादि च । स्वसम्बन्धिवियोगे तु ज्ञप्तिरेव न सिध्यति ॥ छेत्तुश्छेद्यस्य चाभावे छेदनादेरसिद्धिवत् । अतोऽहमर्थो ज्ञातैव प्रत्यगात्मेति निश्चितम् ॥ विज्ञातारमरे केन जानात्येवेति च श्रुतिः । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति च स्मृतिः ॥ नात्मा श्रुतेरित्यारभ्य सूत्रकारोऽपि वक्ष्यति । ज्ञोऽत एवेत्यतो नात्मा ज्ञप्तिमात्रमिति स्थितम् ॥" इति । उक्तञ्च न्यायसिद्धाञ्जने—"प्रत्यक्त्वादुपलम्भतो मम सुखं भावीति

ज्ञातृत्वसमर्थनेनैवाहमर्थात्मत्वमपि समर्थितमित्यभिप्रायेणाह—एतेनेति । आत्मनो ज्ञातृत्वसमर्थनेनैव । न केवलमुपपत्तिमात्रं, श्रुतिरप्यहमर्थस्यात्मत्वे लिङ्गमित्याह—श्रूयते हीति । निर्धूताविद्यस्येति । तेनाहङ्कार आत्मनि भ्रान्तानामेवेत्यपास्तम् । आत्मदर्शिनां निष्पन्नयोगानामात्मन्यहङ्कारे श्रौतं लिङ्गं प्रदर्श्याथ मुक्तानामुदाहरति—तथेति । अथेश्वरस्योदाहरति—तथेति । उत्तरोत्तरं प्रमातृत्वोत्कर्षादेवम् । परपक्षेऽनुपपत्तिमाह—किञ्चेति । अभियुक्तवचनं संवादप्रमाणमाह—तथोक्तमित्यादिना । अहमर्थो न चेदिति । अहङ्कारेदङ्कारयोर्हि प्रत्यक्परागर्थलक्षणविषयभेदेन भेदो वक्तव्यः, यद्यहङ्कारगोचरता न स्यादात्मनस्तदा प्रत्यक्त्वं न स्यादिति यावत् । यस्य सुखं कामयमानो मोक्षे प्रवर्त्तेत, स चेत्तदानीं न स्थास्यतीति जानीयात्, कस्य सुखाय यतेतेत्याशयेनाह—निरस्तेत्यादि । नन्वहमर्थे नष्टेऽपि तदानीं मुक्तिसुखानुभवायान्यः संविद्रूप आत्माऽस्तीति चेत् । अहं मम सुखायेदमारभ इति प्रवर्त्तमानः पुरुषः नाहं स्थास्यामीति जानन् नान्यसुखापादनाय प्रवर्त्तेत तत इत्याशयेनाह—मयि नष्टेऽपीत्यादि । स्वसम्बन्धितयेति । ज्ञप्तिः सत्ता वा न स्वतः सिद्ध्येत्, किन्तु सन्तं ज्ञातारं च प्रतिसम्बन्धिनमपेक्ष्यैव, अहमस्मि, अहं जानामीत्येव ह्यनुभवो वचनं वा, तत् यत्सम्बन्धेन सत्तालक्षणं ज्ञप्तिलक्षणं वा सिद्ध्यति तस्य नाशे ज्ञप्तिः सत्ता वा कथं तिष्ठेदिति भावः । तत्रोदाहरणमाह—छेत्तुरित्यादि । अयं भावः—सत्तायाः ज्ञप्तेर्वा छेदनादिवत्क्रियारूपतया कर्तृकर्मावलम्बेनैव स्वरूपसिद्ध्या तत्र कर्त्तुः कर्मणो वाऽपगमे कथं सत्ता ज्ञप्तिर्वा सिद्ध्येदिति । प्रत्यक्त्वादुपलम्भत इति । प्रत्यक्त्वात्–स्वस्मै प्रकाशमानत्वात्, उपलम्भतः–ज्ञाताहमित्युपलम्भात्, मम सुखं भावीति मोक्षेच्छया–मम निरतिशयसुखं भविष्यतीति मोक्षेच्छया, अहमन्नमहमन्नमित्यादिमुक्तवचसा

तिष्ठति। एकदेशस्थितो दीपः कृत्स्नं गेहं प्रकाशते" इत्यादिस्मृतेः। छेत्तुं शक्य-

---

मोक्षेच्छया मुक्तब्रह्ममुमुक्षुवेदवचसा सुप्तोऽहमित्युक्तितः। मां नाज्ञासिषमित्यपि स्ववपुराद्यज्ञानमात्राश्रयात् स्वापप्राच्यनिजक्रियास्मरणतोऽप्यात्माऽहमर्थः स्थिरः॥" इति।

ज्ञातृत्वोक्त्या कर्तृत्वमपि सिद्धम्। अत एव चेतनोऽहं करोमीति चैतन्यकर्तृत्वयोः सामानाधिकरण्येन प्रत्ययोऽप्युपपद्यते। यत्तु—"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतेरात्मनो न स्वाभाविकं कर्तृत्वम्, किन्तु जपाकुसुमस्थं लौहित्यं स्फटिक इवान्तःकरणस्थमात्मन्यध्यस्यते। अत एव—"स समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीवे"त्यकर्तुरपि बुद्धिसान्निध्यात्कर्तृत्वाध्यासः श्रूयते। स्वयमकर्त्ताऽप्ययमात्मा बुद्ध्या सह साम्यं विविच्यानुपलब्धिलक्षणं प्राप्यानुसञ्चरति लोकान्, वस्तुतो न ध्यायति न वा लेलायति, किन्तु बुद्धिधर्माध्यासाद्ध्यायतीव लेलायतीवेति हि तदाशयः। भगवानप्यात्मनः कर्तृत्वं प्रतिषेधति—"तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥" इति। तथा—"प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्त्ताऽहमिति मन्यते॥" इति। सूत्रकारोऽपि—"कर्त्ता शास्त्रार्थवत्त्वा"दिति जीवे कर्तृत्वमुक्त्वा, इदं च कर्तृत्वं न वास्तवं तस्य, किन्त्वध्यस्तमित्याह—"यथा च तक्षोभयथे"ति। अयमर्थः—यथा तक्षा विशिष्टेषु तक्षणादिव्यापारेषु वास्यादीन्यपेक्ष्यैव कर्त्ता भवति; स्वशरीरेण त्वकर्त्तैव। एवमात्माऽन्तःकरणयोगेनैव कर्त्ता भवति; स्वस्वरूपेण त्वकर्त्तैव।

---

वैदिकेन, हन्ताहमिमा इति ब्रह्मवचसा वैदिकेन, अहं मनुरभवमित्यादिमुमुक्षुवचसा वैदिकेन, सुप्तोऽहमिति सुप्तोत्थितवचनतः, मां नाज्ञासिषमिति सुप्तोत्थितवचनस्य वपुरादिमात्रावलम्बनत्वेन, अहं पूर्वेद्युरिदमपश्यमित्यादिस्वापप्राक्कालिकस्वीयक्रियास्मरणतश्चाहमर्थः स्थिर आत्मा सिद्ध इत्यर्थः।

ज्ञातृत्वोक्त्या कर्तृत्वमपि सिद्धमिति। कर्तृत्वस्य ज्ञातृधर्मत्वादिति भावः। अत एवेति। ज्ञातुरेव कर्तृत्वेनेत्यर्थः। सामानाधिकरण्येन प्रत्ययोऽप्युपपद्यत इति। ज्ञातृत्वकर्तृत्वयोरनात्मधर्मत्वं वदतां पक्षे निदर्शितप्रत्ययस्यानुपपत्तिर्व्यज्यते। यद्यप्यस्ति चेतनोऽहं करोमीति सामानाधिकरण्यप्रत्ययः, स चात्मनः कर्तृत्वे न प्रमाणं, नहि लौकिकप्रत्ययः श्रौतमर्थं बाधेत, परं बाध्येत तेन स्वयमिति प्रतिवदतां परेषां पक्षमनुवदति—यत्त्विति। आत्मेन्द्रियेति। आत्मा–देहः, अकर्तुरप्यस्य देहाद्युपाधियोगाद्भोक्तृत्वव्यपदेशः स्फटिकस्येव जपाकुसुमसान्निध्याद्रक्तत्वव्यपदेश इति मनीषिणः प्राहुरिति पराभिमत आशयः। ननु नेयं श्रुतिरकर्तृत्वमात्मन्यवगमयितुं प्रवृत्ता, किन्तु कर्त्तुरप्यस्य भोक्तृत्वं न स्वतः किन्तु भोगोपकरणभूतदेहादियोग एवेत्यवगमयितुमित्याशङ्कायां स्वाभिमतमर्थं श्रुत्यन्तरेण द्रढयन्नाह—अत एवेति। ध्यायतीव लेलायतीवेतीवशब्दप्रयोगात्कर्तृत्वमात्मन्यध्यस्तमिति सिद्धमिति भावः। श्रुतिं स्मृतितः स्वाभिमतार्थे द्रढयति—भगवानपीति। तत्रैवं सतीति। यच्चाधिष्ठानं देहः, यश्च कर्त्तोपाधिलक्षणो भोक्ता, यच्चक्षुरादि करणम्, या च प्राणापानादिचेष्टा, यच्चादित्यादिदैवतमिन्द्रियानुग्राहकं, तेषामेषां पञ्चानां समुदायस्य कर्मसु हेतुत्वे स्थिते, केवलमात्मानं–उपाध्यनुपहितं शुद्धमात्मानं यः कर्त्तारं मन्यते, स दुर्मतिर्न पश्यति तत्त्वमिति पराभिमततदाशयः। शब्दार्थनिरूपणे-

श्छेद्यः, न छेद्यः अच्छेद्यः, अच्छेद्य आदिर्येषाम् । भावप्रधानो निर्देशः । अच्छे-

एतदुक्तं भवति । अग्नेरिवौष्ण्यं न स्वाभाविकमात्मनः कर्तृत्वं, अनिर्मोक्षप्रसङ्गात् । किन्तु सन्निहितबुद्धिधर्माध्यासकृतम् । तस्माद्यथा तु तक्षा लोके वास्यादिहस्तः कर्त्ता दुःखी भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसम्पृक्त आत्मा स्वप्नजागरितावस्थयोः कर्त्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परंब्रह्म प्रविश्य विमुक्तकार्यकारणसङ्घातोऽकर्त्ता सुखी भवतीति ।

तन्न । "आत्मेन्द्रियमनोयुक्त"मिति श्रुत्या हि नान्तःकरणस्य कर्तृत्वमवगम्यते, न वा कर्तृत्वमात्मनः प्रतिषिध्यते, किन्तु जीवस्य भोक्तृत्वे मनःप्रभृतीनामुपकरणत्वमात्रं प्रतीयते । अन्यथेन्द्रियादीनामपि तथात्वं स्यात् । मनोयोगस्येव शरीरेन्द्रियादियोगस्याप्यविशेषश्रवणात् । "प्रकृतेः क्रियमाणानी"त्यनेन तु सांसारिकप्रवृत्तिष्वस्य विविधं कर्तृत्वं सत्त्वादिगुणसङ्गकृतमित्येतावदुच्यते । स्पष्टं चैतत्तत्रैव—"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु" इति । तत्रैवात्मनः कर्तृत्वं शब्दतः सिद्ध्यति, "अधिष्ठानं तथा कर्त्ता" इत्यात्मनः कर्तृशब्देन निर्देशात् । "तत्रैवं सति कर्त्तारमात्मानं केवलं तु यः। पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः॥" इत्यनेन च कर्तृशक्तिमतोऽप्यात्मनोऽधिष्ठानाद्युपकरणानुगुण्येन शरीरवाङ्मनोभिर्न्याय्यं विपरीतं वा कर्म प्रारभमाणस्य तत्र तत्र स्वातन्त्र्येण कर्तृत्वं यः पश्यति स तु दुर्मतिरित्युच्यते, न तु कर्तृत्वं सुतरां प्रतिषिध्यते, केवलपदस्य वैयर्थ्यापत्तेः, "शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः" इत्यत्र प्रारभत इति निर्देशस्यास्वारस्यप्रसङ्गाच्च । "स समानः सन्नुभौ लोकावनुसञ्चरती" त्यतश्च न बुद्धिसान्निध्याद्बुद्धिधर्माध्यासो बोध्यते, बोधकाभावात् । समान इत्यनेन तु मानसाहित्यमुच्यते, मानोऽभिमानः, देहात्माभिमान इत्येतत् । अन्तर्ज्योतीरूपोऽयमात्मा देहात्माभिमानेनेमाँल्लोकाननुसञ्चरतीत्युक्तं भवति । "ध्यायतीव लेलायतीवे"त्यत्र इवशब्दश्चाल्पतामवगमयति । अयं भावः—ध्यायतीव—स्वहितं चिन्तयन्नयं न साकल्येन चिन्तयितुं शक्नोति किन्तु चिन्तयतीव, लेलायतीव—स्वहितं चरन्नयं न साकल्येनाचरितुं शक्नोति किन्तु चरतीवेति । यद्वा—"तस्मादेवं विद्वान् वीवनृत्येत्प्रचले"दित्यत्र यथा विनृत्तत्वप्रचलत्वप्रयोजकोन्मादाभावमात्रेण विनृत्तत्वप्रचलत्वयोगमभिप्रेत्येवशब्दप्रयोगः ।

मात्रप्यन्भावार्थमाह—एतदुक्तं भवतीति । प्रतिज्ञातमुपसंहरति—तस्मादिति ।

उपकरणत्वमात्रं प्रतीयत इति । मनस एव कर्तृत्वमात्मन्यध्यस्यत इति तु नेति मात्रशब्दाशयः । अन्यथेति । कर्तृत्वे चेन्मनस्त्ववगम्यमान इत्यर्थः । तथात्वं—कर्तृत्वम् । अविशेषश्रवणादिति । "आत्मेन्द्रियमनोयुक्त"मिति द्वन्द्वेन निर्देशादिति भावः । विविधमिति । सुकृतदुष्कृतात्मकविपमकर्मकर्तृत्वलक्षणमिति भावः । तत्रैव—भगवद्वचन एवेत्यर्थः । नन्वनन्यथासिद्धं "ध्यायतीव लेलायतीवे"ति वचनमात्मनोऽकर्तृत्वे प्रमाणमस्तीति तदनुसारेणैवान्येषां वचनानामर्थो नेय इत्यत्राह—समानः सन्निति । समान इत्यनेन त्विति तुशब्दात्पराभिमतार्थो व्यावर्त्यते । मानसाहित्यमुच्यत इति । अयमेवार्थः सरलगत्या बोध्यते । सदृशपरत्वे समानशब्दस्य विवेकाग्रहलक्षणं समानभावं प्राप्त इत्यर्थाश्रयणं हि क्लिष्टगतिकम् । इवशब्दश्चाल्पतामवगमयतीति । केयमल्पता ध्यानकर्तृत्वे ? तत्र भावमाह—अयं भाव इति । उन्मादाभावमात्रेणेति । अयं भावः—

घत्वादीनीत्यर्थः। तानि लक्षणं–स्वभावो यस्य। आदिशब्दाददाह्यत्वादिग्रहणम्।

---

एवमिह सत्यसङ्कल्पत्वाप्रतिहतशक्तित्वयोः सङ्कल्पप्रवृत्तिप्रयोजकयोर्भगवति सतोर्जीवेऽसम्भवाद्ध्यायतीव लेलायतीवेति इवशब्दप्रयोगः।

सूत्रकारस्यापि कर्तृत्वनिषेधे न हार्दम्—"कर्त्ता शास्त्रार्थवत्त्वा"दिति कर्तृत्वस्यैव समर्थनात्। "यथा च तक्षोभयथे"ति सूत्रेण तु वागादिकरणसम्पन्नोऽप्यात्मा यदेच्छति तदा करोति, यदा नेच्छति तदा न करोति, यथा तक्षा वास्यादिकरणसन्निधानेऽपीच्छायां करोति, अन्यथा च न। तस्मात्कर्तृत्वस्य न सर्वदानुवृत्तिप्रसङ्ग इत्युच्यते, अन्यथा कर्तृत्वसमर्थनं विरुध्येत। ननु–कर्तृत्वं न स्वाभाविकं समर्थितम्, किन्त्वाविद्यकमिति चेत्। अनन्तराधिकरणेन पौनरुक्त्यं स्यात्। कर्तृत्वाकर्तृत्वयोरौपाधिकत्वस्वाभाविकत्वसमर्थनपराधिकरणान्तरतया खलु "यथा च तक्षोभयथे"ति सूत्रं मन्यते भवान्। ननु–सामान्यतः कर्तृत्वं समर्थ्यते "कर्त्ता शास्त्रार्थवत्त्वादि"ति। तस्यौपाधिकत्वेनावास्तवत्वं समर्थ्यते "यथा च तक्षोभयथे"ति। मैवम्। सामान्यतः कर्तृत्वे संशयानुदयात्तत्समर्थनमनारम्भणीयं नाम, अहमिदं करोमीति प्रतीतेः सामान्यतः कर्तृत्वमात्मनि सर्व एव हि जानन्ति। किञ्च–अवास्तवस्य किमिति समर्थनम्, अपितु तन्निरस्याकर्तृत्वमेव तु समर्थनीयम्। तत्रैव तात्पर्यमिति चेदधिकरणान्तरता कथं?, पूर्वपक्षसिद्धान्तरूपतया एकाधिकरणेन खलु भाव्यम्। न च साङ्ख्यसमयसिद्धप्रकृतिकर्तृत्वनिरसार्थोऽयमारम्भ इति वाच्यम्। प्रकृतिगतस्य वाऽन्तःकरणगतस्य वा कर्तृत्वस्यात्मन्यध्यस्तत्ववर्णनांशे युवयोरुभयोरविशेषात्। साङ्ख्याभिमतं प्रकृतेः कर्तृत्वं निरस्य बुद्ध्युपहितस्यात्मनस्तत्समर्थ्यत इति चेत्। तच्च किं परमात्मनः? उत जीवानाम्?।

---

वीव नृत्येदिति वचनं हि–एवं विद्वान् वीव नृत्येत्–विनृत्येदिव, उन्मत्त इव विनृत्येत्, इव प्रचलेत्–उन्मत्त इव प्रचलेत्, इत्येवमर्थमवगमयति। अयं चार्थ इवशब्दस्य यथाश्रुतमन्वय इष्यमाणे न लभ्येत, किन्तु नर्तनप्रचलनप्रयोजकोन्मादगुणयोगिन आक्षेपलब्धस्य इवशब्दार्थप्रतिसम्बन्धितया ग्रहणेन लभ्यते, एवमेवेहापीति। सङ्कल्पप्रवृत्तिप्रयोजकयोरिति। प्रायः सङ्कल्पमात्मनोऽवन्ध्यं जानन् हि सङ्कल्पेत पुरुषः, तथा शक्त्यप्रतिरोधमात्मनो जानन्नेव प्रवर्त्तेत, तत्सत्यसङ्कल्पत्वं, सङ्कल्पे अप्रतिहतशक्तित्वं प्रवृत्तौ प्रयोजकम्। इवशब्दप्रयोग इति। सत्यसङ्कल्प इव ध्यायति, अप्रतिहतशक्तिरिव प्रवर्त्तत इत्यस्याभिमानः सूचितो भवति।

"यथाच तक्षोभयथे"त्यस्य सूत्रस्य परोक्तमर्थं निरस्यन्नात्मनः कर्तृत्वे सूत्रकाराभिमतिं प्रथमतो दर्शयति—सूत्रकारस्यापीति। कर्त्ता शास्त्रार्थवत्त्वात्—आत्मैव कर्त्ता न गुणाः, कुतः? शास्त्राणामर्थवत्त्वात्–साफल्यात्। अधिकारिणमधिकृत्य हि शास्त्रं प्रवर्त्तते इदं कुरु इदं मा कुरु इति। जडं प्रति च न तदुपदेशसम्भवः, पुरुषं प्रति चेत्तेन कर्तृशक्तिमता भाव्यम्। तदेवं शास्त्राणां साफल्यं ह्यात्मनः कर्तृत्व एवोपपद्यत इति भावः। अस्य सूत्रस्य पराभिमतं भावमाशङ्क्य निरस्यति—नन्विति। सामान्यत इति। वास्तवत्वौपाधिकत्वविमर्शं विनेत्यर्थः। अकर्तृत्वमेव तु समर्थनीयमिति। तथा च अकर्त्ता इत्येव सूत्रे कर्तव्ये उभयथेति सूत्रग्रथनमसङ्गतं स्यादिति भावः। तच्च किं परमात्मन उत जीवानामिति। परैरुपाधिभेदेन जीवपरमात्मभेदस्याभ्युपगतत्वादयं विकल्पः।

नाद्यः । बुद्धिसृष्टौ परमात्मनोऽबुद्ध्युपहितस्यैव कर्तृत्वात्, अन्यथा बुद्ध्युपधानात्कर्तृत्वं कर्तृत्वाद्बुद्ध्युपधानमित्यन्योन्याश्रयप्रसङ्गात् । बुद्धेरसृज्यत्वं तु न, महतो लयश्रुतेः । बुद्धिसृष्टौ परमात्मनः कर्तृत्वोपपादनाय बुद्ध्यन्तराङ्गीकारे सृष्टेः प्रागेकत्वावधारणविरोधः । न द्वितीयः । बुद्ध्युपधानतः प्राक् जीवपरमात्मविभागस्यैव भवन्मतेऽसम्भवात् । ब्रह्मण एव जीवभावः कर्तृत्वं चेत्युभयं बुद्ध्युपधाननिबन्धनमिति चेत् । उक्तो दोपस्तदवस्थः । किञ्च–कर्तृत्वस्यौपाधिकत्वं कुतोऽभिमन्यते भवता, मुक्तावननुवृत्तेरिति चेन्न । श्रूयते हि मुक्तावपि कर्तृत्वम्—"जक्षन्क्रीडन् रममाणः" "स एकधा भवति द्विधा भवति त्रिधा भवती"ति । यत्तु कर्तृत्वस्य दुःखरूपत्वात्तस्य स्वाभाविकत्वे मुक्तावपि दुःखान्वयप्रसङ्गादात्मनि तस्याध्यस्तत्वमेव समुचितमिति । तन्न । नहि कर्तृत्वसामान्यं दुःखरूपं दृश्यते, स्रक्चन्दनाद्युपभोगे कर्तृत्वस्य सुखरूपत्वात् । ननु–तत्रापि यथाकथञ्चिद्दुःखानुषङ्गो दृश्यत इति चेत् । अकर्तृत्वेऽपि तथैव । निष्पन्दता हि लोके दुःखहेतुर्दृश्यते । शास्त्रीयेष्वप्रवृत्तिर्नरकायेत्यपि शास्त्रदृष्टम् । तस्माज्ज्ञानस्वभावस्याप्यात्मनो यथा प्रतिकूलविषयावलम्बन एव दुःखानुषङ्गो नानुकूलविषयावलम्बने, एवमेव कर्तृत्वस्वभावस्याप्यात्मनः प्रतिकूलेष्वेव प्रवृत्तिर्दुःखाय नानुकूलेष्विति कर्तृत्वस्यानध्यस्तत्वे न काचित्क्षतिः ।

सिद्धमित्थं च कर्तृत्वमात्मनः सूत्रकृन्मतम् । प्रसङ्गादस्य कर्तृत्वे विशेषोऽथ विचार्यते । इदं च कर्तृत्वमात्मनः परमात्मायत्तमाह सूत्रकारः—"परात्तु तच्छ्रुते"रिति । श्रुतिश्च—"अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा" "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति" इति । नन्वस्य कर्तृत्वं परमात्मायत्तं चेद्विधिनिषेधवैयर्थ्यम् । पूर्वपूर्ववासनानुगुण्येन प्रवृत्तमेनं प्रवर्त्तयतीति न वैयर्थ्यम् । एतदेवाह सूत्रकारः—"कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः" इति । अत्रेदं बोध्यम्—सर्वेषामेव

अन्यथेति । बुद्ध्युपहितस्यैव बुद्धिसृष्टिकर्तृत्व इत्यर्थः । बुद्ध्युपधानात्कर्तृत्वमिति । बुद्धिसृष्टौ कर्तृत्वमित्यर्थः । कर्तृत्वादिति । बुद्धिसृष्टौ कर्तृत्वादित्यर्थः । अन्योन्याश्रयप्रसङ्गादिति । बुद्ध्युपधाने बुद्धिस्रष्टृत्वं, बुद्धिस्रष्टृत्वे बुद्ध्युपधानमित्यन्योन्याश्रयप्रसङ्ग इत्यर्थः । बुद्धेः सृज्यत्वमेव नेत्याशङ्क्याह—बुद्धेरसृज्यत्वं तु नेति । महतो लयश्रुतेरिति । लयश्रुतिश्च–"महानव्यक्ते लीयत" इति । सति लये सृज्यत्वं स्यादेवेत्यर्थः । अन्योन्याश्रयपरिहारमाशङ्क्य निराकुरुते—बुद्धिसृष्टावित्यादिना । बुद्ध्यन्तरेति । सृज्यबुद्ध्यतिरिक्तबुद्धीत्यर्थः । भवन्मत इति । ब्रह्मव्यतिरिक्तस्याऽऽविद्यकत्वं वदतो भवतो मत इत्यर्थः । उक्तो दोपस्तदवस्थ इति । अन्योन्याश्रयदोपस्तदवस्थ इत्यर्थः । नहि कर्तृत्वसामान्यं दुःखरूपं दृश्यत इति । यत्र यत्र कर्तृत्वं तत्र तत्र दुःखित्वमिति न नियम इत्यर्थः । नियमे व्यभिचारमाह—स्रक्चन्दनादीति । यथाकथञ्चिद्दुःखानुषङ्गो दृश्यत इति । तत्तद्द्रव्यार्जनादिक्लेशेन क्षयशङ्कया वेत्यर्थः । तथैवेति । यथाकथञ्चिद्दुःखानुषङ्गो दृश्यत इत्यर्थः । तस्मादिति । कर्तृत्वस्य दुःखनियतत्वाभावादित्यर्थः । कचित्कर्तुर्दुःखान्वये निमित्तं त्वन्यदेवेति ज्ञापयन्नाह—ज्ञानस्वभावस्येत्यादिना ।

विधिनिषेधवैयर्थ्यमिति । परतन्त्रे तौ हि न सम्भवत इति भावः । कृतप्रयत्नापेक्षस्तु

१. उत्पाद्यसिद्धावुत्पादकापेक्षा, उत्पादकसिद्धावुत्पाद्यापेक्षेति भावः ।

"नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः। न चैनं क्लेदयन्त्यापो न शोष-

जीवानां चिच्छक्तिप्रवृत्तिशक्त्योः करणकलेवररूपपरिकरलाभस्य च परमात्मायत्तत्वात्प्रवृत्तिमात्रे परमात्मनो हेतुत्वमस्त्येव। कालादृष्टादिवत्कर्तृत्वमात्रे साधारणकारणस्याप्यस्य "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा"-"अध्यक्षश्चानुमन्ता च" "एष एव साधु कर्म कारयती"-त्यादिश्रुतिस्वारस्यादसाधारणकारणत्वमपि सिद्ध्यति। इदं च द्वितीयादिप्रवृत्तिष्वेव। प्रथमप्रवृत्तावपि तदभ्युपगमे सर्वथा परप्रेरणयैव प्रवृत्ते जीवे विधिनिषेधावकाशो न स्यात्। तस्मादादौ जीवो गुणत्रयतारतम्यवासनाविशेषोद्बोधादिभिरसाधारणकारणैः क्वचिदिच्छति यतते च। तस्यां प्राथमिक्यामिच्छायां प्रवृत्तौ च परमात्मा केवलमुदास्ते। तथापि तत्र तस्य साधारणकारणत्वमनपायम्। न च पूर्वपूर्ववासनया प्रेर्यमाणस्यास्य वातोदकप्रेरितस्य तृणस्येवास्वातन्त्र्यम्, शास्त्रीयप्रत्यवायादिज्ञानसामर्थ्यात्। तदेवम्—आदौ स्वतःप्रवृत्तिमस्यापेक्ष्यानुमन्यते च परमात्मा, ततो द्वितीयादिप्रवृत्तिः। तदिदमनुमतिदानं प्रथमप्रवृत्तिफलदानरूपम्। या च परमात्मन उन्निनीषाऽधोनिनीषा वा सा तु न सर्वत्र। किन्त्वत्यन्तप्रतिकूलेऽनुकूले च, तत्प्रवृत्तौ तु तस्य सङ्कल्पविशेषपूर्वकं प्रयोजकत्वम्। तदप्यत्यन्तानुकूल्यप्रातिकूल्यफलदानरूपमिति। इत्थमीश्वरस्य क्वचित्सत्तामात्रेण क्वचिदनुमतिदानेन क्वचित्प्रयोजकतया च प्रवर्त्तकत्वं सिद्धम्। विस्तरस्त्वन्यतोऽवगन्तव्यः।

विहितप्रतिषिद्धावैयर्थ्यादिभ्यः—जीवात्मना यथाकर्मवासनं प्रथमं कृतो यः प्रयत्नस्तदपेक्ष्य एवोत्तरोत्तरमेनं प्रवर्त्तयति, न तदनपेक्षः, विहितप्रतिषिद्धावैयर्थ्यादिभ्य एवमवगम्यते। अन्यथा पुरुषं प्रति विधिनिषेधयोर्वैयर्थ्यमापतेदिति। ननु प्रवृत्तमेनं प्रवर्त्तयतीति न सङ्गतं, अप्रवृत्तस्यैव हि प्रवर्त्तनं घटेत, पूर्वपूर्ववासनातः प्रथमतः प्रवृत्तं सैव वासना पश्चादपि प्रवर्त्तयेदेवेति कुतः परमात्मनः प्रवर्त्तकता, तत् प्रवृत्तिसामान्ये परमात्मनो न कारणत्वमित्याशङ्कायामाह—अत्रेदं बोध्यमित्यादिना। प्रवृत्तिमात्रे-प्रवृत्तिसामान्ये। हेतुत्वमस्त्येवेति। साधारणकारणत्वमस्त्येवेत्यर्थः। एवं प्रवृत्तिसामान्ये साधारणकारणत्वमुपपाद्य प्रवृत्तिविशेषेऽसाधारणकारणत्वमुपपादयति—कालेत्यादिना। श्रुतिस्वारस्यादिति। कालादृष्टादिवत्साधारणकारणत्वमात्रे "अन्तःप्रविष्टः शास्ता जनानाम्" "अध्यक्षश्चानुमन्ता च" "एष एव साधु कर्म कारयति" इति पदानां स्वारस्यं हीयेतेति भावः॥ इदं चासाधारणकारणत्वं प्रवृत्तिविशेष एवेत्येतत्सङ्गमयति—इदं चेति। विधिनिषेधावकाशो न स्यादिति। तथा चार्थापत्त्या सामान्यतः श्रूयमाणोऽप्यर्थो विशेषतः पर्यवस्यतीति भावः। शास्त्रीयप्रत्यवायादिज्ञानसामर्थ्यादिति। वातोदकप्रेरितस्य तृणस्येव नास्य सर्वथाऽस्वातन्त्र्यं, यदसौ चेतनः, सति शास्त्रे सति च चैतन्ये वासनातो जायमानापि प्राथमिकी प्रवृत्तिः प्रत्यवायायैव स्यादिति भावः। अनुमन्यते चेति। द्वितीयादिप्रवृत्तावनुमन्तृतारूपं प्रवर्त्तकत्वमिति भावः। नन्वनुमतिदानमप्यसङ्गस्यास्यानुचितमित्यत आह—तदिदमिति। उन्निनीषाऽधोनिनीषयोर्विषयविभेदमाह—उन्निनीषेत्यादिना। किन्त्वत्यन्तेति। परमात्मन इत्यनुषज्यते। विद्वेषलक्षणं प्रातिकूल्यम्, अनुरागलक्षणमानुकूल्यम्; आसुरवृत्तयो दैववृत्तयश्चेति यावत्। क्वचित्सत्तामात्रेणेति। इदं च "य आत्मानमन्तरो यमयती"ति श्रुतिसिद्धम्। क्वचिदनुमतिदानेनेति। इदं च "अनुमन्ते"त्यादिवचनसिद्धम्। क्वचित्प्रयोजकतयेति। इदं च "एष एव साधु कर्म कारयती"ति श्रुतिसिद्धम्।

यति मारुतः ॥ अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" इति श्रीभगवद्गी-

स चायमणुरप्यापादतलमस्तकमधितिष्ठत्यात्मनो वपुर्ज्ञानप्रभयेत्याह—व्याप्येति । अखिलां तनुं, सर्वतः शरीर इत्येतत् । यद्वा—योगबलेन यत्र बहुशरीरपरिग्रहस्तत्राप्येकस्मिन्नेव कर्मभिरारब्धे वपुषि स्थितोऽयमखिलां तनुं योगबलनिष्पादितामपि ज्ञानप्रभया व्याप्नोतीत्याह—व्याप्येति । अखिलां, कर्मभिर्योगेन चारब्धामखिलामित्यर्थः । एतेन—एकदैवानेकशरीराधिष्ठानस्य सौभर्यादिषु दृष्टस्योपपत्तये विभुत्वमात्मनोऽभ्युपगन्तव्यमित्यपास्तम् ।

अविनाशी चायमात्मेत्याह—ज्ञेयोऽच्छेद्यादीति । भावप्रधानोऽयं निर्देशः । अच्छेद्यतादि लक्षणं-स्वभावो यस्य सः । यत् दृश्यते छेद्यतादि तद्भौतिक एव शरीरे न त्वात्मनि, तन्न तस्य विनाशित्वमिति भावः । तथाच वचनम्—"अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" इति । एतेनेन्द्रियाद्वैलक्षण्यं व्यञ्जितम् । जीवत्येव चक्षुरादीनामुपघातान्न तेषामात्मत्वम् । न च तदानीमात्मनो नाश इष्येत । तथा सति अनुभवितुरात्मनो नाशेन स्मरणानुपपत्तेः । किञ्च—चक्षुरादीनां प्रतिनियतविषयत्वेन "योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामी"ति प्रत्यभिसन्धानं न घटेत । अपि च चक्षुरादीनां पञ्चानां स्वतन्त्राणामेकमेव वपुरपेक्ष्यात्मतयाऽवस्थितानां स्यादेव मिथो विवादः कदाचित् । तथा चानेकग्रामण्यधिष्ठितैकग्राम इवाभिप्रायभेदप्रसङ्गेन तदा किमपि कार्यं न निर्वर्तेत । परस्पराविवादनियमस्तु दुर्वचः । उपरतव्यापारेषु बाह्येन्द्रियेषु स्वाप्नपदार्थदर्शनानुपपत्तेश्च न चक्षुरादिकमात्मा । न च मनसस्तथात्वं "मनसा ह्येव पश्यती"ति कर्तुरात्मनः करणतयैव मनसः श्रवणात् । मनस आहङ्कारिकत्वेनोत्पादविनाशशालित्वाच्च । इत्थं च देहेन्द्रियादिभ्योऽन्यो विज्ञानात्मा ज्ञाताऽयं जीवो नित्य इति सिद्धम् ।

अखिलां तनुमिति मूले सर्वेषु शरीरेष्वेक एवास्तेति भ्रमं व्यावर्त्तयति—सर्वतः शरीर इत्येतदिति । शरीरे सर्वदेशावच्छेदेनेत्यर्थः । अखिलशब्दस्य समग्रे, तनुशब्दस्य वा तन्ववयवेऽङ्गे लक्षणयाऽयमर्थः । लक्षणाक्लेशादाह—यद्वेति । कर्मभिर्योगेन चारब्धामखिलामित्यर्थ इति । शरीरैकदेशे स्थितस्याखिलावयवावच्छेदेन व्याप्तिः कैमुतिकन्यायसिद्धेति भावः । यद्वेति पक्षान्तराश्रयणेनाधिकं लाभमाह—एतेनेति ।

अच्छेद्यपदस्य धर्मिस्वरूपपरस्यादिपदेनानन्वयादाह—भावप्रधानोऽयं निर्देश इति । अनुभवितुरात्मनो नाशेन स्मरणानुपपत्तेरिति । अन्येनानुभूतार्थस्यान्यस्य स्मरणासम्भवादिति भावः । प्रत्यभिसन्धानं न घटेतेति । द्रष्टुः स्प्रष्टुश्च त्वन्मते विभेदादिति भावः । परस्पराविवादनियमस्तु दुर्वच इति । भिन्नभिन्नार्थानां चक्षुरादीनां शरीराद्यधिष्ठाने मिथो नियमेनाविवादे प्रमाणाभावादिति भावः । तुष्यतु दुर्जन इति न्यायेन दूषणान्तरमाह—उपरतेति । मनसस्तथात्वं श्रुतितः प्रतिक्षिपति—नच मनसस्तथात्वमिति । उत्पादविनाशशालित्वाच्चेति । कृतहानाकृताभ्यागमप्रसङ्गादिति भावः ।

१. सर्गारम्भे कस्यचिन्निहीनयोनिसम्बन्धे कस्यचिदुत्कृष्टयोनिसम्बन्धे प्रयोजकानुपपत्त्या निर्निमित्तं तल्लाभापत्त्या कृतहानाकृताभ्यागमप्रसङ्ग इति भावः ।

ये चानुक्षणं विनश्यत्येव विज्ञान आत्मत्वमभ्युपगच्छन्ति तन्मते स्मृतिमात्रं दुरुपपादम्। उपायानुष्ठानतत्फलानुभवादयोऽपि दुरुपपादाः। विज्ञानस्यान्यान्यत्वेऽपि सन्तानैक्यान्न काप्यनुपपत्तिः "यस्मिन्नेव हि सन्ताने आहिता कर्मवासना। फलं तत्रैव बध्नाति कार्पासे रक्तता यथा" इति तु पेशलम्। क्षणभङ्गवादिनो मते नष्टं सर्वं क्षणं प्रति जायमानस्य सर्वस्यैव क्षणस्योत्तरत्वाविशेषेण सन्तानैक्यस्य दुरुपपादत्वात्। देशस्यापि क्षणिकत्वेन न तेनाप्यैक्यसिद्धिः। दृष्टान्तोऽपि विषमः। तत्र दोहलद्रव्यावयवाणां सूक्ष्मीभूय सतामेव कुसुमादिसमयेऽप्यनुवृत्तेः। अत्रैतदुक्तं प्राचीनैः—"कृतप्रणाशाकृतकर्मभोगभवप्रमोक्षस्मृतिभङ्गदोषान्। उपेक्ष्य साक्षात्क्षणभङ्गमिच्छन्नहो!! महासाहसिकः परोऽसौ॥" इति। "बाह्याबाह्यविपक्षेषु न्यायागमविरोधतः। अनादृत्यात्मजिज्ञासुस्तद्बाद्यादिभिरादृतान्॥ परिग्रहातिशयतस्त्र्यन्ता-

अनित्यात्मनिरासप्रसङ्गेन क्षणिकविज्ञानात्मवादनिरासायारभते—ये चेत्यादिना। विनश्यत्येवेति। एवकारादात्मनित्यत्वव्यवच्छेदः। स्मृतिमात्रं दुरुपपादमिति। स्मृतिमात्रं–स्मृतिसामान्यम्। क्षणिकस्य विज्ञानस्याऽऽत्मत्वेऽनुभवितुः प्रतिक्षणं नाशात्, अननुभवितुश्च स्मरणासम्भवादिति भावः। उपायानुष्ठानतत्फलानुभवादयोऽपि दुरुपपादा इति। यदि विनष्टेऽपि विज्ञाने उपायस्यानुष्ठातरि ततः पश्चात्तनेन विज्ञानेन तत्फलमनुभूयेत, देवदत्तेनानुष्ठितस्य कर्मणः फलं ततोऽन्येन कुतो नानुभूयेत, अन्यत्वाविशेषात्। यद्यन्य इत्येव न तेनानुभूयेत, उपायमनुतिष्ठतो विज्ञानक्षणस्य फलमनुभवितुर्विज्ञानक्षणस्य च मिथो विभेदादुपायानुष्ठानफलानुभवादयो दुरुपपादा इति भावः। सन्तानैक्यान्न काऽप्यनुपपत्तिरिति। न विज्ञानमात्रमात्मा, अपितु विज्ञानसन्तानमेव, सन्तानं च पूर्वपूर्वविज्ञानजनितोत्तरोत्तरविज्ञानसमुदाय एव, तस्य चैकत्वात्स्थिरत्वान्न काऽप्यनुपपत्तिरिति भावः। कार्पासे रक्तता यथेति। अयं भावः—दोहलद्रव्यान्वयेन यथा कार्पासे रक्तिमान्वयस्तथा यस्मिन्विज्ञानसन्ताने कर्मवासनान्वयस्तदन्वयगतविज्ञान एव वस्तुगत्या पूर्वपूर्वविज्ञानतो भिन्नेऽपि फलान्वयः, अन्यत्र च न तदन्वयः, तथाच यज्ञदत्त इति शब्देनोपलक्ष्यमाणस्य सन्तानस्यैकत्वात्कर्मानुष्ठानफलानुभवयोरुपपत्तिः, देवदत्तशब्देनोपलक्ष्यमाणस्तु न तत्सन्तानसम्बद्ध इति यज्ञदत्तेनानुष्ठितस्य कर्मणः फलानुभवो न तस्येति नानुपपत्तिरिति भावः। सन्तानैक्यस्य दुरुपपादत्वादिति। अन्यूनानतिरिक्तस्येति शेषः। अयं भावः—कर्मफलान्वयव्यवस्थाऽऽत्मभेदव्यवस्थायत्ता, आत्मभेदव्यवस्था च सन्तानविशेषव्यवस्थायत्ता, स च विशेषः कार्यकारणभावविशेषव्यवस्थया, कार्यकारणभावे च भवतो न व्यवस्था, उत्तरक्षणं प्रति पूर्वक्षणस्य हेतुत्वं हि भवदभिमतं, यत्किञ्चिद्विज्ञानापेक्षया सर्वेषामेव समनन्तरभाविविज्ञानानामुत्तरत्वमविशिष्टमिति देवदत्तशब्देनोपलक्ष्यमाणं विज्ञानमपेक्ष्य यज्ञदत्तादिशब्दैरुपलक्ष्यमाणानां विज्ञानानामपि सन्तानत्वमापतेत्, तथा चोपायानुष्ठानतत्फलानुभवादयो दुरुपपादा इति। न केवलं सन्तानैक्यानुपपत्त्या स्मृत्याद्यनुपपत्तिः, किन्तु वासनैक्यानुपपत्त्या च। तथाहि—यद्येका वासना, तदा वासनासन्तानमनुवर्त्तेत इति स्यात्, नच तथा, सर्वं क्षणिकमिति वदतो वासनाऽप्यन्यान्यैवेत्याशयेनाह—दृष्टान्तोऽपि विषम इति। कृतप्रणाशेति। कृतप्रणाशाकृतकर्मभोगौ, भवमोक्षस्मृतीनां भङ्गः–अनुपपत्तिः, त एव दोषाः। बाह्येति। बाह्यो विपक्षश्चार्वाकादिः, अबाह्यो विपक्षः कापिलादिः। परिग्रहातिशयः—पराशरपारा-

तोक्तेः । एवंविधो जीवो ज्ञेय इति ॥ १०५ ॥

शयसङ्गतेः । स्मृतिन्यायानुकूल्याच्च सेव्यतामिह यन्मतम् ॥"

इह ज्ञाताऽणुरित्याभ्यां ज्ञातृत्वे सत्यणुत्वं जीवस्य लक्षणमुक्तं भवति । परमात्मन्यतिव्याप्तिवारणायाणुत्वम् । हृत्स्थोऽणुरित्यतः प्रतिशरीरं जीवभेदः सूच्यते । एतेन–जीवानामानन्त्यं मूले न निरूपितमिति शङ्का परास्ता । स्वरूपनिरूपणमात्रे प्रवृत्तेः ।

यत्तु—प्रतिशरीरं नात्मभेदः, प्रमाणाभावात् । नहि प्रत्यक्षेण तत्सिद्धिः, चक्षुरादीनां तत्रासामर्थ्यात् । स्वस्य मानसापरोक्षगोचरत्वेपि परस्यातथात्वेन ततो भेदप्रत्यक्षासम्भवात् । नाप्यनुमानेन, लिङ्गाभावात् । न च पण्डितत्वमूर्खत्वयोः सहानवस्थानलक्षणविरोधो लिङ्गम्, तस्य दुर्निरूपत्वात् । तयोः सहानवस्थानलक्षणविरोधस्याधिकरणभेदनिबन्धनत्वात्, अधिकरणस्वरूपभेदस्य च विरुद्धतत्तद्धर्मयोगनिबन्धनत्वादन्योन्याश्रयणात् । न चैवं सति सितासितादिषु सर्वत्र विरोधभङ्गप्रसङ्गेन भेदसामान्यस्य विलयप्रसङ्ग इति वाच्यम् । अन्ततस्तस्यापीष्टत्वात् । संयोगवत्पाण्डित्यमौर्ख्ययोः प्रादेशिकत्वेनाविरोधाच्च । ज्ञानादेरपि प्रादेशिकमात्मनानात्ववादिनां केषाञ्चिदिष्टं नाम । एतेन–सुखदुःखादिप्रतिसन्धानतदभावाभ्यामात्मभेदसिद्धिरित्यपास्तम् । उपाधिभेदात्तदुपपत्तेः । नाप्यर्थापत्त्या तत्सिद्धिः, उपपाद्यस्याभावात् । न च बद्धमुक्तव्यवस्थोपपाद्या नाम । इदानीं तस्या एवाभावात्, इतः पूर्वं कस्याप्यमुक्तेः, ब्रह्मैकमेव ह्यविद्यया वेष्टितं बहुत्वेन बम्भ्रमीत्यद्यापि, मोक्ष्यते तु कदाचित् । शुको मुक्तो वामदेवो मुक्त इति तु स्वाप्नपुरुषमोक्षवन्मिथ्यैव । प्रतिबिम्बवदता-

शयोद्यासदर्शिनां परिग्रहातिशयः । स्मृतयः–गीताप्रभृतयः । न्यायाः–प्रदर्शिता उपपत्तयः ।

चक्षुरादीनां तत्रासामर्थ्यादिति । तत्र–आत्मनीत्यर्थः । आत्मन्यसमर्थं चक्षुस्तयोर्मिथो विभेदं कथं गृह्णीयादिति भावः । परस्यातथात्वेनेति । परेण मनसा परस्य ग्रहणासम्भवादिति बोध्यम् । ततो भेदप्रत्यक्षासम्भवादिति । स्वस्मिन्नन्यस्माद्भेदग्रहासम्भवादित्यर्थः । अभावप्रत्यक्षे प्रतियोग्यनुयोगिनोरुभयोर्योग्यत्वं तन्त्रमिति भावः । तस्य दुर्निरूपत्वादिति । सहानवस्थानलक्षणविरोधस्य दुर्निरूपत्वादित्यर्थः । दुर्निरूपतामेवोपपादयति—तयोरित्यादिना । तयोः–पण्डितत्वमूर्खत्वयोः । अधिकरणभेदनिबन्धनत्वादिति । यद्येकं स्यादधिकरणं, सिद्धं नाम सहावस्थानं, तत् अधिकरणस्वरूपभेद एव सहानवस्थानलक्षणविरोधे मूलमिति भावः । विरुद्धतत्तद्धर्मयोगनिबन्धनत्वादिति । पण्डितत्वमूर्खत्वरूपविरुद्धधर्मयोगनिबन्धनत्वादित्यर्थः । वस्तुतो यः पाण्डित्याधिकरणं यश्च मूर्खत्वाधिकरणं तयोः स्वरूपभेदः पाण्डित्यमूर्खत्वाभ्यामृते दुर्विज्ञेयः, तथा चाधिकरणभेदनिबन्धनो धर्मयोर्विरोधो धर्मयोर्विरोधनिबन्धनोऽधिकरणभेद इत्यन्योन्याश्रयणमिति भावः । तस्यापीष्टत्वादिति । भेदसामान्यं निरस्यतामस्माकमिष्टत्वादित्यर्थः । संयोगवदिति । वृक्षे संयोगतदभावयोरंशभेदेनेव पाण्डित्यतदभावयोरेकस्मिन्नात्मनि वृत्तिसम्भवादिति भावः । केषाञ्चिदिष्टं नामेति । यथा काणादेनात्मनो विभुत्वमभ्युपगच्छता ज्ञानस्य प्रादेशिकधर्मता स्वीकृता तथा पाण्डित्यमौर्ख्ययोः प्रादेशिकत्वमिष्टमिति भावः । उपपाद्यस्याभावादिति । यथा दिवाऽभुञ्जानत्वे सति पीनत्वेनोपपाद्येन रात्रिभोजनसिद्धिस्तथाऽऽत्मभेदेन चेदुपपाद्यं किञ्चिदिह स्यात्तदा तत्सिद्धिः स्यात्, तदेव नेत्याशयः ।

त्विकानां जीवानामविद्याभेदेन वा तदुपपत्तेः। नाप्यागमेन तत्सिद्धिः, आत्मैक्यस्यैव तेनावगतेः। तथाच श्रुतयः—"अथातो अहङ्कारादेश" इत्यारभ्य "अहमेवेदं सर्वम्" "आत्मैवेदं सर्वम्" "नेह नानाऽस्ति किञ्चन मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् केन कं विजानीयात्" इति। श्रूयते च विधूतोपाधेर्वामदेवादेरात्मैक्यानुसन्धानम्—"तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि" इति। स्मृतयश्च—"तस्यात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः॥ यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम!। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते॥ वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः। अभेदव्यापिनो वायोस्तथासौ परमात्मनः॥ सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः॥ मत्तः सर्वमहं सर्वं मयि सर्वं सनातने॥" इति। तथाच सिद्धमात्मैक्यम्। भवन्ति चात्र प्रयोगाः—विगीतानि शरीराणि मयैवात्मवन्ति शरीरत्वात्, सम्प्रतिपन्नमच्छरीरवत्। विमतं चेतनजातमहमेव चेतनत्वादहमिव। सर्वाणि सुखदुःखानि मयैव भुज्यन्ते सुखदुःखत्वात्, मत्सुखदुःखवत्। विमतानि शरीराणि देवदत्तात्मनाऽऽत्मवन्ति शरीरत्वात्, सम्प्रतिपन्नदेवदत्तशरीरवत्, इति।

तन्न। अनुमानतस्तत्सिद्धेः। लिङ्गं च तदेव वैधर्म्यं सुखित्वदुःखित्वपण्डितत्वमूर्खत्वादि। यदप्यन्योन्याश्रयणेन तत्र विरोधो दुर्निरूप इत्युक्तम्। तदयुक्तम्। तथासति विरोधमात्रस्योच्छेदप्रसङ्गात्। न चेष्टापत्तिः, अविवादप्रसङ्गात्। इदमसन्मततो विरुद्धमिति हि विवादे प्रवृत्तिः। अविरुद्धेऽपि यदि विवादस्तदा स्वसिद्धान्तेऽपि विवादप्रसङ्गः। किञ्च—विरोधं प्रतिषेधता भवता विरोधाविरोधयोर्विरोधोऽभ्युपगन्तव्यः। अनभ्युपगमे प्रतिषेधे प्रवृत्त्यनुपपत्तेः। विरोधाप्रतिषेधे विरोधस्तत्र तत्र सिद्धः। ननु–सर्वथा विरोधासिद्धिर्नोच्यते,

अहङ्कारादेशः–आत्मनोऽहङ्ग्रहेणोल्लेखने विशेषोपदेशः। अहमेवेदं सर्वमिति। इदमात्मैक्यावबोधकम्। नेह नानाऽस्ति—इह–आत्मतत्त्वे, नाना–भेदो नास्तीत्यर्थः। केन कं पश्येदिति। अनेन प्रतिक्षेपेणात्मभेदो व्यावर्त्यते। आत्मपरदेहेष्विति। स्वपरदेहेष्वेकमेव विज्ञानलक्षणमात्मतत्त्वं परमार्थभूतमित्यर्थः। तथासौ परमात्मन इति। एकस्यैव वायोरुपाधिभेदात् षड्जादिभेदवत्परमात्मन एकस्यैवोपाधिभेदाद्देवादिभेद इत्यर्थः। आत्मैक्यं श्रुतिभिः प्रसाध्य तर्कतः प्रसाधयति—भवन्ति चात्र प्रयोगा इति। विगीतानीति। वादिप्रतिवादिभ्यां मिथो विरुद्धं गीतानि, विप्रतिपत्तिविषयभूतानीति यावत्। सम्प्रतिपन्नेति। अनेन साध्यहेत्वोरिह साहचर्ये न विप्रतिपत्तिरिति ज्ञाप्यते। विमतानि–विप्रतिपत्तिविषयभूतानि।

परेण प्रदर्शितमात्मभेदे प्रमाणाभावं लिङ्गनिरूपणेन प्रतिक्षिपति—तन्नेति। तत्र–सुखित्वदुःखित्वयोः पण्डितत्वमूर्खत्वयोश्च। अविवादप्रसङ्गात्–विवादाभावप्रसङ्गात्। तत्र हेतुमाह—इदमित्यादिना। पक्षायमारम्भस्तव स न्यायोपहन्येतेत्याह—किञ्चेति। विरोधं प्रतिषेधतेति। सुखित्वदुःखित्वादेरिति शेषः। विरोधाविरोधयोरिति। सुखित्वदुःखित्वादेर्मिथो विरोधस्य मिथोऽविरोधस्य चेत्यर्थः। ननु सर्वथा वयं विरोधं न प्रतिक्षिपामः, किन्तु यस्त्वन्योन्याश्रयेण

किन्तु यत्र धर्मविरोधेन धर्मिभेदकल्पना तत्रैवान्योन्याश्रयेण धर्मयोर्विरोधासिद्धिरुच्यते । यत्र तु घटपटादौ प्रत्यक्षतः स्वरूपभेदोऽवगम्यते, तत्र स्वरूपभेदस्य प्रत्यक्षसिद्धत्वेन न धर्मविरोधायत्तता तस्येत्यन्योन्याश्रयणाभावाद्धर्मयोर्विरोधः सिध्यत्येव । मैवम् । सुखविकासादिकार्यवैलक्षण्येन प्रात्यक्षिकेण सुखादीनां विरोधसिद्धेरिह स्वरूपभेदस्य वैधर्म्यकल्प्यत्वेऽपि स्वरूपभेदकल्पकस्य धर्मविरोधस्याऽन्यतः सिद्धेरन्योन्याश्रयणस्याभावात् । यदपि तेषां प्रादेशिकत्वाश्रयणेनाविरोधवर्णनम् । तदप्यसारम् । प्रादेशिकत्वेऽपि तेषामन्यदेशावच्छेदेन स्मरणस्यावर्जनीयत्वात् । नहि यद्देशावच्छेदेनानुभवस्तद्देशावच्छेदेनैव स्मरणमिति नियमः । भवति चेत्थं प्रतिसन्धानं "प्राक्सव्यहस्तेन स्पृष्टमद्य दक्षिणहस्तेन स्पृशामी"ति । इह हि प्राक्तनस्पार्शनस्य सव्यहस्तावच्छेदेन समुत्पन्नस्य प्रतिसन्धानं दक्षिणहस्तावच्छेदेन भवति । तस्माच्चैत्रशरीरावच्छेदेनानुभूतस्य मैत्रशरीरावच्छेदेन प्रतिसन्धानप्रसङ्गो दुष्परिहरः ।

या चोपाधिव्यवस्थया व्यवस्था, साप्यविचारितरमणीयैव । शरीरमन्तःकरणं वेति विकल्पासहत्वादुपाधेः । तथाहि—शरीरं तु नोपाधिः, शरीरान्तरावच्छेदेनानुभूतस्य शरीरान्तरावच्छेदेन प्रतिसन्धानस्य सौभर्यादिषु दृष्टत्वात् । नाप्यन्तःकरणं, केषाञ्चित्कल्पान्तरानुभूतार्थस्मृतिदर्शनात् । नहि कल्पभेदेऽप्यन्तःकरणैक्यम्, पूर्वस्य नाशेनापरस्यैव सृष्टेः ।

यच्चोक्तं–शुकादिमोक्षः स्वप्नदृष्टपुरुषमोक्षवन्मिथ्येति । तदसत् । मोक्षमाचार्याणामपि मिथ्या जानन्नहि कश्चिदात्मनस्तमिच्छेदवबोधितोऽप्याचार्यतः । नाप्युपदिशेत् । ननु–आमोक्षाज्जीववच्छरीरमिदमित्यनिश्चयात् शङ्कया प्रवृत्तिरिति चेन्न । को वा मोक्षस्तव स्वप्नदृष्टपुरुषमोक्षतो विलक्षणः, यत्सम्भवाशङ्कया प्रवृत्तिर्यतनानाम्, मिथ्यात्वस्य सर्वत्रा-

दूष्यते तमेवेत्याशङ्कते—नन्विति । सुखदुःखयोर्विरोधेनान्यतःसिद्धेनात्मनां मिथो भेदोऽवर्जनीय इत्याह—मैवमित्यादिना । कार्यवैलक्षण्येनेति । कार्यवैलक्षण्यं हि कारणवैलक्षण्यनियतमिति भावः । प्रात्यक्षिकेणेति । कार्यवैलक्षण्यापलापो दुर्घट इति भावः । तेषां–सुखित्वदुःखित्वादीनाम् । प्रादेशिकत्वाश्रयणेन–संयोगवत्प्रादेशिकत्वाश्रयणेन । अन्यदेशावच्छेदेनेति । शरीरभेदलक्षणप्रदेशभेदेन सुखित्वदुःखित्वयोरविरोधोपपादनेऽपि, आत्मैक्यपक्षे शरीरान्तरावच्छेदेनानुभूतस्यार्थस्य शरीरान्तरावच्छेदेन स्मृतिप्रसङ्गलक्षणं दूषणमपरिहार्यमेव, अनुभवितुरेकत्वादिति भावः । नन्वनुभवस्मृत्योरवच्छेदकदेशैक्यनियमान्नेदं दूषणमित्यत्राह—नहीत्यादिना ।

या चोपाधिव्यवस्थया व्यवस्थेति । उपाधयः–अन्यान्यजीवभावे येऽन्यान्योपाधयः, तद्व्यवस्थया व्यवस्था–तन्नियमेन स्मरणनियमः । जीवभेदापादकयदुपाध्युपहितेऽनुभवस्तदुपाध्यवच्छेदेनैव स्मरणं नान्येनेति नियमान्नोक्तदोषावसरः, वामहस्तदक्षिणहस्तौ तु न जीवभेदप्रयोजकावुपाधी इति भावः । तथाविधोपाधिर्दुर्वच इत्याह—सापीत्यादिना ।

जीववच्छरीरमिदमित्यनिश्चयादिति । एकजीववादेनेदम्, मृषावादिनो हि द्विविधाः–एक-

१ अन्यत इति । एतेन नान्योन्याश्रयस्यावकाश इति व्यज्यते ।

विशेषात्। तत्र तत्र प्रतिभासमात्रस्यैवाभिमततया पश्चात्तनस्यापि मोक्षस्य तथात्वात्।

प्रतिबिम्बवदतात्त्विकानां जीवानामविद्याभेदेन बन्धमोक्षव्यवस्थावर्णनं त्वसम्भवदुक्तिकम्। अतात्त्विकेषु प्रतितरङ्गं प्रसक्तेषु चन्द्रप्रतिबिम्बेष्वेकतरङ्गोपरतौ हि प्रतिबिम्बस्य स्वरूपोच्छेद एव भवति। न खलु तदा प्रतिबिम्बे मुक्तव्यपदेशः। सति स्वरूपे खलु तथा व्यपदेशः। तस्मादविद्याप्रतिबिम्बभूतस्य जीवस्याविद्योपरतावुच्छेद एव न पुनर्मोक्षः।

यच्चोक्तं–श्रुतिस्मृतिशतेनात्मैक्यमवगम्यत इति। सत्यमात्मैक्यमवगम्यते। तच्च कीदृशमिति तु पर्यालोचनीयम्। न तावत्सामान्यतश्चेतनस्य व्यक्त्यैक्यम्, "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामा"निति श्रुत्यैव चेतनबहुत्वावगतेः। न चेदं बहुत्वं काल्पनिकम्। नहि काल्पनिकमर्थं श्रुतिराप्ततमा बोधयेत्। प्रतिषेधायेति चेत्। सतो भ्रान्तस्य प्रतिषेधः खलु हितस्योचितः, न तु प्रतिषेधाय भ्रमापादनम्। नहि देहविलक्षणमात्मस्वरूपं नित्यं प्रत्यक्षेण कश्चित्प्रतिपद्यते, न वा निखिलकामप्रापकमेकम्। तत् अविदितमप्यर्थं श्रुतिः प्रतिषेधाय ब्रवीतीत्येतच्छ्रुतिर्भ्रामयतीत्येवोक्तं स्यात्। तस्मात्परमात्मनः सजातीयद्वितीयराहित्यरूपमेव तत्। स हि स्वेतरसमस्तवस्तुप्रकारः, न तादृशः कश्चिदन्यः, सर्वस्य चिदचित्प्रपञ्चस्य तं प्रति शरीरतया प्रकारत्वात्, श्रूयते

जीववादिनोऽनेकजीववादिनश्चेति। तव–ब्रह्मव्यतिरिक्तमखिलं मिथ्येति वदतस्तव। स्वप्नदृष्टपुरुषमोक्षतः–स्वप्नदृष्टो यः पुरुषमोक्षस्ततः। सर्वत्र–ब्रह्मव्यतिरिक्ते सर्वत्र।

अनेकजीववादाश्रयणेन बन्धमोक्षव्यवस्थावर्णनं प्रतिक्षिपति—प्रतिबिम्बवदिति। जीवानामविद्याभेदेनेति। यथैकोऽपि चन्द्रः प्रतितरङ्गं प्रतिफलन् बहुधाऽवभासते, तथा ब्रह्मैकमप्यविद्यातरङ्गभेदेनानेकवदवभासत इति तत्प्रतिबिम्बभूता अतात्त्विका जीवा बहवः, तेषु तत्तदुपाधिभूततत्तदविद्योपरतौ तस्य तस्य मोक्ष इति बन्धमोक्षव्यवस्थेति भावः। अविद्याभेदकल्पनेनापि न निस्तारः, अन्ततः प्रतिबिम्बभावस्यैव जीवेष्वभ्युपगमान्मोक्षस्यैव तत्रासम्भवादित्याह—अतात्त्विकेष्वित्यादिना।

कीदृशमिति। किं सद्ब्रह्मरूपं? उत सजातीयद्वितीयराहित्यरूपं? कीदृशमात्मस्वरूपं प्रस्तुतं, यस्मिन् सजातीयद्वितीयराहित्यलक्षणमेकत्वं बोध्येत, साजात्यं वा केन प्रकारेण विवक्षितमित्याशयः। तत्र सद्ब्रह्मरूपमेकत्वमप्रयोजकमिति तं पक्षमनुद्भाव्य पक्षान्तरे वक्तव्यमाह—न तावदिति। चेतनस्य व्यक्त्यैक्यमिति। चेतनव्यक्तेश्चेतनव्यक्त्यन्तरराहित्यलक्षणमित्यर्थः। श्रुत्यैव चेतनबहुत्वावगतेरिति। यत्प्रमाणमात्मैकत्वे मन्यसे तदेव प्रमाणमात्मनो बहुत्वमवगमयतीत्येवकारेण व्यज्यते। ननु काल्पनिकं बहुत्वमित्यत्राह—न चेदमिति। हितस्योचित इति। हितत्वं ह्यनुकूलत्वं, भ्रान्तिमापादयंस्तु प्रतिकूलो भवेत्। श्रुतिस्त्वाप्ततमा, सा कथमात्मभेदभ्रममापादयेदिति भावः। ननु श्रुतिः स्वयं न भ्रामयति किन्तु लोकसिद्धमात्मभेदमनुवदतीत्यत्राह—नहि देहविलक्षणमिति। तस्मात्परमात्मनः सजातीयद्वितीयराहित्यरूपमेव तदिति। तत्–श्रुतिषु प्रतीयमानमात्मैक्यमित्यर्थः। सजातीयद्वितीयराहित्यमेवोपपादयति—स हीत्यादिना। नन्वखिलस्य परमात्मापेक्षया प्रकारत्वमभ्युपगम्यतां नाम, तथापि प्रकारप्रकारिभेदस्य भवदभिमतत्वात् "नेह नानास्ति किञ्चने"ति श्रुतिः कथं

चैतदन्तर्यामिब्राह्मणे । एवमखिलस्य परमात्मापेक्षया प्रकारत्वेन जातिगुणादिवत्परतन्त्रत्वात्स्वतन्त्रवस्तुत्वाभावेन मुख्यधर्मिणोऽद्वैतमाकलय्य श्रुतिराह—"नेह नानास्ति किञ्चने"ति, न तु प्रकारप्रकारिणोर्विभेदं प्रतिषेधति । नहि शरीरजातिगुणवसनभूषणादिविशिष्टे देवदत्त एकस्मिन्नेव तिष्ठति प्रयुज्यमानमेक एव देवदत्तस्तिष्ठतीति वाक्यं शरीरादिविशेषाणामप्यसत्तामवगमयेत् ।

विषयविभेदादेव विरोधे शाम्यत्यपच्छेदनयमवलम्ब्य निषेधश्रुत्या भेदश्रुतीनां बाधकल्पनं कुकल्पनमेव । श्रुतीनां मिथो विरोधे प्रसक्ते विषयव्यवस्थयाऽविरोधेनार्थवर्णनं मीमांसायाः फलं न त्वन्यतरवाक्योपमर्दः । उक्तं चाभियुक्तैः—"मीमांसाशास्त्रसन्दर्भः सर्वो विषयभेदतः । श्रुतीनामविरोधाय जायते न तु बाधनात्" इति । अपच्छेदनयाश्रयणं चात्रानुचितम् । स हि न्यायोऽनियतविरोधपौर्वापर्यविषयः । न ह्युद्गातृप्रतिहर्त्रोरपच्छेदनियमोऽस्ति, येन सदक्षिणाकत्वादक्षिणाकत्वयोर्विरोधप्रसक्तिनियमो भवेत् । अन्यतरापच्छेदमात्रस्यापि सम्भवेन विना विरोधप्रसङ्गं तत्तत्प्रायश्चित्तस्य सम्भवात् । नापि पौर्वापर्यनियमस्तयोरपच्छेदे, येनादक्षिणाकत्वसर्वस्वदक्षिणाकत्वयोः प्रायश्चित्तशास्त्रार्थयोरुपस्थितौ पौर्वापर्यनियमः स्यात् । कदाचिदुद्गात्रपच्छेदस्य पश्चादपि सम्भवात् । भेदतन्निषेधवचसोस्तु स्वरूपतो विरोधान्नियतो विरोधः पौर्वापर्यं च । तस्मादस्य न्यायस्य प्रवृत्तिः प्रयोगावधिकैव ग्राह्या । अन्यथा—"अग्नीषोमीयं पशुमालभेत" "मा हिंस्यात्सर्वा भूतानी"त्यत्रापि प्रवृत्त्यापत्तेः । "नेह नानास्ति" इति निषेधवाक्यस्य भेदमुपमृद्यैव स्वार्थावबोधकत्ववदत्रापि हिंसातन्निषेधावबोधकयोर्भावाभावावबोधकतया चरमभाविनो निषेधस्य विध्युपमर्देनैव स्वार्थावबोधकत्वसम्भवात् । तथाच सति तत्रोत्सर्गापवादनयमाश्रित्य विधिशास्त्रस्य प्राबल्या-

घटेतेत्याशङ्कायामाह—एवमित्यादिना । मुख्यधर्मिण इति । प्रकारतानापन्नविशेष्यताश्रयस्येत्यर्थः ।

अपच्छेदन्यायमवलम्ब्य परैः कृतं नयनं प्रतिक्षिपति—विषयविभेदादिति । "नेह नानास्ती"ति श्रुतेः स्वतन्त्रनानात्वनिषेधविषयता, भेदश्रुतीनां च प्रकारप्रकारिणोर्मिथो विभेदविषयतेति विषयभेदव्यवस्थयैवेत्यर्थः । कुकल्पनतामेवोपपादयति—श्रुतीनामिति । अपच्छेदनयाश्रयणं चात्रानुचितमिति । प्रातःसवने बहिष्पवमानेन स्तोष्यमाणानां पुरतो गन्तुः कच्छं गृहीत्वा पिपीलिकावत्पङ्क्त्याकारेण शालाया बहिः प्रसर्पतामृत्विजां मध्ये यद्युद्गाता प्रमादाद्गृहीतं कच्छं मुञ्चेत्तदा प्रक्रान्तं यज्ञं विना दक्षिणादानं परिसमाप्य पुनः स एव यज्ञः प्रयोक्तव्यः, तत्र तां दक्षिणां दद्याद्या प्राक् सङ्कल्पिता, यदा प्रतिहर्ता मुञ्चेत्तदा तस्मिन्नेव प्रयोगे सर्वस्वं दद्यात्, यदा चोद्गातुः प्रतिहर्तुश्च क्रमेणापच्छेदस्तत्रोत्तरकालीनापच्छेदनिमित्तमेव विधेयं, यस्मादुत्पद्यमानमुत्तरज्ञानं सर्वस्वदक्षिणाकत्वावगाहि विरोधेन पूर्वोत्पन्नमदक्षिणाकत्वज्ञानमुपमृद्यैव प्रादुर्भवति, इहाश्रितो न्यायः अपच्छेदन्याय उच्यते । भेदशास्त्रं बाधित्वैव "नेह नानाऽस्ती"त्यादिनिषेधशास्त्रोत्पत्तेः प्राबल्यात्स एव नयोऽत्रापीति तदाशयः । अनियतविरोधपौर्वापर्यविषय इति । विरोधपौर्वापर्ये यत्र न नियते तद्विषय इत्यर्थः । अनियतविरोधपौर्वापर्यविषयतामेवोपपादयति—न हीत्यादिना । भेदतन्निषेधवचसोस्तु नियतविरोधपौर्वापर्यतैवेत्येतदुपपादयति—भेदतन्निषेधवचसोस्त्वित्यादिना । अन्यथेति । नियतविरोधपौर्वापर्यविषयेऽप्यपच्छेदन्यायो यदि प्रवर्त्तेत । नन्वस्तु नामेह विध्युपमर्द इत्यत्राह—तथाच सतीति । सर्वतः प्रमापकस्या-

श्रयणं विरुध्येत । किंच–श्रुतावेव चेत्कचिद्बाधः, विरोधाधिकरणन्यायेन भेदनिषेधश्रुतिरेव बाध्यताम् । ननु–तत्र श्रुतित्वस्मृतित्वयोर्बाध्यबाधकभावे प्रयोजकता, स कथं श्रुतिमात्रेऽत्र प्रवर्त्तेत । मैवम् । श्रुतिस्मृत्योर्वा बाध्यबाधकभावे किं प्रयोजकमिति पर्यालोच्यताम् । श्रुतेर्निरपेक्षप्रमाणत्वादविलम्बेन प्रमापकत्वात्प्राबल्यम् । स्मृतेस्तु श्रुतिमूलकतयैव प्रामाण्यात्सापेक्षप्रामाण्यतया विलम्बेन प्रमापकत्वेन दौर्बल्यम् । तस्माच्छ्रुतिस्मृत्योर्विरोधे श्रुत्या स्मृतिबाध आश्रीयते । तथाच तुल्योऽयं न्यायोऽत्रापि, निषेधस्य प्रतियोगिप्रसिद्धिसापेक्षतया भेदनिषेधश्रुतेर्भेदश्रुतितो विलम्बितधीहेतुत्वेन दौर्बल्यात् । तस्मादस्मदुक्तरीत्याऽबाधेन श्रुतीनामर्थवर्णनमेव तु मीमांसकहृदयङ्गमम् ।

यदपि प्रह्लादवामदेवादीनामहङ्ग्रहेणानुसन्धानम् । तत्तु सर्वान्तरात्मभूतपरमात्मपर्यन्तस्वात्मानुसन्धानकृतम् । अनयैव दिशा "अहमेवेदं सर्वं" "आत्मैवेदं सर्वमि"त्याद्या अपि श्रुतयो नेयाः । तत्प्रकारस्तु भाष्ये प्रपञ्चितस्ततोऽवगन्तव्यः ।

पौरुषेयस्यापि वेदस्यांशतो बाधसम्पादनं चेन्न्यायक्लृप्तम्, विपरीतमेव भवतः किं न स्यादित्याह—किञ्चेत्यादिना । किञ्चेति । न केवलमपच्छेदनयस्येह नियतविरोधपौर्वापर्येऽनवतारः, प्रत्युतानिष्टापत्तिश्चेत्यर्थः । श्रुतावेवेत्येवकारेण–अपौरुषेयतया नित्यनिर्दोषत्वेन सर्वतः प्रमापकभूतायां यस्यां श्रुतौ बाधो नोचितस्तस्यामेवेति व्यज्यते । विरोधाधिकरणन्यायेनेति । विरोधाधिकरणन्यायो नामायम्—ज्योतिष्टोमे काचिदौदुम्बरी शाखा निखन्यते, तामधिकृत्य स्मर्यते—"औदुम्बरी सर्वा वेष्टयितव्ये"ति, अनेन वचनेन वाससा सर्वतस्तस्या वेष्टनं प्राप्नोति, "औदुम्बरीं स्पृष्ट्वोद्गाये"दिति श्रुत्या तु स्पर्शो विधीयते, अयं च स्पर्शः सर्वतो वाससा वेष्टने न घटते, तदेवं प्रमाणयोर्विरोधे प्राप्ते स्मृतेः स्वमूलभूतश्रुत्यनुमानद्वारैव प्रमापकतया श्रुत्यपेक्षया विलम्बेन प्रमापकतया दौर्बल्यात्, श्रुतेश्च स्वतःप्रामाण्येनाविलम्बेन प्रमापकतया प्राबल्येन श्रुत्या स्मृतिर्बाध्यत इति । सोऽयं न्यायो विरोधाधिकरणन्याय उच्यते । ननु तत्रेति । तत्र–विरोधाधिकरणन्याय इत्यर्थः । श्रुतित्वं स्मृतित्वं वा प्राबल्ये दौर्बल्ये वा न प्रयोजकं, किन्त्वविलम्बेन प्रमापकत्वं विलम्बेन प्रमापकत्वं चेति, तच्च श्रुतिस्मृत्योरिव श्रुत्योरपि चेन्न विशेषः कुश्चिदित्याशयेनाह—मैवमिति । अत्रापीति । भेदनिषेधवचसोरपीत्यर्थः । कथं तौल्यं ? तदुपपादयति—निषेधस्येत्यादिना । अस्मदुक्तरीत्येति । विषयव्यवस्थाश्रयणेनेत्यर्थः ।

प्रह्लादवामदेवादीनामिति । तत्र प्रह्लादस्याहङ्ग्रहेणानुसन्धानं "मत्तः सर्वमहं सर्वं मयि सर्वं सनातने" इति । वामदेवस्य तु "अहं मनुरभव"मित्यादि श्रौतम् । परमात्मपर्यन्तस्वात्मानुसन्धानकृतमिति । अतत्त्वविदां शरीरे स्वात्मनि चाहङ्ग्रहः, तत्त्वविदां तु स्वात्मकपरमात्मन्येव स्यादिति भावः । तत्प्रकारस्त्विति । इदमत्र बोध्यम्—यथा जातिवाचका गुणवाचका वा शब्दा जातिं गुणं वा द्वारीकृत्य द्रव्य एव धर्मिणि पर्यवस्यन्ति, एवं शरीरवाचका देवादिशब्दा अपि जातिगुणवदपृथक्सिद्धप्रकारभूतशरीरद्वारा शरीरिणि जीवात्मनि पर्यवस्यन्ति, अत एव–अयमात्मा कर्मणा देवो जातो मनुष्यो जातः कर्मणेति सामानाधिकरण्यं मुख्यमुपपद्यते, देवदत्तः पण्डित इति च, इत्थं च परमात्मनः स्वेतरसमस्तद्रव्यापेक्षयाऽन्तरात्मतयाऽऽत्मत्वेन तं प्रति सर्वमेवेदं शरीरमिति सर्वे पृथिव्यादिभाववाचकाः शब्दाः परमात्मनः शरीरविशेषवाचका इति तत्तच्छरीरद्वारा शरीरिणि परमा-

"तस्मात्मपरदेहेषु सतोऽप्येकमयं हि यत् । विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥" इति वचनेन तु नात्मनां द्वैतं निषिध्यते, किन्तु देवादिपिण्डवैषम्येऽपि तत्र तत्र कर्मणा संसृष्टानामात्मनां ज्ञानैकाकाराणामवैषम्येण साम्यमुच्यते । स्वस्य परस्य वा देहे वर्तमानस्यात्मनः स्वरूपं यत् विज्ञानमेकप्रकारं कालत्रयेऽप्येकरूपं तस्मात्तस्मिन्पिण्डकृतवैषम्यदर्शिनोऽतथ्यदर्शिन इति तु वचनार्थः । अत एव—"पुमान्न देवो न नरो न पशुर्न च पादपः । शरीराकृतिभेदास्तु भूपैते कर्मयोनयः ॥" इत्यनेनैकार्थ्यम् । "यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम ! । तदैषोहमयं चान्यो वक्तुमेवमपीष्यते ॥" इत्यत्रापि नात्मैक्यं विवक्षितं किन्तु प्रकारैक्यमेव, परशब्देन भिन्नं निर्दिश्य अन्यशब्देनान्याकारत्वस्यैव प्रतिक्षेपात् । अन्यथा—अन्यशब्दपरशब्दयोरन्यतरस्य वैयर्थ्यापातात् । परिशुद्ध आत्मस्वरूपे व्यक्तिभेदेऽपि प्रकारभेदाभावादेव अहमेवंप्रकारः अयं चान्यप्रकार इति निर्देशः कथं घटेतेति वचनाशयः । अत एव अहमेषः अयमन्य इति सविशेषनिर्देशस्वारस्यमपि । अन्यथा अहमयमित्येतावतैव पर्याप्तिः । दृश्यमानप्रकारवैलक्षण्यपरिचायकतया च समीपतरवर्तिवाचकैतच्छब्दप्रयोगः स्वरसः । तत्प्रत्यनीकाकारावबोधकतया चान्यशब्दप्रयोगः । "वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः । अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥" इत्यत्राप्यात्मनां देवादिव्यपदेशो न स्वरूपनिबन्धनः, किन्तु पिण्डविशेषसंसर्गनिबन्धन इत्युच्यते न पुनरात्मैक्यम् । दृष्टान्तेऽप्यनेकरन्ध्रवर्तिनां वाय्वंशानां व्यक्तिभेदोऽपरिहार्यः ।

---

त्मन्येव पर्यवस्यन्ति, तत् सर्वशब्दसामानाधिकरण्यं परमात्मनि सुघटमेवेति "अहमेवेदं सर्वं" "आत्मैवेदं सर्वं" इत्यादिनिर्देशः सर्वोऽपि मुख्य एवोपपद्यते । परमात्मानमपेक्ष्य सर्वेषां शरीरत्वं "यः पृथिव्यां तिष्ठ"न्नित्याद्यन्तर्यामिब्राह्मणे स्फुटमिति ।

प्रतिशरीरमात्मभेदो निषिध्यते कैश्चिद्वचनैरित्याशङ्कां प्रतिक्षिपति—तस्मात्मपरदेहेष्वित्यादिना । अवैषम्येण साम्यमुच्यत इति । श्लोकस्यायं शब्दार्थः—यश्चात्मनो देहो ये च परेषां देहा मिथोऽत्यन्तविषमा दृश्यन्ते, तेषु विषमेषु सतोऽपि तस्य जीवात्मनः ( जातावेकवचनम् ) कृष्णत्वश्यामत्ववृद्धत्वबालत्वमनुष्यत्वपशुत्वादिर्दृश्यमानो भेदकाकारो न परमार्थः, किन्तु सान्निध्यादग्नेरयःपिण्डे औष्ण्यवदारोपितो देहसान्निध्यात्, किन्तु तस्यात्मनो यत्स्वरूपं विज्ञानं—विज्ञानैकघनं स एव परमार्थः, यदेतदेकमयम्, मयडत्र स्वार्थे, एकशब्दोऽविषमपरः, यस्माद्बाह्यशरीराकारवैषम्येऽपि स्वरूपं विज्ञानं त्वविषमम्, अतो द्वैतिनः—आत्मपरदेहभेदेन 'अहमेवंविधोऽयमन्यविधोऽहं ब्राह्मणोऽयं क्षत्रिय' इत्यादिवैषम्यदर्शिनोऽतथ्यदर्शिनः—भ्रान्ता इति । इत्यत्रापीति । अपिशब्दात् "तस्मात्मपरदेहेष्वि"ति वचन इवास्मिन्वचनेऽपीति व्यज्यते । नात्मैक्यं—नात्मव्यक्त्यैक्यम् । प्रकारैक्यमेवेति । प्रतिशरीरमन्यान्यानामप्यात्मव्यक्तीनां ज्ञानैकाकारस्वरूपस्वरूपप्रकारैक्यमेवेत्यर्थः । एवकाराद्व्यक्त्यैक्यव्यवच्छेदः । अन्यथा—आत्मव्यक्तिभेदप्रतिक्षेपपरत्वे । परिशुद्ध आत्मस्वरूप इति । प्रकृतिसंसर्गलक्षणोपाधिकलङ्कमपसार्य विचार्यमाण इत्यर्थः । कथं घटेतेति । सुखित्वदुःखित्वादेरान्तरस्य देवत्वमनुष्यत्वादेर्बाह्यस्य च गुणमयोपाधिमूलकत्वेन स्वरूपमात्रे तदनुपपत्तेरिति भावः । अन्यथा—आत्मव्यक्तिभेदप्रतिक्षेपश्चेदभिमतः । पर्याप्तिरिति । सविशेषनिर्देशस्वारस्यं हीयेतेति शेषः । न पुनरात्मैक्यमिति । कस्तर्हि वचनाशय इत्यत्र दृष्टान्तानुगुणोऽस्मद्विवक्षित एवाशय इत्याह—दृष्टान्तेऽपीत्यादिना । गीता-

वायुत्वेनैकाकारतया समानानामपि वाय्वंशानां यथा रन्ध्रभेदेन षड्जादिसंज्ञाभेदः, तथा ज्ञानैकाकाराणामात्मनां स्वरूपवैलक्षण्याभावेऽपि तत्तत्पिण्डसंसर्गकृतो देवादिव्यपदेश इति वचनाशयः । यच्च गीतावचनम्—"सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥" इति प्रकृतिविविक्तात्मस्वरूपस्य सर्वस्य ज्ञानैकाकारतया साम्येन स्थालीपुलाकन्यायेन एकस्मिन्नात्मस्वरूपे दृष्टे सर्वमात्मवस्तु दृष्टं भवतीत्युच्यते ॥

प्रयोगाणां तु श्रुतिबाधोऽवर्जनीयः । असच्छब्दघटितेषु च प्रयोगेष्वपसिद्धान्तदोषश्च । प्रक्रिया ह्येषा वः—अहमर्थोऽन्तःकरणं, आत्मा तु संविन्मात्रं, असौ तु वस्तुतो नाहंप्रत्ययगोचर इति । तथाच भामत्याम्—"सत्यं प्रत्यगात्मा स्वयंप्रकाशत्वादविषयोऽनंशश्च, तथाप्यनिर्वचनीयानाद्यविद्यापरिकल्पितबुद्धिमनःसूक्ष्मस्थूलशरीरेन्द्रियावच्छेदेनानवच्छिन्नोऽपि वस्तुतोऽवच्छिन्न इवाभिन्नोऽपि भिन्न इवाकर्त्ताऽपि कर्त्तेवाभोक्ताऽपि भोक्तेवाविषयोऽप्यस्मत्प्रत्ययविषय इव जीवभावमापन्नोऽवभासते" इति । न चास्मत्प्रत्ययविषय इव भवतीत्यस्मच्छब्देन तन्निर्देशो व्युत्पत्त्यनुगुणः, इवेनातत्त्वस्यैव समर्थनात् । न च तत्प्रत्ययाविषये तच्छब्दस्य व्युत्पत्तिः स्यात् । नहि घटशब्दोल्लिखितप्रत्ययाविषयस्य घटशब्दवाच्यता । न चेवेति निर्देशात्स्वतोऽविषयस्याप्यात्मन उपाधिवशादस्मत्प्रत्ययविषयत्वमुक्तं भवति । उपाधिश्चान्तःकरणं, अत एव तत्रैवाग्रे जीवो हि चिदात्मतया स्वयंप्रकाशत्वादविषयोऽप्यौपाधिकेन रूपेण विषय इत्युक्तं, तथा चास्वाभाविकेनाप्यौपा-

---

वचनस्याशयमाह—यच्चेत्यादिना । समदर्शन इति पदस्य स्वारस्यं हृदि निधायाह—सर्वस्य ज्ञानैकाकारतया साम्येनेत्यादि ।

प्रयोगाणां त्विति । विगीतानि शरीराणि मयैवात्मवन्ति शरीरत्वादित्याद्युदाहृतानुमानप्रयोगाणामित्यर्थः । श्रुतिबाध इति । आत्मभेदप्रतिपादकानन्यथासिद्धागमतो बाध इत्यर्थः । अपसिद्धान्ततां निरूपयति—प्रक्रिया ह्येषा व इत्यादिना । अविषयोऽनंशश्चेति । यो विषयः सांशो वा स सर्वोऽपि जड इति नियमे तात्पर्यम् । ननु यथाऽरक्तोऽपि स्फटिको जपाकुसुमसान्निध्याद्रक्त इव भवतीति रक्तः स्फटिक इति भवति प्रयोगः, तथाऽस्मत्प्रत्ययाविषयेऽप्यात्मनि भवत्यहमिति प्रयोग इत्याशङ्कामपाकरोति—न चास्मत्प्रत्ययविषय इत्यादिना । इवेनातत्त्वस्यैव समर्थनादिति । इवशब्देन तद्भिन्नत्वस्यैव समर्थनादित्यर्थः । अयमाशयः—सर्वत्र इवशब्दो हि साम्यमवगमयति, साम्यं च तद्भिन्नत्वे सति तद्गतधर्मवत्त्वं, इत्थं चोपाधिसान्निध्यादस्मत्प्रत्ययविषय इव भवतीत्यत्रेवशब्देनास्मत्प्रत्ययागोचरत्वं, अस्मत्प्रत्ययगोचरगतधर्मवत्त्वं च प्रतीयते, तत्रास्मत्प्रत्ययगोचरसाधर्म्यं चाहंशब्देनोल्लेखः, न चैतावता प्रयोगे तथोल्लेखः समुचितः, स ह्युल्लेखः स्फटिके रक्त इत्युल्लेखवद्भेदाग्रहनिबन्धनः, सच तत्त्ववादे कथं घटेतेति । व्युत्पत्तिः स्यादिति । प्रामाणिकव्यवहारो हि व्युत्पत्तिमवलम्बत इति भावः । ननु सर्वथा योऽयमात्माऽगोचरस्तमधिकृत्य वादोऽपि व्यवहारदशायामेवेति तदानीमगोचरस्यापि तस्योपाधिच्छायापत्त्या जायमानमहमिति लौकिकोल्लेखमनुसृत्यैव निर्देशः कर्त्तव्यो भवतीत्यगत्या तथा प्रयोगः समुचित इत्याशङ्कते—न चेत्यादिना । औपाधिकेनेति । स्वतोऽस्मच्छब्दस्यात्मनि प्रवृत्त्यसम्भवेऽप्युपाधिद्वारा प्रवृत्तिः सम्भवेदेवेति भावः । अस्मच्छब्दस्यान्तःकरणविशेषविशिष्टे व्युत्पत्तिरित्युक्तं भवति ।

धिकेनासत्प्रत्ययविषयत्वेन भवेदेवास्मच्छब्दप्रवृत्तिस्तस्मिन्निति समुचित एवास्मच्छब्दघटितः प्रयोग इति वाच्यम् । तथासत्युपाधिविशिष्टस्य प्रतिशरीरं भेदेन बाधात् । न च वस्तुतः संविन्मात्रमेकमेवेति न दोषः । मयैवेत्येवकारेण समभिव्याहृतास्मच्छब्दोपस्थाप्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्यैव बोधनात् । अस्मच्छब्दप्रवृत्तिनिमित्तकोटौ चान्तःकरणविशेषस्यानुप्रवेशात् । स्वतः संविद्यसत्प्रत्ययगोचरत्वासम्भवं मन्वानेन भवतैव द्वयमंश आदृतः । अन्तःकरणस्योपाधेरन्तःकरणत्वेनास्मच्छब्दप्रवृत्तिनिमित्तेऽनुप्रवेशे तु प्रतिशरीरमन्तःकरणभेदस्येवात्मभेदस्याभ्युपगमे साध्यसिद्धेः सिषाधयिषितासिद्ध्याऽर्थान्तरं स्यात् । यदि विशेष्यैक्यं यत्र तत्र विशिष्टे न विशिष्टभेदः, तथा प्रतीतिस्तु विशेषणयोरेव भेदमवलम्बत इत्युच्यते । तदा स्वतोऽविषयत्वेऽपि संविदो विना स्वरूपभेदमन्यं वाऽऽगन्तुकाकारविशेषं तत्रोपाधिसम्बन्धमात्रेणासत्प्रत्ययविषयत्वोपपादनमुपाधेरेवासत्प्रत्ययगोचरत्वे विश्राम्यति । घटोदरान्तर्गताकाशे आकारविशेषोल्लेखवत् । तथा चात्मस्व-

समाधत्ते—तथा सतीति । भेदेन बाधादिति । संविन्मात्रस्यैकत्वाभिमतावप्यन्तःकरणात्मकोपाधिविशिष्टस्य जीवात्मनः प्रतिशरीरमुपाधिभेदाद्भेदेनास्मच्छब्दोपस्थाप्यो यः प्रयोक्तृजीवविशेषस्तदधिष्ठितत्वस्य सर्वत्र शरीरे बाधादिति भावः । एकमेवेति न दोष इति । विशिष्टशुद्धयोरनतिरेकादिति भावः । एवकारेणेति । अयमेवकारोऽन्ययोगं व्यवच्छिन्दन्नन्यं च स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकमेवावगमयेत् तथा नियमादित्याशयः । भेदस्यैव बोधनादिति । अन्यथा धनी मनुष्य एव सुखीति वाक्यतो मनुष्यादन्यस्यासुखित्वप्रतीत्यापत्तेरिति भावः । अन्तःकरणविशेषस्येति । उच्चारयितृशरीरावच्छिन्नस्येत्यर्थः । अन्तःकरणत्वेनेति । अन्तःकरणत्वरूपसामान्यधर्मपुरस्कारेणेत्यर्थः । तथा चान्तःकरणव्यक्तिभेदेऽपि शरीरान्तरावच्छेदेनाप्यन्तःकरणावच्छिन्नत्वसत्वेनास्मच्छब्दार्थभूतान्तःकरणावच्छिन्नचैतन्याधिष्ठितत्वमस्त्येवेति न बाध इति भावः । आत्मभेदस्याभ्युपगमे साध्यसिद्धेरिति । अयं भावः—अस्मत्पदप्रवृत्तिनिमित्तकोटावन्तःकरणविशेषमनिवेश्यान्तःकरणसामान्यनिवेशे मयैवेति वचो जीवेनेत्यनेनाविशिष्टं भवति, तथाच सत्यप्यन्तःकरणभेदेऽन्तःकरणत्वेनान्तःकरणावच्छिन्नचैतन्याधिष्ठितत्वं यथा, तथाऽऽत्मभेदेऽभ्युपगम्यमानेऽप्यात्मत्वेन सामान्यधर्मेण सर्वस्य शरीरस्यास्मच्छब्दोपस्थाप्यचेतनाधिष्ठितत्वसिद्धेरर्थान्तरमिति । ननु वक्तृशरीरावच्छिन्नान्तःकरणावच्छिन्नत्वविशिष्टचैतन्यस्यैवास्मत्पदार्थता, तथापि शरीरान्तरावच्छिन्नान्तःकरणविशिष्टचैतन्ये तु न ततो भेदः, विशेष्यस्यैकत्वात् तन्न बाधप्रसङ्ग इत्याशङ्कते—यदि विशेष्यैक्यं यत्रेति । यद्यपि नीलघटपीतघटयोर्मिथो भेदो न्याय्यः, विशेष्यव्यक्त्योरपि भेदात्, या तु गुणान्यत्वविशिष्टा सत्ता कर्मान्यत्वविशिष्टा सत्ता न तयोर्मिथो विशिष्टवेषेणापि भेदः, विशेष्येऽसतस्तस्यं विशिष्टे सत्त्वानुपपत्तेरिति भावः । विशिष्टे—एकविशेषणविशिष्टे । विशिष्टभेदः—विशेषणान्तरविशिष्टभेदः । ननु भवति कस्यचित्कदाचित्तथा प्रतीतिरित्यत्राह—तथा प्रतीतिस्त्विति । भेदमवलम्बते—मिथो भेदमवलम्बते । अर्थयाथार्थ्यं चेत्पर्यालोच्य क्वचिदुल्लेखशैलीमनादृत्य प्रतीतेर्विषयव्यवस्था क्रियेत, तर्हि तत एव न्यायेन असत्प्रत्ययगोचरताऽप्यन्तःकरणस्यैव न्याय्येत्याशयेन समाधत्ते—तदेति । विश्राम्यतीति । तत्र निदर्शनमाह—घटादे-

१ अन्यथा—स्वसमभिव्याहृतपदार्थप्रतियोगिकभेदमात्रबोधने । २ विशेष्ये सत्तामात्रेऽसतो गुणान्यत्वविशिष्टसत्ताभेदस्य कर्मान्यत्वविशिष्टसत्तात्मकविशिष्टस्वरूपे सत्त्वासम्भवादित्यर्थः ।

रूपेऽहमुल्लेखः पामरोल्लेख एवेति, वादावसरे प्रयोगे तथोल्लेखः पामरतामेव प्रयोक्तुरावेदयेत्। किञ्च—अनेन मयेतिशब्देन साध्यकोटावात्मनः केनाकारेणोपस्थितिः। न तावत्संवित्त्वेन, स्वरूपतस्तत्र तथाबुद्धिशब्दयोरसम्भवस्य भवतैवोक्तत्वात्। उपाधिविशेषाकारेण चेत् तथाविधाकारविशिष्टस्य संवित्स्वरूपस्यासन्मते आत्मनोऽनभ्युपगमादसन्मतेन साध्याप्रसिद्धिः। साध्येन हेतुना वा वादिप्रतिवादिभ्यां सम्प्रतिपन्नेन खलु भाव्यम्। विवादस्तु पक्षे साध्यसम्बन्धमात्रे। यदि च मयेति निर्देशस्यान्तःकरणविशेषावच्छिन्नात्मत्वेनोभयसाधारणेनाऽऽत्मनः साध्यकोटौ प्रवेशे तात्पर्यम्। तथाप्यस्माभिः सर्वात्मतयाऽङ्गीकृतेन परमात्मना सिद्धसाधनम्। किञ्च—मयैवेत्येवकारेण साध्यतया विवक्षिते मदितरानात्मकत्वे प्रतियोगिन इतरात्मकत्वस्य प्रसिद्धिरस्ति? उत न?। यद्यस्ति तदा बाधः, यदि नास्ति तदा साध्याप्रसिद्धिः। यदि चात्मपदप्रवृत्तिनिमित्तं स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यमिति प्रयुज्यते। तथापि तत्र हेतुस्तर्कानुगृहीतो दुरुपपादः। भेदपदार्थमेव दूषयतो भवतो भेदघटितसाध्यशरीरनिर्वचनं शत्रुपदसमाश्रयणवदवमतिमावहति। सर्वत्र श्रुतिबाधस्तु दुष्परिहर इत्युक्तमेव। श्रुतीनामविरोधेन तत्त्वं निश्चिन्वतां पुनः। आनन्त्यमात्मनां सिद्धं सर्वदर्शनसम्मतम्॥

रिति। आकारविशेषः—वर्त्तुलत्वाद्याकारविशेषः। प्रकारान्तरेण दूषयति—किञ्चेति। तथा बुद्धिशब्दयोरिति। अहमिति तु बुद्धिः, अहमिति शब्दश्च, तयोरित्यर्थः। ननु प्रतिवादिनो मतेन चेत्साध्यमप्रसिद्धं का क्षतिः, वादिनस्तु प्रसिद्धमित्यत्राह—साध्येन हेतुना वेति। यदि साध्यं वादिप्रतिवाद्युभयसम्मतं स्यात्तर्हि कस्मै साधनायास इत्यत्राह—विवादस्त्विति। ननु संविन्मात्रस्यात्मत्वं विप्रतिपन्नमिति न तद्रूपस्य साध्यकोटावुपाधिविशिष्टवेषेणापि निवेशः क्रियते, किन्तूभयवादिसम्मतस्यात्मत्वस्योपाधिविशेषविशिष्टवेषेण निवेशः क्रियते, मयेत्युल्लेखस्यैहैव तात्पर्यमित्याशयेनाह—यदि चेत्यादिना। सिद्धसाधनमिति। अस्मन्मते परमात्मनो विभोः सर्वान्तर्यामिणः सर्वान्तरात्मतयाऽन्तःकरणविशेषावच्छिन्नेन तेन सर्वेषामेव शरीराणामात्मवत्त्वं सम्प्रतिपन्नमिति सिद्धसाधनमिति भावः। प्रतियोग्यप्रसिद्धिप्रसिद्धिभ्यामेवकारार्थं दूषयति—किञ्चेति। साध्याप्रसिद्ध्यादिदोषस्य यथावकाशो न स्यात्तथा प्रयोगमाह—यदि चात्मपदेति। आत्मपदप्रवृत्तिनिमित्तमिति पक्षनिर्देशः। भेदविशिष्टान्यमित्यन्तं साध्यनिर्देशः। उभयसम्बन्धेनेति। अन्यतरसम्बन्धमात्रनिवेशे बाध इत्युभयसम्बन्धनिवेशः। तर्कानुगृहीतो दुरुपपाद इति। को हेतुरिह विवक्षितः? शरीरपक्षके शरीरत्वादिति हेतुः पूर्वं प्रयुक्तः, शरीरपदप्रवृत्तिनिमित्तपक्षकेऽस्मिन् शरीरपदप्रवृत्तिनिमित्तत्वादिति यदि स्फुटमिति मन्यसे तदा नायं हेतुस्तर्कानुगृहीतः, हेतुश्चान्यस्तथाविधो न कश्चिदिति भावः। यदि पुनस्तद्धर्मसमानाधिकरणं तद्धर्मासमानाधिकरणधर्मसमानाधिकरणं च यद्यत्तत्तद्भिन्नत्वं हेतुस्तदा सुखित्वदुःखित्वपाण्डित्यमौर्ख्यादिविरुद्धधर्मसामानाधिकरण्येनासिद्धिः पूर्ववत्। न तयोर्विरोध इत्युपलम्भपराहतम्। उपलम्भाविलङ्घने तु विप्रतिपत्तिरेवेति न हेतुनिश्चयः। साध्याप्रसिद्धिश्चेत्याह—भेदपदार्थमिति। न केवलमप्रसिद्धिः स्वमतविस्मरणमिति निग्रहस्थानाधिक्यं चेत्याह—अवमतिमावहतीति। कारिकयोपसंहरति—श्रुतीनामिति। सर्वदर्शनसम्मतमिति। यान्यान्तिकदर्शनानि तेषु सर्वेष्वेवात्मनानात्वमेव समर्थ्यते

ये चात्मनामैक्यमनैक्यं च स्वाभाविकमाचक्षते, तेषामज्ञत्वसर्वज्ञत्वसाङ्कर्यमपरिहरणीयम् । न चांशभेदेन तद्व्यवस्था, भेदस्येवाभेदस्यापि स्वाभाविकत्वात् । स्वतोऽभिन्नमंशान्तरं जानतः सर्वज्ञस्यांशान्तरस्य सर्वत्रैव सुखदुःखे स्वीयत्वमत्यभिसन्धानस्यावर्जनीयतया सर्वाशुभाश्रयत्वं च स्यात् । किञ्च—जीवानामादिमत्त्वं च स्यात् । हेमतो विभक्तानां वस्तुतो हेमस्वरूपतोऽभिन्नानां कटकमुकुटादीनामिव सृष्टिसमये सन्मात्रतो विभक्तानां तत्स्वरूपतोऽभिन्नानामप्यादिमत्त्वस्यावर्जनीयत्वात् । नहि सन्मात्रतो विभक्तत्वे महदादिभ्योऽस्ति कश्चिद्विशेषो जीवानां, येन महदादीनामादिमत्त्वं जीवानां चातथात्वं स्यात् । निषिद्धा चोत्पत्तिर्जीवानां—"नात्मा श्रुतेर्नित्यत्वाच ताभ्य" इति सूत्रकृता । श्रुतिश्च—"न जायते"

इति बहुसम्मतोऽयं पक्ष इति भावः । अयमत्राशयः—कणादादिदर्शनप्रवर्त्तकानां आत्मनां कर्त्तृत्वभोक्तृत्वादिषु मिथो विवादेऽप्यात्मनानात्वे तु न विवादः । बादरायणोऽपि भगवान् शारीरकमीमांसायां जगतो ब्रह्मैककारणतां निरूपयन्कपिलादिभिरादृतान्प्रधानादिकारणकत्ववादानेव निराचक्रे न काप्यात्मनानात्वम् । न चाप्रधानोऽयमर्थो येन तन्निरासो नाऽपेक्ष्येत, आत्मविचारायैव हि शारीरकमीमांसा, तत्रात्मातिरिक्तकारणत्ववादनिरास इवात्मनानात्ववादनिरासोऽपि ह्यत्यन्तापेक्षित आत्मनानात्वं चेदनभिमतम् । प्रत्युत सूचितमात्मनानात्वमेव "अधिकं तु भेदनिर्देशात्" "नेतरोऽनुपपत्तेः" इत्यादिना । किञ्च—वियदादीनां परमात्मन उत्पत्तिनिरूपणप्रसङ्गे जीवात्मनोऽपि वियदादिवत्परमात्मनः सकाशादुत्पत्तिमाशङ्क्य तस्य नित्यत्वान्न तस्मादुत्पत्तिरिति परिहृतं "नात्मा श्रुतेर्नित्यत्वाच ताभ्य"इति । एतेन जीवात्मनां परमात्मनोऽर्थान्तरत्वं सुव्यक्तम् । तदात्मनानात्वमेव कणादादीनां भगवद्बादरायणस्य च हार्दमिति ।

मायावादं निरस्य भेदाभेदवादं निरस्यति—ये चेत्यादिना । स्वाभाविकमाचक्षत इति । परं ब्रह्मैव सच्चिदानन्दलक्षणमभिव्यक्तसच्चिदानन्दस्वभावमीश्वररूपेण परिणमति, अनभिव्यक्तानन्दस्वभावमभिव्यक्तसच्चित्स्वभावं जीवात्मना परिणमति, अनभिव्यक्तचिदानन्दस्वभावमभिव्यक्तसन्मात्रस्वभावमचिद्रूपेणेति । तदेवं जीवाजीवलक्षणः प्रपञ्चः परब्रह्मणः परिणतिविशेष एवेति तस्मात्स प्रपञ्चस्य परस्य ब्रह्मणश्च स्वभावतो भेदोऽप्यभेदोऽपि, यथा घटशरावादीनां मृत्पिण्डपरिणतिविशेषभूतानां कार्यात्मना भेदः कारणात्मना चाभेद इति भावः । न चांशभेदेनेति । यथा तरङ्गबुद्बुदानामाप्यानामपि न तरङ्गकार्यं बुद्बुदे, बुद्बुदकार्यं वा न तरङ्गे, तथा परस्य ब्रह्मणोंऽशभूतेष्वपि चिदचिदीश्वरतत्त्वत्रयेषु न मिथः स्वभाववैपरीत्यं प्रसजेत्, यत्प्रतिनियतो मिथः स्वभावभेदः सर्वज्ञत्वादिलक्षण इति भावः । भेदस्येवाभेदस्यापीति । अयं भावः—चिदचिदीश्वराणां मिथो भेदेऽपि कारणभूतात्परब्रह्मणः कार्यात्मना चिदचित्प्रपञ्चस्य भेदेऽपि कारणात्मना त्रयाणामंशानामभेदादंशानां चांशिना परब्रह्मणा सहाभेदादन्ततः सर्वज्ञत्वमल्पज्ञत्वमज्ञत्वं वा सर्वं परस्मिन् ब्रह्मणि प्रसजेदेव, नहि मृण्मयघटशरावादिगतं वैषम्यं मृदसंस्पृष्टमिति वक्तुं शक्यमिति भावः । जीवानामादिमत्त्वं च स्यादिति । नन्वनादि यत्परं ब्रह्म तदभिन्नेषु तेषु कथमादिमत्वप्रसङ्ग इत्यत्राह—हेमत इत्यादि । इष्टापत्तावाह—निषिद्धा चेति । नात्मा श्रुतेर्नित्यत्वाच ताभ्यः—जीवात्मा नोत्पद्यते, "न जायते म्रियते वा विपश्चि"दिति श्रुते-

इत्यादिका। ननु–सन्मात्रस्यायं विभागो भोक्तृभोग्यनियन्त्रात्मना, तत्र जलस्य करकात्मनेव सन्मात्रस्य ब्रह्मणो महदाद्यात्मना, तरङ्गबुद्बुदाद्यात्मनेव भोक्तृजीवात्मना, विभक्तजलात्मनेव च नियन्त्रात्मना विभागो बोध्यः। तत्र प्रलयसमये न महदादीनां विभागशक्तिरवतिष्ठते किन्तु परिणामशक्तिरेव। जीवानां तु विभागशक्तिः। अनेनैव विशेषेण जीवानामनादित्ववादस्तु सङ्गत इति चेत्। मैवम्। केयं विभागशक्तिः?। किं स्वरूपभेदग्रहाणेन पश्चाद्भेदप्राप्त्यर्हता?, उत नामरूपविभागार्हतामात्रम्?। नाद्यः। कटकमुकुटादीनां प्रध्वस्तानामस्तस्वरूपभेदं हेमपिण्डे विलीनानां पुनर्हेमपिण्डाद्विभक्तानामिवास्तस्वरूपभेदं सन्मात्रे ब्रह्मणि विलीनानां पुनः सृष्टिसमये विभक्तानां जीवानामादिमत्त्वमवर्जनीयम्। उक्तविभागशक्तेरुभयत्राविशेषात्। न च कटकमुकुटादीनां प्रध्वंसेन हेम्नि कटकादिविभागार्हता। पश्चात्कटकादिना भवनस्यानियमात्। जीवानां तु प्रलये स्वरूपभेदापगमेऽपि प्रतिनियतकर्मभेदानुगुणभोगवैषम्यनियमेन विभागनियमाद्विभागशक्तिरिष्यते, तन्न कटकमुकुटादीनामिव जीवानामादिमत्त्वमिति वाच्यम्। सर्वथा स्वरूपभेदेऽस्तङ्गते प्रतिनियतकर्मभेदोपपादनं वन्ध्यासुतकथासोदरम्। नापि द्वितीयः। स्वरूपभेदापगमे कटकमुकुटादिभ्योऽविशेषात्। सति स्वरूपभेदे नामरूपभेदार्हतायाः स्वीकारेऽपसिद्धान्तप्रसङ्गः। तत्सिद्धमात्मनां स्वरूप एवानन्त्यम्।

आत्मानं देहमाहुः कतिचन कतिचिच्चेन्द्रियं केचिदाहुर्विज्ञानस्यान्ववायं कतिचन जगदुर्नित्यविज्ञानमात्रम्। त्र्यन्तैकान्तवृद्धाः कुमतिविलसितं सर्वमेतद्विलङ्घ्य ज्ञाता कर्ता

---

स्वस्योत्पत्तिनिषेधात्। ताभ्यः–"नित्यो नित्यानां"मित्यादिश्रुतिभ्योऽवगम्यमानान्नित्यत्वाच्च। श्रुतिभिर्नित्यत्वस्यावगमादिति यावत्। आत्मनो नित्यत्वं समर्थयन्नाशङ्कते—नन्वित्यादिना। तत्रेति। विभागत्रये इत्यर्थः। परिणामशक्तिरेवेति। यदि सा शक्तिरप्यपगच्छेत्पुनर्महदादिपरिणामो न घटेतेति भावः। जीवानां तु विभागशक्तिरिति। तेन प्रलयेऽप्यस्ति जीवभाव इति न तस्यादिमत्त्वमित्याशयः। विभागशक्तिं विकल्प्य दूषयति—केयमिति। उक्तविभागशक्तेरिति। पूर्वस्वरूपप्रहाणेन पश्चाद्भेदप्राप्त्यर्हतारूपाया इत्यर्थः। उभयत्रेति। कटकमुकुटादिषु जीवेषु चेत्यर्थः। कटकमुकुटादितो विशेषमाशङ्कते—न चेति। अनियमादिति। विद्राव्य पिण्डीकृतानां तेषां भूषान्तररूपेणाप्याधानादनियम इति भावः। द्वितीयं कल्पं द्वेधा विकल्प्य दूषयति—स्वरूपेत्यादिना।

एतावता प्रबन्धेन विरचितं प्रतिवादिपक्षनिराकरणं सङ्गृह्य श्लोकेन निबध्नन्नुपसंहरति मूलार्थम्—आत्मानमिति। आत्मानं देहमाहुः कतिचन–चार्वाकाः। कतिचिच्चेन्द्रियम्–तत्सगर्भाः केचित्। विज्ञानस्यान्ववायं कतिचन–बौद्धाः। नित्यविज्ञानमात्रम्–मृषावादिनः। मात्रशब्देन ज्ञातृत्वज्ञेयत्वादिविशेषमात्रव्यवच्छेदः। त्र्यन्तैकान्तवृद्धाः–श्रीभाष्यकारप्रभृतयः। मङ्गलादीनि मङ्गलान्तानि मङ्गलमध्यानि शास्त्राणि प्रथन्ते इत्यभिप्रेत्य मूलार्थानुसन्धानपूर्वकं मङ्गलमाचरति—स्वयंज्योतिरिति। चिद्रूप इत्यस्य विवेचनं–स्वयंज्योतिरिति। अणुरिति च मूलस्थं पदम्। येन सख्या परमात्मना स्वयमुच्छ्वासनिःश्वासादिलक्षणचेष्टां कर्तुं प्रभवति, तस्य सख्युः परमात्मनो नारायणस्य कौस्तुभमणिर्यथा हृदयङ्गमः ( वक्षस्थलमुपगतः ) तथा हृद्यः ( प्रियो ) भवतु–तस्मिन्प्रतिमात्रप्रीत्याधानेन

मिथोऽन्यो हृदि हृदि विलसत्येप इत्याहुरेनम् ॥ १ ॥ स्वयंज्योतिरणुः सोऽयमहंप्रत्ययगोचरः । हृद्यः कौस्तुभवद्भूयात्सख्या येन तु चेष्टते ॥ २ ॥ इति ॥ १०५ ॥

तस्यायं प्रीतिगोचरो भवतु । "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा"मिति हि श्रूयते ॥ १०५ ॥

---

त्रिगुणात्मा तमः कृष्णशक्तिर्देहतदीययोः ।
जीवस्य चाहंममताहेतुर्मायाऽवगम्यताम् ॥ १०६ ॥

मायास्वरूपमाह—त्रिगुणात्मेति । त्रयो गुणाः—सत्त्वादय आत्मा—स्वभावो यस्याः । गुणाः सत्त्वरजस्तमांसि । "अजामेकां लोहितशुक्लकृष्णा"मिति

अथ मायां निरूपयति—त्रिगुणेति । प्रकृतेर्विचित्रार्थकरत्वेन विस्मयनीयत्वान्माया-शब्देन निर्देशः । नहि विस्मयनीयमितोऽन्यत्, यद्ब्रह्माण्डभाण्डोदरे विचित्रं प्रकृतेर्विल-सितम् । व्युत्पन्नश्च मायाशब्दो विस्मयनीये । एतेन-मायाशब्देन निर्देशात्प्रकृतेर्मिथ्या-त्वशङ्का निरस्ता । प्रयुज्यते च सत्येऽप्यर्थे विस्मयनीयत्वेन मायाशब्दः "तेन मायासहस्रं त"दिति । न च तान्यस्त्राणि मिथ्याभूतानि, "एकैकश्येन सूदित"मिति सुदर्शनेन तेषां निषूदितत्वोक्तेः । इन्द्रजालादिस्थलेऽपि तात्कालिकविचित्रवस्तूत्पादको मणिमन्त्रादिर्विस्म-यनीयो दृष्टः । श्रुतिश्च—"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति । "अस्मा-न्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः ।" इति पूर्वं प्रस्तुतां मायामेव हि सा केत्यपेक्षायां व्याचष्टे सेयं श्रुतिः । एतेन-प्रकृतिमुद्दिश्य मिथ्यात्वमनया श्रुत्या विधीयत इत्यपास्तम् । मायायाः प्राक् प्रस्तुतत्वेन तस्या एवोद्देश्यत्वौचित्यात् । मायाशब्दस्य व्युत्पत्ति-श्चाश्चर्य इति निरूपितत्वाच्च ।

मायेति निरूप्यनिर्देशः, त्रिगुणात्मेत्यादिनिरूपणप्रकारनिर्देशः, अनयोर्निरूप्यनिर्देशं प्रथमतो व्याचष्टे—प्रकृतेरित्यादिना । उपस्थितौ प्राथम्यात् । पराभिप्रेतं प्रवृत्तिनिमित्तं व्युदस्यन्नाह—विचित्रार्थकरत्वेन विस्मयनीयत्वादिति । ननु गौणोऽयमर्थः स्यादित्यत आह—व्युत्पन्नश्चेति । चस्त्वर्थः । तस्य तत्र व्युत्पत्तौ गमकं प्रयोगमाह—प्रयुज्यते चेति । चो ह्यर्थे । तेन प्रयोगस्य प्राचुर्यं व्यज्यते । पराभिमतप्रवृत्तिनिमित्तस्य तत्र भङ्गं प्रदर्शयति—न च तान्यस्त्राणीति । ननु मिथ्याभूतेन्द्रजाले मायापदप्रयोगान्मिथ्यात्वं प्रवृत्तिनिमित्तमिति युक्तमित्यत्राह—इन्द्रजालादिस्थलेऽपीति । अनुगते प्रवृत्तिनिमित्ते सम्भवत्यननुगतस्य मिथ्यात्वस्य प्रवृत्तिनिमित्तताश्रयणमयुक्तमिति भावः । विचित्रार्थकरत्वेन विस्मयनीया प्रकृतिर्मायाशब्देन निर्दिश्यत इत्यत्र श्रौतं संवादमाह—श्रुतिश्चेति । प्रकृतेर्मिथ्यात्वमेवानया प्रतीयत इति किं न स्यादित्यत्राह—पूर्वं प्रस्तुतां मायामेव हीति ।

श्रुतेः। लोहितादिशब्दैः रजःसत्त्वतमोगुणा उक्ताः। "सेयं गुणमयी माया" "ममाङ्ग माया गुणमय्यनेकधा" "प्रकृतिर्गुणसाम्यं वै" "स एवेदं ससर्जाग्रे

---

यत्तु मायाशब्दस्य सदसदनिर्वचनीयार्थताश्रयणं तत्तु मायामृगादिषु बाधितत्वादननुगतम्। नहि मायामृगादिः शुक्तिरजतवन्मिथ्या, "मायामृगो हि मारीचसृष्टिरेव हि तात्त्विकी। न चेद्रामशरेणास्य निधनं नोपपद्यते॥" न वा मिथ्याभूते शुक्तिरजतादौ मायाशब्दः प्रयुज्यते। ननु-"नासदासीन्नो सदासीत्तदानीं तम आसीत्" इति श्रुत्या सृष्टेः प्राक् सदसती निषिध्य तमोमात्रसद्भावनिरूपणाद्वियदादिविभ्रममूलभूतं तमःशब्दवाच्यं सदसद्विलक्षणं सिद्धम्। सेयं माया "मायां तु प्रकृतिं विद्या"दित्यत्रोच्यते। अत एव "अनृतेन प्रत्यूढा" इति श्रुत्यैकार्थ्यमपि। मैवम्। नहि कालविशेषे सदसतोः प्रतिषेधमात्रेण भवदभिमतमनिर्वचनीयत्वं तमसि सिद्ध्येत्। सदसदुभयशून्ये समयविशेषे सता सदसदुभयविलक्षणेनैव भाव्यमिति चेत्सत्यम्। इह समयविशेषे प्रतिषिध्यमाने सदसती के इति पर्यालोचनीयम्। यदि पारमार्थिकनिरुपाख्ये स्यातां तदा तयोः प्रतिषेधपूर्वकं तमोमात्रस्य सत्तावर्णनात्तमसो भवदभिमतमनिर्वचनीयत्वं सिध्येत्। न हि तयोरिह निषेधः, सतः पारमार्थिकस्य ब्रह्मस्वरूपस्य तदानीमपि सत्त्वात्। असतो निरुपाख्यस्य शशशृङ्गस्य कदाप्यसत्त्वेन कालविशेषे तन्निषेधानुपपत्तेः। कालविशेषे निषेधो हि कालान्तरे सम्बन्धमवगमयति। यदि च सदसच्छब्दाभ्यां व्यावहारिकप्रातिभासिकयोः प्रतिक्षेपः, तदा तमसस्तदुभयविलक्षणत्वसिद्ध्या पारमार्थिकत्वं तुच्छत्वं वाऽऽपतेत्। तस्मान्नानेन वाक्येन भवदभिमतानिर्वचनीयसिद्धिः। सदसतोर्निषेधस्तु व्यष्टिचेतनाचेतनयोर्विलयाभिप्रायेण। यदि

---

पराभिप्रेतप्रवृत्तिनिमित्तस्याननुगतत्वमाह—यत्त्विति। मायामृगो हीति। इदं चाभियुक्तवचनमात्मवचने प्रमाणयन्नात्मनो वाक्येनैकवाक्यतया प्रयुङ्क्ते, वाक्यविन्यासे किमपि वैचित्र्यमेतत्। मिथ्यात्वं न मायाशब्दस्य प्रवृत्तौ निमित्तं भवितुमर्हति, सत्यपि मिथ्यात्वे क्वचिन्मायापदस्याप्रवृत्तेरित्याह—न वेति। ननु श्रुतिरेवानिर्वचनीयत्वलक्षणमिथ्यात्वं ग्राहयति प्रकृतेरित्याशङ्कते—नन्वित्यादिना। प्रतिपदमर्थपर्यालोचने न भवदभिमतोऽर्थः पदारूढ इति प्रकृतेरनिर्वचनीयतां श्रुतिर्न ग्राहयतीत्याशयेनाह—मैवमित्यादिना। ननु तात्पर्यवृत्त्या तमसोऽनिर्वचनीयत्वलाभ इत्याशङ्कते—सदसदुभयशून्ये समयविशेष इति। सत्यमित्यर्धाङ्गीकारे। सदसदुभयविलक्षणत्वप्रतीतावभ्युपगमः। सदसत्पदाभ्यां विवक्षितः कोऽर्थ इति तु विवादः। यदीति। निरुपाख्यम्—तुच्छम्। स्याताम्—प्रतिषिध्यमाने स्यातामिति सम्बन्धः। कालविशेषे तन्निषेधानुपपत्तेरिति। तदानीं नासीदिति हि श्रूयत इति भावः। इदमुपलक्षणम्—निरुपाख्यस्य निषेधायोगश्चेति। निषेधानुपपत्तिं परिहरन् शङ्कते—यदि चेति। कालविशेषसम्बन्धलक्षणनिमित्तयोगेन सच्छब्दो व्यावहारिकम्, असच्छब्दस्तु तदन्यं तत्सजातीयं प्रातिभासिकमवगादय इति भावः। यद्यपि निषेधो घटेत, अथाप्यभिमतार्थासिद्धिर्दूषणमित्याह—तदेति। ननु श्रौतो निषेधः सङ्गमयितव्यः? सत्यं सङ्गमयितव्यः, सङ्गमनप्रकारश्चाध्याक्षेपोऽयमित्याह—सदसतोर्निषेधस्त्विति। ननु "नासदासीत् नो सदासी"दित्यत्र श्रूयमाणं

भगवानात्ममायया । सदसद्रूपया चासौ गुणमय्याऽगुणो विभु"रित्यादिभाग-

चास्य वाक्यस्य सदसतोः कालविशेषेऽसत्त्वप्रतिपादने न तात्पर्यम्, किन्तु तमसः सदसद्वैलक्षण्यज्ञापनमात्र एव तात्पर्यम्, तम आसीत् तच्च न सत् नाप्यसदित्येव वाक्यतः परिनिष्पन्नो बोध इति विभाव्यते । तदा "नासदासीन्नो सदासी"दितिश्रुतिशैली भग्नस्वरसा भवेत् । स्वरसतः कालविशेषे सदसतोः प्रतिषेधो ह्यवगम्यते । तथा तात्पर्यग्राहकं भवदाग्रहमन्तरेण न किञ्चिदुपलभ्यते च । किंच–यद्यनेन वाक्येन तमसोऽनिर्वचनीयत्वं सिद्ध्येत्, "अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते" इत्यनेन शुद्धात्मस्वरूपस्यैवानिर्वचनीयत्वं किं न गम्येत । "अनृतेन प्रत्यूढा" इत्यनेनापि न तत्सिद्धिः । ऋतशब्दो ह्यनुकूलकर्मपरः, अनृतशब्दश्च तद्विरोधिप्रतिकूलकर्मपरः, "यथा पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाती"त्यनन्तरम् "एवमनृतादात्मानं जुगुप्से"दिति पुण्यप्रतिशिरस्तयानृतशब्दप्रयोगात् । "ऋतं सत्यं तथा धर्म" इत्यादिवचनाच्च । अत एव च ऋतशब्दस्य सुकृतफले "ऋतं पिबन्ता"वित्यत्र निर्देशः । इत्थं च मुमुक्ष्वपेक्षया पुण्यस्यापि पापत्वेनेहानृतशब्देन पुण्यं पापं वा मोक्षविरोधि कर्मसामान्यमुच्यते । कर्मणा प्रत्यूढास्तत्तु न विदन्तीति वाक्यार्थः । तस्मान्नानेनानिर्वचनीयसिद्धिः ।

यच्च सदसद्विलक्षणत्वरूपमनिर्वचनीयत्वमभिमन्यते भवता, तदनिर्वचनीयमेव । नहि जगति किमपि सदसद्विलक्षणं, प्रतीयमानं हि सर्वमस्तीति वा नास्तीति वा प्रतीयते, न ह्यतोऽ-

तिङन्तमविवक्षमित्याशयेन शङ्कते—यदि चास्येति । श्रूयमाणस्य तिङन्तद्वयस्य विवक्षाविधुरत्ववर्णनं ह्युन्मर्यादं श्रुतिशैल्या भञ्जकम्, अथापि तत्कल्पनमगतिकल्पनमेवेत्याशयेन समाधत्ते—तदेत्यादिना । सति तात्पर्ये न्याय्यं नाम तदित्यत्राह—तथेति । ननु–सामान्यशब्दानामर्थविशेषाश्रयणं हि यथासम्भवं कार्यम्, कस्य क सम्भव इत्यत्र तु गमकं विचार्यम्; तत्रोपपत्त्यनुपपत्त्यपेक्षितानपेक्षितविवेचनं प्रथमतः कर्तव्यम्, प्रकरणादि च पर्यालोचनीयम्, तदेवंस्थितेऽर्थावधारणप्रकारे सारूप्यमात्रेण वचनानामन्यान्यप्रकरणगतानामविशेषेणार्थावबोधकत्वापादनं नैव घटेत, तदुपदर्शितं गीतावचनमात्मनः शुद्धं स्वरूपमवगमयत्स्थूलसूक्ष्मविभागापन्नकार्यकारणसङ्घातलक्षणगुणमयाद्भावाद्वैलक्षण्यं "न सत्तन्नासदि"त्यनेनावगमयति । "नासदासीन्नो सदासीत्तदानीं तम आसी"दिति च वचनं तु प्रलयावस्थां निरूपयत्तत्परवाक्यान्तरेणैकार्थावबोधनेनैव स्वार्थे प्रामाण्यमर्हति, वाक्यान्तरं च तथाविधं "अनृतेन प्रत्यूढा"इति । असन्दिग्धार्थं चानृतेनेति पदं तदैकार्थ्यादनिर्वचनीयपरमेवेदं भवितुमर्हतीत्याशङ्कां निराकरोति—अनृतेनेति । नन्वनृतशब्दस्य प्रतिकूलकर्मपरत्वं न क्वचिदपि दृष्टमित्यत्राह— यथेति ।

विवक्षितमनिर्वचनीयत्वमेवानुपपन्नं, उपपन्नो हि शब्दार्थो भवितुमर्हतीत्याह—यच्चेत्यादिना । तदनिर्वचनीयमेवेति । तद्दुर्निरूपमित्यर्थः । दुर्निरूपतामुपपादयति—नहीत्यादिना । लौकिको ह्यर्थो लौकिकप्रमाणावसेयस्वभावः, लौकिकप्रमाणतश्चास्तित्वनास्तित्वाभ्यां विलक्षणो न कश्चित्स्वभावो लौकिकेषु गवादिष्ववगम्यते, तत्कथमेतद्विपरीतं किञ्चित्कस्यचिल्लौकिकस्य स्वभावः स्यादित्याशये-

वतोक्तेश्च। गुणानां लक्षणानि मोक्षधर्मेपूक्तानि—"आनन्दश्च तपः शान्तिः

---

न्यथा। तथाच प्रतीतावनुल्लिख्यमानः कोऽयमाकारः सदसद्विलक्षणत्वं, प्रतीत्यनुरोधेन हि विषयव्यवस्था, नीलपीताद्याकारप्रतीतौ नीलपीतादेरेव हि विषयता, न तु ततो विलक्षणस्य। तस्मात्सदसद्वैलक्षण्यं नैव सिद्ध्येत्। प्रत्युत–अस्तीतिप्रतीतेः सदाकारता, बाधादसदाकारता च स्यात्। तथा चोक्तमभियुक्तैः—"नासत्प्रतीतेर्बाधाच्च न सदित्यपि यन्न तत्। प्रतीतेरेव सत्किं न बाधान्नासत्कुतो जगत्" इति। सत्त्वासत्त्वयोर्विरुद्धयोरेकत्र समावेशासम्भवाद्घटादिषु तदुभयसमावेशप्रसङ्गभिया सदसद्वैलक्षण्यं घटादिष्वङ्गीकार्यमिति चेत्। कुतस्तदुभयसमावेशप्रसङ्गः। प्रतीतिबाधाभ्यामिति चेत्। का प्रतीतिः? को बाधः? घटोऽस्तीति प्रतीतिः, घटो नास्तीति च बाधः। हन्त!! तर्हि तथा प्रतीतेरुभयाकारत्वमेव तेष्वास्थेयम्। अविरोधश्चोभयोः समर्थनीयः। एकतरप्रतीतेरन्यथात्वं वा कल्पयित्वैकतराकारता वाऽऽस्थेया। नहि प्रतीतिद्वयमनुसरतः प्रतीतिद्वयविपरीताकारकल्पनं योग्यम्। वस्तुतो घटादिषु निरुपाधिनिषेधासम्भवादस्तिनास्तित्वे अवस्थाविशेषरूपे, ते चैकत्र कालभेदेन सम्भवन्तः।

ननु—अनिर्वचनीयानभ्युपगमे शुक्तौ रजतप्रतीतिः कथमुपपद्येत। न ह्यसतः ख्यातिः। तथा चेन्माध्यमिकसमयसमावेशः। सतश्च न पश्चात्तनबाधो युज्येत। मैवम्। ख्यातिबाधयोर्वैशेषिकाद्याश्रितान्यथाख्यात्यादिपक्षाश्रयणेनैवोपपत्तिसम्भवेऽप्रामाणिकानिर्वचनीयकल्पनमनुचितमेव। ननु–अन्यत्र सतोऽन्यत्र कथं ख्यातिरिति चेत्, दोषवशात्तदुपपत्तेः। दोषस्य तथात्वमदृष्टमिति चेत्, दोषस्यानिर्वचनीयावभासकत्वं वा क्व दृष्टमन्यत्र भवदभिनिवेशात्। शुक्तित्वप्रकारिकाऽविद्या चाकचक्यादिसन्दर्शनसमुद्बोधितसंस्कारसध्रीचीना दोषसमवहिता रजतरूपार्थाकारेण रजतज्ञानाभासाकारेण च परिणमतीति

---

नाह—नहीत्यादि। अस्तीति च नास्तीति चेति। एतदन्यतररूपेणेत्यर्थः। प्रतीत्यनुरोधेन हि विषयव्यवस्थेति। अन्यथाऽतिप्रसङ्गं सूचयन्नाह—नीलपीतेतेति। नाभिमतासिद्धिः केवलम्, अपि त्वनभिमतापत्तिश्चेत्याह—प्रत्युतेति। बाधादिति। नास्तीति प्रतीतेरित्यर्थः। प्रतीतेरिति। अस्तीति प्रतीतेरित्यर्थः। ननु–अस्तीतिप्रतीत्या नास्तीति प्रतीतेर्बाधादसद्वैलक्षण्यं, नास्तीतिप्रतीत्याऽस्तीतिप्रतीतेर्बाधात्सद्वैलक्षण्यं च सिद्ध्यतीति सदसद्विलक्षणतैव सिद्ध्यति, तन्न प्रतीतिमुल्लङ्घ्यार्थस्वभावोऽस्माभिरादृतः, प्रतीतिद्वयस्य मिथो बाधमपर्यालोच्य यथाप्रतीति सदसदुभयात्मतैव किं न स्यादिति शङ्काया नावकाश इत्यत्राह—वस्तुतं इति। निरुपधिनिषेधासम्भवादिति। अयमिदानीं नास्ति इह नास्ति इत्थं नास्तीत्येव वस्तूनां निषेधो लोके दृष्टः, नतु कालाद्यन्यतमोपाधियोगं विना निषेधः, असम्भवात्। तथा च घटादौ जायमानयोरस्तिनास्तीतिप्रतीत्योर्मिथः को विरोधः, उपाधिभेदेन तयोः प्रतीत्योः सम्भवादिति भावः।

ननु भ्रमानुपपत्तेरनिर्वचनीयं सिद्ध्यतीत्याह—नन्विति। न ह्यसतः ख्यातिरिति। चक्षुषोऽसन्निकृष्टग्रहणासामर्थ्यात्कथमिदं रजतमिति भ्रमो वा चाक्षुषः स्यादिति भावः। वैशेषिकादीति। आदिशब्दान्मीमांसकपरिग्रहः। अन्यथाख्यात्यादीति। आदिशब्दादख्यातिपरिग्रहः। नन्वसन्नि-

प्राकाश्यं . पुण्यशीलता । सन्तोषः श्रद्दधानत्वमार्जवं त्यागशीलता । ऐश्वर्यं चेति

हि भवदीया प्रक्रिया । इदं परं भवतोऽधिकं, यन्मिथोविरुद्धप्रतिपन्नाकारद्वयवैलक्षण्यकल्पनम् । तस्मादनिर्वचनीयमनिर्वचनीयमेव ।

सेयं मायाशब्दाभिलप्या प्रकृतिः सत्त्वादिगुणत्रयैकनिरूपणीयेत्याह—त्रिगुणात्मेति । त्रयो गुणाः—सत्त्वरजस्तमांसि, तान्येव आत्मा—स्वरूपनिरूपकधर्मो यस्याः । आत्मशब्दः स्वरूपपर एव वा । त्रयो गुणा यस्येति तु बहुव्रीहिः । साङ्ख्यास्तु—सत्त्वरजस्तमांस्येव समुदितानि प्रकृतिः । गुणत्वेन व्यवहारस्तु परार्थैकस्वभावत्वात् । सर्वाप्यस्याः प्रवृत्तिः पुरुषार्थैव खलु—"नानाविधैरुपायैरुपकारिण्यनुपकारिणः पुंसः । गुणवत्यगुणस्य सतस्तस्यार्थमपार्थकं चरति ॥" पुरुषपशुबन्धनत्रिगुणरज्जुरूपत्वाद्वा गुणशब्देन निर्देश इत्याहुः । तदसत् । प्रकृतिगुणत्वेन सत्त्वादीनां स्मरणात् । तथा च वचनानि—"कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ।" "प्रकृतेः क्रियमाणानि गुणैः" "प्रकृतेर्गुणसम्मूढाः" "प्रकृतिं च गुणैः सह" "गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान्" "सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैः" "अस्यैवयाऽयं प्रकृतेर्गुणानाम्" "गुणेषु सत्सु प्रकृतेः" "सत्त्वं रजस्तम इति स्थित्युत्पत्त्यन्तहेतवः" "सर्गादौ प्रकृतिर्ह्यस्य कार्यकारणरूपिणी" "सत्त्वादिभिर्गुणैर्धत्ते" "ममाङ्ग माया गुणमय्यनेकधा विकल्पबुद्धीः स्वगुणैर्विधत्ते" "एते प्रधानस्य गुणास्त्रयः पुरुषसत्तम !" "प्रकृतेस्त्रिगुणायास्तु" इत्यादीनि । गुणमयत्वनिर्देशस्तु प्राचुर्याभिप्रायकः ।

मायाकार्येषु महदादिष्वेकैकगुणप्राचुर्येऽपि गुणत्रयवत्त्वस्यानपायात्तद्व्यावृत्ताकारमाह—तम इति । महदादिनिखिलपरिणाममूलभूतमविषमगुणत्रयं निस्तरङ्गार्णवसमं कारणावस्थं प्रधानं तमःशब्देनोच्यते, "महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते" इति लयश्रुत्या तमसि लयपर्यवसानश्रवणात् "नासदासीन्नो सदासीत्तदानीं तम आसीत्" इति सृष्टेः प्राक् तमसः स्थितिश्रवणाच्च । प्रलये मूलप्रकृतौ निमग्नस्याचित्कल्पस्य जीवस्य गाढान्धकारगतस्येव नामरूपविवेचनवैधुर्येण तस्यास्तमस्त्वेनोक्तिः ।

सेयं तमःशब्दवाच्या माया न कापिलाभिमतप्रकृतिवत्स्वतन्त्रा, किन्तु ब्रह्मात्मकतया

कृष्टस्य कथं चाक्षुषे विषयतेत्याशयेनाशङ्कते—नन्वन्यत्र सतोऽन्यत्रेति । दोषवशादिति । प्रमात्मकचाक्षुष एव सन्निकर्षनियमः, भ्रमे तु दोष एव हेतुः ख्याताविति भावः ।

गुणेभ्योऽनन्या प्रकृतिरिति भ्रमं व्यावर्त्तयितुं समासार्थमाह—त्रयो गुणा इति । आत्मशब्दस्य स्वरूपपरत्वं भूरिप्रयोगानुगुणमित्याशयेनाह—आत्मशब्दः स्वरूपपर एव वेति । समासविशेषेणाभिप्रेतं कापिलपक्षनिरासमुपपादयितुं कापिलानां मतमनुवदति—साङ्ख्यास्त्विति । समुदितानीति । परस्परमविनाभूतानीत्येतत् । उद्भवानुद्भवलक्षणवैषम्यरहितानीत्यपि बोध्यम् । वैषम्ये हि विकृतिरुच्यते । तथा च वचनानीति । बहुवचनाद्बहूनां वचनानि नः प्रमाणमिति भावः ।

*तमःशब्दस्य प्रयोजनमाह—मायाकार्येष्वित्यादिना ।* प्रकृतेस्तमःशब्दवाच्यत्वे प्रमाणमाह—महानव्यक्त इत्यादिना । तमःशब्दप्रवृत्तौ निमित्तमाह—प्रलये मूलप्रकृताविति ।

सत्त्वस्य गुणा दश निसर्गजाः॥ अस्थिरत्वमकार्पण्यं सुखदुःखोपसेवनम्। भेदः

परतन्त्रैवेत्याह—कृष्णशक्तिरिति। कृष्णस्य सकलजगत्कारणस्य परस्य ब्रह्मणः शक्तिः-कार्योपयोग्यपृथक्सिद्धविशेषणम्। व्यवह्रियते च दाहोपयोगी कश्चनापृथक्सिद्धो धर्मो वह्नेः शक्तिरिति। मायायाश्च परब्रह्मणः शरीरत्वेनापृथक्सिद्धविशेषणत्वात्, जगत्सृष्ट्युपयोगित्वाच्च तच्छक्तित्वम्। शरीरशरीरिभावश्चान्तर्यामिब्राह्मणे सुप्रसिद्धः। "बहु स्यां प्रजायेये"ति बहुभवनसङ्कल्पपूर्वकं जगत्सृजतः परस्य ब्रह्मणो यथासङ्कल्पं बहुभवनरूपे सर्गे मायाया उपयोगो बोध्यः। स्वरूपत एकस्यापि परस्य ब्रह्मणः शरीरभूतचिदचिद्द्वारा हि बहुभवनम्। अत एव "परस्य ब्रह्मणः शक्तिस्तथेदमखिलं जगत्" इति स्मर्यते।

एतेन—कापिलानां स्वतन्त्रप्रधानकारणवादो निरस्तः। ते ह्येवमभिमन्यन्ते—अस्ति नामैकमव्यक्तमखिलोपादानं स्वतन्त्रं त्रिगुणस्वरूपम्, अन्यथा विचित्रजगदनुपपत्तेः, सुखदुःखमोहात्मकतया विचित्रमिदं जगद्धि सरूपमेव कारणमपेक्षते, मृत्स्वभावान्वित घटादयो हि सरूपमेव मृद्द्रव्यं कारणमपेक्षन्ते, स्वं रूपं चात्र सत्त्वादि, सत्त्वादीनामेव सुखाद्यात्मकत्वात्, सुखाद्यात्मकता च जगतः प्रसिद्धैव, काञ्चनादिकमुपलभ्यमानं हि सुखात्मकं भवति, तदेव ह्रियमाणं दुःखात्मकम्, उदासीनस्य तदेवोपेक्षाविषयत्वेनाप्रवर्तकतया मोहात्मकम्, तस्मादखिलमेव त्रिगुणात्मकमुपलभ्यते। अतस्तदुपादानेनापि तत्स्वरूपेणैव भाव्यमिति सिद्धम्। तच्च न महदादिकं, परिमितत्वात्। परिमिता हि न प्रभवन्ति निखिलोपादाने, नहि मृदादयः परिच्छिन्नाः प्रभवन्ति सर्वत्र कार्ये, तस्मादपरिमितमविषम-

कृष्णशक्तिरितिविशेषणनिर्देशस्य प्रयोजनमाह—सेयमिति। शक्तिशब्दार्थमाह—कार्योपयोग्यपृथक्सिद्धविशेषणमिति। तस्य तदर्थत्वे व्यवहारं प्रमाणयति—व्यवह्रियते चेति। प्रकृतिर्ब्रह्मणः कस्मिन्कार्ये उपयुज्यते, कथं वा तस्य साऽपृथक्सिद्धविशेषणं भवति? तदेतदुपपादयति—मायायाश्चेत्यादिना।

कृष्णशक्तिरित्यनेन सूचितं स्वतन्त्रप्रधानपक्षनिरासं विस्तरेणोपपादयन्ननुवदति स्वतन्त्रप्रधानकारणवादं कापिलम्—ते ह्येवमभिमन्यन्त इत्यादिना। अनुमानैकगम्यत्वं प्रधानस्योपपादयति—अस्ति नामेत्यादिना। सुखदुःखमोहात्मकतया विचित्रमिति हेतुगर्भं विशेषणम्, तदयं हेतुनिर्देशः। जगदिति पक्षनिर्देशः। सरूपमेव कारणमपेक्षत इति साध्यनिर्देशः। मृत्स्वभावान्वितघटादयो हि सरूपमेव मृद्द्रव्यं कारणमपेक्षत इत्युदाहरणनिर्देशः। अयमत्र प्रयोगः—जगत् सुखदुःखमोहात्मकोपादानकं सुखदुःखमोहात्मकत्वात्, यत्कार्यं यदात्मकं तत्तदात्मकोपादानकं, यथा मृदात्मको घटो मृदात्मकपिण्डोपादानक इति। ननु स्यादेतेन सुखदुःखमोहात्मकं किमप्युपादानम्, तथापि भवदभिलषितगुणत्रयात्मनस्तु न सिद्धिरित्यत्राह—स्वं रूपं चात्रेति। सुखादयो हि सत्त्वादीनामेव क्रमशः स्वभावः, तदपर्जनीया सुखाद्यात्मनां सत्त्वाद्यात्मतेति भावः। असिद्धिशङ्कां निराकरोति—सुखाद्यात्मकता चेत्यादिना। ननु किं प्रधानेन, महत्तत्त्वेन सुखदुःखमोहात्मना सिद्धेनैवास्य जगतो निष्पत्तेरित्यत्राह—तच्चेति। परिमितत्वादिति। यत्परिमितं तदुपादेयमिति नियमेन परिमितस्यास्या-

पुरुषता चैव कामो नानामदस्तथा । मत्सरश्चातिवादश्च नवैते रजसो गुणाः ॥"

सत्त्वादिसमुदायरूपं "अजामेका"मिति श्रुतिसम्प्रतिपन्नमखिलोपादानम् । गुणसाम्यतश्च महदादिकार्यवर्गतो विशेषः । एतच्च जगन्निर्माणे न कञ्चिदभिज्ञमपेक्षते, नहि क्षीरं दधितया परिणमदधिष्ठातारमपेक्षते, न वा वारिदविसृष्टं वारि नालिकेरतालादिविविधरसात्मना परिणमदधिष्ठातारमपेक्षते, स्वतःप्रवृत्तिशक्तिमतः परिणामैकशीलस्यास्य विविधपरिणामे का वाऽन्यस्य प्राज्ञस्याधिष्ठातुरपेक्षा, तस्मादव्रह्मात्मकं स्वतन्त्रमेवेदं जगत्कारणमिति ।

श्रुतिस्मृतिशतक्षोभादुपपत्तिपराहतेः । वेदाचार्यो वादमेनं दूरीचक्रे श्रुतेः पथः ॥
श्रुतयस्तावत्सर्वज्ञस्य सर्वशक्तेः परस्य ब्रह्मणो जगत्कारणत्वं वर्णयन्ति—"यः सर्वज्ञः सर्ववित् यस्य ज्ञानमयं तपः, तस्मादेतद्ब्रह्म नामरूपमन्नं च जायते" "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" "सोऽकामयत बहु स्यां प्रजायेयेति स तपोऽतप्यत स तपस्तप्त्वा इदं सर्वमसृजत यदिदं किञ्च, तत्सृष्ट्वा तदेवानुप्राविशत्, तदनु प्रविश्य सच्च त्यचाभवत्, निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च" "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म" "आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत्, स ईक्षत लोकान्नु सृजा इति, स इमाँल्लो-

प्युपादानान्तरापेक्षया न महत्सिद्धिमात्रेणार्थसिद्धिरिति भावः । पक्ष एव क्रोडीकारान्नार्थान्तरप्रसङ्ग इति यावत् । अजामेकामिति । "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्" । अयमर्थः—सत्त्वरजस्तमोलक्षणामकार्यभूतां सरूपविविधोपादानभूतामेकां प्रकृतिशब्दवाच्यामिति । ननु जडायाः प्रकृतेः कथमधिष्ठातारं विना कार्याधानसामर्थ्यं, विना प्रवृत्तिं निष्पादनानुपपत्तेः, प्रवृत्तिर्ह्यजडस्वभाव इति शङ्कां निरस्यन्नाह—स्वत इति । प्रवृत्तिरजडस्यैवेति तु विपरीतग्रहः, प्रवृत्तेर्विकाराविनाभूततया पुरुषधर्मत्वे पुरुषस्य विकारप्रसङ्गात्, तत् प्रवृत्तिः प्रधानस्यैव स्वभाव इत्यधिष्ठात्रनपेक्षं परिणामसम्भवात्स्वतन्त्रमेवेदं जगदुपादानमित्याशयः ।

एवमनूद्य कापिलं निरसितुमारभते, तत्र निरासप्रकारं सङ्गृह्णाह कारिकया—श्रुतीति । वेदाचार्यो भगवान्व्यासः प्रधानकारणवादमेनं श्रुतिशतस्य स्मृतिशतस्य च क्षोभप्रसङ्गभियोपपत्तिविरोधाच्च श्रुतेर्मार्गाद्दूरीकृतवान् । स्वतन्त्रप्रधानकारणवादो वेदविरुद्धत्वादनुपादेय इत्याहेति यावत् । सर्वज्ञस्येति निमित्तकारणत्वोपयोगि विशेषणम् । सर्वशक्तेरित्युपादानकारणत्वोपयोगि विशेषणम् । यस्माद्बहुभवनेऽप्यस्ति शक्तिः । कारणत्वं—निमित्तत्वोपादानत्वोभयरूपम् । तस्मादेतद्ब्रह्म नामरूपमन्नं च जायत इति । तस्मात्—परमात्मनो हेतोः, एतद्ब्रह्म—प्रधानं जायते—महदादिरूपेण, नामरूपमन्नं च जायते—देवो मनुष्य इत्यादि नामरूपं, तथा पृथिव्यादिमहाभूतं च जायते । एतेन समष्टिव्यष्टिसृष्टी उक्ते । स तपोऽतप्यतेति । तपः—स्रष्टव्यालोचनम् । सदिति चेतनः, असदित्यचेतन उच्यते । निरुक्तं चानिरुक्तं चेति । निरुक्तं—विकारविभेदेन नामनिरुक्तिभेदमापन्नमचिज्जातम् । अनिरुक्तं—विकाराराहित्येन निरुक्तिरहितं चेतनजातम् । निलयनम्—आत्मतया प्राकृतपरिणामविशेषस्याधारभूतं जीवजातम् । ततोऽन्यदनिलयनमचिज्जातम् । विज्ञानं—ज्ञानघनं जीवस्वरूपम् । ततोऽन्यज्जडतत्त्वमविज्ञानम् । यत्प्रयन्त्यभिसंविशन्तीति । अभिसंविशन्ति सन्ति यत्प्रयन्ति । प्रयन्तीति

"तमो मोहो महामोहस्तामिस्रश्चान्धपञ्चमः। निद्रा प्रमाद आलस्यमित्यष्टौ तमसो गुणाः॥" इति। एतत्प्रपञ्चस्तु श्रीभागवतैकादशस्कन्धाज्ज्ञेयः। तमः–गाढा-

---

क्रानसृजत" "ब्रह्म वा इदमग्र आसीत्" "सदेव सोम्येदमग्र आसीत्" "तदैक्षत बहु स्यां प्रजायेय" "किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः, ब्रह्म वनं ब्रह्म स वृक्ष आसीत् यतो द्यावापृथिवी निष्टतक्षुः मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्" "कर्त्तारमीशं पुरुषं ब्रह्मयोनिं" इति। तथा स्मृतयश्च—"आसीदिदं तमोभूतमप्रज्ञातमलक्षणम्। अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥" "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुः सकलाः प्रजाः। अप एव ससर्जादौ तासु वीर्यमवासृजत्॥" "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा।" "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्त्तते॥" "कुतः सृष्टमिदं सर्वं जगत्स्थावरजङ्गमम्। प्रलये च कमभ्येति तन्मे ब्रूहि पितामह !॥" "नारायणो जगन्मूर्तिरनन्तात्मा सनातनः। तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम !॥ अव्यक्तं पुरुषे ब्रह्मन्निष्क्रिये सम्प्रलीयते। विष्णोः सकाशादुत्पन्नं जगत्तत्रैव च स्थितम्॥ स्थितिसंयमकर्त्ताऽसौ जगतोऽस्य जगच्च सः॥" इति। एवमादिश्रुतिस्मृतिशतविक्षोभसप्रसङ्गभिया प्रधानकारणवादः प्रत्याख्यातः सूत्रकृता—"ईक्षतेर्नाशब्द"मित्यादिना। "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गा"दित्यादिना च। अनुपपत्तिश्च निरू-

---

मोक्षः, अभिसंविशन्तीति लय इति वा भिदा। ब्रह्म वनमित्यधिष्ठानकारणत्वं, ब्रह्म स वृक्ष इत्युपादानत्वं, ब्रह्माध्यतिष्ठद्भुवनानि धारयन्निति निमित्तत्वं चोक्तं भवति। ब्रह्मयोनिं–ब्रह्मणः–प्रधानस्य महदादिरूपेण भवत उपादानम्। अथ स्मृतिशतक्षोभमाह—तथेत्यादिना। आसीदिदमित्यादि मानवं वचः। अस्यायमर्थः—इदं–विविधनामरूपविभागापन्नमिदं जगत्। पुरा तमोभूतमासीत्–"महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयत" इतिश्रुत्युक्तेन प्रकारेण तमसि लयात्तमोभूतमासीत्। अप्रज्ञातम्–अपरोक्षज्ञानागोचरम्। अलक्षणम्–शब्दस्पर्शादिलक्षणहीनम्। अप्रतर्क्यम्–अनुमानागोचरम्। अविज्ञेयम्–विभज्य ज्ञातुमशक्यम्, नीरक्षीरवत्परब्रह्मणाऽविभागं प्राप्ततया तथाविधमिति यावत्। "तमः परे देव एकीभवती"ति हि श्रूयते। प्रसुप्तमिव सर्वतः–क्षेत्रज्ञानां सतामपि प्रलयसमये सर्वव्यवहारमूलभूतदेवाद्यभिमानप्रसरणापायेन सुषुप्ताविवाबोधतया प्रसुप्तमिव सर्वतः। ततः–अथ सर्गकाले प्राप्ते। स्वयंभूर्भगवान्–अनन्याधीनसत्ताकः परमात्मा नारायणः। व्यञ्जयन्निदं–जगदिदं व्यञ्जयितुम्। महाभूतादिवृत्तौजाः–पृथिव्यादिमहाभूतेषु प्रवृत्तसङ्कल्परूपज्ञानतेजाः सन्। अव्यक्तः प्रादुरासीत्–अव्यक्तावस्थः प्रादुरभवत्। महत्तत्त्वाव्यवहितपूर्वावस्थशरीरकः प्रादुर्बभूवेत्यर्थः। शरीरात्स्वात्–जीवसंसृष्टाचिद्विशेषरूपात्। वीर्यम्–त्रिवृत्करणजनिताण्डोत्पादनशक्तिम्। जगन्मूर्त्तिरिति। जगत् मूर्त्तिः–शरीरं यस्य सः। जगच्च स इति। शरीरशरीरिभावनियन्धनमिदं सामानाधिकरण्यम्। सूत्रकृता–बादरायणेन। जगत्कारणत्वप्रतिपादकेषु वेदान्तवाक्येषु यत्र सत्रेक्षतिधातुश्रवणान्नान्याद्यनेकरसमञ्जसमितेश्च प्रधानकारणवादस्य मास्तु नाम

न्धकारगतस्येव प्रलये प्रकृतौ विलीनस्य जीवस्याचित्कल्पावस्थाप्राप्त्या नामरू-

पिता—"रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च" इत्यादिना। अयं भावः—जगतो विचित्ररचना येयं सा खल्वधिष्ठातारमभिज्ञमनपेक्ष्याचेतनभूतया प्रकृत्या नोपपद्यते। नहि किमपि कार्यं स्वाभिज्ञानधिष्ठिताचेतनोपादानकं दृष्टम्। घटादिकं हि स्वाभिज्ञकुलालाधिष्ठितमृदुपादानकं दृश्यते। यदपि पयोऽम्बुप्रभृत्यधिष्ठातारमनपेक्ष्यैव कार्यविशेषारम्भाय भवतीति, तदपि न, तत्राप्यस्त्येव प्राज्ञोऽधिष्ठाता, अन्यथा तदनुपपत्तिरेव, तस्माद्गुणसाम्यावस्थातो गुणवैषम्यं प्रापयितुरभावाद्रचनानुपपत्तिरपरिहार्या।

ननु—यद्यप्यचेतना प्रकृतिः, तथापि यथा दृक्शक्तिविकलोऽप्यन्धः स्वयं गमनशक्तिमान् गमनशक्तिविधुरस्यापि पङ्गोरन्धस्य संश्लेषमात्रेण सपदि समुत्थाय प्रवर्त्तते क्वचित्कर्मणि, तथा प्रकृतिरचेतनाऽपि चेतनसंश्लेषमात्रेण प्रवर्त्तते, तस्मात्प्रकृतिपुरुषसंयोगतो जगत्सर्ग उपपद्यते। मैवम्। प्रकृतेः पुरुषस्य च नित्यतया प्रकृतेश्च विभुत्वेन तयोः संयोगस्य सर्वदैव सत्त्वेन तस्याप्रयोजकत्वात्। अन्यथा सर्वदैव सर्गस्यैव हेतुसत्त्वेन प्रतिसर्गानुपपत्तिः। विषमश्च दृष्टान्तः, नहि सन्निधानादृते पुरुषस्यास्ति कश्चिद्विशेषः, सहि केवलं चेतनो निर्व्यापारः, ज्ञातृत्वादिकमपि न तस्य, तेषां विकाररूपत्वेनाविक्रिये तस्मिन्नसम्भवादिति हि भवदभिमतम्, पङ्गोस्तु मार्गदर्शनतदुपदेशादयो विशेषाः सन्ति, अन्धस्यापि चैतन्यशक्तिमत्त्वेन पङ्गुविहितमार्गोपदेशाद्यवधारणाद्यस्त्येव, प्रकृतौ तु न कश्चिद्विशेषः।

यत्तु—प्रकृतिसान्निध्यात्प्रकृतिधर्माध्यासः पुरुषे भवति, ततोऽयं सर्ग इति। तदप्यसङ्गतम्। अस्मिन्नध्यासे हेतुभूतस्य सान्निध्यस्य दुर्निरूपत्वात्। यदि सान्निध्यं संयोगमात्रं तत्तु सर्वदाऽस्त्येवेति स एव दोषः। विकारविशेषरूपं तदिति वक्तुं न शक्यते, सर्वस्य विकारस्याध्यासहेतुकत्वेनाध्यासे तस्य हेतुत्वासम्भवात्। तस्मादानुमानिकप्रधानकारणवादोऽनुपपन्न एवेति। यच्चोक्तं—सरूपोपादानकेनैव भाव्यमिति, तत्त्वभ्युपगम्यते। ब्रह्मात्मकप्रकृतिकारणत्वाभ्युपगममात्रेण न तत्र काऽप्यनुपपत्तिः। यद्ब्रह्मैव निखिलचेतनाचेतनशरीरकं विशेषणयोः सौक्ष्म्यस्थौल्यरूपावस्थाभेदेन कार्यावस्थां कारणावस्थामप्युपगच्छतीति सारूप्यमेवोपादानोपादेययोरातिष्ठामहे वयम्। तत्सिद्धं मायाशब्दाभिलप्या मूलप्रकृतिः कृष्णशक्तिरिति। श्रूयते च—"ते

श्रुतितात्पर्यगोचरता। अथाप्युपपत्तेरादरणीयोऽयमिति भ्रमं वारयन्नाह—रचनानुपपत्तेश्चेत्यादिना। सूत्रकाराभिप्रेतामनुपपत्तिं निरूपयति—अयं भाव इत्यादिना। स्वाभिज्ञेति। स्वोपादानकारणापरोक्षज्ञानचिकीर्षाकृतिमानिति यावत्। व्यभिचारमाशङ्कते—यदपीति। परिहरति—तदपि नेति।

"पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः" इति कारिकां निरस्यन् शङ्कते—नन्विति। मैवमित्यादिना प्रतिक्षिपति। ननु दृष्टान्ततः सङ्गमितमेवदित्याशङ्कायामाह—विषमश्च दृष्टान्त इति। व्यापारविशेषोऽस्त्येव दृष्टान्ते, दार्ष्टान्तिके तु न व्यापारमात्रमिति महद्वैषम्यमित्याह—नहीत्यादिना।

नन्वस्ति सर्गे प्रयोजको विशेष इत्याशङ्कते—यत्त्विति। प्रकृतिसान्निध्यादध्यासस्ततः सर्ग इत्याश्रयणान्न कश्चिल्लाभः, प्रकृतिपुरुषसान्निध्यात्सर्ग इत्यतो न कश्चिल्लाभस्ते इत्याह—तदप्यसङ्गतमिति। सान्निध्यं—संयोगः? उत विकारविशेषः? इति विकल्प्य दूषयति—अस्मिन्नध्यास इत्या-

पविवेचनाद्यक्षमतापादकत्वेन तम उच्यते। "तदानीं तम आसीत्" "अक्षरं ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति। देवस्य–क्रीडनशीलपरमपुरुषस्य श्रीकृष्णस्य, शक्तिं–लीलारसभूतसर्गनिर्वहणोपकरणभूतां, स्वगुणैर्निगूढां–सत्त्वादिभिर्गुणैर्व्याप्तामिति तदर्थः।

मायायां कृष्णशक्तित्वनिरूपणेन जगत्सृजतः परमात्मनो मायैवोपकरणं न परमाणव इति व्यज्यते। एतेन–परमाणुकारणवादः सुदूरपरास्तः, पराभिमतपरमाणूनामेवासिद्धेः। यत्तु–अनुमानेन तत्सिद्धिः। तथाच प्रयोगाः–विप्रतिपन्नं कार्यद्रव्यारब्धं महत्त्वे सति चाक्षुषत्वात्, चाक्षुषद्रव्यत्वाद्वा, घटादिवत्। विप्रतिपन्नं सावयवं चाक्षुषद्रव्यत्वात्, घटादिवत्। अणुपरिमाणतारतम्यं क्वचिद्विश्रान्तं परिमाणतारतम्यरूपत्वात्, महत्परिमाणतारतम्यवदिति। तत्र प्रथमे कार्यद्रव्यारब्धत्वे सिद्धे तत्र च द्रव्ये कार्यद्रव्यत्वेन सावयवत्वसिद्ध्या, द्वितीये सावयवत्वसिद्धौ तेष्ववयवेषु महदवयवत्वेन सावयवत्वसिद्ध्या, तृतीये दृश्यमाने विश्रान्त्यनुपपत्त्या तत्सिद्धिरिति। तन्न। प्रथमे–विपक्षे बाधकाभावेन हेतोरप्रयोजकत्वात्। नच कार्यद्रव्यानारब्धत्वे चाक्षुषद्रव्यत्वानुपपत्तिः, उद्भूतरूपसम्बन्धादेव तदुपपत्तेः, उद्भूतरूपवतामेव चाक्षुषत्वोपलम्भाद्यथोपलम्भं योग्यतायाः स्वीकार्यत्वात्। ननु–चाक्षुषताप्रकर्षेऽवयवसङ्ख्याप्रकर्षः प्रयोजकतया दृष्टः। लोके हि पदार्थो यथायथाऽधिकावयवस्तथातथा स्फुटतरं दृश्यते, यथायथा चाल्पावयवकस्तथातथा तु न स्फुटं दृश्यते, तथा चावयवसङ्ख्यायाश्चाक्षुषताप्रयोजकत्वं सिद्धम्, यत्प्रकर्षयोः प्रयोज्यप्रयोजकभावस्तयोरपि तद्भावात्, इत्थं च नाप्रयोजकतेति। मैवम्। तयोरपि तद्भावे मानाभावात्। तथापि द्रव्यारब्धत्वमात्रसिद्ध्या कार्यद्रव्यार-

दिना। स्वपक्षे परेणोद्भावितं दोषं परिहरति–यच्चोक्तमित्यादिना। प्रकृतमुपसंहरति–तत्सिद्धमिति। स्वाभिमतब्रह्मात्मकप्रकृतिं श्रुतिर्निदर्शयतीत्याह–श्रूयते चेति। श्रौतं वचनं व्याचष्टे–देवस्येति।

सिसृक्षोरीश्वरस्य परमाणव उपकरणमिति काणादादिपक्षं निरस्यन्नाह–मायायां कृष्णेति। असिद्धेरिति। ननु कथमसिद्धिः, अस्ति तु तत्साधकमनुमानमित्याह–यत्त्विति। यद्यपि परमाणुकारणवादः श्रुतिपथाद्बहिर्भूत इत्येव पर्याप्तमनादरणनिमित्तम्। अथापि तर्कतोऽपि न तत्सिद्धिरिति तार्किकान्प्रतिवक्तुमयमारम्भः। महत्त्वे सति चाक्षुषत्वादिति। रूपे व्यभिचारवारणाय विशेषणम्, आकाशादौ व्यभिचारवारणाय विशेष्यम्। चाक्षुषद्रव्यत्वाद्वेति आकाशादौ व्यभिचारवारणाय विशेषणम्, रूपे व्यभिचारवारणाय विशेष्यम्। विपक्षे–पक्षे साध्यानभ्युपगमे। अप्रयोजकशङ्कायामनुकूलतर्काभावादिति यावत्। अनुकूलतर्कमाशङ्क्य परिहरति–न चेति। उद्भूतरूपवतामेवेति। एवकारेण कार्यद्रव्यारब्धत्वसापेक्षत्वव्यवच्छेदः। गमनिकान्तरेणानुकूलतर्कमाशङ्कते–नन्विति। तयोरपि तद्भावे मानाभावादिति। चाक्षुषताप्रकर्षावयवसङ्ख्याप्रकर्षयोरपि कार्यकारणभावे मानाभावादित्यर्थः। ययोः कार्यकारणभावमवलम्ब्य प्रत्यवस्थानं तयोरपि नेत्यपिना सूच्यते। आमलकजम्बीरयोः करतलोपनिहितयोरदूषितनयनानां सति सन्निकर्षेऽविशेषमेव चाक्षुषं प्रभवति, न तथाक्षुपयोर्मिथः प्रकर्षाप्रकर्षवैषम्यं प्रामाणिकमिति भावः। यद्वा–तयोरपीति। आस्तां चाक्षुषताप्रकर्षावयवसङ्ख्याप्रकर्षयोः प्रयोज्यप्रयोजकभावः, अथापि चाक्षुषत्वावयवसङ्ख्ययोस्तथात्वे मानाभाव इति भावः। तथापीति। चाक्षुषत्वावयवसङ्ख्ययोः प्रयोज्यप्रयोजकभावोपगमेऽपीत्यर्थः। द्रव्यारब्धत्वमात्रसिद्ध्येति।

तमसि लीयते" इत्यादिश्रुतेः । "तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविरा-

---

ब्धत्वासिद्धेः । सत्यामप्यवयवसङ्ख्यायां भवदभिमतद्व्यणुकस्याचाक्षुषत्वेन तथानियमस्यासम्भवाच्च । वस्तुतश्चाक्षुषताप्रकर्षेऽवयवसङ्ख्याप्रकर्षस्याप्रयोजकत्वाच्च, एकोऽपि हि केशः समीपस्थः स्फुटमुपलभ्यते, स्थूलो वा सूक्ष्मो वा यथायथा सन्निहितस्तथातथा स्फुटतरमुपलभ्यते, यथायथा विप्रकृष्टस्तथातथा तु न तथा, सन्निहिते वस्तुनि स्थूलसूक्ष्मभेदेन जायमाने स्फुटास्फुटावभासभेदेऽपि नावयवसङ्ख्याप्रकर्षो हेतुः, स्फुटमनुपलभ्यमानः सूक्ष्मोऽप्यालोकप्रचुरदेशे स्फुटमुपलभ्यते, तदन्यदेव निमित्तं चाक्षुषताप्रकर्षे । किञ्च–अन्यत्र चाक्षुषद्रव्ये दृष्टं कार्यद्रव्यारब्धत्वमित्येतावतैवात्रापि यदि तत्सिद्धिरभिमन्यते, तथासति महावयवारब्धत्वमपि सिध्येत्, दृष्टं हीदमपि सर्वत्र चाक्षुषे द्रव्ये । पार्थिवादित्रसरेणूनां सिद्धान्ते जलादिकार्यभूतपूर्वपूर्वभूतारब्धत्वात्सिद्धसाधनं च । कार्यद्रव्यावयवकत्वसाधने कालेऽनैकान्त्यं, चाक्षुषतायास्तस्य सिद्धान्तिनाऽभ्युपगमात् । त्रसरेणुभ्योऽतिरिक्तं परमाणुमनभ्युपगच्छतां मते तेषामणुत्वेन महत्त्वाभावान्महत्त्वघटितहेतोरसिद्धिश्च । हेतोरप्रयोजकत्वादेव द्वितीयोऽप्यपास्तः । तृतीये च पक्षे–अणुपरिमाणपदेन त्रसरेणुव्यावृत्तः परिमाणविशेषो यदि विवक्षितस्तदा तस्येदानीमसिद्ध्या पक्षाप्रसिद्धिः, अपकृष्टमहत्परिमाणस्य विवक्षायामुद्देश्यासिद्धिः, तद्विश्रान्तेस्त्रसरेणावेव भवताऽप्यभ्यु-

---

तावतैव हि त्रसरेणोश्चाक्षुषत्वमुपपद्यते । तदारम्भकावयवद्वयगतसङ्ख्यातस्तन्निष्पत्तेः । नच ताभ्यामवयवाभ्यामपि कार्यभूताभ्यां भाव्यम्, अवयवगतसङ्ख्यैव हि चाक्षुषत्वे प्रयोजकतया समर्थिता, नतु कार्यभूतावयवसङ्ख्यायास्तथात्वं समर्थितमिति भावः । चाक्षुषत्वावयवसङ्ख्ययोः प्रयोज्यप्रयोजकभावे व्यभिचारमाह —सत्यामप्यवयवेति । कारणताग्राहकान्वयसहचारव्यतिरेकसहचारयोर्भङ्गं प्रदर्शयति—स्थूलो वेत्यादिना । अवयवसङ्ख्याप्रकर्षेऽसत्यपि सान्निध्येन सूक्ष्मस्य स्फुटावभासेन भवत्येव चाक्षुषताप्रकर्षः, सत्यप्यवयवसङ्ख्याप्रकर्षे विप्रकर्षे स्थूलस्य न स्फुटावभास इति न तत्र चाक्षुषताप्रकर्षः, तदन्वयव्यतिरेकसहचारयोर्भङ्गान्न तयोः प्रयोज्यप्रयोजकभावसिद्धिरिति भावः । किं तर्हि चाक्षुषताप्रकर्षे निमित्तमित्यत्राह —तदन्यदेव निमित्तमिति । आलोकप्राचुर्यादीति भावः । ननु–व्याप्तिग्रहे हि व्यभिचारज्ञानविरहसहकृतसहचारज्ञानं हेतुः, चाक्षुषद्रव्यत्वकार्यद्रव्यारब्धत्वयोर्घटादिष्वस्ति शतशः सहचारदर्शनम्, न च व्यभिचारज्ञानस्यावसरः, सर्वेषामेव चाक्षुषद्रव्याणां विमतव्यतिरिक्तानां कार्यद्रव्यारब्धत्वनियमात्, तथा-चाक्षुषत्वकार्यद्रव्यारब्धत्वयोर्व्याप्तिग्रहस्याप्रतिरोधमुदयात् चाक्षुषत्वेन त्रसरेणौ कार्यद्रव्यारब्धत्वं सिद्ध्येदेवेत्याशङ्कायामाह—किञ्चेत्यादिना । विनाऽनुकूलतर्कं सहचारदर्शनमात्रेण चेद्धेतोर्व्याप्यत्वेन साध्यप्रमाकता, त्रसरेणौ तेनैव चाक्षुषत्वेन हेतुना महावयवारब्धत्वमपि सिद्ध्येदिति सिद्धान्तभङ्गः प्रसजेदिति भावः । अभिमतार्थासिद्धिश्चेत्याह—सिद्धसाधनं चेति । "आकाशाद्वायुर्वायोरग्नि"रिति वेदान्तमर्यादया कार्यकारणभावं स्वीकुर्वतः सिद्धान्तिनः पार्थिवत्रसरेणोरपि सावयवजलाद्यारब्धत्वमिष्टमेवेति, तान्प्रति वादे तेन हेतुना तत्साधने सिद्धसाधनं स्यादेवेति नाभिमतसिद्धिश्चेति भावः । अथ तृतीयं दूषयति—तृतीये चेति । अणुपरिमाणतारतम्यमित्यत्राणुपरिमाणशब्देन त्रसरेणुव्यावृत्तः परिमाणविशेषः पक्षकोटौ विवक्षितः? उतापकृष्टमहत्परिमाणः? आहोस्विदपकृष्टपरिमाणसामान्यम्? इति विकल्प्य क्रमेण दूषणमाह—अणुपरिमाणपदेनेत्यादिना । इदानीम्–त्रसरेणोः सावयवत्वसिद्धेः

जते प्रभु"रिति श्रीभागवताच्च। कृष्णस्य शक्तिः—जगदुत्पत्त्यादौ साधनत्वे-

पगतत्वात्। यदि चापकृष्टपरिमाणमात्रं विवक्षितं तदा तद्विश्रान्तेर्दृश्यमान एवोपपत्तेस्तदसिद्धिरेव। हेतुशरीरे परिमाणविशेषणवैयर्थ्यं च, तारतम्यत्वादित्येतावतैवाव्यभिचारात्। एवमवयवापकर्षतारतम्यस्य क्वचिद्विश्रान्तत्वसाधनेनापि नाभिमतसिद्धिः, दृश्यमान एव त्रसरेणौ तत्सम्भवात्। अविश्रान्तौ वा को दोषः? न च सर्षपमहीधरयोः परिमाणावैषम्यप्रसङ्गः, अवयवानन्त्यतौल्येऽप्याधिक्यन्यूनतयोः प्रमाणप्रतिपन्नयोरनपायात्। सत्ताश्रयव्यक्तीनामिव घटत्वाश्रयव्यक्तितः सत्ताश्रयव्यक्तीनां चाधिक्यं, क्षणानां दिवसानां चानन्त्येऽप्यनन्तक्षणापेक्षयाऽनन्तदिवसेष्वाधिक्यम्, अनन्तदिवसापेक्षयाऽनन्तक्षणेषु न्यूनत्वं च भवताऽप्यभ्युपेयमेव। तस्मात्त्रसरेण्वतिरिक्तपरमाणुकल्पनमप्रामाणिकमेव। परमाणूनामेवाप्रामाणिकत्वे तेषु जगत्कारणत्वं सुदूरपरास्तम्। तैस्तैः परमाणुभिरेव तत्तदारम्भकल्पने "आकाशाद्वायुः, वायोरग्निः, अग्नेरापः, अद्भ्यः पृथिवी"तिश्रुतिप्रतिपन्नक्रमोपमर्दः स्यात्।

किञ्च—श्रुतिमप्यवधूयानुमानमहिमानमप्रतिहतमाकलय्य परमाणून्साधयतां तर्करसिकानां परमाणुकारणतावादे किं तर्कानुकूल्यं, प्रत्युत प्रातिकूल्यमेव। तथाहि—तन्तुप्रभृतयो ह्यवयवा मिथः संयुज्य पटादि जनयन्तोंऽशतः संयुज्यैव जनयन्तः समुपलभ्यन्ते, तद्यथोपलम्भं परमाणूनामपि मिथः संयुज्य जनयतां संयोगोंऽशत एव स्वीकार्यः स्यात्, निरंशतयाऽभ्युपगते त्वंशभेदो न घटेत, तस्मात्तेषामपि सांशत्वं स्वीकार्यम्। तथा सति तेंऽशाः संयुज्यमानाः प्रदेशभेदमपेक्षन्त इति तेषामपि सांशत्वं स्यादित्यनवस्था, विनाऽप्यंशभेदं परमाणुषु मिथः संयोगाभ्युपगमे संयोगस्याधिकपरिमाणारम्भकता न स्यात्, अवयवेष्वेकांशेन मिथः संयोगेऽपरांशेन तदभावे च सति ह्यवयविन्यधिकपरिमाणः सिद्ध्येत्, तथाच परिमाणतारतम्यं द्व्यणुकादिषु न सिद्ध्येत्। नन्वणुविभुव्यतिरिक्तेष्वेव संयोगस्यांशविशेषावच्छिन्नत्वव्यवस्थेति चेत्, चाक्षुषद्रव्यस्य सावयवत्वादिनियमोऽपि त्रसरेणुव्यतिरिक्तेष्वेवेति किं न स्यात्। आगमेनार्थमभ्युपगच्छतां तु नेदृशशङ्कावकाशः। एतेन—जालालोकविलोकनीयं सर्वतः सूक्ष्मतममेव परमाणुमभ्युपगच्छतामपि प्रकृतेरेव जगदारम्भकत्वाश्रयणेन जगदारम्भकसंयोगस्य परमाणुष्वनपेक्षितत्वेऽपि विभुसंयोगस्यावर्जनीयतया संयोगस्य प्रादेशिकत्वदर्शनाहिता

---

प्राक्। दृश्यमान एवेति। न ह्यपकृष्टपरिमाणतारतम्यस्य विश्रान्तिस्थानेनाचाक्षुषेण भाव्यमिति नियम इति भावः। प्रकारान्तरेण परमाणुसाधनं निरस्यति—एवमवयवापकर्षेत्यादिना। एवं परमाणून्निरस्य तेषां जगदारम्भकत्ववादः श्रुतिविरुद्धश्चेत्याह—तैस्तैरित्यादिना।

अथ परमाणुकारणत्वं तर्कतो न सिद्ध्येदित्याह—किञ्चेत्यादिना। किमिति प्रतिक्षेपे। "यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इत्याशङ्कां परिहरन्नाह—आगमेनेत्यादि। आगमसम्प्रतिपन्नार्थो न केवलेन तर्केण चालयितुं शक्य इति भावः। सूक्ष्मतममेवेति। एवकारेण पराभिमतपरमाणुव्यवच्छेदः। परमाणुष्विति। मिथ इति शेषः। विभुसंयोगस्यावर्जनीयतयेति। विभोः परमात्मनः परमाणुतयाऽभिमते त्रसरेणौ संयोगस्यावर्जनीय-

नाङ्गीकृता । "देवात्मशक्तिं स्वगुणैर्निगूढा"मिति श्रुतेः । "स्वशक्त्या मायया

विभोरणोर्वा सभागत्वाद्याशङ्काऽपरिहार्यैव । एवं निर्भागस्य जीवस्य ब्रह्मणश्च संयोगेऽपि सैयमाशङ्का । न च तयोर्न संयोगः, ब्रह्मणः स्थूलसूक्ष्मचिदचिद्विशिष्टत्वेनैव कार्यकारणभावादिति परमाणुकारणवादिनां प्रत्यवस्थानं परास्तम् । नहि शब्दैकसमधिगम्यमर्थं तर्कः प्रतिरुन्ध्यात्, तर्काप्रतिष्ठानात् ।

ननु—निरंशायाः प्रकृतेर्मृत्पिण्डस्य घटशरावादिनेव बहुधा परिणामासम्भवान्निरंशेऽपि गगने भेरीमृदङ्गाद्युपाधिभेदेन विजातीयविविधशब्दारम्भकत्ववदुपाधिभेदेन विविधविकारारम्भकत्वस्य तादृशोपाध्यसम्भवेन वक्तुमशक्यत्वात्पृथिव्याद्यवस्थायां परिदृश्यमानच्छेदनादीनां निरंशत्वेऽसम्भवाच्चानन्तांशरूपत्वमङ्गीकृत्य मृदादीनामनन्तांशानां मिथः संश्लिष्टानां घटशरावादिविविधकार्यारम्भकत्ववदनन्तांशरूपायाः प्रकृतेर्मिथः संयुज्यैव जनकत्वस्य वाच्यतया महदादिविकारे तत्तदंशानामेवारम्भकत्वापातेन तैस्तैः परमाणुभिस्तत्तत्कार्यारम्भ इव तैस्तैरेवांशैर्महदादितत्तत्कार्यारम्भः पर्यवस्यतीत्यनापत्त्यैकोपादानवादस्य त्याज्यतया कोऽयं प्रद्वेषः परमाणुकारणवादे । मैवम् । निरंशायामपि तस्यामिह महानाविर्भवतु, इहाहंकार, इति भगवत्सङ्कल्पविशेषरूपोपाधिभेदसम्भवात्, भेर्याद्युपाधिभेदेन निरंशतया पराभिमते गगने विविधशब्दाविर्भाववन्महदादिविविधविकाराविर्भावसम्भवात् । सङ्कल्पस्य च द्रव्यरूपत्वात्प्रकृत्या तत्संयोगसम्भवात्, गगने भेरीसंयोगवदिहाप्युपाधिसंयोग उपपद्यते । न चात्रोपाधिसंयोगे उपाध्यन्तरापेक्षा, अगत्या स्वावच्छिन्न एव देशे स्वस्योत्पत्त्यङ्गीकारात् । अवच्छेदकान्तरमनपेक्ष्यैव प्रादेशिकस्यास्य निरंशेऽप्युत्पादः स्वीक्रियत इत्येतत् समानं चैतदणुविभुसंयोगे तवापि । एतेन—निरवशेषं प्रकृतेर्महदात्मना परिणामे—"वारिवह्न्यनिलाकाशैस्ततो भूतादिना बहिः । वृतं दशगुणैरण्डं भूतादिर्महता तथा ॥ अव्यक्तेनावृतो ब्रह्मन् ! तैः सर्वैः सहितो महान्" इत्यादिनाऽण्डावरणतया गणनानुपपत्तेः, प्रकृतेरेकांशेनैव महदात्मना परिणामस्याभ्युपगन्तव्यतया निरंशायां प्रकृतौ प्रादेशिकविकृतिः कथमिति शङ्का निरस्ता । नापि पृथिव्याद्यवस्थायां छेदनानुपपत्तिः, तदवस्थायां स्पर्शगुणयोगेन तदुपपत्तेः । अनन्तांशरूपा वा मा

शुक्तः सृजत्यत्ति च पाति चे"त्यादिश्रीभागवतवाक्याच्च । जीवस्य-देहिनः ।

स्यात्तथापि न क्षतिः, अंशानन्त्येऽपि गुणसाम्यावस्थयैकत्वयोगेनैकोपादानवादस्याप्रहाणात् । नन्वेवमंशानन्त्येऽप्यवस्थैक्यकल्पनयैकोपादानसंरक्षणे कोऽयमभिनिवेशः । मैवम् । श्रुतिमनुसरतामस्माकं न काप्यभिनिवेशः, "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम्" इति हि श्रूयते । तदप्रतिष्ठिततर्कोपजीविनस्तव चापौरुषेयनित्यनिर्दोषश्रुत्यैकावलम्बानामस्माकं च महदन्तरम् ।

कतिचन पुनरपौरुषेयनित्यनिर्दोषश्रुत्यैकावलम्बतां स्वेष्वभिमन्यमानाः प्रकृतेः कार्यकारणात्मना द्वैविध्यं गुणमयतामप्यभिप्रेत्य कारणावस्थायां मायाशब्दाभिलप्यत्वमिच्छन्तस्तस्याः कृष्णशक्तित्वं वर्णयन्ति नाम । शक्तित्वं वर्णयतामेषामन्तत आशयस्तु शक्तेरस्याः शक्तिमता सह स्वरूपैक्यसम्पादन एव । अखिलमेव जगच्चिदचिदात्मकं ब्रह्मपरिणामात्मकतया ब्रह्मस्वरूपमेव ह्यभिमन्यन्ते । सच्चिदानन्दस्वरूपस्यैव ब्रह्मणो लीलायै त्रिगुणभावमाकलयन्ति च । स चायं पक्षः सुदूरपरिहरणीयः परस्य ब्रह्मणो हेयसम्बन्धापातमसहमानैस्त्रय्यन्तपथमनुसरद्भिरखिलैरपि । अनवद्यं ब्रह्मस्वरूपं कलङ्कयतामेषां पक्षमवसरे निरसिष्यामः ।

एवं मायास्वरूपं निरूप्य तस्याः स्वभावमाह—देहेति । देहः-तत्परिणतिभूतः, तदीयं-तत्परिणतिभूतपुत्रपौत्रादि, यद्वा-तदीयं-तत्सम्बन्धि परिजनपरिच्छदादि, तयोरहंममताहेतुः क्रमेण । यतस्त्रिगुणात्मा सेयं, तत एव त्रिगुणेयं माया स्वपरिणतिभूतदेहसंसृष्टं जीवं स्वगतगुणसङ्गेन बध्नातीत्येतत् । तमसो ह्ययं स्वभावः-अर्थस्याप्रकाशकता, वैपरीत्येन प्रकाशकता च । तेन चानात्मन्यात्मभ्रमः, तन्मूलश्च देहानुबन्धिषु ममत्वारोपः, ततश्च स्नेहानुबन्धादि राजसम् । तत्तदभिमतवस्तुप्रकाशश्च सत्त्वेन । तदेवं त्रिगुणाया मायाया बन्धकत्वं स्वभावः । उक्तं च गीतायाम्—"सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः । निबध्नन्ति महाबाहो ! देहे देहिनमव्ययम् ॥ तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ! ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति कौन्तेय ! कर्मसङ्गेन देहिनम् ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ! ॥ सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ! । ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते । ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥

---

अथ प्रधानस्य सांशत्वेऽप्येकोपादानवादस्य न भङ्ग इत्याह—अंशानन्त्येऽपीत्यादिना । वस्तुतश्चिदचिद्विशिष्टब्रह्मण एव सकलजगदुपादानतया नैकोपादानताभङ्गशङ्कावकाशः ।

यादवप्रकाशपक्षं दूषयन्ननुवदति—कतिचनेति ।

प्रासङ्गिकं परिसमाप्य मूलं व्याचष्टे—एवं मायेत्यादिना । ननु देहसन्निकर्षात्तस्मिन्नहंबुद्धिमापादयतीति मायायास्तद्धेतुत्वं केति शङ्कां परिहरन्नाह—तत्परिणतिभूत इति । मायापरिणतिभूत इत्यर्थः । तत्परिणतिभूतपुत्रपौत्रादीति । तस्य देहस्य परिणतिभूतमित्यर्थः । अहंममताहेतुत्वमस्या उपपादयति —यत इत्यादिना । प्रकाशस्वभावस्यापि सत्त्वस्य शब्दादितत्तत्प्रियविषयप्रकाशकतया बन्धकत्वमस्तीत्याह—तत्तदभिमतेति । सत्त्वस्यापि बन्धकत्वे गुणमये निपतितस्य कथं समुत्तरणावकाश इत्यत्राह—

जात्यभिप्रायेणैकवचनम् । देहश्च, तदीयः—देहसम्बन्धी स्त्रीपुत्रधनादिपदार्थः

लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा । रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ! ॥ अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च । तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ! ॥" इति । साधारणेऽपि गुणानां बन्धकत्वे सत्त्वस्य रजस्तमोभ्यामयं विशेषः—यत्सत्त्वं प्रवृद्धमात्मयाथात्म्यप्रकाशमापाद्य विमोचयति बन्धात् । अत एव रजस्तमोभ्यामनभिभूतस्य सत्त्वस्योपादेयतोक्ता गीतायाम्—"निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान्" इति । जीवस्य चेति । चस्त्वर्थे । देहतोऽत्यन्तविलक्षणस्य चिदेकघनस्याप्यस्य मायासङ्गाद्देहात्मभ्रमो भवतीति मायावैभवं व्यज्यते । अवगम्यतां—मायातरणं हि मायास्वरूपस्वभावमविजानतामसम्भावितम्, तदवगम्यतां सेयमीदृशीतीत्याशयः ।

मायाया लक्षणं तु गुणसाम्यम् । गुणत्रयसमावेशस्य मायायामिव तत्कार्येषु सत्त्वेऽपि गुणसाम्याभावान्नातिप्रसक्तिः । साम्यं चावैषम्यम् । विकृतिषु हि गुणानामुद्भवाभिभवभेदतो वैषम्यं नियतम् । प्रकृतिविकृतिसाधारण्येन मायात्वं तु रजोवत्त्वं तमोवत्त्वं वा । सेयं माया विकारान्प्रकरोत्यस्या इति व्युत्पत्त्या प्रकृतिरित्यप्युच्यते । कर्त्तरि तु न क्तिन्, "स्त्रियां क्तिन्" नित्यत्र "अकर्त्तरि च कारके" इत्यधिकारात् । यद्यपि—अहङ्कारादितत्तद्विकारोपादानत्वं महदादिष्वपि । तथाप्यसङ्कोचान्निखिलविकारमूलत्वेन विकृतित्वासमानाधिकरणप्रकृतित्वात्केवलेन प्रकृतिशब्देनास्या निर्देशः । महदादिषु त्वस्यायं प्रकृतिरित्येव प्रयोगः । तदिदं व्यञ्जयितुमेव मूलप्रकृतिरिति कचित्प्रयुज्यते च । विद्याविरोधादविद्येत्युच्यते । विद्यया विरोधश्च मोहकत्वात् । महदादिकार्यावस्थया न व्यज्यत इत्यव्यक्तमित्यप्युच्यते । अतस्तत्र तत्र ततस्ततो निखिलविकारप्रसूतिवर्णनेऽपि न विरोधः । सत्यप्यव्यक्ततमसोर्भेदे तमिमं सूक्ष्मं

---

साधारणेऽपीत्यादिना । ईदृशीतीति । दोषानुचिन्तनतस्त्यागार्थमस्याः स्वरूपं ज्ञातव्यमित्याशयः ।

मायाया लक्षणं त्विति । मूलप्रकृतेर्लक्षणं त्वित्यर्थः । साम्यपदस्य प्रयोजनमाह—गुणत्रयेत्यादिना । साम्यशब्दार्थमाह—साम्यं चेति । ननु सत्त्वादीनां त्रयाणां प्रकाशादिस्वभावभेदे नास्त्येव सर्वदा वैषम्यमित्यवैषम्यं दुर्वचमिति शङ्कां निरस्यन्नाह—विकृतिषु हि गुणानामुद्भवाभिभवभेदतो वैषम्यं नियतमिति । प्रकृतिशब्दस्य निर्वचनमाह—सेयं मायेत्यादिना । विकारान्—महदादीन् । अस्या इति पञ्चमी । ईश्वर इति शेषः । प्रकरोतीति प्रकृतिरिति किं न स्यादित्याशङ्कायामाह—कर्त्तरि त्विति । यद्वा—अस्या इति वाऽनयेति वा प्रक्रियत इयमिति वा स्याद्व्युत्पत्तिः, नात्रास्माकमाग्रहः, प्रकरोतीति तु न स्यादित्याह—कर्तरि तु नेति । ननु पूर्वपूर्वविकाराणामुत्तरोत्तरविकारापेक्षया प्रकृतित्वमस्त्येवेति प्रकृतिशब्दः कथमसाधारण्येन कचित्प्रवर्त्तत इति शङ्कामनूद्य निराकरोति—यद्यपीत्यादिना । विकृतित्वासमानाधिकरणप्रकृतित्वादिति । प्रवृत्तिनिमित्तादिति शेषः । अत इति । अविद्याशब्दस्याव्यक्तशब्दस्य च मूलप्रकृतौ प्रवृत्तिनिमित्तयोगोपपादनेनेत्यर्थः । तत्र तत्रेति । स्मृत्यादिष्विति शेषः । ततस्तत इति । अविद्यातोऽव्यक्ततो वेत्यर्थः । ननु तमसो मूलप्रकृतेरर्वाचीनो महत्तत्त्ववत्

स च, तयोर्विषये। अहंममताहेतुः—देहेऽहंताया दैहिके ममतायाश्च हेतुः—कारणरूपा। "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमान" इति

---

भेदमनादृत्य क्वचिदव्यक्तकारणवादः प्रोक्तस्तमःकारणवादे न विरोधाय। नहि महदादिष्विव गुणवैषम्यमव्यक्ताक्षरतमस्सु, सत्यपि गुणसाम्ये लेशतोऽवस्थाभेदः। यथा भूतलनिक्षिप्तस्य बीजस्याङ्कुरावस्थातः प्राक् मृन्निःसरणसलिलसंसेकाहितावयवशैथिल्योच्छूनतास्तिस्रोऽवस्थास्तथा महदादिसृष्टेः प्राक् देवेन सहैकीभूतस्य त्रिगुणद्रव्यस्याविभक्ततमःशब्दवाच्यस्य तमोऽक्षराव्यक्तशब्दवाच्यास्तिस्रोऽवस्थाः सूक्ष्मा उत्तरोत्तरावस्थाहेतुभूतशक्तिविशेषात्मिकाः। तत्र महतोऽनन्तरपूर्वावस्था गुणसाम्यापत्तिरूपाऽव्यक्तावस्था, ततोऽनन्तरपूर्वाऽपरिस्फुटगुणसाम्या चेतनसमष्टिगर्भाऽक्षरावस्था, अत एव क्षरणस्वभावत्वेऽप्यक्षरशब्देनोपचारः। चिद्गर्भत्वं यस्यामवस्थायां विवेक्तुमशक्यं तत्तमः। तदेवाक्षरावस्थाप्राप्त्युन्मुखं विभक्तं तम उच्यते। अतदुन्मुखं तदेव परमात्मनैकीभूतं सलिलविलीनलवणचन्द्रकान्तस्थसलिलादिकल्पमविभक्तं तम उच्यते। तथा चोप्तस्य बीजस्याङ्कुरावस्थातः प्रागनभिव्यक्तस्य बीजत्वानुपमर्देनैव भवन्तः सूक्ष्मावस्थाभेदा इवैतेऽपीत्यव्यक्ततमसोर्नातीव भेदः। एतेन—"अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तमः परे देवे एकीभवती"ति लयश्रुत्याऽक्षरादिविकारेऽवगम्यमाने महत्प्रभृतीनामेव विकारकोटौ गणना कथमिति शङ्का परास्ता।

प्रसङ्गान्महदादिविकारा विचार्यन्ते—अव्यक्ताव्यवहितोत्तरावस्थावत्त्वं, अहङ्काराव्यवहितपूर्वावस्थावत्त्वं वा महतो लक्षणम्। अहङ्कारावस्थाऽव्यक्तादुत्तराऽपि नाव्यवहितोत्तरा, अव्यक्तावस्थाऽहङ्कारतः पूर्वाऽपि नाव्यवहितपूर्वेति न क्षतिः। एवमक्षरावस्थाया अव्यक्ताव्यवहितत्वेऽपि नाव्यक्तोत्तरत्वं, इन्द्रियादेरहङ्काराव्यवहितत्वेऽपि नाहङ्कारपूर्वत्वम्। यद्यपि जन्मस्थितिलयानां चक्रवत्परिवर्तमानत्वेन तत्तत्कल्पीये महति पूर्वपूर्वकल्पीयाव्यक्तोत्तरावस्थोत्तरत्वस्यैव सत्त्वेन तदनुत्तरत्वघटितस्याव्यवहितोत्तरत्वस्य क्वापि महत्यसम्भवेनासम्भवः। तथापि तत्तदव्यक्तमादायाव्यवहितोत्तरत्वस्य सम्भवान्नासम्भवः। लक्षणे च स्वोत्तरावस्थानुत्त-

---

पूर्वः कश्चिद्विकारविशेषोऽव्यक्तशब्दाभिलप्योऽस्ति, कथं सर्वमूलत्वमव्यक्तस्य स्मर्यमाणं सङ्गच्छत इत्याशङ्कां वारयन्नाह—सत्यप्यव्यक्ततमसोरिति। यश्च सूक्ष्मो भेदोऽव्यक्ततमसोस्तमुपपादयति—यथेति। विभक्ताविभक्तभेदेन तमसि विभागमभिप्रेत्याह—अविभक्ततमःशब्दवाच्यस्येति। अनन्तरेति। अव्यवहितेत्यर्थः। अत एवेति। क्षरणरहितसमष्टिजीवगर्भत्वादेवेत्यर्थः। एकीभूतमिति। परमात्मना ज्ञानानन्दघनेन जडस्य तमसः कोऽयमेकीभाव इत्याशङ्कां वारयन्नेकीभावं व्याचष्टे—सलिलविलीनेत्यादिना। अविभक्तमिति। उक्तलक्षणोऽविभाग एवैकीभाव इति भावः।

लक्षणद्वयेऽप्यव्यवहितपदस्य प्रयोजनं निरूपयति—अहङ्कारावस्थेत्यादिना। प्रथमलक्षणे उत्तरत्वस्य, द्वितीयलक्षणे पूर्वत्वस्य च प्रयोजनमाह—एवमित्यादिना। चक्रवत्परिवर्तमानत्वेनेति। संसारस्यानादित्वादिति भावः। तदनुत्तरत्वघटितस्येति। अव्यक्ताव्यवहितोत्तरत्वस्याव्यक्तावस्थोत्तरावस्थानुत्तरत्व-

श्रुतेः । तथा चोक्तं विष्णुपुराणे—"श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन ! । अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मति"रिति । "सोऽहं ममाहमिति मूढ-

---

रत्वस्योत्तरत्वैतदुभयसम्बन्धेनाव्यक्तविशिष्टत्वपर्यवसितस्य यत्किञ्चिदव्यक्ताव्यवहितोत्तरत्वस्यैव विवक्षितत्वात् । एवं द्वितीयलक्षणस्यापि निष्कर्षो बोध्यः ।

अव्यक्तावस्थाध्वंसरूपा अहङ्कारावस्थाप्रागभावरूपा च याऽवस्था तद्वत्त्वं वा तल्लक्षणम् । महत्त्वावस्थायाः पूर्वोत्तरावस्थाध्वंसप्रागभावरूपत्वाल्लक्षणसमन्वयः । विरोध्युत्तरावस्थैव हि प्रध्वंसः, विरोधिपूर्वावस्थैव च प्रागभावः, अतिरिक्तत्वे प्रमाणाभावात् । न च विरोध्युत्तराव-स्थायाः प्रध्वंसे ध्वंसस्यापि ध्वंसप्रसङ्गेन विनष्टस्य पुनरुत्पादप्रसङ्गः । नहि विरोध्यव्यवहितो-त्तरावस्थामात्रस्यातीतध्वंसरूपत्वम्, किन्तु विरोध्युत्तरावस्थासामान्यस्य तथात्वात् । तथाच विरोध्युत्तरावस्थापरम्परया प्रध्वंसव्यवहारनिर्वाहात् । एवं विरोधिपूर्वावस्थासामान्यस्य प्राग-भावरूपत्वाभ्युपगमादव्यवहितपूर्वावस्थायास्तदुत्पत्तेः प्रागसत्त्वेऽपि न क्षतिः । परिणामिनः सर्वस्य पूर्वमुत्तरं विरोध्यवस्थापरम्पराऽप्रतिहतैव । अहङ्कारावस्थाया अव्यक्तध्वंसरूपत्वेऽप्यक्ष-रावस्थाया अहङ्कारप्रागभावरूपत्वेऽपि तयोरनुभयरूपत्वान्नातिप्रसङ्गः । नन्वव्यक्तस्याप्यतीतक-ल्पान्तरीयाव्यक्तावस्थाध्वंसरूपत्वादहङ्कारस्यापि भविष्यत्कल्पीयाहङ्कारप्रागभावरूपत्वादतिप्र-

---

विशिष्टाव्यक्तावस्थोत्तरत्वरूपतया तत्तत्कल्पीयमहत्तत्त्वे पूर्वपूर्वकल्पीयाव्यक्तोत्तरैतत्कल्पीयाव्यक्तोत्तर-त्वस्यैव सत्त्वेनाव्यक्तोत्तरावस्थानुत्तरत्वस्याभावेन तद्घटिताव्यवहितोत्तरत्वस्याभावादसम्भव इति भावः । तत्तदव्यक्तमादायेति । तत्तत्कल्पीयाव्यक्ताव्यवहितोत्तरत्वस्य तत्तत्कल्पीयमहत्तत्त्वे सम्भवादिति भावः । ननु महत्तत्त्वसामान्यस्य नैतल्लक्षणं, तत्तत्कल्पीयत्वप्रवेशेनानुगमादित्याशङ्कायामाह—लक्षणे चेति । एवं द्वितीयलक्षणस्यापीति । अहङ्काराव्यवहितपूर्वावस्थत्वस्यापीत्यर्थः । स्वपूर्वावस्थाऽपूर्वत्वस्य-पूर्वत्वोभयसम्बन्धेनाहङ्कारविशिष्टत्वमिति परिष्कारादुत्तरोत्तरकल्पीयाहङ्कारावस्थापूर्वपूर्वत्वस्यैव तत्तत्क-ल्पीयमहदवस्थायां सत्त्वेनाहङ्कारपूर्वावस्थाऽपूर्वत्वं नास्तीत्यसम्भवस्य नावसर इति भावः ।

लघुलक्षणमाह—अव्यक्तावस्थेत्यादिना । ननु प्रागभावरूपत्वं ध्वंसरूपत्वं कथं भावे कथं वा तदुभयरूपत्वमेकस्या अवस्थाया इत्यत आह—विरोध्युत्तरावस्थैव हीत्यादिना । ध्वंसस्यापि ध्वंसप्रसङ्गेनेति । विरोध्यवस्थाया ध्वंसतया अभिमतत्वादिति भावः । किन्तु विरोध्युत्तरावस्थासामा-न्यस्येति । योऽयं तद्विरोध्युत्तरावस्थाप्रध्वंसलक्षणावस्थाविशेषस्तस्यापि तद्विरोध्युत्तरावस्थात्वाविशेषेण तत्प्रध्वंसरूपत्वानपायादिति भावः । विरोधिपूर्वावस्थासामान्यस्येति । घटावस्थस्य या विरोधिन्यः पूर्वपूर्वावस्थाः कपालकापालिकाद्यवस्थाः सर्वासामेव तासामित्यर्थः । अव्यवहितपूर्वावस्थायास्त-दुत्पत्तेः प्रागसत्त्वेऽपि न क्षतिरिति । कपालावस्थाया घटप्रागभावलक्षणायाः स्वोत्पत्तेः प्राक् कापा-लिकावस्थाकालेऽसत्त्वेऽपि न घटप्रागभावासम्भवलक्षणानुपपत्तिः, कापालिकावस्थाया घटप्रागभाव-लक्षणायास्तदानीं सत्त्वादिति भावः । अव्यक्तावस्थाध्वंसरूपत्वमात्रस्य, अहङ्कारावस्थाप्रागभावरूपत्व-मात्रस्य वा महल्लक्षणत्वमनुक्त्वा तदुभयरूपत्वस्य तल्लक्षणत्वोक्तौ प्रयोजनमाह—अहङ्कारेत्यादिना । कल्पान्तरीयाव्यक्तं कल्पान्तरीयमहदहङ्कारं चादायातिप्रसङ्गमाशङ्कते—नन्वव्यक्तस्यापीति । समा-

मतिर्विगाढस्तन्मायया विरचितात्मनि सानुबन्धे" "तन्नः प्रभो ! त्वं कुकलेव-

---

सङ्गः। मैवम्। अवस्थाविशिष्टावस्थावत्त्वं तदिति परिष्कारात्। वैशिष्ट्यं च स्वप्रयोजकाव्यक्तावस्थानाशरूपत्वस्वप्रयोज्याहङ्कारप्रागभावरूपत्वोभयसम्बन्धेन। कल्पान्तरीयाव्यक्तादीनां तु न कल्पान्तरीये प्रयोजकता। पूर्वापरावस्थयोरतिप्रसङ्गवारणाय सम्बन्धद्वयनिवेशः। स्वप्रतियोग्यप्रतियोग्यव्यक्तप्रतियोगिकध्वंसरूपत्वस्वप्रतियोगिकाप्रतियोगिकाहङ्कारप्रागभावत्वोभयसम्बन्धेन वा तथा बोध्यम्। अव्यक्तावस्थाविशिष्टत्वे सत्यहङ्कारावस्थाविशिष्टत्वमिति वा निष्कर्षः। अव्यक्तावस्थावैशिष्ट्यं च स्वप्रतियोगिकध्वंसरूपत्वस्वसमानकालिकत्वोभयसम्बन्धेन। अहङ्कारावस्थावैशिष्ट्यं च स्वप्रतियोगिकप्रागभावरूपत्वस्वसमानकालिकत्वोभयसम्बन्धेन। कल्पान्तरीयाव्यक्तसमानकालिकत्वस्यैतत्कल्पाव्यक्तेऽसम्भवाद्भविष्यत्कल्पाहङ्कारसमकालिकत्वस्यैतत्कल्पाहङ्कारेऽसम्भवाच्चातीतानागतकल्पाव्यक्ताहङ्कारावादाय नैतत्कल्पीयाव्यक्ताहङ्कारयोरतिप्रसङ्गः। अव्यक्तस्य महतश्चांशत एव महदहङ्कारात्मना परिणामान्महत्त्वावस्थायामव्यक्तावस्थासमकालिकत्वस्याहङ्कारावस्थासमकालिकत्वस्य च सम्भवान्नासम्भवः। अध्यवसायो बुद्धिर्महान् इति साङ्ख्याः। तन्न। अध्यवसायस्य ज्ञानविशेषरूपस्य चेतनधर्मत्वात्। अध्यवसायनिमित्तत्वेन तथा निर्देशश्चेत्, तदप्यतिप्रसक्तं, कालादिसाधारण्यात्। नहि कश्चिद्विशेषोऽध्यवसायनिमित्तत्वे महतः समुपलभामहे चेतनात्। तथा क्वचिन्निर्देशश्च तत्रौपचारिकः।

महतोऽहङ्कारः। इन्द्रियाव्यवहितपूर्वावस्थावत्त्वं तल्लक्षणम्। इन्द्रियानुत्पादकेऽप्यहङ्कार-

---

धत्ते—मैवमित्यादिना। अवस्थाविशिष्टेत्यत्रावस्थापदेन महत्त्वावस्थामादाय लक्षणसमन्वयः कार्यः। तद्विशिष्टा चावस्था सैव। तस्याश्च 'स्वप्रयोजकाव्यक्तनाशरूपत्वं स्वप्रयोज्याहङ्कारप्रागभावरूपत्वं चास्तीति लक्षणसमन्वयः। स्वप्रयोजकत्वस्थाने स्वप्रयोज्यत्वस्थाने च विशेषणान्तरं निवेश्यातिप्रसङ्गं वारयति—स्वप्रतियोग्यप्रतियोगीति। कल्पान्तरीयाव्यक्तोत्तरोत्तरभूतस्यैतत्कल्पीयाव्यक्तस्य कल्पान्तरीयाव्यक्तध्वंसध्वंसरूपतयैतत्कल्पीयाव्यक्तप्रतियोगिप्रतियोगित्वमेव कल्पान्तरीयाव्यक्ते न तु तदप्रतियोगित्वमिति न दोष इति भावः। नन्वव्यक्तानन्तरभाविनि तथा स्वानन्तरभाव्यहङ्कारके च महत्तत्त्वे कथमव्यक्तसमकालत्वमहङ्कारसमकालत्वं चेत्याशङ्कां परिहरति—अव्यक्तस्येत्यादिना। ज्ञानविशेषरूपस्येति। इदमेव सम्पाद्यमिति निश्चयविशेषरूपस्येति यावत्। अध्यवसायनिमित्तत्वेन तथा निर्देशश्चेदित्यादि। तथा निर्देशः–अध्यवसाय इति निर्देशः। सामान्यतस्तन्निमित्तत्वं तथा व्यपदेशे हेतुः? उतासाधारणं निमित्तत्वं तथा व्यपदेशे हेतुः ?। प्रथमे–कालादावपि तत्सम्भवात्तत्रापि तथा निर्देशः स्यात्। द्वितीये–कालादाविव महत्यपि न तत्सम्भवः, चेतनधर्मे ह्यध्यवसायेऽसाधारणकारणं चेतन एव भवितुमर्हति, तत्तथा व्यपदेशो महति नैव घटेतेत्याशयः। चेतनादिति। चेतनाद्विशेष इति पूर्वेण सम्बन्धः, चेतनधर्मेऽध्यवसाये निमित्तत्वे चेतन एव विशेषोऽसाधारण्यं महत्तत्त्वात्, न चेतनान्महति, येनासाधारण्येनाध्यवसाय इति निर्देशो महत्तत्त्वे घटेतेति भावः। एतेन द्वितीयपक्षेऽप्रसङ्गोऽतिप्रसङ्गश्च सूचितः।

इन्द्रियाव्यवहितपूर्वावस्थावत्त्वमिति। इन्द्रियाव्यवहितानन्तराव्यवहितावस्थावत्यतिप्रसङ्गवार-

रार्पितां त्वन्मायया‌ऽहंममतामधोक्षज!" "भगवन्! जीवलोकोऽयं मोहितस्तव मायया। अहंममेत्यसद्ग्राहो भ्राम्यते कर्मवर्त्मसु" "त्वन्मायया‌ऽर्थमभिपद्य कले-

---

विशेष इन्द्रियाण्यव्यवहितपूर्वत्वमक्षतम्। कालादावतिव्याप्तिस्तु गुणवत्त्वेन वार्या। अवस्थाविशिष्टावस्थावत्त्वं वा तल्लक्षणम्। वैशिष्ट्यं च स्वतादात्म्यस्वप्रागभावरूपमहत्त्वविशिष्टत्वस्वनाशरूपतन्मात्रत्वविशिष्टत्वैतत्त्रितयसम्बन्धेन। वैशिष्ट्यद्वयमपि कालिकसम्बन्धेन। अहङ्कारप्रागभावप्रध्वंसरूपमहत्त्वतन्मात्रत्वसमकालिकावस्थान्तरमादायातिप्रसङ्गवारणाय तादात्म्यनिवेशः। कल्पान्तरीये महत्त्वतन्मात्रत्वे आदायातिप्रसङ्गवारणायोभयत्र कालिकसम्बन्धग्रहणम्। तन्मात्रादिष्वतिप्रसङ्गवारणाय द्वितीयसम्बन्धनिवेशः। महदादिष्वतिप्रसङ्गवारणाय प्रथमसम्बन्धनिवेशः। यदप्यहङ्कारशब्देन निर्देशमात्रेण अभिमानोऽहङ्कार इति लक्षणमाचक्षते। तदसत्। अभिमानस्य ज्ञानविशेषरूपत्वात्। अनहम्यहंबुद्धिहेतुत्वादहङ्कार इति निर्देशः। अहमर्थस्तु प्रत्यगर्थ एवेति प्रावसमर्थितम्। त्याज्यतया गणितस्तूत्कृष्टजनावमानहेतुर्गर्वापरपर्यायोऽहङ्कारोऽभिमानविशेषः।

सात्त्विकराजसतामसभेदतस्त्रिविधादहङ्काराद्देवतामनसी इन्द्रियं तन्मात्रं चेति क्रमशः। परे तु—सात्त्विकाहङ्कारत एवैकादशेन्द्रियाणि। यत्तु विष्णुपुराणवचनम्—"तैजसानीन्द्रियाण्याहुः" इति। तत्तु परमतानुवादरूपम्, आहुरित्युक्तेः। स्वमतं तु तत्रैव वचने प्रदर्शितम्—"देवा वैकारिकाः स्मृताः" इति। देवशब्दोऽत्रेन्द्रियपरः। श्रूयते हीन्द्रियेषु देवशब्दः—"न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः" "सहैव सन्तं न विजानन्ति देवाः" इत्यादिषु। यत्तु—इन्द्रियाभिमानिदेवा अत्र देवशब्देनोच्यन्ते, वचनार्थश्चेत्थं—"तैजसानीन्द्रियाण्याहुः" ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि चेति दश तैजसानि, "देवा वैकारिका दश एकादशं मनश्च"—इन्द्रियाभिमानिदेवा दश दिग्वातादय एकादशं मनश्च वैकारिकात्। अत्रान्तःकरणभूते मनसि

---

णाद् पूर्वेति। अहङ्कारविशेष इति। तामसाहङ्कार इत्यर्थः। कालादावतिव्याप्तिस्त्विति। कालस्य क्षणादिरूपेण परिणामात्तत्रेन्द्रियाण्यव्यवहितपूर्वक्षणलक्षणावस्थाविशेषस्य सत्त्वादतिव्याप्तिरिति भावः। गुणवत्त्वेनेति। सत्त्वादिगुणवत्त्वेनेत्यर्थः। स्वप्रागभावरूपमहत्त्वावस्थासमकालिकत्वे सति स्वनाशरूपतन्मात्रावस्थासमकालिकत्वमहङ्कारस्य लक्षणमिति प्रकारविधया परिष्कारः, तस्यायमनुगमः—अवस्थाविशिष्टावस्थावत्त्वं वेति। अहङ्कारप्रागभावप्रध्वंसरूपेति। अहङ्कारप्रागभावरूपं यन्महत्त्वं महत्त्वावस्था, अहङ्कारप्रध्वंसरूपं यत्तन्मात्रत्वं तन्मात्रत्वावस्था, तदुभयसमकालिकमवस्थान्तरं भूताद्यवस्थान्तरमादायातिप्रसङ्ग इति भावः। क्रमान्वयश्च तत्रयुक्त्या बोध्यः। कापिलानुमतं लक्षणं निरस्यति—यदपीत्यादिना।

परे त्विति। विष्णुपुराणवचनविरोधशङ्कां वारयति—यत्त्वित्यादिना। तैजसादिन्द्रियोत्पत्तिवादिभिर्वर्ण्यमानं वचनाशयमनूद्य प्रतिक्षिपति—यत्त्विन्द्रियाभिमानीति। "तैजसानीन्द्रियाण्या-

---

१ तदाश्रयकालवृत्तित्वं तत्समकालिकत्वम्।

वरेऽस्मिन्कृत्वा ममाहमिति दुर्मतिरुत्पथैः स्वैः" "छिन्ध्याशु नः सुतकलत्रधना-

---

चिन्तासङ्कल्पादिवृत्तिभेदेन चतुर्धा भिन्ने ये देवा अभिमानिनः क्षेत्रज्ञरुद्रचन्द्रब्रह्माणस्तेऽपि वैकारिका इतीति । तत्त्वविचारितरमणीयम्, नित्यानां चेतनानामुत्पत्तिर्हि शरीरसम्बन्धः, स च भूतसृष्टेः प्राक् न घटते, नापीन्द्रियैर्विना शरीरसम्पत्तिः, न वाऽण्डसृष्टेः पश्चाद्व्यष्टिसृष्टिगोचरतया प्रसिद्धानामिन्द्रादीनामण्डसृष्टितः प्रागेवाहङ्कारतः सृष्टिर्घटेत, तदभिमानिदेवपरतया देवशब्दव्याख्यानमनुचितं, तदयमेव वचनार्थो न्याय्यः । केचिदिन्द्रियाणि तैजसान्याहुः, केचिद्दश देवाः—दशेन्द्रियाणि मनश्च वैकारिकादित्याहुः । आहुरित्यस्य मध्यमणिन्यायेनोभयत्रान्वयः । अत्र विषयेऽस्माभिस्तु "देवा वैकारिकाः स्मृताः" इन्द्रियाणि वैकारिकाणि मतानि इत्याचक्षते । तैजसादेवेन्द्रियोत्पत्तिं वर्णयतां स्वयमाशयः—इन्द्रियाणां तैजसत्वे मनोदेवतानां वैकारिकत्वे च—"वैकारिकान्मनो जज्ञे देवा वैकारिका दश । दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमित्रकाः ॥ तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभवन्" इति वचनमनन्यथासिद्धं प्रमाणम् । यत्तु—अत्रापि देवशब्द इन्द्रियपर एव, "दिग्वातार्के"त्यादिनिर्देशस्त्वधिष्ठात्रधिष्ठेययोरभेदोपचारात् । दिगाद्यधिष्ठेयानि इन्द्रियाणीत्यर्थः । "तैजसात्तु विकुर्वाणा"दित्यत्र तैजसशब्दस्तैजससम्बद्धं वैकारिकमेवाह । तैजसाहङ्कारसहकृताद्वैकारिकाद्विकुर्वाणादित्यर्थः । तन्नेदमिन्द्रियाणां तैजसत्वेऽनन्यथासिद्धप्रमाणमिति । तन्न । दिगादिशब्दानामधिष्ठेये लाक्षणिकत्वापत्तेः । तैजसशब्दस्य तत्सहकृतपरत्वेन क्लिष्टकल्पनापत्तेश्च । नच देवानामुत्पत्तिस्तदानीं दुर्घटा, तदानीमविद्यमानैर्देवैरधिष्ठानस्यापि दुर्घटत्वेन तदधिष्ठितपरतया व्याख्यानेऽप्यस्ति क्लेशः । ननु—प्रतिबन्द्या देवानामुत्पत्तिः कथं घटते ? वस्तुतस्तदानीं तेषामभावेऽपि तदुपलक्षितत्वस्य तदधिष्ठेयत्वस्य वा सम्भवेन तथा निर्देशे बाधकाभावात् । नित्यमुक्तेषु केषाञ्चित्तत्तत्त्वाभिमानिनामस्त्रभूषणाध्यायोक्तक्रमेण दिव्यदेशे सन्निहितत्वात्तैरेव दिगाद्यभिमानिभिः कैश्चित्समष्टीन्द्रियाणामप्यधिष्ठितत्वसम्भवाच्च । मैवम् । स्वारसिकयोजनया निर्वाहे सति तत्परित्यागस्यानौचित्यात् । दिगादिदेवविशेषाणां स्थूलशरीरसम्बन्धरूपसृष्टेः

---

हु"रिति परमतानुवादपरमिति पूर्वमुक्तम्, कथं परमतानुवादरूपता, तथा सति वचनार्थः क इत्यत आह—केचिदिन्द्रियाणीत्यादिना । परैर्निरस्तं तैजसादिन्द्रियोत्पत्तिवादं समर्थयितुमारभते—तैजसादेवेत्यादिना । अनन्यथासिद्धमिति । "दिग्वातार्के"त्यादिना कण्ठरवेणाधिष्ठातृदेवानां नामनिर्देशात्, "तैजसात्तु विकुर्वाणादिन्द्रियाणि दशाभव"न्निति निर्देशाच्चानन्यथासिद्धत्वं बोध्यम् । अनन्यथासिद्धत्वं नेत्याशङ्कते—यत्त्विति । क्लिष्टकल्पनापत्तेश्चेति । तैजसशब्दस्य तैजससहकृते लक्षणाकल्पनं दिगादिशब्दानां तत्तदधिष्ठेये लक्षणाकल्पनाऽपेक्षया क्लिष्टकल्पनं, यत्तत्तद्देवानां तत्तदिन्द्रियाणां चाधिष्ठात्रधिष्ठेयभावोऽसाधारणः, सात्त्विकस्येव तामसस्यापि तैजसेन सहकारो हि समान इति भावः । देवानामुत्पत्त्यसम्भवं पराशङ्कितं परिहरति—न चेत्यादिना । देवानामुत्पत्तिर्न घटेतेत्याक्षेपे प्रतिबन्द्या किमायातं, सा हि सतीमनुपपत्तिं न वारयितुं क्षमेत्यभिप्रायेण शङ्कते—नन्विति । प्रतिबन्दीमेव परिहरति—

---

१ लक्षणापत्तेरित्युक्त्वा क्लिष्टकल्पनापत्तेरित्युक्तेर्भावमाह—तैजसेति ।

स्तगेहदेहादिमोहरशनां भवदीयमायाम्" "विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया । विमोहिता विकत्थन्ते ममाहमिति दुर्धियः" इत्यादिश्रीभागवतवा-

पश्चाद्भावित्वेऽपि सात्त्विकाहङ्कारविकाररूपसूक्ष्मशरीरसम्बन्धस्य प्राक् सम्भवे बाधकाभावात् । पाञ्चभौतिकेऽपि वा पश्चाद्भविनि "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इत्युक्तप्रकारेण प्रकृत्यष्टकारब्धे सात्त्विकाहङ्कारस्यैव परिगणनया वा ततस्तदुत्पत्त्युपपादनोपपत्तेरिति । वस्तुतः पक्षद्वयेऽस्मिन्नन्तःप्रविश्य चिरतरं विचार्य विनिश्चित्याप्येकमंशं को वा ज्ञातव्यविशेषो विनिर्धारितः स्यात्, अकृते वा परामर्शे का वा हानिः, नहि ज्ञातव्यप्रधानार्थे वैपरीत्यं, तदुपरमामः प्रसङ्गतोऽस्मात् ।

कर्तुरात्मन उपकरणान्येतानि । आत्मप्रयत्नजन्यव्यापारवत्त्वं तल्लक्षणं फलितम् । यद्यपि शरीरप्राणयोरतिव्याप्तमेतत्, तथापि भौतिकत्वेन शब्दाश्रयत्वाच्छब्दानाश्रयत्वविशेषणेन तद्वारणं बोध्यम् । ननु–सिद्धान्तेऽवयवातिरिक्तावयव्यनभ्युपगमेनाव्यक्तमहदहङ्कारभूतपञ्चकारब्धस्य शरीरस्य तत्समुदायविशेषरूपतया तदन्तर्गताव्यक्तादितत्त्वेऽपि तल्लक्षणमतिप्रसक्तं, न च शरीरं भूतपञ्चकमात्रारब्धम्, "महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च" इति वचनात् । मैवम् । शरीरान्तर्गतेषु तदंशेषु तादृशव्यापाराभावात् । शब्दानाश्रयत्वस्थाने शरीरप्राणान्यत्वस्यैव वा निवेशात् । एतानीन्द्रियाण्येकादश । यद्यपि–इन्द्रियगणनायां विवदन्ते श्रुतयः । तथाहि—इन्द्रियाणामुत्पत्तिमावेदयन्ती काचिदावेदयति सप्तत्वम्—"सप्त प्राणाः प्रभवन्ति तस्मा"दिति । चक्षुर्घ्राणरसनवाक्श्रोत्रमनस्त्वगिति तदाशयः । काचित्तु बन्धनगुणयोगेनेन्द्रियाणि निर्दिशन्ती तेषामष्टत्वमावेदयति—"अष्टौ ग्रहा अष्टावतिग्रहाः" इति । इह हस्तस्याधिक्येनाष्टत्वम्, एषां विषया एवातिग्रहत्वेन निर्दिश्यन्ते । काचिन्नवत्वम्—"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ" इति । चक्षुरादियुग्मत्रयं वाक् पायूपस्थे चेति तदाशयः । काचित्तु दशत्वं—"नव वै पुरुषे प्राणा नाभिर्दशमी"ति । अव्यवहितगणनायां नाभ्याधिक्ये दशत्वं स्फुटम् । काचिदेकादशेति—"दशेमे पुरुषे प्राणा आत्मैकादशः" इति । ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च मनश्चेत्येकादशेति तदाशयः । काचिन्मनस आधिक्येन हृदयं गणयन्ती द्वादशेत्यावेदयति—"एवं सर्वेषां स्पर्शानां त्वगेकायनं, एवं सर्वेषां रूपाणां चक्षुरेकायनं, एवं सर्वेषां

वस्तुत इति । स्वारसिकयोजनयेति । अलाक्षणिकयोजनयेत्येतत् । अनुपपत्तिर्हि लक्षणाबीजम्, असत्यामनुपपत्तौ लाक्षणिकयोजनापक्षोऽसङ्गत इति भावः । अनुपपत्तिशङ्कां परिहरति—दिगादीत्यादिना । पक्षद्वयेऽप्यस्मिन्नस्ति कश्चिक्लेशः कश्चिदक्लेशश्च, तदिहैकस्य पक्षस्य निर्धारणे नातीव नः प्रयोजनमित्ययं विचारः परिसमाप्यत इत्याह—वस्तुत इति ।

तथापि भौतिकत्वेनेति । शरीरप्राणयोरित्यनुषङ्गः । इन्द्रियाणामेकादशत्वं समर्थयितुमारभते, तत्र विप्रतिपत्त्यापादकान्विविधान् श्रौतान्वादानाह—यद्यपीत्यादिना । ननु "अष्टौ ग्रहाः अष्टावतिग्रहा" इत्यत्र ग्रहातिग्रहाणां प्रसङ्गो नेन्द्रियाणामिति शङ्कां परिहरन्नाह—बन्धनगुणयोगेनेति । एतेन ग्रहशब्दस्यावयवार्थे तात्पर्यं ज्ञापितम् । चक्षुरादियुग्मत्रयं वाक्–एते शीर्षण्याः प्राणाः । पायूपस्थे–द्वाव-

क्याच्च। चकाराद्ब्रह्माण्डाभिमानिनां ब्रह्मादीनामीश्वराणामपि ग्रहणम्, तेषामपि भगवन्मायया मोहसम्भवोक्तेः। तथाच श्रीभागवत उक्तम्—"अयि! व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः। अहं कलानामृषभो विमुह्ये

---

शब्दानां श्रोत्रमेकायनं, एवं सर्वेषां सङ्कल्पानां मन एकायनं, एवं सर्वासां विद्यानां हृदयमेकायनं, एवं सर्वेषां कर्मणां हस्तावेकायनं, एवं सर्वेषामानन्दानामुपस्थ एकायनं, एवं सर्वेषां विसर्गाणां पायुरेकायनं, एवं सर्वेषामध्वनां पादावेकायन"मिति। क्वचिन्मनोबुद्धिचित्ताहङ्काराणां भेदेन गणनया चतुर्दशत्वं विज्ञायते। तथापि—कार्यवैलक्षण्यव्यवस्थयैकादशैवेन्द्रियाणि बोध्यानि। न्यूनसङ्ख्यानिर्देशस्तु नाधिकसङ्ख्यां प्रतिरुन्ध्यात्। तत्र तत्र तथा निर्देशस्त्वाश्रयान्तरनिबन्धनः। मनस एकस्यैव वृत्तिभेदतस्ततोऽधिकसङ्ख्यानिर्देशः, नैतावता करणाधिक्यं, तदिदं सूत्रकृता सप्तगत्यधिकरणे समर्थितम्। अत्र विस्तरस्तत्रत्यभाष्यतोऽवगन्तव्यः।

अत्र केचित्—दशैवेन्द्रियाणि, मनस्तु नेन्द्रियं, "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" "मनः प्रग्रहमेव च" "इन्द्रियाणि हयानाहुः" "इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः" "इन्द्रियेभ्यः परं मनः" "इन्द्रियाणि मनो बुद्धिः" "इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः" इति तत्र तत्र मनसः पृथङ्निर्देशादिति। इदं तु सूत्रकृतो न हार्दम्। समर्थितं हि सूत्रकृता—"त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात्" इत्यत्र। पूर्वं प्राणशब्दनिर्दिष्टा ह्यत्र त इति परामृश्यन्ते। न च मनसोऽनन्तर्भावः प्राणेषु। प्राणसंवादे तस्य श्रवणात्। न च नेह तद्विवक्षा। प्राक्प्राणेयत्तां विचारयता प्राणानां सप्तत्वमाशङ्क्याधिक्यमेव हि सम-

---

वाञ्चौ। अव्यवहितगणनायाम्—"सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चा"विति श्रुत्युक्तगणनायाम्। मनश्चेति। आसशब्दार्थः। एकायनमिति। मुख्यं साधनमिति यावत्। निर्दर्शितसङ्ख्याविप्रादान्समाधत्ते—तथापीत्यादिना। कार्यवैलक्षण्यव्यवस्थयेति। रूपं चक्षुषैव नान्येन, रसो रसनयैव नान्येनेत्यादिव्यवस्थयेति भावः। आश्रयान्तरनिबन्धन इति। निमित्तान्तरनिबन्धन इत्यर्थः। को निमित्तभेद इत्यत्राह—अत्र विस्तरस्तत्रत्यभाष्यत इति।

परेषां मनसोऽनिन्द्रियत्ववादं प्रतिक्षिपन्नादावाशङ्कते—अत्र केचिदित्यादिना। प्राणो मनः सर्वेन्द्रियाणि चेति। प्राणस्येव मनसः पृथग्ग्रहणात् तस्येवास्याप्यनिन्द्रियत्वं सिद्ध्यति, अन्यथा प्राणस्यापीन्द्रियकोटौ समावेशः स्यादिति भावः। सूत्रकृतो न हार्दमिति। यस्य सूत्रेणोपनिषदर्थोऽवधार्यस्तस्य भगवतो बादरायणस्येति भावः। किं तत्सूत्रं यन्मनस इन्द्रियज्ञापकं, तदाह—त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठादिति। नन्वस्मिन्सूत्रे न तल्लिङ्गमुपलभ्यत इत्यत्राह—पूर्वं प्राणशब्दनिर्दिष्टा ह्यत्र त इति परामृश्यन्त इति। ननु किं तावता, मनो हि न पूर्वं प्रकृतमित्यत्राह—नच मनस इति। प्राणसंवादे तस्य श्रवणादिति। तथाचाव्यवहितपरामर्शिना तच्छब्देन मनसः परामर्शात्तस्येन्द्रियत्वसिद्धिरिति भावः। श्रुतस्याप्यर्थस्य प्रतिपत्तिर्विवक्षात एव, विवक्षा चेह मनसो नेत्याशङ्कां वारयति—नच नेहेति। ननु सप्त—सप्तैवेत्याशङ्क्य इतोऽप्यधिकानीति समर्थितम्, तावता

यया वशोऽन्ये किमुतास्वतन्त्राः ॥" "अहं सनत्कुमारश्च नारदो भगवानजः। कपिलोऽपान्तरतमो देवलो धर्म आसुरिः ॥ मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः। विदाम न वयं सर्वे यन्मायां मायया वृताः ॥" "यस्यात्मयोगरचितं न

---

र्थितं—"हस्तादयस्तु स्थितेऽतो नैव"मिति। ननु यैः सप्तत्वमाशङ्कितं तेष्वन्यतमं वा परिहृतम्। विज्ञायते चाशङ्कायां मनसोऽन्तर्भावः, "सप्तगतेर्विशेषितत्वाच्चे"ति हि पूर्वपक्षसूत्रं, गतिश्चात्र "तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति" इति श्रूयमाणा मरणकालिका इन्द्रियाणां प्राणानुगतिः। अत्र च मनोऽन्तर्भावेण सप्तैव विशिष्यन्ते। स्मर्यते च मनस इन्द्रियत्वम्—"एकादशेन्द्रियाण्याहुर्यानि पूर्वं मनीषिणः। तानि सम्यक्प्रवक्ष्यामि यथावदनुपूर्वशः ॥ कर्मेन्द्रियाणि जानीयान्मनश्चैवोभयात्मकम्।" इति। "इन्द्रियाणि दशैकं च" इति यश्च पृथङ्निर्देशः सच ब्राह्मणवसिष्ठनयतो गुणविशेषविवक्षया च बोध्यः।

यश्चेन्द्रियाणां भौतिकत्ववादः "तैजसानीन्द्रियाण्याहुर्देवा वैकारिका दश। एकादशं मनश्चात्र" इत्यादिस्मृतिविरुद्धोऽनादरणीयः। "अन्नमयं हि सोम्य! मन" इति त्वन्नाप्यायनकत्वनिबन्धनः। आप्यायनं च प्रक्षीणशक्तिकस्य शक्त्यभिवर्धनमेव। अन्नमयत्वश्रुत्याऽन्नविकारत्वाभ्युपगमे प्राणेष्वम्मयत्वश्रुत्या प्राणस्याब्विकारत्वापत्तेः। वायुविशेषरूपस्य तस्य तथात्वं चानुचितम्। "अग्निर्वाग्भूत्वा मुखं प्राविश"दित्यादिश्रुतिस्तु तत्तद्देवताधिष्ठानमाचष्टे। "अग्निं वागप्येति" इत्यादिना श्रूयमाणोऽप्ययो न वागादीनां लयः। किन्तु तत्तदधिष्ठातृदेवतापसरणरूपः। अन्यथा—"ओषधीर्लोमानी"त्यत्रानुपपत्तेः। नह्योषधीषु लोम्नां लयः।

---

मनसस्तेष्वन्तर्भावः कथमवगम्यत इत्यत्राह—अत्र च मनोऽन्तर्भावेणेति। यद्गतिवाक्यं "तमुत्क्रामन्त"मित्यादि ततः पूर्ववाक्ये ह्यस्ति मनसः प्रत्यभिज्ञानमिति भावः। यद्वा—अत्र—"सप्तगतेर्विशेषितत्वाच्चे"ति सूत्रे, मनोऽन्तर्भावेण सप्तैव "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सहे"ति परमगतिसाधनोपयोगिविशेषणेन विशिष्यन्त इति भावः। न केवलं सौत्रं लिङ्गं, स्मृतिरपीत्याह—स्मर्यते चेति। गुणविशेषविवक्षयेति। उभयात्मकत्वं गुणविशेषः, उभयोपकारकत्वमिति यावत्।

ननु स्मृतिः श्रुतिविरुद्धेऽर्थे न प्रमाणम्, श्रुत्या चान्नमयत्वमिन्द्रियाणामवगम्यत इत्यत्राह—अन्नमयं हीत्यादि। ननु मनसोऽन्नेन किमाप्यायनं, आहङ्कारिकत्वे तस्यान्नेन नावयवोपचय इत्यत्राह—प्रक्षीणशक्तिकस्येति। ननु मयट्प्रत्ययस्य मुख्यार्थे सम्भवति गौणार्थाश्रयणमनुचितमित्यत्राह—अन्नमयत्वेति। ननु यस्य यत उत्पत्तिर्यस्मिन् लयस्तस्य तदात्मकतैव, वाच अग्नेरुत्पत्तिरग्नावेव लयश्च श्रूयते, तत्कथं वाच आहङ्कारिकत्वमित्याशङ्कायामाह—अग्निरित्यादिना। मुख्यार्थे बाधमाह—अन्यथेति। ननु लयप्रकरण इन्द्रियाणां तन्मात्रेषु लयश्रवणात्कथमाहङ्कारिकतेन्द्रियाणामित्यत्राह—

---

१ बृहदारण्यके श्रूयते—एकीभवति न पश्यतीत्याहुरेकीभवति न वदतीत्याहुः...एकीभवति न मनुत इत्याहुः...तमुत्क्रामन्तं प्राणोऽनूत्क्रामतीति। अत्र वाक्ये तमुत्क्रामन्तमित्यतः पूर्वं एकीभवति न मनुत इत्याहुरिति मनसोऽपि ग्रहणमस्तीति भावः।

विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये। यन्मायया पिहितदृष्टय एतदज्ञः किं तस्य ते वयमसद्गतयो गृणीमः॥" "यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्ते" "नाहं न यूयं यदृतां गतिं विदुर्न

---

एतत्सहपाठाच्चैवमेव योज्यम्। नच "इन्द्रियाणि तन्मात्रेषु" इति लयश्रुत्या भूतोपादानकत्वसिद्धिः, तेषु तल्लयस्य तत्राकथनात्। तेषां तेषु संसर्गमात्रमेव तु सा श्रुतिर्वक्ति। लयश्चेद्विवक्षितः पूर्वापरपर्यायेष्विव श्रूयेतेहापि "लीयन्त" इति। नहि श्रूयते। श्रूयते तु—"आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेष्वि"ति। न चाश्रवणेऽप्यनुपङ्ग इति वाच्यम्। पूर्वापरपर्यायेष्वप्यनुपङ्गस्यैवौचित्याच्चत्र तच्छ्रुतेर्वैरूप्यप्रसङ्गात्। तदुभयतः श्रूयमाणस्य लयस्येहाश्रवणाद्विज्ञायते संसर्गमात्रं विवक्षितमिति। अन्यथाऽऽकाशस्येन्द्रियोपादानकत्वापत्तेः। तथासति "षोडश विकारा" इति श्रुतिविरोधप्रसङ्गात्। तत्र पर्याये परं लयो न विवक्षितश्चेदत्र तद्विवक्षायामभिनिवेशादन्यः को विशेषः। ननु लयप्रकरण आकाशेन्द्रिययोरिन्द्रियतन्मात्राभ्यां संसर्गविवक्षायां विशेषः कः। उच्यते। तत्तदिन्द्रियाप्यायकानां भूतांशानां लयतः प्राक् तत्र सन्निहितानां स्वकारणलयक्रमेणाऽऽकाशपर्यन्तं विलय आकाशदशापन्नानामिन्द्रियेषु सम्बन्धोऽवशिष्यते। आकाशस्य शब्दतन्मात्रे विलये सति तेषां तदानीं तन्मात्ररूपेण तत्रावस्थित्या तन्मात्रावस्थया तेषां सम्बन्धोऽवशिष्यत इत्यर्थविशेषोऽत्र सिध्यति। इत्थं चेन्द्रियाणामाहङ्कारिकत्वे न काप्यनुपपत्तिः।

तत्र शब्दमात्रग्राहकेन्द्रियं श्रोत्रम्। स्पर्शमात्रग्राहकेन्द्रियं त्वक्। रूपमात्रग्राहकेन्द्रियं चक्षुः। रसमात्रग्राहकेन्द्रियं रसना। गन्धमात्रग्राहकेन्द्रियं घ्राणम्। शब्दादिपञ्चसाधारणमिन्द्रियं मनः। वर्णोच्चारणकरणमिन्द्रियं वाक्। शिल्पकरणमिन्द्रियं पाणिः। सञ्चरणकरणमिन्द्रियं पादः। मलाद्युत्सर्गकरणमिन्द्रियं पायुः। आनन्दविशेषकरणमिन्द्रियमुपस्थः।

अथ तामसाहङ्काराच्छब्दतन्मात्रं तत आकाशं ततः स्पर्शतन्मात्रं ततो वायुस्ततो रूपतन्मात्रं ततस्तेजस्ततो रसतन्मात्रं ततो वारि ततो गन्धतन्मात्रं ततः पृथिवी। दध्नः कलिलावस्थेव भूतानामव्यवहितपूर्वावस्था शब्दादीनां तद्गुणानां सौक्ष्म्येण विलक्षणेयं तन्मात्र-

---

न चेत्यादिना। ननु प्रकरणाननुगुणोऽर्थः कथमुचित इत्यत्राह—लयश्चेद्विवक्षित इति। ननु पूर्वमुत्तरत्र च श्रवणादेव स्वारस्यान्मध्येऽप्याकृष्यत इत्यत्राह—अन्यथेति। तत्र पर्याये—आकाशमिन्द्रियेष्वित्यस्मिन्पर्याये। आकाशेन्द्रिययोरिन्द्रियतन्मात्राभ्यामिति। क्रमान्वयो विवक्षितः।

मनस्यतिप्रसङ्गवारणाय–मात्रेति। यद्यपि श्रोत्रस्य शब्दत्वकत्वादिग्राहकतया न शब्दमात्रग्राहकता। तथापि मात्रशब्देन स्पर्शादेरेव व्यवच्छेदान्नासम्भवः। स्पर्शाग्राहकत्वे सति शब्दग्राहकं श्रोत्रमिति तु निष्कर्षः। एवमुत्तरत्रापि। शब्दादिपञ्चसाधारणेति। पञ्चेति वस्तुकथनम्। लक्षणं तु शब्दाग्राहकत्वे सति स्पर्शग्राहकत्वं शब्दाग्राहकत्वे सति रूपग्राहकत्वमित्यादि बोध्यम्।

तामसाहङ्कारात्तन्मात्रद्वारा भूतोत्पत्तौ कापिलाद्विशेषं प्रदर्शयन्नाह—अथेत्यादिना। ननु केयं तन्मात्रावस्था? तत्र च प्रमाणं किमित्यत्राह—दध्न इत्यादि। भूतानामव्यवहितेति। तत्तद्भूताना-

वामदेवः किमुतापरे सुराः । यन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं त्वात्मसमं विचक्ष्महे ॥" "नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचित

संज्ञिताऽऽगमैकगम्या । यत्तु पञ्चापि तन्मात्राणि तामसाहङ्कारात्, तेभ्यः पञ्चभ्यः पञ्चभूतानि, शब्दतन्मात्रादाकाशं स्पर्शतन्मात्राद्वायुरिति तत्क्रम इति । तन्न । "आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" इति श्रूयमाणक्रमभङ्गप्रसङ्गात्, "पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते" इति लयश्रुतिविरोधाच्च । एतेन—आकाशादिपूर्वपूर्वभूतसहकृतात्स्पर्शतन्मात्रादितत्तत्तन्मात्रतो वाय्वादितत्तद्भूतारम्भस्वीकाराद्वाय्वादावाकाशादीनां निमित्तत्वमस्तीति तदिदं निमित्तत्वमभिप्रेत्य "आकाशाद्वायु"रित्यादौ पञ्चम्युपपत्तेर्नाकाशाद्युपादानकत्वं वाय्वादावित्यपास्तम् । लयश्रुतिविरोधस्यापरिहार्यत्वात् । "पृथिव्या ओषधयः ओषधीभ्योऽन्नं" इत्याद्युत्तरवाक्यानुरोधेन "आकाशाद्वायु"रित्यादावपि पञ्चम्या उपादानत्वबोधकत्वाश्रयणस्यैवौचित्याच्च । "भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह । ततः ससर्ज तन्मात्रमाकाशं शब्दलक्षणम् ॥ आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह । बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥ ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ।" इत्यादिविष्णुपुराणवचनविरोधापत्तेश्च । नच "तन्मात्राणि भूतादा"वित्यत्र बहुवचनश्रुतेस्तन्मात्रसामान्यस्य भूताद्युपादानकत्वं सिध्यति । "अदितिः पाशा"नित्यादाविव बहुवचनोपपत्तेः । अन्यथा "पृथिव्यप्सु प्रलीयते" इत्यादिपूर्ववाक्यविरोधात् । श्रुत्यन्तरविरोधाच्च । यच्चाशङ्क्यते—आकाशात्स्पर्शतन्मात्रं ततो वायुरिति क्रमे महदादीनामिवाऽऽकाशादिभूतचतुष्टयस्यापि प्रकृतित्वसम्भवेन "अष्टौ प्रकृतयः षोडश विकारा" इति प्रकृतेरष्टत्वावधारणमसङ्गतं स्यात् । तथासति ह्येवं श्रूयेत द्वादश प्रकृतयो द्वादश विकारा इति । तदप्यपर्यालोचनविजृम्भितं, "अष्टौ प्रकृतयः षोडश विकाराः शरीरे" इति हि श्रूयते । शरीरशब्दपर्यालोचनया चायमेवाशयः श्रुतेः प्रतीयते—शरीरारम्भकाण्यष्टौ भूतानि पञ्च प्रकृतिमहदहङ्काराश्चेति; शरीराश्रिताश्च षोडश विकाराः—शब्दादयः पञ्च विषया एकादशेन्द्रियाणि चेति । इत्थं च नेयं श्रुतिश्चतुर्विंशतितत्त्वानां प्रकृतिविकृतिभावेन भेदप्रतिपादनपरा । उक्तार्थपरत्वे तूपबृंहणं च—"अष्टौ प्रकृतयः प्रोक्ता विकाराश्चैव षोडश । अव्यक्तं च महांश्चैव तथाऽहङ्कार एव च ॥ पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ॥ श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् । वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव

मव्यवहितेत्यर्थः । कापिलमतमनूद्य निरस्यति—यत्त्वित्यादिना । उत्पत्तिक्रमप्रतिपादकश्रुतिविरोधापादनेनैव निरासे लयश्रुतिविरोधापादनस्य फलमाह—एतेनेति । उत्पत्तिवाक्यस्य गौणार्थाश्रयणमपि प्रकरणासङ्गतमित्याह—पृथिव्या इत्यादिना । अनन्यथासिद्धवचनविरोधमाह—भूतादिस्त्विति । तामसाहङ्कारतः शब्दतन्मात्रमात्रोत्पत्तिवादे श्रुतिविरोधमाशङ्क्य परिहरति—न चेत्यादिना । अन्यथेति । बहुवचनार्थबलात्तन्मात्रसामान्यस्य तामसाहङ्कारिकत्व इति यावत् । स्वाभिमतार्थ उपबृंहणमाह—उक्तार्थपरत्वे त्विति ।

विदुर्विरिञ्चो रुद्रादयोऽस्य तनयाः पतयो गिरां ये। यन्मायया पिहितदृष्टय एतदज्ञः किं तस्य ते वयमसद्गतयो गृणीमः॥" "यन्मायया गहनयाऽपहृतात्मबोधा ब्रह्मादयस्तनुभृतस्तमसि स्वपन्ते" "नाहं न यूयं यद्दतां गतिं विदुर्न

एतत्सहपाठाच्चैवमेव योज्यम्। नच "इन्द्रियाणि तन्मात्रेषु" इति लयश्रुत्या भूतोपादानकत्वसिद्धिः, तेषु तल्लयस्य तत्राकथनात्। तेषां तेषु संसर्गमात्रमेव तु सा श्रुतिर्वक्ति। लयश्चेद्विवक्षितः पूर्वापरपर्यायेष्विव श्रूयेतेहापि "लीयन्त" इति। नहि श्रूयते। श्रूयते तु—"आकाशमिन्द्रियेषु इन्द्रियाणि तन्मात्रेष्वि"ति। न चाश्रवणेऽप्यनुषङ्ग इति वाच्यम्। पूर्वापरपर्यायेष्वप्यनुषङ्गस्यैवौचित्याच्चत्र तच्छ्रुतेर्वैरूप्यप्रसङ्गात्। तदुभयतः श्रूयमाणस्य लयस्येहाश्रवणाद्विज्ञायते संसर्गमात्रं विवक्षितमिति। अन्यथाऽऽकाशस्येन्द्रियोपादानकत्वापत्तेः। तथासति "षोडश विकारा" इति श्रुतिविरोधप्रसङ्गात्। तत्र पर्याये परं लयो न विवक्षितश्चेदत्र तद्विवक्षायामभिनिवेशादन्यः को विशेषः। ननु लयप्रकरण आकाशेन्द्रिययोरिन्द्रियतन्मात्राभ्यां संसर्गविवक्षायां विशेषः कः। उच्यते। तत्तदिन्द्रियाप्यायकानां भूतांशानां लयतः प्राक् तत्र सन्निहितानां स्वकारणलयक्रमेणाऽऽकाशपर्यन्तं विलय आकाशदशापन्नानामिन्द्रियेषु सम्बन्धोऽवशिष्यते। आकाशस्य शब्दतन्मात्रे विलये सति तेषां तदानीं तन्मात्ररूपेण तत्रावस्थित्या तन्मात्रावस्थया तेषां सम्बन्धोऽवशिष्यत इत्यर्थविशेषोऽत्र सिध्यति। इत्थं चेन्द्रियाणामाहङ्कारिकत्वे न.काप्यनुपपत्तिः।

तत्र शब्दमात्रग्राहकेन्द्रियं श्रोत्रम्। स्पर्शमात्रग्राहकेन्द्रियं त्वक्। रूपमात्रग्राहकेन्द्रियं चक्षुः। रसमात्रग्राहकेन्द्रियं रसना। गन्धमात्रग्राहकेन्द्रियं घ्राणम्। शब्दादिपञ्चसाधारणमिन्द्रियं मनः। वर्णोच्चारणकरणमिन्द्रियं वाक्। शिल्पकरणमिन्द्रियं पाणिः। सञ्चरणकरणमिन्द्रियं पादः। मलाद्युत्सर्गकरणमिन्द्रियं पायुः। आनन्दविशेषकरणमिन्द्रियमुपस्थः।

अथ तामसाहङ्काराच्छब्दतन्मात्रं तत आकाशं ततः स्पर्शतन्मात्रं ततो वायुस्ततो रूपतन्मात्रं ततस्तेजस्ततो रसतन्मात्रं ततो वारि ततो गन्धतन्मात्रं ततः पृथिवी। दध्नः कलिलावस्थेव भूतानामव्यवहितपूर्वावस्था शब्दादीनां तद्गुणानां सौक्ष्म्येण विलक्षणेयं तन्मात्र-

न चेत्यादिना। ननु प्रकरणाननुगुणोऽर्थः कथमुचित इत्यत्राह—लयश्चेद्विवक्षित इति। ननु पूर्वमुत्तरत्र च श्रवणादेव स्वारस्यानमध्येऽप्याकृष्यत इत्यत्राह—अन्यथेति। तत्र पर्याये—आकाशमिन्द्रियेष्वित्यस्मिन्पर्याये। आकाशेन्द्रिययोरिन्द्रियतन्मात्राभ्यामिति। क्रमान्वयो विवक्षितः।

मनस्यतिप्रसङ्गवारणाय–मात्रेति। यद्यपि श्रोत्रस्य शब्दत्वकत्वादिग्राहकतया न शब्दमात्रग्राहकता। तथापि मात्रशब्देन स्पर्शादेरेव व्यवच्छेदान्नासम्भवः। स्पर्शाग्राहकत्वे सति शब्दग्राहकं श्रोत्रमिति तु निष्कर्षः। एवमुत्तरत्रापि। शब्दादिपञ्चसाधारणेति। पञ्चेति वस्तुकथनम्। लक्षणं तु शब्दग्राहकत्वे सति स्पर्शग्राहकत्वं शब्दग्राहकत्वे सति रूपग्राहकत्वमित्यादि बोध्यम्।

तामसाहङ्कारात्तन्मात्रद्वारा भूतोत्पत्तौ कापिलाद्विशेषं प्रदर्शयन्नाह—अथेत्यादिना। ननु केयं तन्मात्रावस्था? तत्र च प्रमाणं किमित्यत्राह—दध्न इत्यादि। भूतानामव्यवहितेति। तत्तद्भूताना-

वामदेवः किमुतापरे सुराः । यन्मायया मोहितबुद्धयस्त्विदं विनिर्मितं त्वात्मसमं विचक्ष्महे ॥" "नाहं परायुर्ऋषयो न मरीचिमुख्या जानन्ति यद्विरचितं

संश्रिताऽऽगमैकगम्या । यत्तु पञ्चापि तन्मात्राणि तामसाहङ्कारात्, तेभ्यः पञ्चभ्यः पञ्चभूतानि, शब्दतन्मात्रादाकाशं स्पर्शतन्मात्राद्वायुरिति तत्क्रम इति । तन्न । "आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" इति श्रूयमाणक्रमभङ्गप्रसङ्गात्, "पृथिव्यप्सु प्रलीयते आपस्तेजसि लीयन्ते तेजो वायौ लीयते वायुराकाशे लीयते" इति लयश्रुतिविरोधाच्च । एतेन—आकाशादिपूर्वपूर्वभूतसहकृतात्स्पर्शतन्मात्रादितत्तत्तन्मात्रतो वाय्वादितत्तद्भूतारम्भस्वीकाराद्वाय्वादावाकाशादीनां निमित्तत्वमस्तीति तदिदं निमित्तत्वमभिप्रेत्य "आकाशाद्वायु"रित्यादौ पञ्चम्युपपत्तेर्नाकाशाद्युपादानकत्वं वाय्वादावित्यपास्तम् । लयश्रुतिविरोधस्यापरिहार्यत्वात् । "पृथिव्या ओषधयः ओषधीभ्योऽन्नं" इत्याद्युत्तरवाक्यानुरोधेन "आकाशाद्वायु"रित्यादावपि पञ्चम्या उपादानत्वबोधकत्वाश्रयणस्यैवौचित्याच्च । "भूतादिस्तु विकुर्वाणः शब्दमात्रं ससर्ज ह । ततः ससर्ज तन्मात्रमाकाशं शब्दलक्षणम् ॥ आकाशस्तु विकुर्वाणः स्पर्शमात्रं ससर्ज ह । बलवानभवद्वायुस्तस्य स्पर्शो गुणो मतः ॥ ततो वायुर्विकुर्वाणो रूपमात्रं ससर्ज ह ।" इत्यादिविष्णुपुराणवचनविरोधापत्तेश्च । नच "तन्मात्राणि भूतादा"वित्यत्र बहुवचनश्रुतेस्तन्मात्रसामान्यस्य भूताद्युपादानकत्वं सिध्यति । "अदितिः पाशा"नित्यादाविव बहुवचनोपपत्तेः । अन्यथा "पृथिव्यप्सु प्रलीयते" इत्यादिपूर्ववाक्यविरोधात् । श्रुत्यन्तरविरोधाच्च । यच्चाशङ्क्यते—आकाशात्स्पर्शतन्मात्रं ततो वायुरिति क्रमे महदादीनामिवाऽऽकाशादिभूतचतुष्टयस्यापि प्रकृतित्वसम्भवेन "अष्टौ प्रकृतयः षोडश विकारा" इति प्रकृतेरष्टत्वावधारणमसङ्गतं स्यात् । तथासति ह्येवं श्रूयेत द्वादश प्रकृतयो द्वादश विकारा इति । तदप्यपर्यालोचनविजृम्भितं, "अष्टौ प्रकृतयः षोडश विकाराः शरीरे" इति हि श्रूयते । शरीरशब्दपर्यालोचनया चायमेवाशयः श्रुतेः प्रतीयते—शरीरारम्भकाण्यष्टौ भूतानि पञ्च प्रकृतिमहदहङ्काराश्चेति; शरीराश्रिताश्च षोडश विकाराः—शब्दादयः पञ्च विषया एकादशेन्द्रियाणि चेति । इत्थं च नेयं श्रुतिश्चतुर्विंशतितत्त्वानां प्रकृतिविकृतिभावेन भेदप्रतिपादनपरा । उक्तार्थपरत्वे तूपबृंहणं च—"अष्टौ प्रकृतयः प्रोक्ता विकाराश्चैव षोडश । अव्यक्तं च महांश्चैव तथाऽहङ्कार एव च ॥ पृथिवी वायुराकाशमापो ज्योतिश्च पञ्चमम् । एताः प्रकृतयस्त्वष्टौ विकारानपि मे शृणु ॥ श्रोत्रं त्वक् चैव चक्षुश्च जिह्वा घ्राणं च पञ्चमम् । वाक् च हस्तौ च पादौ च पायुर्मेढ्रं तथैव

मव्यवहितेत्यर्थः । कापिलमतमनूद्य निरस्यति—यत्त्वित्यादिना । उत्पत्तिक्रमप्रतिपादकश्रुतिविरोधापादनेनैव निरासे लयश्रुतिविरोधापादनस्य फलमाह—एतेनेति । उत्पत्तिवाक्यस्य गौणार्थाश्रयणमपि प्रकरणासङ्गतमित्याह—पृथिव्या इत्यादिना । अनन्यथासिद्धवचनविरोधमाह—भूतादिस्त्विति । तामसाहङ्कारतः शब्दतन्मात्रमात्रोत्पत्तिवादे श्रुतिविरोधमाशङ्क्य परिहरति—न चेत्यादिना । अन्यथेति । बहुवचनार्थबलात्तन्मात्रसामान्यस्य तामसाहङ्कारिकत्व इति यावत् । स्वाभिमतार्थ उपबृंहणमाह—उक्तार्थपरत्वे त्विति ।

खलु सत्त्ववर्गाः। यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्रवृत्ताः॥" "सर्वे विमोहितधियस्तव माययेमे ब्रह्मादयस्तनुभृतो बहिरर्थ-

च॥ शब्दस्पर्शौ च रूपं च रसो गन्धस्तथैव च। एते विशेषा राजेन्द्र! महाभूतेषु पञ्चसु॥ दशेन्द्रियाण्यथैतानि सविशेषाणि मैथिल!। मनः षोडशमित्याहुरध्यात्मगतिचिन्तकाः॥" इति। तथा चानवद्यमाकाशादेस्तन्मात्रद्वारा वाय्वाद्यारम्भकत्वम्।

केचित्तु—"अष्टौ प्रकृतयः षोडश विकारा" इतीयं श्रुतिस्तुश्चतुर्विंशतितत्त्वानां प्रकृतिविकृतिभावभेदेन विभेदवर्णनपरैव, आकाशादिभूताद्वाय्वादिभूतारम्भो नेष्यते। "आकाशाद्वायु"रित्यादिश्रुतिस्तु सूक्ष्मावस्थावस्थितादाकाशादितस्तदवस्थानां वाय्वादीनामारम्भं वक्ति, शब्दतन्मात्रादिभ्यः स्पर्शतन्मात्रादीत्येतत्। आकाशादीनि भूतानि तु तत्तत्तन्मात्रेभ्यो बोध्यानि। अयमत्रारम्भक्रमः—तामसाहङ्काराच्छब्दतन्मात्रं तत आकाशं स्पर्शतन्मात्रं च, स्पर्शतन्मात्रात्पूर्वतन्मात्रसहकृताद्वायुः रूपतन्मात्रं चेति। एवमुत्तरत्रापि। विष्णुपुराणवचनमप्येतदानुगुण्येनैव व्याख्येयम्। इत्थंच प्रकृतिविकृतिभावावधारणश्रुतेरुत्पत्तिश्रुतेश्च मिथोऽविरोध इत्याहुः।

तन्मात्रसामान्यलक्षणं तु भूताव्यवहितपूर्वावस्थावत्त्वम्। शब्दतन्मात्रादिष्वाकाशादिभूताव्यवहितपूर्वावस्थावत्त्वमस्तीति लक्षणसमन्वयः। नच शब्दतन्मात्रादेराकाशाद्यव्यवहितत्वेऽपि वाय्वादितो व्यवहितत्वान्न भूताव्यवहितत्वमित्यव्याप्तिरिति वाच्यम्। यत्किञ्चिद्भूताव्यवहितपूर्वत्वस्यैव लक्षणत्वात्, स्वपूर्वावस्थापूर्वत्वाभाववत्त्वस्वपूर्वत्वोभयसम्बन्धेन भूतत्वावस्थावत्त्वमित्येतत्। विशिष्य तन्मात्रलक्षणं तु—शब्दतन्मात्रस्याकाशाव्यवहितपूर्वावस्थावत्त्वमिति रीत्या बोध्यम्। तत्र शब्दतन्मात्रेऽनुद्भूतः शब्दः, आकाशे तूद्भूत इति भिदा। एवमन्यत्रापि। एवं वाय्वादीनां भूतानां पूर्वपूर्वभूतविकाररूपत्वात्तेषु पूर्वपूर्वभूतगुणा अप्यनुवर्त्तन्ते। तथाच शब्दादिषु पञ्चस्वेकद्वित्रिचतुःपञ्चकमाकाशादिषु क्रमाद्बोध्यम्। तत्राऽऽकाशस्य–स्पर्शशून्यत्वे सत्युद्भूतशब्दवत्त्वं लक्षणम्। शब्दतन्मात्रवारणायोद्भूतेति। वाय्वादिवारणाय सत्यन्तम्। रूपशून्यत्वे सत्युद्भूतस्पर्शवत्त्वं वायोर्लक्षणम्। रसशून्यत्वे सत्युद्भूतरूपवत्त्वं तेजसो लक्षणम्। प्रपञ्चोऽन्यत्र द्रष्टव्यः।

एकदेशिनां मतमाह—केचित्त्विति। पूर्वपूर्वभूतानामुत्तरोत्तरभूतानारम्भकत्वे "आकाशाद्वायु" रिति श्रुतेर्विरोध इत्याशङ्कां परिहरति—आकाशाद्वायुरित्यादिश्रुतिस्त्विति। इत्येतदिति। "आकाशाद्वायु"रिति श्रुतावाकाशादित्यादिपञ्चम्यन्तपदानां शब्दतन्मात्रादितन्मात्रपरतेति भावः। आहुरित्यस्वरसोद्भावनम्। आकाशादित्यादिपदानां लक्षणाकल्पनमस्वरसम्।

शब्दतन्मात्रादिष्वाकाशादिभूताव्यवहितपूर्वावस्थावत्त्वमिति। तत्तत्तन्मात्रेषु तत्तद्भूताव्यवहितपूर्वावस्थावत्त्वमस्तीति भावः। इति रीत्येति। वाय्वव्यवहितपूर्वावस्थावत्त्वं तेजोऽव्यवहितपूर्वावस्थावत्त्वं जलाव्यवहितपूर्वावस्थावत्त्वं पृथिव्यव्यवहितपूर्वावस्थावत्त्वमिति क्रमात्स्पर्शतन्मात्रादीनां लक्षणानि बोध्यानि। अव्यवहितत्वविशेषणादाकाशादौ नातिव्याप्तिः। शब्दादिष्विति। निर्धारणे

भावाः ।" "स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया । जडीकृतं नृपश्रेष्ठ ! स न्यवर्त्तत कश्मला"दित्यादि । एवंभूता मायेत्यवगम्यताम्—भवद्भिर्ज्ञायताम् ॥१०६॥

मन्यन्ते पीलुजातं कतिचन जगदारम्भकं केचिदाहुः कर्त्रीमेकां स्वतन्त्रां प्रकृतिमथ च तां सङ्गमाहुर्गुणानाम् । कामप्यन्यां तु मायां सदसदुभयतो मन्वते मन्यमाना मिथ्यात्वं दृश्यमाने, कुमतिविलसितं सर्वमेतद्धि हेयम् ॥ १ ॥ किन्त्वाश्चर्यस्वरूपा परिणमति परब्रह्मणाऽधिष्ठितैका मायाऽविद्यादिशब्दैः श्रुतिषु निगदिता काऽपि शक्तिस्तदीया । कार्यारम्भावधित्वात्प्रकृतिरथ तमश्चोच्यते सौक्ष्म्यभूम्ना विष्णोर्नानावपुर्भूषोर्भवति तनुतया कार्यवैचित्र्यमूलम् ॥ २ ॥ मायैका त्रिगुणा हरेर्भगवतो देवस्य शक्तिर्यया ब्रह्माण्डादिविलास एष विपुलो नानाविधः सूयते । आवेष्ट्य स्वगुणेन जीवनिवहान् या भ्रामयत्यञ्जसा तामेनां तमनुप्रपद्य तु तरेत्तस्यैव वाचं स्मरन् ॥ ३ ॥ इति ॥ १०६ ॥

सप्तमी । प्रपञ्च इति । गन्धशून्यत्वे सति उद्भूतरसवत्त्वमपां लक्षणम् । पृथिव्यामतिव्याप्तिवारणाय सत्यन्तम् । रसतन्मात्रेऽतिव्याप्तिवारणायोद्भूतेति । गन्धवत्त्वं पृथिव्या लक्षणम् । शब्दादीनां पृथिव्यामनुवृत्तावपि गन्धस्य पृथिव्या अन्यत्राभावान्नातिप्रसङ्गावकाशः । एतावता प्रबन्धेन निरूपितं प्रकृतेर्विस्तरं सङ्गृह्य श्लोकरूपेणाह—मन्यन्त इत्यादिना ॥ १०६ ॥

---

हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः ।
ज्ञेयः स्वतन्त्र ईशोऽसौ सर्वकर्मफलप्रदः ॥ १०७ ॥

परमात्मस्वरूपमाह—हृदय इति । हृदये—हृदयपद्मे । जीववत्—यथा जीवः स्थितस्तथा । यो जीवे—जीवात्मनि । अन्तर्यामितया—अन्तः स्थित्वा यमयति—

अथेश्वरं निरूपयति—हृदय इति । यद्यपि बहवो देवा निर्दिश्यन्ते नामेश्वरा इति, तथापि न तेषु निरुपधीश्वरत्वं, यो हीदमखिलमाविश्य नियमयति स एव स्वतन्त्रः सर्वेश्वर इति व्यञ्जयन्नाह—हृदये जीववज्जीवे योऽन्तर्यामितया स्थितः । ज्ञेयः स्वतन्त्र ईशोऽसाविति । हृदये जीववत्स्थित इति योजना । हृदये स्थितौ विशेषमाह—जीवेऽन्तर्यामितयेति । निरूपितत्वं सप्तम्यर्थः, जीवस्याप्यात्मतयेत्येतत् । यद्यपि सन्निहितो नाम हृदये जीवः; परन्तु कर्मणा नियन्त्रितः, अयं तु निखिलप्रवृत्तिनिवृत्तिमूलज्ञानोदयप्रदेशभूते तत्रैव सन्निधाय नियमयति तमिति विशेषः । तथाच स्मृतिः—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति । भ्रामय-

अखिलमाविश्येति । आत्मतयेति शेषः । व्यञ्जयन्निति । जीवान्तर्यामित्वोक्त्या सर्वान्तर्यामित्वं व्यज्यत इति भावः । हृदये जीववदित्यन्तस्योदाहरणत्वभ्रमं व्युदस्यन्नाह—हृदये जीववत्स्थित

नियमयतीति तथोक्तस्तस्य भावस्तत्ता तया। नियन्तृरूपेण स्थितः। "य

न्सर्वभूतानि यन्त्रारूढानि मायया॥" इति "सर्वस्य चाहं हृदि सन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।" इति च। एवं वा योजना—हृदये जीववज्जीवे स्थितः। अन्तर्यामितयेति साधारणो धर्मः। यथेदं वपुर्जीवोऽन्तः प्रविश्य नियमयति तथा तमपि योऽन्तः प्रविश्य नियमयति स सर्वेश्वर इति भावः। अन्तर्यामितयेति विशेषोक्तिरेव वा। साधारणधर्मस्तु स्वाधिष्ठेयसत्ताधायकत्वं; तत्तु व्यङ्ग्यम्। एतदुक्तं भवति—यथा शरीरं जीवाधिष्ठितमेव स्वकार्यसमर्थं, अन्यथा तु काष्ठप्रायमसत्, तथाऽयं जीवोऽपीश्वरसत्तयैव चेतयते, अन्यथा त्वसत्कल्प एव भवेत्, अत एवान्तः प्रविश्य नियन्तृत्वमस्यैवासाधारणमिति। तथाच श्रुतिः—"य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमयति" "यो विज्ञाने तिष्ठन्विज्ञानमन्तरो यमयती"ति।

ननु—कोऽयमन्तःप्रवेशो जीवे निरवयवे, तस्मिन्नन्तर्बहिर्विभागाभावात्। सत्यम्। तथापि व्याप्तिमात्रे तात्पर्यात्तदुपपत्तिः। मूर्त्तान्तरस्थितेर्मूर्त्तान्तरगतिप्रतिरोधकतेव नहि जीवस्थितेरन्तर्यामिगतिप्रतिरोधकता, स हि सर्वतः सूक्ष्मतमः। "अणोरणीयान्" इति श्रुतेः। "आत्मानमन्तरो यमयती"त्यत्रान्तरशब्दस्योक्तार्थ एव तात्पर्यम्।

इति योजनेति। विशेषमाहेति। जीवादिति शेषः। को विशेषस्तमुपपादयति—यद्यपीत्यादिना। तत्र प्रमाणमाह—तथा चेत्यादिना। सर्वभूतानीति। यन्त्रारूढानि—शरीरलक्षणयन्त्रारूढानि, सर्वभूतानि भ्रामयन्नित्यन्वयः। यन्त्रारूढानीव सर्वभूतानि भ्रामयन्निति वा योजना। माययेति। स्वीयशक्तिभूतया गुणमय्या साधनभूतया गुणानुगुणं भ्रामयन्नित्यर्थः। सति सम्भवे व्यवहितसम्बन्धादव्यवहितसम्बन्धो ग्राह्य इत्यभिप्रेत्याह—एवं वा योजनेति। साधारणो धर्म इति। उपमानोपमेययोरिति यावत्। साधारणधर्मनिर्देशपूर्वकमुपमानविशेषनिरूपणान्निष्पन्नं भावमाह—यथेदमित्यादिना। अन्तर्यामिशब्दः परमात्मन्येव रूढो न तु क्षेत्रज्ञे, स ह्यभिमन्यते केवलं क्षेत्रम्, तदन्तर्यामिशब्दस्य साधारणधर्मनिर्देशरूपतया व्याख्यानमनुचितमित्यभिप्रेत्याह—विशेषोक्तिरेव वेति। तर्हि साधारणधर्मः क इत्यत्राह—साधारणधर्मस्त्विवति। चेतयत इति। तत्र तत्र प्रवर्तत इति भावः। कथमन्तर्यामित्वमस्य विशेषः? तदुपपादयति—अत एवेति। यतः शारीरचेष्टाप्रयोजकजीवप्रयत्नसामान्यमेतदायत्तमत एवेत्यर्थः। य आत्मनि तिष्ठन्निति वहिर्व्याप्तिः, वेद्यामग्निस्तिष्ठतीतिवत्। आत्मनोऽन्तर इत्यन्तर्व्याप्तिः, तिले तैलमितिवत्।

शङ्कते—नन्विति। किंशब्दः प्रतिक्षेपे। अयमिति। हृदय इव जीवे इत्युदाहरणविशेषेण प्रतिपाद्यमानः, "आत्मानमन्तर" इति श्रुत्या प्रख्याप्यमान इत्यर्थः। प्रतिक्षेपे हेतुर्निरवयव इति। अन्तर्बहिर्विभागाभावादिति। अयमस्यान्तःप्रदेशः, अयमस्य वहिःप्रदेश इति विभागस्यासम्भवादित्यर्थः। प्रतिविधत्ते—सत्यमिति। अन्तर्बहिःप्रदेशविभागो नेत्यत्राङ्गीकारः, अंशतोऽप्यव्याप्तत्वेऽनङ्गीकारः। व्याप्तिमात्र इति। मात्रशब्दादन्तःप्रदेशविभागो व्यावर्त्यते। तदुपपत्तिरिति। मूलेनिर्देशस्य श्रौतनिर्देशस्य चोपपत्तिरित्यर्थः। ननु व्याप्तिमात्रे तात्पर्येऽप्यनुपपन्नार्थमन्तरो यमयतीत्यपेतार्थं वा,

१ परमात्मना। २ जीवे योऽन्तर्यामितयेति मूलनिर्देशः। ३ आत्मनोऽन्तरो यमयतीति श्रौतो निर्देशः।

आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो

हृदये जीववदिति दृष्टान्तग्रहणात्तयोरिवान्तरमनयोर्व्यज्यते। व्याप्यान्नियाम्याद्देहाद्व्यापको नियामको जीव इव व्याप्यान्नियाम्याज्जीवाद्व्यापको नियामकः सर्वेश्वरोऽन्य इत्येतत्। तथा च श्रुतयः—"पृथगात्मानं प्रेरितारं च मत्वा" "ज्ञाज्ञौ द्वावजावीशनीशौ" "द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" "समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः। जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इत्याद्याः। स्मृतयश्च—"अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम्" "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः" इत्याद्याः।

ननु—वस्तुतो जीवान्नेश्वरो भिन्नः; प्रमाणाभावात्। नहि तत्र प्रत्यक्षं; ईश्वरे तदसम्भवात्। नाप्यनुमानं; प्रतिनियतलिङ्गासिद्धेः, उपलभ्यमानस्य चाज्ञत्वादेर्मायिकत्वेनाविरोधात्। उक्तश्रुतीनां स्वभेदतात्पर्यकश्रुतिस्मृतिशतोपमर्देन तत्रातात्पर्यात्। तथाच श्रुतयः—"अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद योऽसावसौ पुरुषः सोऽहमस्मि त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि भगवो देवते" "तत्त्वमसि श्वेतकेतो" "अथातोऽहङ्कारादेशः अहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्व"मिति। "यत्परं ब्रह्म विश्वात्मा विश्वस्यायतनं महत्। सूक्ष्मात्सूक्ष्मतरं नित्यं

---

तथा हृदये जीववज्जीवेऽन्तर्यामीत्युपमानविशेषपूर्वकोपन्यासश्चेत्यतो विवक्षितमर्थविशेषं निरूपयति—मूर्त्तेत्यादिना तात्पर्यमित्यन्तेन।

अन्तरमिति। वैषम्यमित्यर्थः। वैषम्यप्रकारनिरूपणपूर्वकं व्यङ्ग्यं भावमाह—व्याप्यादित्यादिना। तत्र प्रमाणमाह—तथा चेत्यादिना। पृथगात्मानमिति। आत्मानं प्रेरितारं च पृथङ्मत्वेत्यन्वयः। ईशनीशौ–ईशानीशौ। पिप्पलं–कर्मफलम्। स्वाद्विति क्रियाविशेषणम्। अन्यमीशं–अनीशया मुह्यमानाज्जीवात्मनोऽन्यमीशं परमात्मानं, इति–उक्तलक्षणं महिमानं च, यः पश्यति स वीतशोको भवतीत्यर्थः। अपरेयमिति। इयमुक्ताऽष्टधा भिन्ना प्रकृतिः, अपरा–अपकृष्टा, विकारास्पदत्वात्। इतस्त्वन्यां जीवभूतां परां–प्रकृष्टां जडप्रकृतेः, मे विद्धि–ममैव शेषभूतां विद्धीत्यर्थः। अत्र मे इति व्यतिरेकनिर्देशो भेदे लिङ्गम्। उत्तमः पुरुषस्त्वन्य इति। अन्यः–क्षरादक्षराच्च।

परः शङ्कते—नन्विति। प्रमाणाभावात्—प्रमाणसामान्याभावात्। सामान्याभावं विशेषाभावकूटेन साधयन्विशेषासम्भवमुपपादयति—नहीत्यादिना। ईश्वरे तदसम्भवादिति। अरूपिद्रव्यत्वेनाचाक्षुषत्वादस्पर्शद्रव्यत्वेनास्पार्शनत्वात्परात्मत्वेन मनसोऽप्यगोचरत्वाच्चेति यावत्। तथा चेश्वरस्याप्रत्यक्षत्वेन तस्मिन् जीवभेदो हि न प्रत्यक्षगम्यः, अभावप्रत्यक्षेऽनुयोगियोग्यत्वस्यापेक्षणादिति भावः। प्रतिनियतेति। अव्यभिचरितेत्यर्थः। अविरोधादिति। अवास्तवत्वेन भेदकत्वाभावादित्यर्थः। तत्रातात्पर्यादिति। तात्पर्यस्यैवार्थे प्रमापकत्वेन तात्पर्यविरुद्धो वाचनिकोऽपि न तत्र

यमयति स त आत्माऽन्तर्याम्यमृतः" "अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा"

तत्त्वमेव त्वमेव तत् ॥" "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता" "नेह नानास्ति किञ्चन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्केन कं विजानीयात्" "यदा ह्येवैष उदरमन्तरं कुरुते अथ तस्य भयं भवति" "ब्रह्म वेद ब्रह्मैव भवति" "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद इदं ब्रह्मेदं क्षत्रमिमे लोका इमे देवा इमानि भूतानीदं सर्वं यदयमात्मा" "एवं वारे महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यति" "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः" "यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति" "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं न ततो विजुगुप्सते" "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥" "सर्वं खल्विदं ब्रह्म" "नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम्" "अद्वयोऽह्ययमात्मा एक एव नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयः" "अयमात्मा ब्रह्म" इत्याद्याः। स्मृतयश्च—"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत!" "ममैवांशो जीवलोके जीवभूतः सनातनः।" "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि। ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति। तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्वथा वर्त्तमानोऽपि स योगी मयि वर्तते ॥" "अहमात्मा गुडाकेश! सर्वभूताशयस्थितः।" "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्। विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ समं पश्यन्हि सर्वत्र समवस्थितमीश्वरम्।" "यदा भूतपृथग्भावमेकस्थमनुपश्यति। तत एव च विस्तारं ब्रह्म सम्पद्यते तदा ॥ अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः। शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते ॥" "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत! ॥" "मद्भावं सोऽधिगच्छति" "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते!।" "यदेतद्दृश्यते मूर्त्तमेतज्ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः ॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसम्प्लवे ॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर! ॥" "तस्मात्मपरदेहेषु सतोऽप्येकमयं हि यत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिनः ॥" "यद्यन्योऽस्ति परः कोऽपि मत्तः पार्थिवसत्तम!। तदैषोऽहमयं चान्यो वक्तुमेवमपीष्यते ॥" "वेणुरन्ध्रविभेदेन भेदः षड्जादिसंज्ञितः। अभेदव्यापिनो वायोस्तथाऽसौ परमात्मनः ॥" "सोऽहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्। इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः ॥" "विभेदजनके ज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

प्रमेयपदर्शीमद्दर्शीति भावः। अभेदे श्रुतीः प्रथममुदाहरति—अथेत्यादिना। स्मृतीरुदाहरति—

इत्यादिश्रुतेः । "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः" "सर्वस्य चाहं हृदि

"विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाऽभ्युपेतम् ॥ ज्ञानं विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् । एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति ॥" इत्याद्याः । सूत्राणि च तथा—"अंशो नानाव्यपदेशात्" "आत्मकृतेः" "तदनन्यत्वमारम्भणशब्दादिभ्यः" "आत्मेति तूपगच्छन्ति ग्राहयन्ति च" इति । तस्माज्जीवेश्वरभेददर्शनं बन्धायैव स्यात् । तथाच श्रुतिः—"अस्मिन्हंसो भ्राम्यते ब्रह्मचक्रे पृथगात्मानं प्रेरितारं च मत्वा" इति । पृथगात्मानं प्रेरितारं च मत्वा भ्राम्यत इत्यन्वयः । अन्योऽसावन्योहमस्मीति जीवेश्वरभेददर्शनेन संसारे परिवर्त्तत इति तदाशयः । यद्वा—पृथगात्मानं—कार्यकारणसङ्घाततो विलक्षणमात्मस्वरूपं, प्रेरितारं च मत्वा—ईश्वरत्वेनापि ज्ञात्वा, अमृतत्वमेतीत्यर्थः । एतेनोक्तश्रुतेः पराभिमतं जीवेश्वरभेदपरत्वमपास्तम् । या च "द्वा सुपर्णा सयुजा सखाया"-विति श्रुतिः सा त्वन्तःकरणजीवपरा, तत्र "स्वाद्वत्ती"त्येतदन्तःकरणपरं, "अनश्नन्न्योऽभिचाकशीती"ति जीवपरम् । तथा च पैङ्गिश्रुत्या व्याख्यातम्—"तयोरन्यः पिप्पलं स्वाद्वत्तीति सत्त्वं, अनश्नन्न्योऽभिचाकशीतीति ज्ञः, द्वावेतौ सत्त्वक्षेत्रज्ञा"विति । सत्त्वं चान्तःकरणं क्षेत्रज्ञश्च जीव इत्यप्यनुपदं व्याख्यातम् । अस्तु वा जीवान्तर्यामिपरतैवास्याः, तथापि न वास्तवभेदसिद्धिः, व्यावहारिकमेदमवलम्ब्यैवास्याः प्रवृत्तेः । व्यावहारिकश्चायं बिम्बप्रतिबिम्बभावनिबन्धनो न परमार्थः । नन्वपरमार्थस्योपदेशः कस्मै फलाय । पूर्वखण्डे हि—"ब्रह्मैवेदं विश्वमिदं वरिष्ठ"मिति ब्रह्मणः सर्वभावः श्रुतः । ततश्च तस्य भोक्तृभावः स्यादिति शङ्का प्रसजति, तद्वारणायायमुपदेशः । बिम्बप्रतिबिम्बभूतयोर्जीवेश्वरयोरेको बुद्धिप्रतिबिम्बभूतो जीवः कर्मफलमत्ति स हि तद्धर्माभिमानी, भेदाग्रहात् । यश्च बिम्बभूतश्चैतन्यात्मा स स्वस्व-

स्मृतयश्चेति । सूत्राण्युदाहरति—सूत्राणि च तथेति । तस्मादिति । जीवेश्वराभेदस्यैव तात्त्विकत्वादित्यर्थः । "सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"ति श्रूयमाणेऽस्मिन्मन्त्रे पूर्वार्धोत्तरार्धभेदेन वाक्यभेदे स्वरसतः प्रतीयमाने उत्तरार्धैकदेशस्य पूर्वार्धेनैकवाक्यतयाऽन्वयेऽनौचित्यमभिप्रेत्याह—यद्वेति । एतेनेति । उक्तप्रकारेण व्याख्यानादित्यर्थः । ननु जीवपरमात्मनोर्भेदेऽनन्यथासिद्धं "द्वा सुपर्णे"ति वचनमस्तीत्यत्राह—या चेति । न चास्मिन्नर्थेऽस्माभिर्नीयते, किन्तु व्याख्यातमेतदेवमित्याह—तथा चेति । भाष्यकारव्याख्यानमनुसृत्याह—अस्तु वेति । जीवान्तर्यामिपरतेति । जीवस्य योऽन्तर्यामी तत्परतेत्यर्थः । नन्वेवं सिद्धो जीवान्तर्यामिभेदस्तत्राह—तथापीति । व्यावहारिकमेदमवलम्ब्यैवेति । अविद्यामूलकव्यवहारकृतभेदमालम्ब्येत्यर्थः । ननु जीवतदन्तर्यामिभेदस्यावास्तवत्वे तत्रान्यतरस्य कस्यावास्तवत्वं ? किं वोभयस्येत्याशङ्कायामाह—बिम्बप्रतिबिम्बभावेति । प्रतिबिम्बस्थानीयस्य जीवस्यापारमार्थ्यमभिप्रेतम् । कस्मै फलायेति । परमार्थस्योपदेशो हि भ्रमापनोदनाय नान्यस्येति भावः । बुद्धिप्रतिबिम्बेति । बुद्ध्युपाध्याहितप्रतिबिम्बेत्यर्थः । तद्धर्माभिमानीति । तस्य बुद्ध्युपा-

१ शङ्कराचार्याः ।

संन्निविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च" "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन !

रूपेणानश्नन्नस्ति, बुद्धितादात्म्यस्यानध्यासात् । स चायमुदासीनः, साक्षिमात्रम् । अयं च जीवान्न स्वरूपतोऽन्यः । तथापि बुद्ध्यनुपहितत्वादुच्यते–अन्य इति । विशेषणभेदनिबन्धनो भेदनिर्देश इत्येतत् । नन्वेकस्यैव भोक्तृता तदभावश्च कथमेकदैव घटेत । नहि दण्डविशिष्टस्तदानीमेव दण्डाभावविशिष्टः स्यात् । सत्यम्–दण्डविशिष्टस्तदानीमेव तदभावविशिष्टो न भवेन्नाम, दण्डस्य पारमार्थिकत्वात्, भोगस्तु बुद्धियोगादध्यस्तः, अधिष्ठाने चाध्यस्तस्याभावः कालत्रयेऽप्यक्षत एव, अध्यस्तसर्पोऽपि हि रज्जुस्तदानीमपि सर्पशून्यैव, तस्मादधिष्ठाने चैतन्यमात्रे बुद्ध्युपधानकृतभोगाध्यासे सत्येव स्वरूपतो भोगाभावः सम्भवति । मन्त्रार्थस्त्वित्थम् । सुपर्णौ–शोभनपक्षौ । एकस्य धर्माधर्मौ, अन्यस्याविद्यातत्सम्बन्धौ पक्षौ । सयुजौ–समानयोगौ । योगश्चात्र तादात्म्यं, बिम्बप्रतिबिम्बभावेन सदा संयुक्ताविति वा । सखायौ–सख्यं चात्र परस्पराभ्यां परस्परयोः प्रसिद्धिः । जीवेनेश्वरस्येश्वरेण जीवस्येत्येतत् । उपकार्योपकारकभावो वा । एवम्भूतौ द्वौ–बिम्बप्रतिबिम्बभावस्थानीयौ जीवेश्वरौ । समानम्–उभयोः साधारणम् । साधारण्यं चाविद्यादृष्टार्जितत्वात् । वृक्षम्–शरीरम्, उच्छेदसाम्यात् । परिषस्वजाते । तयोरिति निर्धारणे षष्ठी । अन्यः–अविद्यातत्सम्बन्धपक्षादीश्वरादन्यो धर्माधर्मपक्षो जीवः । पिप्पलं स्वाद्वत्ति–अहं सुखी दुःखीति मन्यत इत्येतत् । अन्योऽनश्नन्नभिचाकशीति–अहंममाभिमानशून्यः प्रकाशत इति । यश्चायमव्यवहितो मन्त्रः—"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोक" इति, तेन च जीवेश्वरैक्यज्ञानस्यैव मोक्षसाधनत्वं प्रतीयते । एवं ह्यन्वयः । यदाऽन्यमीशमस्य महिमानं पश्यति तदा वीतशोक इति । अस्य–जीवस्येत्यर्थः । जीवस्य ह्ययं

धेर्यो धर्मः कर्तृत्वादिस्तस्य स्वस्मिन्नमिमानीत्यर्थः । ननु कुतोऽयमभिमानस्तत्राह—भेदाग्रहादिति । उपाधेर्बुद्धेः स्वस्य यो भेदस्तस्याग्रहात् । बुद्धितादात्म्यस्यानध्यासादिति । बुद्धिधर्माध्यासस्याभावादित्यर्थः । ननु स्वरूपैक्ये सति बुद्ध्यनुपहितत्वेन कथमन्य इति वक्तुं शक्येतेत्यत्राह—विशेषणभेदेति । बुद्ध्युपहितत्वविशिष्टचैतन्यमुच्यते जीव इति, तत्र यद्विशेषणं विशिष्टान्तं ततो भिन्न इति जीवाद्विशिष्टलक्षणाद्भिन्न उच्यत इति भावः । शङ्कते—नन्विति । एकस्यैवेति । स्वरूपस्यैकत्वान्निरंशत्वात् हृदयलक्षणैकस्थानकत्वेन देशोपाधिभेदस्याप्यभावादिति भावः । सत्यमिति । दृष्टान्तेऽभ्युपगमः, दार्ष्टान्तिके त्वनभ्युपगमः । अभिप्रेतमेव वैषम्यमुपपादयति—दण्डेत्यादिना । बुद्धियोगादिति । बुद्धेरुपाधेर्योगादित्यर्थः । सत्येवेति । सत्यपीत्यर्थः । एवं मन्त्रस्य भावमुक्त्वा पदार्थमाह—मन्त्रार्थस्त्विति । एकस्य–जीवस्य । अन्यस्य–अन्तर्यामिणः । सहैव युज्यत इत्यवयवार्थस्यारस्यमभिप्रेत्याह—बिम्बप्रतिबिम्बेति । अविद्याऽर्जितमन्तर्यामिणा, अदृष्टेनार्जितं जीवेन । प्रतियोगिसमर्पकताभ्रमं व्यावर्त्तयन्नाह—निर्धारणे षष्ठीति । अन्य इत्यस्य प्रतियोगिसमर्पकं पूरयन् व्याचष्टे—अविद्येति । अव्यवहित इति । अव्यवहितोत्तरः । जीवेश्वरैक्यज्ञानस्यैवेति । एवकारेण पराभिमतभेदज्ञानस्य व्यावृत्तिः । एतेन यदेव वाक्यं भवताऽनुकूलमिति मन्यते तदेव भवतो विप्रतीपमिति भावः । जीवस्य ह्ययं महिमेति । अपगते ह्युपाधिधर्माध्यासे स्येनैवानवच्छिन्नसु-

तिष्ठति। भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया" इत्यादिस्मृतेश्च। "अहमात्मा

महिमा योऽयमनवच्छिन्नसुखबोधवपुरीश्वरः। अनन्योऽहमीश्वरादिति यो वेदेत्येतत्। अन्यत्वविशेषणं च न जीवस्वरूपादन्यत्वं बोधयति, किन्तु वृक्षोपाधिलक्षणाद्विलक्षणत्वमावेदयति। एवं वा योजना—यदा जुष्टं—कार्यकारणसङ्घाततो जुष्टं, वस्तुतस्ततोऽन्यं—विविक्तात्मस्वरूपम्, ईशं पश्यति—ईश्वरत्वेनावस्थितं पश्यति, तदाऽस्य विविक्तात्मनो महिमानम्—अखण्डानन्दलक्षणं, इति—एति, वीतशोकश्च भवति, इति। शोकहेतुतया श्रूयमाणमनीशत्वमीशत्वानवगमरूपम्। एतेन—अनीशया शोचतीति शोकहेतुतयाऽवगम्यमानमनीश्वरत्वं जीवेश्वरस्वरूपभेदं दृढयतीत्यपास्तम्। यद्वा—अनीशया—अनैश्वर्येणेत्यर्थः। शारीरयाऽपूर्त्येत्येतत्। एतदुक्तं भवति—पुण्यपापफलभोगायतनत्वेन समाने वृक्षवच्छेदनार्हे देहे नितरां मग्नस्तादात्म्याध्यासादविभक्ततामापन्नः पुरुषः शारीरैरेवान्धत्वबधिरत्वादिदोषैरात्मानं तथा-तथाऽपूर्णं मन्यमानः शोचति। यदा तु देहादिभ्योऽन्यमेवेशमस्पृष्टशारीरदोषं पूर्णमखण्डानन्दबोधरूपं पश्यति, अस्य प्रसिद्धं महिमानं त्रिविधपरिच्छेदराहित्यरूपं च पश्यति स वीतशोको भवतीति। इतिशब्दश्चात्र बुद्धिस्थप्रकारो ग्राह्यः। "ज्ञाज्ञौ द्वावजावीशनीशा"वित्यप्येतेन व्याख्यातम्। यश्च "अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इत्यत्रान्यत्वनिर्देशः सोऽप्युपाधिभेदनिबन्धनः। याश्च स्मृतयो भेदपरा इव तास्त्वनयैव दिशा नेयाः। तस्मात्—प्रत्यस्ताखिलभेदं परं ब्रह्मैव निर्विशेषसंविद्रूपमात्मतत्त्वमनिर्वचनीयामाविश्य मायां मार्त्तण्ड इव तोयधिं तदुपाधिपरिकल्पितबिम्बप्रतिबिम्बभावस्तरङ्गभेदेनेवोपाधिभे-

स्वबोधवपुषा स्वात्मनि; तदन्योऽप्यस्यैव महिमेति भावः। ननु "पश्यत्यन्यमीश"मित्यत्रान्यत्वप्रतियोगिसमर्पकपदान्तराभावात्स्वस्मादन्यं यः पश्यतीत्येवार्थः प्रतीयत इत्यत्राह—अन्यत्वविशेषणं चेति। आरम्भे "समाने वृक्षे" इति श्रूयमाणो यो वृक्षः स एवेहान्यत्वप्रतियोगी भवितुमर्हतीति भावः। जीवस्यायं महिमा यः परमेश्वर इत्यर्थवर्णनमसङ्गतम्, नह्यपकृष्टस्यैव महिमाऽयमुत्कृष्ट इति लोके भवति प्रयोगः, अतोऽस्वरसादाह—एवं वा योजनेति। ननु पूर्वार्धे "अनीशया शोचती"त्यनेनेशादन्यत्वमवगम्यते, तत्कथं तद्विरुद्धेऽर्थे उत्तरार्धस्य गतिरिति शङ्कायामाह—शोकहेतुतयेति। जुष्टशब्दस्य व्याप्तार्थताश्रयणे कार्यकारणसङ्घातेनेति शेषपूरणक्लेशः, इतीत्यस्य इण्धातोर्गुणाभावं छान्दसतया निर्वाह्य एतीत्यर्थाश्रयणे क्लेशश्चेत्यस्वरसादाह—यद्वेति। अपूर्त्येति। आरोपितयेति शेषः। उपसर्गार्थमाह—नितरामिति। नात्र निमज्जनं जल इवोपलशकलस्य, परन्तु तदभिमानः, अयमत्र कार्ये निमग्न इति हि स्वरसः प्रयोग इत्यभिप्रेत्याह—तादात्म्याध्यासादविभक्ततामापन्न इति। इदं च हेतुगर्भं विशेषणम्, यतो निमग्नोऽयं शरीरे तत एवारोपितयाऽनीशया शोचतीति। अखण्डानन्दबोधरूपमिति। जुष्टमित्येतस्य भावोऽयम्। एतेन व्याख्यातमिति। *ईशत्वाज्ञानमनीशत्वारोपो वाऽज्ञता; न वास्तवो ज्ञानविभाग इति भावः।* उपसंहरति—तस्मादिति। प्रत्यस्ता अखिला भेदाः—ज्ञातृज्ञेयादिभेदा यस्मिंस्तथाभूतम्। अनि-

त्मनां धातः" "तमिममजमहं शरीरभाजां हृदि हृदि धिष्ठितमात्मकल्पितानाम्"

देन भिद्यत इव। तदेवं भेदस्य काल्पनिकतामविचार्य जीवेश्वरभेदसमर्थनमौपनिषदहार्दानभिज्ञताविजृम्भितमिति।

अत्र ब्रूमः। यश्चैषामुद्धोषः—निरस्तसमस्तभेदं ब्रह्मेति, तमिममुपशमयामः। प्रथमं भेदसामान्यमसहमानेन वक्तव्यं ब्रह्मणः स्वरूपम्। ननूक्तं श्रुत्यैव "सत्यं ज्ञानमनन्तं ब्रह्मे"ति। सत्यमुक्तम्। धर्मभेदमप्यसहमानस्य तु विप्रतीपं तत्। धर्मभेदनिबन्धना हि तस्याः प्रवृत्तिः। हन्त! समानाधिकरणशब्दानां लेशतोऽपि गतिं न जानाति भवान्। अखण्डार्थावबोधकता हि तेषां स्वभावः। हन्तापूर्वोऽयं वाक्यार्थविमर्शः। केयमखण्डार्थता वक्तव्यं वाक्यस्वारस्यकोविदेन। किमच्छेद्यार्थता? किंवा निरवयवार्थता?। नीलमुत्पलमित्यादौ प्रतीयमानो ह्युत्पलादिर्नोच्छेद्यो नवा निरवयवः। नवा निर्विशेषणार्थपरता, निर्विशेषणत्वस्यापि विशेषणरूपत्वेन तत्प्रतीतावपि भवदभिमताखण्डार्थत्वभङ्गात्। वस्तुतो यन्निर्विशेषणं तत्परतायां तु, सगुणब्रह्मपरवाक्यानामपि तथात्वापातः। अभिमतासिद्धिश्च। विशेष्यमात्रपरत्वं

वंचनीयाम्—सदित्यसदिति च निर्वक्तुमनर्हाम्। उपाधिभेदेनेति। मायातरङ्गभूतान्तःकरणोपाधिभेदेनेत्यर्थः।

प्रथममिति। वक्तव्यमित्यनेन सम्बध्यते। श्रुत्यैवेति। एवकारात्स्वोत्प्रेक्षाव्यवच्छेदः। अपौरुषेयोक्तिरेषेत्यन्यतोऽन्यथा गम्यमानोऽप्यनादरणीय इति च व्यज्यते। सत्यमित्यर्धाङ्गीकारे। अनया श्रुत्या ब्रह्मस्वरूपं प्रतिपाद्यत इत्यत्राभ्युपगमः, पराभिमतं यादृशं ब्रह्मस्वरूपं तादृशमित्यत्र त्वनभ्युपगमः। धर्मभेदमप्यसहमानस्येति। निर्विशेषब्रह्मवादिन इत्यर्थः। तदिति। "सत्यं ज्ञानमनन्त"मिति वाक्यतोऽवगम्यमानम्। तस्याः—"सत्यं ज्ञानमनन्त"मिति श्रुतेः। समानाधिकरणवाक्यं ह्यनेकधर्ममुखेनैकं धर्मिणं बोधयतीति भावः। परः शङ्कते—हन्तेति। लेशतोऽपीति। यदेवार्थभेदे बाधकं तेनैवार्थभेदसाधनाल्लेशतोऽपि गतिं न जानातीत्युच्यते। कस्तर्हि समानाधिकरणवाक्यस्य स्वभावः? आह—अखण्डार्थावबोधकता हीति। सिद्धान्ती प्रतिवक्ति—हन्तेत्यादिना। अखण्डार्थतां विकल्प्य प्रतिक्षिपति—केयमिति। किमच्छेद्यार्थता किंवा निरवयवार्थतेति। सम्भाव्यते ह्ययमप्यर्थः शब्दस्य, यद्यप्यनभिमताविमौ पक्षौ परेण, अथाप्यत्यन्तासम्भवमखण्डार्थतेत्यस्य प्रकाशयितुमित्थं विकल्पः। तत्प्रतीतावपीति। निर्विशेषणत्वेन विशेष्यस्य प्रतीताविति यावत्। वस्तुत इति। न निर्विशेषणत्वेन धर्मिणः प्रतिपत्तिः, किन्तु येनचिद्रूपेण प्रतीयमानो धर्मी वस्तुतो निर्विशेषण इत्यर्थः। सगुणब्रह्मपरवाक्यानामपीति। "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकाम"इत्यादिसगुणवाक्यानामपीत्यर्थः। इह हि तत्तद्गुणपुरस्कारेणोपास्यस्य प्रतीतिर्भवतीति भावः। तथात्वापातः—अखण्डार्थतापातः। तत्तद्गुणपुरःसरं तद्वाक्यतः प्रतीयमानोऽपि हीश्वरो वस्तुतो निर्विशेषचैतन्यरूप एवेति वस्तुतो यन्निर्विशेषणं तत्परतारूपमखण्डार्थत्वं सगुणब्रह्मपरवाक्यानामप्यस्तीति भावः। सगुणपरव्यधिकरणवाक्यस्यापि तथात्वं स्यादित्यपि बोध्यम्। अभिमतासिद्धिश्चेति। प्रका-

"आत्मानमन्तर्हृदि सन्तमात्मना"मित्यादिश्रीभागवतोक्तेश्च। यश्च स्वतन्त्रः-स्वः-

चेत्। तर्हि विशेषणाविषयकविशेष्यविषयकबोधपरत्वम्। एको बोधो विशेषणाविषयको विशेष्यविषयकश्चेति तु व्याहतम्। अथ नेह वाक्यार्थापेक्षया विशेषणविशेष्यव्यपदेशः, किन्तु पदार्थोपस्थित्यपेक्षया पदत उपस्थाप्यमाने विशिष्टे योऽयं विशेषणांशस्तं विना विशेष्यांशमात्रस्य बोधकतेत्येतत्। तर्हि विशिष्ट एकांशस्य परित्यागेनैकांशस्य बोधनादेकः खण्डो गृहीत इति खण्डार्थपरतेति तु वक्तव्यम्। कोऽयमखण्डार्थपरतेत्युद्घोषः। किञ्च-काकेभ्यो दधि रक्ष्यतामित्यादौ काकपदोपस्थाप्ये काकत्वविशिष्टे विशेषणं काकत्वं विहाय व्यक्तिमात्रस्य प्रकारान्तरेण बोधनात्तत्राप्यखण्डार्थत्वं स्यात्। हन्त! भोः अर्थज्ञानविधुरस्य तव पण्डितवचनमप्युद्घोषायते। विशेष्यमात्रपरता हि वैशिष्ट्यानवगाहिबोधपरता। वैशिष्ट्यमाने हि विशेष्यं विशेषणमिति खण्डभेदः, तदनवगाहित्वादखण्डार्थता। "सत्यं ज्ञानमनन्त"मित्यादिसमानाधिकरणपदानामापाततः प्रतीयमाने विशेष्यविशेषणसंसर्गे तात्पर्याभावादखण्डार्थतया निर्विशेषवस्तुप्रतिपत्तिरिति प्रत्यस्तमितभेदं ब्रह्मस्वरूपमिति युक्तमुक्तम्। ननु-काऽनुपपत्तिः प्रतीयमानार्थे, यया तात्पर्यं स्वरूपमात्रे। इयमेवानुपपत्तिः, यदिह समानविभक्त्यवगम्यमर्थैक्यं नोपपद्यते। कुतो नोपपद्यते? विशेषणभेदेन विशेष्यभेदात्। ननु-विशेषणं विशेष्यं भिनत्तीति कोऽयं नियमः। विशेषणस्वाभाव्यात्। विशिष्यते-व्यावर्त्यतेऽनेनेति हि विशे-

स्वप्रकारिभेदानवबोधकत्वरूपं यत्तस्यासिद्धिरिति भावः। एको बोध इति। एक एव बोध इत्यर्थः। व्याहतमिति। विशेष्यविशेषणभावस्य मिथः सापेक्षतया विशेषणानवगाही विशेष्यावगाहीति व्याहतं वच इति भावः। किन्तु पदार्थोपस्थित्यपेक्षयेति। समानाधिकरणवाक्यघटकतत्तत्पदैरर्थोपस्थितिवेलायां तत्तत्पदतस्तत्तद्विशेषणविशिष्टं यत्प्रतीयते तत्र यो विशेष्यांशस्तन्मात्रपरता या सेयमखण्डार्थता समानाधिकरणवाक्यस्येति भावः। पदार्थोपस्थितिवेलायां प्रतीयमाने चेद्विशेष्यांशमात्रग्रहणादखण्डार्थता, तर्ह्यतिप्रसङ्ग इत्याह—किञ्चेति। परः पुनः शङ्कते—हन्तेति। वैशिष्ट्यानवगाहिबोधपरतेति। सैवाखण्डार्थतेति यावत्। तामखण्डार्थतामुपपादयति—सत्यमित्यादिना। समानाधिकरणपदानामिति। तात्पर्याभावादित्यनेन सम्बन्धः। आपातत इति। अपरिशील्य सामानाधिकरण्यमर्यादां सामान्यतः पदकदम्बतादवस्थ्येत्यर्थः। अनुपपत्तिप्रतिसन्धानविरहदशायामिति यावत्। अनुपपत्तिमेवाशङ्कामुखेनोपपादयति—नन्वित्यादिना। इह—समानाधिकरणवाक्ये। समानविभक्त्यवगम्यं-विशेष्यवाचकपदयोर्या समाना विभक्तिः-अभिन्नविभक्तिः; तयाऽवगम्यम्। अर्थैक्यमिति। अयं भावः—'भूतले घटः' 'राज्ञः पुरुषः' इत्यादिविभिन्नविभक्तिकव्यधिकरणवाक्ये प्रतिपदं यथाऽर्थभेदप्रतिपत्तिस्तथा 'नीलमुत्पल'मिति समानाधिकरणवाक्यतो नार्थभेदप्रतिपत्तिः, प्रत्युतैकार्थप्रतिपत्तिरेव भवति, समानविभक्तिकपदसमभिव्याहार इह प्रयोजक इति भावः। कुतो नोपपद्यत इति। 'विशेषणभेदेऽपि धर्म्यैक्यादर्थैक्यं कुतो नोपपद्यत इति सिद्धान्तिन आशयः। विशेषणभेदेन विशेष्यभेदादिति। अर्थैक्यं नोपपद्यत इत्यस्यानुषङ्गः। विशेषणं विशेष्यं भिनत्तीति कोऽयं नियम इति। यद्यद्विशेषणं तत्तत्स्वविशेष्यं स्वेतरविशेषणविशिष्टा-

आत्मा तन्त्रं–प्रधानं यस्य तथोक्तः। इतरानधीन इति यावत्। एतेन कालमार्य-

पणम्। तत् सत्यत्वं स्वेतरविशेषणविशेषितात्स्वविशेष्यं भिनत्ति, ज्ञानत्वाद्यपि तथेति। तत्तद्विशेषितयोरैक्यमनुपपन्नम्, तत्स्वरूपमात्रपरतैवाश्रयणीया। 'नीलमुत्पलं' 'श्यामो युवा लोहिताक्षः पीनो देवदत्त' इत्यादिषु तु विशेषणभेदतः प्राप्तोऽपि विशेष्यभेदः प्रत्यक्षतो बाध्यते। तत्तत्र वैशिष्ट्यं प्रतीयेत नाम। प्रत्यक्षागम्ये तु विशेषणानां स्वतः प्राप्तं भेदकत्वं न केनापि बाध्यत इति नात्र वैशिष्ट्यप्रतीत्यवकाशः। हन्तेयमन्यादृश्येवाशामोदकसम्पादन-चातुरी। यदि नाम विशेषणानां स्वतः प्राप्तमपि विशेष्यविभेदकत्वं प्रत्यक्षेण बाध्यते तर्हि प्रत्यक्षेणेवेहापि धर्मिवाचकपदैक्यात्समानविभक्तिनिर्देशाच्च विशेष्यैक्यावगमात्कुतो न तद्बाध्येत। ननु–धर्मिवाचकपदैक्यस्य समानविभक्तिनिर्देशस्य च न विशेष्यैक्यावबोधकत्वं नियतम्, खण्डो मुण्डः पूर्णशृङ्गो गौरित्यादौ व्यभिचारादिति चेत्। विशेषणानां भेदकत्वमेव नियतं स्वतःप्राप्तमपि तत्कचित्प्रत्यक्षेण बाध्यत इतिवत्, धर्मिवाचकपदैक्यसमानविभक्तिनिर्देशयोर्विशिष्यैक्यावबोधकत्वमेव नियतं, स्वतः प्राप्तमपि तत्कचित्प्रत्यक्षेण बाध्यत इति किं नेष्येत। परोक्षविषयेऽपि तादृशवाक्ये न प्रतीयते विशेष्यैक्यमिति चेत्। परोक्षविषयेऽपि

भिनत्तीति कोऽयं नियम इत्यर्थः। न कल्प्यते नियमः, स्वभाव एवायं विशेषणानां यद्भेदकत्व-मित्याह—विशेषणस्वाभाव्यादिति। स्वभावमेवोपपादयति—विशिष्यत इत्यादिना। तत्स्वरूपमात्रपरतैवेति। सत्यत्वविशिष्टज्ञानत्वविशिष्टयोर्भेदेन विशिष्टविवक्षायां समानविभक्तिबलादवगम्य-मानस्य धर्म्यैक्यस्यानुपपत्त्या सत्यं ज्ञानमित्यादिसमानाधिकरणवाक्यस्य स्वरूपपरतैवाश्रयणीयेति भावः। नन्वेवं सति 'श्यामो युवा लोहिताक्षः पीनो देवदत्त'इत्यादिलौकिकवाक्येष्वप्यर्थभेदः प्रतीयेत, परित्यक्तसर्वविशेषणं धर्मिस्वरूपमेव वा केवलं प्रतीयेतेत्याशङ्कायामाह—नीलमुत्पल-मित्यादिना। प्रत्यक्षतो बाध्यत इति। शाब्दीं भेदधियमुपरुणद्ध्यैक्यप्रत्यक्षम्, शब्दात्प्रत्यक्षस्य प्राबल्यात्, प्रत्यक्षेण शाब्दोऽर्थः क्वचिदुपमृद्यत इत्येतावता शब्दानां यः स्वभावः स तु नापग-च्छेदिति भावः। आशेति। आशामोदकः–मनोरथपथैकगो मोदकस्तस्य सम्पादनचातुरीव, स्वमनोरथपथमात्रवर्तिसामानाधिकरण्यसमर्थनप्रकारो व इति भावः। दुर्घट इति यावत्। इहापीति। सत्यं ज्ञानमित्यादिवाक्येऽपीत्यर्थः। विशेष्यैक्यावगमात्कुतो न तद्बाध्येतेति। अयं भावः—प्रत्यक्षं चेद्विशेष्यैक्यमवगमयद्विशेषणभेदश्रवणप्रयोज्यं विशेष्यभेदावगमं निरुन्ध्यात्, इह समान-विभक्तिकनिर्देशो धर्मिवाचकपदैक्यं च विशेष्यैक्यमवगमयत्कुतो न निरुन्ध्यात्, विशेष्यैक्यावगम एव तु विशेष्यभेदावगमे साक्षाद्विरोधी, स च क्वचित्प्रत्यक्षेण वा स्यात्क्वचिदाप्तवचनतो वा स्यात्, अदुष्टतैव प्रमापकतायां प्रयोजिका, प्रत्यक्षमिति वा शब्द इति वा न कश्चिद्विशेषः, विशेषण-स्वभावश्चोभयत्र तुल्य इति भावः। ननु धर्मिवाचकपदैक्यस्य समानविभक्तिकनिर्देशस्य च विशेष्यै-क्यावगमं प्रति यदि सर्वत्र हेतुता स्यात्तदा घटेतेयमाशङ्का, सैव न, व्यभिचारादित्याशङ्कते—नन्विति। बाध्यत इतिवदित्यादि। विशेषणभेदश्रवणस्य विशेष्यभेदावगमे हेतुत्वे 'श्यामो युवा देवदत्त' इत्यादिव्यभिचाराशङ्कायां प्रात्यक्षिकस्यैक्यावगमस्य प्रतिबन्धकत्वं कल्पयित्वा यथा परिहारः

योरपि नियन्तृत्वं व्यज्यते । "ज्ञः कालकालो गुणी सर्वविद्य" इति श्रुतेः ।

देवदत्तः श्यामो युवेत्यादौ विशेष्यैक्यं प्रतीयत इति समानः पर्यनुयोगः । ननु—विशेषणशब्दस्वारस्यत एवावगम्यमानं विशेष्यभेदकत्वं कथमिव दूरीक्रियते । न वयं दूरीकुर्मो भेदकत्वं विशेषणशब्दस्वरससिद्धम् । परं विशेषणं विशेष्यं कस्माद्भिनत्तीति तु विचार्यम् । भेदकधर्मस्य ह्ययमेव स्वभावः स्वाश्रयस्य स्वानाश्रयतो व्यावर्त्तनं, न तु स्वेतराश्रयमात्रतः । नहि गन्धः स्वाश्रयं रूपाश्रयमात्रतो विभिनत्ति । तदिदं सिद्धम्—येषां विशेषणानां वैयधिकरण्यं दृष्टं तेषां विशेष्यभेदकत्वं, येषां तु न तेषां न तदिति । यदिदमेषां निरूपणं विशेषणसामान्यस्य व्यपेतमर्यादं भेदकत्वमभ्युपगम्य—इदं हि प्रत्यक्षविरुद्धमित्याक्षेपे, प्रत्यक्षेण तु बाध्यते भेदकत्वं, स्वभावस्तु स एव, सर्वथा परोक्ष एवायं स्वभावः प्रकाशत इति । तदिदं प्रतारणकौशलमन्यद्वेति परीक्षकैः पर्यालोचनीयं नाम । किञ्च—समानविभक्तिनिर्देशस्वारस्यसिद्धं विशेष्यैक्यमनुपपद्यमानमभिमत्य विशेषणं त्यजन्नयं प्रष्टव्यः । प्रकृतिस्वारस्यसिद्धविशेषणान्वयानुपपत्त्या विशेष्यैक्यमेव किं न त्याज्यम् । समानविभक्तिनिर्देशस्वारस्यं हीयेतेति चेत् । प्रकृतिस्वारस्यमधुना न किं हीयते । प्रत्ययस्वारस्यं चेत्संरक्ष्यं प्रकृतिस्वारस्यं किं

क्रियते तथैवास्यामपि व्यभिचाराशङ्कायां प्रात्यक्षिकविशेष्यभेदावगमस्य प्रतिबन्धकत्वं कल्पयित्वा परिहारः कुतो न कार्य इति भावः । तादृशवाक्ये—'खण्डो मुण्डः पूर्णशृङ्गो गौ'रित्यादिवाक्ये । **न प्रतीयते विशेष्यैक्यमिति** । परोक्षेऽपि व्यभिचारात्प्रात्यक्षिकभेदावगमस्य प्राबल्याश्रयणेनाप्यनिस्तारात्समानविभक्तिकनिर्देशस्य धर्मिवाचकपदैक्यस्य च विशेष्यैक्यावबोधं प्रति सर्वत्र हेतुत्वं न सिद्ध्यतीति भावः । **समानः पर्यनुयोग** इति । 'देवदत्तः श्यामो युवे'त्यादावपरोक्षविषये परोक्षविषये वा सत्यपि विशेषणभेदश्रवणे विशेष्यभेदानवगमाद्व्यभिचारात्प्रात्यक्षिकैक्यावगमस्य प्राबल्याश्रयणेऽप्यनिस्ताराद्विशेष्यभेदावगमं प्रति विशेषणभेदश्रवणस्य हेतुत्वमेव न सिद्ध्यतीति भावः । ननु पर्यनुयोगेन किम्? पदानि हि प्रवृत्तिनिमित्तमतिलङ्घ्य न प्रवर्त्तन्तेऽर्थे; यौगिकं चैतद्विशेषणमिति पदम्, विशिष्यते—व्यावर्त्यते धर्मी येन तद्विशेषणमिति चावयवार्थः, यश्च धर्मो धर्मिणं न व्यावर्त्तयति तस्मिन् विशेषणमिति शब्दः कथं प्रवर्त्तेत, तदवयवार्थयोगावश्यंभावेन भेदकत्वं विशेषणानामपरिहार्यमित्याशयेनाशङ्कते—**नन्वित्यादिना** । **स्वारस्यत** इति । स्वारस्यं—अवयवार्थयोगलक्षणः प्रवृत्तिनिमित्तयोगः । **येषां तु नेति** । दृष्टमित्यनुषज्यते । **व्यपेतमर्यादमिति** । विशेषणं विशेष्यं भिनत्ति चेदस्मादेव नास्मादिति मर्यादां विनेत्यर्थः । **इदं हि प्रत्यक्षविरुद्धमित्याक्षेपे**—व्यपेतमर्यादं धर्मिभेदकत्वं 'श्यामो युवा देवदत्त'इत्यादिप्रात्यक्षिकविषयविरुद्धमित्याक्षेपे । **प्रतारणकौशलमन्यद्वेति** । प्रतारणकौशलादन्यदर्थतत्त्वं नास्तीति भावः । यस्य यः स्वभावो लोकतोऽवसेयस्तस्य लोकविरुद्धस्वभावकल्पनं, लोके न प्रकाशतेऽयं स्वभाव इत्याशङ्कायां लोकतोऽन्यत एवायं स्वभावः प्रसिद्ध्यतीत्युत्तरदानं च किं प्रतारणादन्यदिति भावः । पदानां वाक्यानां वा गतिर्लोकेन एवावसेया न तु तद्विपरीतेन वर्त्मना । प्रतिबन्द्या दूषणमाह—**किञ्चेति** । **स्वारससिद्धमिति** । असति बाधे प्रवृत्तिः स्वारस्यम् । **अभिमत्येति** । वस्तुतोऽनुपपत्तिरेव नेत्युक्तं प्राक् ।

"कालोऽयं परमाण्वादिर्द्विपरार्धान्त ईश्वरः । नैवेशितुं प्रभुर्भूम्न ईश्वरो धाम मानि-

हेयम् । प्रकृतिः किं प्रत्ययतो दुर्बला । किञ्च—व्यधिकरणवाक्येष्वप्यनेककारकान्वयरूपविशेषणभेदाद्विशेष्यभेदापत्त्याऽर्थैक्यं व्याहन्येतेति समानाधिकरणवाक्य इव धर्मिस्वरूपमात्रबोधकत्वस्यावश्याभ्युपगन्तव्यतयाऽखण्डार्थता वाक्यसामान्य एव स्यात् । नच तत्रार्थैक्ये न तात्पर्यम्, एकवाक्यताभङ्गप्रसङ्गात् । "अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्" इति हि सूत्रम् । अथ विशिष्टे विशिष्टान्वयश्चेदिह विवक्षितः, द्वयोः पदार्थयोर्युगपदन्वयबोध उद्देश्योपादेयविभागानुपपत्त्या क्रमश एव तदन्वयस्याभ्युपगन्तव्यतयैकविशेषणविशिष्टेऽपरविशेषणविशिष्टस्य विधेयत्वसिद्ध्या विशेषणयोरन्योन्यसमवायप्रसङ्गः । विशिष्टे सम्बन्ध्यमानं हि विशेषणेऽपि सम्बध्यते, अन्यथा तस्योपलक्षणत्वापातात् । मैवम् । इष्यते नाम युगपदिहान्वयबोधः । हन्तोद्देश्यविधेयविभागो दुरुपपादः । असति तद्विभागे का हानिः । नहि वाक्यसामान्य उद्देश्योपादेयविभागेन भाव्यमिति नियमः, "यदाग्नेयोऽष्टाकपाल" इत्यादिषु तदभावात् । ननु—तत्र सर्वस्यार्थस्याप्राप्तत्वात्प्राप्ताप्राप्तविभागाभावात्तदभाव इति चेत् । इहापि तथैव, सत्यत्वज्ञानत्वादेरप्राप्तत्वात् । सत्यप्युद्देश्योपादेयभावेऽभिधानदशायां युगपदेवार्थानाम-

विशेषणभेदमात्रस्य चेद्विशेष्यभेदकत्वं समानाधिकरणवाक्यस्येव व्यधिकरणवाक्यस्याप्यखण्डार्थता स्यादित्याह—किञ्चेति । व्यधिकरणवाक्येष्वपीति । 'काष्ठैः स्थाल्यामोदनं देवदत्तः पचती'त्यादिवाक्येष्वपीत्यर्थः । अनेककारकान्वयरूपविशेषणभेदादिति । उक्तस्थले काष्ठाद्यनेककारकाणां क्रियायामेवान्वयनियमेन करणाधिकरणकर्मकर्तृविशेषैर्विशेषितैव क्रियोक्तवाक्यतः प्रतीयत इति विशेषणभेदाद्विशेष्यभेदापत्त्या क्रियाया एकत्वोपपादनाय विशेषणत्यागेन धर्मिमात्रावबोधस्वीकारेऽखण्डार्थतैवापद्येत; विभिन्नानेकक्रियावबोध इति चानुपपन्नं वाक्यभेदापत्तेरिति भावः । अर्थैकत्वादिति । अयं सूत्रार्थः—विभागे—विश्लेषे कृते साकाङ्क्षं स्यात्, संश्लेषे त्वर्थ एको भवति तद्वाक्यमर्थैक्यादेकं वाक्यमुच्यते । यथा—"देवस्य त्वा सवितुः प्रसवे, अश्विनोर्बाहुभ्यां, पूष्णो हस्ताभ्यां अग्नये जुष्टं निर्वपामि" इत्यत्र वाक्ये 'अग्नये जुष्टं निर्वपामी'त्यस्मिन्पृथक्कृते "देवस्ये"त्यादि साकाङ्क्षमवतिष्ठते, एकीकृते तु निर्वापलक्षण एकोऽर्थः प्रतीयत इति तदिदं वाक्यमेकमुच्यत इति । परः शङ्कते—अथेत्यादिना । इह—'नीलमुत्पल'मित्यादिसमानाधिककरणवाक्ये । युगपदन्वयबोध इति । उत्पलत्वविशिष्टे धर्मितयोपस्थिते नीलत्वविशिष्टस्य, नीलत्वविशिष्टे वा तथोपस्थापित उत्पलत्वविशिष्टस्य नान्वयः, किन्तु युगपदेव नीलत्वविशिष्टोत्पलत्वविशिष्टयोस्तादात्म्यबोध इति भावः । विभागानुपपत्त्येति । उद्देश्यविधेयभावविभागे हि क्रमशोऽन्वयोऽपेक्ष्यत इति भावः । अन्योन्यसमवायप्रसङ्ग इति । नीलत्वविशिष्टस्योत्पलत्वविशिष्टे धर्मिणि चेदन्वयो नीलत्वोत्पलत्वयोरन्योन्यसमवायः स्यात्; नहि विशेषणान्वयं विना विशिष्टस्यान्वयः, न वा विशिष्टस्य धर्मिता विशेषणस्य धर्मितां विना, विशिष्टमर्यादयाऽन्वयेऽयमेव विशेष उपलक्षणविधयान्वयादिति भावः । परिहरति—मैवमिति । इहेति । सत्यं ज्ञानमित्यादिसमानाधिकरणवाक्ये । तदभावादिति । प्राप्ताप्राप्तविभागे हि तद्भावः, तदभावे तु तदभाव एवेत्याशयः । एवमेवाशयमाशङ्कापूर्वकं स्फुटयति—

ना"मिति मैत्रेयोक्तेश्च। "वाय्वम्बराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्धि-

न्वयबोधात्क्रमविशेषाभावेन न विशेषणानामन्योन्यसमवायप्रसङ्गावकाशः। न चासति क्रमविशेष उद्देश्योपादेयविभागानुपपत्तिः। तत्र प्राप्ताप्राप्तविशेषस्यैव प्रयोजकत्वात्। "यद्वृत्तयोगः प्राथम्य"मित्याद्युद्देश्यलक्षणमिति तु नाभिधानिकक्रमपरम्, किन्तूच्चारणक्रमपरम्। पदार्थस्मृतिदशायां तु प्रत्येकमेव पदार्थस्मरणात्सुतरां तदनवकाशः। परामर्शस्तु यथायोग्यमर्थानामन्वयविचाररूपत्वाद्विशेषणे विशेषणान्तरान्वयस्यायोग्यत्वादुद्देश्यधर्मिण्येव विशेषणान्वयविचारसम्भवान्न परामर्शदशायामपि तत्प्रसङ्गः। एकविशिष्टेऽपरवैशिष्ट्यस्य क्रमशो बोधनेऽपि न काऽपि क्षतिः। ननु-तथा सति विशिष्टेऽन्वीयमानस्य विशेषणेऽप्यन्वयः स्यात्। स्यान्नाम। हन्त! विशेषणयोः परस्परमाधाराधेयभावः। सम्बन्धो हि भिद्यते, विशिष्टे विधीयमानस्य धर्मिण्याधारतयाऽन्वयः। तद्विशेषणे स्वैकार्थसमवायादिरूपपरम्परासम्बन्धेन यथायोग्यम्। धनविशिष्टः सुखीति विशिष्टे विधीयमानं सुखं नहि धर्मिणि धने चैकसम्बन्धेनान्वेति, धर्मिण्याश्रयतासम्बन्धेन धने तु स्वाश्रयस्वामित्वसम्बन्धेन। प्रतीयते च विशिष्टस्योद्देश्यत्वे विशे-

नन्वित्यादिना। "पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम्। न्यायसम्पादितव्यक्ति पश्चाद्वाक्यार्थबोधक"मित्युक्तप्रक्रियया प्रथमं तत्तत्पदैस्तत्तदर्थानां पृथक्पृथगुपस्थितिः, पश्चात्तत्तदर्थानां तत्तदर्थेष्वन्वयविमर्शो विरोधाविरोधविमर्शलक्षणः, पश्चाद्वाक्यार्थावबोधो भवति, तत्र येऽर्थाः प्रथमं पृथक्पृथगुपस्थिताः पश्चात्परामर्शसमये न्यायपरिशीलितान्वययोग्यताका अभिधानसमये सर्वैः पदैर्युगपदेव मिथः सङ्गता एकार्थे पर्यवस्यन्तः प्रतीयन्ते, इत्थंस्थिते मिथो विशेषणानामन्योन्यसमवायः किमभिधानसमये आपाद्यते? उतार्थस्मरणसमये? उत परामर्शसमये? इति विकल्प्य क्रमशः प्रतिक्षिपति—*सत्यप्युद्देश्योपादेयभावे इत्यादिना। युगपदर्थावबोधने उद्देश्यविधेयविभागो न घटेते-*त्याशङ्कां परिहरति—न चेति। प्राप्ताप्राप्तविशेषस्यैवेति। युगपदन्वयमुपगच्छत्स्वपि विशेषणेषु प्राप्ताप्राप्तविभागस्य परामर्शदशायां परामृश्यमानत्वादिति भावः। सुतरां तदनवकाश इति। अर्थोपस्थितिवेलायामन्वयस्यैवाभानात्सुतरामित्युक्तिः। तस्य-विशेषणानामन्योन्यसमवायप्रसङ्गलक्षणानिष्टस्य, अनवकाशः। परामर्शदशायां परिहरति—परामर्शस्त्विति। न काऽपि क्षतिरिति। अयं भावः—विशेषणान्वयं विना विशिष्टान्वयो दुरुपपाद इति विशिष्टान्वये *विशेषणस्याप्यन्वयः* स्यादेवेत्यविवादम्, परन्तु विशिष्टस्य येन सम्बन्धेन यत्रान्वयस्तत्र तेनैव सम्बन्धेन विशेषणान्वयस्तु न, यथा दण्डविशिष्टमानयेत्यत्र द्वितीयार्थे कर्मत्वे दण्डविशिष्टस्याधेयतासम्बन्धेनान्वयः, दण्डस्य तु नाधेयतया, मिथोऽसम्बन्धयोर्दण्डपुरुषयोरानयनापत्तेः, किन्तु अवच्छेद्यतासम्बन्धेन, एवं साक्षात्पुरुषस्य कर्मत्वेऽन्वयः, दण्डस्य तु स्वविशेष्यभूतपुरुषद्वारैव, यत्र दण्डोपलक्षितपुरुषानयनतात्पर्येण दण्डिनमानयेति प्रयोगस्तत्र त्वानयनकर्मतया विवक्षितं पुरुषमुपलक्षयति, आनयनेनैवान्वेति, अयमेव विशेष उपलक्षणविशेषणयोः। इत्थं च विशिष्टस्य विशिष्टान्वयेऽन्वयमात्रेण विशेषणयोर्मिथः समवायप्रसञ्जनस्य क्वावसर इति। इममेवाशयमाशङ्कानिराकरणाभ्यां प्रकाशयति—नन्वित्यादिना। यथायोग्यमिति। अन्वयेन भाव्यमित्येतावता नह्यनुपपन्नेन सम्बन्धेनापि भाव्यम्। उपपन्नेनैव त्विति भावः। उपलक्षिताद्विशिष्टे भेदं ज्ञापयन्नाह—प्रतीयते चेति।

जन्तः। हराम यस्मै बलिमन्तकोऽसौ बिभेति यस्मादरणं ततोऽस्तु न" इति देव-

पणे उद्देश्यतावच्छेदकत्वं, न चोद्देश्योद्देश्यतावच्छेदकयोर्विधेयेन सममेकरूपः सम्बन्धः कापि भवेत्। यच्चोक्तमन्यथोपलक्षणत्वप्रसङ्ग इति। विचारयामस्तत्। इहोपलक्षणत्वे किमनिष्टम्। ननूपलक्षणस्य बहिष्ठत्वेन निर्विशेषवस्तुसिद्धिरूपं महदनिष्टं वः। उद्देश्यविशेषणस्योपलक्षणत्वमात्रेण कथं निर्विशेषवस्तुसिद्धिः। विधेयांशस्य विशेषणस्य सत्त्वात्। किंवा बहिष्ठत्वमुपलक्षणस्य? विशेष्येऽसम्बद्धत्वमुत विशेष्यादन्यत्रापि सम्बद्धत्वम्। नाद्यः। उपलक्षकत्वस्यैवासिद्धेः। न ह्यसम्बद्धं धर्मिण्यर्थविशेषमुपलक्षयेत्, नहि सारसः सुतरामसम्बद्धः केदारे देवदत्तीयत्वमवगमयति। द्वितीये तु न तवार्थः कश्चित्, अन्यत्र कदाचित्सम्बद्धस्याप्युपलक्षणत्वेनाभिमतसम्बन्धविशेषस्य धर्मिण्यबाधात्। नच शाखाऽसम्बद्धैव चन्द्रं लक्षयति। असम्बद्धा लक्षयतीति हि व्याहतम्। कस्तर्हि सम्बन्धः?। ऋजुदेशस्थत्वलक्षणः परम्परासम्बन्धः। परीक्षकास्तु प्रतिपद्यन्ते सम्बन्धमेनम्। बालास्तु यथाप्रत्ययं संयोगम्। तद्व्याहतं बहिष्ठत्ववचनमुपलक्षणस्य। अथ पदद्वयप्रतिपन्नविशिष्टद्वयैक्ये विशेषणयोरप्यैक्यं स्यात्। हन्त भोः! प्रत्युत्थानमिदं केन बलेन? विशिष्टैक्ये विशेषणैक्यमिति नियमबलेन। तथासति विशेषणैक्यसाधकतयाऽभिमतं विशिष्टद्वयैक्यं किमिति विवक्षितम्, किं विशेष्यैक्यमुत विशेषणानामपि। न प्रथमः, असाधकत्वात्। न चरमः, असिद्धेः। आत्माश्रयाच्च। विशिष्टे विशिष्टस्य तादात्म्येनान्वयेन विशेषणयोस्तादात्म्यभानापादनं तु विशेषणयोरन्योन्यसमवायप्रसङ्गनिरासेनैव निरस्तम्।

अथ—समानाधिकरणवाक्येन विशिष्टार्थबोधो यद्यभ्युपगम्येत; सामानाधिकरण्यलक्षणं व्याहन्येत, भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति हि तल्लक्षणम्, विशेषणविशेष्यरूपार्थभेदे सत्येकस्मिन्नर्थे वृत्तेरसम्भवात्। मैवम्। लक्षणव्याह-

---

विशिष्टान्वयपक्षेऽप्युपपत्तिरुपपादिता, अथोपलक्षणत्वपक्षे परेणापाद्यमानमनिष्टं प्रतिक्षिपन्नाह—यच्चोक्तमित्यादिना। उद्देश्यविशेषणस्योपलक्षणत्वमात्रेणेति। अयं भावः—सत्यं ज्ञानमित्यैकस्य पदस्योपलक्षितोद्देश्यसमर्पकतां स्वीकृत्यापरस्य विशिष्टविधेयांशसमर्पकताश्रयणेनापि मिथो विशेषणयोरन्योन्यसमवायप्रसङ्गः परिह्रियत एवेति न निर्विशेषवस्तुसिद्धिप्रसङ्ग इति भावः। पराभिमतमुपलक्षणस्य बहिष्ठत्वं विकल्प्य दूषयति—किंवेत्यादिना। असम्बद्धस्याप्युपलक्षकत्वे पराभिमतमुदाहरणं निरस्यति—नच शाखेति। व्याहतमिति। मिथो विरुद्धं वच इत्यर्थः। ऋजुदेशस्थत्वेति। समरेखदेशसम्बद्धत्वमित्यर्थः। परः शङ्कते—अथेति। पदद्वयं–नीलमुत्पलमिति पदद्वयं; तत्प्रतिपन्नं विशिष्टद्वयं–नीलत्वविशिष्टोत्पलत्वविशिष्टद्वयं, तस्यैक्ये–विशिष्टवेषेणाप्यैक्येऽवगम्यमान इत्यर्थः। विशेषणयोरप्यैक्यं स्यात्–ऐक्यमवगम्यमानं स्यात्। तदवबोधने च वाक्यमप्रमाणं स्यादिति यावत्। प्रत्युत्थानमिति। प्रतिक्षिप्तस्य पुनरुत्थानं प्रत्युत्थानम्। विशेषणयोरन्योन्यसमवायापादने निरस्तेऽपि प्रकारान्तरेणाक्षेप इति यावत्। केन बलेनेति। बलं नेत्यर्थः। किं विशेष्यैक्यमुत विशेषणानामपीति। विशिष्टमिति नातिरिच्यते विशेष्यविशेषणसमुदायात्, तदनयोः किं विशेष्यैक्यमुत विशेषणैक्यमापादकमिति भावः। असाधकत्वात्–विशेष्यैक्यस्य विशेषणैक्येऽसाधकत्वात्। आत्माश्रयाच्चेति। आपाद्यापादकयोरैक्यादिति भावः।

परः प्रकारान्तरेण शङ्कते—अथेत्यादिना। एकस्मिन्नर्थे वृत्तेरसम्भवादिति। विशेषणद्वयं

तोक्तेश्च। "करोति विश्वस्थितिसंयमोदयं यस्येप्सितं नेप्सितमीक्षितुर्गुणैः। माया

तिस्तु तवैव, विशेषणभेदाववोधित्वेऽप्यर्थैक्यपरता हि लक्षणवाक्यतः प्रतीयते। भिन्नप्रवृत्तिनिमित्तानां शब्दानामिति निर्देशात्। ननु-विशेषणभेदोऽर्थैक्यं च व्याहतम्। व्याहतं यद्य-

विशेष्यं चेत्यनेकार्थप्रतिपादनान्नैकार्थतेत्याशयः। तवैवेति। न ममेत्यर्थः। आत्मनो दोषं परस्मिन्नारोपयस्यज्ञानादिति व्यज्यते। विशेषणभेदाववोधित्वेऽपीति। यदववोधः सामानाधिकरण्यभञ्जकतया भवदभिमतस्तदववोधने सत्येवेत्यपिना व्यज्यते। भिन्नप्रवृत्तिनिमित्तानां शब्दानामिति निर्देशादिति। शब्दानामेकस्मिन्नर्थे वृत्तिरित्यनुक्त्वा भिन्नप्रवृत्तिनिमित्तानामिति विशेषणनिर्देशादित्यर्थः। इदं हि विशेषणं प्रवृत्तिनिमित्तभूतविशेषणभेदाववोधकत्वं शब्दानामवगमयति, तथा च विशेषणभेदाववोधित्वे सत्यर्थैक्यपरत्वं सामानाधिकरण्यमिति लक्षणवाक्यार्थः सिद्ध्यतीति भावः। ननु सत्यन्तार्थस्य कुतो लाभः?। भिन्नप्रवृत्तिनिमित्तानामित्यतः। ननु बहुव्रीहिणा भिन्नप्रवृत्तिनिमित्तसम्बन्धोऽवगम्यते शब्देषु, न तु तदववोधकता, कस्तर्हि स सम्बन्धः?। उपस्थापकता। उपस्थापकतायामवबोधकतातः को विशेषः?। शब्दाः स्वभावगत्याऽर्थमुपस्थापयेयुः, पश्चादन्वयसमये बाधेन नाववोधयेयुः, तदिदमभिप्रेत्योच्यते—भिन्नप्रवृत्तिनिमित्तानामिति। भिन्नप्रवृत्तिनिमित्तोपस्थापकानां शब्दानामेकार्थाववोधकत्वं सामानाधिकरण्यमिति तदर्थः। भिन्नार्थोपस्थापकानामप्येकार्थपरत्वमित्येतत्। इत्थं च समानाधिकरणवाक्येन विशेषणभेदाववोधकेन भाव्यमिति कोऽयं नियमः। यद्येवं किं गुरुणा विशेषणेन, भिन्नार्थानामिति लघुनैव विशेषणेनार्थसिद्धेः, घटः कलश इत्यादिपर्यायेषु न भिन्नार्थोपस्थापकता, घटः पट इत्यादौ तु नैकार्थे वृत्तिरिति नातिप्रसङ्गः, नीलत्वमुत्पलत्वं वा नीलत्वविशिष्ट उत्पलत्वविशिष्टो वा मिथो भिन्नाविति भिन्नार्थोपस्थापकयोरपि नीलोत्पलशब्दयोर्नीलमुत्पलमित्यत्र विशेषणपरित्यागेन वस्तुमात्राववोधने तात्पर्येण सामानाधिकरण्यं संघटते। ननु-भवतो वा गुरुणा विशेषणेन को लाभः?। अयं लाभः-बहुव्रीहिणा चेदववोधकत्वं विवक्षितं स्यात् तदा भिन्नार्थानामेकस्मिन्नर्थे वृत्तिरिति वचनं व्याहतम्, नहि भिन्नार्थाववोधका एकार्थाववोधका भवेयुरिति शङ्का समुद्भवति, तत्परिहाराय भिन्नप्रवृत्तिनिमित्तानामिति गुरुविशेषणमादृतम्, इत्थं च सति नोक्तशङ्कावकाशः। तथाहि—प्रकृष्टा वृत्तिः प्रवृत्तिः, सा च शब्दानामर्थे, यथा गवादिशब्दानां पिण्डविशेषे, गवादिशब्द इव पशुशब्दोऽपि पिण्डविशेषे प्रवर्त्तते, परं प्रवृत्तौ निमित्तं द्वारं त्वन्यत्, एकत्र गोत्वादि, अपरत्र चतुष्पात्त्वं, अत एव धर्मविशेषमालम्ब्य प्रसरति धर्मिविशेषे शब्द इति शब्दानां प्रवृत्तिर्धर्मिणि, अत एव मुखभूतं धर्ममवगाहमानोऽपि शब्दो धर्मिण्येव पर्यवस्यतीति प्रकृष्टा वृत्तिर्धर्मिण्येव, एवंविधप्रवृत्तिनिमित्ते येषां भिन्ने; भिन्नप्रवृत्तिनिमित्ताववोधका ये शब्दाः, तथाविधानामेकस्मिन्नर्थे धर्मिणि वृत्तिः,[1] भिन्नधर्ममुखेनैकधर्म्यववोधकत्वं सामानाधिकरण्यमिति यावत्। तथाच भिन्नप्रवृत्तिनिमित्ताववोधकत्वेऽप्येकधर्म्यववोधकत्वमबाधितमिति भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिरित्यव्याहतम्। तथाच प्रवृत्तिनिमित्तपरित्यागेनैकार्थाववोधकत्वसामानाधिकरण्यपक्षे लक्षणवाक्यस्यास्वारस्यमनपायम्। ननु प्रवृत्तिनिमित्तपरित्यागे एकार्थाववोधकत्वं न घटेत, विशेषणानां भेदकत्वस्वाभाव्यादिति शङ्कते—नन्विति। यद्यभिमन्यस इति। अभिमतिविषयो निरस्तः प्रागेव, अभिमतिमात्रेऽप्ययोग्यत इति

१ बहुव्रीहिणोपस्थापकत्वमेव प्रलाभ्यते नाववोधकत्वं चेदित्यर्थः।

यथाऽयो भ्रमते तदाश्रयं ग्राव्णो नमस्ते गुणकर्मसाक्षिणे" इति मायाया अपि

---

भिमन्यसे, लक्षणवाक्यं सङ्गमयतु भवानेव। भिन्नप्रवृत्तिनिमित्तवाचकानामपि शब्दानां प्रवृत्तिनिमित्तपरित्यागेनैकस्मिन्नर्थे वृत्तिरिति चेत्। नैतदवगम्यते वाक्यतः। कथं वा लक्षणवाक्यसङ्गतिरर्थभेदावबोधकत्वे। श्रूयताम्। विशेषणभेदेऽपि विशेष्यैक्यादेकार्थपरत्वसङ्गतिः। अर्थो ह्यत्र विशेष्यम्। स्वरूपमात्रपरत्वे विशेषणान्तरप्रयोगवैयर्थ्यं च। ननु–स्वरूपमात्रस्यापीतरव्यावृत्तिबोधनाय पदान्तरसार्थक्यमिति चेत्। किं प्रवृत्तिनिमित्तान्वयबलादितरव्यावृत्त्यवगम उत तदनन्वयेनैव। यद्यन्वयेन, तर्हि न निर्विशेषप्रतिपत्तिः। अनन्वयेन तदवगमस्तु न भवेत्, नहि पर्यायपदशतेनापि भेदविशेषावगमः। ननु–नात्र वाच्यार्थानामन्वयः प्रतीयते, किन्तु तैस्तैः पदैस्तत्तदितरव्यावृत्तिरूपलक्ष्यार्थावबोधनान्न वैशिष्ट्यप्रतीतिर्न वा पदान्तरवैयर्थ्यम्। हन्त भोः। न कश्चिद्विशेषो भावं परित्यज्याभावरूपलक्ष्यार्थानुधावने, व्यावृत्तेरपि व्यावृत्तगतविशेषरूपत्वेन निर्विशेषवस्तुप्रतिपत्त्यसम्भवात्। ननु–व्यावृत्तिः स्वरूपमेवेति न क्षतिः। मैवम्। शौक्ल्यस्य कार्ष्ण्यादिव्यावृत्तिः स्वरूपमितिवत्प्रकाशस्वरूपस्य ब्रह्मणोऽनृतादिव्यावृत्तिः स्वरूपमित्यस्य वक्तुमशक्यत्वात्, नहि प्रकाशमान एवेतरव्यावृत्तिरूपे ब्रह्मणीतराध्यास उपपद्येत, नच शौक्ल्ये प्रकाशमाने कार्ष्ण्याध्यासः। किञ्च–तैस्तैः पदैः प्रतीयमाना इतरव्यावृत्तयः किमभिन्ना उत भिन्नाः?। भिन्नाश्चेद्व्यावृत्तिस्वरूपस्य ब्रह्मणोऽपि भेदः प्रसज्जेत्। अभिन्नाश्चेत्पदान्तरवैयर्थ्यम्। तथाच सामानाधिकरण्यलक्षणमस्माकमेव घटते,

---

भावः। वाक्यत इति। लक्षणवाक्यतः। भिन्नप्रवृत्तिनिमित्तावबोधकतैव हि भिन्नप्रवृत्तिनिमित्तानामिति विशेषणतः प्रतीयत इति भावः। प्रवृत्तिनिमित्तपरित्यागेन वस्तुमात्रावबोधित्वे दोषमाह—स्वरूपमात्रपरत्व इति। समानाधिकरणवाक्यस्येति शेषः। विशेषणान्तरप्रयोगवैयर्थ्यमिति। स्वरूपमात्रस्य त्वविशेषितेनैव शब्देन लाभादिति भावः। स्वरूपमात्रस्यापीति। अवगम्यमानस्येति शेषः। इतरेति। सत्येतरव्यावृत्तये सत्यादिपदमिति भावः। किमिति। सत्यादिपदप्रवृत्तिनिमित्तभूतसत्यत्वाद्यन्वयेनेतरव्यावृत्तिः प्रतीयते, उत तदनन्वयेनैवेत्यर्थः। तदवगमस्तु–व्यावृत्त्यवगमस्तु। व्यावृत्तिः स्वरूपमेवेतीति। ब्रह्मणो याऽनृतादिव्यावृत्तिः सा ब्रह्मस्वरूपान्नातिरिच्यते, ततस्सत्यादिशब्दानां ब्रह्मस्वरूपमात्रपरतेति निर्विशेषप्रतिपत्तिर्भवेदिति भावः। यद्यपि दृष्टं नाम कचिद्व्यावृत्तेः स्वरूपात्मता, यथा शौक्ल्ये कस्यचिद्धर्मे कार्ष्ण्यात्कस्यचिद्धर्माद्या व्यावृत्तिः सा न धर्मान्तरम्, अनवस्थापातात्, अपि तु शौक्ल्यरूपैव, तद्वद्ब्रह्मणि येतरव्यावृत्तिः सा ब्रह्मस्वरूपमेवेति वक्तुं न शक्यत इत्याह—शौक्ल्यस्य कार्ष्ण्यादिव्यावृत्तिः स्वरूपमितिवदिति। तत्र हेतुमाह—प्रकाशस्वरूपस्येति। सत्यादिपदानामितरव्यावृत्तिपरताश्रयणेऽपि न निस्तार इत्याह—किञ्चेत्यादिना। तैस्तैः पदैः–सत्यज्ञानादिपदैः। किमभिन्ना उत भिन्ना इति। मिथ इति शेषः। व्यावृत्तिस्वरूपस्येति। यदि व्यावृत्तिर्न ब्रह्मस्वरूपं तस्यायं धर्म इति सविशेषता स्यात्। अतश्चेद्व्यावृत्तिर्ब्रह्मस्वरूपं तदा सत्यपदवाच्यानृतव्यावृत्तेर्ज्ञानपदवाच्यजडव्यावृत्तेश्च मिथो भेदेन ब्रह्मभेदः स्यादिति भावः। अस्माकमेवेति। एवकारार्थं तथा

तदधीनक्रियत्वोक्तेश्च । यश्च सर्वेषां देहिनां कर्मफलानि ददातीति तथोक्तः ।

एकविशेष्यकानेकविशेषणकबोधस्वीकारात् । लक्षणवाक्यस्य च समानाधिकरणानेकार्थान्वबोधकत्व एव तात्पर्यात् । पदविशिष्टपदत्वं पदानां सामानाधिकरण्यमिति निष्कर्षः । पदवैशिष्ट्यं च स्वविशिष्टविषयताविशिष्टविषयताविशिष्टत्वसंबन्धेन । विषयतायां विषयतावैशिष्ट्यं स्वानवच्छेदकावच्छिन्नत्वस्वनिरूपिततादात्म्यनिष्ठसांसर्गिकविषयतानिरूपितत्वोभयसम्बन्धेन । पदवैशिष्ट्यं विषयतायां प्रयोज्यत्वसम्बन्धेन विषयतावैशिष्ट्यं पदे प्रयोजकतासम्बन्धेन, इत्थं च "सत्यं ज्ञानमनन्त"मित्यादिवाक्यानां सविशेषे ब्रह्मण्येव तात्पर्यात्परेषामखण्डार्थपरत्वमाशामोदकायितमिति निरस्तसमस्तभेदं ब्रह्मेत्येतदपास्तम् ।

यच्चोक्तम्—अनिर्वचनीयामाविश्य मायां मार्तण्ड इव तोयधिं तदुपाधिपरिकल्पितबिम्बप्रतिबिम्बभावस्तरङ्गभेदेनेवोपाधिभेदेन भिद्यत इवेति । विचारयामस्तत् । कथमचाक्षुषस्य प्रतिफलनं, चाक्षुषस्यैव तु प्रतिबिम्बसम्भवः । ननु—नायं नियमः, आकाशस्याचाक्षुषस्यापि प्रतिबिम्बसम्पत्तेः । मैवम् । नाकाशं प्रतिफलति; किन्त्वभ्रनक्षत्रप्रभृत्येव । अस्तु वाऽऽकाशस्य प्रतिबिम्बनं, न तदचाक्षुषम् । न चारूपित्वादचाक्षुषं, तद्धि नीलम् । अत एव नीलं नभ इति प्रामाणिको व्यवहारः । ननु—सन्निकर्षे कुतो न तथा प्रत्ययः । दूरत एव तन्नैल्याभिव्यक्तेः । किं बहुना । यदेवाञ्जनलिप्तमिव नीलनीलमतिविपुलमभ्रनक्षत्राद्याश्रयत्वेन किमपि दृश्यते तदेव प्रतिफलति; तच्चाकाशमन्यद्वा रूपि वा रूपशून्यं वेत्यन्यदेतत् । तथाच

चेत्यस्यान्वये तात्पर्यम् । अस्माकं घटत इत्यत्र हेतुमाह—एकेति । स्वीकारादिति । स्वीक्रियतां नाम भवता, लक्षणवाक्यस्य न तत्र तात्पर्यमित्याशङ्कायामाह—लक्षणवाक्यस्य चेति । स्वविशिष्टेति । स्वविशिष्टा या विषयता तद्विशिष्टा या विषयता तद्विशिष्टत्वमित्यर्थः । नीलमुत्पलमित्यत्र नीलपदप्रयोज्या या नीलत्वावच्छिन्ना प्रकारताख्यविषयता; तदनवच्छेदकेनोत्पलत्वेनावच्छिद्यते उत्पलनिष्ठा विशेष्यताख्या विषयता, तथोक्तप्रकारतानिरूपितसांसर्गिकविषयतया निरूपिता च भवति, तस्यां च विशेष्यतायामुत्पलपदं प्रयोजकमित्युक्तसम्बन्धेन पदविशिष्टपदत्वमुत्पलपदेऽस्ति, तथोत्पलपदविशिष्टत्वं नीलपदेऽपीति नीलपदोत्पलपदयोः सामानाधिकरण्यसङ्गतिः ।

अथ जीवब्रह्मणोर्बिम्बप्रतिबिम्बभावं प्रतिक्षिपति—यच्चोक्तमित्यादिना । तदुपाधिपरिकल्पितेति । सैवोपाधिस्तदुपाधिः । तस्याः परिणतिलक्षणान्तःकरणात्मकोपाधिरिति वा । इवेति । न वस्तुतो भेद इति भावः । अचाक्षुषस्येति । ब्रह्मण इति शेषः । परः शङ्कते—नन्विति । नायं नियम इति । यस्य प्रतिबिम्बः स चाक्षुष एवेत्ययं नियमः । प्रतिबिम्बसम्पत्तेरिति । प्रतिफलति हि साभ्रनक्षत्रमाकाशं सरसीति भावः । तथा प्रत्ययः—नीलमिति प्रत्ययः । किं बहुनेति । अयं भावः—ऊर्ध्वं प्रसारितदृष्टिभिः किं केवलमभ्रनक्षत्रादि दृश्यते इति मन्यते भवान् ? उत साभ्रनक्षत्रमाकाशमिति । अभ्रनक्षत्राद्येवेति चेत्, तदेव प्रतिफलति नाकाशमित्यप्यभ्युपगन्तव्यम् । नहि कथमप्यूर्ध्वं न दृश्यते सरस्यन्तस्तु प्रतिफलतीति घटेत । साभ्रनक्षत्रमाकाशं चेद्दृश्यते इतीष्येत प्रतिफलति तदेव चाक्षुषमिति गम्यते, तथा चाकाशस्य नीरूपस्यापि चाक्षुषता स्वीकार्या नाम, आकाशे वा रूपं स्वीकार्यम्; स्वीक्रियतां नाम कश्चन पक्षः, नास्माकमिदानीं तन्निर्धारणे प्रवृत्तिः किन्तु अचाक्षुषं न प्रतिफलती-

नियन्तृत्वादेव सर्वेषां पृथक् पृथक् तत्तत्कर्मफलप्रदातेत्यर्थः। "नित्यो नित्यानां

चाक्षुषस्यैव तु प्रतिबिम्बनं, तच्चाचाक्षुषस्य ब्रह्मणो न घटते। किञ्च–सर्वतो व्याप्तस्य ब्रह्मणः कथं प्रतिबिम्बनम्। सर्वतो व्याप्तस्य तथात्वे का क्षतिः। अविद्यायां व्याप्तस्याविद्यायां कथं प्रतिफलनं, प्रतिफलता ह्यन्यदेशस्थेन भाव्यम्। नहि जलगतस्य कदाचिदपि प्रतिफलनम्। ननु–सर्वतो व्याप्तस्याकाशस्य जले प्रतिफलनं दृष्टम्। सत्यम्। तथापि तत्र प्रदेशभेदस्यैवोपरितनस्याभ्रनक्षत्राद्याश्रयस्य, न तु जलान्तःस्थाकाशस्य। न चेहापि प्रदेशभेदेन तन्निर्वाहः। नित्ये निरवयवे तस्मिन्स्वतःप्रदेशभेदासम्भवात्। न चाविद्यातदभावाभ्यामौपाधिकः प्रदेशभेदो ब्रह्मणि सुवचः। भावाभावयोरेकत्र विरोधेनासम्भवात्। न चावच्छेदकभेदेन तत्सम्भवः। इह तदवच्छेदकासम्भवादवच्छेदकान्तरकल्पनेऽनवस्थाप्रसङ्गः। किञ्च–जलादिस्वच्छद्रव्यप्रत्यावर्तितनयनरश्मिसन्निकर्षतो वियत्तलवर्त्येव चन्द्रादिकं जलस्थतया गृह्यते; तस्मात्प्रतिफलने नायनरश्मीनामवश्यापेक्षितत्वेन सन्मात्रे ब्रह्मणि कथं तत्सम्भवः। ननु–लोके तदपेक्षायामपि नेह तदपेक्षेति चेत्, प्रतिफलनोपाधेरविद्याया अप्यपेक्षा माभूत्, स्वत एव चैतन्यमात्रस्य प्रतिबिम्बं स्यान्नाम। किञ्च–अविद्यायां प्रतिबिम्बाधायकं वैलक्षण्यं न किञ्चिदुपलभ्यते। अस्तु वा तत्र तत्कल्पनं, तथाप्यविद्याधीनत्वेन प्रतिबिम्बभूतस्य जीवस्य सादित्वं स्यात्; प्रतिबिम्बं सर्वमेव ह्युपाध्यधीनं जन्यं दृष्टम्। ननु–स्यान्नाम लोके तथा नियमः; लोकविलक्षणेऽत्र तु प्रतिबिम्बभूतस्य जीवस्याविद्याधीनस्यापि न जन्यत्वापात इति चेत्। हन्त ! तर्हि लोके प्रतिबिम्बस्योपाध्यपेक्षत्वेऽपि लोकविलक्षणेऽत्र प्रतिबिम्ब उपाधिरपि नापेक्ष्यते। तदविद्योपाध्याश्रयणं व्यर्थम्। लोकदृष्ट्या चेदुपाध्यपेक्षा; उपाध्यधीनस्य जन्यत्वनियमो लोकदृष्ट इति जीवानां जन्यत्वमपरिहार्यम्। अथ कोऽयं कोलाहलः। नास्माभिरविद्यायां जल इव चन्द्रमसश्छायापत्तिर्वर्ण्यते, येनायमाशङ्कावकाशः स्यात्। ननूक्तं मार्त्तण्ड इव तोयधिमाविश्य

त्येव, तत्तव्यभिचरितमिति। प्रकारान्तरेण प्रतिक्षिपति—किञ्चेति। कथमिति निषेधे। सर्वतो व्याप्तस्येति हेतुगर्भं विशेषणम्। सर्वतो व्याप्तस्य प्रतिफलनमनुपपन्नमित्याशयः। तथात्वे–प्रतिफलने। व्याप्तस्येति। ब्रह्मण इति शेषः। अन्यदेशस्थेनेति। प्रतिफलनोपाधेर्यो देशस्ततोऽन्यदेशस्थेनैवेत्यर्थः। नहि जलगतस्येति। जले इति शेषः। सत्यमित्यर्धाङ्गीकारे। आकाशं प्रतिफलति सरसि, तच्चाकाशं सर्वतो व्यापि चेति तु युक्तम्, प्रतिफलताऽन्यदेशसम्बद्धेनैव भाव्यमिति नियमो नेति तु न युक्तमिति भावः। नियममेवोपपादयति—तथापीत्यादिना। प्रदेशभेदस्यैवेति। आकाशस्येति शेषः। जलान्तःस्थाकाशस्येति। जलान्तःस्थाकाशप्रदेशभेदस्येति यावत्। इहापि–ब्रह्मण्यपि। तन्निर्वाहः–प्रतिफलननिर्वाहः। ब्रह्मणि प्रदेशभेदः किं स्वतः ? आहोस्विदौपाधिकः ? इति विकल्प्य दूषयति। तत्र स्वत इति पक्षं प्रथमं प्रतिक्षिपति—नित्ये निरवयव इति। स्वतः प्रदेशभेदे ह्यवयवभेदेन भाव्यं पृथिव्या इव, सावयवत्वे चानित्यतापत्तिः, तन्नित्येऽत एव निरवयवे ब्रह्मणि स्वतः प्रदेशभेदो न घटत इति भावः। द्वितीयं दूषयति—न चाविद्यातदभावाभ्यामिति। अचाक्षुषस्य ब्रह्मणः प्रतिफलनं न घटेतेत्येतत्प्रकारान्तरेणोपपादयति—किञ्चेति। वैलक्षण्यं–स्वच्छत्वम्। परः प्रतिबिम्बवादस्याशयं प्रदर्शयन्नाशङ्कते—अथेति। कोलाहल इति। पराभिप्रायमविज्ञाय क्रियमाणो घोष एवायमित्याशयः।

चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति श्रुतेः । "लभते च ततः

मायां तदुपाधिपरिकल्पितबिम्बप्रतिबिम्बभावस्तरङ्गभेदेनेवोपाधिभेदेन भिद्यत इवेति । सत्यमुक्तम् । उक्तेर्हार्दमजानतामयं कोलाहलः । इदं हि नो हार्दम्—यथा सूर्यस्तरङ्गनिष्ठतया गृह्यमाणो नानात्वेन गृह्यते वस्तुतो न नाना, एवं ब्रह्माप्यविद्यातरङ्गसंसर्गान्नानात्वेन गृह्यत इति । ननु—केन गृह्यते । नान्येन केनापि, ब्रह्मैवाविद्यासंसृष्टं स्वस्मिन्नानात्वं पश्यति । ननु—स्वस्वरूपे सम्यगवधृते कथं नानात्वं पश्येत् । तिरोहितस्वरूपं ब्रह्म तथा पश्यति । ननु—ब्रह्मणोऽप्यज्ञत्वं स्यात् । स्यान्नाम । अत एव संसृतिः । अज्ञानमेव हि संसृतेर्मूलम् । हन्त ! तर्हि निरवद्यस्यापि ब्रह्मणः सावद्यता । न । मिथ्यात्वात्तस्य । ननु—ब्रह्मस्वरूपं केन तिरोभूयते । अविद्ययैव तिरोहितम् । अविद्यायां चावरणशक्तिर्विक्षेपकशक्तिश्चेति शक्तिद्वयमतस्तयैव स्वरूपतिरोधानं तिरोहितस्वरूपे विविधविशेषाध्यासोऽपि । अत्रोच्यते । निर्विशेषं प्रकाशैकरसं ब्रह्माविद्यया तिरोहितमित्येतन्न घटते । तथाहि—किं नाम तिरोधानं ? यवनिकयेवेन्द्रियसन्निकर्षनिवारणस्तु नेह प्रसक्तिः, तिरोधाननिवृत्तौ दृश्यत्वापातात् । प्रकाशप्रतिरोधकत्वं चेत् । अविद्यया प्रतिरुध्यमानः प्रकाशः किं ब्रह्मस्वरूपादनतिरिक्तः ? उत तदतिरिक्तः ? । अनतिरिक्तश्चेदविद्यया क्रियमाणः प्रकाशप्रतिरोधः स्वरूपनाश एव पर्यवस्येत् । यदि चातिरिक्तः, तेन सविशेषत्वापत्तिः । प्रकाशैकवेपं ब्रह्म, अथ चाविद्यया न प्रकाशत इति व्याहतं च । अथ प्रकाशैकवेपस्याप्यविशदावभासोऽविद्ययेति चेत् । निर्विशेषे नैतद्घटते । सामान्यतः प्रतीयमानस्यापि विशेषतोऽनवभास एव ह्यविशदावभासः, शुक्तिस्वरूपं हीदमिति सामान्यतः प्रकाश-

अविद्यातरङ्गेति । अविद्यायास्तरङ्गा अन्तःकरणलक्षणाः । तथा चेह न सर्वांशे दृष्टान्तसारूप्यम् । एकस्य सतो नानात्वावभासमात्रे तरङ्गसूर्यदृष्टान्तोपादानमिति भावः । आशङ्कामुखेनाध्यासमुपपादयति—नन्वित्यादिना । केनेति । जीवभावस्य तदानीमभावात् ब्रह्मणश्च शुद्धस्य तदसम्भवान्नानात्वाध्यासस्य ग्रहीता न घटत इत्याशङ्कितुरभिप्रायः । परिहरति—नान्येनेति । अविद्यासंसृष्टमिति । इदं च विशेषणं ब्रह्मणः स्वस्मिन्नानात्वदर्शन उपपादकम् । अविद्यासंसर्गेण वा कथमध्यासदर्शनोपपत्तिस्तदेतदाशङ्कापरिहारमुखेन स्फुटयति—ननु स्वस्वरूप इत्यादिना । तथा पश्यतीति । नानेवात्मानं पश्यतीत्यर्थः । मिथ्यात्वात्तस्येति । ब्रह्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वेनाविद्यायास्तत्सम्बन्धस्य तत्कृताज्ञत्वस्य च मिथ्यात्वेन न कलङ्को ब्रह्मणः । परमार्थो हि कलङ्को दूषणायेति भावः । सिद्धान्ती प्रतिक्षिपति—अत्रोच्यत इत्यादिना । इत्येतन्न घटत इति । अविद्यया चेद्ब्रह्मणस्तिरोभवनं; निर्विशेषप्रकाशैकरसता न घटेत, निर्विशेषप्रकाशैकरसं चेद्ब्रह्म; अविद्यया तिरोभावस्तस्य न घटेतेत्याशयः । इदमेवोपपादयति—तथाहीत्यादिना । इहेति । अदृश्ये ब्रह्मणि । नाश एव पर्यवसेदिति । प्रकाशप्रतिरोधोऽपि द्वेधा भवितुमर्हति; उत्पत्स्यमानप्रकाशस्योत्पत्तौ प्रतिरोधः सतः प्रकाशस्य विनिवर्तनं वेति । सतो ब्रह्मणोऽनतिरिक्तस्य प्रकाशस्य प्रतिरोधेन निवृत्तिरूपेणैव भाव्यम्, तथा च ब्रह्मणो नाश एव पर्यवसानं स्यादिति भावः । अविद्यया तिरोधानं नाम नात्यन्तं प्रकाशापगमः, किन्तु अविशदावभासो ब्रह्मस्वरूपस्येत्याशङ्कते—अथेत्यादिना । निर्विशेषे—निर्विशेषतया भवदभिमते । एतत्—अवि-

कामान्मयैव विहितान् हि तान्" "अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च"

मानमपि शुक्तित्वादिविशेषाकारेणाप्रकाशान्न विशदमवभासते, अत एव च रजतभ्रमः, तस्मान्निर्विशेषं प्रकाशैकस्वरूपमविद्यादोषेण न विशदमवभासत इत्येतन्नोपपद्यते । ननु–तुल्यं चोद्यम् । देहात्मभ्रमोपपादनाय भवतापि स्वयंप्रकाशस्य प्रत्यगात्मनः स्वरूपं तिरोहितमिति वक्तव्यम् । सत्यम् । अथापि न चोद्यतौल्यं, विशेषात् । नहि वयमात्मस्वरूपमविशेषमाचक्ष्महे, विशेषाश्च निरवयवत्वनिर्विकारत्वनित्यत्वाणुत्वशेषत्वादयः श्रुतिसम्प्रतिपन्ना बहवः, ते च तिरोहिताः । स्वयंप्रकाशत्वेऽप्यात्मस्वरूपस्य न तेषां प्रकाशनियमः । धर्मिस्वरूपप्रकाशमात्रेणापि स्वयम्प्रकाशत्वानपायात् । स्वस्मिन्स्वस्य विषयत्वमेव हि स्वयम्प्रकाशता । स्वनिरूपितविषयतावत्त्वमित्येतत् । तथाच तिरोहितविशेषतया स्वयंप्रकाशस्याप्यस्य न यथावत्प्रकाश इति न काप्यसङ्गतिरस्माकम् । प्रकाशैकरसं ब्रह्म निर्विशेषं तिरोहितम् । अविद्यया वदन्वादी स्वस्याविद्यां व्यनक्त्ययम् ॥

अथ यया तिरोधानमाचष्टे तामविद्यां विचारयामः । किमियमविद्यायवनिका पारमार्थिकी ? उत मिथ्या ? । नाद्यः, अपसिद्धान्तात् । न द्वितीयः, दोषान्तरापेक्षया तस्यापि तथात्वेन तदपेक्षयाऽनवस्थाप्रसङ्गात् । यदि नापेक्ष्येतात्र दोषः, तर्हि जगदध्यासेऽपि नापेक्ष्येत । यदि जगतः काल्पनिकत्वेन मूलदोषापेक्षा, तादृश्या अविद्याया अपि तथात्वेन दोषा-

शदावभास इत्येतत् । अत एवेति । शुक्तित्वाप्रकाशाद्धर्मिमात्रस्य प्रकाशादेवेत्यर्थः । तस्मादिति । अगृहीतस्वगतविशेषाकारं धर्मिस्फुरणमात्रस्यैवाविशदावभासपदार्थत्वादित्यर्थः । इत्येतन्नोपपद्यत इति । ब्रह्मणश्चेदविद्ययाऽविशदावभासोऽभिमन्येत, तर्हि तत्सविशेषमेवाभ्युपगन्तव्यम्, तदैव ह्यविद्ययाऽगृहीतविशेषं सामान्यतो ब्रह्म स्फुरतीत्यविशदावभासोपवर्णनं घटेत, यदि निर्विशेषं प्रकाशैकरसमित्यत्रादरस्तर्ह्यविशदावभास इत्ययं वादो न योग्य इति भावः । परः शङ्कते—ननु तुल्यं चोद्यमिति । अयं भावः—वैशेषिकवन्न भवानात्मनो मनःसंयोगाद्यौपाधिकज्ञानगुणयोगेन कादाचित्कं परायंत्तप्रकाशं जीवात्मनो मन्यते, किन्तु वयमिव स्वयंप्रकाशमेव प्रत्यगात्मानम् । तथाविधस्यैव च तस्य कर्मणा स्वरूपं तिरोहितमिति वादो भवदीयो वा कथं घटते, यदि न तिरोहितं कथं स्यादस्य देहात्मभ्रमः, तदत्र स्वरूपतिरोधाने यदुपपादकं वस्तदेवास्माकं भविष्यतीति । सत्यमिति । स्वयंप्रकाशस्यापि प्रत्यगात्मनः स्वरूपं तिरोहितमित्यत्राभ्युपगमः, चोद्यतौल्ये त्वनभ्युपगमः । विशेषमेवोपपादयति—नहीत्यादिना । ननु स्वयंप्रकाशस्यैवात्मनो निरवयवत्वादयोऽपृथक्सिद्धधर्मा अथापि तिरोहिता इत्येतन्नोपपद्यते । नहि धर्मिण्यात्मनि प्रकाशमाने तद्धर्माणामप्रकाश इत्याशङ्कां परिहरति—स्वयंप्रकाशत्वेऽपीत्यादिना । न तेषां प्रकाशनियम इति । नहि धर्मिप्रकाशो धर्मप्रकाशाविनाभूतः, विना श्वैत्यप्रकाशं शङ्खो हि पीतः प्रकाशत इति भावः । उपपादितां तिरोधानानुपपत्तिं कारिकयोपसंहरति—प्रकाशैकरसमिति । अविद्ययेति । तिरोहितमित्यनेन सम्बध्यते । स्वस्याविद्यां व्यनक्त्ययमिति । अनुपपन्नार्थप्रतिपादनादिति भावः ।

अथाविद्यास्वरूपानुपपत्तिमाह—अथेति । अपसिद्धान्तादिति । ब्रह्मव्यतिरिक्तस्य परमार्थस्य वादिभिरनभ्युपगमादिति भावः । दोषान्तरापेक्षयेति । मिथ्याभूतस्य दोषकल्पितत्वनियमादिति भावः । तथात्वेन–मिथ्यात्वेन । तदपेक्षया–दोषान्तरापेक्षया । अत्र–अविद्यास्वरूपसम्पत्तौ । नापेक्ष्येतेति ।

"ईशाभिसृष्टं ह्यवरुन्ध्महेऽङ्ग ! दुःखं सुखं वा गुणकर्मसङ्गात्" "त्वं कर्मणां

न्तरापेक्षाऽवर्जनीयैव । यदि मिथ्याभूताया अपि तस्याः स्वरूपानादित्वाश्रयणादनवस्था परिह्रियेत, हन्त ! तर्हि माध्यमिकपक्षे का हानिः । नच निरधिष्ठानभ्रमानुपपत्तिः, मिथ्याभूतेनाप्यधिष्ठानेन तदुपपत्तेः । न चाधिष्ठानमिथ्यात्वे तदध्यासायाधिष्ठानान्तरापेक्षयाऽनवस्था, मिथ्याभूतस्यापि दोषस्य स्वरूपानादित्वाभ्युपगमवन्मिथ्याभूतस्याप्यधिष्ठानस्य स्वरूपानादित्वाभ्युपगमेन तत्परिहारस्य वक्तुं शक्यत्वात् । तथाच सौगतो विजयी भवेत् । अपि च जीवभावस्यानादित्वेऽपि मिथ्यात्वादविद्यापरिकल्पितत्वमिवाविद्यास्वरूपस्यानादित्वेऽपि मिथ्यात्वादविद्यान्तरपरिकल्पितत्वमवश्यमाश्रयणीयं स्यादित्यनवस्थाऽपरिहार्यैव । अथ मिथ्याभूतनिखिलप्रपञ्चपरिकल्पनामूलभूता सेयमविद्या मिथ्याभूतस्वस्वरूपसिद्धौ कल्पकदोषान्तरं नापेक्षते, दोषस्यास्य स्वपरनिर्वाहकत्वस्वीकारादतो नानवस्थेति चेत् । अधिष्ठानस्य मिथ्यात्वेऽपि तस्य स्वपरनिर्वाहकत्वाश्रयणेनानवस्थापरिहारसम्भवेन माध्यमिकपक्षे न किञ्चिद्वैगुण्यम् । ननु—अधिष्ठानं चेत्स्वपरनिर्वाहकं, यन्निखिलाध्यासाधिष्ठानभूतं तत्स्वस्मिन्नेव स्वयमध्यस्तमित्युक्तं भवति । तथा चाधिष्ठानाध्यस्तयोरैक्यं स्यात् । तत्तु विरुद्धम् । अधिष्ठानारोप्ययोर्भेदो हि लोके दृष्ट इति चेत् । दोषारोप्ययोरपि भेदो लोके दृष्ट इति दोषस्य स्वपरनिर्वाहकत्वाभ्युपगमे दोषारोप्ययोरभेदप्रसङ्ग इति तुल्यं तवापीदं प्रसञ्जनम् । ननु—दुर्घटैकवेषायामविद्यायां नानवस्थादोषः । विना कल्पकं दोषान्तरं कथमपरमार्थभूताविद्यास्वरूपनिष्पत्तिरिति तु नाशङ्क्यम्, उपपत्तिपर्यालोचनं हि परमार्थे वस्तुनि, अपरमार्थेऽनुपपन्नैकवेषे नोपपत्त्यपेक्षा, नहि ग्रासादनिगरणादिष्वल्पासत्वचिन्ता, उपपत्तिराहित्यमेव तु तस्य शोभत इति चेत् । तथा सति किमित्यविद्यामवलम्बसे ? । जगदध्यासस्य कल्पकं विनाऽनुपपत्तेस्तदाश्रयणमिति चेत्, *विना कल्पकमपरमार्थभूतं जगद्भासत इत्येव किं नोच्येत । अपरमार्थे हि नोपपत्त्यपेक्षा* । ननु—वयं न सर्वथोपपत्तिनिरपेक्षत्वमपरमार्थे कथयामः, किन्तु परमार्थत्वप्रयुक्तोपपत्तिनैरपेक्ष्यमेव, अपरमार्थत्वप्रयुक्तोपपत्तयस्त्वपेक्ष्यन्त एव, तदपरमार्थस्य

---

अध्यासमात्रस्य दोषसापेक्षत्वे सति क्वचिन्मिथ्याभूते तदनपेक्षा अन्यत्र त्वपेक्षेत्यस्यासङ्गतत्वादिति भावः । ननु सादेर्मूलापेक्षा न त्वनादेस्तदनादित्वेनाविद्याया मिथ्यात्वेऽपि न निमित्तापेक्षेति नानवस्थेत्याशङ्कते—यदि मिथ्याभूताया अपीति । परिहरति—हन्त तर्हीति । का हानिरिति । कां हानिमभिप्रेत्य भवता सर्वकल्पनास्पदभूतमधिष्ठानमेकं परमार्थमिष्यते माध्यमिकादधिकमिति भावः । हान्यभावमेवोपपादयति—न चेत्यादिना । अनादित्वाश्रयणेनानवस्थापरिहारं परैरुक्तमभ्युपगम्योक्तम्, अथ वस्तुतोऽनवस्थापरिहारो नैव घटतेत्याह—अपि चेत्यादिना । अनवस्थापरिहारं प्रकारान्तरेणाशङ्क्य परिहरति—अथेत्यादिना । स्वपरनिर्वाहकत्वेति । स्वेतरसमस्तकल्पनानिर्वाहकत्वं स्वकल्पनायामितरानपेक्षनिर्वाहकत्वं चेत्यर्थः । पुनः प्रकारान्तरेणानवस्थापरिहारमाशङ्क्य परिहरति—नन्वित्यादिना । दुर्घटैकवेषायामिति हेतुगर्भं विशेषणम् । यतो दुर्घटत्वमेवापरमार्थभूताया अविद्यायाः स्वरूपं तदुपपत्त्यनुपपत्तिविचारस्यैवानवकाशेन नानवस्थादोष इत्यभिप्रायः । एतदेव विशदयति—विनेत्यादिना । ग्रासादनिगरणादिष्विति । स्वाप्नेष्विति शेषः ।

मङ्गलमङ्गलानां कर्त्तुः स लोकं तनुषे स्वः परं वा। अमङ्गलानां च तमिस्रमुल्ब-

जगतोऽपरमार्थत्वप्रयुक्ता दोषसापेक्षत्वाद्युपपत्तयोऽपेक्ष्यन्त एवेति चेत्। अपरमार्थस्य दोषस्याप्यपरमार्थत्वप्रयुक्तदोषान्तरसापेक्षताऽस्त्येवेत्यनवस्था तदवस्थैव। अथाविद्यया जीवो जीवादविद्येति बीजाङ्कुरन्यायाश्रयणान्नानवस्थेति चेत्। तथासति जीवनित्यत्वप्रतिपादकश्रुतयः कुप्येयुः। व्यलीकयति यो विश्वमविद्यामचलम्ब्य याम्। तां व्यलीकयतस्तस्य न्याय्यं सौगतसौहृदम्॥ द्वेषो माध्यमिके कुतः। अनिर्वचनीयत्वं चास्याः प्राक् निरस्तम्।

अथास्यां प्रमाणं किं प्रदर्शयति पश्यामः। यत्तु—"नासदासीत् नो सदासीत् तदानीं तम आसीत्" "अनृतेन हि प्रत्यूढाः" "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुतयस्तत्र प्रमाणमिति। तत्तु निरस्तं प्रकृतिस्वरूपनिरूपणावसरे। यच्चास्य निहतनिगमबलस्य प्रमाणान्तरावलम्बनेन प्रत्युत्थानमत्र, तदिदं निहतजङ्घावलस्य जीर्णयष्ट्यवलम्बेन प्रत्युत्थानमिवाकिञ्चित्करमुपहास्यं च। निरूपयामश्च जीर्णतामवलम्बस्य। स हीदमत्र मन्यते—अहमज्ञो मामन्यं च न जानामीत्यादिप्रत्यक्षमविद्यायां प्रमाणम्। न चेदं ज्ञानसामान्याभावविषयम्, अज्ञत्वस्यानुभूयमानत्वात्। असति ज्ञाने कथं तस्यानुभवः। सति च तस्मिंस्तत्सामान्याभावसाक्षात्कारः कथं घटेत। अस्ति च तदानीं प्रतियोग्यनुयोगिनोर्ग्रहणम्, न हि प्रतियोग्यनुयोगिग्रहं विनाऽभावग्रहो भवेत्। ज्ञानं चात्र प्रतियोगिभूतमर्थावलम्ब्यपि, विनाऽर्थं ज्ञानस्वरूपं हि दुर्निरूपम्। तथा चार्थज्ञाने तद्विषयप्रतियोगिज्ञानेऽनुयोगिज्ञाने च सति ज्ञानसामान्यभावः कथं प्रतीयेत। न चात्र ज्ञानविशेषाभावस्य विषयत्वम्, अहमज्ञ इत्येवोल्लेखात्। नहि भूतले घटविशेषाभावाभिप्रायेण भूतले घटो नेत्युल्लेखः। तस्माद्भावरूपाज्ञानस्यैव विषयता वाच्या। इत्थं च न विरोधः। अभावस्य हि प्रतियोगिसापेक्षता, भावो हि स्वरूपेण निरूपयितुं

अथानवस्थां प्रकारान्तरेण परिहरन्नाशङ्कते—अथेत्यादिना। अविद्याया मिथ्यात्वे प्रपञ्चितामनुपपत्तिं कारिकया सङ्गृह्योपसंहरति—व्यलीकयतीति। न्याय्यं सौगतसौहृदमिति। दोषस्येवाधिष्ठानस्यापि परमार्थस्यानपेक्षणादिति भावः।

अथाविद्यायां प्रमाणानुपपत्तिमाह—अथेत्यादिना। अस्यां—पराभिमतायामविद्यायाम्। पश्यामः—विचारयामः। प्रकृतिस्वरूपनिरूपणावसर इति। त्रिगुणात्मेति श्लोकव्याख्याने, मायाशब्दार्थनिरूपणप्रकरण इति यावत्। अहमज्ञ इति। अविद्या नाम भावरूपं किमप्यज्ञानं, तस्यैवोल्लेखोऽयमज्ञोऽहमितीति भावः। असति ज्ञाने—असति ज्ञानमात्रे। कथं तस्यानुभव इति। तस्य—अज्ञत्वस्य। सति च तस्मिन्निति। तस्मिन्—अनुभवविशेषे। अस्ति चेति। चः समुच्चये। यथाऽयमेवाज्ञत्वानुभवो वर्तमानो ज्ञानसामान्याभावावलम्बित्वे विरोधी तथा ज्ञानाभावश्चेद्विषयः, अभावप्रतियोगितया ज्ञानस्यानुयोगितयाऽहमर्थस्य च ग्रहणद्वयमनुवर्त्तमानं विरोधि भवतीत्यर्थः। तद्विषयप्रतियोगिज्ञाने—सः अर्थो विषयो यस्य, तथाविधो यः प्रतियोगी तस्य ज्ञान इत्यर्थः। अहमज्ञ इत्युल्लेखस्य ज्ञानविशेषाभावविषयत्वं कुतो न घटेतेत्यत्राह—नहीति। नञः स्वसमभिव्याहृतपदार्थतावच्छेदकावच्छिन्नप्रतियोगिताकाभावबोधन एव व्युत्पत्तेरिति भावः। इत्थं च न विरोध इति। भावरूपाज्ञानविषयत्वे चैतत्प्रतीत्युदये न विरोध इत्यर्थः। अविरोधमेवोपपादयति—अभावस्य हीति। ज्ञानाभावश्चेद्विषयस्तदा प्रतियोगिज्ञानसापेक्षतया सति

ण"मित्यादिस्मृतेश्च । असावीशः परमात्मा ज्ञेयः । ईष्टे—स्वतन्त्रत्वात्सकलैश्वर्यसम्प-

शक्यते । दृष्टश्च स्वरूपेणैवोल्लेखो मूढोऽस्मि मुग्धोऽस्मीति । इत्थं चाज्ञ इति नञ्समभिव्याहारेणैवोल्लेखात्स्वरूपेण भानमज्ञानस्य न घटेतेति शङ्काया नावकाशः । ज्ञानमिवाज्ञानमपि भावरूपं सविषयम् । एतेनाहमज्ञो मामन्यं च न जानामीति प्रत्ययस्य भावरूपाज्ञानविषयत्वे मामन्यं चेति कथं विषयोल्लेखः, ज्ञानस्य हि सविषयत्वमिति शङ्का परास्ता । ज्ञानाभावग्रहस्येव भावरूपाज्ञानग्रहस्य साक्षाज्ज्ञानग्रहविरोधित्वाभ्युपगमादज्ञानस्य स्वरूपतो भानेऽपि ज्ञानग्रहविरोधित्वं सङ्गच्छते । ननु—अज्ञानस्य स्वरूपतो ग्रहः कथं ज्ञानग्रहं प्रतिरुन्ध्यात्, नहि करत्वेन करग्रहः स्थाणुत्वग्रहं प्रतिरुणद्धि, किन्तु स्थाणुत्वविरोधित्वेन तस्य ग्रह एव तथा । सत्यम् । वस्तुतो विरोधिनो विरोधित्वेन ग्रहो न सर्वत्रापेक्ष्यते, तथासति स्थाणुत्वाभावत्वेन स्थाणुत्वाभावग्रहस्य स्थाणुत्वग्रहप्रतिबन्धकता न सिध्येत् । ननु—तदभावव्यतिरिक्तस्यायं नियम इति चेत् । किं तत्र प्रमाणम् । अनुभवानुरोधादिति चेदिहापि तथैवेति गृह्यताम् । प्रमाणभूतज्ञानस्यैवाज्ञाननिवर्तकतया अहमज्ञ इति साक्षिप्रकाशे सत्यपि भवेदेवाज्ञानग्रहः । एतेन सति साक्षिप्रकाशमात्रेऽज्ञानप्रकाशः कथमिति परास्तम् । नहि प्रकाशमात्रं साक्षिणोऽज्ञाननिवर्तकम्, इदमंशप्रकाशस्य भ्रमप्रमासाधारण्यमिव तस्य हि ज्ञानाज्ञानोभयसाधारण्यं दृष्टम् । प्रकाशते ह्ययं जानामीति ज्ञानसाक्षितया अहं न जानामीत्यज्ञानसाक्षितया च, तथा चेदं रजतमिति भ्रान्तेरिदं प्रकाश इवायमपि साक्षिप्रकाशो नाज्ञानस्य निवर्तकः । अज्ञानविषयविषयकापरोक्षवृत्त्यभिव्यक्तान्तःकरणवृत्त्यवच्छिन्नचैतन्यप्रकाशे सति स्यादज्ञानोपरोधः । तथाच सिद्धं प्रमाणभूतज्ञानोदयेनैवाज्ञाननिवृत्तिरिति । नच साक्षिणोऽज्ञानभासकतया माऽस्तु

ज्ञाने तत्सामान्याभावग्रहः कथं स्यादिति शङ्कावकाशः, भावरूपं चेदज्ञानं ज्ञानसुखादिवत्स्वरूपेणैवाहमर्थे धर्मिणि गृह्यतैवेति न काप्यनुपपत्तिरिति भावः । नन्वज्ञानं प्रतियोगिनमपुरस्कृत्य न काप्युल्लिख्यत इत्याशङ्कायामाह—दृष्टश्च स्वरूपेणैवोल्लेखो मूढोऽस्मि मुग्धोऽस्मीति । स्वरूपेणैवोल्लेखः—अज्ञानस्येति शेषः । एतेन—सविषयत्वेन । ननु तद्वत्ताज्ञानं प्रति तदभाववत्तानिश्चयस्यैव विरोधित्वेन भावरूपाज्ञानस्य विषयत्वे चास्य तदभावानवगाहितया जानामीतिग्रहे विरोधिता न स्यादिति शङ्कायामाह—ज्ञानाभावग्रहस्येवेति । साक्षादिति । तदभावोन्नायकतां विनैवेत्यर्थः । सत्यमिति । अर्धाङ्गीकारे । करे चेत्कदापि स्थाणुतो विरोध एव नावधृतस्तदा करत्वेन करग्रहः स्थाणुग्रहं न निरुणद्धि, विरोधश्चेदवगतपूर्वस्तदा तु रुणद्ध्येव, विरोधिनां विरोधित्वेनापि तदानीमपि ग्रहो नैवापेक्ष्यते, ज्ञानाज्ञानयोस्तु विरोधोऽवगत एवेति सुतरामज्ञानस्य स्वरूपतो ग्रहो ज्ञानग्रहं प्रतिरुणद्ध्येवेति भावः । नन्वज्ञानधर्मितया योऽहमिति प्रकाशः सोऽपि भवन्मते ज्ञानस्वरूपस्यैवेति सति ज्ञानावभासेऽज्ञानावभासः कथमिति शङ्कां वारयन्नाह—प्रमाणभूतेति । अयं भावः—सत्यं विज्ञानात्माद्वितीयत्ववादिनामस्माकं सिद्धान्ते विज्ञानस्यैवावभासः सर्वोऽपि, इयांस्तु भेदः, यदा पुनर्विज्ञानमन्तःकरणवृत्त्यवच्छिन्नं तदैव प्रमाणज्ञानमिति निगद्यते, तेनैव चाज्ञानोपमर्दः, भवति च तदाकारो जानाम्यहमिदमिति । तत्रेदमिति विषयचैतन्यावभासः, अहमिति च साक्षिणः, साक्षी चान्तःकरणोपहितचैतन्यम्, जडस्यान्तःकरणस्यावभासकत्वायोगात्तदुपहितचैतन्यस्यैवावभास-

न्नो भवतीति ईशः, जगत्पतिरित्यर्थः । "पतिं विश्वस्यात्मेऽश्वरम्" "सर्वस्य वशी

तन्निवर्तकता, अथापि शुद्धचैतन्यस्य स्वरूपमात्रप्रकाशरूपत्वेनाज्ञानविरोधित्वान्न कदाप्यज्ञानं ब्रह्मणो घटेतेति वाच्यम् । साक्षित्वावस्थायामविरोधात् । स्वरूपमात्रप्रकाशदशायां चाज्ञानप्रसङ्गाभावेन निवर्तनीयकथाया एवाभावात् । सा हि मुक्तिदशा । अनुमानमप्यत्र प्रमाणम्– विप्रतिपन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं, अप्रकाशितार्थप्रकाशकत्वादिति । अन्धकारे प्रथमोत्पन्नप्रदीपप्रभाया दृष्टान्तत्वं बोध्यम् । आलोकमध्यारोपितदीपप्रभाया द्वितीयादिप्रभाया मणिप्रभायाश्च दृष्टान्तत्वासम्भवादन्धकारारोपितदीपप्राथमिकप्रभापर्यन्तानुसरणमिति ।

**तदिदमसारम्** । यदभिमन्यते भवता भावरूपाज्ञाने प्रमाणतया, तत्प्रत्यक्षं किं विषयानवच्छिन्नमज्ञानं विषयीकरोति ? उत तदवच्छिन्नम् ? । अनवच्छिन्नं विषयीकरोतीति न घटेत, ज्ञानमिवाज्ञानमपि हि विषयैकनिरूप्यम्, ज्ञानस्येवाज्ञानस्यापि सविषयत्वस्य भवतैवाङ्गीकृतत्वात् । यदि विषयावच्छिन्नं विषयीकरोति, तर्हि किं सर्वैर्विषयैरवच्छिन्नं ? उत येन केनचिद्विषयेणावच्छिन्नम् ? । नाद्यः । तथाविधाज्ञानानुभवस्यासम्भवात् । अहमज्ञ इत्यज्ञानानुभवसमये ह्यज्ञानं धर्मी च गृह्यते; शरीरं सुखदुःखादि च गृह्यत एव तदापि; तत्कथं सर्वविषयमज्ञानं तदा घटेत । द्वितीये किं ब्रह्मावच्छिन्नमज्ञानं प्रतीयते ? ब्रह्मव्यतिरिक्तावच्छिन्नम् ? । नाद्यः । श्रवणादिजन्यब्रह्मज्ञानाभावविषयत्वेनैव तत्प्रतीतिनिर्वाहान्न भवदभि-

कत्वयोगेन विषयावभासमात्रे साक्षी निगद्यते, तथा चाहमिति साक्षिणोऽवभासः साधारणः सर्वत्रेति नानेनोपमर्दोऽज्ञानस्य स्यादिति । भावरूपाज्ञाने प्रत्यक्षप्रमाणमेवं निरूप्याथानुमानं निरूपयति—**अनुमानमपीति** । अयमाशयः—प्रमाणज्ञानोदयात्प्राक् भावरूपाज्ञानमस्ति नियमेन तत्तद्वस्तुनि, जाते च प्रमाणज्ञाने नश्यति तत् । यथा प्रभोदयतः प्रागस्ति विषयावरणं तमः, प्रभोदये च सपदि नश्यति तत्, तत् अप्रकाशितार्थप्रकाशकस्यायमेव स्वभावः; यत्स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं भवतीति । **विप्रतिपन्नं प्रमाणज्ञानमिति** पक्षनिर्देशः । यद्यपि सिषाधयिषितवस्त्वन्तरपूर्वकत्वस्य विप्रतिपत्तिः, प्रमाणज्ञानादन्यस्मिन्नास्त्येवेति विप्रतिपन्नमित्यनेन प्रमाणज्ञानादन्यस्य व्यावृत्तेः प्रमाणज्ञानमित्यस्य व्यावृत्तेः प्रमाणज्ञानमिति व्यर्थम् । अथापि विप्रतिपन्नं चेदमिति ज्ञापयितुं विशिष्य प्रमाणज्ञानमिति पक्षनिर्देशः ।

सिद्धान्ती प्रतिक्षिपति—**तदिदमसारमिति** । तदिदम्–भावरूपाज्ञाने प्रमाणोपपादनम् । यत्प्रत्यक्षं प्रमाणमित्युक्तं तद्विकल्प्य दूषयति—**यदभिमन्यत** इत्यादिना । **अज्ञानमपि हि विषयैकनिरूप्यमिति** । न गवादिवन्मूर्तं; येन त्रिकोणसास्नादिना निरूप्येत, किन्तु ज्ञानस्येवाज्ञानस्यापि विषयाकाराद्नान्य आकार इति विना तदवच्छेदं स्वरूपमेव तस्य न सिद्ध्येदिति भावः । **तथाविधाज्ञानानुभवस्येति** । सकलविषयावच्छिन्नाज्ञानानुभवस्येत्यर्थः । **अज्ञानं धर्मी च गृह्यत इति** । अज्ञानसाक्षितयाऽदमर्थस्य प्रकाशादनुभूयमानतया चाज्ञानस्यास्त्येव द्वयोर्ज्ञानमिति सकलविषयावच्छिन्नमज्ञानमनुभूयत इति व्याहतमिति भावः । **सुखदुःखादि चेति** । तदानीं सतस्तस्य प्रकाशनियमादित्यर्थः । **तत्प्रतीतिनिर्वाहादिति** । ज्ञानाभावावगाहित्वे किं ज्ञानसामान्याभावावगाहि-

सर्वस्येशानः" "तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम्। पतिं

मतसिद्धिः। द्वितीये ब्रह्मव्यतिरिक्तस्य ब्रह्मव्यतिरिक्तत्वेन तु तद्विषयत्वं न स्यात्, शरीरादेस्तदानीं गृह्यमाणत्वात्। घटत्वपटत्वादिना चेन्न भवदभिमतसिद्धिः। ननु–विषयविशेषोल्लेखं विना सामान्यतो जायमानस्याहमज्ञ इति प्रत्यक्षस्य विषयविशेषसंवलितज्ञानाभावपरतया निर्वहणं कथमिव सङ्गच्छेत। हन्त! भोः! भावरूपाज्ञाने प्रत्यक्षमिदं शरणमुपगच्छता भवतैव वक्तव्यम्। प्रतिहता हि भवतो गतिः प्रदर्शितविकल्पे, तस्मादज्ञानानुभवश्चेद्विषयविशेषावच्छेदेनैवेति स्वीकार्यम्। विनाऽवच्छेदविशेषं सर्वं वाऽवच्छेदकीकृत्य तथा प्रतीतेस्त्वप्रामाणिकत्वमेव स्वीकार्यम्। विषयविशेषावच्छेदेनाज्ञानानुभवस्य च विषयविशेषावच्छिन्नज्ञानाभावावगाहितयैवोपपत्तेर्न भवदभिमतभावरूपाज्ञानसिद्धिः। ननु–विषयविशेषावच्छेदेनाज्ञानानुभवस्य विषयविशेषावच्छिन्नज्ञानाभावावगाहितयैवोपपत्तिरित्येतन्न घटते, अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षतया प्रतियोगिनि विषयविशेषावच्छिन्ने ज्ञानेऽसति प्रतियोगिज्ञानस्यासम्भवात्, सति च तस्मिंस्तदभावस्यासम्भवात्। तस्मादहमज्ञ इत्येतद्विषयविशेषावच्छिन्नभावरूपाज्ञानपरमास्थेयम्। तथाच ब्रह्मविषयकं भावरूपाज्ञानं सिद्धम्। अविजानतश्चोद्यमेतत्। किंतु भोः! निषेधेऽपेक्षितया प्रतियोगिप्रसिद्ध्या साक्षात्काररूपया भाव्यम्?, यतः प्रत्यक्षे विषयसत्ताया अपेक्षितत्वेन निषेधसमकालिकत्वं प्रतियोगिसत्तायामापतेत्।

त्वमुत यत्किञ्चिज्ज्ञानाभावावगाहित्वमित्यादिविकल्पेन समुद्भावितानां दोषाणामनवसरादिति भावः। **ब्रह्मव्यतिरिक्तत्वेन तु तद्विषयत्वं न स्यादिति**। ब्रह्मव्यतिरिक्तसामान्यावच्छिन्नमज्ञानमहमज्ञ इत्यत्र प्रतीयत इति व्याहतमिति भावः। **शरीरादेरिति**। आदिना सुखदुःखादेरहमर्थस्याज्ञानस्य च परिग्रहः। **न भवदभिमतसिद्धिरिति**। सिषाधयिषितस्य सर्वाध्यासमूलभूतस्याविद्यालक्षणस्य भावरूपाज्ञानस्यासिद्धिरित्यर्थः। **विषयविशेषसंवलितज्ञानाभावपरतयेति**। विषयविशेषः–ब्रह्मस्वरूपलक्षणः। समानेयं चोदनेति नैकश्चोदितुमर्हतीत्याह–**हन्तेति**। **प्रतिहता हीति**। ज्ञानस्येवाज्ञानस्यापि विषयावच्छेदैकनिरूपणीयतया तत्र च किं सकलावच्छिन्नत्वमुत यत्किञ्चिदवच्छिन्नत्वं, यत्किञ्चिदवच्छिन्नत्वे किं ब्रह्मावच्छिन्नत्वमुत ब्रह्मव्यतिरिक्तावच्छिन्नत्वमित्येवंविधविकल्पेषु प्रतिहता हि भवतो गतिरित्यर्थः। शङ्कते–**नन्विति**। विषयविशेषावच्छेदेनाज्ञानानुभवस्य–ब्रह्मविषयकभावरूपाज्ञानपरतयोदाहृतस्याहमज्ञ इत्यनुभवस्य। विषयविशेषावच्छिन्नज्ञानाभावावगाहितया–ब्रह्मविषयकज्ञानाभावावगाहितया। प्रतियोगिनि विषयविशेषावच्छिन्ने ज्ञाने–ब्रह्मज्ञानाभावप्रतियोगिनि ब्रह्मज्ञाने। **प्रतियोगिज्ञानस्यासम्भवादिति**। विषयेऽसति ज्ञानानुदयादिति भावः। सति च तस्मिन्–सति च ब्रह्मज्ञाने। तदभावस्यासम्भवात्–ब्रह्मज्ञानाभावस्यासम्भवात्। **भावरूपाज्ञानपरमास्थेयमिति**। अभावावगाहित्वे हि प्रतियोगिप्रसिद्ध्यपेक्षया प्रदर्शितानुपपत्तिः। भावावगाहित्वे च नोक्तक्षतिरिति भावः। अभावप्रसिद्धौ प्रतियोगिप्रसिद्ध्या तु भाव्यं, तया च कीदृश्या भाव्यमित्यपर्यालोचनकृतमेतदाशङ्कितमित्यभिप्रेत्याह–**अविजानतश्चोद्यमिति**। अज्ञानमूलतामेवोपपादयति–**किंतु भो** इत्यादिना। अयं भावः–अहमज्ञ इत्यस्य ब्रह्मज्ञानाभावावलम्बित्वे कानुपपत्तिः। सत्यमभावप्रत्यक्षे प्रतियोगिनः प्रसिद्धिरपेक्षिता नाम, अपेक्ष्यतां च ततः प्रकृते ब्रह्मज्ञानस्य प्रसिद्धिः

पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥" "ईशानो भूतभव्यस्य न

किंवा यत्र देशे निषिध्यते तद्देश एव प्रतियोगिनः प्रसिद्ध्या भाव्यम् ?, येन सति प्रतियोगिनि निषेधानवकाशः स्यात्। किंतु निषेधे प्रतियोगिनो यथाकथञ्चिद्यत्र क्वचित्प्रसिद्धिमात्रमपेक्ष्यते। तथाच नोक्तशङ्कावकाशः। अन्यदीयस्य विशेषावच्छिन्नज्ञानस्य स्मरणमात्रेण स्वस्मिन्निषेधसम्भवात्। नाममात्रेण घटादिकं जानतः प्रातिस्विकाकारेणाजानानस्य भवेदेव घटमहं न जानामीत्यभावविषयो व्यवहारः। व्यवहारादिनाऽन्यस्य घटादिविवेकमवगच्छतः स्यादेव स्वस्मिंस्तन्निषेधः। प्रातिस्विकाकारेण घटादिज्ञानाभावेऽपि घटशब्दवाच्यत्वेन तदवगमात्। प्रतियोगिकुक्षौ सङ्कुचित एव सामान्यतस्तस्य समावेशः। तद्विवेकस्यापि विवेकत्वेन तथा। तथा चाहमज्ञ इत्यादावप्यनयैव दिशा ब्रह्मविषयकविवेकाभावो विषयीभवितुमर्हति। अन्यथा भवन्तमेव पृच्छामो वक्तव्यं भवता। शास्त्रार्थज्ञानसामग्री मे नास्तीति ज्ञाने किं विषयीभवति ?। शास्त्रार्थज्ञानसामग्र्यभाव इति चेत्। शास्त्रार्थज्ञानसामग्रीज्ञानं विना तन्निषेधो न घटते। असत्यां च सामग्र्यां तज्ज्ञानं कथम्। किञ्चासति शास्त्रार्थज्ञाने इयं शास्त्रार्थज्ञानसामग्रीति ज्ञानं न घटेत। असति शास्त्रार्थज्ञाने विषये तद्विषयं ज्ञानं न घटेत, सति च तस्मिन् सम्पन्नैव सामग्रीति कथमयं निषेध इति चोद्ये किमुत्तरमाकलयसि। शास्त्रार्थाज्ञानसामग्रीविषयेति तु न वक्तुं योग्यम्। शास्त्रार्थज्ञाने हि सामग्रीप्रस्तावः, तदज्ञाने सामग्रीकथा का। शास्त्रार्थज्ञानसामग्री न ममेति व्यवहारस्वारस्यभङ्गश्च। किञ्च–शास्त्रार्थजिज्ञासया समुपगतं शिष्यमनधिकारिणं मत्वा यत्प्रतिवक्ति गुरुः–नोपदेक्ष्यस्ते शास्त्रार्थ इति, इह हि समुदेतीयमाशङ्का, शास्त्रार्थत्वेन शास्त्रार्थ उपदिश्यत एव, तत्कथमुपदेशस्य निषेध्यत्वं घटेतेति सेयमाशङ्का भावरूपानुपदेशस्वीकारेण परिह्रियतां भवता। यद्यन्यथैव परिह्रियते तर्हि तामेव रीतिमनुसरान्यत्रापि। तत्कोऽयं पक्षपातो भावरूपाज्ञाने। किञ्चाहमज्ञ इत्यत्राज्ञानावच्छेदक-

न तु ब्रह्मज्ञानस्य वस्तुसत्ताऽपि; असन्निहितस्यापि हि भवति स्मृत्यादि। घटो घट इति लोकप्रवादतो नाममात्रतो जानन्नपि नेह घट इत्यनुभवति नाम। तथैव यथाकथञ्चिद्यत्र कुत्रचिदवगतं ब्रह्मविवेकं स्वस्याविद्यमानमाकलय्याज्ञोऽहमित्यनुभवति। "मन्त्रविदेवास्मि नात्मवि"दिति नञुल्लेखेन प्रवृत्तं श्रौतं वचनमपि स्वरसमिति भावः। एवमुपपत्तिमभिधाय परोद्भावितामनुपपत्तिं प्रतिबन्द्या प्रतिक्षिपति—अन्यथा भवन्तमेव पृच्छाम इति। असत्यां च सामग्र्यामिति। अनुभवितुस्तस्येति शेषः। ननु शास्त्रार्थसामग्रीमन्यस्य वर्तमानां कथञ्चिदसाववगत्य तदभावमात्मनोऽनुभवितुमीष्टे इति चेत्, तुल्यं तथेहापीति भावः। यथाकथञ्चिदवगतस्यापि प्रतियोगिकुक्षौ प्रवेशोऽस्तीत्येतद्दृढयन्नाह—किञ्चेति। किमुत्तरमाकलयसीति। पामरोऽप्ययं परस्य विलक्षणव्यवहारादिना वेत्त्यसौ शास्त्रार्थानिति सामान्यतो वेत्त्येव; ततश्चानुभवति शास्त्रार्थज्ञानसामग्री मे नास्तीति हि वक्तव्यम्, तथा चाहमज्ञ इत्यस्य ब्रह्मज्ञानाभावविषयत्वेपि तुल्यमुत्तरमिति भावः। तदज्ञाने सामग्रीकथा केति। शास्त्रार्थापरिज्ञानं हि सहजमाजनेः पशूनामिव पुरुषस्यापि। परिज्ञान एव तु गुरुपरिचरणादिसामग्र्यपेक्षेति यावत्। स्वारस्यभङ्गश्चेति। नञः प्रतियोगिसमर्पकतया यः सामग्रीपदसमभिव्याहारस्तत्स्वारस्यभङ्ग इति भावः। अनुभवोल्लेखमर्यादामप्यवधूयान्यथैव चेद्भावो नीयेत, अन्यत्राप्यन्यथानयनप्रसङ्ग आपतेदिति व्याकुलो व्यवहारः स्यादित्याह—किञ्चेति। प्रकारान्तरेण

ततो विजुगुप्सते" "ईशानो भूतभव्यस्य स एवाद्य स उ श्वः" "जुष्टं यदा

त्वया साक्षिप्रकाशे सत्यपि न तेनाज्ञानस्य विरोध इति वदता भवता ज्ञानाभावविषयत्वेऽपि तथा किं नेष्येत, अज्ञानावच्छेदकतया तत्प्रकाशस्याज्ञानप्रकाशाविरोधित्ववादवत् प्रतीयमानाभावप्रतियोगिकुक्षौ तत्प्रकाशस्य तादृशाभावप्रतीतावविरोधित्ववादस्यापि सम्भवात् । ननु-नेदं घटते, नहि तद्विषयकज्ञाने सति तदभावविषयकं ज्ञानं स्यात् । सत्यम् । ब्रह्मस्वरूपज्ञाने सति तदज्ञानं वा कथं घटेत; साक्षितया तस्य प्रकाशमानत्वात् । ननु-प्रमाणज्ञानमेव विरोधि; न तु साक्षितया तदवभासमात्रमित्युक्तमेव । सत्यमुक्तम् । असङ्गतं तु तत् । प्रमाणज्ञानस्य वा विरोधित्वं न प्रमाणज्ञानत्वेन; नहि 'इदं शुक्लभास्वर'मिति सहस्रशो जातेनापि प्रमाणज्ञानेन 'इदं रजत'मिति भ्रमो निवर्तते; तस्मात्प्रमाणज्ञानस्यापि निवर्तकत्वं विरोधिविषयकत्वेनैव वक्तव्यं, प्रामाण्यं त्वकिञ्चित्करम् । इत्थं चेह सति साक्षितया वा ब्रह्मस्वरूपावभासे कथं तदज्ञानोदयः । इदं रजतमित्यत्रेदमंशप्रकाशवत्साक्षिणः प्रकाशो न विरोधीति न त्वया वक्तुं शक्यम् , निराकारे ब्रह्मणि तदसम्भवात् । यदि च साक्षिसाधारणाकारगोचरतया नास्य स्वरूपविषयत्वेऽपि तदज्ञानविरोधित्वमित्यभिनिवेशः, तर्ह्यभावविषयत्वपक्षेऽपि प्रतियोगिनो ज्ञानस्य तथात्वेन न ज्ञानाभावविरोधितेत्येव समाधीयतां, किमतिरिक्तभावरूपाज्ञानकल्पनेन ।

ज्ञानविशेषाभावपरतामेवाहमज्ञ इति प्रतीतेर्द्रढयति—ननु नेदं घटत इति । इदमंशस्य शुक्लनीलादिविविधप्रत्ययसाधारणस्येव साक्षिणः सुखदुःखज्ञानाज्ञानादिविविधप्रत्ययसाधारणस्याज्ञानधर्मितया स्फुरणे न कश्चिद्विरोधः; ज्ञानाभावानुभवे प्रतियोगिनि ज्ञाने कस्यचिद्विषयता तु न घटेतेति भावः । तुल्यो विरोध इत्याह—सत्यमिति । ननु साक्षितया प्रकाशो न विरोधायेत्यसकृदुक्तमेवेति कः पर्यनुयोगः प्रतिबन्द्येत्याशङ्कते—नन्विति । प्रमाणज्ञानमेव विरोधि, न तु साक्षितया तदवभासमात्रमिति । अहमित्यवभासो हि न प्रमाणज्ञानम् , केवलमन्तःकरणोपहितचैतन्यावभासो हि सः, अन्तःकरणवृत्त्यवच्छिन्नचैतन्यमेव तु प्रमाणज्ञानं, तदप्रमाणभूतचैतन्यावभासमात्रं नाज्ञानविरोधीति भावः । प्रमाणज्ञानत्वेन—न केवलेन प्रमाणज्ञानत्वेन । ज्ञानस्य विरोधिताप्रयोजकं न प्रमाणज्ञानत्वं किन्तु विरोध्यवगाहित्वमिति भावः । अन्यथा दोषमाह—नहीति । प्रामाण्यं त्वकिञ्चित्करमिति । विरोधिविषयकत्वतदभावाभ्यां विरोधतदभावयोर्नैयत्ये सति भवदभिमतं पारिभाषिकं प्रामाण्यमप्रयोजकमित्यर्थः । ननु सत्यपि साक्ष्यवभासस्य वस्तुतो विरोधिस्वरूपविषयत्वे विरोध्याकारेण न स्फूर्तिरित्येतन्निदर्शनप्रदर्शनपूर्वकमुपपादितमित्याशङ्कां परिहरति—इदं रजतमित्यादिना । निराकारे ब्रह्मणि तदसम्भवादिति । इदं रजतमित्यत्र रजतविरोधिनः शुक्तिस्वरूपस्येदंत्वेनोल्लेखेऽपि शुक्तित्वेनानुल्लेखाद्विरोध्याकारेणानवगमेन भवेदेव रजतावभासः । अयं च दृष्टान्तो नेह भवतो घटते । शुक्तेरिव यदि ब्रह्मणः कश्चिदसाधारणाकारः स्यात्तेनाकारेणानवगमात्र विरोधितेति वक्तुं शक्येत; स्वरूपावभासस्तु साक्ष्यवभासेऽपि समान इति कुतो न विरोध इति भावः । ननु सत्यं निर्विशेषं ज्ञानमात्रमेव, तत्स्वरूपमात्रं तु स्वासाधारणमेव, तथैव चेदवभासः स्यादेव सर्वोपमर्दः । परं सर्वभ्रमाधिष्ठानसाधारणतया योऽहमित्यवभासः स कथं विरोधाय भवेदित्याशङ्कामनुवदन्परिहरति—यदि चेत्यादिना । साक्षिसाधारणाकारगोचरतयेति । साक्षी यः साधारणाकारस्तद्गोचरतयेत्यर्थः ।

पश्यत्यन्यमीशमस्य" "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशम्" "क्षरात्माना-

यच्चानुमानं—विप्रतिपन्नं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तस्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकं, अप्रकाशितार्थप्रकाशकत्वादिति। अत्र पक्षतया निर्दिष्टं प्रमाणज्ञानं किं वृत्त्यवच्छिन्नचैतन्यं? किंवा वृत्तिमात्रम्? किंवा चैतन्यमात्रम्?। नाद्यः। चैतन्यस्य प्रागभावासिद्ध्या बाधात्। वृत्तिविशिष्टस्य तस्य तथात्वे वृत्तेर्जडतयाऽज्ञाननिवर्तकत्वासम्भवेन विशिष्टे तदसम्भवेन बाधश्च। अत एव न द्वितीयतृतीयौ। साध्यकोटौ स्वविषयावरणत्वं हि स्वविषयज्ञानविरोधित्वरूपम्, तत्त्वज्ञाने बाधितमतो बाधः। तत्र तत्स्वीकारे ज्ञानानुत्पत्तिप्रसङ्गः। हेतुशरीरे प्रकाशकत्वं नाम किम्?। यदि ज्ञानकारणत्वं तदा वह्न्याद्यनुमापके परामर्शेऽप्रकाशितार्थविषयकज्ञानसाधनत्वे सत्यपि 'अयं घट' इत्यादिप्रत्यक्षेऽप्रकाशितार्थविषयकज्ञानरूपे न तथाविधज्ञानसाधनत्वमिति भागासिद्धिः, दृष्टान्ते साधनवैकल्यं च। नहि दीपप्रभा ज्ञाने कारणं; ज्ञानकारणेन्द्रियानुग्राहिकैव सा। ज्ञानकारणानुग्राहकत्वस्य तथात्वे तु पक्षे तदसिद्धिः। अनुग्राहकसाधारण्येन ज्ञानप्रयोजकत्वविवक्षया साधनवैकल्यवारणेऽपि भागासिद्धिस्तदवस्थैव; इन्द्रियेष्वनैकान्त्यं च। यदि प्राकट्यहेतुत्वं तत्तदा साधनवैकल्यं; प्राकट्यमभ्युपयद्भिर्ज्ञान एव तद्धेतुत्वाभ्युपगमात्। प्राकट्यानभ्युपगमपक्षे स्वरूपासिद्धिश्च। विषयव्यवहारानुगुण्यकारणत्वं चेत्तत्, ज्ञानस्यैव तथात्वाद्दृष्टान्ते तदसिद्धिः। यदि च साक्षात्परम्परया वा तत्प्रयोजकत्वं

अथानुमानप्रमाणं प्रतिक्षिपति—यच्चानुमानमित्यादिना। चैतन्यस्य प्रागभावासिद्ध्या बाधादिति। साध्यस्वरूपस्य बाधादित्यर्थः। साध्यकोटिप्रविष्टविशेषणाप्रसिद्ध्या साध्याप्रसिद्धिरिति भावः। विशिष्टे तदसम्भवेनेति। विशेषणेऽसम्भवतो विशिष्टे हि सम्भवो न घटत इति भावः। बाधश्चेति। पूर्ववदर्थः। अत एव न द्वितीयतृतीयाविति। अत एव—साध्याप्रसिद्धेरेव। द्वितीये वृत्तेर्जडतया निवर्तकत्वासम्भवेन स्वनिवर्त्यत्वाप्रसिद्ध्या साध्याप्रसिद्धिः, तृतीये प्रागभावासिद्ध्या साध्याप्रसिद्धिरिति बोध्यम्। एवं पक्षकोटौ दूषणमुक्त्वा साध्यकोटौ दूषणमाह—साध्यकोटाविति। नन्वज्ञाने ज्ञानविरोधित्वस्वीकारे का क्षतिरित्यत्राह—तत्र तत्स्वीकारे ज्ञानानुत्पत्तिप्रसङ्ग इति। हेतुशरीरं दूषयति—हेतुशरीरे इति। अप्रकाशितार्थप्रकाशकत्वं नाम यद्यप्रकाशितार्थज्ञानजनकत्वं तदेत्यर्थः। भागासिद्धिः—पक्षैकदेशे प्रत्यक्षे हेत्वसिद्धेरिति भावः। तथात्वे तु—हेतुत्वे तु। पक्षे तदसिद्धिरिति। प्रमाणज्ञानस्य साक्षादेवाप्रकाशितार्थप्रकाशहेतुत्वादिति भावः। अनुग्राहकसाधारण्येनेति। यद्यप्रकाशितार्थज्ञाने साक्षात्साधनं यच्च साधनानुग्राहकं, तदुभयसाधारण्येनेत्यर्थः। भागासिद्धिरिति। पक्षैकदेशे प्रत्यक्षे हेत्वनन्वयेन या भागासिद्धिरुक्ता सा तदवस्थैवेत्यर्थः। स्वविषयावरणस्वनिवर्त्यस्वदेशगतवस्त्वन्तरपूर्वकत्वाभाववति चक्षुरादावनुग्राहकसाधारणस्याप्रकाशितार्थप्रकाशकत्वस्य सत्त्वाद्व्यभिचार इति भावः। यदि प्राकट्यहेतुत्वं तदिति। तत्—प्रकाशकत्वम्। एवं भागासिद्धेर्वारणेऽपि दृष्टान्तासिद्धिरपरिहार्येत्याह—तदा साधनवैकल्यमिति। ज्ञान एव तद्धेतुत्वाभ्युपगमादिति। प्रभायां तदसम्भवादिति भावः। प्राकट्यानभ्युपगमपक्ष इति। मीमांसकैकदेशिना हि प्राकट्यमभ्युपगम्यते नेतरैरिति भावः। प्राकट्यानभ्युपगमपक्षे यो दोषस्तं वारयन्नाशङ्कते—विषयेति। एवं पक्षसाध्यहेतुशरीराणि दूषयित्वा प्रकारान्तरेणानुमानं दूषयति—

वीशते देव एकः" "विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति" इत्या-

तदुच्यते, इन्द्रियेष्वनैकान्त्यम्। अपि चेदनुमानं किमप्रकाशितार्थं प्रकाशयति? उत न?। यदि न, किं प्रकाशितमेव प्रकाशयतीत्यतो नेत्युच्यते? आहोस्वित्किमपि न प्रकाशयतीत्येव?। नाद्यः। अनुमाननैष्फल्यात्। नहि प्रकाशितप्रकाशाय पुनर्मानान्तरापेक्षा। न द्वितीयः। सर्वथाऽप्रकाशकत्वेन प्रामाण्योच्छित्तेः। यदि चाप्रकाशितमर्थं प्रकाशयति, किमत्र साध्यमस्ति? उत न?। यदि न, तर्ह्यनैकान्त्यम्। यद्यस्ति तर्हि भावरूपाज्ञानस्याप्यज्ञानान्तरं भावरूपं सिध्येत्। अनभिमतं चैतत्। यद्यभ्युपगम्यते तर्ह्यज्ञानसाक्षित्वं ब्रह्मणोऽपगच्छेत्, अज्ञानावरणभूतेनाज्ञानस्याप्यज्ञानेन ब्रह्मस्वरूपस्यावृतत्वात्। तथाच भावरूपाज्ञानकल्पना निष्फला स्यात्। न चाज्ञानमज्ञातमपि सत्तयैव कार्यकरम्, काचादिवत्सत्त्वापरया ज्ञाननिवर्त्यत्वानुपपत्तेः। किञ्चाज्ञानस्याप्यज्ञानान्तरसिद्धौ तस्य प्रकाशे ततः पूर्वं तस्याप्यज्ञानान्तरमित्यनवस्थेति दिक्। प्रमाणपथमुल्लङ्घ्य भ्राम्यतामपथे क्वचित्। विमतायामविद्यायामविद्या केवलं गतिः॥

किञ्चाविद्यया चेद्भ्रमः; कस्याविद्यासम्बन्धः। जीवस्येति चेत्। जीवभावस्याविद्यापरिकल्पितत्वेन जीवभावसम्पादकाविद्यासम्बन्धस्ततः प्रागेवापेक्ष्यते। ब्रह्मण्येव तत्सम्बन्ध इति चेत्। तत्स्वरूपस्य स्वप्रकाशज्ञानरूपत्वेनाविद्याविरोधित्वान्न तत्र तद्योगो घटते। सा हि ज्ञानबाध्या भवदभिमता। ननु–सत्यं ज्ञानबाध्याऽभिमता, तथापि न ब्रह्मस्वरूपभूतज्ञानबाध्येति चेत्को विशेषो निवर्त्तकज्ञाने। नहि निर्विशेषे स्वयंप्रकाशे ज्ञानस्वरूपे ब्रह्मणि ज्ञानान्तरगम्यो ज्ञातव्यविशेषोऽवशिष्यते, येन निवर्तकज्ञानान्तरापेक्षा स्यात्। स्वरूपज्ञानस्या-

अपि चेदमनुमानमिति। इदमनुमानम्–अर्थविशेषसिसाधयिषया प्रयुक्तमिदमनुमानम्। नाद्य इति। प्रकाशितमेव प्रकाशयतीत्यतो नाप्रकाशितार्थप्रकाशकतेति पक्षो न घटत इत्यर्थः। द्वितीयः–किमपि न प्रकाशयतीति पक्षः। प्रामाण्योच्छित्तेरिति। व्यर्थः प्रयोगः स्यादिति भावः। अप्रकाशितमर्थं प्रकाशयति–परान्प्रत्यसिद्धं भावरूपमज्ञानं प्रकाशयति। भावरूपं सिद्ध्येदिति। अप्रकाशितं भावरूपाज्ञानं प्रकाशयतोऽस्यानुमानप्रमाणस्य स्वविषयभूतभावरूपाज्ञानावरणभूताज्ञानपूर्वकत्वावश्यंभावे भावरूपाज्ञानस्यापि भावरूपाज्ञानान्तरं सिद्ध्येदित्यर्थः। अज्ञानान्तरसिद्धौ का क्षतिरित्यत्राह—अनभिमतं चैतदिति। अभिमतत्वेऽनिष्टमाह—यद्यभ्युपगम्यत इति। तस्य प्रकाशे–अज्ञानान्तरस्य प्रकाशे। ततः पूर्वं तस्यापि–अज्ञानान्तरतः पूर्वमज्ञानान्तरस्यापि। भावरूपाज्ञाने प्रमाणानुपपत्तिं कारिकयोपसंहरति—विमतायामविद्यायामिति। विमतामविद्यामधिकृत्येति यावत्। प्रमाणपथमुल्लङ्घ्येति पूर्वेण सम्बध्यते।

अथाश्रयानुपपत्तिमाह—किञ्चेत्यादिना। ततः प्रागेवेति। जीवभावतः प्रागेव। तत्स्वरूपस्य–ब्रह्मस्वरूपस्य। अविद्याविरोधित्वादिति। ज्ञानस्वरूपस्याज्ञाने सत्तयैव विरोधित्वादिति भावः। नन्वविद्यायां निवर्तकेनान्येन भाव्यमित्यत्राह—सा हि ज्ञानबाध्या भवदभिमतेति। को विशेषो निवर्तकज्ञान इति। अयं भावः—घटादयो हि जडाः सत्तयाऽप्रकाशस्वरूपाः स्वयमज्ञानाविरोधिनो ज्ञातविशेषाः सन्तोऽज्ञानविरोधिनो भवन्ति, एवं सविशेषाश्च पदार्था अनवधृतकतिपयविशेषाः स्वाज्ञानाविरोधिनः स्वाज्ञानोपमर्दनायालनो विशेषावगममपेक्षन्ते, ब्रह्मस्वरूपं तु स्वयं निर्विशेष-

दिश्रुतेः । "स वै पतिः स्यादकुतोभयः स्वयं समन्ततः पाति भयातुरं जनम् । स

---

विरोधित्वं च स्यात् । अनुभूतिस्वरूपस्य ब्रह्मणोऽनुभूत्यन्तरानुभाव्यत्वे जडत्वापत्तेरननुभाव्यत्वमेव भवदभिमतम् । प्रमाणज्ञानस्यैव विरोधित्वं न स्वरूपस्येति तु निरस्तं प्रागेव । अथ प्रपञ्चमिथ्यात्वज्ञानमेवाविद्याविरोधीति ब्रह्मस्वरूपेऽविद्यासम्बन्धे न कश्चिद्विरोधः । मैवम् । प्रपञ्चमिथ्यात्वज्ञानेन प्रपञ्चसत्यत्वज्ञानं निवर्त्येत न तु ब्रह्मस्वरूपाज्ञानं; विषयभेदात् । तद्विद्याविरोधित्वं ब्रह्मस्वरूपज्ञानस्यैव वक्तव्यम् । तथाचोक्तो विरोधोऽपरिहार्यः । ननु—ब्रह्मस्वरूपाज्ञानं हि सद्वितीयत्वज्ञानमेव, तच्च प्रपञ्चमिथ्यात्वज्ञानान्निवर्तते इति चेत् । ब्रह्मणोऽद्वितीयत्वमपि ब्रह्मस्वरूपभूतं स्वानुभवसिद्धमिति स्वयंप्रकाशे ब्रह्मणि तदज्ञानरूपाविद्यासम्बन्धो दुर्घट एव । न चाद्वितीयत्वमनुभवान्तरयोग्यो धर्मः कश्चन, ब्रह्मणि तदनभ्युपगमात् । अविद्या सेयमिष्टा वः पदं क्वापि न विन्दति । निराश्रया क्व गच्छेत्सा युष्मानेवोपसर्पति ॥

किञ्चास्या अविद्याया निवृत्तिः केन ? । ब्रह्मात्मैकत्वविज्ञानेनेति चेत्, किमिदं सत्यं ? उत मिथ्या ? । सत्यत्वे सद्वितीयत्वम्, मिथ्यात्वे निवर्तकमन्यदपेक्ष्यते तत्तु मृग्यम् । यदि किञ्चित्कल्प्येत तस्यापि मिथ्यात्वेन निवर्तकान्तरापेक्षैवेत्यनवस्था । विना निवर्तकं स्वयमेव नश्यतीति चेत् । तन्नाशस्यापि काल्पनिकत्वेन तत्कल्पकाविद्याऽवतिष्ठत्येव । किञ्चाविद्यानिवर्तकतया भवदभिमतस्य ब्रह्मव्यतिरिक्तकृत्स्ननिषेधविषयकज्ञानस्य ज्ञाता कः ? । ब्रह्मैव चेत् । किमेतज्ज्ञातृत्वं स्वाभाविकमुत कल्पितम् ? । नाद्यः, अपसिद्धान्तात् । न द्वितीयः, एतस्यैतत्कल्पकाविद्यायाश्चावस्थानप्रसङ्गात् । यत्तु ब्रह्मव्यतिरिक्तोऽध्यस्त एवास्य ज्ञाता यच्चेदं निवर्त्तकं ब्रह्मव्यतिरिक्तनिषेधविषयं ज्ञानं यश्चास्य ज्ञाता उभयोरपि ब्रह्मव्यतिरिक्तत्वेन निवर्त्यकोटिप्रवेशान्न निवर्त्तकान्तरापेक्षेति । तदिदं मूर्खजल्पितम् । रसालव्यतिरिक्तं सर्वमेव यज्ञदत्तेन

---

ज्ञानलक्षणं प्रकाशैकरसमज्ञानोपमर्दाय कथं ज्ञानान्तरमात्मनोऽपेक्षेत, यदि कश्चिदनवगतो विशेषो घटादिष्विव ज्ञानान्तरावसेयः स्यात्स्यात्तदा ज्ञानान्तरापेक्षा, न च तथा, निर्विशेषज्ञानलक्षणस्य प्रकाशैकरसस्य ब्रह्मणो यथावस्थितं स्वरूपं तु प्रकाशत एव सर्वदेति । स्वसिद्धान्तभङ्गश्चेत्याह—अनुभूतिस्वरूपस्येति । प्रपञ्चमिथ्यात्वज्ञानमेवेति । ननु निर्विशेषब्रह्मस्वरूपज्ञानमित्यर्थः । तेन न यावत्प्रपञ्चमिथ्यात्वज्ञानं तावद्ब्रह्मण्यविद्यासम्बन्धे न विरोध इति भावः । विषयभेदादिति । प्रपञ्चमिथ्यात्वसत्यत्वयोस्तत्तदभावरूपतया भावाभावयोरेकावलम्बित्वेन भवेद्विरोधः । प्रपञ्चमिथ्यात्वब्रह्मविद्ययोरतथात्वेन कथं विरोधितेति भावः । ब्रह्मस्वरूपाज्ञानं हीति । प्रकाशैकरसस्य ब्रह्मस्वरूपस्याज्ञानं हि न सद्वितीयत्वज्ञानादन्यद्भवितुमर्हतीत्याशयः । ब्रह्मस्वरूपभूतमिति । निर्विशेषत्वादिति भावः । तदज्ञानरूपेति । अद्वितीयत्वाज्ञानरूपा, सद्वितीयज्ञानरूपेति यावत् । उपपादितामाश्रयानुपपत्तिं कारिकया सङ्ग्रहेणोपसंहरति—अविद्या सेयमिति ।

अथ निवर्त्तकानुपपत्तिमाह—किञ्चास्या इति । विना निवर्तकं स्वयमेव नश्यतीति । यथा वैशेषिकाणां नये चरमं ज्ञानं ( सुषुप्त्यव्यवहितपूर्वं ) स्वयमेव नश्यति तथेत्याशयः । तन्नाशस्यापि काल्पनिकत्वेनेति । ब्रह्मव्यतिरिक्तस्य कृत्स्नस्य काल्पनिकत्वादिति भावः । अवस्थानप्रसङ्गादिति निवर्त्तकतयाऽभिमतेन ज्ञानेन सकलभेदनिवर्त्तनेऽपि स्वापेक्षया ज्ञातृत्वस्य तत्कल्पकाविद्यायाश्च निवर्त्तनासम्भवादिति भावः । ननु भवेदेवैतयोरपि निवर्त्तनमित्याशङ्कते—यस्त्विति । परिहरति—तदिद-

एक एवेतरया मियो भयं नैवात्मलाभादधि मन्यते परम्" "स यावदुर्व्या भरमी-

छिन्नमित्यत्र छेत्तुश्छेदनक्रियायाश्च रसालव्यतिरिक्तत्वोपाधिसम्बन्धमात्रेण छेद्यकोटौ क्रोडीकारो ह्युपहास्यः। आविद्यं शास्त्रविज्ञानमविद्याविनिवृत्तये। ब्रुवतो भवतो नूनमविद्यैवावशिष्यते॥ परास्तोऽयमविद्यावादः। तथाच तात्त्विक एव जीवेश्वरभेदो न काल्पनिक इति सिद्धम्।

ननु—भेदस्तात्त्विकश्चेत्त्वदर्शितश्रुतीनां का गतिः? । अखिलमेव व्यलीकयतां युष्माकमेवागतिः। परं ब्रह्म सर्वशरीरं सर्वप्रकारमभ्युपगच्छतां जगदखिलं तद्विभूतिमाचक्षाणानां विनोपमर्दं मिथः श्रुतीस्तात्त्विकेऽर्थे नयतामस्माकं न काचिदप्यगतिः। विश्वं यस्य विशेषणं तनुतया तत्त्वं स्वतन्त्रं तु तद्ब्रह्मैकं न तथाऽन्यदस्ति भुवने तत्स्थं हि जात्यादिवत्। तत्तद्वाचिपदैः श्रुतिर्गदति तत्तत्प्रकारं ततो नानात्वं प्रतिषिध्यते यदपि तद्युक्तं तु धर्म्यैक्यतः॥ अन्तर्यामितया विविच्य वदता ब्रह्म स्वयं ब्राह्मणे वेदेनैव भिदाऽभिदावचनयोर्बाधं विना नीतयोः। एकं बाधितमन्यतः कलयताऽपच्छेदनीत्याऽऽश्रितो मिथ्यावादमहान्धकूपपतने पन्थाः कुदृष्टिप्रियः॥ अयं भावः—"नेह नानास्ति किञ्चने"तिश्रुत्या न तावद्भेदसामान्यं निषिध्यते, किन्तु विशेष्यनानात्वम्। इह जगति सर्वमेव चिदचिज्जातं परस्य ब्रह्मणः शरीरतया विशेषणम्। शरीरता च "यस्य पृथिवी शरीर"मित्यादिनाऽन्तर्यामिब्राह्मणे श्रूयते। शरीरस्य तु प्रकारतैकस्वभावस्य न कदापि स्वतन्त्रसत्ता। तथा च स्वेतरसमस्तचिदचित्प्रकारं ब्रह्मैकमेव प्रधानतत्त्वमिति प्रधानतत्त्वान्तराभावान्नानात्वनिषेधः सूपपन्नः। सत्यपि प्रकारप्रकारिभेदे

मिति। रसालमित्यादि। तत्र हि रसालश्छेत्ता छेदनं चावशिष्यत एव, तथैव ब्रह्मव्यतिरिक्तं कृत्स्नं मिथ्येति विज्ञानेन चेन्निवर्तेत कृत्स्नं, ब्रह्म, निवर्तकं चेदं ज्ञानं, निवर्तनक्रिया, चावशिष्येतैवेति भावः। उक्तां निवर्तकानुपपत्तिं कारिकया सङ्ग्रहोपसंहरति—आविद्यमिति।

सिद्धान्ते सर्वश्रुतीनामविरोधेन सङ्गमनप्रकारं सङ्गृह्य श्लोकरूपेण निबध्नाति सुखप्रतिपत्तये—विश्वमिति। विश्वं—चिदचिल्लक्षणम्। न दण्डकुण्डलादिवदित्याह—तनुतयेति। जात्यादेरिव पृथक्स्थित्यनर्हता सूचिता। तेन प्रकारैकस्वरूपत्वं चिदचितोरुक्तं भवति। स्वतन्त्रं—अगुणीभूतम्। द्वितीयनिषेधश्रुतीनां प्रवृत्तौ निमित्तं सूच्यते—न तथाऽन्यदस्ति भुवन इति। तत्र हेतुमाह—तत्स्थं हि जात्यादिवदिति—अन्यदित्यनुषज्यते। तत्तद्वाचिपदैः—तनुतया प्रकारभूतानां तत्तदर्थानां वाचकतया प्रसिद्धानि यानि महीमहीधरगवाश्वादिपदानि, तैः। तत्तत्प्रकारं—मह्यादिप्रकारम्। तत्—ब्रह्म। धर्म्यैक्यतः—धर्मिणः—तत्तत्प्रकारकस्य, ऐक्यतः—अद्वितीयत्वतः। भेदाभेदश्रुतीनां सङ्गमनप्रकारोऽयं केवलं भवतैवोत्प्रेक्षितः, अस्मदाश्रित एव समुचित इत्याशङ्कामपनयन्नाह—अन्तर्यामितयेति। अस्मदिष्टो निर्वहणप्रकारोऽन्तर्यामिब्राह्मणमूलकः, भवदिष्टस्तु प्रकारः स्वोत्प्रेक्षितयुक्तिमूल इत्याशयः। ब्राह्मणे—ब्राह्मणभागे। अन्तर्यामितया ब्रह्म विविच्य स्वयं वदता वेदेनैवेत्यन्वयः। विविच्य—"यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयती"ति शरीरशरीरिलक्षणोपन्यासपूर्वकं प्रतिपर्यायं विविच्य। स्वयं—कण्ठरवेण। अपच्छेदनीत्येति। स्वोत्प्रेक्षितयेति भावः। कूपपतनेऽनुगुणं विशेषणं कुदृष्टिप्रिय इति। सङ्गृहीतमर्थं विस्तरश उपपादयति—अयं भाव इति। प्रधानतत्त्वमिति। अगुणीभूततत्त्वम्। केषाञ्चिन्निर्वहणान्तरप्रकारमाह—

श्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद्भुवि" "यो रोचयत्सह मृगैः स्वयमीश्वराणां

---

गुणजात्याद्यनेकप्रकारे सत्येकस्मिन् द्रव्यविशेषे इहैकमेवास्ति न नाना इति व्यवहारवदिहापि प्रकारप्रकारिभेदे सत्यपि विशेष्यभेदाभावेन नानात्वनिषेधोपपत्तेः। यद्वा–नानाशब्दो विनार्थः, "विनञ्भ्यां नानाञौ नसह" इति सूत्रे विनार्थे व्युत्पादनात्। ब्रह्मणः पृथग्भूतं न किञ्चिदिति भावः। सर्वस्य ब्रह्मणोऽपृथक्सिद्धविशेषणत्वात्। "मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यती"त्यादीन्यप्यनयैव दिशा नेयानि। "अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमसीति न स वेद" इत्यत्रापि परब्रह्मप्रकारतैकस्वभावे स्वस्मिन् स्वनिष्ठताबुद्धिरनुचितेति सा व्युदस्यते, न भेदसामान्यम्। इहान्यशब्दः स्वतन्त्रभेदपरः। अनयैव दिशा "यत्र हि द्वैतमिव भवती"त्यादावपि बोध्यम्। यत्र–यदा द्वैतं भवति–द्वैतबुद्धिर्भवति–स्वतन्त्रबुद्धिर्भवति, तदा स्वतन्त्रः कश्चित्स्वतन्त्रेण केनचित्स्वतन्त्रं कञ्चित्पश्यतीति व्यवहारो भवेत्। यदा त्वात्मैवाभूत्–परमात्मपरतन्त्रतया तदात्मकतयाऽवगतं, तदा न तथा दृष्टिर्भवेदिति भावः। "सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद" इत्यनयाऽपि परमात्मनः पृथग्भूतं स्वतन्त्रं जानतो हानिरुच्यते नतु भेदनिषेधः। "यदा ह्येवैष उ दरमन्तरं कुरुते" इत्यत्रापि न भेदसामान्यनिषेधः, अन्तरशब्दस्य विच्छेदार्थकत्वात्। पूर्वं हि ब्रह्मणि प्रतिष्ठां गतस्याभयमुक्तम्, तत्प्रतिशिर उच्यते—"उ दरमन्तरं कुरुते अथ तस्य भयं भवती"ति। भयहेतुतयाऽत्र श्रूयमाणमन्तरकरणं प्रतिष्ठाविच्छेद एव, प्रतिष्ठा च दृढसम्बन्धः, उपासकस्य ब्रह्मणा दृढसम्बन्धश्चोपासनदार्ढ्यम्, तद्विच्छेदोऽन्तरशब्दार्थः परिनिष्पन्नः, अन्यथा कुरुत इत्यस्यास्वारस्यम्, नहि भेदः कार्यो नाम, यदि चान्तरशब्दस्य भेदबुद्धिपरता तदा तु लक्षणा,

---

यद्वेति। विनञ्भ्यां नानाञौ नसहेति। "असहार्थे पृथग्भावे वर्तमानाभ्यां स्वार्थे प्रत्ययौ स्तः" इति च वृत्तिः। अनयैव दिशेति। स्वतन्त्रवस्त्वन्तरनिषेधाभिप्रायेण विनार्थाश्रयणेन चेत्यर्थः। स्वनिष्ठताबुद्धिः–स्वतन्त्रताबुद्धिः, अगुणीभूतत्वबुद्धिरिति यावत्। परमात्मनः पृथग्भूतं स्वतन्त्रं जानतो हानिरुच्यत इति। सर्वमिदं यः परमात्मनोऽन्यत्र वेद–यथोपलम्भं तत्तन्निष्ठं स्वनिष्ठं वा वेद न तु परमात्मन्यात्मतया धारकेऽवस्थितं वेद। तं सर्वमिदमुपलभ्यमानं परादात्–सर्वैरेतैरसौ परिभूतो भवति, न कश्चिदर्थः सिद्ध्यति, दुःखैकभाग्भवतीति यावदिति शब्दार्थो बोध्यः। विच्छेदार्थकत्वादिति। व्यवधानाव्यवधानयोरेव सान्तरनिरन्तरशब्दयोर्लोके प्रयोगदर्शनादिति भावः। पूर्वं हीति। "यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवती"त्यस्मिन्ननन्तरपूर्ववाक्ये। ननु पूर्वमभयहेतुतया यत्प्रस्तुतं तत्प्रतिशिर एव चात्र भयहेतुतयोच्यते, स च भेद एवेत्यत्राह—भयहेतुतयेति। अत्र–प्रतिष्ठाया अभयहेतुत्वप्रतिपादकवाक्यसमनन्तरवाक्ये। प्रतिष्ठाविच्छेद एव–अभयहेतुतया प्रस्तुतायाः प्रतिष्ठाया विच्छेद एव। ननु या प्रतिष्ठा पूर्वमभयहेतुतया प्रस्तुता तस्याः प्रतिशिरसैवान्तरशब्दार्थेन भाव्यम्, सा चैक्यमित्यत्राह—प्रतिष्ठा च दृढसम्बन्ध इति। प्रत्युपसर्गः ष्ठाधातुर्हि स्थितिविशेष एव स्वरसः। स च दृढतरसम्बन्ध एव। स हि राज्ये प्रतिष्ठित इति हि स्वरसः प्रयोगः। स च सम्बन्धः प्रकरणानुगुणो ग्राह्यः। प्रकृते चोपासकप्रकरणादुपासनादार्ढ्ये पर्यवस्यतीत्याह—उपासकस्येत्यादि। अन्यथा–भेदार्थत्वे। तदा तु लक्षणेति।

श्रीमत्किरीटतटपीडितपादपीठः" "विविक्त उपसङ्गम्य जगतामीश्वरेश्वरम्" "गृही-

प्रतिष्ठाप्रतिशिरसोऽप्यनुक्तिः, प्रतिष्ठाशब्दस्य नैक्यार्थता, ऐक्यस्य स्वतःसिद्धतया प्रतिष्ठां विन्दतीत्यप्यस्वरसम्, ऐक्यज्ञानपरता च लक्षणयैव वाच्या, प्रतिष्ठाशब्दस्योपासानैरन्तर्यपरता तु नानुचिता, "ब्रह्मसंस्थोऽमृतत्वमेति" "श्रोत्रियं ब्रह्मनिष्ठम्" "तन्निष्ठस्य मोक्षोपदेशात्" इत्यादिनिर्देशात् । "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं न ततो विजुगुप्सते" इति श्रुतिस्तु देवादिविषमाकारेणापाततः प्रतीयमानस्यापि वस्तुतो ज्ञानैकाकारस्य सर्वत्र समतया वर्तमानस्य स्वरूपे नाल्पमप्यन्तरं, तदेवमविषमतया जानन्स्वात्मनि सर्वाण्यात्मस्वरूपाणि सर्वत्रात्मस्वरूपे स्वात्मस्वरूपं च पश्यति, स्थालीपुलाकन्यायेन साम्येन पश्यतीत्येतत् । एवं पश्यतो न कचिदपि जुगुप्सावकाश इत्याह । यद्वा—यस्तु सर्वाणि परमात्मनि प्रतिष्ठितानि तदेकधार्याणि, परमात्मा चान्तरात्मतया सर्वभूतेषु वर्तत इति सर्वं ब्रह्मात्मकं वेत्ति स न तस्मिन् केनापि निमित्तेन गर्हां कुर्यादित्युच्यते, तन्नात्र भेदनिषेधावकाशः । "यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥" इत्यनेनापि ब्रह्मात्मकं सर्वमनुसन्दधानस्य न क्वापि मोहशोकावकाश इत्युच्यते । सर्वस्यैव चिद्वस्तुनोऽचिद्वस्तुनो वा परमात्मनो विलक्षणत्वेऽपि तं प्रत्यपृथक्सिद्धप्रकारतया तत्तद्वाचिशब्दैः सह

अन्तरशब्दस्येति शेषः । अन्वयानुपपत्तौ लक्षणा समाश्रयणीयैवेत्यतो दोषान्तरमाह—प्रतिष्ठाप्रतिशिरस इति । ननु प्रतिष्ठा नामैक्यमेवेत्यन्तरशब्दो भेदपरो न्याय्य इत्यत्राह—प्रतिष्ठाशब्दस्येति । लक्षणाश्रयणे त्वाह—ऐक्यस्येति । लक्षणयैव वाच्येति । तथा च प्रतिष्ठाशब्दस्य गौणता स्यादिति भावः । ननु भवतोऽपि प्रतिष्ठाशब्दस्य गौणता स्यादित्यत्राह—प्रतिष्ठाशब्दस्येति । इत्यादिनिर्देशादिति । अयं भावः—प्रतिष्ठा, निष्ठा, संस्थेत्यादयो हि शब्दाः पर्याया दृढां स्थितिमवगमयन्तीति स मुख्यार्थः । स च दृढतरसम्बन्धविशेष एव । तत्र पुरुषस्य स्वरूपतो ब्रह्मणि स्थितिस्तु "सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा" इति श्रूयमाणा नेह घटते, सर्वदैव सत्सम्भवादविशेषात् । अथ करणकलेवरसङ्गतस्यास्य कायतः स्थितिर्देशविशेषे प्रसिद्धा । तथा मनोद्वारा स्थितिश्च कचिदर्थे, तथा चेह प्रकरणानुगुण्यादुपासकस्य मनोद्वारा ब्रह्मणि स्थितिर्दृढतरा प्रतिष्ठाशब्देनावबोध्यते । अत एव ब्रह्मसंस्थ इत्यादयः प्रयोगा मुख्या इति । लक्षणायामपि समुचितोऽयमेवार्थः, भूरिप्रयोगात् । शक्यसम्बन्धश्चास्माकं सुगमः स्थित्या सम्बन्धात् । ऐक्यं तत्प्रतिपत्तिर्वा न तया सम्बद्धा, इत्यपि बोध्यम् । स्थालीपुलाकन्यायाश्रयणेन निर्वाहेऽतृप्यन् योजनान्तरमाह—यद्वेति । आत्मशब्दः परमात्मपरः । यस्मिन्निति । अयं शब्दार्थः—विजानतः–विशेषतो जानतः, सर्वं ब्रह्मात्मकमिति शास्त्रतो जानतः, यथावगतं परमात्मानमनुध्यायतो यस्मिन्–प्रणिधानसमये, सर्वाणि भूतान्यात्मैवाभूत्–परमात्मैवाभूत्, व्यवहारसमये तानि तानि भूतानि तेन तेनाकारेणान्यान्यतया दृश्यमानानि विजानतः प्रणिधानसमये ब्रह्मात्मकतयैव परिदृश्यमानानि भवन्तीति यावत् । तत्र–तथाविधसाक्षात्कारे सति को मोहः कः शोकः–न मोहशोकयोरवकाश इति यावत् । तत्र हेतुमाह—एकत्वमनुपश्यतः–परिदृश्यमानेऽपि रूपभेदे आत्मैक्यमेवान्ततोऽनुपश्यतः । तत्त्वमसीत्यादिवाक्यानामाशयं वर्णयन्नाह—सर्वस्येत्यादि । तत्र तत्र–"तत्त्वमसि" "त्वं वा अहमस्मि भगवो देवते" "इदं सर्वं यदयमात्मा" "सर्वं

तमूर्तित्रय ईश्वरेश्वरः" "तस्मिंस्तुष्टे किमप्राप्यं जगतामीश्वरेश्वरे" "एवं प्रसादितः

तत्र श्रूयमाणं परमात्मवाचिनः शब्दस्य सामानाधिकरण्यं सङ्गच्छते । जात्याद्यपृथक्सिद्धधर्मवाचिनां गवादिशब्दानां धर्मिणि पर्यवसानं हि दृष्टम् । अत एव गौरयमित्यादयः समानाधिकरणाः प्रयोगाः । जात्यादीनामिव शरीरस्यापि प्रकारतयैव तु सत्ता । शरीरत्वं च तयोः परमात्मापेक्षया विश्रुतमन्तर्यामिब्राह्मणे । दण्डकुण्डलादेर्देवदत्ते कदाचित्प्रकारत्वेऽपि न तदपृथक्सिद्धप्रकारतेति तद्वाचिदण्डादिशब्दानां धर्मिणि पर्यवसानासम्भवाद्धर्मिबोधने मत्वर्थप्रत्ययसापेक्षता । एतेन—जातिगुणाद्यर्थकानां शब्दानां द्रव्यपर्यवसायित्वस्वाभाव्येऽपि दण्डकुण्डलादिशब्दानामिव द्रव्यवाचिनां शरीराभिधायिनामपि कथं मत्वर्थप्रत्ययनिरपेक्षं धर्मिणि पर्यवसानमिति शङ्का परास्ता । एतदुक्तं भवति—यथा देवदत्तो जानातीत्यादौ पिण्डविशेषवाचकोऽपि देवदत्तादिशब्दः शरीरिणि पर्यवसानस्वभावेन चेतनमवगमयति तथा सर्वस्य चेतनाचेतनजातस्य परमात्मापेक्षया शरीरत्वेन तत्तद्वाचिशब्दाः परमात्मनि पर्यवस्यन्तीति । इत्थं च "तत्त्वमसि" "त्वं वा अहमस्मि भगवो देवते" "इदं सर्वं यदयमात्मा" "सर्वं खल्विदं ब्रह्म" इत्यादयः प्रयोगा ऐकरस्येन समन्वयमुपयन्ति । यच्चेह परेषां स्वरूपैक्यमवलम्ब्य क्वचिन्निर्वहणं, क्वचित्तदसम्भवेन बाधार्थमवलम्ब्य निर्वहणं, तदिदं गतिभेदेन विगुणम् । स्वरूपैक्यस्य निरस्तत्वेन प्रपञ्चसत्यत्वसमर्थनेन च निरस्तं नामैतत् । बाधार्थता च समानाधिकरणवाक्यस्य न व्युत्पत्तिसिद्धा, अर्थैक्य एव तद्व्युत्पत्तेः । **भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यमिति हि** तल्लक्षणं, निरूपितं चैतत्प्राक् । **ननु**—तमसि स्थाणुमवलोक्य चोरोऽयमिति भ्राम्यतो भ्रमापनोदनार्थं तत्त्वविदा प्रयुज्यमानाच्चोरः स्थाणुरिति वाक्याद्यश्चोरत्वभ्रमविषयः स न चोर इति भवति हि बोधः । सत्यम् । वाच्येऽर्थे-

खल्विदं ब्रह्म" इत्यादिषु स्थलेषु । सङ्गच्छत इति । ननु कथं सङ्गमनम्, प्रकारवाचिनः प्रकारमवगमयन्ति, परमात्मवाची तु परमात्मानं, तत्रैकार्थतेत्यत्राह—जात्यादीति । दृष्टमिति । क्व दृष्टं ? तदाह—अत एवेति । ननु जात्यादेरपृथक्सिद्धप्रकारता दृष्टा नाम, द्रव्यस्यापृथक्सिद्धप्रकारता तु न दृश्यते क्वापीति शङ्कायामाह—जात्यादीनामिवेति । प्रकारतयैव तु सत्ता—न दण्डकुण्डलादेरिव स्वतन्त्रतया सत्ता । शरीरवाचकशब्दस्य शरीरिणि पर्यवसानं लोकव्यवहारेण सङ्गमयति—एतदुक्तं भवतीति । चेतनमवगमयतीति । पिण्डविशेषमात्रावबोधने हि ज्ञाधात्वर्थानन्वयप्रसङ्ग इति भावः । ऐकरस्येनेति । सर्वस्य चिदचिद्वस्तुनः परमात्मापेक्षया शरीरत्वस्याविशेषात्, अपृथक्सिद्धप्रकारवाचिनां च प्रकारिणि गतेश्च तथात्वात् निर्वहणप्रकारस्यैकरूप्यमिति भावः । ऐकरस्येन समन्वयमुपयन्तीत्यनेन सूचितं परेषामैकरस्येन समन्वयाभावाद्वैगुण्यमुपपादयति—यच्चेहेति । स्वरूपैक्यमवलम्ब्य क्वचिदिति । तत्त्वमसीत्यादौ चेतनविशेषवाचिना सह श्रूयमाणं सामानाधिकरण्यं स्वरूपैक्यनिबन्धनमिति तदाशयः । क्वचित्तदसम्भवेन बाधार्थमवलम्ब्येति । इदं सर्वमित्यादिष्वचिद्वाचकशब्देन सह सामानाधिकरण्यश्रवणस्थलेषु स्वरूपैक्यासम्भवेन बाधार्थे सामानाधिकरण्यमिति परेषामभिमतिः । न केवलं विगुणम्, अनुपपन्नं चैतदित्याह—स्वरूपैक्यस्येत्यादि । यच्च सामानाधिकरण्यं बाधार्थं इति तदेवासङ्गतमित्याह—बाधार्थता चेति । भूरिप्रयोगात्समानाधिकरणवाक्यस्य बाधार्थे व्युत्पत्तिः स्वीकार्येत्याह—नन्वित्यादि । बाधमवबोध्यमानमभ्युपगम्य समाधत्ते—सत्यमिति । अयं भावः—

कृष्णो भगवानीश्वरेश्वरः" "यस्येदं सेश्वरं वशे" इत्यादिश्रीभागवतोक्तेश्च । तथा

ऽन्वयानुपपत्त्या तु भवति तथा बोधः, न सामानाधिकरण्यमहिम्ना, अन्वयानुपपत्त्याऽर्थान्तरप्रतीतिस्तु व्यधिकरणवाक्येऽपि हि समा, तत्कोऽयमुद्घोषो बाधार्थे सामानाधिकरण्यमिति । ननु-सिद्धा किल यथाकथञ्चिद्बाधार्थता समानाधिकरणवाक्येऽपि कचित्, तथेहापि प्रपञ्चभ्रमेण भ्राम्यतो भ्रमापनोदनायोपदेशे भवतु बाधार्थतेति चेत् । हन्त! तत्रेवात्रापि लाक्षणिकता स्यात् । चोरशब्दस्य चोरत्वभ्रमविषये स्थाणुशब्दस्य चोरत्वाभाववति लक्षणेवेहापि इदमादिपदानां प्रपञ्चत्वभ्रमविषये आत्मादिपदानां प्रपञ्चत्वाभाववति च लक्षणा ह्यवश्यमाश्रयणीया स्यात् । यत्तु सेयं लक्षणा न दोषाय, इयं हि निरूढलक्षणा, समानाधिकरणवाक्यस्य बाधार्थेऽपि व्युत्पन्नत्वात् । सामानाधिकरण्यं हि चतुर्धा—भिन्नसत्ताकयोस्तादात्म्यबोधकाकाङ्क्षाघटितमेकं, बाध्यमानतादात्म्योपलक्षिताधिष्ठानबोधकाकाङ्क्षाघटितमपरं, समानसत्ताकयोस्तादात्म्यबोधकाकाङ्क्षाघटितमन्यत्, अखण्डार्थावबोधकाकाङ्क्षाघटितमितरत् । आद्यम्-इदं रजतमित्यादौ, द्वितीयम्-स्थाणुश्चोर इत्यादौ, तृतीयम्-नीलमुत्पलमित्यादौ, चतुर्थम्-सत्यं ज्ञानमित्यादौ, इति। तदिदं स्वमतिवैभवमात्रं, प्रमाणाभावात्। किञ्च-त्रिविधसामानाधिकरण्यघटकीभूतं तादात्म्यं किंरूपम्? । यदि भिन्नत्वे सत्यभिन्नसत्ताकत्वं तदैकनिष्ठानां रूपरसादीनां सत्तैकैवाश्रयघटसत्तेति रूपरसादीनां सामानाधिकरण्यव्यवहारप्रसङ्गः । यदि च भेदसमानाधिकरणाभेदस्तादात्म्यं तदा पूर्वोक्त एव दोषः । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत"त्यस्य युष्माभिरेव ब्रह्मात्मकसर्वानुसन्धानपरतया व्याख्यातत्वेन तद्वदेवान्यत्रापि निर्वाहसम्भवेन बाधार्थताया लक्षणादोषदूषिताया अनौचित्यं च । नचोपास्तिविधिसन्निधानात्तथा व्याख्यातमन्यत्र तु न तथेति वाच्यम् । व्यवहितस्याऽव्यवहितस्य विधेः

समानाधिकरणवाक्यस्येयमेव व्युत्पत्तिः-मुखभेदेन तत्तत्पदोपस्थितयोरर्थयोस्तादात्म्येनान्वयावबोधनम्, अर्थावबोधने तु पदानां सामर्थ्यम्, शक्त्या शक्यसम्बन्धेन वा तत्, तथाच लक्षणया चेत् बाधार्थः, सामानाधिकरण्यस्य का गमकता तत्रेति । यथाकथञ्चिदिति । येनकेनापि निमित्तेन । मास्तु बाधार्थता सामानाधिकरण्यमर्यादया, अन्वयानुपपत्त्या वा तदर्थतास्त्वेव खल्विति भावः । व्युत्पत्तिमुपपादयन्नाह—सामानाधिकरण्यं हीति । आकाङ्क्षा-समभिव्याहारविशेषः, तेन घटितं-सङ्घटितम्, तद्विशिष्टमिति यावत् । क्रमश उदाहरति—आद्यमित्यादि । इदं रजतमित्यादाविति । भ्रान्तवाक्य इति शेषः । इह हि तादात्म्यं भिन्नसत्ताकयोर्बोध्यते, यदधिष्ठानस्येदमंशस्य सत्ता व्यावहारिकी रजतांशस्य त्वध्यस्तस्य सत्ता प्रातिभासिकी । द्वितीयमिति । इह हि अध्यस्तचोरतादात्म्यं बाध्यते, तत् बाध्यमानचोरतादात्म्योपलक्षितस्थाणुतादात्म्यं चोरत्वभ्रमविषये बोध्यते । तृतीयमिति । इह हि समानसत्ताकयोर्नीलोत्पलयोस्तादात्म्यं बोध्यते । चतुर्थमिति । इह हि सत्यत्वज्ञानत्वयोः परित्यागेन सन्मात्रं बोध्यते तदखण्डार्थता । न केवलं स्वोल्लेखैकमूलको विभेदः, किन्तु दोषग्रस्तोऽपीत्याह—किञ्चेति । एकैवाश्रयघटसत्तेति । रूपरसयोर्घटादाश्रयादपृथग्भूतयोः सत्ता घटसत्तातोऽनतिरिक्तेति भावः । अन्यत्रापीति । "इदं सर्वं यदयमात्मे"त्याद्यचेतनसामानाधिकरण्यपरवाक्येषु । न चेति । इहापि

परमात्मस्वरूपलक्षणमुक्तं स्कान्देऽपि—“आत्मात्मा चाक्षरात्मा च ह्येष आकाश-

---

सर्वत्र सौलभ्यात्। नच व्यवहितविध्यन्वयेन व्याख्यानमनुचितम्, अनेकपदलक्षणापरिग्रहतो विप्रकृष्टविध्यन्वयेऽनौचित्याभावात्। चोरः स्थाणुरित्यादाविवानेकपदलक्षणाऽऽश्रीयत इत्यप्ययुक्तम्, दृष्टान्ते वैषम्यात्। नहि तत्र सर्वेषां पदानां लक्षणा, चोरपदलक्षणयैव सामञ्जस्यात्। यस्त्वया चोरत्वेनावगतः स स्थाणुरित्येव ततो बोधः। यच्चागत्या लक्षणाक्लेशः सोढव्य इति। तदसत्। यतः श्रुतिस्मृतय एव जगद्ब्रह्मणोः सामानाधिकरण्यं वर्णयन्त्यः सर्वप्रमाणाविरुद्धां गतिमावेदयन्ति प्रायः। “तदनु प्रविश्य सच्च त्यच्चाभवत्” “स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलं पुरुष एवेदं सर्वं” “सर्वं समाप्नोषि ततोऽसि सर्वः” “सर्वगत्वादनन्तस्य स एवाहमवस्थित”इति। तदेवमात्मतयानुप्रवेशकृतं सामानाधिकरण्यं श्रुतिस्मृतिभिरवगम्यमानं बाधार्थे नयतां सर्वविक्षोभकाणां श्रुतिस्मृतिशतक्षोभः केवलमवशिष्यते। किञ्च–चोरः स्थाणुरित्यत्र चोरत्वविरुद्धस्थाणुत्वमिव ब्रह्मणि पदान्तरेण प्रपञ्चत्वविरोधिधर्मः किं कश्चिदुपस्थाप्यते? येन तत्रेवात्रापि निवृत्तौ लक्षणा स्यात्। यदि कश्चिदुपस्थाप्यते तर्हि ब्रह्मणः सविशेषत्वापत्तिः। ननु–सोऽपि धर्मः कल्पित इति चेत्तर्हि द्वयोः कल्पितत्वाविशेषेणेदमत्र बाध्यत इत्यत्रानियमः, कल्पितो हि चोरः पदान्तरेण वास्तवस्थाणुत्वोपस्थापनाद्बाध्यते। ननु–कल्पितत्वाविशेषेऽपि सुन्दोपसुन्दवन्मिथोविरोधादुभयमपि बाध्यताम्। मैवम्। एकस्मिन्नेव वाक्य एकस्यैवोद्देश्यभावस्य विधेयभावस्य चासम्भवात्। उद्देश्योपादेयविभागे हि बाधार्थता। अस्ति हि चोरः स्थाणुरित्यत्र यश्चोरः स स्थाणुरित्युद्देश्योपादेयविभेदः। विरुद्धोभयपरित्यागेन स्वरूपमात्रं चेल्लक्ष्यते तर्हि न बाधार्थे सामानाधिकरण्यम्। ननु–न पदान्तरेण धर्मोपस्थापनं, स्वरूपमात्रं तु प्रतीयते, तदेव तु ब्रह्मस्वरूपं प्रपञ्चविरोध्येव, तन्नयाय्यं बाधार्थत्वमिति चेन्नैवम्। स्वत एव प्रकाशमानस्य स्वरूपस्योपदेशनैरर्थक्यात्। भ्रमाविरोधित्वाच्च। तस्मादसत्परिगृहीत एव सामानाधिकरण्यनिर्वहणे समुचितः श्रुत्यनुमतश्च पन्थाः।

---

बाधार्थसमाश्रयणमेवोचितं, परन्तूपासनाविधिसान्निध्यात्तथा व्याख्यातमिति भावः। सर्वत्र सौलभ्यादिति। स्ववाक्ये क्वचिदुपासनाविध्यसान्निध्येऽपि वाक्यशेषे वा स्यादेवोपासनाविधिसन्निधानमिति बाधार्थाश्रयणस्यावकाश एव न स्यादिति भावः। सर्वप्रमाणाविरुद्धां गतिं–सामानाधिकरण्यनिर्वहणमार्गम्। तदनुप्रविश्येति सामानाधिकरण्ये निमित्तं प्रथमतो निरूपयन्ती हि सामानाधिकरण्यमुपपादयति। तदन्वित्यादि। सच्च त्यच्चाभवत्, कथमेतत्? तदनुप्रविश्य–आत्मतयानुप्रविश्य सच्च त्यच्चाभवदित्यर्थः। एवमन्यत्रापि। तत्रेवात्रापीति। अयं चोर इत्यत्र भ्रमे इदंत्वेन भवत्येव स्थाणोः प्रकाशः, चोरः स्थाणुरित्यत्र तु चोरत्वविरुद्धस्थाणुत्वेन स्थाणोः प्रकाशो भवतीति बाधकतया निवृत्तौ तात्पर्यमुचितम्, तथा इदं ब्रह्मेत्यत्र ब्रह्म स्वासाधारणविशेषाकारेण प्रकाशते उत न? यदि न, भ्रमानुपमर्दकतया बाधार्थाश्रयणं नापेक्ष्यते, यदि स्वासाधारणाकारेण? तदा ब्रह्मणः सविशेषतापत्तिरिति भावः। मिथो विरोधादिति। विरोध एव बाधकत्वे प्रयोजकं, न वास्तवत्वमिति भावः। नन्विदं वाक्यमुद्देश्यविधेयविभागरहितमेवेष्यतामित्यत्राह–अस्ति हीति। धर्मोपस्थापनम्–कञ्चिद्विशेषधर्मं पुरस्कृत्य न ब्रह्मोपस्थाप्यते, किन्तु ब्रह्मस्वरूपमात्रं प्रतीयत इति भावः। भ्रमाविरोधित्वादिति। तस्य साक्ष्यवभासरूपत्वेन भ्रमाविरोधित्वादिति भावः।

निर्मलः। दिव्यदृगीक्ष्यः सन्मात्रः पुरुषो वसुदेवजः॥ समस्तकल्याणगुणो निर्गुणश्चेश्वरेश्वरः। परया विद्यया वेद्य उपास्यो ब्रह्मभिः प्रभु"रिति।

ननु—शरीरशरीरिभावेन सामानाधिकरण्यं निर्वहतामप्यवर्जनीयो लक्षणाक्लेशः। मैवम्। शरीरवाचिनः शरीरिणि पर्यवसानस्य दृष्टत्वात्। न चेदममुख्यम्, शरीरिण्येव शरीरवाचिनां देवादिशब्दानां रूढिशक्तेः। अत एव "ब्राह्मणो यजेते"त्यादिप्रयोगस्य मुख्यता। इत्थं च ब्रह्मणः सर्वशरीरस्य सर्वशब्दवाच्यत्वान्मुख्य एव जगद्ब्रह्मणोः सामानाधिकरण्यनिर्देशः। स्मर्यते च ब्रह्मणः सर्वशब्दवाच्यत्वं—"नताः स सर्ववचसां प्रतिष्ठा यत्र शाश्वती" "वचसां वाच्यमुत्तमम्" "वेदैश्च सर्वैरहमेव वेद्यः" इति। श्रूयते च तथा—"सर्वे वेदा यत्पदमामनन्ति" इति। ननु—तथापि "तत्त्वमसी"त्यत्र युष्मच्छब्देन श्वेतकेतुशरीरकपरमात्मनोऽभिधाने सम्बोध्यादन्यस्यैव कर्तृतया मध्यमपुरुषो न घटेत, श्वेतकेतुरेव तु सम्बोध्यः, न तु तच्छरीरकः परमात्मेति चेत्। युष्मच्छब्दस्योपपदत्वेन तदुपपत्तेः। नहि सम्बोध्यस्य कर्तृत्वेऽपि भवच्छब्दयोगे मध्यमः। अत एवानुशासनम्—"युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यम" इति। नहि सम्बोध्यार्थक उपपदे इति। अयमाशयः—युष्मच्छब्दे-

अवर्जनीयो लक्षणाक्लेश इति। ब्रह्मवाचकशब्दसमानाधिकरणतया प्रयुक्तानां ज्योतिरादिशब्दानां ज्योतिरादिवाचकानां ज्योतिरादिशरीरकपरता हि विना लक्षणां न सिद्ध्येदिति भावः। शरीरिणि पर्यवसानम्—गतिपर्यवसानम्, मुख्यधर्मितया शरीर्युपस्थापकत्वमित्येतत्। दृष्टत्वादिति। लोक इति शेषः। भूरिप्रयोगसिद्धमेतदिति भावः। ननु गौणोऽपि प्रयोगो लोके दृश्यते, तत्प्रयोगमात्रं न पदशक्तिव्यवस्थापकमित्यत्राह—न चेदममुख्यमिति। यजेतेत्यादिप्रयोगस्येति। विधिर्हि चेतनमधिकरोति नाचेतनम्, चेतन एव हि कर्ता, नाचेतनो जडस्वाभाव्यात्। तथा च शिरःपाण्यादिलक्षणः पिण्डविशेषो यदि ब्राह्मणशब्दस्य मुख्यार्थः स्यात्तदा तस्मिन्विध्यन्वयानुपपत्त्या ब्राह्मणशब्दस्य लक्षणा कल्पनीया स्यादिति भावः। नताः सेति। सर्ववचसां—सर्वेषां वाचकानाम्। यत्र—ब्रह्मणि। प्रतिष्ठा—दृढा स्थितिः। वचो ह्यर्थमवगमयदिदं वचोऽस्मिन्नर्थे वर्तत इति व्यवह्रियते, तद्वचसामर्थे स्थितिर्नामोपस्थापनम्, स्वोपस्थाप्ये उपस्थितिद्वारा सम्बन्धः पदानामर्थे स्थितिरिति व्यवह्रियत इत्येतत्। गवादिपदानि हि गोत्वादिप्रवृत्तिनिमित्तमवगाह्य तत्रैव विश्रान्तुमक्षमं सत्तेनैव द्वारेण पिण्डविषमुपसर्पन्ति, अथ तत्रापि जाताविवास्वसन्त्रसत्ताके स्थिरां स्थितिमनुपलभ्य तच्छरीरकं सर्वान्तर्यामिणमुपसर्प्य तत्रैव विश्रान्तिं लभन्त इति प्रतिष्ठा यत्रेत्युच्यत इति भावः। ये पुनरनवगतौपनिषदान्तर्यामिलक्षणाः केवलं लोकव्यवहारतोऽवधृतपदगतयः पामरास्तेषां दृष्ट्या तत्तद्वचसां या प्रतिष्ठा पिण्डविशेषे तत्र तत्र, सा ह्यनित्या, पिण्डविशेषाणां विनाशित्वात्। औपनिषदहस्यामिहैरवधृता सेयं प्रतिष्ठा तु शाश्वती—नित्या, कालत्रयापरिच्छिन्नत्वात्परमब्रह्मणः। वाच्यमुत्तमं—प्रधानतयोपस्थाप्यम्, मुख्यविशेष्यतयोपस्थाप्यमिति यावत्। यत्पदमिति। यदिति पदच्छेदः। पदं—प्राप्यम्। सम्बोध्यादन्यस्यैव कर्तृतया मध्यमपुरुषो न घटेतेति। सम्बोध्यगतकर्तृत्वान्वयबोध एव मध्यमपुरुषघटितसमभिव्याहारविशेषस्य हेतुरित्यभिमत्येयमाशङ्का। मध्यमपुरुषप्रयोगे निमित्तमन्यदेवेत्याह—युष्मदिति। पराभिमतकार्यकारणभावे व्यतिरेकव्यभिचारमाह—नहि सम्बोध्यस्येति। नहि सम्बो-

अत्र जीवानां नियम्यत्वेनेश्वरस्य नियन्तृत्वेन चोपदेशाज्जीवेश्वरभेदः पार-

---

तरपदाप्रयोज्ययुष्मदर्थतावच्छेदकावच्छिन्नमुख्यविशेष्यताविशिष्टप्रकारताप्रयोजकधातूत्तरं मध्यमः। विशेष्यतावैशिष्ट्यं च स्वनिरूपितविषयतानिरूपितत्वस्वनिरूपितत्वान्यतरसम्बन्धेन। धात्वर्थस्याख्यातार्थद्वारा प्रथमान्तपदार्थेऽन्वयेन ज्ञाधात्वर्थयोगे आख्यातस्य निरर्थकत्वपक्षे साक्षादेव धात्वर्थस्य प्रथमान्तपदार्थेऽन्वयेनान्यतरनिवेश इति। चैत्र पण्डितोऽसीत्यत्र मध्यमनिर्वाहाय युष्मत्पदप्रयोज्यत्वं परित्यज्य युष्मत्पदेतरपदाप्रयोज्यत्वस्य निवेशः कृतः। नच–तत्रापि युष्मत्पदाध्याहारादेव बोधाद्युष्मत्पदप्रयोज्यविशेष्यताविशिष्टप्रकारताप्रयोजकत्वं धातावक्षतमिति वाच्यम्। पदाध्याहारादर्थाध्याहारस्यैव समुचितत्वात्, शब्दादनुपस्थितस्याप्यर्थ-

---

ध्यार्थक उपपद इति। अनुशासने हि युष्मदीतिशब्दस्वरूपविशेषो निर्दिश्यते, नतु तेन सम्बोध्यपरेण भाव्यमिति नियम्यते, नच डित्थादिशब्दवत्साङ्केतिकः कश्चिद्युष्मच्छब्दोऽपि क्रोडीकृतः स्यादिति वाच्यम्। सर्वनामगणे पठितो हि शब्दस्वरूपविशेष इह निर्दिश्यते। सर्वनामगणप्रविष्टत्वमात्रेण न सम्बोध्येनैवार्थेन भाव्यमित्यस्ति नियमः। शब्दानामर्थविशेषावधारणं हि शक्तिग्राहकायत्तम्, तत्र शक्तिग्राहकं किमपरं श्रुतेः प्रबलम्, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी"ति श्रुतिरेवान्तर्यामिपर्यन्ततामवगमयति। "सर्ववचसां प्रतिष्ठे"त्यादिस्मृतयश्च। वस्तुतो गवादिशब्दा जातिं पुरस्कृत्य पिण्डविशेष इव सम्बोध्यं पुरस्कृत्यैव परमात्मनि प्रवर्तन्त इति जातिवाचित्वं गवादिशब्दानामिव सम्बोध्यवाचित्वमप्यनपायमेवेह। अयमनुशासनार्थः—स्वसमानाधिकरणे युष्मदि उपपदे स्थानिनि वा–प्रयुज्यमानेऽप्रयुज्यमाने वा मध्यमः स्यादिति, सामानाधिकरण्यं च भिन्नप्रवृत्तिनिमित्तयोरैकार्थ्यम्। भवति चैकार्थ्यं युष्मन्मध्यमयोः, यो मध्यमेन तिङोपस्थाप्यते सामान्यतः कर्ता स एव हि युष्मदा विशेषत उपस्थाप्यते। परिनिष्पन्नं भावमाह—अयमाशय इति। धात्वर्थमुख्यविशेष्यकबोधं शाब्दिका मन्यन्ते, वैशेषिकादयः प्रथमान्तमुख्यविशेष्यकबोधं मन्यन्ते। तत्र वैशेषिकाद्यभिमतप्रकार एव समुचित इत्यभिप्रेत्यायं परिष्कारः। युष्मच्छब्देतरपदाप्रयोज्या या युष्मदर्थतावच्छेदकावच्छिन्ना मुख्यविशेष्यता, तया विशिष्टा या प्रकारता, तत्प्रयोजको यो धातुस्तदुत्तरमित्यर्थः। इदमत्र बोध्यम्—आख्यातस्य कर्त्रर्थकतामभिप्रेत्यानुशासने समानाधिकरण इति निर्देशः। कृत्यर्थत्वे लाघवं पश्यन्तस्तु नेमं निर्देशमाद्रियन्ते। निर्देशफलं त्वन्यथा निर्वहन्ति तदभिप्रेत्य परिष्कारेऽस्मिन्मुख्यविशेष्यतानिवेशः। त्वां पश्यति, त्वया क्रियते, तुभ्यं ददातीत्यादौ हि युष्मदर्थेन धात्वर्थो विशिष्यते न धात्वर्थेन युष्मदर्थः, तत्र युष्मच्छब्दार्थो मुख्यविशेष्यः। आख्यातस्य **निरर्थकत्वपक्ष** इति। जानाति, इच्छति, यतते इत्यादौ हि पचतीत्यादाविव न कर्तृत्वमाख्यातार्थः, ज्ञानाद्यपेक्षया कृतेरसम्भवात्, आश्रयत्वमेव तु तदर्थः, अत एव ज्ञानाश्रय इत्येव बोधोऽपि, आश्रयत्वमपि नार्थः, प्रयोगसाधुत्वार्थमेव तु तिङ्प्रयोगः। आश्रयत्वस्य संसर्गविधयैव भानसम्भवादित्यपरः पक्षः, तमिमं पक्षभेदमभिप्रेत्य **निरर्थकत्वपक्ष** इति। नञ्द्वयनिवेशफलमाह—**चैत्र पण्डितोऽसीत्यादि**। युष्मत्पदाश्रवणाद्युष्मदर्थनिष्ठा मुख्यविशेष्यता न पदप्रयोज्येत्याशयः। शङ्कते—**न चेति**। **पदाध्याहारादेवेति**। पदादनुपस्थितस्यार्थस्य शाब्दबोधे भानासम्भवादित्याशयः। **समुचितत्वादिति**। **अयं भावः**—पदाध्या-

---

१ अत्र त्वशब्दो मध्यमपरः।

मार्थिक इति स्वसिद्धान्तो निरूपितो ज्ञेयः । तथा चोक्तं भगवद्गीतायाम्—"न

स्वार्थापत्त्या शाब्दबोधे भानसम्भवात् । पठतीत्यत्रासत्यपि माणवकशब्दप्रयोगे यदाऽर्थापत्त्या कर्तुर्माणवकस्योपस्थित्या बोधस्तदा तत्र मध्यमवारणाय मुख्यविशेष्यतायां युष्मदर्थतावच्छेदकावच्छिन्नत्वनिवेशः । अत्र सम्बोध्यतावच्छेदकावच्छिन्नत्वमनिवेश्य युष्मदर्थतावच्छेदकावच्छिन्नत्वनिवेशा"त्त्वमसी"त्यत्र युष्मच्छब्देन सम्बोध्यादन्यस्य सम्बोध्यशरीरकपरमात्मनो मुख्यविशेष्यत्वेऽपि न मध्यमानुपपत्तिः । सम्बोध्यशरीरकपरमात्मनि युष्मच्छब्दस्य शक्तेः सम्बोध्ये निरूढलक्षणायाश्च स्वीकाराल्लोके वेदे च सर्वत्र मध्यमनिर्वाहः । ननु—सम्बोधनान्तेन पदेन यो धर्म्युपस्थाप्यते स एव धर्मी युष्मच्छब्देनाप्युपस्थाप्यत इत्ययं नियमो लोके दृष्टः, "तत्त्वमसी"त्यत्र युष्मच्छब्देन सम्बोध्यशरीरकपरमात्मनश्चेदुपस्थितिः स नियमो भज्येत । न चेह सम्बोधनान्तेनापि श्वेतकेतुशरीरकपरमात्मन एवोपस्थितिः, सम्बोध्यत्वस्य तस्मिन्नसम्भवात् । वक्तुरुद्दालकस्य सर्वज्ञं परमात्मानं प्रति बुबोधयिषाया असम्भवात् ।

हारो नाम पदस्याश्रुतस्य स्मृतिपथे समानयनम्, पदस्मरणमिति यावत्, इदं चार्थोपस्थितये कल्प्यते, तथा च पदाध्याहारपक्षे पदस्मरणं, ततश्चार्थस्मरणं ततोऽन्वयबोध इति क्रमः । तत्र यस्यार्थस्य स्मरणं विना बोधो न भवति तस्यार्थस्यैव स्मरणं कल्प्यताम्, किं पदाध्याहारेण ?, उभयाभ्युपेतार्थस्मरणेनैव निर्वाहे तदर्थं पदस्मरणानुधावने गौरवादिति भावः । ननु यथाकथञ्चिदुपस्थितस्याकाशादेरपि शाब्दबोधे भानप्रसङ्गपरिहाराय पदजन्यपदार्थोपस्थितेरेव शाब्दबोधे हेतुत्वं वक्तव्यमित्यवश्यं पदाध्याहार एवाश्रयणीय इत्यत्राह—शब्दादनुपस्थितस्यापीति । अर्थापत्त्येति । उपस्थितस्येति शेषः । शाब्दबोधप्रयोजकार्थोपस्थितौ पदज्ञानस्येवार्थापत्तेरपि सामग्रीत्वं बोध्यं, तथा च पदज्ञानार्थापत्त्यन्यतरप्रयोज्यार्थोपस्थितिः शाब्दबोधे कारणमिति नातिप्रसङ्गो नाप्रसङ्गश्चार्थाध्याहार इति भावः । अभिमतोऽयं पक्षो मीमांसकैः । तदेति । माणवकनिष्ठमुख्यविशेष्यतायास्तदानीं पदाप्रयोज्यत्वाद्युष्मत्पदेतरपदाप्रयोज्यत्वेन तथाविधविशेष्यताविशिष्टप्रकारताप्रयोजकत्वाद्धातोर्मध्यमः स्यादिति भावः । ननु कोऽसौ युष्मदर्थः, यदि सम्बोध्यः, तर्हि युष्मच्छब्दस्य परमात्मपरतायां मध्यमनिर्वाहो न घटेत, विशेष्यतया युष्मदर्थतावच्छेदकावच्छिन्नत्वात् । यदि सम्बोध्यशरीरकस्तदा लोके चैत्र त्वं गच्छेत्यादौ मध्यमो न घटेत, सम्बोध्यशरीरकस्य युष्मदर्थस्य विशेष्यतयाऽनवबोधनादित्यत्राह—सम्बोध्यशरीरकेत्यादिना । अत्रेदं बोध्यम्—भवानागच्छतु इति वक्तव्ये भवच्छब्दार्थमध्याहारेणैवावगमयन्नागच्छत्वित्येव प्रायुङ्क्त तत्रापि मध्यमप्रसङ्गः, मुख्यविशेष्यता हि न पदप्रयोज्या, तद्युष्मत्पदेतरपदाप्रयोज्यैव, युष्मदः पर्यायतया भवच्छब्दस्य प्रवृत्तिनिमित्ते भेदाभावेन युष्मदर्थतावच्छेदकावच्छिन्नत्वस्य च सत्त्वात्, न चेदृशः प्रयोगोऽप्रामाणिकः, अध्याहारेण बुबोधयिषया प्रयोगस्य प्रयोक्तुरिच्छायत्तस्येह निरोधं कमपि न पश्यामः । नापि युष्मदर्थस्यैवाध्याहारो योग्यो न भवदर्थस्येत्यत्र नियामकं किमपि । अध्याहारस्यापकं दुर्घटमिति तु न, प्रकरणं हि सुलभम्, तन् अर्थाध्याहारपक्षमनादृत्य नव्यद्वयाश्रयणक्लेशं युष्मदर्थतावच्छेदकावच्छिन्नत्वप्रवेशक्लेशं चावधूय युष्मदर्थप्रयोज्यमुख्यविशेष्यताविशिष्टधात्वर्थं मध्यम इति नियमाश्रयणमेव युक्तमिति । इत्ययं नियम इति । सम्बोधनान्तपदसमभिव्याहृतयुष्मच्छब्दस्य सम्बोधनान्तपदानुपस्थाप्यधर्म्यनुपस्थापकत्वनियमः । सम्बोध्यत्वस्य तस्मिन्नसम्भवादिति । विभक्त्यर्थानन्व-

त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः

नापि विभक्त्यर्थस्य सम्बोध्यत्वस्य प्रकृत्यर्थैकदेशे श्वेतकेतावन्वयः समुचितः । तथा सति हे पुत्रि ! त्वत्पतिः सुन्दर इति वक्तव्ये जामातृशब्दार्थैकदेशे पुत्र्यां विभक्त्यर्थसम्बोध्यत्वस्यान्वयविवक्षया जामातस्त्वमसि सुन्दर इति प्रयोगापत्तेः । तस्मात्सम्बोधनान्तेन श्वेतकेतोरुपस्थितिर्युष्मच्छब्देन श्वेतकेतुशरीरकपरमात्मन इत्येतदुपहास्यमिति चेत् । सत्यम् । लोके तथैव दृष्टो नियमः । तथापि सर्वत्र तथा नियमे न प्रमाणम्, यथाव्युत्पत्ति शब्देनार्थोपस्थापने कचिद्दृष्टस्य नियमस्याप्रतिरोधकत्वात् । ननु—सर्वेषां पदानां तत्तच्छरीरकपरमात्मबोधकताम्भ्युपगच्छता भवतापि देवदत्तो मूर्ख इत्यादौ मूर्खपदसमभिव्याहारेण देवदत्तपदस्य देवदत्तमात्रपरतैव वक्तव्या, तद्वदिहं युष्मच्छब्दस्य परमात्मपर्यन्तं व्युत्पत्तौ सत्यामपि सम्बोधनान्तपदसमभिव्याहारानुरोधेन सम्बोध्यमात्रपरतैवाश्रयणीयेति चेत् । तत्र समभिव्याहृतमूर्खपदोपस्थाप्यमौर्ख्यान्वयबाधात्तथाऽऽश्रीयते, इह तथा बाधकं किम् । ननु—सम्बोधनान्तपदोपस्थाप्यस्य युष्मच्छब्दार्थस्य चैक्यमवगम्यमानम् । कथमैक्यमवगम्यते ? । किं सम्बोधनान्तार्थस्य युष्मच्छब्दार्थस्य च नीलमुत्पलमित्यादाविवाभेदेनान्वयः, नहि केनापि तान्त्रिकेण तथाऽभ्युपगम्यते । सम्बोधनान्तस्य क्रियायामन्वयमाहुर्वैयाकरणाः—"सम्बोधनपदं यच्च तत्क्रियायां विशेषणम्" इति । नैयायिकास्तु विभक्त्यर्थसम्बोधनान्वितप्रकृत्यर्थस्यान्यत्रानन्वयं मन्यन्ते । तथाच भट्टाचार्यैर्व्युत्पत्तिवादे—"सम्बोधनविभक्त्यन्तप्रकृत्यर्थस्यान्यत्र विशेषणतयाऽनन्वयात्" इत्युक्तम् । विभक्तिविभेदाच्चाभेदान्वयस्य नावकाशोऽपि । इयांस्तु विशेषः—सम्बोधनान्तसमभिव्याहारे युष्मत्पदप्रवृत्तिनिमित्तघटकसम्बोध्यतावच्छेदकत्वोपलक्षितधर्मेण सम्बोधनान्तपदोपस्थाप्यतावच्छेदकधर्मेणैव भाव्यमिति । अत एवासति सम्बोधने कदाचिन्मामयं बोधयतीत्यनिश्चयः, सति तु तन्निश्चयः । अतश्च सार्थक्यं सम्बोधनस्य । इत्थं च

यप्रसङ्ग इति भावः । ननु प्रत्ययानां प्रकृत्यर्थैकदेशान्वितस्वार्थावबोधकत्वमपि कचिद्दृष्टमित्याशयेनाशङ्कायामाह—नापीति । सम्बोध्यत्वस्येति । यद्यपि सम्पन्नो व्रीहिः सुभिक्षं करोतीत्यादावेकवचनार्थस्य प्रकृत्यर्थैकदेशेऽन्वयो दृष्टः, न तु विभक्त्यर्थस्येति भावः । ननु सम्बोधनान्ते तु स्वीक्रियते इत्यत्राह—तथा सतीति । सत्यमित्यर्धाङ्गीकारे । तत्राङ्गीकृतांशमनुवदति—लोके तथैव दृष्टो नियम इति । लोकदृष्टनियमस्येह भङ्गो न दोषायेत्याह—यथाव्युत्पत्तीति । युष्मच्छब्दस्य सम्बोध्यशरीरकपरमात्मनि मुख्यवृत्तावपि लोके निरूढलक्षणया सम्बोध्यस्यैवोपस्थापनात् व्युत्पत्तिगत्या भवति युष्मदर्थस्य सम्बोधनान्तेनैकार्थता, इह तु मुख्यवृत्त्या सम्बोध्यशरीरकस्योपस्थापनेन न तेनैकार्थता, तद्व्युत्पत्तिभेदकृतमिदं न दूषणमिति भावः । ननु लोके मुख्यशक्तिमुल्लङ्घ्य निरूढलक्षणाश्रयणे यन्निमित्तं तन्निमित्तमिहापि तुल्यमित्याशङ्कते—नन्विति । किमिति प्रतिक्षेपे, न किमपीत्यर्थः । ऐक्यमवगम्यमानमिति । बाधकमित्यनुपज्यते । कथमैक्यमवगम्यत इति । कथमित्याक्षेपे, नावगम्यत इत्यर्थः । किमिति । अयमपि प्रतिक्षेपार्थः । पदादनुपस्थितो ह्यर्थो वाक्ये चेदन्वयतः प्रतीयत इति वक्तव्यम्, अभेदान्वयबोधे च समानविभक्तिकत्वमाकाङ्क्षा, नीलमुत्पलमित्यादाविव नेह तदवकाश इति भावः । सम्बोधनान्तानर्थक्यं परिहरन्नाह—इयांस्त्विति । अत्र ज्ञातव्य इति शेषः । कदाचिदिति । पुरुषान्तरसान्निध्ये सति । अतश्च सार्थक्यं सम्बोधनस्येति । यदि सम्बोधनान्तोपस्थाप्यता-

पर''मिति । व्याख्यातश्चायं श्लोकः श्रीरामानुजस्वामिभिर्गीताभाष्ये—''प्रथमं ताव-

सम्बोधनान्तसमभिव्याहृतं युष्मत्पदं स्वसमभिव्याहृतसम्बोधनान्तोपस्थाप्यतावच्छेदकावच्छिन्नमेव सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मवत्तया उपस्थापयेदित्येव नियमः पर्यवस्यति, न तु तं मुख्यविशेष्यतयाऽपीति । युष्मच्छब्दस्य सम्बोधनान्तपदसमानार्थकत्वनियमप्रवादस्याप्यत्रैव तात्पर्यम् । अत एव देवदत्त त्वत्पुत्रः पण्डित इत्यादौ युष्मच्छब्दस्य सम्बोध्यदेवदत्तसम्बन्धिपर्यन्तोपस्थापकत्वेऽपि न क्षतिः । प्रकृते च श्वेतकेतुशरीरकपरमात्मपर्यन्तोपस्थापकत्वेऽपि नोक्तनियमभङ्गः ।

एवं ''त्वं वा अहमस्मि भगवो देवते'' इत्यादावस्मच्छब्दस्य स्वशरीरकपरमात्मपरत्वेऽप्यस्मच्छब्दयोगेनोत्तमोपपत्तिः । न चोत्तमः स्वतन्त्रोच्चारयितृवाचकपदयोगनिबन्धनः । तथा सति ''रामो द्विर्नाभिभाषते'' इत्यत्रोत्तमपुरुषापत्तेः । तद्धि रामवचनं, रामः स्वात्मानमेव राम इति निर्दिशति । अत एवानुशासनमप्यस्मद्युत्तम इत्येव । अस्मच्छब्देतरपदाप्रयोज्यास्मदर्थतावच्छेदकावच्छिन्नमुख्यविशेष्यताविशिष्टप्रकारताप्रयोजकधातूत्तरमुत्तम इति तदाशयः । वैशिष्ट्यं च पूर्ववत् । अस्मच्छब्दप्रयोगे तदप्रयोगे चोत्तमपुरुषोपपत्तयेऽस्मच्छब्दप्रयोज्यत्वं विशेष्यतायामनिवेश्यास्मच्छब्देतरपदाप्रयोज्यत्वस्य निवेशः । अन्यत्प्रयोजनमुक्तरीत्या बोध्यम् । अस्मच्छब्दस्य स्वतन्त्रोच्चारयितृतावच्छेदकत्वोपलक्षितधर्मावच्छिन्नशरीरक उक्तरीत्या शक्तेः स्वतन्त्रोच्चारयितृत्वोपलक्षितधर्मावच्छिन्ने निरूढलक्षणया सर्वत्रोत्तमनिर्वाहः । अत्रापरे मन्यन्ते—श्वेतकेतो इति यः सम्बोध्यः स एव त्वमित्यनेनाप्युपस्थाप्यते न तच्छरीरकः परमात्मा, तदित्यस्य च तदात्मके लक्षणा । ''क्षेत्रज्ञं चापि मां विद्धी''त्यत्र मां–मदात्मकं विद्धीति भाषितमपि । अत एव–''ऐतदात्म्यमिदं सर्व''मिति प्रक्रान्तस्य तदात्मकत्वस्य विशेषे

वच्छेदकधर्मादन्योऽपि धर्मो युष्मत्पदप्रवृत्तिनिमित्ते प्रवेशमर्हेदन्योऽपि पार्श्वस्थो प्रवर्तेत वाक्यतः, ततश्च सम्बोधनानर्थक्यं स्यादिति भावः । नन्वायातः सम्बोधनान्तपदस्य युष्मदर्थस्य चैकार्थत्वनियम इति प्रकृते युष्मच्छब्दस्य श्वेतकेतुशरीरकपरमात्मपरतानुपपन्नेत्याशङ्कां वारयन्नाह—इत्थं चेति । अत एवेति । न तु तं मुख्यविशेष्यतयापीत्यत एव । सम्बोध्यदेवदत्तसम्बन्धिपर्यन्तेति । सम्बोध्यो यो देवदत्तस्तत्सम्बन्धिपर्यन्तोपस्थापकत्वेऽपीत्यर्थः । समासे सम्बन्धोपस्थापकषष्ठ्या लोपेन नामार्थयोर्भेदेन साक्षादन्वयस्याव्युत्पन्नतया पूर्वपदस्य स्वार्थसम्बन्धिनि लक्षणाया आश्रयणीयत्वात् त्वत्पुत्र इत्यत्र युष्मत्पदस्य सम्बोध्यदेवदत्तसम्बन्धिपर्यन्तत्वमित्याशयः ।

पूर्ववदिति । स्वनिरूपितविषयतानिरूपितत्वस्वनिरूपितत्वान्यतरसम्बन्धेन । तदप्रयोगे चेति । अर्थाध्याहारपक्ष इति यावत् । शब्दाध्याहारस्यैवौचित्ये अस्मत्पदप्रयोज्येत्येव रमणीयम् । उक्तरीत्येति । सर्वेषामेव पदानां परमात्मपर्यन्तत्वावगमकश्रुत्युक्तप्रक्रिययेत्यर्थः । सर्वत्रेति । लोके वेदे चेत्यर्थः । एवं महाचार्यपरिगृहीतं निर्वाहप्रकारमुपपाद्य कतिपयाचार्यपरिगृहीतं निर्वाहप्रकारमुपपादयति—अत्रापर इति । नन्वयं निर्वाहो नाचार्याभिमत इत्यत्राह—क्षेत्रज्ञं चापीति । भाषितमिति । भगवद्रामानुजाचार्यैरिति शेषः । ननु स्यात्तस्य गीतावचनस्य तथार्थः, अस्य तथा नयनं नोचितमित्यत्राह—अत एवेति । प्रक्रान्तस्य–प्रस्तुतस्य । विशेषे–चेतनविशेषे । ननु किमित्यापाद्यते लक्षणादोषः परं प्रति,

दात्मनां स्वभावं शृणु । अहं सर्वेश्वरस्तावत्, अतो वर्तमानात्पूर्वस्मिन्ननादौ काले

उपसंहारः स्वरसः । ननु—परमत इव भवतामपि लक्षणादोषोऽविशिष्टः । नैवम् । परमते हि पदद्वयस्य लक्षणा, सा च स्वोत्प्रेक्षितेऽर्थे, जगतो ब्रह्मात्मकत्वं तु श्रुतिशतविदितम् । केचित्तु समानविभक्तिकपदसमभिव्याहारस्य पृथक्सिद्धिसम्बन्धावच्छिन्नप्रकारताशालिबोधेऽपि हेतुत्वमस्ति। अत एव नीलादिपदानां गुणवाचित्वेऽपि तदुपस्थाप्यनीलादिगुणानामपृथक्सिद्धिसम्बन्धेनोत्पलादावन्वयात्सामानाधिकरण्यनिर्वाहः । सामानाधिकरण्यं हि तादात्म्यपृथक्सिद्ध्यन्यतरसम्बन्धावच्छिन्नप्रकारताशालिबोधजनकत्वम् । इत्थं च "सर्वं खल्विदं ब्रह्म"त्यत्र सर्वशब्दस्येदंशब्दस्य वा न परमात्मपर्यन्तताऽऽश्रयणीया । सर्वस्य परमात्मन्यपृथक्सिद्धत्वादपृथक्सिद्धिसम्बन्धेन सर्वस्य ब्रह्मण्यन्वयसम्भवात्, ब्रह्मणो वा सर्वस्मिन्नपृथक्सिद्धिसम्बन्धेनान्वयसम्भवात् । एवं "तत्त्वमसी"त्यादौ युष्मच्छब्दः श्वेतकेतुमात्रपर एव । अस्धात्वर्थः प्रमाविषयत्वं, तदेकदेशप्रमायामपृथक्सिद्धिसम्बन्धावच्छिन्नप्रकारतासम्बन्धेन तच्छब्दार्थस्य ब्रह्मणोऽन्वयः, धात्वर्थस्य चाख्यातार्थद्वारा युष्मच्छब्दार्थे श्वेतकेतावन्वयः । यद्वा—अस्धातोरपृथक्सिद्धिरेवार्थः, प्रकृते तच्छब्दार्थस्य ब्रह्मणो निरूपितत्वसम्बन्धेन धात्वर्थेऽन्वयः । धात्वर्थस्य चाश्रयतया युष्मच्छब्दार्थे श्वेतकेतावन्वयः । "त्वं वा अहमसि भगवो देवते" इत्यादावप्येवमेव बोध्यम् । "अहं मनुरभव"मित्यादौ मनुशब्दो मनुशरीरकपरमात्मपरः । अस्मच्छब्दार्थस्तु न तत्पर्यन्तः, किन्तु स्वतन्त्रोच्चारयितृजीवविशेषपरः, अन्वयश्च पूर्ववद्बोध्यः । इत्थं च जगद्ब्रह्मणोर्जीवब्रह्मणोर्वा तत्र तत्र सामानाधिकरण्यनिर्देशो विना लक्षणामक्लेशेन निर्वहति । "तत्त्वमसि श्वेतकेतो" इत्यादौ सम्बोधनान्तयुष्मच्छब्दयोः सामानाधिकरण्यमपि निर्व्यूढमिति वदन्ति । तदेवं सुसङ्गते जगद्ब्रह्मणोः सामानाधिकरण्यनिर्देशे परेषामपच्छेदनयाश्रयणमसङ्गतमेव । असाङ्गत्यं च प्राक् निरूपितम् "नान्योऽतोऽस्ति द्रष्टा" इत्यत्र न सामान्यतो द्रष्ट्रन्तरनिषेधः । किन्तु इतरैरदृष्टस्य द्रष्टुरन्यस्य निषेधः । "अदृष्टो द्रष्टे"ति हि परमात्मा प्राक्

यश्चोभयोः समो दोषः स हि नैकं कलङ्कयेदित्याशयेनाशङ्कते— नन्विति । लक्षणायामपि न दोषसाम्यमिति समाधत्ते—नैवमिति । पदद्वयस्येति । निर्विशेषाखण्डार्थप्रतिपादनाय प्रवृत्तेन तत्र पदद्वयस्यापि लक्षणा परेणाश्रीयते, अस्माभिस्त्वेकस्यैवेति न दोषसाम्यमिति भावः । एकस्यापि पदस्य न वयंमात्मबुद्ध्या कल्पयामो लक्षणां, किन्तु श्रुतिशतविदित इत्याह—सा चेति । सिद्धान्त्येकदेशिनां निर्वाहान्तरमाह—केचित्त्विति । बोधेऽपीति । अपिशब्दात्तादात्म्यसम्बन्धावच्छिन्नप्रकारताशालिबोधं प्रतीवेति गम्यते । नीलादीति । आदिशब्दाच्छुक्लादिपरिग्रहः । गुणवाचित्वेऽपीति । गुणिपर्यन्तावाचकत्वेऽपीत्येतत् । नन्वपृथक्सिद्धिसम्बन्धेनान्वयतः सामानाधिकरण्यनिर्वाहः कथमित्यत्राह—सामानाधिकरण्यं हीति । इत्थं चेति । सर्वशब्दस्येदंशब्दस्य वा परमात्मपर्यन्ततायामिदंशब्दसर्वशब्दयोर्मिथोऽन्वयक्लेशः स्यात् न तदवसर इति भावः । श्वेतकेतुमात्रपर एवेति । सम्बोधनान्तपदयुष्मत्पदयोरैकार्थ्यमस्मिन्पक्षे निर्विवादमित्याशयः । प्रकारतासम्बन्धेनेति । विषयविषयिणोर्हि विषयतासम्बन्धः, स चार्थे आश्रयतया, प्रमायां च निरूपकतयेत्यभिप्रायेण प्रकारतासम्बन्धेनेत्युक्तिः । निर्वाहान्तरतोऽस्मिन्निर्वाहे गुणमाह—तत्त्वमसि श्वेतकेतो इत्यादाविति । उपसंहरति—तदेवमिति । न सामान्यत इति । न विशेषणान्तरानिषेधितस्य द्रष्ट्रन्तरस्य निषेध इत्यर्थः । तत्र किं निमित्तमित्यत्राह—अदृष्टो द्रष्टेति हीति । द्रष्टेत्यने-

न नासं–अपि त्वासम् । त्वन्मुखाश्चेत ईशितव्याः क्षेत्रज्ञा न नासन्–अपि

विशेषितः । अतोऽन्यो नैवंविध इत्यस्य सजातीयद्वितीयराहित्यमैश्वर्यमनेनोक्तं भवति । "अद्वयो ह्ययमात्मे"त्यादावपि स्वेतरसमस्तवस्तुप्रकारस्य स्वतन्त्रस्यान्यस्याभावेन सजातीयद्वितीयराहित्यमभिप्रेत्याद्वयत्वोक्तिः । "नह्यस्ति द्वैतसिद्धि"रित्यत्राप्येवमेव बोध्यम् । "परमं साम्यमुपैती"ति श्रुत्यन्तरसिद्धं परमसाम्यमेव "ब्रह्म वेद ब्रह्मैव भवती"त्यनेनोच्यते । अतो गौणोऽयं प्रयोगः । "वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमांल्लोकानभिजयती"त्यादिवत् । न गौणोऽयं किन्तु मुख्यो निर्देशः, एवशब्दस्येवार्थत्वादिति केचित् ।

याश्च स्मृतयो निरूपितास्ता अप्येतदविरोधेनैव नेयाः । तत्र "क्षेत्रज्ञं चापि मां विद्धी"त्यत्र मदात्मकं क्षेत्रज्ञं विद्धीत्युच्यते । "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यत्र जीवपरमात्मनोः प्रकारप्रकारिभावः प्रतिपाद्यते । अंशशब्दो ह्यत्र प्रकारवाची । तथाच प्रयोगः–"शैत्यं जलस्यांश" इति । विशिष्टे स्वरूपे विशेषणं ह्येकदेश इत्येकदेशवाचिनांऽशशब्देन तद्बोधनं मुख्यमेव । जीवस्य परब्रह्मापेक्षया प्रतिबिम्बत्वमभिमन्यमानानां तस्मिन्नंशशब्दोऽप्यनुचितः । नहि सूर्यप्रतिबिम्बे सूर्यस्यांश इति व्यवहारः समुचितः । "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥" इत्यनेन योगं युञ्जतः सुरनरतिर्यगादिप्राकृतभेदविधूननपूर्वकमभ्यस्यमानेन ज्ञानैकाकारात्मानुसन्धानेन यत्साम्येन सर्वभूतेषु स्वात्मदर्शनं स्वात्मनि च सर्वभूतदर्शनं सेयं परिपाकदशोच्यते । अत एव "सर्वत्र समदर्शनः" इत्यस्य स्वारस्यमपि । अत एवोत्तरत्र "योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन !" इत्यर्जुनकृतानुवादस्यापि सङ्गतिः । ज्ञानैकाकारतया सर्वेषामात्मनां साम्यचिन्तनमिव परिशुद्धात्मस्वरूपस्यापहतपाप्मत्वादिगुणैः परमात्मसमतया परमात्मना सह साम्यचिन्तनमपि कार्यमित्याशयेनोच्यते—"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति" इति ।

नैव दृशेर्दृश्याच्च वैलक्षण्ये सिद्धे अदृष्ट इति विशेषणं हि द्रष्ट्रन्तरव्यावृत्तये, अथ कथं प्रतिषिध्येत–अन्यो द्रष्टैव नेति, तददृष्टो द्रष्टा नान्य इत्येव निषेधस्याशयः समुचित इति भावः । एवमेव सजातीयद्वितीयराहित्यमभिप्रेत्यैवाद्वयोक्तिरिति । श्रुत्यन्तरसिद्धमिति । एतेन गौणतया नयनमनुचितमिति शङ्का परास्ता । श्रुतिवचनेनापि स्वसमानप्रकरणानन्यथासिद्धश्रुत्यन्तरार्थानुगुणार्थेन हि भाव्यम् । गौणोऽपि प्रयोगः फलश्रुतौ शोभत इत्याशयेनाह—वैष्णवं वामनमिति । पराक्रमगुणयोगेन विष्णुना साम्यमभिप्रेत्य हि विष्णुरिव भवतीति गौणः प्रयोगः ।

एतदविरोधेनेति । यः प्रदर्शितः श्रुतीनामाशयः, एतदविरोधेन । प्रकारवाचीति । ननु केनावगम्यते तस्य तदर्थतेत्यत्राह—तथा च प्रयोग इति । ननु प्रयोगो नायं मुख्यः, भागे ह्यंशशब्दप्रयोगबाहुल्यमित्यत्राह—विशिष्टे स्वरूपे इति । तद्बोधनं–तस्य–प्रकारतैकस्वभावस्य बोधनम् । मुख्यमेवेति । एकदेशत्वलक्षणप्रवृत्तिनिमित्तयोगादिति भावः । अंशशब्दोऽप्यनुचित इति । अनुचितोऽपीति भिन्नक्रमेणान्वयः । एतेन परेण यदनुपपत्तिराशङ्क्यतेऽस्मान्प्रति तदनुपपत्तिर्नास्माकं प्रत्युत परस्यैवेति व्यज्यते । सुरनरतिर्यगादिप्राकृतभेदविधूननेति । सुरनरतिर्यगादिलक्षणो यः प्राकृतस्य शिरःपाण्यादिलक्षणपिण्डविशेषस्य भेदो–वैषम्यं पामरैरात्मन्यध्यस्यमानं, तद्विधूननं–तददर्शनमिति यावत् । यत्सा-

त्वासन्। अहं च यूयं च सर्वे वयमतः परं-अस्मादनन्तरे काले न चैव न

"सर्वभूतस्थितं यो मां भजत्येकत्वमास्थित" इत्यत्र एकत्वशब्देन देवादिप्राकृतवैषम्याभाव उच्यते। "अहमात्मा गुडाकेश! सर्वभूताशयस्थितः" इति च सर्वान्तरात्मत्वमुच्यते। "समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम्" इत्यादि चान्तर्यामिपरम्। यद्वा-देवादिषु विषमेष्वपि भूतेषु ज्ञानैकाकारतया स्वरूपतोऽवैषम्येण वर्तमानं देहेन्द्रियाद्यधिष्ठातारमत एव तदपेक्षया परमेश्वरं यो जानाति स जानातीत्युच्यते। "यदा भूतपृथग्भावमेकस्थमनुपश्यति" इत्यनेन ज्ञानैकाकारतयाऽविषमस्वरूप एव कर्मणा देवादिशरीरसंसर्गमात्रेण देवमनुष्यादिव्यपदेशगोचरं पार्थक्यं व्यवह्रियते, न तु स्वरूपतः, तदेवं यो वेत्ति तस्य ब्रह्मशब्दवाच्यापहतपाप्मत्वादिलक्षणस्वस्वरूपाविर्भावो भवतीत्युच्यते। यद्वा-चिदचित्सङ्घातरूपे भूतवर्गे देवमनुष्यादिभेदमेकस्मिन्नंशेऽचिदंशमात्रे वर्तमानमनुपश्यति तत एव प्राकृतादेवांशात्पुत्रपौत्रादि जगद्विस्तारं च पश्यति, न त्वात्मस्वरूपे, तत् स तदाविर्भूतस्वरूपो भवतीति। "अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः। शरीरस्थोऽपि कौन्तेय! न करोति न लिप्यते॥" इत्यनेनान्तर्यामिणः परमात्मनः शरीरसन्निहितस्यापि न शरीरदोषैर्लेप इत्युच्यते। यद्वा-जीवात्मनः शरीरसन्निहितस्यापि न तदीयबाल्ययौवनजरादिदोषानुषङ्ग इत्युच्यते। वस्तुतो विज्ञानघनस्वरूपस्यात्मनः प्रकृतितः परत्वेन परमात्मेति निर्देशः। "यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः। क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत!॥" इत्यत्र शरीरैकदेशे हृदये सन्निहितस्यापि जीवस्य स्वज्ञानप्रभयाऽऽपादतलमस्तकं प्रकाशकत्वमुच्यते, न तु देवाद्यखिलक्षेत्राणामेक एव क्षेत्री प्रकाशक इति। "मद्भावं सोऽधिगच्छति" इति परमसाम्यमुच्यते। "परमार्थस्त्वमेवैको नान्योऽस्ति जगतः पते!। तवैष महिमा येन व्याप्तमेतच्चराचरम्॥ यदेतद्दृश्यते मूर्तमेतज्ज्ञानात्मनस्तव। भ्रान्तिज्ञानेन पश्यन्ति जगद्रूपमयोगिनः॥" इत्यादिना अब्रह्मात्मकस्वतन्त्रविविधवस्तुदर्शनस्य भ्रान्तिकृतत्वमुच्यते न तु ब्रह्मव्यतिरिक्तवस्तुमात्रदर्शनस्य। अयमर्थः—हे जगतः पते! त्वमेवैकः परमार्थः-प्रधानार्थः। कथमहमेकः परमार्थः?, अस्ति हि जगच्चराचरात्मकम्,

म्येनेति। यदिति पदच्छेदः। अत एव-उक्तार्थपरत्व एव। सर्वान्तरात्मत्वमुच्यत इति। सर्वेषामेवान्तः प्रविश्य नियन्तृत्वरूपमन्तरात्मत्वं परमात्मत्वमुच्यते न तु तत्र तत्र भिन्नभिन्नसुखदुःखादिवैचित्र्ययोगिजीवभावः। अयमेवार्थः स्मर्यते च तत्रैव—"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति। भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायये"ति। यश्च मायया भ्रामयति यश्च भ्राम्यमाणो विवशो भवति तयोर्ह्यन्तरं महत्। श्रूयते च—"अस्मान्मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्धः" इति। जीवप्रकरणादाह—यद्वेति। अविषमस्वरूप एवेत्येकशब्दाशयः। पार्थक्यं व्यवह्रियत इति पृथग्भावशब्दाशयः। अयं च वचनार्थः—भूतानां-देवमनुष्यादीनामनुबन्धी यः पृथग्भावो-भिन्नभिन्नव्यवहारगोचरता तं, एकस्थमनुपश्यति-अविषम एव जीवात्मनि पश्यति, दृश्यमानपिण्डगतवैषम्यदृष्टिमात्रेण वैषम्यमात्मस्वपि यो न पश्यतीत्येतदिति। एकस्मिन्नंश इति। एकशब्द एकदेशपर इति भावः। जीवप्रकरणगतत्वं वचनस्य पश्यन्नाह—यद्वेति। ननु परमात्मशब्दः कथं घटेतेत्यत्राह—वस्तुतो विज्ञानेति। आपादतलमस्तकमिति कृत्स्नशब्दाशयः, तथा च वचने कृत्स्नमित्यस्य सर्वांशेनेत्याशय इति बोध्यम्। ननु तथा सति वचनार्थः कः? आह—अयमर्थ इति। प्रधानार्थ इति। अस्ति नाम

भविष्यामः—अपि तु भविष्याम एव। यथाऽहं सर्वेश्वरः परमात्मा नित्य इति नात्र

स्तूये चाहं युष्माभिरेव जगतः पते! इति। सत्यम्। अस्ति चराचरं तथापि न तत्पृथक्सत्तामर्हति, यत्तत्त्वकोटौ त्वमिव पृथग्गणनार्हं स्यात्, तद्ध्युपसर्जनम्। कुतः?। तवैष महिमा—विभूतिः। तत्कथमुच्यते?। येन त्वयाऽऽत्मतया व्याप्तमेतच्चराचरम्। तस्मात्त्वमेक एव परमार्थः—स्वेतरसमस्तवस्तुप्रकारतया प्रधानार्थः। अन्यथा व्याख्याने युष्मच्छब्दस्य लक्षणादोषः। विना लक्षणां विवक्षितार्थासम्भवात्। इह हि महावराहो भगवानीश्वरः सम्बोध्यते। सम्बोध्यतावच्छेदकत्वोपलक्षितधर्मविशिष्टस्य परमते सत्यत्वासम्भवात्। ज्ञप्तिमात्रं हि सत्यम्। जगतः पते इति चानर्थकम्। नहि मिथ्याभूतस्य जगतः पतिरित्येतदैश्वर्यम्। भ्रमाधिष्ठानत्वमेवान्तत उक्तं स्यात्कैयं स्तुतिः। यदेतद्दृश्यते चराचरं तदखिलं ज्ञानात्मनस्तव मूर्त-तनुः। एतत्—तव तनूरूपम्, अयोगिनो जगद्रूपं भ्रान्त्या पश्यन्ति—स्वातन्त्र्येण तत्तद्रूपं पश्यन्ति, नतु त्वदात्मकम्। न केवलमेतावान्भ्रमः, किन्तु ज्ञानस्वरूपमखिलं जगदेतत्—ज्ञानैकाकारतया सर्वत्रैकरूपमप्यात्मवर्गं देवमनुष्यादिनानार्थाकारं पश्यन्ति च। अयमपरो भ्रमः। एते ह्यबुद्धयः—अविवेकिनः। देहात्मविवेकोऽप्येषां नास्ति। त इमे मोहसंप्लवे भ्राम्यन्ते। ये तु ज्ञानविदः—देहातिरिक्तज्ञानैकाकारात्मस्वरूपविदः। शुद्धचेतसश्च—अखिलात्मकसर्वानुसन्धानयोग्यमनोनैर्मल्यशालिनश्च। ते त्वखिलं जगत्—देवादिविभिन्नमिदमखिलं ज्ञानात्मकं त्वद्रूपं च पश्यन्ति—देवादिविषमाकारमवधूय ज्ञानैकाकारं त्वदात्मकं च पश्यन्तीति। "तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्। विज्ञानं परमार्थो हि द्वैतिनोऽतथ्यदर्शिन" इत्यनेनाप्यात्मनां प्रकारैक्यमुच्यते न व्यक्त्यैक्यम्। अयमस्यार्थः—आत्मनोऽन्यस्य वा पश्चादेर्देहे निवसतोऽप्यात्मतत्त्वस्य यन्निष्कृष्टस्वरूपं विज्ञानम् एकमयं हि—समानं हि। स्वार्थे मयट्। तस्मात् द्वैतिनोऽतथ्यदर्शिनः—तादृशेऽप्यविषमे आत्मस्वरूपे देवोऽयं मनुष्योऽयमिति विषमदृष्टयो भ्रान्ता इति। "यद्यन्योऽस्ति परः कोऽपी"त्यत्राप्ययमेवार्थः। यदि मत्तः परः कश्चिन्मत्तो विलक्षणाकारः स्यात्तदाहमीदृशोऽयं चान्यादृश इति निर्देष्टुं शक्येत, न तथा, ज्ञानैकाकारतया निष्कृ-

पदार्थान्तरम्, परप्रकारत्वैकस्वभावतया न प्रधानः पदार्थः, द्वारं हि तत्पदस्य गतावर्थे, नहि द्वारं प्रधानः पदार्थ इति भावः। व्यज्यते चैतद्वचनशेषव्याख्यानतः। त्वमिवेति। प्रधानपदार्थतयेत्येतत्। **स्वेतरसमस्तवस्तुप्रकारतयेति**। स्वेतरसमस्तवस्तुप्रकारो यस्य तत्तयेत्यर्थः। अन्यथेति। त्वमेव यथार्थभूतोऽन्यदखिलं मिथ्येत्यर्थवर्णने। विवक्षितार्थेति। विवक्षितश्चार्थो निर्विशेषज्ञप्तिमात्रसत्यत्वलक्षणः। कुतो विवक्षितार्थासम्भवस्तदुपपादयति—**इह हीत्यादिना**। दूषणान्तरमाह—**जगतः पते इति चानर्थकमिति**। चकारो भिन्नक्रमः। अनर्थकं चेत्यन्वयः। इदं चापरं दूषणम्—अनृतत्वं चेज्जगतो विवक्षितं, तदा 'त्वय्येषा कल्पना यस्मिन् भासते तु चराचर'मिति वचनशैल्या भाव्यमिति। ज्ञानस्वरूपमखिलमित्यादिवचनस्यार्थमाह—**न केवलमित्यादिना**। इतीति। अयमर्थ इत्यनेन पूर्वेण सम्बध्यते। **आत्मनां प्रकारैक्यमुच्यत इति**। आत्मनां यः प्रकारः—स्वरूपनिरूपको धर्मस्तेनात्मनां ऐक्यं—अवैषम्यमुच्यत इत्यर्थः। व्यक्त्यैक्यम्—आत्मव्यक्त्यैक्यम्। **अयमेवार्थ इति**। योऽयमुक्तो बाह्यविषमाकाराश्लेषलक्षणः। **मत्तो विलक्षणाकार इति**। अन्यशब्दविवरणमेतत्। **एष इत्यस्य विवरणमीदृशप्रकार इति**।

संशयः, तथैव भवन्तः क्षेत्रज्ञा आत्मानोऽपि नित्या एवेति मन्तव्याः। एवं भग-

---

ष्टात्मस्वरूपस्य सर्वत्रैकरूपत्वात्। तथाच केनाकारेणाहमीदृशाकारः, अयं चान्याकार इति शक्येत वक्तुमिति। अन्यथा–अन्यपरशब्दयोर्वैयर्थ्यं स्यात्। "वेणुरन्ध्रविभेदेने"त्यत्र वेणुरन्ध्रेषु प्रविशतामविषमाणामपि वाय्वंशानां यथा रन्ध्रोपाधिनिबन्धनः षड्जादिसंज्ञाभेदः, एवमविषमाणामपि तत्तदात्मनां देवादितत्तत्पिण्डविशेषसम्बन्धनिबन्धनो देवादिसंज्ञाभेदः, न वस्तुतस्तद्भेदस्तस्मिन्नित्युच्यते, न त्वात्मस्वरूपैक्यम्। दृष्टान्तेऽपि हि न स्वरूपैक्यम्। वाय्वंशा हि भिन्नभिन्ना एव। न ह्येक एव वाय्वंशः सर्वत्र वेणुरन्ध्रे प्रविशति। वायुत्वेन तेषामैक्यमिवेहाप्यात्मत्वेनैक्यमविशिष्टम्। "सोऽहं स च त्व"मित्येतदपि प्रक्रान्तस्यात्मनां ज्ञानैकाकारतयैकप्रकारत्वस्योपसंहारपरम्। "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यती"त्यत्रापि नात्मपरमात्मनोः स्वरूपैक्यमुच्यते, किन्तु मुक्तिदशायां परमसाम्यनिबन्धनं प्रकारैक्यमुच्यते। अयमस्यार्थः—देवमनुष्यादिविविधभेदजनके कर्मणि निःशेषं विनष्टे आविर्भूतस्वस्वरूपतया ब्रह्मणा सह परमसाम्यमापन्ने आत्मनि इदानीन्तनं परस्माद्ब्रह्मणो भेदं देवमनुष्यादिरूपं वैरूप्यं कः करिष्यति। इदमेवाव्यवहितपूर्वश्लोकेऽप्युक्तम्—"तद्भावभावमापन्नस्ततोऽसौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥" इति। अत्र तद्भावभावमापन्न इति परब्रह्मणा मुक्तस्यात्यन्तसाम्यमुच्यते। यतोऽयं मुक्तस्तस्य परमात्मनो यो भावः–अपहतपाप्मत्त्वादिस्तस्य भावं–आविर्भावमापन्नः, अत एवायं परमात्मना अभेदी–ज्ञानानन्दाद्याकारैरेकप्रकारो भवति। यश्च प्राक्तनो देवादिरूपभेदः स तु कर्मनिबन्धन इति तदर्थः। अन्यथा भावशब्दान्तरस्य वैयर्थ्यम्, अभेदी भवतीत्यस्य पौन-

---

अन्यशब्दस्य विवरणमन्याकार इति। युक्तं चैतत्। अन्यथा अहमयमित्यत एव पर्याप्तेर्वैयर्थ्यमनयोः पदयोः स्यात्। अन्यपरशब्दयोर्वैयर्थ्यं स्यादिति। एषः अन्यः इत्यनयोश्च वैयर्थ्यं स्यादित्यपि योज्यम्। न त्वात्मस्वरूपैक्यमिति। नात्मान्तरराहित्यमित्यर्थः। असत्पक्ष एव दृष्टान्तानुगुण्यमपीत्याह—दृष्टान्तेऽपि हि न स्वरूपैक्यमिति। वायुव्यक्त्यैक्यमिति यावत्। वायुत्वेन तेषामैक्यमिवेति। एतेन वचनेन वायोरित्येकवचनेन वायावेकत्वमवगम्यत इति शङ्का परास्ता। जातावेकवचनात्। विविधेति। उपसर्गार्थः। कर्मणीति। अज्ञाने इत्यस्यार्थः। ज्ञानादन्यदज्ञानमिति समासः। आत्यन्तिकमित्यस्यार्थो निःशेषमिति। इदानीन्तनमिति। अस्मिन्नेवार्थे शब्दस्वारस्यमपि। अस्ति नाम सर्वदैवात्मनो ब्रह्मणश्च मिथो व्यक्तिभेदः, स च न विविधः, विविधश्च देवत्वादिरौपाधिकः, उपाधिश्च कर्म, तस्मिन्नपगते, असन्तं तं भेदं को व्यवहरेत्, यो नामास्ति व्यक्तिभेदः स तु सर्वदैव समान इति नाज्ञानमूलमित्यसन्तमित्यस्य वीत्युपसर्गस्य च स्वारस्यं बोध्यम्। इदमेव–प्रकारैक्यमेव।, वचनार्थमाह—यतोऽयमित्यादिना। तत इत्यस्य श्रवणाद्यत इत्यस्याध्याहारः स्वरससिद्ध इत्यभिप्रायः। अज्ञानकृत इत्यस्य व्याख्यानं कर्मनिबन्धन इति। अज्ञानशब्दो न भवदभिमतभावरूपाज्ञानपरः, किन्तु कर्मपर इति भावः। अन्यथा–स्वरूपतादात्म्यपरत्वे। भावशब्दान्तरस्येति। तद्भावमापन्न इत्येव पर्याप्ते तद्भा-

वतः सर्वेश्वरादात्मनां परस्परं च भेदः पारमार्थिक इति भगवतैवोक्तमिति प्रती-

रत्तयं च । "अन्यद्रव्यं च नैति तद्रव्यता"मित्यनेन विरोधश्च स्यात् । व्याख्यातार्थ एव "निरञ्जनः परमं साम्यमुपैति" "ब्रह्मणो महिमानमाप्नोति" "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादीनामानुगुण्यम् । "तस्मान्न विज्ञानमृतेऽस्ति किञ्चि"दित्यादिना आत्मस्वरूपस्य ज्ञानैकाकारस्य देवादिशरीरप्रवेशेऽप्येकाकारतया सततैकरूपत्वं वासुदेवात्मकत्वं चोच्यते । अयमर्थः—यस्माज्जगति परिदृश्यमानेऽचित्प्रपञ्चे न किमपि सततैकरूपं, स्वरूपतो विकारित्वात्सर्वस्य, तस्माद्विज्ञानस्वरूपादात्मनोऽन्यत्किमपि कदाऽप्येकरूपं वस्तु नास्ति, एकरूपमेव विज्ञानं कर्मभेदकृतबुद्धिभेदाद्देवोऽहं मनुष्योऽहमिति बहुधा विभाव्यते । यत्तु विशुद्धं ज्ञानम्–आत्मस्वरूपं, तत्तु कर्मापगमादेव प्राकृतमलसम्बन्धरहितं तत्कृतशोकादिरहित-मुपचयापचयानर्हतयैकस्वरूपं सदा स्वभावतोऽप्यविषमं भवति । तदेतन्न स्वतन्त्रं, वासुदेवश-रीरतया वासुदेवात्मकं, नहि जगति किमपि वासुदेवानात्मकमस्तीति ।

तथा—शारीरकमीमांसायामंशाधिकरणे "ज्ञाज्ञौ द्वावजावीशनीशौ" इति श्रुत्यनुरोधेन किं जीवः परमात्मनोऽत्यन्तभिन्नः ? उत "तत्त्वमसी"त्यादिश्रुत्यनुरोधादभिन्नः ? इति संशये परमात्मनो विशेषणतयांऽशो जीवः, अन्यथोभयविधनिर्देशसाङ्गत्यस्य दुर्घटत्वादित्युच्यते । इदमधिकरणमग्निविस्फुलिङ्गयोरिव जीवेश्वरयोरंशांशिभावपरतया व्याचक्षाणाः परे प्रष्टव्याः । कथमीश्वरस्यांशा जीवाः ? । जीव इवेश्वरोऽपि हि ब्रह्मण्यविद्यया कल्पितः । नहि रज्जावेव परिकल्पितयोः सर्पभूदलनयोर्मिथो भवेदंशांशिभावः । ईश्वरत्वजीवत्वोपाध्योरविद्यान्तःकरण-

वभावमापन्न इति भावान्तरशब्दप्रयोगो व्यर्थ इति भावः । पौनरुक्त्यं चेति । तद्भावमापन्न इत्य-नेनैवैतदर्थसिद्धेरिति यावत् । वचनान्तरविरोधश्चेत्याह—अन्यद्रव्यमिति । श्रुत्यानुगुण्यमपि स्वोपद-र्शित एवार्थ इत्याह—व्याख्यातेति । भावानुगुणं वचनार्थमाह—अयमर्थ इति । वचने वस्तुशब्दः प्रकर-णात्सततैकरूपे प्रवर्तेत इत्यभिप्रायेणाह—न किमपि सततैकरूपमिति । सर्वो हि बाह्योऽर्थोऽनुक्षण-मन्यथाऽन्यथा विपरिवर्तमानोऽन्यान्यशब्दैर्व्यवह्रियमाणः पूर्वपूर्वार्थापोहलक्षणो भवतीति विचार्यमाणे नास्तिशब्दार्हे तस्मिन्वस्तुशब्दो न स्वरसगतिकः, किन्तु सततैकरूप एवेति निगूढाशयः । एकमित्य-स्यार्थ एकरूपमिति । निजकर्मभेदविभिन्नचित्तैर्बहुधा विभाव्यमित्यस्यार्थः कर्मभेदकृतेत्यादि विभा-व्यत इत्यन्तम् । प्राकृतमलसम्बन्धरहितमिति विमलमित्यस्यार्थः । तत्कृतशोकादिरहितमिति विशोकमित्यस्यार्थः । उपचयापचयानर्हतयैकस्वरूपमित्येकमित्यस्यार्थः । सदा स्वभावतोऽप्यविषममिति सदैकमित्यस्यार्थः । तदेतदित्यादि स वासुदेव इत्यस्यार्थः । नहीत्यादि न यतोऽन्यदस्तीत्यस्यार्थः ।

परैराशङ्कितां श्रुतिस्मृत्यनुपपत्तिं विशिष्टाद्वैते श्रुतिस्मृत्योर्हार्दमुपदर्श्य तदनुगुणार्थोपवर्णनेन परिहृत्य तदेतद्दृढयन् तत्रैव सूत्रकारस्यापि हार्दमित्याह—तथेत्यादिना । उभयविधनिर्देशसाङ्गत्य-स्येति । यश्च भेदेन व्यपदेशः 'ज्ञाज्ञा' वित्यादिः, यश्चाभेदेन निर्देशः 'तत्त्वमसी'त्यादिः, तदुभये-त्यर्थः । परैः प्रदर्शितं सूत्राशयं प्रतिक्षिपति—इदमित्यादिना । अग्निविस्फुलिङ्गयोरिति । "यथा सुदीप्तात्पावकाद्विस्फुलिङ्गा" इति श्रुत्यर्थ इहाभिप्रेतः । कथमिति प्रतिक्षेपे, नेत्येतत् । नेत्यत्र निमित्त-माह—जीव इवेत्यादि । कल्पित इति । ननु स्यात्कल्पितः किं तेनेत्यत्राह—नहीति । ईश्वरत्वजीव-

यते, अज्ञानमोहितं प्रति तन्निवृत्तये पारमार्थिकनित्यत्वोपदेशसमये अहं त्वं इमे

योरुत्कर्षापकर्षसत्त्वेऽपि न तदवच्छिन्नयोस्तयोरंशांशिभावः। ब्रह्मापेक्षयांशत्वोपपादनमपि नोचितं, ममैवांश इत्यादावस्मच्छब्देनेश्वरत्वविशिष्ट एवांशित्वबोधनात्। यदि चासत्पदस्य लक्षणया निर्विशेषसन्मात्रं ब्रह्मैवोपस्थाप्यत इत्यभ्युपगम्यते, तथाऽपि लक्षणाश्रयणमेवावशिष्यते, नेष्टलाभः। अधिष्ठानापेक्षयाऽध्यस्तेंऽशत्वासम्भवात्। नह्यधिष्ठानं स्थाणुं प्रत्यध्यस्तः पुरुषोंऽशः। किञ्चाग्नेरिव विस्फुलिङ्गः कथमीश्वरस्य जीवोंऽशो भवेत्, स हि निरवयवः। अंश इवेत्यंशत्वममुख्यं चेदिष्येत, सूत्रस्वारस्यभङ्गः। अगतिकगतिर्हि सा। किञ्च–अंशत्वं कस्मिन्? । जीवे। स च चैतन्यानतिरिक्त इति स्वात्मना स्वस्य कथमंशत्वम्। नन्वन्तःकरणोपाधिविशिष्टचैतन्यमेव जीव इति विशिष्टस्य तस्यांशत्वमिति चेत्। सैवाशङ्का। ब्रह्म हि चैतन्यं ततोऽनतिरिक्तमेव। न चोपाध्यनुपहितस्योपाध्युपहितमंशः। निरंशे तस्मिन्नुपाध्युपहितानुपहितभागाभावात्। नच यदेवोपाध्यनुपहितमासीत्तदेवोपाध्युपहितमिति तयोरंशांशिभावः। जीवभावस्यानादित्वेन कालभेदेन तदसम्भवात्। ननु–अखण्डेऽपि चैतन्ये विभाद्युपाधिसम्बन्धतदभावाभ्यामुपाध्युपहितानुपहितदेशसम्भवेन तयोरंशांशिभाव इति चेत्। प्रतिनियतदेशभेदयोर्मिथः कथं घटेत तद्भावः। ननु–मायायाः परिणतिरन्तःकरणं मायैकदेशो भवितुमर्हतीति मायावच्छिन्नचैतन्यस्येश्वरस्यान्तःकरणावच्छिन्नचैतन्यं जीवोंऽशो भवितुमर्हतीति चेन्न। तयोरंशांशिभावेऽपि तदवच्छिन्नयोरंशांशिभावस्य मुख्यस्यासम्भवात्।

स्वोपाध्योरविद्यान्तःकरणयोरिति। यथाक्रमं बोध्यम्। उत्कर्षापकर्षसत्त्वेऽपि न तदवच्छिन्नयोस्तयोरिति। स्यान्नामाविद्यान्तःकरणयोरंशांशिभावः, अविद्याया एकांशपरिणतिरन्तःकरणमिति, तथापि तदवच्छिन्नयोस्तत्त्वं तु वचनमात्रमेवेति भावः। ममैवांश इति। "ममैवांशो जीवलोके जीवभूतः सनातनः" इत्यादिवचने। ईश्वरत्वविशिष्ट एवेति। सर्वेश्वरस्य हीदं वचनम्। यच्च पावकविस्फुलिङ्गदृष्टान्तपूर्वमंशांशिभावोपपादनं तत्परेषां दुर्घटमित्याह—किञ्चेति। ननूपाधिसम्बन्धात्तथोच्यत इत्याशङ्क्य परिहरति—अंश इवेति। गौणोऽपि निर्वाहो न घटत इत्याह—किञ्चेति। चैतन्यानतिरिक्त इति। नहि यत्किञ्चिदुपहितत्वमात्रेणान्यत्वं वस्तुन इति भावः। स्वात्मना स्वस्य कथमंशत्वमिति। स्वस्यैव स्वयमंशः कथं भवेदित्यर्थः। ननु जीवस्य स्वरूपतो ब्रह्मणाऽविशेषेऽप्युपाधिविशिष्टवेषेणांशत्वमुच्यत इत्याशङ्कते—नन्विति। सैवाशङ्केति। कथं स्वस्यैव स्वयमंशः स्यादित्याशङ्का। ननु–उपाध्यनुपहितः कश्चिदंशः, अपरस्तूपाध्युपहित इति विभेदादंशांशिव्यवस्थेत्याशङ्कामनूद्य परिहरति—नचेति। निरंशे तस्मिन्निति। अन्यथा सावयवत्वापत्तिरिति बोध्यम्। ननु निरवयवेऽपि कालभेदेनोपाधिसम्बन्धासम्बन्धाभ्यामंशांशिव्यवस्थेत्याशङ्कामनूद्य परिहरति—नच यदेवेति। ननु निरवयवाकाशवादिनां पक्षे घटमठादिमूर्तद्रव्यसम्बन्धभेदेन प्रदेशभेदव्यवस्थेव निरवयवेऽपि ब्रह्मण्युपाधिसम्बन्धतद्राहित्याभ्यां प्रदेशभेदव्यवस्थयांऽशांशिव्यवस्थेत्याशङ्कते—नन्विति। देशसम्भवेन–देशभेदसम्भवेन। प्रतिनियतेति। ईदृशश्चेत् प्रदेशभेद इह विवक्षितः सच प्रतिनियत एवेति नित्यविभिन्नदेशयोर्विरुद्धयोरिव कथमंशांशिभाव इति भावः। नन्वीश्वरोपाधेरेकदेशो जीवोपाधिरिति तत्तदुपहितयोरीश्वरजी-

सर्वे वयमिति व्यपदेशात् । औपाधिकात्मभेदवादे ह्यात्मभेदस्यातात्त्विकत्वेन

औपचारिकस्य तस्याश्रयणं त्वगतिकः पक्षः । ननु–तव वा जीवः कथमंशो भवेदीश्वरस्य । विशिष्टैकदेशत्वाद्विशेषणस्य जीवस्य चेश्वरं प्रति विशेषणत्वादिति चेत् । विशेषणस्येव विशेष्यस्याप्येकदेशत्वादीश्वर एव किमित्यंशो न स्यात् । सत्यं विशिष्टस्यैकदेशो विशेष्यम्, तावता कं प्रत्यंशत्वमापाद्यते ईश्वरस्य ?। किं विशेषणं जीवं प्रति ?, किंवा विशिष्टं प्रति ? । न प्रथमः–नहि विशेषणस्यैकदेशो विशेष्यम् । द्वितीये तु–एकदेशस्याप्यंशत्वमप्राधान्यविवक्षया प्राधान्यविवक्षया चांशित्वम् । इत्थं च विशेष्यस्यैकदेशत्वेऽपि नाप्राधान्यविवक्षा, तस्यैव प्रधानत्वात् । विशेषणस्य त्वप्रधानत्वादंशत्वोपपत्तिः । चिदचिद्विशिष्टमेव तु ब्रह्मस्वरूपमित्युक्तमेव । यत्तु–"आत्मकृते"रित्यत्र सृज्यत्वं स्रष्टुः परमात्मन एवोक्तं, तदपि सूक्ष्मचिदचिद्विशिष्टं स्वात्मानं परमात्मा स्वयं सङ्कल्पमात्रेण स्थूलचिदचिच्छरीरकमातनोतीत्यनवद्यम्। "तदनन्यत्वमारम्भणशब्दादिभ्य"इत्येतदप्येतेनैव सुसङ्गतम् । "आत्मेति तूपगच्छन्ति ग्राहयन्ति चे"त्यत्र–उपासकेनोपास्यस्य परमात्मनोऽर्थान्तरत्वेऽपि स्वात्मानं प्रत्यात्मतया स्वस्य च तच्छरीरतया तदपृथक्सिद्धविशेषणत्वेन तस्यैवाहङ्कहसीमाभूमितयाऽहमित्येवोपास्यः परमात्मेत्युच्यते । तस्मान्न किमप्यनन्यथासिद्धं वचनम् । यत्तु–"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्यस्यान्यथा योजनया व्याख्यानम् । तदसत् । "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्यत्र स्वरसतः प्रतीयमानं पादद्वयस्याप्येकवाक्यत्वं त्यक्त्वा "पृथगा-

---

वयोरंशांशिभावः सङ्गत एवेत्याशङ्कते—ननु मायाया इति । परः शङ्कते—नन्विति । तवेति । जीवेश्वरयोस्तादात्म्यमनभ्युपगच्छतस्तवेत्यर्थः । विशेष्यस्याप्येकदेशत्वादिति । विशिष्टापेक्षयेति बोध्यम् । सत्यमिति । विशेषणस्येव विशेष्यस्यापि विशिष्टापेक्षयैकत्वे न कश्चिद्विवादः । तुल्यन्यायादिति भावः । यदापाद्यते तावतेश्वरस्यांशत्वं तत्तु न घटत इत्याह—तावतेत्यादिना । कं प्रतीति । कमंशिनं प्रत्यंशत्वमीश्वरस्यापाद्यत इत्यर्थः । द्वितीये त्विति । चिदचिद्विशिष्टेश्वरापेक्षयेश्वरस्य विशेष्यांशत्वादंशत्वं स्यादिति चेदित्यर्थः । अप्राधान्यविवक्षयेति । एकदेशत्वमात्रं नांशव्यवहारे निमित्तम्, किन्त्वप्रधानैकदेशत्वमिति भावः । ननु विशेषणं विशिष्टैकदेशो नाम, ब्रह्म च ज्ञानानन्दस्वरूपमात्रम्, तज्जीवो ब्रह्मणः कथमंशो भवेदित्यत्राह—चिदचिद्विशिष्टमेव तु ब्रह्मेति । एवकारेण चिदचिद्विभक्तब्रह्मस्वरूपवादः प्रतिक्षिप्तः । तदपीति । कथं स्वस्य नित्यस्य सतः सृजिकर्मत्वं कथं वैकस्वरूपस्य सतः कारणत्वकार्यत्वोभययोग इत्याशङ्कां परिहरन्नाह—सूक्ष्मचिदचिद्विशिष्टं स्वात्मानं स्थूलचिदचिच्छरीरकमातनोतीति । स्वयं सङ्कल्पमात्रेणेत्येतच्छ्रौतस्य स्वयंपदस्य विवेचनम् । आतनोतीत्यनवद्यमिति । आतनोतीत्यभिप्रायकतयाऽप्रसक्तकलङ्कसम्पातमिति भावः । एतेनैवेति । एतेनैवाभिप्रायेण । सूक्ष्मचिदचिद्विशिष्टत्वस्थूलचिदचिद्विशिष्टत्वाभ्यां स्वरूपभेदाभ्यां ब्रह्मण एवोपादानत्वोपादेयभाव इत्येव श्रुतेरभिप्रायेणेति यावत् । सुसङ्गतमित्यतः परेषां त्वसङ्गतमिति व्यज्यते । उपासकेनेति । उपास्य इत्युत्तरेण सम्बन्धः । अर्थान्तरत्वेऽपीति । स्वस्मादिति शेषः । स्वात्मानं प्रत्यात्मतयेत्यहङ्कहसीमाभूमि-

---

१ "तदात्मानं स्वयमकुरुते"ति श्रुतौ श्रूयमाणस्य ।

तत्त्वोपदेशसमये भेदनिर्देशो न सङ्गच्छते । भगवदुक्तात्मभेदः स्वाभाविक इति

त्मानं प्रेरितारं च मत्वे"त्यस्य पूर्वेणान्वयकल्पनस्यानौचित्यात् । "भ्राम्यते हंसचक्रे" इत्यत्र स्वरसतः प्रतीयमानस्य वाक्यविश्रामस्य त्यागानौचित्याच्च । यच्च—"पृथगात्मानं प्रेरितारं च मत्वे"त्यत्र स्वरसतः पार्थक्यप्रतियोगित्वे मिथः प्रतीयमाने पदादनुपस्थितस्य कार्यकारणसङ्घातरूपार्थस्य पार्थक्यप्रतियोगिताकल्पनं, तत्कुकल्पनमेव । यत्तु—"द्वा सुपर्णे"ति श्रुतिः क्षेत्रज्ञान्तःकरणपरतया व्याख्याता । अत्रोच्यते । प्रत्यगात्मपरमात्मपर एवायं मन्त्रः, "समाने वृक्षे पुरुषो निमग्न" इत्यव्यवहितमन्त्रेणैकार्थ्यात् । समाने वृक्षे इति मन्त्रे तु पुरुषशब्दः श्रूयते, पुरुषशब्दस्तु नान्तःकरणमवगमयेत् । पश्यतीति निर्देशस्वारस्याच्च नान्तःकरणम् । शोचतीति निर्देशस्याप्यस्वारस्यं, नहि जडे शोकादीनां प्रसङ्गः । अन्यथास्मिन्मन्त्रे परमात्मोच्यते, "अन्यमीश"मिति श्रुतेः । स्वाद्वत्तीति यदत्तृत्वं श्रूयते तदन्तःकरणे न घटेतापि, चक्षुरादीनामिवान्तःकरणस्यापि करणग्रामनिविष्टत्वात् । देहसंस्थस्यैव क्षेत्रज्ञस्यानश्नत्त्वमपि न घटेत । यत्तु—पैङ्गिश्रुतिरेवैवं व्याचष्टे इति । तन्न पैङ्गिश्रुत्यर्थापरिज्ञानविजृम्भितम् । तत्र हि सत्त्वमिति बद्धजीव उच्यते, "द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इति चेतनपर्यायत्वावगमात् । प्रयोगश्च—"वन्यान्विनेष्यन्निव दुष्टसत्त्वान्" इति । क्षेत्रज्ञ इति च परमात्मा । अर्थान्तरप्रसिद्धप्राणाकाशादिशब्दानामिवावयवार्थपौष्कल्येन क्षेत्रज्ञशब्दस्य परमात्मनि वृत्तिसम्भवात् । सर्वज्ञः परमात्मा हि सर्वं क्षेत्रं विविच्य सम्यग्वेत्ति । तथाच स्मर्यते महाभारते

त्वोपपादकम् । स्वस्य च तच्छरीरतयेत्येतत् स्वस्याहङ्कृद्सीमाभूमित्वाभावोपपादकम् । अनौचित्यादिति । अस्ति चास्मिन्मन्त्रे वाक्यभेदः, तद्विभागज्ञापकक्रियापदयोगश्च पूर्वार्धोत्तरार्धावसानयोः, तत्स्वरसतो गम्यते पूर्वार्धोत्तरार्धभेदेन वाक्यभेद इति भावः । स्वरसतः प्रतीयमानवाक्यभेदानुपमर्देन परैः कृतं व्याख्यानान्तरं प्रतिक्षिपति—यच्चेत्यादिना । स्वरसतः पार्थक्यप्रतियोगित्व इति । आत्मानं प्रेरितारं च पृथङ्मत्वेति ह्यन्वयः स्वरसतोऽवगम्यते, अत एव पार्थक्यं मिथ इति च, पार्थक्यप्रतियोगिसमर्पकपदान्तराश्रयणादिति भावः । कार्यकारणसङ्घातस्येति । देहस्येति यावत् । अव्यवहितमन्त्रेण—अव्यवहितानन्तरमन्त्रेण । ऐकार्थ्यात्—ययोर्द्वयोः प्रथममन्त्रे शरीराख्यैकवृक्षयोगो निरूपितस्तयोरेकस्य कर्मफलभोक्तुः शोकमोहाभिभूतता, तदपगमश्च तस्य, तयोरपरस्यानश्नतो दर्शनाद्भवतीति हि द्वितीयमन्त्रेण प्रतिपाद्यते, तत्प्रथमस्य द्वितीयेनैकार्थ्यमवश्यं वक्तव्यं, तच्च न घटेतेति भावः । ननु द्वितीयेऽपि क्षेत्रज्ञान्तःकरणयोरेव प्रसङ्ग इति नैकार्थ्यहानिरित्यत्राह—पुरुषशब्दः श्रूयत इति । स्वारस्याच्चेति । स्वारस्यभङ्गापत्तेरिति यावत् । द्रष्टृत्वं हि पुरुषस्य; न जडस्यान्तःकरणस्येति भावः । एवमन्तःकरणपरतां व्युदस्य क्षेत्रज्ञपरतामन्यशब्दस्य व्युदस्यति—अन्यथेति । अन्यशब्देन परमात्मोच्यत इति यावत् । अव्यवहितमन्त्रैकार्थ्यपर्यालोचनया पराभिप्रेतार्थपरतां नेत्युक्तम्, अथैतन्मन्त्रस्थपदपर्यालोचनायामपि नेत्याशयेनाह—स्वाद्वत्तीति । नह्याभ्यन्तरं करणमित्येतावता बाह्येभ्यः करणेभ्यो विशेषः । न वा करणस्य कर्तृता, कर्तृकरणविभागो हि नियतो लोकेऽपीति भावः । अनश्नत्त्वमिति । अनश्नन्निति पदं श्रुत्याहृतार्थं स्यादिति भावः । प्राणाकाशादिशब्दानामिवेति । प्राणयितृत्वपूर्तेः

श्रुतिरप्याह—"नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्"

मोक्षधर्मे—"क्षेत्राणि च शरीराणि ज्ञानानि च शुभाशुभे । तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥" इति । तथा तत्रैव—"ततस्त्रैगुण्यहीनास्ते परमात्मानमञ्जसा । प्रविशन्ति द्विजश्रेष्ठाः क्षेत्रज्ञं निर्गुणात्मकम् ॥ सर्वावासं वासुदेवं क्षेत्रज्ञं विद्धि तत्त्वतः ।" "विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः । एकश्चरति क्षेत्रेषु स्वैरचारी यथासुखम् ॥" इति । एवं तत्रैव कपिलासुरिसंवादे स्मर्यते—"ज्ञानानामासुरे क्षेत्रे क्षेत्रज्ञो द्रष्टा शुचिरुपेक्षकः ज्ञातृको बुध्यमानाप्रतिबुद्धयोः परममृतं विदित्वा निरवयवमनामयमसाद्दुःखाद्विमुच्यते एव" इति । अस्ति क्षेत्रे क्षेत्रज्ञः सच सर्वद्रष्टा शुचिरुपेक्षकः सर्वस्य ज्ञाता । तं बुध्यमानाप्रतिबुद्धयोश्चिदचितोः परं निरवयवमनामयममृतं विदित्वैतस्माद्दुःखाद्विमुच्यत इति तदर्थः । अत्र चिदचिद्विलक्षण्योक्तेः क्षेत्रज्ञः परमात्मेति सिध्यति । तत्रैव वचनान्तरमपि—"एतस्माद्वर्गादपवृत्तोऽपवर्गदः क्षेत्रज्ञः शुचिरुपेक्षको बुध्यमानाप्रतिबुद्धयोः परस्ता"दिति । अत्र—एतस्माद्वर्गादपवृत्त इति पञ्चविंशतितत्त्वतो बहिर्भूतत्वमुच्यते । पूर्वं हि पञ्चविंशतितत्त्वं वर्गशब्देनोक्तम् । एवं तत्रैव—"अन्यदुदकमन्यत्पुष्करपर्णं तथाऽन्यत्क्षेत्रमन्यः पुरुषः पञ्चविंशकः, अन्यश्चास्मात्क्षेत्रज्ञः ॥" एवम्—"आसुरे अन्यद्द्रव्यमन्यः पुरुषः पञ्चविंशतितत्त्वमन्योऽस्मात् क्षेत्रज्ञः" इति च । सनत्कुमारनारदसंवादे—

प्रकाशपूर्तेश्चावयवार्थपूर्त्या यथा परमात्मनि मुख्यवृत्तिकास्तथा क्षेत्रज्ञशब्दोऽप्ययमिति भावः । वृत्तिसम्भवादिति । मुख्यवृत्तिसम्भवादित्यर्थः । कथमवयवार्थपौष्कल्यं, तदाह—सर्वज्ञ इत्यादि । क्षेत्रज्ञशब्दस्य परमात्मपरतया व्याख्यानं केवलं मतिकौशलं तवेत्याशङ्कां वारयन्प्रमाणमाह—तथा च स्मर्यत इति । क्षेत्राणि चेति । यानि प्राणिनां गुणोन्मेषनिमेषादिवैचित्र्येणान्यान्यस्वभावान्यसङ्ख्येयानि क्षेत्राणि शरीरलक्षणानि, यानि च तत्तच्छरीरेषु निमग्नस्यानुक्षणं जायमानान्युच्चावचानि ज्ञानानि सङ्कल्पात्मकानि, यानि च तन्मूलकानि शुभाशुभकर्माण्यनवधिकानि तानि सर्वाणि वेत्ति, कथमेतदैश्वर्यमस्य, यदयं योगात्मा, सर्वज्ञत्वादिसर्वेश्वरयोगो ह्यस्य स्वाभाविकः । तदसौ क्षेत्रज्ञ उच्यत इति । निर्वचनमेतत् । अर्थपौष्कल्ययोगान्मुख्यवृत्तिः परमात्मन्युपपादिता । क्षेत्रं तत्कार्यं च सर्वप्रकारेणायं वेत्तीति क्षेत्रज्ञ उच्यत इत्युक्तं भवति । क्षेत्रज्ञं निर्गुणात्मकमिति । यस्मान्निर्गुणोऽयं—न गुणानां वशे, तस्मै क्षेत्रे रमते, तदयमेव क्षेत्रस्वरूपं यथावद्वेद, अन्यस्तु गुणवशगो रमते तस्मिन् स न वेद यथावत्क्षेत्रस्वभावम्, तदयमेव निर्गुणः क्षेत्रज्ञ इति भावः । क्षेत्रज्ञं विद्धि तत्त्वत इति । मुच्यमाना इमे जीवात्मानो यं परमात्मानं विशन्ति तमेव वस्तुतः क्षेत्रज्ञं विद्धि नतु बद्धजीवमिति भावः । सर्वात्मत्वनिरूपणमुखेनास्य जीवात्मनो वैलक्षण्यं प्रदर्शयति—विश्वमूर्धेत्यादि । सर्वे मूर्धानो यस्य मूर्धानस्तथाविध इत्यर्थः । विश्वशब्दोऽत्रासङ्ख्येयपरो वा । कथमेतत् ? यस्मादयमेकः सन् सर्वक्षेत्रेष्वन्तरात्मतया चरति । चरति नाम प्रतिक्षेत्रमन्यान्यः, स तु कर्मवशगो यथाकर्म चरति न तु स्वैरं—स्वेच्छया, अत एवास्य कर्मपाशग्रथितस्येव न दुःखानुषङ्गः, यथासुखं—स्वाभाविकसुखस्वरूपतायां नाणुमात्रमपि व्यत्ययः । बहिर्भूतत्वमुच्यत इति । एतेन बुध्यमानाप्रतिबुद्धयोः परस्तादित्यस्यार्थान्तराश्रयणेऽपीदमनन्यथासिद्धं विशेषणमिति भावः । अन्यदुदकमिति । अनेन दृष्टान्तेन पुरुषस्य

इति। नित्यानां बहूनां चेतनानां य एको नित्यश्चेतनः स कामान् विदधातीत्यर्थः।

"पश्यः पश्यति पश्यन्तमपश्यन्तं च पश्यति। पश्यन्तं पश्यपश्यत्वात्पश्यापश्ये न पश्यतः ॥" इति। अनन्तरं तस्यैव विवरणरूपं वचनम्। प्रकृतिं क्षेत्रं क्षेत्रज्ञं चापरः क्षेत्रज्ञः पञ्चविंशोऽनुपश्यति न तु पञ्चविंशकः क्षेत्रज्ञः प्रकृतिर्वा परं क्षेत्रज्ञं पश्यतीति। तथा मानवः प्रयोगश्च—"योऽस्यात्मनः कारयिता क्षेत्रज्ञं तं प्रचक्षते। यः करोति तु कर्माणि स भूतात्मेति चोच्यते॥" इति। यच्च—पैङ्गिश्रुतावेव सत्त्वक्षेत्रज्ञशब्दयोर्व्याख्यानं—"तदेतत्सत्त्वं येन स्वप्नं पश्यति। अथ योऽयं शारीर उपद्रष्टा स क्षेत्रज्ञः" इति। तस्य चायमर्थः—यस्मात्स्वप्नान्पश्यति तस्माज्जीवः सत्त्वमित्युच्यते। येनेति हेतौ तृतीया। तत्—तस्मादित्यर्थः। यद्वा—येन करणभूतेन स्वप्नान्पश्यति शारीरः परमात्मा स जीव इति। चिदचिच्छरीरकस्य परमात्मनः साक्षाच्चिदचिदवस्थाविशेषान्वयाभावेऽपि शरीरभूतचिदचिद्द्वारा तदन्वयसम्भवाद्द्वारभूतस्य जीवस्य स्वप्नदर्शनकरणत्वोक्तिः सङ्गच्छते। यद्वा—येनेतीत्थंभूतलक्षणे तृतीया, यत्प्रकारः स्वप्नान्पश्यतीत्यर्थः। "काठिन्यवान्यो बिभर्ती"तिवदयं निर्देशः। येनेति पाठः प्रामादिकः, योन्वित्येव पाठ इति कश्चित्।

यत्तु व्याख्यातं बिम्बप्रतिबिम्बभावनिबन्धनं भेदमवलम्ब्य। तदप्यसत्। तथासत्यस्य मन्त्रस्य सङ्गत्यसम्भवात्। ननूक्तैव सङ्गतिः "ब्रह्मैवेदं विश्व"मिति ब्रह्मणः सर्वतादात्म्यस्य पूर्वखण्डे निर्दिष्टत्वात् ब्रह्मणो भोक्तृजीवादभेदे भोक्तृत्वं स्यादिति शङ्का समुदेति, तत्परिहारायायं मन्त्रः प्रवृत्त इति। सत्यमुक्तम्। दुरुक्तं तत्। अनेन मन्त्रेण शङ्काया अपरिहारात्। इत्थं हि समाधिर्भवदभिमतः—ब्रह्मणः सर्वात्मत्वेऽप्यन्तःकरणोपाधौ प्रतिबिम्बितमन्तःकरणतादात्म्याध्यासविशिष्टं चैतन्यं भोक्तृ, स्वात्मना चान्तःकरणतादात्म्याध्यासरहितं तद्बिम्बस्थानीयं न तथेति। नहीदृशवैषम्यज्ञापकमिह मन्त्रे किमपि पदमस्ति। प्रत्युत 'तयोरन्य'

विकारिद्रव्यसम्बन्धे सत्यपि स्वयमविकृतस्वरूपता व्यज्यते। अस्मात्—पञ्चविंशकात्पुरुषात्। अन्यद्रव्यमिति। मूर्तमत्र द्रव्यशब्देनोच्यते। क्षेत्रमित्येतत्। पश्यः पश्यति पश्यन्तमिति। पश्यः—विलक्षणोऽयं द्रष्टा, किमस्मिन्वैलक्षण्यम्, पश्यन्तमपश्यन्तं च पश्यति, पश्यापश्ये तु पश्यन्तमेनं न पश्यतः—द्रष्टारं जीवं दृश्यं देहं पश्यति तौ चैनं द्रष्टुमसमर्थौ। तदयमदृष्टो द्रष्टा विलक्षणः। तस्यैव विवरणरूपमिति। एतेन—अस्य वचनस्यान्यथानयनप्रयासः परेषां नेह घटेतेति भावः। कारयितेति। तेषु तेषु कर्मसु प्रवर्तयितेत्यर्थः। भूतात्मेति। देवमनुष्यादिभावापत्त्या जीवात्मा तथोच्यते। ननु किमनेन वचनशतोपन्यासेन, पैङ्गिश्रुतिरेव स्ववचनं व्याचष्टे तदेतदित्यादिना, तथाच वचनान्तरेणान्यथाव्याख्यानमनुचितमित्याशङ्कां परिहरन्नाह—यच्चेत्यादिना। हेतुहेतुमद्भावोपपादनदौर्घट्यं पर्यालोच्याह—यद्वेति। कश्चिदिति। पाठप्राचुर्याभावमभिप्रेत्य। अयमेव च पाठः प्राचुर्यहीनोऽप्यनुगुणः। अथ योऽयमित्यादिविवरणस्य भारतवचनैकार्थ्यमक्लिष्टमिति न तद्व्याख्याने यत्नः कृतः।

यत्तु व्याख्यातमिति। द्वा सुपर्णेत्यादिवाक्यमिति शेषः। अस्य मन्त्रस्य—द्वा सुपर्णेत्यादिमन्त्रस्य। सङ्गत्यभावादिति। पूर्वेण खण्डेन सहेति शेषः। ईदृशवैषम्येति। बिम्बप्रतिबिम्बभावाहि-

अज्ञानकृतभेददृष्टिवादे तु परमपुरुषस्य परमार्थदृष्टेर्निर्विशेषकूटस्थनित्यचैतन्यात्मयाथात्म्यसाक्षात्कारान्निवृत्ताज्ञानतत्कार्यतयाऽज्ञानकृतभेददर्शनं तन्मूलोपदेशा-

---

इत्याभ्यां पारमार्थिक एव भेदः समर्थ्यते । यच्चान्यत्वेन निर्देशो विशेषणभेदनिबन्धन इति, तत्तु तवाशामोदकमात्रं, नहि तथा प्रतियोगिसमर्पकमिह पदमस्ति । "समानं वृक्षं परिषस्वजाते" इत्येतदपि बिम्बप्रतिबिम्बभावे न घटते । नहि बिम्बप्रतिबिम्बयोरेकदेशवर्तित्वं क्वचिदपि दृष्टम् । किञ्च-पूर्वमन्त्रेण ब्रह्मणि विश्वात्मत्वे प्रतिपादिते भोक्तृभेदनिबन्धनाशङ्केव भोग्यभूतवियदादिजडप्रपञ्चाभेदनिबन्धनविकारादिदोषाकरत्वशङ्काया अप्यविशेषेण सम्भवात्तामपरिहार्य भोक्तृत्वापत्तिशङ्कामात्रं किमिति परिह्रियते । "ब्रह्मैवेदं विश्व"मित्यत्र ब्रह्मणोऽचिदंशेन सामानाधिकरण्ये प्रतीयमानेऽपि तद्बाधार्थमिति तत एव जडप्रपञ्चस्य बाधितत्वज्ञानसम्भवान्न तदात्मत्वनिबन्धनाशङ्कावकाश इति चेत् । तर्हि भोक्तुरपि कल्पितत्वाविशेषाद्बाधार्थत्वेनैव परिहारे तुल्ये सेयमेका शङ्का कथं स्यात् । किञ्च एकस्मिन्नेव सामानाधिकरण्येंऽशतो बाधार्थताश्रयणमंशतोऽभेदार्थताश्रयणं कथं घटेत ।

यच्चानन्तरमन्त्रस्य जीवेश्वरैक्यज्ञानस्य मोक्षसाधनत्वपरतया व्याख्यानं तत्तु क्लिष्टकल्पनम् । अन्यशब्दप्रतिसम्बन्धितया स्वस्यैव स्वरसतो लाभात् । "समाने वृक्षे पुरुषो निमग्न" इत्यत्र

---

तवैपम्यज्ञापकमित्यर्थः । न केवलं विवक्षितार्थे गमकाभावः, किन्तु विरोधोऽपीत्याह—प्रत्युतेत्यादिना । विशेषणेति । अन्तःकरणोपाधिसंसृष्टत्वतदभावलक्षणविशेषणभेद इत्यर्थः । आशामोदकमात्रमिति । कथमप्यशाब्दस्यार्थस्योत्प्रेक्षणं ह्याशामोदकायत इति भावः । तथा प्रतियोगिसमर्पकमिति । अन्यशब्दस्य स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदबोधन एव सामर्थ्यात्, द्वा सुपर्णेति पूर्वार्धे द्वावित्यादिना यद्रूपावच्छिन्नयोरुपस्थितिः पूर्वपरामर्शिना तच्छब्देन तयोरित्यनेन तद्रूपावच्छिन्नयोरेवोपस्थित्या, एकशब्देन चान्यशब्दप्रतियोगिसमर्पकेन तयोरन्यतरवाचिना यद्रूपेण योऽर्थ उपस्थितस्तद्रूपेण तस्यैव प्रतियोगितया बोधो भवेत्, पूर्वार्धे च भवदभिमतविभेदकाकारस्तु नोपस्थाप्यते, तत् विशेषणभेदनिबन्धनोऽन्यशब्दव्यपदेश इति न घटेतेति भावः । किमिति परिह्रियत इति । नह्येकशङ्कापरिहारमात्रेणादुष्टः स्वपक्षः समर्थितः स्यात्, आशङ्कान्तरकलङ्कस्यापरिहारादिति भावः । तद्बाधार्थमिति । सामानाधिकरण्यं हि बाधार्थेऽर्थैक्ये च दृष्टम्, इह च विश्वशब्देनोपस्थाप्ये जडे बाधार्थं भवति । अतश्च विकारादिशङ्काया नावकाशः । जीवे तु विश्वशब्दोपस्थाप्येऽर्थैक्ये भवति सामानाधिकरण्यम्, जीवब्रह्मणोश्चैतन्यस्वरूपाविशेषात् । अतश्च भोक्तृत्वाशङ्का केवलमवतिष्ठतीति सैवैका परिहार्या, अतश्चायमारम्भ इति भावः । कल्पितत्वाविशेषादिति । भोक्तुः प्रतिबिम्बलक्षणस्यान्तःकरणोपाधिसमाहितभेदस्य जडस्येव कल्पिततया तस्यापि बाध्यत्वाविशेषादिति भावः । कथं घटेतेति । एकं वाक्यं कथमर्थभेदमवगमयेत्, अर्थैक्यमर्थबाधश्चेति हि विपरीतावर्थौ, विश्वशब्देनैकेन रूपेणोपस्थितेष्वन्यतमप्रहाणेनान्यतमस्यान्यादृशोऽन्वयबोध इति व्युत्पत्तिमर्यादाविरुद्धम् । सकृदुच्चरितश्च नासकृदर्थमवगमयेदिति भावः ।

स्वस्यैव स्वरसतो लाभादिति । स्वस्यैव—दर्शनक्रियाकर्तुरेव । स्वरसतो लाभादिति । स्वार-

दिव्यवहाराश्च न सङ्गच्छन्ते। अथ परमपुरुषस्याधिगताद्वैतज्ञानस्य बाधितानुवृत्ति-

समानशब्दस्वारस्यादेकत्र वृक्षे सङ्गतयोर्द्वयोरेकस्यानीशित्वेन निमज्जनस्य बोधनात्तदव्यवहितोत्तरवाक्येऽन्यशब्देन तयोरेकस्मिन्नावप्रसक्तात्ततोऽन्यत्वमेव हि स्वरसतो लभ्येत। समानत्वं पुण्यपापफलापेक्षयेति तु नोचितं, पूर्वमन्त्रे "समानं वृक्षं परिषस्वजाते" इति परिष्वङ्गकापेक्षया साधारण्यस्य स्वरसतो लाभात्तस्मादध्याहारेण कार्यकारणसङ्घातस्यान्यत्वं प्रतियोगित्वोपपादनं वाक्यस्वारस्यमुपहन्ति। जुष्टमित्यस्य कार्यकारणसङ्घातैर्जुष्टमिति व्याख्यानमप्यध्याहारक्लेशदूषितम्। "पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेती"त्यनेन भेदज्ञानस्यैव मोक्षसाधनत्वावगमादैक्यज्ञानस्य मोक्षसाधनतया व्याख्यानमप्यनुचितम्।

यत्तु—सद्विद्यायां "सदेव सोम्येदमग्र आसी"दिति त्रिविधभेदनिषेधान्न जीवब्रह्मणोर्भेदस्तात्त्विक इति। अत्र ब्रूमः—सदेवेत्येवकारेण वैशेषिकाभिमतं कार्यस्य जगत उत्पत्तेः प्रागसत्त्वं व्यावर्त्यते। कथमिदं विज्ञायते?। "तद्धैक आहुरसदेवेदमग्र आसी"दित्यादिनाऽसत्कार्यवादो हि प्रतिक्षिप्यते। "बहु स्या"मिति वक्ष्यमाणबहुत्वावस्थाविरोध्येकत्वावस्था

स्यमेवोपपादयति—**समान** इत्यादिना। अयं भावः—यो वृक्षेऽस्मिन्निमग्नोऽनीशया मुह्यमानः शोचति स एवात्मानं वृक्षादन्यमीशं पश्यतीत्यर्थश्चेद्विवक्षितस्तदा **समान** इत्यस्वरसम्, द्वयोः सत्ता ह्यनेनाभिव्यज्यते। द्वितीयस्यान्यशब्देन यदि नोपस्थितिस्तदा द्वितीयानवबोधनेन समान इत्यनर्थः प्रयोगः स्यादिति भावः। पूर्वमन्त्रसमभिव्याहारस्वारस्याच्चैवं बोध्यम्। समानं वृक्षं परिषस्वजाते। तयोरेकः पिप्पलं स्वाद्वत्ति, पुरुषोऽयं निमग्नः, निमग्नो हि मुह्यमानः किमपि दृक्पथपतितमविचार्यैवात्ति शोचति चान्ते। अनश्नन्न्योऽभिचाकशीति जुष्टं यदा पश्यत्यन्यमीशमेनं तदैव वीतशोको भवतीति। **कार्यकारणसङ्घातस्येति**। स्थूलसूक्ष्मदेहलक्षणसङ्घातस्येत्यर्थः। पराभिप्रेतार्थे श्रुत्यन्तरविरोधमाह—**पृथगात्मानमिति**।

**त्रिविधभेदेति**। सजातीयभेदो विजातीयभेदः स्वगतभेदश्चेति त्रिविधो भेदः। त्रिविधभेदनिषेधस्य नेह प्रसङ्ग इत्याह—**अत्र ब्रूम** इत्यादिना। **प्रागसत्त्वं व्यावर्त्यत इति**। इदमग्रे सदेवासीदित्यन्वयादिति भावः। ननु सर्वमिदं सदेव न ततोऽन्यत् किमपीति विजातीयभेदो व्यावर्त्यत इत्याशयेनाशङ्कते—**कथमिदं विज्ञायत** इति। उक्तार्थकत्वमेवास्य, न पराभिमतार्थकतेति कथं विज्ञायत इत्यर्थः। **असत्कार्यवादो हि प्रतिक्षिप्यत इति**। समनन्तरं यः प्रतिक्षिप्यते परः पक्षः साक्षात्तत्प्रतिशिरसा हि प्रथमोपन्यस्तेन स्वपक्षेण भाव्यमिति भावः। इदमत्र **बोध्यम्**—नेदं वचनं सदेवेदमित्येतज्ज्ञापयितुं प्रवृत्तम्, नहि सदेव सोम्येदमिति वाक्यं परिसमाप्यते, सदेव सोम्येदमग्र आसीदिति क्रियाकारकसमभिव्याहारेणैव वाक्यसम्पत्तेः। इत्थं च जगतोऽस्य प्राग्रूपं श्राव्यते "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय"मितीति सिद्धम्। तथा च प्रागसत्त्वमेव वैशेषिकाभिमतं व्यवच्छेद्यम्। अत एवानुपदं "तद्धैक आहुरसदेवेदमग्र आसी"दिति श्रूयमाणं सङ्गच्छत इति। **वक्ष्यमाणबहुत्वावस्थाविरोध्येकत्वावस्थेति**। बहुधावस्थितस्य बहुभवनसङ्कल्पो न घटेत, तदुच्यते एकमेवासीदिति। इमे चैकत्वबहुत्वे[1] न सङ्ख्याविशेषरूपे। कर्माद्यनुपपत्त्या वैषम्यनैर्घृण्यापातात्। किन्तु नामरूपविभागतदभावलक्षणे, तत्रेह परा-

१ एकत्वं नाम द्वित्वासमानाधिकरणमेकत्वं, व्यक्त्यन्तरराहित्यमिति यावत्। बहुत्वं द्वित्वादिलक्षणं, व्यक्त्यन्तरसाहित्यमिति यावत्।

रूपमिदं भेदज्ञानं दग्धपटादिवन्न बन्धकमित्युच्यते । नैतदुपपद्यते । मरीचिकाजल-ज्ञानादिकं हि बाधितमनुवर्तमानं न जलाहरणादिप्रवृत्तिहेतुः । एवमत्राप्यद्वैतज्ञा-

---

एकशब्देनोच्यते । "अद्वितीय"मिति च निमित्तान्तरं निषिध्यते, कारणप्रकरणानुगुण्यात् । प्रस्तुतं च पूर्वखण्डे–आदेशशब्देन प्रशासित्रर्थकेन निमित्तत्वम् । तदेवेह निमित्तान्तरनिषेधतो दृढीक्रियते । तदिह त्रिविधभेदनिषेधस्य भवदभिमतस्य कावकाशः । तथासति–"अग्रे आसी"दिति कालविशेषक्रियाविशेषसम्बन्धयोरनुपपत्तिः । एतेन–प्रपञ्चस्य मिथ्यात्वमनेनाव-गम्यत इत्यपास्तम् । इदमिति प्रपञ्चं निर्दिश्य प्रागपि सदेवासीदिति सत्त्वस्यैवोक्तेः कालत्रयेऽपि सत्त्वसिद्ध्या सत्यत्वस्यैव जगति सिद्धेः । सदिति सर्वाधिष्ठानभूतं सन्मात्रं ब्रह्मोपस्थाप्यते, इत्थं च–इदमग्रे ब्रह्मैवासीदित्यर्थसिद्ध्या प्रपञ्चस्य मिथ्यात्वं सिद्धमिति तु न । सत्ये ब्रह्मणि मिथ्याभूतप्रपञ्चतादात्म्यासम्भवात् । यदि च विभाव्यते–अध्यस्तस्याधिष्ठान-सत्तातिरिक्तसत्ताकत्वाभावादभेदनिर्देशो घटत इति । इदानीमपि तत्सम्भवादग्रे इत्यनर्थकम् । यश्चाध्यस्तस्याधिष्ठानेनाभेदोऽभिमतः सोऽप्यध्यासकाल एव । असत्यध्यस्ते तदसम्भवात् । इत्थं च प्रलयसमये तदभेदबोधनमसङ्गतं च । अध्यासस्यैव तदानीमभावात् । यदि च बाधार्थे सामानाधिकरण्यमाश्रित्य–इदमग्रे नासीदित्यर्थ आश्रीयेत, न तावता मिथ्यात्वसिद्धिः । नहि कालविशेषेऽसत्त्वमात्रेण वस्तुनो मिथ्यात्वम् । लक्षणा च दोषः ।

---

भिमतभेदनिषेधस्यावकाश इति भावः । कारणप्रकरणानुगुण्यादिति । सन्मात्रब्रह्मवादिनां पक्षे ब्रह्म-स्वरूपं सर्वदैव सकलभेदविधुरमिति भेदनिषेधे स्वरूपविवेकमात्रे प्रकृते कारणत्वोपपादने न विशेष-तस्तस्यावसरः, येनाग्रेऽद्वितीयमासीदिति श्रुतिः स्वरसा भवेदिति भावः । प्रस्तुतार्थोपपादकतया चास्मदुक्तार्थ एव समुचित इत्याह—प्रस्तुतं चेति । एतेनेति । उक्ताद्वक्ष्यमाणाच्च । त्रिविधभेदनिषेधो-नार्थ इत्युक्तम्, वक्ष्यमाणमिदमित्यादि । अनेन–सदेवेत्यादिवाक्येन । ननु नेहासत्त्वं व्यवच्छिद्यते, यदि सच्छब्दोऽयमस्त्यर्थयोगमात्रेण प्रवृत्तः स्यात् स्यात्तदा तद्व्यवच्छेदः, नच तथा, अपितु ब्रह्मणीत्या-शयेनाह—सदितीति । मिथ्यात्वं सिद्धमिति । अयं भावः—अधिष्ठानमात्रमेव ह्यध्यासतः प्राक्, इदमखिलमध्यस्तमेव च ब्रह्मणि, नहि कार्यमनध्यस्तं नाम, सर्वो विकारो विवर्त एव, केवलं वाचां विलासः, तथा चेदमग्रे ब्रह्मैवाधिष्ठानमासीदित्यतोऽस्य मिथ्यात्वं सिद्धमिति । तथासत्यनुपपन्नार्थं वाक्यमित्याह—सत्ये इति । समानविभक्त्या हि तादात्म्येनान्वयः प्रतीयत इति भावः । ननु तादात्म्यं नाम तत्सत्तातिरिक्तसत्ताकत्वाभाव एव, अधिष्ठानसत्तातो नाऽन्याध्यस्तसत्तेत्यधिष्ठानाध्य-स्तयोस्तादात्म्यमक्षतमेवेत्याशङ्कते—यदि चेति । अभेदनिर्देश इति । तादात्म्यावबोधकसमानवि-भक्तिनिर्देश इत्यर्थः । इदानीमपि तत्सम्भवादग्रे इत्यनर्थकमित्युक्तम् । वस्तुत इदानीमेव तत्सम्भवादग्रे इत्यसङ्गतमित्याह—यश्चेत्यादिना । ननु नेह तादात्म्यमवबोध्यते अपितु चोरः स्थाणुरितिवत्त्रैव बाधोऽ-वबोध्यते, बाध्यमानतया च मिथ्यात्वमित्याशङ्कामनूद्य निरस्यति—नहि कालविशेष इति । यद्देश-कालसम्बन्धो यस्मिन्नवगतस्तद्देशकालसम्बन्ध एव चेत्तस्मिन्बाध्येत स्यात्तदा तस्य मिथ्यात्वं ननु यत्किञ्चित्कालावच्छेदेनासत्त्वमात्रेण मिथ्यात्वं, विनाशित्वमेव तु तत इति भावः । न केवलमभिमता-लाभः, दोषश्चेत्याह—लक्षणा च दोष इति । चकारो भिन्नक्रमः । दोषश्चेत्यर्थः ।

नेन बाधितं भेदज्ञानमनुवर्तमानमपि मिथ्यार्थविषयत्वनिश्चयान्नोपदेशादिप्रवृत्तिहेतुर्भवति। न चेश्वरस्य पूर्वमज्ञस्य शास्त्राधिगततत्त्वज्ञानतया बाधितानुवृत्तिः शक्यते

एकविज्ञानेन सर्वविज्ञानप्रतिज्ञोदाहरणाभ्यां सर्वस्यातात्त्विकत्वमवगम्यत इत्यप्यसत्। जगद्ब्रह्मणोरुपादानोपादेयभावमुपादानोपादेययोरनन्यत्वं च हृदि निधाय एकविज्ञानेन सर्वविज्ञानं प्रतिश्रुत्य कार्यकारणयोरन्यत्वशङ्कामपाकर्तुं हि दृष्टान्तप्रदर्शनम् । तदिह प्रपञ्चस्य कथं मिथ्यात्वावगमः । सत्यम् । अनन्यत्वं च कार्यस्य मिथ्यात्वेनैव । कथमेतद्विज्ञायते ? । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति वाक्यशेषेणैव । अस्य ह्ययमाशयः— न विकार इति परमार्थतः किञ्चिदस्ति वस्तु, येनेदं कारणमस्यायं विकार इति विभेदः स्यात्। किन्तु वाचारम्भणं–वागालम्बनमात्रं नामैव केवलमिति । हन्त ! कारणं सत्यं कार्यं मिथ्या, अत एव कारणात्कार्यमनन्यदिति वदन् विचारदूरतामेवात्मनो व्यनक्ति भवान् । नहि सत्यमिथ्यार्थयोस्तादात्म्यं घटेत । दुरुपपादं चैकविज्ञानेन सर्वविज्ञानं, नहि सत्ये ब्रह्मणि ज्ञाते मिथ्याभूतमन्यद्विज्ञातं स्यात्, सरूपयोरेव हि तथात्वम् । नन्वधिष्ठानमेवाध्यस्तस्य स्वरूपं, तदतिरिक्तस्वरूपाभावात् । तदधिष्ठाने ब्रह्मणि ज्ञातेऽध्यस्तस्य सर्वस्य ज्ञातत्वं सिद्धमेव ।

ननु सदेवेत्यस्यापि यदुपक्रमवाक्यं "येनाश्रुत"मित्यादि तदनुगुणेनैवार्थेन भाव्यम्, तेन च सर्वस्यास्य मिथ्यात्वमवगम्यत इत्याशङ्कामनूद्य परिहरति—एकविज्ञानेनेत्यादिना । हृदि निधायेति । यदीदं न हार्दं, मिथ्यात्वं चेत्तथा एकस्मिन्विज्ञाते सर्वं निवर्ततेत्येव श्रुत्या भाव्यम्, दृष्टान्तवाक्येनापि यथा रज्जौ विज्ञाते सर्पो निवर्तते इत्येव भाव्यम् । ऋतानृतयोरुपादानोपादेयभावोऽनन्यत्वं च न घटेतेत्याशयः । सत्यमित्यर्धाङ्गीकारे । जगद्ब्रह्मणोरुपादानोपादेयभावे हार्दे, उपादानोपादेययोरनन्यत्वे च हार्दमित्यत्राभ्युपगमः, जगतो मिथ्यात्वे तन्न घटेतेत्यत्रानभ्युपगमः । मिथ्यात्वेनैवेति । येनानुपपत्तिराशङ्क्यते त्वया, तेनैवोपपत्तिरित्येवकाराशयः । कथमेतद्विज्ञायते ? इति । अनुभवतो विरुद्धमेतदित्याशयः । वाक्यशेषेणैवेति । स्वहार्दं श्रुतिरेवोपपादयतीति किमज्ञानमूलकेन लोकानुभवेनेत्याशयः । वाक्यशेषोऽनवधृतस्त्वयेत्यत्राह—अस्य ह्ययमाशय इति । अनुपपन्नमेवार्थमनुपपन्नेनैव वाक्यशेषाशयेनोत्प्रेक्षितेन समर्थयन्नयमुपहास्य इति वदन् अनुपपन्नतामर्थस्याह—हन्तेत्यादिना । अयमाशयः—नहि प्रमाणमनुपपन्नमुपसर्पेत्, अनुपपन्ने चोपसर्पदप्रमाणमेव, वैदिकोऽपि शब्दराशिरपूर्वमर्थमवगमयन्नपि तर्काविरुद्धमेवावगमयेत् न सर्वथा विचारापेतम्, तथासति मीमांसावैयर्थ्यप्रसङ्गात् । ब्रह्मकारणवादे प्रतिकूलतर्काः निरस्यन्ते, अनुकूलतर्काश्चोपादीयन्ते सूत्रकृता । तदेवंस्थिते वाक्यार्थपरिकल्पनं परेषां किमुपपन्नमनुपपन्नं वेति पर्यालोचनीयमेव, तदुपपत्तिरेव प्रथमं विचार्येत इति भावः । कारणं सत्यं कार्यं मिथ्येति । इदमेकमनुपपन्नम् । अत एव कारणात्कार्यमनन्यदिति । इदमपरमनुपपन्नमित्याशयः । नहि सत्यमिथ्यार्थयोस्तादात्म्यं घटेतेति । तथा चोपादानोपादेयभावोऽप्यनुपपन्न इति भावः । ननु सत्यानृतयोर्महदन्तरम्, अथापि शुक्तौ रूप्यमिव ब्रह्मणो जगत् विवर्त इति विवर्तापेक्षयोपादानत्वे ब्रह्मणो घटेतैवेत्याशङ्कायामाह—दुरुपपादं चेति । वस्तुतो विवर्ताधिष्ठानत्वरूपमुपादानत्वमेव दुर्वचमिति वक्ष्यति[1] । मिथ्याभूतमन्यदिति । सत्यानृतयोर्न स्वरूपैक्यमिति ज्ञापनायान्यदिति विशेषणम् । तत्–तस्मात् । अधिष्ठानातिरिक्ताध्यस्तस्वरूपासम्भवात् । सिद्ध-

१ "सर्वाविर्भावकारण"मित्यस्य विवरणावसरे ।

वक्तुम्, "यः सर्वज्ञः सर्ववित्" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "वेदाहं समतीतानि वर्त्तमानानि चार्जुन ! । भविष्याणि च भूतानि

---

अधिष्ठानातिरिक्तस्वरूपाभावादेव जगद्ब्रह्मणोरनन्यत्वमपि सिद्धमिति चेत् । नैतद्युक्तम् । अध्यस्तस्य स्वरूपमधिष्ठानमेवेत्यस्यासम्भवात् । नहि प्रातिभासिकस्य मिथ्याभूतस्य सत्यमधिष्ठानं स्वरूपं भवेत् । अभ्युपेयेते च भवताऽध्यस्यमानस्योत्पादविनाशौ । अधिष्ठानस्वरूपमेव चेत्तस्य स्वरूपं, कथमेतत् । तन्मिथ्यावस्तुनः स्वरूपं मिथ्यैव किञ्चिद्वस्तु वक्तव्यम् । स्वरूपान्तराभावादेवाधिष्ठानं तस्य स्वरूपमुच्यते इति चेत्, यदि स्वरूपं न तर्हि निःस्वरूपमेव तदस्तु । नहि स्वरूपं नास्तीत्येतावता विसजातीयस्वरूपत्वाश्रयणं योग्यम् । नहि वायो रूपाभावात् पृथिव्यादिरूपमेव वायो रूपमिति वक्तुं योग्यम् । वायुर्नीरूप इत्येव वक्तव्यम् । ननु—मिथ्यात्वादेव मिथ्यार्थस्य न पृथक्स्वरूपं किन्त्वधिष्ठानमेवेति चेत् । मिथ्यात्वादेव मिथ्यार्थस्य न स्वरूपापेक्षेत्येवास्थीयताम् । किञ्चेह विवक्षितं ब्रह्मविज्ञानेन सर्वविज्ञानं सर्वस्य मिथ्यात्वनिबन्धनमिति वदतां दृष्टान्तासङ्गतिश्च । दृष्टान्ते प्रवृत्तिर्ह्यस्फुटस्यार्थस्य स्फुटीकरणाय । न ह्यस्फुटं प्रपञ्चमिथ्यात्वमनेन स्फुटीभवति । नहि मृत्पिण्डविकारेषु घटशरावादिषु शुक्तिरजतादिष्विव मिथ्यात्वं प्रसिद्धम् । सत्यम् । अत एव तज्ज्ञापनाय प्रवर्तते "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति । अस्याशयस्तु प्राङ्निरूपितः । हन्तायमाशयस्तवैव चेतोगुहायां विपरिवर्तते, इमं तवाशयमियं श्रुतिर्न व्यनक्ति । नहि प्रत्यक्षतोऽवगम्यमानं घटादीनां

---

मेवेति । नह्यन्यदध्यस्तस्वरूपं ज्ञातव्यमवशिष्यत इति भावः । अधिष्ठानातिरिक्तस्वरूपाभावादेवेति । अध्यस्तस्येति शेषः । अनन्यत्वमिति । यत्स्वरूपं यत्स्वरूपातिरिक्तं तदेव हि ततो भिन्नम् । अध्यस्तस्य चेदधिष्ठानस्वरूपातिरिक्तस्वरूपं न कथमधिष्ठानादध्यस्तमन्यत्, तदनन्यत्वं सिद्धमिति भावः । कथमेतदिति । उत्पादविनाशयोगित्वं कथं घटेतेत्यर्थः । अधिष्ठानस्य ब्रह्मणो नित्यत्वादिति भावः । शुक्तिरूप्यादिस्थले चाधिष्ठानाध्यस्तयोर्देशकालभेदेनैवोत्पादविनाशयोगात्स्वरूपभेदोऽवश्यमेवाश्रयणीय इति बोध्यम् । भिन्नस्वभावयोः कथमेकस्वरूपतेति भावः । स्वरूपान्तराभावादिति । अधिष्ठानस्वरूपातिरिक्तस्वरूपस्याभावादित्यर्थः, । अनुपलम्भादिति यावत् । विसजातीयस्वरूपत्वेति । स्वरूपाश्रयणमेवानुचितं, किमुत विजातीयस्वरूपाश्रयणमनुपपन्नमिति भावः । ननु नहीत्यादिनिदर्शनं विषमं, न चातदात्मके तस्मिन् कथमप्यन्यदीयेन स्वभावेन तदात्मकत्वं वयं ब्रूमः, प्रतीयमानस्य स्वरूपं तु वक्तव्यम्, वायोस्तु परमार्थस्य स्वरूपं समुपलभ्यते नाम, मिथ्याभूतेषु च न तथा, तदधिष्ठानस्वरूपत्वमाश्रयणीयमेवेत्याशङ्कते—नन्वित्यादिना । सत्यमिति । ये विचारमूढास्तेषामप्रसिद्धं नाम, विचारयतां तु प्रसिद्धमेव, मूढान् पुनरवबोधनेनानुगृह्णाति नाम वाचारम्भणमित्यनेन श्रुतिरित्याशयः । विपरिवर्तत इति । विपरीतोऽर्थः समुत्प्रेक्षितः स्वमत्येति यावत् । नहि प्रत्यक्षतोऽवगम्यमानं वाक्यमपनेतुं क्षमम्—नहि प्रबलप्रमाणप्रतिपन्नमर्थमपनेतुं वाक्यं क्षममित्यर्थः । नह्येतद्वाक्यं क्षमम्—प्रात्यक्षिकपदार्थस्वरूपविवेचने प्रवृत्तमेतद्वाक्यं नैव क्षमम् । एतेनापौरुषेयतया प्रबलप्रमाणभूतेन प्रत्यक्षमपि कुतो न बाध्येतेत्याशङ्का परास्ता । इदं हि वाक्यं प्रात्यक्षिकघटादिविकारविवेचनाय प्रवृत्तम् । तदनेन प्रत्यक्षविरुद्धो विकारापह्नवो बोध्यत इति कथं घटेतेति भावः । किञ्च—ननु कुतो न क्षमम्,

मां तु वेद न कश्चन" इति श्रुतिस्मृतिविरोधात् । किञ्च–परमपुरुषश्चेदानीन्तनगुरु-

---

सत्यत्वमेतद्वाक्यमपनेतुं क्षमम् । घटशरावादयो मृदो विकारा मृत्स्वरूपादनन्याः यन्मृत्तिकेत्येव तदानीमप्युपलभ्यन्ते, न तु मृत्तिकातोऽन्यतया । विकारो नाम च मृत्पिण्ड एव सम्बद्धम् । व्यवहारविशेपार्थस्तु तद्योगः । इतीममर्थं प्रत्यक्षाविरुद्धमवगमय्य कृतकृत्यम् । तस्मात्प्रपञ्चस्य मिथ्यात्वं चेदिहाभिप्रेतं "यथैकया रज्वा सर्पभूदलनाम्बुधारादि सर्वं विज्ञातं भवती"ति दृष्टान्तवाक्येन भाव्यम् । सिद्धान्ते तु विशिष्टं ब्रह्मैव कार्यं कारणं चेति न दृष्टान्तासङ्गतिः । विस्तरस्त्वन्यत्र । तथाच परास्तः प्रपञ्चमिथ्यात्ववादः । सिद्धं प्रत्यगात्मपरमात्मनोर्भेदस्य तात्त्विकत्वम् ।

इदमेव च मतं सूत्रकृतः । तथाच सूत्राणि—"नेतरोऽनुपपत्तेः" "भेदव्यपदेशाच्च" "अनुपपत्तेस्तु न शारीरः" "कर्मकर्तृव्यपदेशाच्च" "शब्दविशेपात्" "सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्" "नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च" "उभयेऽपि हि भेदेनैनमधीयते"

---

प्रात्यक्षिकमेव रज्जुसर्पाद्यपनयत्याप्तवाक्यम्, तत्राह—एतद्वाक्यं न क्षममिति । वाक्यं चेत्तदेकोपमर्देनैव सावकाशं तदा तदर्थस्य बाधकमिदं तु प्रात्यक्षिकविकारभेदोपमर्देनैव न सावकाशमन्यथैवोदयादित्याशयः । ननु कथं विकारभेदानुपमर्देनान्यथैवोदय इत्यत्राह—घटशरावादय इत्यादिना । अनन्यथासिद्धार्थकं वचनमन्यथासिद्धं प्रत्यक्षं बाधेत नाम, अनन्यथासिद्धे च प्रत्यक्षे अन्यथासिद्धे च वाक्ये कथं प्रत्यक्षं प्रति प्रतिबन्धकतावाक्यस्येति भावः । घटशरावादयो मृदो विकारा मृत्स्वरूपादनन्या इति प्रकृतनिर्देशः । इदमेव हि प्रक्रान्तप्रतिज्ञानिदर्शनोपलक्ष्यम् । तस्यास्योपपादकमिदं वचनं वाचेत्यादि । यन्मृत्तिकेत्येव तदानीमप्युपलभ्यन्त इति "मृत्तिकेत्येव सत्य"मित्यस्य विवरणम् । नतु मृत्तिकातोऽन्यतयेत्येतदवधारणविवरणम् । विकारो नाम च मृत्पिण्ड एव सम्बद्धमित्येतत् "आरम्भणं विकारो नामधेयमि"त्यस्य विवरणम् । व्यवहारविशेपार्थस्तु तद्योग इत्येतत् वाचेत्यस्य विवरणम् ।

नेतरोऽनुपपत्तेः—परमात्मन इतरो जीवो न मन्त्रवर्णप्रतिपाद्यः, निरुपाधिकविपश्चित्त्वस्य तस्मिन्ननुपपत्तेः । अनुपपत्तेस्तु न शारीरः—नेह शारीरो जीवः प्रतिपाद्यते, मनोमयत्वादिगुणानामिह निरूप्यमाणानामनुपपत्तेः । कर्मकर्तृव्यपदेशाच्च—"एतमितः प्राप्याभिसंभविताऽस्मी"ति प्राप्तौ कर्मत्वेन कर्तृत्वेन च विभेदकधर्मेणोपास्योपासकयोर्व्यपदेशाच्च न शारीरः । शब्दविशेपात्—उपासकस्यायं शब्दविशेपः "एप मे आत्मान्तर्हृदय" इति, विभेदकश्चायमुपास्योपासकयोः । मे इति षष्ठ्यन्तेनोपासकस्वरूपं, आत्मेति प्रथमान्तेन व्यतिरेकेणोपास्यस्वरूपं हि निर्दिष्टम् । अतश्चोपासकोपास्ययोः शारीरपरमात्मनोर्विभेद एव गम्यते । सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्—परस्यापि ब्रह्मणः शरीरसम्बन्धाभ्युपगमे जीवस्येव सम्भोगप्राप्तिरिति चेन्न । समानेऽपि जीवपरयोः शरीरप्रवेशे प्रवेशहेतावस्ति मिथो विशेपः । तत्र जीवः कर्मवशगो विशति, परस्तु न तथा, अनश्नन्नन्योऽभिचाकशीति । नच स्मार्तमतद्धर्माभिलापाच्छारीरश्च—स्मार्तं–प्रधानं नान्तर्यामि भवितुमर्हति, अतद्धर्माभिलापात्–प्रधाने येऽसम्भाविता धर्मास्तेपामभिलापात्, शारीरो जीवश्च न तथा, अतद्धर्माभिलापात् । उभयेऽपि हि भेदेनैनमधीयते—काण्वा माध्यन्दिनाश्चोभयेऽपि अन्तर्यामिणो भेदेनैनं शारीरमधी-

परम्परा च अद्वितीयात्मस्वरूपनिश्चये सत्यनुवर्तमानेऽपि भेदज्ञाने स्वनिश्चयानुरूपमद्वितीयात्मज्ञानं कस्मा उपदिशतीति वक्तव्यम् । प्रतिबिम्बवत्प्रतीयमानेभ्योऽर्जुना-

---

"विशेषणभेदव्यपदेशाभ्यां च नेतरौ" "मुक्तोपसृप्यव्यपदेशाच्च" "भेदव्यपदेशात्" "स्थित्यदनाभ्यां च" "इतरपरामर्शात्स इति चेन्नासम्भवात्" "उत्तराच्चेदाविर्भूतस्वरूपस्तु" "सुषुप्त्युत्क्रान्त्योर्भेदेन" "पत्यादिशब्देभ्यः" "अधिकं तु भेदनिर्देशात्" "अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्" "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च" "भोगमात्रसाम्यलिङ्गाच्च" इत्यादीनि । गीतश्चायमर्थो भगवता—"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः । न चैव न भविष्यामः सर्वे वयमतः परम् ॥" "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" "भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ॥ अहङ्कार इतीयं मे भिन्ना

---

यते "य आत्मनि तिष्ठन्" "यो विज्ञाने तिष्ठ"न्निति । विशेषणभेदव्यपदेशाभ्यां च नेतरौ—नेहेतरौ प्रधानपुरुषौ प्रतिपाद्येते, विशेषणव्यपदेशात् भेदव्यपदेशाच्च । "सर्वविद्याप्रतिष्ठा"मिति विशेषणव्यपदेशः, "अक्षरात्परतः पर" इति च भेदव्यपदेशः । मुक्तोपसृप्यव्यपदेशाच्च—द्युभ्वाद्यायतनतया श्रूयमाणो जीवादन्य एव, मुक्तोपसृप्यतया व्यपदेशात् । भेदव्यपदेशात्—"समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः" इति प्रत्यगात्मपरमात्मनोर्भेदव्यपदेशाच्च तथा । स्थित्यदनाभ्यां च—"तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीती"ति श्रूयमाणाभ्यां स्थित्यदनाभ्यां च विरुद्धधर्माभ्यां च तथा । इतरपरामर्शात्स इति चेन्नासम्भवात्—इतरस्य–जीवस्यैव वाक्यशेषे साक्षात्परामर्शात्स एव दहराकाशो भवितुमर्हतीति चेन्न, श्रूयमाणगुणानां तस्मिन्नसम्भवात् । उत्तराच्चेदाविर्भूतस्वरूपस्तु—उत्तरवाक्यात्पर्यालोच्यमानात्स एव दहराकाशो भवितुमर्हतीति चेन्न, अपेतकर्मबन्ध आविर्भूतस्वरूपस्तूत्तरवाक्ये प्रक्रान्तः, तद्विद्यते प्रकरणमिति यावत् । सुषुप्त्युत्क्रान्त्योर्भेदेन—"प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्" "प्राज्ञेनात्मनाऽन्वारूढ उत्सर्जन्याती"ति सुषुप्तिसमये उत्क्रमणसमये च जीवात्मपरमात्मनोर्भेदेन व्यपदेशात् जीवात्मनोऽर्थान्तरभूत एव परमात्मा । पत्यादिशब्देभ्यः—जीवात्मव्यावृत्तस्वभावविशेषज्ञापकेभ्यः पत्यादिशब्देभ्यश्च तथा । ते च शब्दाः "सर्वस्याधिपति"रित्यादयः । अधिकं तु भेदनिर्देशात्—ब्रह्म जीवादर्थान्तरभूतं, पृथगात्मानमित्यादिना भेदनिर्देशात् । अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्—जीवात्मनोऽर्थान्तरभूतस्य परस्य ब्रह्मणो वेद्यतयोपदेशात् विद्यातः फलमिति बादरायणस्य मतम्, तस्यैव वेदनवाक्येषु दर्शनात् । जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च—मुक्तस्यैश्वर्यं सृष्ट्यादिजगद्व्यापारवर्जं, परमब्रह्माधिकृत्यैव सृष्ट्यादिप्रकरणात् । मुक्तस्यासन्निहितत्वाच्च तत्प्रकरणे । भोगमात्रसाम्यलिङ्गाच्च—भोगमात्रेणैव साम्यश्रवणाल्लिङ्गाच्च तथा । अयमर्थः—आत्मपरमात्मनोर्भेदः । न त्वेवाहमिति । अनेनात्मनामनेकत्वं परमात्मनश्च ततो भेदो ज्ञाप्यते । बद्धान्मुक्तान्नित्याच्च भेदः परमात्मनो भेदः प्रतिपाद्यते—द्वाविमावित्यादिना । भूमिराप इत्यादिना प्रकृतिपुरुषयोः परमात्मशेषतया ततो भेदो ज्ञाप्यते । पश्चविंशकः—जीवः । द्विजः—शिरः-

दिभ्य इति चेत्—नैतदुपपद्यते, न ह्यनुन्मत्तः कोऽपि मणिकृपाणदर्पणादिषु प्रतीयमानेषु स्वात्मप्रतिबिम्बेषु तेषां स्वात्मनोऽनन्यत्वं जानन् तेभ्यः किमप्युपदिशति । बाधितानु-

प्रकृतिरष्टधा ॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ! ययेदं धार्यते जगत् ॥" इति । स्मर्यते च—"अबुद्ध्यमानां प्रकृतिं बुध्यते पञ्चविंशकः । नतु बुद्ध्यति गन्धर्व प्रकृतिः पञ्चविंशकम् ॥" "यदा तु मन्यतेऽन्योऽहमन्य एष द्विजः स्मृतः । तदा स केवलीभूतः षड्विंशमनुपश्यति ॥" "अन्यश्च राजन् ! स परस्तथान्यः पञ्चविंशकः ।" "यदा स केवलीभूतः षड्विंशमनुपश्यति । तदा स सर्वविद्विद्वान् न पुनर्जन्म विन्दति ॥ एवमप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ! । बुद्धश्चोक्तो यथातत्त्वं मया श्रुतिनिदर्शनात् ॥" "अव्यक्तबोधनाच्चैतद्बुध्यमानं वदन्त्यपि ॥ नत्त्वेव बुध्यतेऽव्यक्तं सगुणं तात ! निर्गुणम् । कदाचित्त्वेव खल्वेतदाहुरप्रतिबुद्धकम् ॥" "अव्यक्तबोधनाच्चापि बुध्यमानं वदन्त्युत । पञ्चविंशं महात्मानं न चासावपि बुध्यते ॥ षड्विंशं विमलं बुद्धमप्रमेयं सनातनम् ।" "निःसङ्गात्मानमासाद्य षड्विंशकमजं विभुम् । विभुस्त्यजति चाव्यक्तं यदा त्वेतद्विबुध्यते ॥ चतुर्विंशमसारं च षड्विंशस्य प्रबोधनात् । एष ह्यप्रतिबुद्धश्च बुध्यमानश्च तेऽनघ ! ॥ प्रोक्तो बुद्धश्च तत्त्वेन यथाश्रुतिनिदर्शनात् ।" "यदाऽनुपश्यतेऽत्यन्तमहन्यहनि काश्यप ! । तदा स केवलीभूतः षड्विंशमनुपश्यति ॥" "अन्यश्च शाश्वतोऽव्यक्तस्तथान्यः पञ्चविंशकः ॥" "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने ! व्यतीतः । अतीतसर्वावरणोऽखिलात्मा येनास्तृतं यद्भुवनान्तराले ॥ परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ।" "विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा । अविद्याकर्मसंज्ञान्या तृतीया शक्तिरिष्यते ॥ यया क्षेत्रज्ञशक्तिः सा वेष्टिता नृप ! सर्वगा । संसारतापानखिलानवाप्नोत्यतिसन्ततान् ॥" "प्रकृतिर्या मयाऽऽख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुषश्चाप्युभावेतौ लीयेते परमात्मनि ॥"

पाण्यादिलक्षणः पिण्डविशेषो द्विज इति व्यवह्रियमाणः । सः—जीवः । केवलीभूतः—अस्तद्विजादिदर्शनतया आविर्भूतपरिशुद्धात्मैकस्वरूपः । षड्विंशं—परमात्मानमनुपश्यति । अनेन जीवात्मपरमात्मनोर्भेदोऽवबोध्यते । स परः—षड्विंशः परः । अप्रतिबुद्धः—प्रधानाख्यः । बुद्ध्यमानः—जीवः । बुद्धः—सर्वदृक् परमात्मा । एतेषां पदानामेतेष्वर्थेषु प्रवृत्तौ निमित्तमाह—अव्यक्तेत्यादि । अव्यक्तबोधनादिति । अव्यक्तपरिणामविशेषमात्मनो भोगसाधनमवगच्छति नाम जीवात्मा, तद्बुद्ध्यमान इत्युच्यत इत्यर्थः । नत्वेवमिति । अव्यक्तमिति कर्तृ । निर्गुणमिति कर्म । निर्गुणमात्मतत्त्वमित्यर्थः । कदाचित्त्वेवेति । न बुद्ध्यत इत्यनेन पूर्वेणान्वयः । न चासावपीति । दर्शनशक्तिमानप्ययम् । षड्विंशं न बुद्ध्यत इत्यन्वयः । बुद्धं—स हि सर्वदा सर्वं पश्यति स्वयमेव, तदयमेव षड्विंशो निरुपाधिकबुद्धशब्दवाच्यः । निःसङ्गात्मानमिति । यदा त्यजति तदैतद्विबुद्ध्यत इत्यन्वयः । यदाऽनुपश्यत इति । आत्मानमिति शेषः । अन्यश्चेति । देवादिभावेन व्यक्तिर्यस्य न सोऽव्यक्तः शाश्वतः षड्विंशोऽन्यः पञ्चविंशकश्चान्य इत्येतत् । येनास्तृतमिति । भुवनान्तराले यदिदं तदखिलं येनास्तृतमित्यन्वयः । विष्णुशक्तिरिति । "स चानन्त्याय कल्पते" इति श्रुतेरानन्त्ययोगेन मुक्तोऽत्र विष्णुशब्देन ग्राह्यः । सोऽपि परमात्मनः शक्तिरिति विष्णुशक्तिरुच्यते । परश्च क्षेत्रज्ञात्, तदुच्यते—परा प्रोक्तेति । अविद्येति

वृत्तिरपि तैर्न शक्यते वक्तुम्, बाधकेनाद्वितीयात्मज्ञानेनात्मव्यतिरिक्तभेदज्ञानकारणस्यानादेर्विनष्टत्वात् । द्विचन्द्रज्ञानादौ तु चन्द्रैकत्वज्ञानेन पारमार्थिकतिमिरादि-

---

"परमात्मात्मनोर्योगः परमार्थ इतीष्यते । मिथ्यैतदन्यद्द्रव्यं हि नैति तद्द्रव्यतां यतः ॥" "प्रधानं च पुमांश्चैव सर्वभूतात्मभूतया । विष्णुशक्त्या महाबुद्धे वृतौ संश्रयधर्मिणौ ॥" "क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ।" इति । श्रुतिः साक्षादाक्षेपाच्चात्मपरमात्मनोर्भेदमावेदयति । तत्र "द्वा सुपर्णे"त्यादयः प्रागुदाहृताः । अपरा अप्युदाह्रियन्ते—"ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्ध्ये । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥" "क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याविद्ये ईशते यस्तु सोऽन्यः । क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ॥" "प्रधानक्षेत्रज्ञपतिर्गुणेशः स कारणं करणाधिपाधिपः ॥" "पतिं विश्वस्यात्मेश्वरम्" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।" "भोक्ता भोग्यं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ।" "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" "निरञ्जनः परमं साम्यमुपैति" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" "यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति एवं मुनेर्विजानत आत्मा भवति गौतम !" "परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" "य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरं य आत्मानमन्तरो यमयति स त आत्मान्तर्याम्यमृतः" "एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः" इत्याद्याः ।

---

कर्मेति च संज्ञा यस्य साऽविद्याकर्मसंज्ञा । परमात्मात्मनोर्योग इति । योगः—अभेदः । परमार्थ इति केश्चिदिष्यते, मिथ्यैतत्, अन्यद्द्रव्यं हि नैति तद्द्रव्यतां यत इत्यन्वयः । विष्णुशक्त्येति । विष्णोः शक्त्या । ऋतमिति । ऋतं—कर्मणः फलम् । पिबन्तौ—एकः प्रयोजकोऽपरः प्रयोज्य इति द्वयोः कर्तृत्वसङ्गतिः । गुहां—हृदयगुहाम् । छायातपौ—कर्मणा ज्ञानसङ्कोचाज्जीवश्छायात्वेन रूप्यते, परमात्मा तु अप्रतिहतज्ञानादिरित्यातपत्वेन रूप्यते । क्षरं त्वविद्येति । क्षरणस्वभावं प्रधानमविद्येत्युच्यते । अमृतं—क्षरणादिसर्वविकाररहितं नित्यमात्मस्वरूपं विद्योच्यते, ज्ञानैकस्वभावत्वात् । अमृताक्षरं—अमृतं च तदक्षरं चेति कर्मधारयः । हरः—हरति भोगाय स्वार्थं विकारानिति हरः क्षेत्रज्ञः । करणाधिपाधिपः—करणाधिपस्य जीवस्याप्यधिपः । नित्यो नित्यानामिति । नित्यानां बहूनां चेतनानां च एको नित्यश्चेतनः कामान्विदधातीत्यन्वयः । भोक्ता भोग्यमिति । भोक्ता—क्षेत्रज्ञः । द्वितीयाया लोपः । चिदचिदीश्वरतत्त्वत्रयं मिथो विभिन्नं यथावदवगत्येर्थः । अजामेकामिति । न जायत इत्यजा—मूलप्रकृतिः, तदवस्थायां हि जनिशून्या सा, अव्यक्तमिति च निगद्यते । लोहितशुक्लकृष्णां—सत्त्वरजस्तमोमयीम् । अजः—न जायत इत्यजः । जुषमाणः—प्रीतिं कुर्वन् । अनुशेते—तद्गुणवशगो भवतीत्येतत् । स चायं क्षेत्रज्ञः । यश्च ततोऽन्योऽजः परमात्मा इतरैर्भुक्तभोगामेनां जहाति—नानुशेते । न तद्गुणवशगो भवतीत्येतत् । तादृगेवेति । तत्समानप्रकारः, नतु तदेव भवति । स्वेन रूपेण—अपहतपाप्मत्वादिना रूपेण ।

दोपस्य द्विचन्द्रज्ञानहेतोरविनष्टत्वाद्बाधितानुवृत्तिर्युक्ता, अनुवर्तमानमपि प्रबलप्रमा-

अत्रापरे मन्यन्ते—भेदवचसामभेदवचसां च मिथो नोपमर्दः, भेदाभेदयोरविरोधात् । घटशरावादिकं हि कार्यात्मना भिन्नमपि कारणात्मना मृद्रूपेणाभिन्नमपि, एवं जगत् ब्रह्मणो भिन्नमप्यभिन्नमपि । एक एव मृत्पिण्डो घटशरावात्मनेव ब्रह्मैकमेव हि सन्मात्रं चिदचिदीश्वरात्मना लीलया विभक्तमवतिष्ठति । इत्थंच–एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानं सुसमञ्जसम् । अत्रैव तु दृष्टान्तानुरूप्यमिति । तदिदमनादरणीयम् । सकलसंसृतिकलङ्कस्य ब्रह्मण्येव प्रसङ्गात् । यत् देवतिर्यङ्मनुष्यस्थावरात्मना परिणतिर्ब्रह्मस्वरूपस्यैवोच्यते । सत्यमुच्यते । तथापि नायं दोपः । स्वीक्रियते हि स्वभावतो भेदो घटशरावादीनामिव चिदचिदीश्वराणाम् । घटशरावादिपु कार्यवैलक्षण्यमिवाज्ञत्वदुःखित्वादिवैलक्षण्यमपि प्रतिनियतम् । अस्तु नामैतत् । प्रतिनियतेऽपि घटशरावादीनां जलाहरणादिकार्यवैलक्षण्ये मृत्स्वरूपतोऽभिन्नत्वात् तद्वैलक्षण्यं सर्वं मृद्येव सम्बद्धं, एवं भिन्नानामपि चिदचिदीश्वराणां ब्रह्मस्वरूपतोऽभिन्नत्वात् ब्रह्मण्येव प्रसजेयुः सर्वे चिदचिद्गता दोपाः । तथा चानवद्यत्वपराः श्रुतयः कुप्येयुः । घटशरावादिपु स्वभाववैपम्यव्यवस्थेव जीवेश्वरयोर्दुःखित्वादुःखित्ववैपम्यव्यवस्थाऽपि दुरुपपादा । दुःखिनं जीवं स्वस्मादभिन्नं जानत ईश्वरस्य दुःखं ह्यवर्जनीयम् । न चायमसर्वज्ञः, येनायं न जानात्यभेदमिति परिह्रियेत नाम । एतेन–ईश्वरे हेयानन्वयाद्ब्रह्मणोऽनवद्यत्वश्रुतिसङ्गतिरित्यपास्तम् । मृत्पिण्ड इव ब्रह्मैव बहुधा परिणमतीत्यप्यसत् । ब्रह्मणो विकारित्वप्रसङ्गात् । अत्र कश्चित् । परिणामेऽपि न ब्रह्मणो विकारः । कथमेतत् ? । ब्रूमः–कटकमुकुटात्मना परिणतस्यापि सुवर्णस्य नहि कश्चिद्विकारः, सुवर्णत्वस्यानपायात् । अथ परिणमत्किमपि विकृतं न स्यात् । न चेष्टापत्तिः । विकारव्यवहारस्य लोपप्रसङ्गात् । मैवम् । दध्नः प्रकृतिभूतं दुग्धं हि विकरोति, दुग्धोपमर्देनैव दध्न आविर्भावात् । ब्रह्मणस्तु कनकस्येव परिणाम इति न विकारित्वप्रसङ्ग इति । वीरप्रसूरथ च वन्ध्येयमितिवद्व्याहतमिदं वचः । स्वरूपतः परिणतौ

ब्रह्मस्वरूपपरिणामवादिनां मतमाह—अत्रापरे मन्यन्त इत्यादिना । नोपमर्द इति । उपमर्दे सति ह्यपच्छेदन्यायाद्याश्रयणक्लेशः स एव नेत्याशयः । तत्र हेतुमाह—भेदाभेदयोरविरोधादिति । कथमविरोधस्तदुपपादयति—घटशरावादिकमित्यादिना । जगत्–चिदचिदीश्वरात्मकमिदं जगत् । ननु मृदः परिणतिविशेपो घटशरावादिरिति युक्तं नाम, तेषां भेदोऽभेदश्च, जगद्ब्रह्मणोस्तु कथमेवमित्यत्राह—एक एवेत्यादिना । लीलयेति सृष्टिप्रयोजनोक्तिः । संसृतिकलङ्कस्येति । सुखदुःखादेरित्यर्थः । अस्तु नामैतदिति । चिदचिदीश्वराणां प्रतिनियतान्यान्यस्वभावता, अत एव वैलक्षण्यं चास्तु नामेत्यर्थः । अभ्युपगम्येदमुच्यते, वक्ष्यति तु घटशरावादिष्वित्यादिना सेयं व्यवस्था दुरुपपादेति । दुरुपपादतामुपपादयति—दुःखिनं जीवमिति । नन्वीश्वरः स्वस्मादभिन्नं जीवं न जानातीति न तद्दुःखेन दुःखित्वावसर इत्यत्राह—न चायमसर्वज्ञ इति । ईश्वरे हेयानन्वयादिति । यद्यपि श्रूयते नाम ब्रह्मणोऽनवद्यत्वं, इदं च चिदचिदीश्वरेपु त्रिष्वीश्वरांशमवलम्ब्य प्रवर्तत इत्यनवद्यमित्याशयः । सुवर्णत्वस्यानपायादिति । प्रकृतिस्वरूपनिरूपकधर्मोपमर्देन धर्मान्तरयोग एव विकार इत्यभिमतिः । इममेवाभिप्रायं शङ्कासमाधानमुखेन प्रतिपादयति—अथेत्यादिना । स्वरूपतः परिणता-

णबाधित्वेनाकिञ्चित्करम् । इह तु भेदज्ञानस्य सविषयस्य सकारणस्यापारमार्थिकत्वेन वस्तुयाथात्म्यज्ञानविनष्टत्वान्न कथञ्चिदपि बाधितानुवृत्तिः सम्भवति । अतः

---

विकारस्यावर्जनीयत्वात् । विकारो हि पूर्वाकारप्रहाणेनाकारान्तरयोगः । स च कटकमुकुटात्मना परिणते सुवर्णेऽस्त्येव । न च सुवर्णत्वस्यानपायमात्रेण तदसम्भवः । अनुवृत्तावपि तस्य प्राक्तनः पिण्डाद्याकारो ह्यपगतः । ननु—पिण्डस्तु विकृतो न तु सुवर्णमिति तु विवेकविधुरं जल्पितम् । नहि पिण्डो वा कटकादि वा सुवर्णाद्भिद्यते । सुवर्णस्यावस्थाविशेष एव तु तदखिलम् । दध्यात्मना परिणतस्य दुग्धस्येव प्रकृत्युच्छेद एव विकारित्वमिति तु स्वोत्प्रेक्षामात्रम् । व्याख्यातश्च विकारशब्दो वात्स्यायनेन—विकारश्च यदात्मकं द्रव्यं मृद्वा सुवर्णं वा तस्यात्मनोऽन्वये पूर्वव्यूहो निवर्तते व्यूहान्तरं चोपजायते तं विकारमाचक्ष्महे इति । पठ्यते च विकारशब्दः परिणामपर्यायतया—"परिणामो विकारो द्वे समे विकृतिविक्रिये" इति । यदि परिणामेऽपि कचिद्विकारो नाभिमन्येत कथं घटेत पर्यायतया पाठः । इहैव सद्विद्यायां "यथा सोम्यैकेने" त्यादिदृष्टान्तवाक्येषु घटशरावादीनां विकारशब्देन निर्देशोऽपि परिणामविकारयोरविशेषमवगमयति । ननु—सूत्रकृता "परिणामा"दिति ब्रह्मणः परिणामस्याभिधानात्परिणामस्य त्वयाऽप्यभ्युपगन्तव्यतया परिणामविकारयोरविशेषे ब्रह्मणः सविकारित्वप्रसङ्गस्तवाप्यपरिहार्यः । मैवम् । विशिष्टे ब्रह्मण्येव तदभ्युपगमेन तस्य सद्वारकतया ब्रह्मस्वरूपे साक्षादसम्भवात् । यच्च—कामधेन्वादिदृष्टान्ताभिधानं, तद्विषमम् । नहि सिध्यति फलविशेषे तदुपादानम् । अहिकुण्डलदृष्टान्तेन त्वत्यन्ताभेदः सिध्येत् । ब्रह्म तु सच्चिदानन्दरूपं जडात्मना परिणमच्चैतन्याद्यनन्वयेन वैषम्यं प्राप्नोत्येव, तद्दृष्टान्तवैषम्यमनपायम् । यदि चार्जवादिपूर्वा-

---

विति । ब्रह्मण इति शेषः । ननूपपादितं विकारो नेति, तत्राह—विकारो हीति । सुवर्णेऽस्त्येवेति । नास्तीत्यभिमतिमात्रमिति भावः । ननु नाभिमतिमात्रम् । अस्ति निमित्तमित्याशङ्कामनूद्य वारयति—न चेत्यादिना । ननु यदाकारोऽपगतस्तस्यैव विकारो निष्पन्नः, यस्य त्वनपगतो न तस्य विकार इत्याशयेनाशङ्कते—नन्विति । नहि पिण्डो वा कटकादि वा सुवर्णाद्भिद्यत इति । पिण्डत्वं कटकत्वं सुवर्णत्वमित्यवस्था विभिन्ना नाम, तत् पिण्डस्य चेद्विकारः सुवर्णस्य सिद्धो विकार इति भावः । ननु विकारस्वरूपं निरूपितं नामास्माभिः प्रकृतिस्वरूपनिरूपकधर्मोपमर्देन धर्मान्तरयोग एव विकार इति । तत्राह—दध्यात्मनेत्यादि । प्रकृत्युच्छेद इति । प्रकृतिस्वरूपनिरूपकधर्मोपमर्द इति यावत् । ननु पूर्वाकारप्रहाणेनाकारान्तरयोग एव विकार इति यदुक्तं भवता तदपि भवदुत्प्रेक्षितमेवेत्यत्राह—व्याख्यातश्चेति । विकारश्चेति । चस्त्वर्थे, उच्यत इति शेषः । मृद्वा सुवर्णं वेति निदर्शनोक्तिः । आत्मनः—स्वरूपस्य । पूर्वव्यूहः—पूर्वसंस्थानम् । विकारशब्दानुरोधात्तमिति पुंलिङ्गनिर्देशः । तं व्यूहान्तरमिति वा सामानाधिकरण्यम् । ननु लौकिकान्प्रयोगानवलम्ब्य प्रवृत्तानि कोशवचनानि तत्त्वनिर्णये नात्यन्तं प्रमाणानीत्यत्राह—इहैवेति । त्वयापीति । ब्रह्मणो जगदुपादानत्ववादिना त्वयापीत्यर्थः । सद्वारकतयेति । विशेषणभूताचेतनद्वारेत्यर्थः । सिध्यति फलविशेषे—पुत्रादिफलविशेषे । तदुपादानं—कामधेन्वाद्युपादानकारणम् । यश्चायमविकृतत्वे दृष्टान्तः—अहिकुण्डलवदिति, स चानुकूल एव भवत इत्याशयेनाह—अहिकुण्डलेति । परामिमते स्वाभाविकभेदाभेदवादे दोषमाह—

सर्वेश्वरस्येदानीन्तनगुरुपरम्परायाश्च तत्त्वज्ञानमस्ति चेत्, भेददर्शनतत्कार्योपदे-

वस्यात्यागस्तत्राप्यस्तीति विशेषं पश्यसि, तर्हि तत एव विकारमप्यवर्जनीयमाकलय । यच्च भेदाभेदयोरविरोध इति । तदसत् । न ह्येकस्मिन्नेव भेदस्तदभावश्च स्यात् । भावाभावयोर्विरोधात् । अन्यथा घटे शरावत्वस्य शरावे घटत्वस्य च प्रसङ्गात् । ननु–न वयं यदात्मना भेदस्तदात्मनैवाभेदमाचक्ष्महे किन्तु–एकात्मना भेदोऽपरात्मना चाभेद इति, यथा घटशरावात्मना भेदो मृदात्मनाऽभेद इति । को वैतावता विशेषः साधितस्त्वया । स्यादेव विशेषधर्मावच्छिन्नप्रतियोगिताकभेदवति सामान्यधर्मावच्छिन्नप्रतियोगिताकतदभावः । मृदात्मना घटशरावादिकं मिथोऽभिन्नमिति व्यवहारस्येदमेवालम्बनम् । यदि च निपुणं निरूप्येत, घटशरावयोर्मिथो भेदो नाम नान्यस्तत्तदवस्थाविशेषात् । तथाच सति तस्मिन्कथं तन्निषेधो घटेत । उभयोर्मृदात्मकता तु न तदपनोदकम् । सर्वथा ब्रह्मस्वरूपमेव कलङ्कयतामेष पक्षः स्मर्यमाणोऽपि कलङ्कायेत्यपसराम इतः । परपक्षप्रतिक्षेपे दिङ्मात्रमुपदर्शितम् । विशेषो यदि विज्ञेयो भाष्यादि परिशील्यताम् ॥

स्वतन्त्र इति । अनेनावगम्यमानमन्येषां पारतन्त्र्यं न केवलं राष्ट्रस्य राजापेक्षयेव, आत्मापेक्षया शरीरस्येव, "अन्तर्यामितया स्थित" इति विशेषोक्तेः । अनेन ह्यात्मनामप्येतदपेक्षया शरीरत्वं सिद्धम् । यस्य चेतनस्य यद्द्रव्यं सर्वात्मनान्तःप्रविश्य नियन्तुं शक्यं तद्धि

---

यच्चेति । ननु भावाभावयोरप्यविरोधः क्वचिद्दृष्ट इत्यत्राह—अन्यथेति । भेदतदभावयोरविरोधे । प्रसङ्गादिति । घटत्वशरावत्वाश्रययोर्भेदस्येवाभेदस्यापि स्वाभाविकत्वादिति भावः । ननु शरावः शराव एव, घटो घट एव, नानयोरन्योन्यधर्मसाङ्कर्यप्रसङ्गावकाशः, नहि यदात्मना भेदस्तदात्मनैवाभेदोऽपीष्यत इत्याशयेनाशङ्कते—नन्विति । एतावता–एकात्मना भेदस्यापरात्मना चाभेदस्योपवर्णनेन । विशेषः–अभिलषितो विशेषः । त्वयेति । स्वाभाविकभेदाभेदवादिना त्वयेत्यर्थः । को वा साधित इत्यन्वयः । न कश्चिदिति यावत् । विशेषालाभमेवोपपादयति—स्यादेवेति । सर्वसम्प्रतिपन्न एवायमंश इति भेदाभेदवादिनः को लाभ इति भावः । विशेषधर्मः–घटत्वशरावत्वादिः । सामान्यधर्मः–मृत्त्वादिः । इदमेवेति । मृत्त्वलक्षणसामान्यधर्मावच्छिन्नप्रतियोगिताकभेदाभाव एव । अवलम्बनमित्येतदनुरोधान्नपुंसकलिङ्गता । भेदस्वरूपापरिज्ञानकृतोऽयं वादः–एकात्मना भेद अपरात्मनाऽभेदश्चेति, भेदस्वरूपपर्यालोचने तु नैवावकाशोऽस्येत्याशयेनाह—यदि च निपुणमिति । नान्य इति । न वैशेषिकाभिमतः कश्चिदन्योन्याभावो नाम पदार्थान्तरमिति भावः । उभयोः–घटशरावयोः । न तदपनोदकं–न शरावत्वाद्यवस्थाविशेषोपमर्दकम् । "हृदये जीववज्जीवे योऽन्तर्यामितया स्थित" इत्यनन्यथासिद्धमात्मपरमात्मनोर्व्यतिरेकनिर्देशं व्याचक्षाणैर्विवक्षितार्थदाढर्याय परपक्षप्रतिक्षेपोऽनतिविस्तृतमेतावता विरचितः। अथोपसंहरति—परपक्षेति ।

अथ मूलं व्याचष्टे—स्वतन्त्र इति । अनेन–जीवे योऽन्तर्यामितया स्थितः स्वतन्त्र इति विशेषवचनेन । ननु चेष्टाश्रयित्वं भोगावच्छेदकत्वं वा शरीरलक्षणं, तच्च न घटते, नहि जीवे चेष्टा, न वा परमात्मनो भोक्तृता, इत्यत्राह—यस्य चेतनस्येति । तद्धीति । इदमेव शरीरलक्षणं सर्वानुगतमनतिप्र-

शाद्यसम्भवः। नास्ति चेत्, अज्ञानस्य तद्धेतोः स्थितत्वेनाज्ञत्वादेव सुतरामुपदेशो न सम्भवति। किञ्च–गुरोरद्वितीयात्मविज्ञानादेव ब्रह्मज्ञानस्य सकार्यस्य

तस्य शरीरम्। शरीरशरीरिभावज्ञापनेन शेषशेषिभावोऽप्यात्मपरमात्मनोः सिद्धः। शरीरं हि शरीरिणः शेपभूतं पारार्थ्यात्। शरीरसत्ता शरीरिणः फलायैव। परार्थस्तु शेषः। "शेषः परार्थत्वा"दिति च सूत्रम्। परगतातिशयाधानेच्छयैवोपादेयत्वं यस्य स्वरूपं स शेष इति च तदाशयः। न चात्मस्वरूपं परमात्मनोऽर्थे कथं स्यादिति शङ्क्यम्। दासस्वरूपं हि स्वामिन एवार्थे। स्मर्यते च—"दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः" "कृष्णस्य हि कृते सर्वमिदं विश्वं चराचरम्" इति।

सर्वान्तर्याम्ययमेव तत्तद्देवशरीरस्तैस्तैराराधितस्तांस्तानर्थांस्तेभ्यस्तेभ्यः प्रयच्छतीत्याह—**सर्वकर्मफलप्रद** इति। सर्वेषां कर्मणां–पशुपुत्रस्वर्गाद्यपेक्षयेन्द्रादीनुद्दिश्य क्रियमाणानां कर्मणां, फलप्रदः–तत्तदाराधनेन तत्तच्छरीरकः स्वयं प्रसन्नो भूत्वा फलं प्रयच्छतीत्यर्थः। उक्तं च गीतायाम्—"स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान्मयैव विहितान् हि तान्॥ ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः। तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम्॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च।" "त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते।" "यज्ञैस्त्वमिज्यसे नाथ! सर्वदेवमयाच्युत!।" आह च सूत्रकारोऽपि—"फलमत उपपत्ते"रिति। श्रुतिरपि यागस्य परमात्माराधनरूपतया

सक्तं चेति भावः। इदमत्र बोध्यम्—चेष्टा चेत्क्रियासामान्यमतिप्रसक्तं नाम, क्रियाविशेषश्चेच्छरीर इव प्राणेऽपि तुल्यः। तदतिप्रसक्तं चेष्टाश्रयत्वलक्षणम्। एवं भोगावच्छेदकत्वमपि। पिशाचोऽपि परशरीरमाविश्य क्षणं भुङ्क्ते नाम, नहि तस्येदं शरीरमिति व्यवहारः स्यादिति। शेषत्वे हेतुमाह—**पारार्थ्या**दिति। पारार्थ्यमुपपादयति—**शरीरसत्ते**ति। नन्वस्तु पारार्थ्यं तावता शेषत्वं कुत इत्यत्राह—**परार्थस्तु शेष** इति। तत्र किं मानमित्यत्राह—**शेषः परार्थत्वादिति च सूत्र**मिति। परस्यैवार्थो यस्मादित्यवधारणगर्भं व्याचष्टे—**परगते**ति। आरब्धे चासमाप्ते शेषे फलानुपधानेनाव्याप्तिं वारयन्नाह—**परगतातिशयाधानेच्छयैवोपादेयत्व**मिति। **कथं स्या**दिति। आत्मा हि न शरीरवत्सङ्घातलक्षणः, येन परार्थः स्यात्, ज्ञानस्वरूपस्तु सः, स च स्वस्यैवातिशयेन स्वयं चकास्ति। परमात्मा चावाप्तसमस्तकामः, तस्य चाऽनेनातिशयः कोऽयमाधीयते, तत्र युक्तमस्य शेषत्वं परमात्मापेक्षयेति भावः। **दासस्वरूपं हि स्वामिन एवार्थे** इति। आत्मनां ज्ञानमयत्वमिव परमात्मदास्यमप्यन्तरङ्गं स्वरूपं, स्वामिमनःप्रीणनलक्षणातिशयाधानं च दासधर्मः, अवाप्तसमस्तकामोऽपि परमात्मा दाससेवया प्रीत्यतिशयमाप्नोत्येवेत्यतिशयोऽप्यस्यैव दासत इति न शेषशेषिभावानुपपत्तिरिति भावः।

**तत्तच्छरीरक** इति। एतेन–अन्योद्देशेन कृतैः कर्मभिरन्यस्य कथं प्रसाद इत्याशङ्का निरस्ता। सपर्या हि शरीरे विरच्यमाना शरीरिणः प्रीतिमुत्पादयतीति नैसर्गिकमेतदिति भावः। **त्रैविद्या** इति। यज्ञैर्गामिष्ट्वा–परमनिःश्रेयसप्रदं मामिष्ट्वापि प्रार्थयन्ते स्वर्गतिम्, यतस्ते ममैव सर्वान्तरात्मत्वं मयैवात्मना सर्वेषामिन्द्रादीनामधिष्ठितत्वं च न जानन्ति, ते हि त्रैविद्याः, त्रय्यामेव रताः ननु त्रय्यन्ते, अतस्ते इन्द्रादीनेव वयं यजामह इति मन्यन्ते त एव च फलप्रदा इति च, तांस्तत्परिमितं फलमर्थयन्त इति भावः। **फलमत उपपत्तेः**—यदैहिकमामुष्मिकं वा फलं शास्त्रीयं, सर्वमेव

विनष्टत्वात् शिष्यं प्रत्युपदेशो निष्प्रयोजनः। गुरुस्तज्ज्ञानं च कल्पितमिति चेत्, शिष्यतज्ज्ञानयोरपि कल्पितत्वात्तदप्यनिवर्तकम् । कल्पितत्वेऽपि पूर्वविरोधित्वेन

---

फलसाधनत्वयोगमवगमयति—"चतुर्होतारो यत्र सम्पदं गच्छन्ति देवैः" इति । चतुर्होतारः–यज्ञाः, यत्र–यस्मिन् सति, परमात्मतया सतीत्येतत्, देवैः–इन्द्रादिभिः, सम्पदं–फलसाधनत्वलक्षणसमृद्धिं गच्छन्ति, इति तदर्थः । इन्द्रादिदेवतान्तर्यामिभूतपरमपुरुषाराधनरूपतया यज्ञादीनि फलजननसमर्थानि भवन्तीत्येतत् । तदेवं श्रुतिस्मृतिशतेन कर्मणां फलसाधनत्वप्रकारेऽवगम्यमाने तमिमं परित्यज्यापूर्वकल्पनया तत्समर्थनमनादरणीयमिति सिद्धम् । देवताप्रसादद्वारा कर्मणां फलसाधनत्वमित्येतत्तत्र तत्र श्रूयमाणेन "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति" इत्याद्यर्थवादवाक्येनाप्यवगम्यते । ये त्वर्थवादवाक्यानामप्यानर्थक्यमाकलय्य क्षणविनाशिनां कर्मणां फलसाधनत्वनिर्वहणाय जडमेकमपूर्वं कल्पयन्ति तेषां परमपुरुषैश्वर्यावधीरणे किं निदानमिति तु न वयं जानीमः । हिरण्यनिधिमपवरके सन्निहितमवधूय कृपणं जनं याचमानानां कोद्रवलुब्धानामिव दौर्भाग्यमेवैषां विशेषतः । सर्वकर्मसमाराध्ये सर्वान्तर्यामिणीश्वरे । अनपायमुपायत्वमखिलेषु फलेष्वपि ॥ श्रुतिस्मृतिषु सुव्यक्तं व्यक्तं सूत्रकृदब्रवीत् । अर्थिनः शिक्षयन्नाह तदेतद्भगवानिह ॥ कश्चिज्जीवादनर्थान्तरमभिवदति ब्रह्म मायाऽवभासात् स्वांशोपाधेस्तु भेदाद्वदति तदितरः

---

तदतः–परमपुरुषात्परमात्मन एव सिद्ध्यति, कुतः? उपपत्तेः–अन्यस्य हि नोपपद्यते फलप्रदत्वमस्यैव सर्वज्ञस्य सर्वशक्तस्य सर्वतनोस्तदुपपद्यते । एतत्सूत्रेण विषयीकृतां श्रुतिमप्याह—श्रुतिरपीति । श्रुतिं व्याचष्टे—चतुर्होतार इत्यादिना । पदार्थमभिधाय भावमाह—इन्द्रादीति । अपूर्वकल्पनया तत्समर्थनमिति । जैमिनेरयं पक्षः । अनादरणीयत्वे निमित्तमाह—देवतेत्यादि । तत्र तत्रेति । तत्तद्वाक्यशेष एवेति यावत् । अर्थवादवाक्येनापीति । अपिशब्दात्प्रदर्शितश्रुतिस्मृतयः समुच्चीयन्ते । आनर्थक्यमिति । स्वार्थेऽप्रामाण्यमित्यर्थः । ननु श्रुतित्वाविशेषात्कथमप्रामाण्यं?, न वयं सर्वथाऽप्रामाण्यं ब्रूमः, किन्तु स्वार्थे एव हि, तर्हि कस्मिन्? । तात्पर्यार्थे । अत एव लक्षकाणामपि वाक्यानां प्रामाण्यम्, कोऽत्र लक्ष्यार्थः, विधौ प्राशस्त्यमन्यद्वा, ननु वचनविस्तारस्य किं फलम् । प्ररोचनमेव । अस्ति च प्रवर्तकतया प्रामाण्यमिति जैमिनीयानामाशयः । किं निदानमिति तु न वयं जानीम इति । नैव निदानमित्याशयः । श्रूयमाणश्रुतेः स्वार्थप्रहाणमश्रुतापूर्वकल्पनं श्रुतिस्मृतिशतोदितपरमपुरुषैश्वर्यादेरनवगम इत्येवमादयो बहवो दोषाः परेषामिति भावः । अर्थिनः शिक्षयन्नाहेति । अयं भावः—यथानिर्देशमीश्वरनिरूपणाय प्रवृत्तेऽस्मिन् श्लोके सर्वकर्मफलप्रद इति परिसमापनादिदं सूच्यते—बहवः सर्वेश्वरमेकमभ्युपगच्छन्तोऽपि स्वस्वकर्मभिरेव परमेश्वराराधनभावविशेषविहीनैरपूर्वद्वारा वा तत्तदिन्द्रादिक्षुद्रदेवताद्वारा वा फलसिद्धिं मन्यन्ते, ते भ्रान्ताः, तथाऽस्मदीयैर्न भाव्यमित्यर्थविशेषः सूच्यत इति । अथास्मिन् श्लोके प्रतिक्षिप्तान्परपक्षान् सङ्गृह्य प्रदर्शयन्भगवदुक्तपक्षस्यैवोपादेयतामाह—कश्चिदिति । मायावभासात्–मिथ्याभूता याऽविद्या, तत्प्रतिफलनकृतनानावभासाज्जीवादनन्यदेव परब्रह्मेति शाङ्करः पक्षः । स्वांशेत्यादिर्भास्करः पक्षः । स्वांशेत्यनेन मिथ्यात्वव्यावृत्तिः । ते हि अविद्यामुपाधिं

निवर्तकमिति चेत् तदाचार्यज्ञानेऽपि समानमिति तदेव निवर्तकं भवतीत्युपदेशानर्थक्यमेव, इति कृतमसमीचीनवादैर्निरस्तैः"इति ॥ १०७ ॥

कल्प्यमानात्मभेदात् । कश्चित्स्वांशात्तु साक्षात्परिणतिरचितस्वात्मभेदाच्च एते भ्रान्ता वेदान्तमूर्धस्वयमिह गदितो वैदिकानां तु पक्षः ॥ इति ॥ १०७ ॥

ब्रह्मणोंऽशं मन्यन्ते, तदुपाधिकृतश्च जीवभेद इति । कल्प्यमानात्मभेदाज्जीवादनर्थान्तरं तद्वदतीत्यन्वयः । कश्चिदिति यादवप्रकाशपक्षः । साक्षादित्यत्र औपाधिको भेदो व्यावृत्तः । स्वरूपत एव जीवात्मना परिणाम इति हि तेषां पक्षः । स्वांशाज्जीवादनर्थान्तरं ब्रह्म वदतीत्यन्वयः । एषां पक्षो भ्रान्तिमूलकस्त्याज्य इत्याह—एत इत्यादि । अयमेवोपादेयो वेदविदभिमत इत्याह—अयमित्यादि ॥१०७॥

---

स श्रीकृष्णः परं ब्रह्म भगवान् पुरुषोत्तमः ।
उपास्य इष्टदेवो नः सर्वाविर्भावकारणम् ॥ १०८ ॥

स चेश्वरः श्रीकृष्ण एव न त्वन्य इत्याह—स इति । यश्च परं ब्रह्म

एवं निरूप्य सर्वेश्वरतत्त्वं, मुमुक्षूपास्यं परं ब्रह्म ततोऽनन्यदेव, तच्च न देवतान्तरमित्यावेदयति—स श्रीकृष्णः परं ब्रह्मेति । एतेन-परं ब्रह्म समुचीर्णमीश्वरभावादित्येतदपास्तम् । तत्र प्रमाणाभावात् । परं ब्रह्म प्रस्तुत्य तस्मिन्नीश्वरत्वस्याम्नानाच्च । तथाहि—"को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" "तदप्येष श्लोको भवति भीषास्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥" "सहोवाचैतदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमसुखममात्रमनन्तरमबाह्यं न तदश्नाति किञ्चन न तदश्नाति कश्चन" "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने

अतीतानन्तरयोः सङ्गतिमाह—एवमित्यादिना । एतेन—यथोद्देशं मायाजीवेशानां स्वरूपे निरूपिते पुनरीश्वरनिरूपणमनुचितमित्याशङ्का निरस्ता । यद्यप्यस्त्यधिकोऽर्थः, यदुपास्यत्वविधानम् । अथापि स श्रीकृष्णः परं ब्रह्म सर्वाविर्भावकारणमित्यन्तस्यानवगतार्थावेदकता यदि न स्यात्तदा प्ररोचनमेव स्यात्, तथासारमिति युक्तमिदमवतरणम् । स एव सर्वाविर्भावकारणं परं ब्रह्म, सच श्रीकृष्ण एवेत्यन्वयो बोध्यः । व्याख्यातैवेममन्वयमुपरिष्टाद्दर्शयिष्यति । विवक्षितार्थदार्ढ्याय परपक्षप्रतिक्षेपमारभते—एतेनेत्यादिना । न केवलं मानाभावः, बाधकं मानमप्यस्तीत्याह—परं ब्रह्म प्रस्तुत्येति । आनन्दमयं परं ब्रह्म प्रस्तुत्येदं श्रूयते "को ह्येवान्या"दित्यादि । आकाशः—प्रकाशैकस्वरूपः । भीषाऽस्मादिति । अस्मात्—आनन्दमयात् भीषा—भीत्या । "स होवाचैतदक्षर"मित्यादिना परं ब्रह्म प्रस्तुत्य तस्येश्वरत्वं श्राव्यते—एतस्य वेत्यादिना । इहाक्षरशब्दनिर्दिष्टं परं ब्रह्मैव, अन्यस्मिन्नम्बरान्तधृतेरसम्भवात् । श्रूयते चाक्षरस्याम्बरान्तधृतिः । सूत्रितं च—अक्षरमम्बरान्तधृतेरिति । असुखमित्यन्तेन

१ उपास्य इति शब्दादुपास्यत्वविधानादपूर्वार्थकतया न पौनरुक्त्यमिति भावः ।

भगवान् पुरुषोत्तमः सर्वाविर्भावकारणं च भवति स ईशो नोऽस्माकमुपास्य इष्टदेवश्च श्रीकृष्ण एवेति ज्ञेय इत्यन्वयः। परं–सर्वोपास्यत्वाच्छ्रेष्ठं, ब्रह्म–बृंहते–अपारमहिमत्वात्सर्वेभ्योऽधिकं भवतीति ब्रह्म। तदुक्तं विष्णुपुराणे—बृहत्वाद्बृंह-

---

गार्गि द्यावापृथिव्यौ विधृते तिष्ठतः, एतस्य वा अक्षरस्य प्रशासने गार्गि निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति, एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः, प्रतीच्योऽन्या यां यां दिशमनु, एतस्य वा अक्षरस्य प्रशासने गार्गि ददतो मनुष्याः प्रशंसन्ति, यजमानं देवा, दर्वीं पितरोऽन्वायत्ताः।" "स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान्, एष सर्वेश्वर एष भूताधिपतिरेषां लोकानामसम्भेदाय" "स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानां राजा" "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य" "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम् × × × एको वशी सर्वभूतान्तरात्मा" "तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतं महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति। भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः" "यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि" "ईशा-

---

प्राकृता गुणाः प्रतिषिद्धाः। अमात्रं–अपरिच्छिन्नम्। अनन्तरमबाह्यं–अत एवान्तर्बहिर्विभागरहितम्। न तदश्नाति किञ्चन–भोक्तुरत्यन्तविलक्षणमिति यावत्। न तदश्नाति कश्चन–भोग्यतोऽत्यन्तविलक्षणमिति यावत्। स चेत्यादिना प्रस्तुते परे ब्रह्मणि सर्वस्य वशीत्यादिना परमैश्वर्यं श्राव्यते। "स वा एष महानज आत्मा सर्वस्य वशी सर्वस्येशान"इत्युत्तरेण सम्बन्धः। स वा एष इति प्रसिद्धिरनूद्यते, का सा प्रसिद्धिः?। उच्यते–"योऽयं विज्ञानमयः प्राणेषु–तं देवा ज्योतिषां ज्योति"रिति यः प्रकाशकानामिन्द्रियाणामपि प्रकाशकत्वाधायकतया प्रतिपादितः, विज्ञानं–प्रकाशनं, तन्मयः–तत्प्रचुरः। सर्वतः प्रकाशनसामर्थ्यमस्याधिकमिति यावत्। अपि च य एषोऽन्तर्हृदय आकाशः–सुषिरं सूक्ष्मम्, तस्मिन् शेते, विश्रुतं चैतत्। सोऽयं परमात्मा सर्वस्य वशी सर्वस्येशान इति भावः। स वा अयमात्मा सर्वेषां भूतानामिति। परब्रह्मणः प्रकरणमिदम्। "आत्मा वाऽरे द्रष्टव्य" इत्यादिना "स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्व"मित्यन्तेन पूर्वं हि परमात्मा प्रस्तुतः। समनन्तरं च श्रूयते—"तद्यथा रथनाभौ रथनेमौ चाराः सर्वे समर्पिताः एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एते आत्मानः समर्पिता"इति। अङ्गुष्ठमात्रः पुरुष इति। अयं च पुरुषः परमात्मा, समर्थितं चैतत्सूत्रकृता "शब्दादेव प्रमित"इत्यनेन। "हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातन"मिति प्रस्तुते परब्रह्मणि श्रूयत इदं "एको वशी सर्वभूतान्तरात्मे"ति। प्राण एजति निःसृतम्–प्राणः परमात्मा, तत एवेदं विभक्तं कार्यात्मना तस्मिन्नेव प्रशासितरि कम्पते। महतो भयादुद्यताद्वज्रादिव। यः सर्वज्ञ इति। "यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वै"रिति द्युपृथिव्याद्यायतनत्वेन पूर्वं प्रस्तुतः परमात्मा "यः सर्वज्ञ" इत्यादिना

णत्वाच्च भावानां सकलाश्रयात् । यस्माद्धारयते भावान्ब्रह्म तेन निरुच्यते" इति । तथाच स्वरूपतः स्वभावतश्चानवधिकातिशयं यत्तत् परं ब्रह्मेत्युक्तं भवति ।

---

वास्यमिदं सर्वं" "यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् । तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" "सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एतमितः प्रेत्याभिसम्भवितास्मीति ।" "अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसम्भेदाय अपहतपाप्मा ह्येष ब्रह्मलोकः" । स्मर्यते च तथा—"परः पराणां परमः परमात्माऽऽत्मसंस्थितः । रूपवर्णादिनिर्देशविशेषणविवर्जितः ॥ अपक्षयविनाशाभ्यां परिणामर्द्धिजन्मभिः । वर्जितः शक्यते वक्तुं यः सदाऽस्तीति केवलम् ॥ सर्वत्रासौ समस्तं च वसत्यत्रेति वै यतः । ततः स वासुदेवेति विद्वद्भिः परिपठ्यते ॥ तद्ब्रह्म परमं नित्यमजमक्षरमव्ययम् । एकस्वरूपं च सदा हेयाभावाच्च निर्मलम् ॥" "स सर्वभूतप्रकृतिं विकारान् गुणादिदोषांश्च मुने व्यतीतः । अतीतसर्वावरणोऽखिलात्मा तेनास्तृतं यद्भुवनान्तराले ॥ समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशोद्धृतभूतसर्गः । इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥ तेजोबलैश्वर्यमहावबोधसुवीर्यशक्त्यादिगुणैकराशिः । परः पराणां सकला न यत्र क्लेशादयः सन्ति परावरेशे ॥ स ईश्वरो व्यष्टिसमष्टिरूपोऽव्यक्तस्वरूपः प्रकटस्वरूपः । सर्वेश्वरः सर्वदृक् सर्वविच्च समस्तशक्तिः परमेश्वराख्यः ॥" "त्वत्तोऽस्य जन्मस्थितिसंयमा विभो भवन्त्यनीहादगुणादविक्रियात् । त्वयीश्वरे ब्रह्मणि नो विरुध्यते

---

निरूप्यते । ब्रह्मयोनिमिति । ब्रह्मेति पदच्छेदः । योनिं सर्वस्यास्य । अथ स्मृतीरुदाहरति—तथेति । आत्मसंस्थितः—आत्मस्वन्तर्यामितया संस्थितः । रूपं—आकृतिः प्राकृता, वर्णः—ब्राह्मणादिः, शुक्लादिर्वा । धाता जगताम्—स्रष्टा, विधाता—विधारकः, तत्तदवान्तरसर्गकर्ताऽपीति वा । व्यष्टिः—देवादिः, समष्टिः—हैरण्यगर्भान्तं महदादि, तदुभयं रूपं—शरीरं यस्य स तथाभूतः । अत एव व्यक्तस्वरूपः प्रकटस्वरूपश्च । सर्वदृक् सर्वविच्च—सामान्यतो विशेषतश्च वेत्ता । त्वत्तोऽस्येति । अस्य—जगतो जन्मस्थितिसंयमा अनीहादगुणादविक्रियात्त्वत्तः परमेश्वराद्भवन्तीत्यन्वयः । ईहा—भोगस्पृहा, तद्रहितात् । अगुणात्—सत्त्वादिगुणत्रयरहितात् । ननु कथमनीहादगुणादविक्रियादस्योत्पत्तिः ? । यतः कर्तुर्हेतोरुत्पत्तिः, तेन हि स्पृहापूर्वकचेष्टावता भाव्यम्, यथा कुलालेन भूयते । यतः प्रकृतेरुपादानादुत्पत्तिस्तेन विकारवता भाव्यम्, यथा मृत्पिण्डेन विकृतेन भूयते । अस्य यतो जन्म तेन च गुणमयेन भाव्यम्, इदं हि गुणमयम् । सरूपमेव ह्युपादानम् । अथ तथात्वे विकाराद्यशुभान्वयः स्यात् । त्वत्त इति च नोपपद्यते, त्वमस्यधुना वसुदेवगृहेऽभिव्यक्तः, कालतो देशतश्च परिच्छिन्नादपरिमितस्यास्य कथमुत्पत्त्यादयः, तद्ब्याहत्वमस्य जन्मस्थितिसंयमास्त्वत्त इत्यत्राह—त्वयीति । त्वयि ब्रह्मणि नो विरुध्यते—त्वमसि ब्रह्म, स्वरूपतः स्वभावतश्च निरतिशयबृहत्त्वविशिष्टोऽसि । तदपरिच्छिन्नाद्भवतोऽस्योत्पत्त्यादि न दुर्घटम् । किञ्च—त्वदाश्रयत्वात्—सर्वस्यास्य गुणमयस्य गुणवशगजीवराशेश्च त्वमेव सर्वात्मनाऽऽश्रयः, न दण्डादेः पुरुषादिरिव, शरीरस्येवाऽऽत्मा, सर्वस्यास्यात्मेत्येवत्, एवंभूतस्वभावतया तव, गुणैः—सत्त्वादिभिस्तत्कार्यैर्विकारैश्च कर्तृभिः, उपचर्यते—उप समीप एव चर्यते—गम्यते । त्वयि सर्वशरीरे शरीरद्वारा सर्वो गुणकार्य-

अजहल्लिङ्गत्वादीशविशेषणत्वेऽप्यदोषः । "लिङ्गसङ्ख्याविभेदेऽपी"ति वाक्यात् । परमिति विशेषणं तु—"मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यह"मित्युक्तान्मायाख्यब्रह्मणः, "अक्षरं ब्रह्म परम"मित्युक्तादक्षरात्, "तेने ब्रह्म हृदा य आदिक-

---

त्वदाश्रयत्वादुपचर्यते गुणैः ॥" "रूपं यत्तत्प्राहुरव्यक्तमाद्यं ब्रह्मज्योतिर्निर्गुणं निर्विकारम् । सत्तामात्रं निर्विशेषं निरीहं स त्वं साक्षाद्विष्णुरध्यात्मदीपः ॥ योऽयं कालस्तस्य तेऽव्यक्तबन्धो चेष्टामाहुश्चेष्टते येन विश्वम् । निमेषादिर्वत्सरान्तो महीयांस्तं त्वेशानं क्षेमधाम प्रपद्ये ॥" "व्यक्ताव्यक्तमिदं विश्वं रूपं ते ब्राह्मणा विदुः" "त्वमेव कालो भगवान् विष्णुरव्यय ईश्वरः" "ब्रह्म मां परमं प्रापुः सङ्गाच्छतसहस्रशः ।" "भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् । सर्वोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति सः ॥" "भक्तिं लब्धवतः साधोः किमन्यदवशिष्यते । मय्यनन्तगुणे ब्रह्मण्यानन्दानुभवात्मनि ॥" इति । यत्तु परेषामभिमतं—मायोपहितत्वनिबन्धनमेवेश्वरत्वं ब्रह्मणो न स्वतः, ये चेश्वरत्ववादास्ते तन्मूलका एवेति । तन्मायावादनिरासेनैव निरस्तमूलमिति नात्र वक्तव्यमवशिष्यते । यदपि सन्मात्रस्य ब्रह्मणः परिणतिविशेषनिबन्धनमीश्वरत्वं मृदो घटत्वमिवेति, तदपि परिणामवादखण्डनेन निरुन्मीलितम् । स श्रीकृष्णः परंब्रह्म—योऽन्तर्यामी सर्वेश्वरः प्राक्प्रस्तुतः स कृष्ण एव नान्यः, यच्च सर्ववि-

---

सम्बन्धः । सम्बन्धातीत्युपादानत्वं तव गुणमयजगदपेक्षया न विरुद्धमिति भावः । ननु चेदेवं सर्वैरेभिः शरीरी स्यादसौ शरीरसंसर्गाहितसुखदुःखोपभोगो जीवस्येवास्य स्यादित्यत्राह— ईश्वर इति । नहि शरीरसम्बन्धो भोगाय, भोगे तु गुणवश्यता निमित्तम् । अयं त्वीश्वरः । "अनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशम्" इति हि श्रूयते । अत एव न कुलालादिवदीहाऽस्य, अवाप्तसमस्तकामो ह्ययम् । सङ्कल्पलेशेनैव सृजति । विहरणं चेश्वरस्य समुचितमेतेन । रूपमिति । अव्यक्तम्–न व्यज्यते चक्षुराद्यैस्तथाभूतम् । आद्यं—सर्वस्यास्य । निर्गुणम्–गुणत्रयातीतम् । ब्रह्मज्योतिः–ब्रह्माख्यं ज्योतिः स्वस्मै स्वयं प्रकाशमानम् । सत्तामात्रं–वृद्धिक्षयादिरहितम् । निर्विशेषं–शब्दस्पर्शादिविशेषरहितम् । निर्विकारम्–शोकमोहादिरहितम् । निरीहं–पुण्यपापरूपकर्मरहितम् । अध्यात्मदीपः—आत्मनि–जीवात्मनि दीपवत्प्रकाशमानम् । तस्याप्यन्तर्यामिणमित्यर्थः । योऽयं काल इति । निमेषादिर्वत्सरान्तो योऽयं महीयान् कालः, येन सहकारिणा विश्वमिदं चेष्टते स्वस्वकार्ये, तमपि कालं ते चेष्टामाहुः, त्वदायत्तमाहुरिति यावत् । अव्यक्तबन्धो–अव्यक्तं–प्रधानं तस्य बन्धुराश्रयः । त्वेति पदच्छेदः । त्वामीशानं क्षेमधाम प्रपद्ये । व्यक्ताव्यक्तमिदमिति । इदं व्यक्ताव्यक्तलक्षणं जगत्, प्रकृतिपुरुषलक्षणं जगत् । प्रकृतिर्हि परिणामविशेषेण व्यज्यते–गृह्यत इन्द्रियैः । पुरुषस्तु न तथेत्यव्यक्तः । ते रूपम्–तव परमात्मनः शरीरम् । यश्च कालः सोऽपि त्वमेव । कालरूपोऽसि त्वमित्यर्थः । ननु–किमेभिर्वचनैः, न वयं ब्रह्मण्यैश्वर्यं सर्वथा नेति ब्रूमः, औपाधिकमङ्गीकुर्म इत्येवाशयेनाशङ्कामनूद्य परिहरति—यत्त्वित्यादिना । मायावादनिरासेनैवेति । सति मूले शाखा, सैव प्राङ् निरस्तेति भावः । यादवप्रकाशपक्षमादाय परिहरति—यदपीति । परिणामवाद-

वये"इत्युक्ताच्छन्दब्रह्मणश्च व्यावृत्त्यर्थम् । "आदित्यवर्णं तमसः परस्तात्" "अक्षरात्परतः परः" "सर्वे वेदा यत्पदमामनन्ति" इत्यादिश्रुतेः ।

---

र्भावकारणं परं ब्रह्म तदपि स एव । "यतो वा इमानि भूतानि जायन्ते" इत्यादिना जगज्जन्मादिकारणतया लक्ष्यमाणं परं ब्रह्म स एवेत्येतत् । आविर्भावशब्दोऽत्र जन्मपरः स्थित्यादेरुपलक्षकः । आविर्भावशब्देन जन्मनो निर्देशात्सत एवावस्थाविशेषयोगेनाभिव्यक्तिमात्रं जन्मेत्युक्तं भवति । एतेनासत्कार्यवादे अनौचित्यं व्यज्यते । ननु-किमनौचित्यम् । नहि पटादिकार्यमुत्पत्तेः प्रागुपलभ्यते, नच कार्यकारणयोरनन्यत्वं, नामभेदात् । नहि कदाचिदपि कार्यं तन्तुरिति व्यवह्रियते, नवा कारणं पट इति व्यवह्रियते, कार्यं पट इत्येव कारणं तन्तुरित्येव । एवमर्थभेदश्च-नहि पटेन साध्यमाच्छादनं तन्तुना भवेत्, नहि तन्तुसाध्यं सीवनं पटेन स्यात् । एवं सङ्ख्याभेदश्च-नहि तन्तूनामनेकत्वेऽपि पटस्यानेकत्वं, पटस्त्वेक एव तन्तवस्तु सहस्रम् । एवं बुद्धिभेदश्च-नहि कदापि पट इति बुद्धिस्तन्तुषु भवेत् । एवं कालभेदश्च-तन्तुकाले पटो भविष्यतीति व्यवहारात् । कारणभेदश्च-नहि तन्तुनिष्पादकैः पटारम्भो भवेत्, न वा पटनिष्पादकैस्तन्त्वारम्भो भवेत् । आकारभेदश्च-पटे हि चतुरश्रत्वादिः, तन्तुषु दीर्घत्वम् । तदेवं नामादिभेदात्कार्यं कारणाद्भिद्यत एव । अन्यथा कारकव्यापारवैयर्थ्यं च, प्रागेव निष्पन्ने तदनपेक्षणात् । तस्मात्तन्तुभ्यः पटात्मकं

---

खण्डनेन-समनन्तरपूर्वश्लोके । जगज्जन्मादिकारणतया लक्ष्यमाणमिति । ननु कथमयमर्थः सर्वाविर्भावकारणमित्यतः सिद्ध्येदित्यत आह-आविर्भावशब्दोऽत्र जन्मपरः स्थित्यादेरुपलक्षक इति। अत्र जन्मपर इति । परं ब्रह्मेत्यनेन समभिव्याहृतेऽस्मिन्वाक्ये परब्रह्मासाधारणलक्षणपरतैव समुचितेति भावः । एतेनाभिव्यक्त्यर्थकस्याविर्भावशब्दस्य कथं जन्मार्थकतेत्याशङ्का परास्ता । ननु सर्वोत्पत्त्यादिकारणमिति सुगमार्थे शब्दे सत्याविर्भावशब्दप्रयोगस्य किं मूलमित्यत आह-आविर्भावशब्देनेति । अनौचित्यं व्यज्यत इति । एतद्व्यञ्जनमेवास्य निर्देशस्य प्रयोजनमिति भावः । अनौचित्यमेव शङ्कासमाधानमुखेन विशदयति-नन्वित्यादिना । किमिति प्रतिक्षेपे । नानौचित्यमित्यर्थः । औचित्यमनुपलम्भेन साधयति-नहि पटादिकार्यमिति । ननु पटस्तन्तुतो नान्यः, तदुपलब्ध्यैव कार्यद्रव्यस्यापि प्राक्सत्ता गम्यत इत्यत्राह-न च कार्यकारणयोरनन्यत्वमिति । अनन्यत्वे विरोधिलिङ्गान्याह-नामभेदादित्यादिना । नामभेदो ह्यर्थभेदनियतः । असत्यर्थभेदे नामभेदनियमो न घटेतेति भावः । लिङ्गान्तरमाह-एवमर्थभेदश्चेति । फलभेदः । असति साधनभेदे फलभेदनियमो हि न घटेत, तत्फलासमर्थेन ततो भिन्नेन हि भाव्यमिति भावः । सङ्ख्याभेदश्चेति । विरुद्धसङ्ख्यान्वयो भेदं गमयतीत्येतत् । बुद्धिभेदश्चेति । तद्बुद्ध्यनवबोध्येन ततोऽन्येन हि भाव्यमिति भावः । कालभेदश्चेति । तत्कालवृत्त्यभावप्रतियोगितया प्रमीयमाणेन ततो भिन्नेन भाव्यमिति भावः । कारणभेदश्चेति । तन्निष्पादकानिष्पाद्येन ततो भिन्नेनैव भाव्यम् । अन्यथा-अभेदे । तदनपेक्षणादिति । कारकव्यापारानपेक्षणादित्यर्थः । निष्पत्तये हि कारकव्यापारः, स चेन्निष्पन्नः कारकव्यापारः कस्मै

---

१ तस्य फलम्-तत्फलम् । २ तस्य या बुद्धिस्तद्बुद्धिः । ३ तस्य कालः-तत्कालः ।

भगवानिति। भगशब्दवाच्या ये गुणास्ते सन्त्यस्येति भगवान्। तथा चोक्तं विष्णुपुराणे—"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय! भगवच्छब्दः सर्वकारणकारणे॥ सम्भर्तेति तथा भर्ता भकारोऽर्थद्वयान्वितः।

---

कार्यमपूर्वमेवोत्पद्यत इति युक्त एवासत्कार्यवादः। या चेयमाशङ्का–तन्तुषु प्रागसम्बद्धस्यापि पटस्य तेषु कारकव्यापारेण चेदुत्पत्तिः कपाले वा कारकव्यापारेण कुतो न तदुत्पत्तिः। उपादाने उपादेयसम्बन्धस्य प्रागनपेक्षणादिति। सेयं वस्तुस्वभाववैलक्षण्यापर्यालोचनविजृम्भिता। नहि कपाले पटारम्भसामर्थ्यं, तन्तुष्वेव तु तत्। पटारम्भसामर्थ्यं च तज्जनकताचच्छेदकधर्मयोग एव। एतेन कारणस्य कार्यारम्भसामर्थ्यं नाम तिलस्य तैलगर्भतेव कार्यगर्भतैव, तच्चासत्कार्यवादे न घटते इत्यपास्तम्। यच्चाशङ्कितम्—यदि कारकव्यापारतः प्राक् पटो न पश्चात्स कथं स्यात्। असतः सत्त्वं हि केनापि न शक्यते कर्तुं, नहि नीलमनीलं कर्तुं शक्यमिति। तदिदमुपहास्यम्। नहि वयं सर्वथाऽसतः सत्त्वमाचक्ष्महे, येन विरोधः स्यात्। किन्तु प्रागसतः पश्चात्सत्त्वम्। नहि यत्किञ्चित्कालासम्बन्धः कालान्तरसम्बन्धश्चैकत्र विरुध्येत। श्रूयते चायमसत्कार्यवादः "असद्वा इदमग्र आसी"दिति।

---

फलाय भवेदिति भावः। उपसंहरति—तस्मादिति। या चेयमाशङ्केति। कापिलानामिति शेषः। तन्तुष्वित्यादि। अयमाशयः—पटं चिकीर्षुर्हि पुरुषस्तन्तुमेवोपादत्ते, नान्यत्कपालादि। सर्वोऽपि कर्तृकरणादिकारकव्यापारस्तेष्वेव नान्यत्र, तत्कुतः? वक्तव्यम्, अस्ति पटेन सम्बन्धस्तन्तूनामेव नान्येषामतः सर्वः कारकव्यापारस्तेष्वेव नान्यत्रेति। सम्बन्धश्च सतोरेव, असति पूर्वं पटे तेन सम्बन्धो न तन्तूनामित्यसम्बद्धा एव तन्तवः पटेनोत्पत्तेः प्रागित्यसम्बद्धेऽपि चेत्कारकव्यापारः किमिति पटं चिकीर्षोः कारकव्यापारो न कपाले इति। वस्तुस्वभाववैलक्षण्येति। वस्तूनां स्वभाववैलक्षण्यं हि सर्वसंप्रतिपन्नं, यथाऽग्नेरेव दाहसामर्थ्यं नान्यस्येति, एवमेव तन्तुष्वेव पटादिजननसामर्थ्यं नान्यत्रेति, समर्थ एव तत्कारकव्यापार इति नान्यवस्थेत्याशयः। एतेनेति। सामर्थ्यस्वरूपविवेचनेनेत्यर्थः। तिलस्य तैलगर्भतेवेति। अयं भावः—अयमेवास्मिन्कार्ये समर्थो नायमित्ययं विभेदो वा कारणे कार्यान्वयाभ्युपगमे न घटते, यद्यसम्बद्धेऽपि सामर्थ्यं, अन्यत्र वा न तत्कुतः? दृष्टश्च तिलादौ तैलान्वयः, सत एव च तैलस्याभिव्यक्तिरुत्पत्तिः, एवमेव सर्वत्र कारणे सामर्थ्यमनुपश्यता कार्यगर्भता स्वीकार्येवेति। अपास्तमिति। अन्वयव्यतिरेकाभ्यां घटत्वेन कपालत्वेन पटत्वेन तन्तुत्वेन कश्चित्प्रति कस्यचिदेव कारणत्वस्य व्यवस्थिततया कारणतावच्छेदकधर्मयोग एव सामर्थ्यमिति युक्तमिति भावः। सत्कार्यवादिनः शङ्कान्तरमनूद्य परिहरति—यच्चाशङ्कितमिति। असतः सत्त्वं हीति। अन्यात्मनोऽन्यात्मता न घटत इत्याशयः। दुर्घटतामेवोपपादयति—न हि नीलमिति। उपहास्यमिति। अस्थाने शङ्का ह्युपहासायेति भावः। अस्थान इत्येतदुपपादयति—नहि वयमिति। येनेति। कालसम्बन्धमात्रानर्हस्य चेत्कालविशेषसम्बन्धः प्रतिपाद्येत स्यात्तदा शशशृङ्गस्यासित्वोपपादनवद्विरोधः, नहि तथा प्रतिपाद्यत इति भावः। तर्हि किमुच्यत इत्यत्राह—किन्त्विति। नहीति। एकविशेषाभावोऽपरविशेषसद्भावे नहि विरोधीत्याशयः। अयमसत्कार्यवादो न केवलमस्माभिरेव दृष्टः, यत्प्रमाणं कथमप्यनतिलङ्घनीयं भवतां तेनैवाव्ययोप्यत इत्याह—श्रूयते चायमिति।

नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ! ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ वसन्ति तत्र भूतानि भूतात्म-

अत्रोच्यते—अन्यथासिद्धोऽयं नामादिभेदः । एकस्यैव द्रव्यस्यावस्थाविशेषयोगतदभावाभ्यामेव तदन्वयसम्भवात् । दृष्टं च कुण्डलिते तालपत्रेऽवस्थान्तरयोगमात्रेण ताटङ्कमिति नामान्तरम् । एवमर्थान्तरादि च । यदि तत्रापि द्रव्यान्तरं कल्प्येत, मुकुलस्य सति विकासे द्रव्यान्तरं कल्प्यतां, न च तत्र द्रव्यान्तरकल्पनं शक्यं, द्रव्यासमवायिकारणतया त्वदभिमतस्यावयवद्वयसंयोगस्य तत्राभावात् । किञ्च—उपादानादुपादेयमतिरिक्तमाकलयता वक्तव्यं कः पटस्य देशः कश्च तदवयवानां तन्तूनां देशः । ननु—यस्मिन्नेव प्रदेशे पटस्तस्मिन्नेव प्रदेशे तत्समवायिनस्तन्तवोऽपि । नैतद्घटेत । भिन्नयोर्मूर्तद्रव्ययोर्मिथः सप्रतिघत्वेन द्वाभ्यामेकस्य नभःप्रदेशस्य व्याप्तुमशक्यत्वात् । नहि य एवावकाशांशो घटेन व्याप्तः स एवावकाशांशः सत्येव तस्मिन्पटेनाप्यापूर्येत । योजितेऽपि नीरक्षीरे सत्यपि सौहार्दे स्वस्वपर्याप्तमवकाशमापूर्यैव तिष्ठतः । सप्रतिघत्वनियमो नावयवावयविभाववतीत्यत्र तु न किञ्चित्प्रमाणम् । किञ्च—तन्तुषु समवेतः पटो गवि गोत्वमिव प्रत्येकं पर्याप्तः ? उतांशतस्तत्र समवेतः ? । गवि गोत्वमिव चेदेकस्मिन् गवि दृष्टे गोत्वप्रत्यक्षवदेकतन्तुमात्रदर्शनेऽपि पटप्रत्यक्षं स्यात् । तेषु तेषु तन्तुष्वंशतश्चेत्सन्निहितः, अवयवभूततत्तत्तन्त्वपेक्षयाऽतिरिक्तः कोऽयमंशः, येनावच्छिद्यतेऽस्य तत्तत्तन्तुषु सत्ता । कल्पिते चावयवान्तरे तेषु तत्सम्बन्धः

तदन्वयसम्भवात्—नामादिभेदान्वयसम्भवात् । एकस्यैव द्रव्यस्यावस्थान्तरयोगमात्रेण नामादिभेदान्वयप्रसिद्धिमुदाहरति—दृष्टं चेति । कल्प्येतेति । नामान्तराद्यन्वयानुपपत्त्या तत्रापि द्रव्यान्तरं कल्प्यत इत्यसत्कार्यवादिनामभिमतिः । द्रव्यान्तरं कल्प्यतामिति । आर्जवापगमेन यः कुण्डलभावः, यश्च सङ्कोचापगमेन विकासः, न तयोरेकेन द्रव्यान्तरता परेण तु तदभाव इत्युत्प्रेक्षितुं क्षममिति भावः । ननु तत्रापि द्रव्यान्तरमिष्यत इत्यत्राह—नच तत्रेति । तत्र—विकसति कमले । अभावादिति । अवयवानां संयुक्तानां विभागादिति यावत् । मिथः सप्रतिघत्वेनेति । उपरोधकत्वेनेत्यर्थः । कालाकाशयोर्मिथोऽतथात्वान्मूर्तद्रव्ययोरित्युक्तम् । घटपटादिस्थूलद्रव्ययोरिति यावत् । ननु नीरक्षीरयोर्मिथोऽनुपरोधेनैकत्र स्थितिर्दृष्टेत्यत्राह—योजितेऽपीति । सौहार्दे—सौहार्दं पृथगप्रतिभानम् । न किञ्चित्प्रमाणमिति । स्थूलं हि वस्तु स्वावकाशे स्थूलान्तरस्य नावकाशं प्रयच्छेत्, तत् स्थौल्यमेव तु सप्रतिघत्वे निमित्तं, तस्मिंश्चावयवावयविनोरप्यविशिष्टे तत्रेदं नेत्येतदप्रामाणिकमित्यर्थः । गवि गोत्वमिवेति । यथा गोत्वं निखिलगोव्यक्त्यनुगतमपि प्रतिव्यक्ति गौरिति व्यवहारस्य मुख्यत्वोपपादनाय परिसमाप्य वर्तत इतीष्यते तथेति भावः । प्रत्यक्षं स्यादिति । सन्निकर्षस्य सिद्धेरिति भावः । अंशतश्चेदिति । सहस्रतन्तुसमारब्धो हि पटोऽल्पकांशेनैकस्मिंस्तन्तौ समवेतः कथमयमेकतन्तुमात्रदर्शनसमयेऽभिव्यक्तस्वरूपो भवेत् । तत्र तदानीं पटस्य प्रत्यक्षतापत्तिरिति भावः । कोऽयमंश इति । अयं भावः—अंशतस्तत्तत्तन्तुषु पटोऽस्तीति वदता तत्तत्तन्तुनिरूपितपटसत्ता अन्यान्यतत्तदंशावच्छिन्ना स्वीकार्या ते चांशा अन्यूनानतिप्रसक्ताः के? नहि तत्तत्तन्तुतो भिन्नोंऽशः कश्चिदुपलभ्यते, नच स्वनिरूपितसत्तायां स्वस्यावच्छेदकता । अन्य एव चेदंशव्यवस्थापकः कल्प्येत तेनाप्यवयवविशेष एव पर्यवसानात्तत्र

नेता गमयिता स्रष्टा गकारार्थस्तथा मुने ! ॥ ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥ वसन्ति तत्र भूतानि भूतात्म-

अत्रोच्यते—अन्यथासिद्धोऽयं नामादिभेदः । एकस्यैव द्रव्यस्यावस्थाविशेषयोगतदभावाभ्यामेव तदन्वयसम्भवात् । दृष्टं च कुण्डलिते तालपत्रेऽवस्थान्तरयोगमात्रेण ताटङ्कमिति नामान्तरम् । एवमर्थान्तरादि च । यदि तत्रापि द्रव्यान्तरं कल्प्येत, मुकुलस्य सति विकासे द्रव्यान्तरं कल्प्यतां, न च तत्र द्रव्यान्तरकल्पनं शक्यं, द्रव्यासमवायिकारणतया त्वदभिमतस्यावयवद्वयसंयोगस्य तत्राभावात् । किञ्च—उपादानादुपादेयमतिरिक्तमाकलयता वक्तव्यं कः पटस्य देशः कश्च तदवयवानां तन्तूनां देशः । ननु—यस्मिन्नेव प्रदेशे पटस्तस्मिन्नेव प्रदेशे तत्समवायिनस्तन्तवोऽपि । नैतद्घटेत । भिन्नयोर्मूर्तद्रव्ययोर्मिथः सप्रतिघत्वेन द्वाभ्यामेकस्य नभःप्रदेशस्य व्याप्तुमशक्यत्वात् । नहि य एवावकाशांशो घटेन व्याप्तः स एवावकाशांशः सत्येव तस्मिन्पटेनाप्यापूर्येत । योजितेऽपि नीरक्षीरे सत्यपि सौहार्दे स्वस्वपर्याप्तमवकाशमापूर्यैव तिष्ठतः । सप्रतिघत्वनियमो नावयवावयविभाववतीत्यत्र तु न किञ्चित्प्रमाणम् । किञ्च—तन्तुषु समवेतः पटो गवि गोत्वमिव प्रत्येकं पर्याप्तः ? उतांशतस्तत्र समवेतः ? । गवि गोत्वमिव चेदेकस्मिन् गवि दृष्टे गोत्वप्रत्यक्षवदेकतन्तुमात्रदर्शनेऽपि पटप्रत्यक्षं स्यात् । तेषु तेषु तन्तुष्वंशतश्चेत्सन्निहितः, अवयवभूततत्तत्तन्त्वपेक्षयाऽतिरिक्तः कोऽयमंशः, येनावच्छिद्यतेऽस्य तत्तत्तन्तुषु सत्ता । कल्पिते चावयवान्तरे तेषु तत्सम्बन्धः

तदन्वयसम्भवात्—नामादिभेदान्वयसम्भवात् । एकस्यैव द्रव्यस्यावस्थान्तरयोगमात्रेण नामादिभेदान्वयप्रसिद्धिमुदाहरति—दृष्टं चेति । कल्प्येतेति । नामान्तराद्यन्वयानुपपत्त्या तत्रापि द्रव्यान्तरं कल्प्यत इत्यसत्कार्यवादिनामभिमतिः । द्रव्यान्तरं कल्प्यतामिति । आर्जवापगमेन यः कुण्डलभावः, यश्च सङ्कोचापगमेन विकासः, न तयोरेकेन द्रव्यान्तरता परेण तु तदभाव इत्युत्प्रेक्षितुं क्षममिति भावः । ननु तत्रापि द्रव्यान्तरमिष्यत इत्यत्राह—नच तत्रेति । तत्र—विकसति कमले । अभावादिति । अवयवानां संयुक्तानां विभागादिति यावत् । मिथः सप्रतिघत्वेनेति । उपरोधकत्वेनेत्यर्थः । कालाकाशयोर्मिथोऽतथात्वान्मूर्तद्रव्ययोरित्युक्तम् । घटपटादिस्थूलद्रव्ययोरिति यावत् । ननु नीरक्षीरयोर्मिथोऽनुपरोधेनैकत्र स्थितिर्दृष्टेत्यत्राह—योजितेऽपीति । सौहार्दे—सौहार्दं पृथगप्रतिभानम् । न किञ्चित्प्रमाणमिति । स्थूलं हि वस्तु स्वावकाशे स्थूलान्तरस्य नावकाशं प्रयच्छेत्, तत् स्थौल्यमेव तु सप्रतिघत्वे निमित्तं, तस्मिंश्चावयवावयविनोरप्यविशिष्टे तत्रेदं नेत्येतदप्रामाणिकमित्यर्थः । गवि गोत्वमिवेति । यथा गोत्वं निखिलगोव्यक्त्यनुगतमपि प्रतिव्यक्ति गौरिति व्यवहारस्य मुख्यत्वोपपादनाय परिसमाप्य वर्तत इतीष्यते तथेति भावः । प्रत्यक्षं स्यादिति । सन्निकर्षस्य सिद्धेरिति भावः । अंशतश्चेदिति । सहस्रतन्तुसमारब्धो हि पटोऽत्यल्पकांशेनैकस्मिंस्तन्तौ समवेतः कथमयमेकतन्तुमात्रदर्शनसमयेऽभिव्यक्तस्वरूपो भवेत् । तत्र तदानीं पटस्य प्रत्यक्षतापत्तिरिति भावः । कोऽयमंश इति । अयं भावः—अंशतस्तत्तत्तन्तुषु पटोऽस्तीति वदता तत्तत्तन्तुनिरूपितपटसत्ता अन्यान्यतत्तदंशावच्छिन्ना स्वीकार्या ते चांशा अन्यूनानतिप्रसक्ताः के ? नहि तत्तत्तन्तुतो भिन्नोंऽशः कश्चिदुपलभ्यते, नच स्वनिरूपितसत्तायां स्वस्यावच्छेदकता । अन्य एव चेदंशव्यवस्थापकः कल्प्येत तेनाप्यवयवविशेष एव पर्यवसानात्तत्र

न्यखिलात्मनि। स च भूतेष्वशेषेषु वकारार्थस्ततोऽव्ययः॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥ एवमेष महाशब्दो मैत्रेय! भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः॥" इति।

---

कथमिति पर्यालोचनया समापतेदनवस्था। ननु-प्रमाणप्रतिपन्नेऽर्थे का वृत्तिचिन्ता, यथाप्रमाणप्रतिपत्ति खलु स्वभावविशेषो वस्तुष्ववसेयः। सत्यम्। यद्ययमर्थः प्रमाणप्रतिपन्नः स्यादेवं, नहि विस्फारितलोचनेनापि पुरुषेण समुपलभ्यते किमपि द्रव्यान्तरं तन्तुभ्यः। नामादिभेदश्च न द्रव्यान्तरसाधने पर्याप्तं लिङ्गमित्युक्तम्। तत् तव कल्पनैव केवलं। सा चार्थमर्यादामतिवर्तमाना दोषायैव स्यात्। किञ्च-पृथुतरपटनिर्माणस्थले यथायथा तन्तूनां संश्लेषविशेषस्तथातथा संश्लिष्टांशे पटव्यवहारोऽस्त्येव; पञ्चषतन्तुसमावेशे एकस्य पटस्योत्पत्तिस्ततोऽधिकतन्तुसंश्लेषे ततोऽन्यस्य पटस्य ततोऽधिकतन्तुसंश्लेषे ततोऽन्यस्य पटस्येत्येवं त्वया वक्तव्यम्। तत्रोत्तरोत्तरपटारम्भसमये किं पूर्वपूर्वपटाः सन्ति? उत न?, यदि स्युस्तदोत्तरोत्तरपटारम्भो न सिध्येत्, नहि आरब्धकार्यैरवयवैस्तदानीमेवावयव्यन्तरारम्भसम्भवः। यदि न, क्व ते, नष्टा इति चेत्, हन्त ते साहसं, यदुपलम्भमप्यधःकृत्याप्रामाणिकानन्तद्रव्योत्पादनाशधारा काऽपि कल्प्यते। एवमेकैकतन्तुविश्लेषे सति महापटनाशं खण्डपटोत्पत्तिं च धारया कल्पयतामुपलम्भविरोधो गौरवं च स्फुटम्। किञ्च-अवयवातिरिक्तस्यावयविनोऽवयवेषु

---

तस्य सत्ता सर्वांशेन वैकांशेन वेत्यादिविकल्पेऽनवस्था समापतेदिति। का वृत्तिचिन्तेति। किं परिसमाप्य वर्तते, उतांशतः? प्रथमे इयमनुपपत्तिः, द्वितीये इयमनुपपत्तिरित्यादिचिन्तेत्यर्थः। कस्यचिद्विलक्षणः स्वभावश्चेत्प्रत्यक्षेणानन्यथासिद्धेन विनिश्चितः, अथ कथं तस्मिन् स्वभावेऽनुपपत्त्याशङ्का, अप्रत्यक्षे हि तर्कस्य प्रतितर्कस्य वा गतिः, अवयवावयविनोश्चाधाराधेयभावस्तु प्रत्यक्षसिद्धः, नह्यवयवी कश्चिदप्यवयविनं विहायानुभूयत इत्याशयः। सत्यमिति। यथाप्रमाणप्रतिपत्ति स्वभावो वस्तूनामास्थेय इति तु संप्रतिपन्नम्, न तु त्वदभिमते प्रमाणमिति भावः। तदेवोपपादयति—यद्ययमर्थ इत्यादिना। द्रव्यान्तरं तन्तुभ्य इति। सत्याधाराधेयभावे तयोर्[1]व्यतिरेकेणोपलम्भेन भाव्यम्। न पर्याप्तमिति। अप्रयोजकमित्यर्थः। नह्यनुकूलस्तर्क इति भावः। इत्येवं त्वया वक्तव्यमिति। असमवायिकारणानामन्यान्यत्वात्। पञ्चषतन्तुसंयोगः, ततश्च ततोऽधिकतन्तुसंयोगः, ततश्च ततोऽधिकतन्तुसंयोग इति भिन्नभिन्नासमवायिकारणसम्पत्तेरिति भावः। तदानीमेव-स्वावयविपटसत्तासमय एव। उपलम्भमप्यधःकृत्येति। अनिमेषनयनमाप्रथमतन्तुसंयोगमासहस्रतन्तुसंयोगं पटमारभ्यमाणमवलोकयतां न कस्यचिन्नाशः समुपलभ्यते, तदुपलम्भविरुद्धं पूर्वपूर्वपटनाशोत्तरोत्तरपटारम्भकल्पनमिति भावः। महापटनाशमिति। योऽयं महापटो लक्षतन्तुसमारब्धः, तस्यैकतन्त्वपगममात्रेणापि नाशः, समवायिकारणनाशात्कार्यनाशावश्यम्भावादिति काणादानामाशयः। दूषणान्तरमाह—किञ्चेति। गुरुत्वाधिक्यं-यावन्त आरम्भकास्तन्तवस्तावतां यद्गुरुत्वं ततो द्विगुणं गुरुत्वम्। नन्वस्त्येव गुरुत्वाधिक्यम्, नहि नास्तीति व्यतिरेकनिश्चये प्रमाणमतीन्द्रियत्वाद्गुरुत्वस्येत्यत्राह—

---

[1] तयोः—अवयवावयविनोः।

पुरुषोत्तम इति। पुरतीति पुरुषः—पूर्वसिद्धः। "पुर अग्रगमने" इत्यस्मात्तौदादिकात्कुषन्। "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्व"मिति श्रुतेः। यद्वा—पूरयति भक्तकामानिति पुरुः, सीदति—अवसादयति भक्तविरोधिन इति सः, पुरु-

---

समवेतत्वेऽवयवावयविनोः समावेशेन गुरुत्वाधिक्यं कुतो न। सति च गुरुत्वाधिक्ये पतनातिरेकः कुतो न। न चावयविनि गुरुत्वं नोत्पद्यत इति वक्तुं शक्यम्। तथासति द्व्यणुकप्रभृतिषु क्वापि गुरुत्वं न सिध्येत्, अवयवित्वाविशेषात्। ननु—सत्यपि गुरुत्वाधिक्ये प्रतिबन्धकवशान्न तदतिरेक इति चेत्। किं तत्प्रतिबन्धकम्। यद्यवयवगतं गुरुत्वं, त्र्यणुकप्रभृतिपतनातिरेको नेत्यायातम्। अन्ततः परमाणुगुरुत्वेनैव पतनमिति तु पर्यवसेत्। यदि चावयविगुरुत्वं प्रतिबन्धकं; तदा निष्कम्पेऽपि वृक्षे दृश्यमानं फलादेर्लम्बनं न स्यात्। अन्यस्य यस्यकस्यचित्प्रतिबन्धकत्वकल्पनमप्यप्रामाणिकम्। अवयविनि गुरुत्वे जातेऽवयवगुरुत्वं नश्यतीत्यसत्। रूपादीनामपि कुतो न नाशः। गुरुत्वमात्रं नश्यतीत्यत्र विशेषं कं पश्यसि। अवयविनि समुत्पन्नं गुरुत्वमवयवगुरुत्वतो नातीवाधिकं, तत् तदनुगुणं पतनवै-

---

सति च गुरुत्वाधिक्य इति। पतनातिरेक इति। पतनं प्रति हि गुरुत्वं हेतुः, तस्मिन्नतिशयिते तत्कार्येणाप्यतिशयितेन हि भाव्यम्। यथायथा गुरुत्वं तथातथा, वेगेन हि पतति, न चेह तथा दृश्यते, अनारम्भकदशायां तन्तुसङ्घातो यावता क्षणेन पतति तावतैव पटोऽपीति भावः। न चावयविनीति। सत्यवयवे गुरुत्व इति शेषः। तथासतीति। अवयविनि गुरुत्वानुत्पत्तौ। अयमाशयः—किं कारणाभावान्नोत्पद्यते उत प्रतिरोधात्? न प्रथमः, अस्ति हि कारणमवयवगुरुत्वम्, न तत्कारणमिति चेत्, द्व्यणुकादावपि तत्र स्यात्। न द्वितीयः, अविशेषादवयविमात्रे गुरुत्वानुत्पादप्रसङ्गः समान इति भावः। न तदतिरेक इति। पतनातिरेक इत्यर्थः। यद्यवयवगतं गुरुत्वमिति। गुरुत्वस्य पतनेऽनुकूलस्य प्रतिबन्धकत्वकल्पनमनुचितमिति गम्यते यदीत्यनेन। पतनातिरेकवारणाय चेदगत्या कल्प्यत इत्यर्थः। अयं भावः—यद्यवयवेषु यावद्गुरुत्वं तावदवयविन्यपीति पतने सामग्रीद्वयमस्ति, नैतावता पतनातिरेकः, किन्तु तयोरेकं प्रतिबन्धकमास्थीयते। तत्रावयवगुरुत्वमवयविगुरुत्वकार्यपतनातिरेके प्रतिबन्धकम्, यच्च पतनं तदवयवगुरुत्वेनेति नावयवान्तरावयविसमावेशेऽपि पतनातिरेकप्रसङ्ग इति। द्व्यणुकप्रभृतीति। अवयविमात्र इति यावत्। अन्ततः परमाणुगुरुत्वेनैव पतनमिति तु पर्यवसेदिति। कपालस्य घटापेक्षयाऽवयवत्वमिव कापालिकापेक्षयाऽवयवित्वेन कापालिकाया अपि स्वावयवापेक्षयेत्येवं द्व्यणुकपर्यन्तं सर्वेषामवयवित्वेन तत्तदवयविगुरुत्वस्य तत्तदवयवगुरुत्वेन प्रतिरुद्धवीर्यतयाऽनवयविनः परमाणोर्गुरुत्वस्यैवाप्रतिरुद्धवीर्यतया तत एव पतनमित्यवयविसामान्ये उत्तरोत्तरपतनातिरेको न स्यादिति भावः। फलादेर्लम्बनं न स्यादिति। आपरमाण्वन्तसवयवानां गुरुत्वस्य तत्तदवयविगुरुत्वेन प्रतिरुद्धवीर्यतया पतनानाधायकत्वेनान्त्यावयविगुरुत्वस्यैवाप्रतिरुद्धवीर्यत्वेन पतनाधायकतयाऽन्त्यावयविनि कस्मिंश्चिद्वृक्षे दृढमूले फलमात्रे यथापरिपाकं गुरुत्वातिरेके लम्बनातिरेको दृष्टो न स्यात्। लम्बनमधोदेशसंयोगानुकूलक्रियाविशेषः, पतनादन्यदिति भावः। रूपादीनामपि कुतो न नाश इति। उत्पाद्येन चेदुत्पादकस्य नाशः; अवयविरूपेणावयवरूपं

श्चासौ सश्चेति पुरुषः। "पूरणात्सादनाच्चैव ततोऽसौ पुरुषो मत" इत्युद्योगपर्वणि सञ्जयोक्तेः। यद्वा–पुरु–भक्तेप्सितादप्यधिकं, सनोति–ददातीति पुरुषः। "षणु दाने" इत्यस्मात्पचाद्यच्। बाहुलकात्सुषामादित्वाद्वा षत्वम्। यद्वा–पुरूणि–पापानि,

---

पम्यमल्पमस्ति, तथापि सौक्ष्म्यान्न विज्ञायत इति चेत्। अल्पत्वे कल्पकं न पश्यामः। तस्मात्पटद्वयोन्मान इवावर्जनीयमेकपटोन्मानेऽपि गुरुत्वातिरेककार्यं, तस्मात् युक्तमुपादानोपादेययोरनन्यत्वम्। नामादिभेदश्चावस्थाभेदनिबन्धनः। अत एव य एव तन्तवः पूर्वेद्युर्दृष्टास्त एवाद्य पटात्मना परिणता इति प्रत्यभिज्ञाऽपि सङ्गच्छते। द्रव्यैक्येऽप्यवस्थावैलक्षण्यादुत्पादविनाशयोरुपपत्तिः। एतदुक्तं भवति–एकमेव मृद्द्रव्यं पिण्डत्वावस्थाप्रहाणपूर्वकं घटत्वावस्थां प्राप्नोति, कदाचित् घटत्वावस्थाप्रहाणपूर्वकं कपालत्वावस्थां प्राप्नोति, कदाचित् कपालत्वावस्थाप्रहाणपूर्वकं शकलत्वावस्थां प्राप्नोति, तत् तत्तदवस्थायोग एवोत्पत्तिः द्रव्यं तु नापूर्वं किञ्चिदिति।

अपरे पुनरसत्कार्यवादविद्वेषवेगाक्षिप्तहृदया अवस्थाविशेषस्याप्यपूर्वत्वं न सहन्ते। सर्वमेव घटपटादिकार्यजातं तत्तदवस्थया प्रागपि सन्निहितमेव कारणे कूर्मकर्पर इव कूर्मवपुः। तथाभूतस्याप्युत्पत्तिर्नाम–अभिव्यक्तिमात्रं, यथा तिलेषु निलीनस्यैव तैलस्य कारकव्यापारेणाभिव्यक्तिः। यथा चोधसि निलीनस्यैव क्षीरस्य कारकव्यापारेणाभिव्यक्तिः। तथा तत्र मृदादिषु विलीनस्यैव घटादेः कारकव्यापारेणाभिव्यक्तिः। एवमभिव्यज्यमानेष्वेवार्थेष्ववलम्ब्याभिव्यक्तिमात्रं भवति व्यवहारो घटोऽयमद्य जात इति। युज्यते चैतत् "जनी प्रादुर्भावे" इत्यनुशासनादिति। तच्चिन्त्यम्–घटपटादिषु कारकव्यञ्जकविभेदस्य सर्वलोकसम्प्रतिपन्नस्य विलयप्रसङ्गात्। नहि घटाद्यपेक्षया कुलालादिष्विव दीपादिषु कारकत्वव्यवहारः प्रामाणिकः। एवम्–घटादिषु कार्यमिति वचो न प्रवर्तेत, अवस्थामात्रमपि नापूर्वमिति वदता भवताऽखि-

---

कुतो न नश्यतीति भावः। उपसंहरति—तस्मादिति। ननु द्रव्यैक्ये कथमुत्पादविनाशव्यवहार इत्यत्राह—द्रव्यैक्येऽपीत्यादि। अवस्थावैलक्षण्यस्योत्पादविनाशव्यवहारालम्बनतामुपपादयति—एतदुक्तं भवतीत्यादिना। पिण्डत्वावस्थेति। पिण्डत्वं च विलक्षणसंस्थानम्, विलक्षणावयवसंश्लेषविशेषः, सैवावस्थेति यावत्। प्रहाणं–त्यागः। घटत्वावस्थां–घटत्वाख्यामवस्थाम्। एवमुत्तरत्रापि। तत्–तस्मात्।

अत्र[1] कापिलाभिमतमनूद्य प्रतिक्षिपति—अपरे पुनरित्यादिना। विद्वेषवेगाक्षिप्तहृदया इत्येतदसहने हेतुः। न सहन्ते—अवस्थाविशेषस्यापूर्वस्य कार्यस्याश्रयणेऽसत्कार्यवादस्यावकाशः स्यादिति न सहन्ते। तर्हि कस्तेषामाशयः? उच्यते सर्वमेवेत्यादिना। तत्तदवस्थयेति। तत्तदवस्थाविशिष्टमित्यर्थः। प्रागपीति। उत्पत्तेः प्रागपीत्यर्थः। कथमेतत् प्रागपि सन्निधानमिति?। तत्र निदर्शनमाह—कूर्मकर्पर इवेति। तर्हि पुराऽपि सन्निहितस्योत्पत्तिर्नाम का? तत्राह—तथाभूतस्याप्युत्पत्तिर्नामेति। निलीनस्य–अनभिव्यक्तस्य। असत्पक्ष एव जनिशब्दस्वारस्यं चेत्याह—युज्यते चैतदित्यादिना। घटपटादिष्विति। घटपटाद्यपेक्षयेत्येतत्। कार्यव्यङ्ग्यविभेदोऽपि विलीयेतेत्याह—एवमिति। ननु कार्यव्यङ्ग्यवचसोः, कारकव्यञ्जकवचसोरर्थान्तरत्वेऽपि कस्मिंश्चिदेव किञ्चिदपेक्षया

---

१: अत्र—सत्कार्यवादे।

ओपति—दहति स्मरणादिभिरिति पुरुषः । "स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन

लमेव हि कार्यं व्यङ्ग्यमिष्यते । न च व्यङ्ग्यत्वादेव कार्यपदं प्रवर्तेत, घटे दीपकार्यत्वव्यवहारप्रसङ्गात् । न च घटदीपादीनामभिव्यङ्ग्याभिव्यञ्जकभावे सत्यपि घटकुलालादिष्विव मिथो न कार्यकारकवचसोः प्रवृत्तिरिति वक्तुं शक्यं, विशेषाभावात् । यश्च व्यापारभेदः स चाप्रयोजकः, येन केनापि प्रमाणेनाव्यक्तस्य व्यक्तीकरणमात्रेण सर्वत्र व्यञ्जकेषु विना तारतम्यं व्यञ्जकशब्दस्यैव प्रयोगात् । अव्यक्तस्य व्यक्ततापादके कुलालादिव्यापारे को वा महिमा येन कारकशब्दप्रयोगावकाशः । वस्तुतः कार्यत्वमेवाभिव्यक्तेर्न, अभिव्यक्तेरपूर्वत्वेऽपसिद्धान्तात् । तत् घटादेरिवाभिव्यक्तेरप्यभिव्यङ्ग्यत्वमेव तु भवदभिमतम् । ननु—अभिव्यक्तेरपूर्वत्वमङ्गीक्रियते नैतावता सत्कार्यवादभङ्गः । सत एव द्रव्यस्याभिव्यक्तिस्वीकारेण सत्कार्यवादो ह्यधुना सुरक्षितो भवतीति चेत् । तथा सत्यभिव्यञ्जककारकवैलक्षण्यं दुरुपपादम् । तद्वरमवस्थाया अपूर्वत्वमाश्रित्य सत्कार्यवादसंरक्षणमुक्तरीत्या । तथा सत्यनुत्पन्नस्योत्पादकं कारकम्, अनभिव्यक्तस्याभिव्यक्ततापादकमभिव्यञ्जकमिति वैलक्षण्यं सुवचम् । न चानुत्पन्नस्योत्पत्तिस्वीकारेऽसत्कार्यवादापातः । उत्पत्तिर्हि घटत्वादितत्तदवस्थायोगः, सत एव मृद्द्रव्यस्य कुलालादिसामग्रीसमवधानतः प्राक् घटत्वावस्थारहितस्य पश्चात्कारकव्यापारेण तदवस्थायोगः ।

व्यञ्जकव्यवहारः, कस्मिंश्चिदेव किञ्चिदपेक्ष्या कारकव्यवहार इत्येतदनूद्य परिहरति—न चेति । विशेषाभावादिति । व्यवहारभेदो ह्यर्थभेदनिबन्धनः, असति तस्मिन् कथं तद्भेद इति भावः । ननु यद्यपि कारकस्याप्यभिव्यञ्जकतैव, परंतु दीपाद्यभिव्यञ्जकात्कारकस्य कार्याभिव्यक्त्याधायको व्यापारो विलक्षणः, येन कथञ्चिदपि कारकान्तरेणानभिव्यक्तस्यार्थस्याभिव्यक्तिः, न चासौ व्यञ्जकस्य दीपादेः, अभिव्यक्तमेव ह्यभिव्यनक्ति, तमिमं व्यापारभेदमभिप्रेत्य कारकव्यञ्जकव्यवहारभेदनियमो लोके प्रवृत्त इत्यत्राह—यश्चेति । येन केनापि प्रमाणेनेति । प्रत्यक्षेणानभिव्यक्तमदृष्टाद्यनुमानमेव ह्यभिव्यनक्ति, तदस्यापि तदपेक्ष्या कारकत्वव्यवहारः कुतो न स्यादिति भावः । अथ व्यवहारभेदे निमित्तं वैलक्षण्यं किमप्यस्ति कारकव्यापारे इत्यत्राह—अव्यक्तस्येत्यादिना । अयं भावः—व्यापारास्तु स्वरूपतः प्रतिव्यक्ति विभिन्ना एव, प्रतिकारकं च तथैव, अयं तु विशेषो व्यञ्जकेभ्यो न विभेदकः, फल एव तु वैलक्षण्यं वक्तव्यम्, फलं चाभिव्यक्तिमात्रं, अभिव्यक्तिश्च क्वचित्तक्षणादिना क्वचिद्दोहनादिना क्वचिन्निष्पीडनेन क्वचिदुपमर्दनेनैवमन्यान्येन, तथैव तमोनिरसनेनान्यान्येन चैवमादिनेति किमन्तरं कारकव्यञ्जकव्यवहारव्यवस्थापादकं केषुचिदेवेदं केषुचिन्नेति शक्यं कल्पयितुमिति भावः । सिद्धान्तिनोऽप्यधिकं सत्कार्यवादे समादरं दर्शयन्न पारयत्यभिनिवेशमालनः संरक्षितुमित्याह—वस्तुत इति । कार्यत्वमेव नेति । कारकव्यापारेणाभिव्यक्तिः कार्येत इति वादस्त्वनुपपन्नः, अभिव्यक्तेः कार्यत्वापातात्, कार्यत्वं चानभिमतं तव, अभिमते च पूर्वमसत्या अभिव्यक्तेरङ्गीकारेणांशतोऽसत्कार्यवादकलङ्कोऽपरिहार्यः । दुरुपपादमिति । दूषणमधिकमिति भावः । तद्वरमिति । कलङ्कितादभिव्यक्तिपक्षादवस्थाया अपूर्वत्वाश्रयणपक्ष एवाकलङ्कितः श्रेष्ठ इति भावः । सत एवोत्पादस्वीकारात्सत्कार्यवादः सुरक्षित एव सिद्धान्त इत्येतदाशङ्कापरिहारमुखेन समर्थयते—न चेत्यादिना । सत्यं पूर्वमुत्प-

औषत्तस्मात्पुरुष" इति बृहदारण्यकश्रुतेः। यद्वा–पुरुषाकारत्वात्पुरुषः। "आत्मैवे·

---

तस्मात्–उत्पत्त्याश्रयद्रव्यस्वरूपस्य सर्वदैव विद्यमानतया सत्कार्यवादो हि मुख्यः। उत्पादकत्वाच्च कारकवचसः कुलालादिषु मुख्यता च। अभिव्यक्तिमेवोत्पत्तिमाचक्षाणानां तु क्लेशमात्रम्। अभिव्यक्तेरप्यपूर्वत्वमनाश्रित्य द्रव्यस्यैवाभिव्यङ्ग्यत्वमभिमन्यमानस्य कापिलाग्रेसरस्य तु अभिव्यक्तेरभिव्यञ्जकान्तरमन्विष्यतो न विश्रान्त्यवकाशः। किञ्च–यदा कारकव्यापारेण घटाभिव्यक्तिस्तदा कारकादीनामपि कुतो नाभिव्यक्तिः। नच तत्र मृत्पिण्डे कारकादयो न सन्निहिता इति वक्तुं शक्यं, कारकादिजननसमर्थे तस्मिंस्तदगर्भत्वस्य त्वया वक्तुमशक्यत्वात्। न च तन्मृत्पिण्डस्य तत्रासामर्थ्यं, कर्तुरिच्छायां तेनैव तन्निष्पत्तेः सम्भावितत्वात्। न चाभिव्यञ्जकाभावः, घटाभिव्यक्तेः। नच तदभिव्यञ्जकसमवधानेऽपि ततोऽन्यस्य कारकादेरभिव्यक्तिर्न भवेदिति वक्तुं शक्यं, घटाभिव्यक्तये समारोपितेन दीपेन हि तत्सहचरितमन्यदप्यभिव्यज्यत एव। नच दीपादेस्तथात्वेऽपि कारकव्यापाररूपस्यास्याभिव्यञ्जकस्यार्थविशेषव्यञ्जकत्वमेव न सहचरितसामान्यव्यञ्जकत्वमिति वाच्यं, प्रमाणाभावात्। न चानुभव एव प्रमाणम्। सामग्रीविशेषसमवधाने घट एव व्यज्यते नान्य इति व्यङ्ग्यव्यञ्जकभाव एव विवादादिदानीं तदसिद्धेः। ननु–कार्यकारणयोर्व्यङ्ग्यव्यञ्जकभावोऽवश्यमेवाभ्युपेयः, घटादेर्मृदादिषु तिले तैलस्येव सन्निहितत्वात्। अन्यथा मृदादीनां तत्रासामर्थ्यप्रसङ्गात्। कार्यजननसामर्थ्यं हि तद्गर्भतैव। नैतद्युक्तम्। उपादानस्येव निमित्तस्यापि तद्गर्भत्वप्रसङ्गात्। उपादान इव निमित्तेष्वपि हि कार्यजननसामर्थ्यं स्वीकार्यम्। अन्यथा कुलालादितोऽन्यस्मान्न कुतो घटादिकार्यं इत्याक्षेपस्यापरिहार्यत्वापातात्। एवं कारणस्य कार्यगर्भतेव नाशकस्य नाश्यगर्भताऽप्यास्थीयताम्। ननु–यथोपलम्भं व्यवस्थेति न निमित्तेषु कार्यगर्भतेति चेत्। इहापि किं न तथा पश्यसि। तिलस्य तैलगर्भत्वदर्शनमात्रेण मृत्पिण्डस्य घटादिगर्भत्वे कुतस्ते मुधाऽऽग्रहः।

---

त्तिरहितस्यैव पश्चादुत्पत्तिः, तथापि सत एवेति नासत्कार्यवाद इति भावः। कापिलैकदेशिनो मतमनूद्य परिहरति—अभिव्यक्तेरप्यपूर्वत्वमिति। न विश्रान्त्यवकाश इति। अनवस्थापत्तिरिति यावत्। कारकादीनामिति। कर्तृनिष्पाद्या मृत्पिण्डगता व्यापारविशेषाः कारकाः। त्वया–तज्जननसामर्थ्यस्य तद्गर्भतारूपत्वं वदता त्वया। तत्र–कारके। तेनैव–मृत्पिण्डेनैव। नन्वभिव्यञ्जकानां नैकः स्वभावः, यद्दीपेनेव घटाभिव्यक्त्यर्थमारोपितेनान्यदप्यनेन व्यज्येतेत्येतदाशङ्क्य परिहरति—न चेति। यच्चोक्तं कार्यजननसामर्थ्यं कार्यगर्भतैवेति, तदाशङ्कानुवादपूर्वकं प्रतिक्षिपति—नन्विति। तद्गर्भत्वप्रसङ्गात्–कार्यगर्भत्वप्रसङ्गात्। प्रसङ्गे निमित्तमाह—उपादान इवेति। इत्याक्षेपस्येति। मृत्पिण्डादितोऽन्यस्मान्न कुतो घटादिकार्यमितिवदिति बोध्यम्। दूषणान्तरमाह—एवमिति। कार्यसमर्थेन चेत्कार्यगर्भेन भाव्यम्, नाशजननसमर्थेन नाश्यगर्भेण हि भाव्यमिति भावः। ननु यथोपलम्भमिति। अयं भावः—न वयं सामर्थ्यस्य स्वरूपं सर्वत्रैकरूपं कल्पयामः, उपादानेषु कार्यगर्भता तिलादौ दृष्टेरुपादानस्य कार्यजननसामर्थ्यं तद्रूपं कथयामः, निमित्ते त्वनुपलम्भान्न तथा, वस्तुस्वरूपव्यवस्था ह्युपलम्भं नातिवर्तते। अत एव नाशकस्य नाश्यगर्भतया भाव्यमित्यपि निरस्तमिति। इहापि–

दमग्र आसीत्पुरुषविध" इति श्रुतेः । अतिशयेनोत्कृष्ट उत्तमः, उत्कृष्टार्थवृत्तेरुच्छ-

---

तत्सत्कार्यवादसमर्थनं यथोपदर्शितमेव युक्तम् । तत्तदाकृतिकं तत्तत्र तत्र तिरोहितम् । व्यज्यते कारकैस्तैस्तैरिति केचित्प्रचक्षते ॥ अपरे द्रव्यमेवैकं स्वरूपेण सदा स्थितम् । अवस्थाभेदयोगेन जन्मनाशविकल्पवत् ॥ तत्तदाकृतिभाक् द्रव्यमपूर्वं नैव किञ्चन । तस्मात्कार्यं सदेवेति प्राहुर्यद्युक्तमिष्यताम् ॥

सर्वाविर्भावकारणमित्यत्र कारणशब्दोऽसङ्कोचन्यायेन निमित्तोपादानभावं ब्रह्मणोऽवगमयति । ननु–कथमेकस्यैव निमित्तत्वमुपादानत्वं च; उभयोर्विरोधात्, नहि मृत्पिण्डः स्वयमेव निमित्तं भवेत्, न वा कुलालः स्वयमुपादानं भवेत् । मैवम् । विरोधे मानाभावात् । न च मृत्पिण्डादिषूभयादर्शनं विरोधमावहेत् । तत्र हि तत्तत्सामर्थ्याभावात्तदभावः । मृत्पिण्डो हि जडश्चेतनेनानधिष्ठितो न समर्थः कार्यारम्भे । कुलालस्तु न घटशरावादिना बहुभवितुं समर्थः । ब्रह्मण्युभयविधसामर्थ्यसम्भवादुभयविधमपि कारणत्वं घटेतैव । ब्रह्म हि चिदचिच्छरीरं स्वयं शरीरद्वारा बहुभवितुं समर्थं स्वयं सत्यसङ्कल्पं च । तदुपादानत्वं निमित्तत्वं च ब्रह्मणि सुघटम् । कारणसाङ्कर्येऽपि कारणत्वस्यासाङ्कर्यात् । सङ्कल्पविशिष्टत्वेन निमित्तत्वं चिदचिद्विशिष्टत्वेनोपादानत्वमित्यविरोधः । कालंघटसंयोगं प्रति कालस्य द्रव्यत्वेनोपादानत्वं कालत्वेन निमित्तत्वं चाभ्युपगन्तव्यमन्येनापि ।

---

उपादानगतकार्यजननसामर्थ्यस्वरूपनिर्णयेऽपि । न तथा पश्यसि–यथोपलम्भं न पश्यसि, उपलम्भमतिलङ्घ्य कथयसीत्येतत् । उपलम्भातिलङ्घनमुपपादयति—तिलस्येति । उपसंहरति—तदित्यादिना । तत्–तस्मात् । कारिकारूपेण कापिलस्वपक्षभेदौ सङ्गृह्योपसंहारे निरूपयति—तत्तदाकृतिकमिति । प्राहुरिति स्वपक्षे गुणः सूचितः ।

निमित्तत्वोपादानत्वयोरसाहचर्यं भूयःसु पश्यन् विरोधमाशङ्कते—नन्विति । तदेवासाहचर्यं प्रदर्शयति—नहीत्यादिना । क्वचिदसाहचर्यदर्शनमात्रं न विरोधे लिङ्गं, नह्याकाशादन्यत्र विभुत्वभूतत्वयोरसाहचर्यदर्शनमात्रेण तयोर्विरोध इष्यते वैशेषिकैः । आकाशे तयोः समावेशो हि दृष्टः । अयमेवाकाशस्य वस्तुनो विशेष इतरेभ्यो यदुभययोगार्हतेति यदि पश्यसि, तथैवेहापि मन्तव्यमित्याशयेन समाधत्ते—मैवमित्यादिना । उभयादर्शनं–उपादानत्वनिमित्तत्वोभयादर्शनम् । तत्तत्सामर्थ्याभावात्–निमित्तत्वे यत्सामर्थ्यं, उपादानत्वे च यत्सामर्थ्यं तयोरभावात् । तयोरभावमेवोपपादयति—मृत्पिण्डो हीत्यादिना । बहुभवितुं–घटशरावाद्यात्मना । पूर्वरूपप्रहाणपूर्वकरूपान्तरप्राप्तेरुपलक्षकमेतत् । एतेन पटारम्भकाणां तन्तूनां कार्यदशायां नहि बहुभवनमिति शङ्का परास्ता । उभयविधसामर्थ्यं–निमित्तभावार्हता, उपादानभावार्हता च । उभयं सङ्गमयति—ब्रह्म हीति । स्वयं–अद्वारेणेत्येतत् । नन्वेकस्यैव निमित्तोपादानभावे कारणसाङ्कर्यम्, कारणभेदव्यवस्था लोकसिद्धा व्याहन्येतेत्यत्राह—कारणसाङ्कर्येऽपीति । एकस्यैवोभयविधकारणत्वेऽपीत्यर्थः । कारणत्वस्यासाङ्कर्यादिति । मिथो भिन्नलक्षणत्वादित्यर्थः । भिन्नस्वरूपतामेवोपपादयति—सङ्कल्पविशिष्टत्वेनेति । द्रव्यत्वेनेति । संयोगसामान्यं प्रति द्रव्यसामान्यस्य समवायिकारणत्वाभ्यणादिति भावः । कालत्वेन

न्दान्तमप्। यद्वा–उद्गतस्तमः–अविवेको मोहो वा यस्मादित्युत्तमः। अदन्तपुंलि-

---

ये त्वविद्यापरिकल्पितं जगदाचक्षते तेषां पक्ष उपादानत्वं ब्रह्मणो न घटते, ब्रह्मणो जगतोऽत्यन्तविलक्षणत्वात्। जगद्धि मिथ्या, ब्रह्म तु सत्यं, सरूपयोरेव चोपादानोपादेयभावो दृष्टः, यथा मृद्घटयोः। ननु–सर्पादे रज्जुरिव जगतो ब्रह्म भवेदेवोपादानं, नच वैरूप्यमाक्षेपाय, अपेक्ष्यत एवांशतो वैरूप्यमुपादानोपादेयभावे, सर्वथा चेत्सारूप्यमुपादानोपादेययोरपेक्षितम्, परिणामसामान्योच्छेदः। विचित्रा हि परिणतेर्गतिः, यथा सतः पुरुषात्केशलोमानि यथा च गोमयाद्वृश्चिकादीनि। सत्तामात्रेण चोपादानब्रह्मस्वरूपसारूप्यमस्त्येव जगति। मैवम्। सत्तयाऽपि सारूप्यस्य त्वया वक्तुमशक्यत्वात्। जगद्धि सदसद्विलक्षणमभिमतं, ब्रह्मैव तु सत्। उभयानुगतं सत्त्वं तु दुर्वचम्। सम्पाद्यमानमप्यप्रयोजकं, सर्वस्य सर्वत्र प्रकृतित्वापत्तेः। यथाकथञ्चित्सारूप्यं हि सर्वत्र सुलभम्। यत्तु श्रुतितः प्रतीयमानं जगद्ब्रह्मणोः प्रकृतिविकृतिभावं लोकदृष्टानुपपत्तयो न प्रभवन्ति व्याकुलयितुमिति, तत्तु–अनुपपन्नमर्थं परिकल्पयतः स्वपक्षरक्षकं वचः। ननु–नैवापेक्ष्यते सारूप्यमिह, समसत्ताककार्योत्पत्तौ हि तदपेक्षा, मृदो घटात्मना परिणतौ, जगत्तु ब्रह्मणो न परिणतिः, किन्तु विवर्त्तः, रज्जोरिव

---

निमित्तत्वमिति। कार्यसामान्यं प्रति कालस्य निमित्तकारणताश्रयणादिति भावः। अन्येनापि–वैशेषिकेणापि।

एवमभिन्ननिमित्तोपादानत्वं ब्रह्मणः प्रसाध्य वेदान्तिषु परेषां पक्षे ब्रह्मण उपादानत्वं नोपपद्यत इत्याह—ये त्विति। परः प्रत्यवतिष्ठते—नन्विति। ब्रह्मोपादानकत्वे जगतः सत्यता स्यात्, सत्योपादानकत्वादिति शङ्कां वारयन्निदर्शनमाह—सर्पादेरिति। ननु विरूपयोः कथमुपादानोपादेयभाव इत्यत्राह—अपेक्ष्यत एवेत्यादि। वैरूप्यमुपादेयत्वेऽनुकूलमेव न प्रतिकूलमिति भावः। इयान्विशेषः–क्वचिद्वैरूप्यातिरेकेण सारूप्यं सूक्ष्मदृष्टिगोचरम्, क्वचित्तु न तथेति ज्ञापयन्नाह—विचित्रा हीत्यादिना। यथा सतः पुरुषात्केशलोमानीति। इह सारूप्यं पार्थिवत्वेन सूक्ष्मदृष्टैकगोचरम्। ननु सारूप्यमिह केन प्रकारेणेत्यत्राह—सत्तामात्रेणेति। सिद्धान्ती परिहरति—मैवमित्यादिना। त्वया–अनिर्वचनीयवादिना त्वया। अभिमतमिति। त्वयेति शेषः। दुर्वचमिति। कालत्रयाबाध्यत्वलक्षणसत्ता जगति न घटते, प्रतीयमानत्वलक्षणसत्ता तु न ब्रह्मणि, ब्रह्मणोऽविषयत्वादिति भावः। तुष्यत्विति न्यायेनाह—सम्पाद्यमानमपीति। यत्त्विति। आशङ्कितुरयमाशयः—ब्रह्म जगच्च मिथोऽत्यन्तविसजातीयमेव, श्रूयते च तयोरुपादानोपादेयभावः, श्रूयमाणश्च कथमपि सङ्घटयितव्यः, तत्र युक्तं लोकदृष्टयुक्तिभिर्व्याहननम्, तद्युक्तमेवोपादानत्वोपपादनमस्मदीयमिति। तत्त्वित्यादि। अयं भावः—श्रुतिभिः प्रतीयमानं जगद्ब्रह्मणोः प्रकृतिविकृतिभावं न वयं व्याकुलयामो लोकदृष्टानुपपत्तिभिः, किन्तु तदुपपादनप्रकारं भवता कल्प्यमानमुपपत्तिविधुरमित्याक्षिप्यते, उपपन्नार्थकेन हि प्रमाणवाक्येन भाव्यम्। उपादेयमत्यन्तविलक्षणमुपादानं तु ततोऽत्यन्तविलक्षणमेवेति तु व्याहतम्। तदव्याहतमुपादानोपादेयभावं प्रसाध्य श्रुतिः सङ्गमयितव्या, तच्चास्मत्पक्ष एवेति। नन्विति। शङ्कितुरयमाशयः—परिणाम्युपादानत्वमधिष्ठानोपादानत्वं चेति द्विविधमुपादानत्वमिति। इह–जगद्ब्रह्मणोरुपा-

ङ्गोऽत्र तमशब्दः । "कप्रत्यये रजतमावदन्तपुंल्लिङ्ग"विति व्याख्यासुधायां भानु-

---

सर्पः । स च विषमसत्ताक एव, तन्नात्र तदपेक्षा । विवर्तापेक्षयोपादानत्वं चाध्यस्ताधिष्ठान-त्वरूपं ब्रह्मणि सङ्गच्छते । न च श्रुतौ मृत्पिण्डदृष्टान्तवर्णनासङ्गतिः । वस्तुदृष्ट्या घटशरावादीनामपि सर्पादिवदध्यस्तत्वाविशेषात् । नैतद्युक्तम् । अध्यस्ताधिष्ठानत्वस्योपादानलक्षण-त्वासम्भवात्, नहि मृत्पिण्डस्याध्यस्ताधिष्ठानत्वम् । ननूक्तं घटादिकमप्यध्यस्तमिति । उक्तं तु भवता नहि तथा लोके दृष्टम् । ननु—किं पामरलोकदृष्ट्या, श्रुतिस्तु निदर्शयति विकारस्या-ध्यस्तताम्—"विकारो नामधेयं मृत्तिकेत्येव सत्य"मिति । श्रुतेर्न तथा हार्दमित्युक्तं प्राक् । किञ्च—देहोऽप्यात्मन उपादानं स्यात्, शुक्तावध्यस्यमानस्य रजतस्येव देहेऽध्यस्यमानस्यात्मनो देहो ह्यधिष्ठानम् । ननु—आत्मनो न देहेऽध्यासः, देहस्य त्वात्मन्यध्यासः । नैवम् । उभयो-रुभयत्राध्याससम्भवात् । अन्योन्यस्मिन्नन्योन्यात्मकतामन्योन्यधर्मांश्चाध्यस्येति च भवदीय-वचनम् । "आकाशवाय्वग्निजलपृथिवीभ्यः पृथक्स्थिते । आत्मन्यात्ममयं भावं कः करोति कलेवरे ॥" इति सार्तं वचनमपि ।

ब्रह्मैव भोक्तृभोग्यनियन्त्रात्मना मृदिव घटशरावाद्यात्मना परिणमतीति पक्षे घटशरा-वादीनामिव प्रकृतिपुरुषेश्वरविभागस्य सादित्वमापद्येत । तथा सति तद्विभागस्यानादित्ववादा व्याहन्येरन् । नच समानोऽयमावयोर्विमर्शः, नहि वयमपूर्वमाचक्ष्महे तत्त्वविभागं, चिदचि-दीश्वरतत्त्वत्रयं सर्वदा स्वरूपतोऽनपायमेवाचक्ष्महे, सृष्टेः प्राक् सूक्ष्मरूपेण सन्निहितमेवावस्थायो-गभेदेन सृज्यतामाप्नोति । ननु—वयमपि तत्त्वत्रयं शक्तिरूपेण प्राक् सन्निहितमेवाचक्ष्महे । का सा शक्तिः ? । किं ब्रह्मणस्तथापरिणमनसामर्थ्यमेव ? उत तेषां सूक्ष्मरूपेणावस्थानम् ? ।

---

दानोपादेयभावे । समसत्ताककार्योत्पत्ताविति । परिणाम्युपादानत्व एवेत्येतत् । घटशरावादीना-मपीति । विकारमात्रस्येत्येतत् । विकारमात्रस्याध्यस्तवादोऽप्रामाणिक इत्याशयेनाह—नैतद्युक्तमिति । अप्रसङ्गमुक्त्वाऽतिप्रसङ्गमाह—किञ्चेति । अध्यस्यमानस्येति । पामराणां हि भवति देहे आत्मा-ध्यासः । देहस्य त्वात्मनीति । अतो नातिप्रसङ्गावसर इति भावः । सम्भवादिति । विवेकाग्रहो ह्यध्यासे मूलम्, अविशिष्टे तस्मिन्नात्मन्येव देहाध्यासो न देहे आत्माध्यास इत्यत्र नियामकं नेति भावः । तथासति स्ववचनव्याघातश्चेत्याह—अन्योन्यस्मिन्निति । आत्मनीति । आत्मनि पृथक्स्थित इत्यन्वयः । सार्तं वचनमपीति । न केवलं स्ववचनविरोधः, स्मृतिवचनविरोधश्चेति भावः ।

विवर्तवादे ब्रह्मणो जगदुपादानत्वानुपपत्तिं प्रतिपाद्य स्वरूपपरिणामवादे उपादानत्वानुपप-त्तिमाह—ब्रह्मैवेति । सादित्वमापद्येतेति । अतोऽनुपपन्नमुपादानत्वमिति भावः । सादित्वे का क्षतिरि-त्यत्राह—तथासतीति । ननु भवताऽपि ब्रह्मणः परिणामवाद एव स्वीकृत इति समानोऽयमाक्षेप इत्यत्राह—न चेत्यादि । तत्त्वविभागं—चिदचिदीश्वरतत्त्वविभागम् । अनपायमेवाचक्ष्मह इति । अनपायत्वे कथं परिणामः; येन सृज्यत्वमुपपद्येत, तत्राह—सृष्टेः प्रागिति । सूक्ष्मचिदचिद्विशिष्टस्येश्वरस्य स्थूलचिदचिद्विशिष्टतया भवनाद्भवत्यपूर्वावस्थायोग इति तत्त्वस्य नापूर्वताप्रसङ्ग इति भावः । वयमपि—स्वरूपपरिणामवादिनो वयमपि । प्राक्—सृष्टेः प्राक् । तथापरिणमनसामर्थ्यं—चिदचिदीश्वरात्मना परिण-

जिद्दीक्षितोक्तेः। उत्तमश्चासौ पुरुषश्च पुरुषोत्तमः। राजदन्तादित्वात्परनिपातः।

प्रथमे–मृदो घटादिजननसमर्थाया घटशरावादीनामिव चिदचिदीश्वराणामुत्पत्तिरेव स्वीकृता स्यात्। द्वितीये–सूक्ष्मस्य तस्य तस्य स्थूलतया परिणामात्तत्र तत्र तत्तदंशानामेवोपादानत्वसिद्ध्या नैकस्योपादानत्वं सिध्येत्। तथाच ब्रह्मणः परिणतिरेवेदमखिलमित्येतन्न घटेत। ननु–सूक्ष्मास्त्रयोऽप्यंशा ब्रह्मैवेति ब्रह्मणः परिणतिरिति युक्तमुक्तं नः। किं युक्तमुक्तम्। अप्रच्युततत्तदवस्थाः प्रतिनियतभेदास्ते ते सूक्ष्मांशा ब्रह्मैवेति निर्दिश्यमाना गुणतो जात्या वा केनचित्साधर्म्यमेवाश्रयन्ते, पृथिवीजलादीनि द्रव्यत्वेनेव, नैतावता निखिलोपादानत्वमेकस्मिन्, नहि द्रव्यत्वान्वयमात्रेण पार्थिवविकारारम्भकत्वं जले न वाऽऽप्यविकारारम्भकत्वं पृथिव्याम्। तत् द्रव्यत्वेनेव ब्रह्मत्वेनैक्योपपादनमप्रयोजकम्। ब्रह्मबहुत्वं च प्रसज्जेत्। न च प्रच्युततत्तदवस्थानां सन्मात्रस्वरूपाणां समुदायो ब्रह्म, ईश्वरादीनां सादित्वापत्तेः। किञ्च–श्रुतिस्मृतिषु तत्र तत्र प्रतिपाद्यमानं जन्मनाशतदभावरूपं वैषम्यं जडजीवयोः कथमुपपाद्यते ब्रह्मस्वरूपपरिणामवादिना त्वया। आत्मतत्त्वमपि वियदादिवद्ब्रह्मणः परिणतिरित्यविशेषः परिणतौ। अयं भावः–न किमपि द्रव्यमपूर्वं, सत एव द्रव्यस्यावस्थाविशेषयोगेनोत्पत्तिर्वाच्या, तथाच भूता-

मनसामर्थ्यम्। उत्पत्तिरेव स्वीकृता स्यादिति। तज्जननसामर्थ्यस्य तज्जनकतावच्छेदकधर्मयोगैकरूपतया सृष्टेः पुरा तद्धर्मान्वयेऽपि न तदन्वयं[1] इति तेषां सादित्वं स्यात्, तथाप्यनादित्वे मृद्विकारघटशरावादिभिः किमपराद्धम्, यत्तेषां सादित्वमिष्यत इति भावः। सूक्ष्मस्य तस्य तस्येति। सूक्ष्मस्यैव चेतनस्य स्थूलचेतनात्मना सूक्ष्मस्यैवाचेतनस्य स्थूलाचेतनात्मना, सूक्ष्मस्यैवेश्वरस्य स्थूलेश्वरात्मना परिणामादित्यर्थः। ननु नातिरिच्यन्ते ते त्रयो ब्रह्मस्वरूपात्, यत्तत्त्रयसमुदायो ब्रह्म, तद्युक्तं ब्रह्मैकोपादानत्वमखिलस्येत्याशयेनाशङ्कते—नन्विति। युक्तमुक्तं नः–उक्तं युक्तमित्यन्वयः, उक्तमिति भावे, उक्तिरित्यर्थः। किमिति। किंशब्दोऽत्र प्रतिक्षेपे। अप्रच्युतेति। यथा घटादीनां पूर्वं पश्चाच्च घटत्वाद्यवस्था प्रच्यवति न तथैषां, अत एवैषां मिथो भेदस्यानपायेन प्रतिनियतभेदाश्च, एषु त्रिषु ब्रह्मेत्यनुगतः शब्दो व्यवह्रियते नाम, तावता नार्थैक्यमिति भावः। असत्यर्थैक्ये कथमेकः शब्दः प्रवर्तेत?, तत्राह—गुणत इति। आश्रयन्त इति। अवलम्बन्त इत्यर्थः। अपेक्षन्त इति यावत्। नहि द्रव्यत्वान्वयमात्रेणेति। अयं भावः—यद्यपि वैशेषिकैरवयवत्वेनावयवित्वेन द्रव्यत्वेन गुणत्वेन कार्यकारणभावः स्वीक्रियते नाम, तेन चैकधर्मावच्छिन्ना कारणता एका सिद्ध्यति नाम, न तावताऽवयविसामान्यमेकावयवोपादानकं गुणसामान्यमेकद्रव्योपादानकं, तथासति पार्थिवैराप्यानामुत्पादापत्तेः, तथैवेह सूक्ष्मब्रह्मत्वेन स्थूलब्रह्मत्वेनोपादानोपादेयभावाश्रयणेऽपि कारणता स्यादेका, नत्वेककारणकत्वं सर्वस्य, किन्तु तत्तदंशानां तत्तदंशेष्वेवेति नैकोपादानकत्वसिद्धिरिति। ब्रह्मबहुत्वं चेति। द्रव्यबहुत्ववत्। श्रुतिस्मृतिषु—"अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" "आत्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी" इत्याद्याः श्रुतयः, "अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च" "तामसादपि भूतादेर्विकुर्वाणादभून्नभः" इत्याद्याः स्मृतयः। नन्वस्ति विशेषः, नह्यपूर्वमुत्पद्यते जीवाख्यं वस्तु, किन्तु ब्रह्मैव तद्भावमापद्यते कयाचिदवस्थया, वियदादिकं त्वपूर्वमाविर्भवतीत्याशङ्कामपहरन्नाह—अयं भाव इति। सत एवेति।

[1] तदन्वयः–तेषां प्रकृतिपुरुषेश्वराणामन्वयः।

यद्वा-पुरुषाभ्यां-क्षराक्षराभ्यामुत्तमः-परत्वाच्छ्रेष्ठ इति पुरुषोत्तमः। तथा चोक्तं

---

द्यवस्थस्य द्रव्यस्य वियत्त्वावस्थाप्राप्तिरेव वियत उत्पत्तिः। एवमेव ब्रह्मणो जीवत्वावस्थापत्त्या जीवस्याप्युत्पत्तिरविशिष्टा। ननु-न जीवत्वावस्थाप्राप्तिरपूर्वा, जीवशक्तेः प्रागपि विद्यमानत्वादिति चेत्। तुल्यं वियदादिष्वप्येतत्। ननु-न वियदादीनां शक्तिरूपेण प्राक् सन्निधानमिति चेत्। तर्ह्यस्यापि तथात्वं न स्यात्। न ह्यारम्भकेषु कचिदेवारभ्यद्रव्यस्य शक्तिरूपेण सन्निधानं नान्यत्रेति वैषम्ये निदानम्। ननु-प्रकृतिपुरुषेश्वरतत्त्वानामनादित्वेन श्रूयमाणतया श्रुत्यन्यथानुपपत्त्या मूलप्रकृतेर्जीवतत्त्वस्येश्वरतत्त्वस्य शक्तिरूपेण सन्निधानं ब्रह्मणीष्यते, न तु वियदादीनां तदारम्भकेष्विति चेत्। स्यादेतत्। तथापि जडजीवयोर्विकारित्वाविकारित्ववैषम्यं दुरुपपादं द्वयमपि ब्रह्मणो विकार एव हि। ननु-सत्यं द्वयोर्ब्रह्म प्रकृतिः, जीवतत्त्वं तु न वियदादिकमनिलाद्यात्मनेव विकरोति, कदाचित्तत्तद्वपुःप्रवेशमात्रमेव न स्वरूपप्रच्यवः, तस्मात् विकारतदभावरूपं वैषम्यमुभयोर्घटते। हन्त! सम्यक् समर्थितं जीवो न विकरोति ब्रह्म तु वियदादिकमनिलाद्यात्मनेव जीवात्मना विकरोतीति। यत्तु जीवात्मना परिणमदपि ब्रह्म न विकरोतीति, तत्तु निरस्तं प्रागेव। ब्रह्मणः सर्वाशुभाश्रयत्वं चास्मिन्पक्षे प्रसज्जेदित्युक्तं प्राक्। ननु-जगदुपादानत्वं ब्रह्मणो वदतस्तवापीदं समानम्। नैवम्। विशिष्टवेषेण ब्रह्मण उपादानोपादेयभावं वदतां न नः कश्चिद्दोषः। सूक्ष्मचिदचिच्छरीरकत्वावस्थाप्रहाणपूर्वकस्थूलचिद्-

---

सत्कार्यवादो हि वेदान्ताभिमत इति भावः। भूताद्यवस्थस्य-भूतादेस्तामसाहङ्कारस्यावस्था यस्य। जीवत्वावस्थापत्त्येति। नहि जीवभावः कल्पितो भवन्मते, अपि तु ब्रह्मण एव जीवात्मना परिणामो हि पारमार्थिक इष्यत इत्याशयः। ननु सत्यं ब्रह्मणोऽस्ति जीवत्वावस्था सा तु नापूर्वेत्याशङ्कते—नन्विति। प्रागपीति। सृष्टेः प्रागपि। एतदिति। शक्तिरूपेणावस्थानम्। तथात्वम्-शक्तिरूपेणावस्थानम्। नहीति। शक्तिरूपेणावस्थानं ह्यारम्भकेष्वभिमतं, तत्रारम्भके ब्रह्मणि शक्तिरूपेणावस्थानमिष्यते चेज्जीवस्य, आरभ्यान्तराणामारम्भकान्तरे न तथाऽवस्थानमित्यत्र न नियामकमित्याशयः। ननु न स्वभावोऽयमारभ्याणां यदारम्भकेषु शक्तिरूपेणावस्थानं, येनायमाक्षेपः स्यादित्याह—नन्विति। श्रूयमाणतयेति। "अजो नित्यः शाश्वतोऽयं" "अजामेकां लोहितशुक्लकृष्णाम्" इति। विकार एव हीति। ब्रह्मणः सर्वप्रकृतित्वस्य त्वयाऽभ्युपगमादिति भावः। शङ्कते—नन्विति। सत्यमिति। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानश्रुत्या, प्रकृतिश्चेति भगवता बादरायणेन समर्थनाच्च जडजीवापेक्षया ब्रह्मणः प्रकृतित्वमिष्यते नामेत्यर्थः। हन्तेत्युपहासे। सम्यगिति। व्यतिरेको लक्ष्यते। समर्थनमसङ्गतमित्येतत्। जीवापेक्षयाऽपि प्रकृतित्वसंरक्षणाय जीवात्मना भवनं स्वरूपेणैव ब्रह्मणः कथयतां ब्रह्मणो जीवात्मना विकारोऽवर्जनीयः, अथ चेदेवमभिमतं जीवेऽप्यस्तु नाम तथा, नह्ययं परब्रह्मातिशेते; येनास्याविकारित्वसंरक्षणे महानाग्रह आधेयः स्यादिति भावः। न विकरोतीति। यथा मृद्घटाद्यात्मना परिणमति केवलम्, नतु विकरोति मृत्त्वानपगमादित्यभिमानः। ननु त्वयाऽयं दोषो नोद्धार्यः, तवापि ह्ययं दोषः सम इत्याशङ्कते—नन्विति। विशिष्टवेषेणेति। नहि वयं स्वरूपेण परिणामं वदाम इत्याशयः। विशिष्टस्य चेदारभ्यत्वं कस्मिन्नंशे विकारः, यदि न कापि विकारः, श्रूयमाणानां विकृतवचनानां का

श्रीभगवद्गीतायाम्—"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि

---

चिच्छरीरकत्वरूपावस्थान्तरापत्त्याऽविकृतस्वरूपस्यापि ब्रह्मण उपादेयत्वं सङ्गच्छते। विकारो हि विशेषणभूते शरीरांशे, न स्वरूपे, अचिदंशे हि सङ्कोचो विकासो वा, जीवे तु धर्मभूतज्ञाने स्यान्नाम । तत्तदवस्थतत्तच्छरीरकत्वमात्रेण ब्रह्मणि न तयोः सम्भवः । नहि बाल्ययौवनादयो विकाराः शरीरिणि । सुखदुःखादिस्वभाववैचित्र्यस्य नाव्यवस्था, शुक्लनीलादितन्तुभिरारब्धे पटे तत्तदंश एव तत्तद्रूपस्येवात्रापि शरीरभूततत्तदंशभेदतस्तस्य तस्य व्यवस्थासम्भवात् । ननु–तत्रांशानां स्वातन्त्र्यम् । स्यान्नाम, न तदंशे दृष्टान्तोक्तिः । स्वभावव्यवस्थायां त्ववैषम्यमुभयत्र । ननु–ब्रह्मण उपादानत्वममुख्यमापद्येत, स्वरूपे स्वभावे वाऽन्यथाभावाभावात्, विशेषणद्वारा तदुपपादनं तु गौणम् । मैवम् । किंवा पाककारणत्वं ज्वालाव्यापारेण व्यवहितस्य काष्ठस्यामुख्यं, किंवा पुरुषस्य दण्डादिव्यापारादिना व्यवहितस्य घटे कर्तृत्वममुख्यं, किंवा यज्ञाय पशुरित्यत्र श्रूयमाणं पशोर्यज्ञार्थत्वं हविर्व्यवहितममुख्यं, किंवा पर्यङ्कस्य शयनाधिकरणत्वमास्तरणादिना व्यवधानादमुख्यं, तदिह शरीरतयाऽपृथक्सिद्धविशेषणव्यवधाने का न्यूनता येनामुख्यत्वाशङ्कावकाशस्ते । ननु–तत्र करणत्वादिनिर्वाहकज्वालादिव्यवधानं करणत्वादेरमुख्यत्वमापादयेत्; निर्वाहकेन व्यवधानं हि न मुख्यतामुपरुन्ध्यादिति चेदिहापि तथैवाकलय । नच मृद्विशिष्टस्य कुलालस्योपादानत्वं स्यात् । कुलालगतोपादानतायां मृदो निर्वाहकत्वाभावात् । नच चिदचितोर्ब्रह्मगतोपादानतायामिव मृदोऽपि कुलालगतोपादानतायां कुतो न

---

गतिः, स्थौल्यसौक्ष्म्यविकारो वा कथं, तत्राह—विकारो हीति । धर्मभूतज्ञान इति । कर्मणा धर्मभूतस्य ज्ञानस्य सङ्कोचविकाससम्भवात् । विकाराः–शारीराः । सुखदुःखादिस्वभाववैचित्र्यस्य नाव्यवस्थेति । जीव एव सुखदुःखान्वयः, स्वरूपान्यथाभावादयो जडांश एव, सर्वज्ञत्वादयो गुणाः ब्रह्मण्येवेतीयं वैचित्र्यव्यवस्थेत्यर्थः । तत्तदंश एवेति । अयं भावः—आरभ्यते नामानेकवर्णतन्तुसङ्घातेन पटः, स चानन्य एव तन्तुसङ्घातात्, न च कार्यावस्थायां रूपविनिमयः, य एव तन्तवः सितास्तेष्वेवांशेषु सितं रूपं न नीलेषु, एवमेवेहापि विशिष्टांशे नान्योन्यस्वभावसाङ्कर्यावसर इति । तत्रांशानां स्वातन्त्र्यमिति । यथा पटारम्भकाणां तन्तूनां मिथः प्रकारप्रकारिभावानापन्नस्वतन्त्रस्थितिः, तथा तत्र विशिष्टे येंऽशाश्चिदचिदीश्वराः, तेषां मिथः प्रकारप्रकारिभावानापन्ना स्थितिः स्यादिति भावः । समाधत्ते—स्यान्नामेति । स्वभावव्यवस्थामात्रे दृष्टान्ततयोक्तिरित्याह—स्वभावेति । परः शङ्कते—नन्विति । अन्यथाभावाभावादिति । असत्यन्यथाभाव उपादानत्वं हि न घटेतेति भावः । ननूपपादितं विशेषणद्वारोपादानत्वमित्यत्राह—विशेषणेति । गौणमिति । अन्यगतमुपादानत्वमुपचर्यते केवलं, वस्तुतस्तु तस्मिन्नेतस्येव प्राप्तमिति भावः । समाधत्ते—किं वेत्यादि । किं वेति प्रतिक्षेपे । मुख्यमेवेत्यर्थः । तदिहेति । ज्वालादिव्यवधानेऽपि काष्ठैः पचतीत्यादिप्रामाणिकव्यवहारात् करणत्वं चेत्काष्ठेषु मुख्यं शरीरतयाऽपृथक्सिद्धप्रकारभूतचेतनाचेतनव्यवधानमात्रेणान्यथाभवनं तन्निबन्धनमुपादानत्वं वा कथममुख्यं स्यादित्याशयः । ननु द्वारेण द्वारिणो नान्यथासिद्धिः, नह्यपूर्वेण यागस्यान्यथासिद्धिः, ज्वालादयस्तु काष्ठस्य पाकनिष्पादकत्वे द्वारभूता एव, तत्तैः कारणत्वमुत्तम्भ्यते, नच तथेहेत्याशङ्कामनूद्य परि-

भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो

निर्वाहकत्वमिति वाच्यम् । स्वनिष्ठत्वास्वनिष्ठत्वाभ्यां वैषम्यात् । किञ्च—कुलालस्योपादानत्वे सम्प्रतिपन्ने हि तन्निर्वाहकत्वं मृदो घटेत न वेति चिन्ता । ब्रह्मणस्तु श्रुतिसम्प्रतिपन्नमुपादानत्वमिति तन्निर्वाहकत्वं तच्छरीरभूते चिदचिदंशे आस्थीयते, तदुपपन्नमुपादानत्वं ब्रह्मणः ।

निमित्तत्वमात्रवादस्तु न श्रुतिस्वारस्यानुगुणः । स्वरसतः श्रुतयो हि परब्रह्मण उपादानत्वमवगमयन्ति—"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" "सोऽकामयत बहु स्यां प्रजायेयेति" इति । उपादानत्वे सत्येव सामानाधिकरण्यश्रुतीनामपि मुख्यार्थता । साक्षादुपादानत्वं श्रूयते च—"किंस्विद्वनं क उ स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेदु तद्यदध्यतिष्ठत् भुवनानि धारयन् । ब्रह्म वनं ब्रह्म स वृक्ष आसीद्यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा विब्रवीमि वो ब्रह्माध्यतिष्ठत् भुवनानि धारयन्" "तदात्मानं स्वयमकुरुत" इति । सूत्रकारश्चाह—"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति । तद्युक्तं परस्य ब्रह्मण एवोपादानत्वम् । उपादानं निमित्तं च ब्रह्मैवेति श्रुतेर्मतम् । सूत्रकृच्चापि तत्प्राह प्रकृतिश्चेति सूत्रतः ॥ उपादानं परं ब्रह्म समस्तचिदचिद्वपुः । बहु स्यामिति सङ्कल्प्य सम्भवत्सत्त्यदात्मकम् ॥ सौक्ष्म्यस्थौल्यविभेदेन विशेषणगतेन तु । उपादानमुपादेयं विशिष्टं ब्रह्म वर्ण्यते ॥ तत्तद्विशेषणांशेषु तत्तद्भेदव्यवस्थया । मिथः स्वभावसाङ्कर्यमापतेन्न कदाचन ॥ अनवद्यमिमं पक्षमवधूयान्यथाऽन्यथा । वदतां वादिनां पक्षाच्छ्रुतिर्दूरेऽपसर्पति ॥

हरति—नन्वित्यादिना । मृद्विशिष्टस्येति । प्रयत्नाश्रयत्वेन कर्तुरपि कुलालस्य मृद्विशिष्टत्ववेषेणोपादानत्वं स्यादिति भावः । स्वनिष्ठत्वास्वनिष्ठत्वाभ्यामिति । प्रकारतानापन्नस्वभावत्वतदभावाभ्यामित्यर्थः ।

एवं परेषामुपादानत्वेऽनुपपत्तिमुक्त्वा ब्रह्मण उपादानत्वमेव नेति पक्षं प्रतिक्षिपति—निमित्तमात्रेति । अवगमयन्ति—अनुमापयन्ति, अन्यथा मुख्यार्थभङ्गप्रसङ्गेन ज्ञापका भवन्तीत्येतत् । एवं श्रौतस्य लिङ्गस्य बाधमुक्त्वा श्रौतस्य वचनस्य बाधमाह—साक्षादुपादानत्वमिति । साक्षात्—कण्ठरवेण । ब्रह्म वनमित्यधिकरणोक्तिः । ब्रह्म स वृक्ष इत्युपादानोक्तिः । ब्रह्माध्यतिष्ठदिति निमित्तोक्तिः । तत्—ब्रह्म, आत्मानं स्वयं—स्वेनैव सहकारिसाधनेन, अकुरुत—विश्वरूपेण । प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्—ब्रह्मोपादानं च भवति, प्रतिज्ञादृष्टान्तवाक्ययोरनुपरोधात्—आनुकूल्यात् । अन्यथा तयोरुपरोधः स्यादिति भावः । ते चेमे श्रौते—"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं" "यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति । तदनन्यत्वमारम्भणशब्दादिभ्यः—तस्य ब्रह्मणोऽनन्यत्वमस्य जगतः, कुतः? आरम्भणशब्दादिभ्यः—वाचारम्भणमितिशब्दादिभ्यः । एतावता प्रबन्धेन समर्थितं ब्रह्मणोऽभिन्ननिमित्तोपादानभावं सुखप्रतिपत्तये कारिकयोपसंहरति—उपादानमित्यादिना । समस्तचिदचिद्वपुरिति । इदं चोपादानभावनिर्वाहकं विशेषणम् । विशेषणगतेन तु—तुशब्दाद्विशेष्ये ब्रह्मस्वरूपे तद्व्यावृत्तिर्गम्यते । तत्तद्भेदेति । ते ते भेदाः—जडत्वाज्ञत्वसुखित्वदुःखित्वादयस्ते ते विशेषाः ।

लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति ।

---

केचित्तु सर्वेषामाविर्भावानां–धर्मत्राणाय युगे युगे सम्भवतां भगवदवतारविशेषाणमूलभूत इति सर्वाविर्भावकारणपदं व्याचक्षते । अत्र पक्षे भगवतः सर्वावतारमूलस्वरूपमैश्वर्यमुक्तं भवति । ननु कृष्णस्य वसुदेवगृहेऽवतीर्णस्य कथमखिलावतारमूलता, तदवस्थे तत्त्वासम्भवात् । सत्यम् । तथापि देशविशेषावच्छिन्ने तद्घटैतैव, तथाच समायातं तत्तस्मिन् सोऽपि हि कृष्णः । स्मर्यते च कृष्णशब्दो नाम्नां सहस्रे ।

ननु—'स श्रीकृष्णः परं ब्रह्मे'त्येतन्न युज्यते, रुद्रस्य हि परब्रह्मता श्रुतिषु तत्र तत्रावगम्यते । तथाहि—"संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः" "क्षरं प्रधानममृताक्षरं हरः" "य एको जालवानीशत ईशनीभिः सर्वान् लोकानीशत ईशनीभिः । य एवैक उद्भवे सम्भवे च य एतद्विदुरमृतास्ते भवन्ति। एको हि रुद्रो न द्वितीयाय तस्थुर्य इमान् लोकानीशत ईशनीभिः । प्रत्यङ् जनांस्तिष्ठति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोपाः ।" "ततः परं ब्रह्मपरं बृहन्तं यथानिकायं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति" "ततो यदुत्तरतरं तदरूपमनामयम् । य एतद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति । सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः । सर्वव्यापी स भगवांस्तस्मात्सर्वगतः शिवः ॥" "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥" "तमीशानं वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति । यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः । + + + विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति" "घृतात्परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् । विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥" "यदा तमस्तन्न दिवा न रात्रिर्न सन्नासञ्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च

---

प्राचीनव्याख्यामनुवदति—केचित्त्विति । तदवस्थे–वसुदेवसूनुभावावस्थे । तत्त्वासम्भवात्–तत्त्वस्य सर्वावतारमूलत्वस्यासम्भवात् । कृष्णशब्दस्य परस्वरूपपरतामभिप्रेत्य समाधत्ते—सत्यमिति । देशविशेषावच्छिन्न इति । देशविशेषः–भगवद्धाम परमव्योम । तत्–सर्वावतारमूलत्वम् । तस्मिन्–परमव्योमनिलये । ननु कृष्णशब्दो ह्यवतारविशेषे प्रसिद्ध इत्यत्राह—सोऽपि हीति । कृष्णः–कृष्णशब्दवाच्यः । तत्र मानमाह—स्मर्यते चेति ।

कृष्णस्य परब्रह्मतां द्रढयन्नाशङ्कते—नन्विति । संयुक्तमेतदित्यादि । ईशादिशब्दा रुद्रे रूढाः, रूढिश्च योगाद्बलीयसीत्याशयः । ईशनीभिः–स्वशक्तिभिः । एको हि रुद्रो नान्यः, तत् द्वितीयाय न तस्थुस्तत्त्वदर्शिनः, न द्वितीयं तत्त्वदर्शिनो गणयन्तीति यावत् । प्रत्यङ् जनांस्तिष्ठति–जनान् प्रति प्रत्यगात्मतया–अन्तरात्मतया तिष्ठति । अन्तकाले सञ्चुकोच–सङ्कोचमुपगतः, शक्तिद्वारेणेति यावत् । गोपाः–गोप्ता, भुवनानां गोप्तेत्यर्थः । ब्रह्मपरं–ब्रह्मणो हिरण्यगर्भादपि परम् । यथानिकायं–यथाशरीरम् । ततो यदुत्तरतरमिति । ततः–पुरुषात् । घृतात्परं मण्डम्–घृतस्योपरि वर्तमानं सारवस्तु । भावग्राह्यम्–भावेन शुद्धान्तःकरणेन ग्राह्यम् । भावाभावकरम्–भावानां सांसारिकाणामभावं करोतीति

सर्वेषामाविर्भावाणां—वासुदेवादिकेशवादिव्यूहानां वराहाद्यवताराणां च

तस्मात्प्रसृता पुराणी ॥ + + + य एनं विदुरमृतास्ते भवन्ति" 'भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् । कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥" "सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्ये ध्येयः" "देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन् को भवानिति, सोऽब्रवीत् अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्तः" इत्याद्याः श्रुतयः कारणत्वध्येयत्वमोक्षप्रदत्वादीनि परब्रह्मासाधारणानि लिङ्गानि रुद्रेऽवगमयन्ति । शिवशम्भुरुद्रेशानादिशब्दाश्च रुद्रे देवताविशेषे रूढाः । अत्र ब्रूमः—अर्वाचीने रुद्रे परमकारणत्वलक्षणलक्षितं परब्रह्मत्वं नैव घटेत । श्रूयते चार्वाचीनता । तथाच श्रुतयः—"विरूपाक्षाय दत्तां जये ब्रह्मणः पुत्राय ज्येष्ठाय श्रेष्ठायामोघाय कर्माधिपतये" "ब्रह्म वा इदमग्र आसीत् तदेकं सन्नव्यभवत् + + + यान्येतानि देवक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः" "अपानान्निपादा यक्षराक्षसगन्धर्वाश्चास्थिभ्यः पर्वता लोमभ्य ओषधिवनस्पतयो ललाटात्क्रोधजो रुद्रोऽजायत" "अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत त्र्यक्षः शूलपाणिः पुरुषोऽजायत" "अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति नारायणात् ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रो जायते नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वे देवाः सर्वे ऋषयः सर्वे लोकाः समुत्पद्यन्ते सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते नारायणे प्रलीयन्ते" "एको नारायण आसीन्न ब्रह्मा न च शङ्करः स मुनिर्भूत्वा समचिन्तयत् तत एते व्यजायन्त विश्वे हिरण्यगर्भोऽग्नियमवरुणविष्णुरुद्रेन्द्राः तस्य हैतस्य परमस्य नारायणस्य भूतानां पतिः संवत्सर उषसि रेतोऽसिञ्चत् संवत्सरे कुमारोऽजायत सोऽरोदीत् तं प्रजापतिरब्रवीत् कुमार! किं रोदिषि? यच्छ्रमात्तपसोऽधिजातोऽसीति सोऽब्रवीत् अनपहतपाप्मा वा अहमनाहितनामा नामधेयं हि पाप्मनोऽपहत्या इति तं प्रजापतिरब्रवीत्, रुद्रोऽसीति, तदस्य तन्नामाकरोदग्निस्तद्रूपमभवत्, अग्निर्वै रुद्रो यदरोदीत्तस्माद्रुद्रः, सोऽब्रवीत्, ज्यायान्वा अहमस्मि धेह्येव मे नामेति, तं प्रजापतिरब्रवीत्, भवोऽसीति शर्वोऽसीतीशानोऽसीति पशुपतिरसीत्युग्रोऽसीति भीमोऽसीति महादेवोऽसीति, क इमामसिष्यतीति रुद्र इत्यब्रुवन्, + रुद्रो वै क्रूरः सोऽस्त्विति, सोऽब्रवीत्, वरं वृणा अहमेव पशूनामधिपतिरसानीति, तस्माद्रुद्रः पशूनामधिपतिः" इति । स्मृतयश्च—"ब्रह्मा शम्भुस्तथैवार्कश्चन्द्रमाश्च शतक्रतुः । एवमाद्यास्तथैवान्ये युक्ता वैष्णवतेजसा ॥ जगत्कार्यावसाने तु वियुज्यन्ते च तेजसा । वितेजसश्च ते सर्वे पञ्चत्वमुपयान्ति वै ॥ एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ

तथाविधम् । कलासर्गकरम्—कलानां नामादीनां षोडशानां सर्गहेतुम् । आकाशमध्ये—हार्दाकाशमध्ये । लिङ्गानीति । प्रत्येकमिति यावत् । अनन्यपरनारायणपारम्यप्रतिपादकैः श्रुतिशतैः रुद्रस्यार्वाचीनतावबोधकश्रुतिभिश्चोपमर्दान्नायं पक्ष आदरणीय इत्याशयेन प्रतिविधत्ते—अत्रेति । तत्र रुद्रस्यार्वाचीनत्वेऽनन्यथासिद्धं प्रमाणमुदाहरति—विरूपाक्षायेत्यादि । नारायणपारम्येऽनन्यथासिद्धं प्रमाणमुदाहरति—अथ पुनरित्यादिना । रुद्रस्य हिरण्यगर्भादप्यर्वाचीनत्वे प्रमाणमाह—एको नारायण इत्यादिना । तेषां

कारणं, यस्मात्सर्वे प्रादुर्भावा भवन्तीत्यर्थः। "सुरेष्वृषिष्वीश तथैव नृष्वपि तिर्यक्षु

---

स्मृतौ। तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ विष्णुरात्मा भगवतो भवस्यामिततेजसः। तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महाद्युतिः ॥" इत्याद्याः। तदेवमनन्यथासिद्धश्रुतिभिरर्वाचीनत्वे रुद्रस्यावगम्यमाने तस्य पारम्यसमर्थनाय यत्परस्य कतिपयश्रुतिवाक्यावलम्बनं, तच्छिवशम्भ्वादिशब्दश्रवणमात्रसमुत्तरङ्गितश्रद्धाविजृम्भितं, अनन्यथासिद्धानेकप्रमाणतः कार्यत्वेनावगम्यमानस्याकाशप्राणादेः कारणवाक्ये श्रवणमात्रतो नहि कश्चित्प्रामाणिकस्तेषां परमकारणत्वं समर्थयितुं यतेत, तदनन्यथासिद्धवचनानुगुण्येन तेषां नयनं कार्यम्। श्वेताश्वतरोपनिषदि श्रूयमाणानां तु सुतराम्, तत्रैव—"सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात्। स भूमिं विश्वतो वृत्वा अत्यतिष्ठद्दशाङ्गुलम्। पुरुष एवेदं सर्वं यद्भूतं यच्च भाव्यम्। उतामृतत्वस्येशानः यदन्नेनातिरोहति। वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति पुरुषसूक्तैकार्थ्यावगमात्। नच पुरुषसूक्तस्य रुद्रपरत्वं वक्तुं शक्यं, "सहस्रशीर्षा पुरुष इति उपहितां पुरुषेण नारायणेन यजमान उपतिष्ठते, नारायणाभ्यामुपस्थापन उत्तरनारायणेनादित्यमुपतिष्ठति" इति कल्पसूत्रकारनिर्देशात्। अथर्ववेदोक्तेषु अष्टादशमहाशान्तिकर्मसु वैष्णव्यां महाशान्त्यां विनियोगदर्शनाच्च। नन्वस्तु—"वेदाहमेतं पुरुषं महान्त"मिति पुरुषसूक्तार्थप्रत्यभिज्ञा, तथापि रुद्रपारम्यपरत्वमनपायं, "ततो यदुत्तरतरं तदरूपमनामयं य एतद्विदुरमृतास्ते भवन्ति" इति ह्यनन्तरं श्रूयते, वेदाहमित्यादिना प्राक् प्रस्तुतात् पुरुषात् श्रेष्ठतरमन्यदस्ति यद्ध्यानादमृतत्वप्राप्तिरिति हि तदर्थः, तच्च शिवात्मकमिति विशिष्य ज्ञायते "सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः। सर्वव्यापी स भगवान् तस्मात्सर्वगतः शिवः ॥" इत्यनन्तरमन्त्रेण। मैवम्। ततो यदुत्तरतरमित्यत्र हि तत इति नावधौ, किन्तु हेतौ, तथा चायमर्थः—तस्माद्धेतोः यदुत्तरतरं-श्रेष्ठतरं तत्त्वं तदेवारूपमनामयं च इति। अन्यथा पूर्वेण विरोधापातात्। पूर्वं हि "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्ता" दित्यत्र यः पुरुषोत्तमः प्रस्तुतस्तस्मादधिको नास्तीत्युच्यते "यस्मात्परं नापरमस्ति किञ्चिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित्। वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्व"-मिति। एवं "सत्त्वस्यैष प्रवर्त्तक" इत्युत्तरेण विरोधश्च। रुद्रो हि तमसः प्रवर्तको न सत्त्वस्य। तथाच श्रूयते—"अथ यो ह खलु वा अस्य राजसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मा, अथ यो ह खलु वा अस्य सात्त्विकोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः, अथ यो ह खलु वा अस्य तामसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं रुद्र" इति। स्मर्यते च—"यत्सत्त्वं स हरिर्देवो यो

---

नयनं-शिवशम्भ्वादिशब्दानां नयनम्। वाक्यान्तरतो विशेषमभिप्रेत्य सुतरामिति। को विशेषस्तत्राह—तत्रैवेति। पुरुषसूक्तैकार्थ्येति। यानीमानि पुरुषसूक्ते पठ्यमानानि नारायणपारम्येऽनन्यथासिद्धानि प्रथितानि तान्येवेहापि पठ्यमानान्यात्मनैकार्थ्यं वाक्यान्तराणां सह पठ्यमानानां रुद्रादिशब्दघटितानां गमयन्तीति भावः। अन्यथा-हेत्वर्थतां परित्यज्यावध्यर्थताश्रयणे। यस्मात्परं नापरमस्तीति। इदं च ततो यदुत्तरतरमित्यस्याव्यवहितं पूर्वं वचनम्, अनेन चाभ्यधिकरहितः परतरः पुरुषो

यादस्स्वपि तेऽजनस्य । जन्मासतां दुर्मदनिग्रहाय प्रभो! विधातः सदनुग्रहाय

हरिस्तत्परं पदम् । सत्त्वं रजस्तमश्चेति त्रितयं चैतदुच्यते ॥ सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्मकम् । रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोऽधिकः ॥ तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते। यद्वेदवाह्यं कर्म स्यात् मामुद्दिश्योपसेव्यते ॥ तद्रौद्रमिति विख्यातं कनिष्ठगतिदं नृणाम् । यद्धीनतपसा युक्तं केवलं तामसं तु यत् ॥ तद्दुर्गतिप्रदं नृणामिह लोके परत्र च ॥" इति। किञ्च—नारायणशब्दवदीशादिशब्दा न देवताविशेषसमर्पणे समर्थाः, अन्यत्रापि प्रयोगात् । ईशितृत्वगुणयोगेनेशेशानेश्वरशब्दा हि यथानुगुण्यं तत्र तत्र प्रयुज्यन्ते । शिवशब्दश्च मङ्गले । शम्भुशब्दस्य द्रुहिणेऽपि प्रयोगो दृश्यते—"शृणु मे वचनं शम्भो पितामहपितामह। मरणादधिकं देव यत्प्रतापस्य खण्डनम् ॥ तमेव देवताश्रेष्ठ सम्प्राप्ते हरिवासरे । यदि चालयसे धैर्यात्ततोऽहं तव किङ्करः । स मे शत्रुर्महान् शम्भो तेन लुप्तः पदो मम" इति । इदं ब्रह्माणं प्रति यमस्य वचनम् । रुद्रशब्दस्य चाग्नौ । "रुद्रो भूत्वाग्निरनूत्थायाध्वर्युं यजमानं च हन्या"दिति । एषां सर्वेषामेव भगवति पुरुषोत्तमे सहस्रशः प्रयोगो दृश्यते । तथाहि—"शाश्वतं शिवमच्युतं" "एष वै पुरुषो विष्णुर्व्यक्ताव्यक्तः सनातनः । एष धाता विधाता च प्रधानं निष्कलः शिवः ॥ बाहू द्वौ स्थापयामास कृष्णः साक्षात्स्वयं शिवः । शिवयोर्देवयोस्तत्र हरेश्चैव भवस्य च । ध्यायन् हरिं जगद्योनिं विष्णुं पीताम्बरं शिवम् । तपश्चर्तुं हरिः कृष्णः—सर्वेश्वरः शिवः ॥ अव्ययः शाश्वतो देवः सकलो निष्कलः शिवः । श्वसन्तमम्भोनिधिशायिनं हरिं भक्तप्रियं भक्तजनास्पदं शिवम् । महादेवं महाभागमनन्तं शिवमच्युतम् । लोकनाथ महाबाहो शिवनारायणाच्युत ॥ तत्र गत्वा मया विष्णुः पुराणः पुरुषः शिवः । पुरुषो विष्णुरित्युक्तः शिवो नारायणः स्मृतः ॥ तमाहुः पुरुषं केचित् केचिदीश्वरमव्ययम् । केचिच्च परमात्मानं केचिच्छिवमनामयम् ॥ तुष्टुवुर्देवमीशानं मन्त्रैर्भागवतैस्तथा । तं द्रष्टुं देवमीशानं यतामः साम्प्रतं हरिम् ॥ आद्यं पुरुषमीशानं सर्वलोकमहेश्वरम् । न चिन्तयति यो विष्णुं नारायणमनन्यधीः । आपुरादित्यवर्णं तं पुरुषं तमसः परम् । बृहन्तं सर्वगं देवमीशानं वरदं विभुम् । जहि निद्रां जगद्धातः केशवेश जनार्दन ।" "उत्तराया हतो गर्भ ईशेनाजीवितः पुनः । तदा तु भगवानीश आत्मानं सृजते हरिः ॥" "ददृशे कृष्णमीश्वरम् । तुष्टुवुः पुण्डरीकाक्षं वाग्भिरष्टाभिरीश्वरम् । स्तुत्वा स्तुत्यं हरिं विष्णुमीश्वरं कमलेक्षणम् । आभ्यन्तरं जगन्नाथं प्रविश्य हरिरीश्वरः । "कृत्वा केशव ईश्वरः" "शरेण हरिरीश्वरः" "मनसा विष्णुमीश्वरम्" "विश्वाक्षं विश्वसम्भवम्" "शम्भुर्नारायणोऽव्ययः" "इति नारायणः शम्भुः" "रुद्रो बहुशिरा बभ्रुः" इति। नच रुद्रपरत्वे प्रदर्शितश्रुतिष्वसाधारणं किमपि लिङ्गमुपलभ्यते । श्वेताश्वतरे हि प्रथमखण्डे जगतः परमकारणं किमिति विमृश्य परं ब्रह्म प्रकृतिशक्तिकं निदानमिति विनिश्चित्य तस्यैव कालाद्यधि-

निरूप्यते, तथाच समनन्तरवाक्ये ततो यदुत्तरतरमित्यनेन तस्मादधिकोऽन्योऽस्तीत्यर्थः कथमुपस्थाप्येत, तच्च वचनमव्यवहिततोऽव्यवहितपूर्ववचनैरेकीभूय नारायणस्यैव पारम्यमवगमयति, तत्तद्धेतुपरत्वमेव न्याय्यमिति भावः । न केवलं पूर्ववचनविरोधः, उत्तरवचनविरोधश्चेत्याह—एवमिति ।

चे"ति श्रीभागवते ब्रह्मवाक्यात्। "जन्मकर्माभिधानानि सन्ति मेऽङ्ग! सहस्रशः।

---

ष्ठातृत्वेन निमित्तत्वमपि सूचयित्वा तस्यैव चिदचिदीश्वरस्य यः प्रीतिपात्रं भवति स मुच्यते, प्रीतिसम्पादने च स्वसादीशितव्यात्तस्य प्रेरकस्येशितुर्वैलक्षण्यज्ञानं साधनमित्याद्युक्तम्। अत्र न किञ्चिल्लिङ्गमुपलभ्यते रुद्रपरत्वे। "संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः" इत्यत्र ईशशब्दश्रुतिरीशितृत्वरूपावयवार्थद्वारेणैवेह प्रवर्तते। अनन्तरवाक्ये "अनीशश्चात्मा बध्यते" इति बन्धनप्रयोजकतयाऽनीशत्वस्य निरूपणात्। व्यक्ताव्यक्तं भरत इति प्रतिपाद्यमानस्य व्यक्ताव्यक्तभरणस्योपपादकमीशितृत्वं ह्यत्र वक्तव्यमपेक्ष्यते। "क्षरं प्रधानममृताक्षरं हरः" इत्यत्र या च हरशब्दश्रुतिः साप्यन्यथासिद्धैव। पूर्वं श्रुतस्य संयुक्तमेतत्क्षरमक्षरं चेत्यस्य हीदं विवरणभूतम्। क्षरं किमित्याकाङ्क्षायां विशेषश्रुतिः प्रधानमिति। अक्षरं किमित्याकाङ्क्षायां हर इति विशेषश्रुतिः। हरतीति हरः। भोग्यत्वेनाचिज्जातं स्वार्थतया हरति जीवः, तद्धर उच्यते। अन्यथा विशेषसमर्पकपदाभावेन वैरूप्यं, न ह्यमृताक्षरमित्येतावता क्षरं प्रधानमित्यत इव विशेषसिद्धिः। अमृतत्वं हि सामान्यधर्मः, अमृताक्षरमिति च समस्तम्। हर इत्यस्य देव इत्यनेनान्वये व्यवहितान्वयो दोषः। द्वितीयखण्डे योगोपायादिकं निरूपितं, नात्र रुद्रे लिङ्गं किमप्युपलभ्यते। प्रत्युत "यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नम" इत्यनेन प्रतीयमानं सर्वान्तरत्वं नारायणस्यैव लिङ्गम्। सुबालोपनिषदादिषु तस्यैवान्तरात्मत्वप्रतीतेः। यश्च तृतीयाध्याये रुद्रशब्दः स च यौगिकः, रुजं-संसाररुजं, द्रावयति-अपगमयतीति तदर्थः। यत्तु-गिरिशन्त

---

ईशादिपदस्यान्यथासिद्ध्या तद्घटितवाक्यानामनन्यथासिद्धनारायणपदघटितवाक्यानुगुणेनैवार्थेन भाव्यमित्यभिप्रेत्याह—किञ्चेति। किमिति विमृश्येति। "किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः..........ते ध्यानयोगानुगता" इति वाक्यस्य हार्दम्। प्रकृतिशक्तिकं निदानमिति विनिश्चित्येति। "अपश्यन् देवात्मशक्ति"मित्यस्य हार्दम्। कालाद्यधिष्ठातृत्वेन निमित्तत्वमपीति। "कालात्मयुक्तान्यधितिष्ठत्येक" इत्यस्य हार्दम्। तस्यैव चिदचिदीश्वरस्येत्यादि। "पृथगात्मानं प्रेरितारं चे"ति वाक्यस्येदं हार्दम्। इह-ईशितृत्वगुणपरपूर्वापरवाक्यघटितेऽस्मिन्वाक्य इत्यर्थः। ननु-अक्षरं किमिति विशेषजिज्ञासायाममृतमिति विशेषः समर्प्यते, तत्समर्पकं च वाक्यममृताक्षरमित्येव न हर इति तृतीयं पदमाधिक्यादनपेक्षणादित्येतत्प्रतिक्षिपति—न हीत्यादिना। प्रधानमित्यत इवेति। क्षरं प्रधानमिति वाक्यादिवेति यावत्। सामान्यधर्म इति। अतिप्रसक्तेर्न विशेषमवगमयेदिति भावः। ननु-हर इत्यपि सामान्यम्, हरणमात्रं हि ततो गम्येत, हरणविशेषश्चासाधारणो विवक्षायत्तः, तथैवामृतत्वं साधारणमपि विवक्षाविशेषेण देहसम्बन्धे सत्यपि मरणधर्मेणानालीढ आत्मा उपस्थाप्यत इत्यत्राह—अमृताक्षरमिति। समस्तमिति। उद्देश्यविभागो ह्यनुपपन्नः, अनुपपन्ने च तस्मिन् जिज्ञासितो विशेषो नावगम्येतेति भावः। एवं प्रथमखण्डे लिङ्गाभावमुपपाद्य द्वितीयेऽपि तमाह—द्वितीयेत्यादिना। युञ्जानः प्रथमं मन इत्यादिना तत्र हि योगोपयोगि निरूप्यते। सुबालोपनिषदादिष्विति। "अन्तःशरीरे निहितो गुहाया"मित्यादिना "दिव्यो देव एको नारायण" इत्यन्तेन।

न शक्यन्तेऽनुसङ्ख्यातुमनन्तत्वान्मयाऽपि हि ॥ क्वचिद्रजांसि विममे पार्थिवान्यु-

---

गिरित्रेति सम्बोधनं तत्तु न रुद्रासाधारणं लिङ्गमवगमयति, गिरिशं–रुद्रं यस्तनोति–सृजति तस्य ततो बोधनात् । यद्वा–गिरि शब्दे वेदाख्ये स्थितः सन् शं तनोतीति तदर्थः । सुखप्रदत्वेन वेदेऽवगम्यमान इति यावत् । तथाच श्रुतिः—"एतस्य वा आनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति । यद्वा–गिरि–शब्दे शं–मङ्गलं तनोति । यत्सम्बन्धाच्छब्दस्य मङ्गलत्वमित्येतत् । तथाच स्मर्यते—"गिरि स्थितः सन्त्रायते इति गिरित्र उच्यते" इति । यन्नामोच्चारणमात्रेण संसारभयाद्रक्षितो भवतीत्येतत् । केचित्तु—"यो देवानां भवश्चोद्भवश्च" "या ते रुद्र शिवा तनूः" "यामिषुं गिरिशन्त" इति मन्त्रत्रयं रुद्रगोचरभगवज्ज्ञानप्रार्थनापरतया व्याचक्षते । एषामयमाशयः—रुद्रो हि भगवद्विज्ञाने उपायभूतः, तथाच स्मृतिः—"शङ्कराज्ज्ञानमन्विच्छेत्" "उपायोऽस्मि हरेः स्मृता"विति । "हिरण्यगर्भं जनयामासे"त्यत्र श्लोकस्यार्थो जात इत्यादाविव जनिधातोर्ज्ञानार्थकत्वाद्रुद्रस्य हिरण्यगर्भतः पश्चाद्भावित्वेऽप्यविरोध इति । चतुर्थखण्डे—"यो देवानां प्रभवश्चोद्भवश्च विश्वाधिपो रुद्रो महर्षिः । हिरण्यगर्भं पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु" इत्यत्र मन्त्रे रुद्रशब्दस्यार्थः पूर्ववद्बोध्यः। केचित्तु—इमं मन्त्रं पूर्ववदुपासनासिद्ध्यर्थं रुद्रगोचरप्रार्थनापरतया योजयन्ति । ऋषित्वात्पश्चाद्भाविनोऽप्यस्य स्वपितुर्जायमानावस्थस्य दर्शनमविरुद्धमिति चाचक्षते । "शिव एव केवलः" "ज्ञात्वा शिवं" इत्यत्र शिवशब्दश्च भगवत्परः । भगवति पुरुषोत्तमे शिवशब्दस्य भूरिप्रयोगश्च दर्शितः प्राक् । "अजात इत्येवं कश्चिद्भीरुः प्रपद्यते । रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः । वीरान्मा नो रुद्र भामितोवधीर्हविष्मन्तः सदमित्त्वा हवामहे"इत्यत्र मन्त्रद्वये रुद्रशब्दः पूर्ववद्बोध्यः । दक्षिणं मुखम्–अनुकूलमुखमित्यर्थः, आह्लादकरमित्येतत् । केचित्तु–पूर्ववदुपासनाङ्गमन्त्रं मन्यन्ते। पञ्चमे "भावाभावकरं शिव"मित्यत्र यः शिवशब्दः स भगवन्तं पुरुषोत्तममाह । षष्ठे–न किमपि रुद्रे ज्ञापकम् । प्रत्युत "यो ब्रह्माणं विदधाति पूर्व"मिति ब्रह्मकारणत्वश्रवणात्, कारणत्वनियन्तृत्वादिसुबालोपनिषदर्थप्रत्यभिज्ञानाच्च, पुरुषोत्तम एव प्रत्यभिज्ञायते । "शम्भुराकाशमध्ये

---

यच्च तृतीयाध्याये रुद्रादिपदमसाधारणगमकतयाऽऽश्रितं तत्राह—यच्चेति । न रुद्रासाधारणं लिङ्गमवगमयतीति । प्रत्युत विरुद्धं लिङ्गमवगमयतीत्यर्थः । मात्राम्–लेशम् । अयमवयवार्थो नास्माभिरुत्प्रेक्षितः, किन्तु स्मृत इत्याह—तथा चेति । रूढ्यर्थाश्रयणेनैव निर्वाहमाह—केचित्त्विति । ननु तर्हि रुद्रस्य हिरण्यगर्भतः प्राक्तनत्वं त्वयाप्याश्रयणीयम्, "हिरण्यगर्भं जनयामासे"ति हि श्रूयते इत्यत्राह—हिरण्यगर्भमिति । अस्मिन् पक्षे जनिधातोः क्लिष्टार्थतेत्यस्वारस्यं, अत एव केचिदिति निर्देशः । आचक्षत इति । इहाप्यस्वारस्यं पूर्ववद्बोध्यम् । पूर्ववद्बोध्य इति । रुजं द्रावयतीत्यवयवार्थयोगेन प्रवृत्तो बोध्यः । ननु दक्षिणं मुखमिति निर्देशो रुद्रशब्दस्य रूढ्यर्थाश्रयणे लिङ्गं, पञ्चमुखस्य यद्दक्षिणदिगवच्छिन्नं मुखं तद्धि दक्षिणमित्युच्यत इत्याशङ्कायां दक्षिणशब्दस्यार्थमाह—दक्षिणं मुखमिति । पूर्ववदुपासनाङ्गेति । य एनमेवं विदुरिति पूर्वप्रस्तुतोपासनाङ्गमित्यर्थः । ब्रह्मकारणत्वश्रवणात्–

रुजन्मभिः। गुणकर्माभिधानानि न मे जन्मानि कर्हिचित्॥ कालत्रयोपपन्नानि

ध्येय" इत्यत्र यः शम्भुशब्दः सोऽपि भगवत्परः। शम्भुशब्दस्य भगवति पुरुषोत्तमे प्रयोगश्च प्राक् प्रदर्शितः। यत्तु—"अहमेकः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त" इति रुद्रस्य वचः, तत्तु–परमात्मात्मकस्वात्मानुसन्धानमूलकम्। वामदेवादीनां हि तथाऽनुसन्दधानानां स्वशरीरिणि परमात्मन्यहङ्ग्रहणे "अहं मनुरभव"मित्यादिव्यवहारः श्रूयते। तथा इन्द्रस्याप्युपदेशः श्रूयते—"तं मामायुरमृतमुपास्वे"ति। स चायं वामदेवन्यायोऽत्रैव "सोऽन्तरादन्तरं प्राविश"दित्यनन्तरवाक्ये स्फुटीकृतः। अयमस्यार्थः—देवैः पृष्टो रुद्रः "अहमेव वर्तामि भविष्यामि नान्यो मत्तः कश्चि"दित्याह। नन्वस्ति सकलकारणभूतो भगवान्, कथमयमात्मानमेवं निर्दिशतीत्याशङ्कायां श्रुतिराह—सोऽन्तरादन्तरं प्राविशदिति। सः–एवं वदन्रुद्रः, तदानीमन्तरादन्तरं प्राविशत्–अन्तराज्जीवादन्तरं–परमात्मानं बुद्ध्या प्राविशत्। न केवलमहंप्रत्ययस्य स्वात्मन्येव विश्रान्तिममन्यत, किन्तु परमात्मपर्यन्तं प्रवृत्तिममन्यतेत्येतत्। यद्वा–इदमपि रुद्रवचः। अयमर्थः—ननु–कथं भवानेक एव, अन्यो हि सर्वकारणभूत इत्याशङ्कायामाह—इति सोऽन्तरादन्तरं प्राविशदिति। यदहमकथयमेक एवाहं नान्यः कश्चिदिति, तत्, इति–एवं प्रकारेण, तमेव प्रकारमाह—सोऽन्तरादिति। सः–भगवान्पुरुषोत्तमः परमात्मा, अन्तरात्–शरीरादन्तरात्प्राणादपि, योऽन्तरः–जीवः, तं प्राविशत्। यस्मात्परमात्मा जीवमनुप्रविश्यान्तर्यामितया सन्निहितः, तदहमिति तस्यान्तरात्मनोऽयं निर्देशो मया कृत इति यावत्। इतिशब्दो हेतुपरो वा। एतेन–इतिशब्देन व्यवधानात्कथं रुद्रवचनतया नयनमिति शङ्का परास्ता। अधिकमन्यत्र बोध्यम्।

प्रसङ्गाद्रुद्रपारम्यप्रतिक्षेपः प्रदर्शितः। अथ कृष्णः परंब्रह्मेत्येतदद्य निरूप्यते। तथा च

ब्रह्माणं हिरण्यगर्भं प्रत्यपि कारणत्वश्रवणात्। प्रत्यभिज्ञानाच्च–इदमत्र प्रत्यभिज्ञापकं वचनम्—"स कारणं करणाधिपाधिपः" "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि। ननु रुद्र एव आह "अहमेकः प्रथममास"मित्यादि, इदमेवानन्यथासिद्धं रुद्रपारम्ये प्रमाणमित्यत आह—यत्त्वित्यादिना। परमात्मकस्वात्मानुसन्धानमूलकमिति। परमात्मानं सर्वान्तर्यामिणं सर्वप्रकारतयाऽवस्थितं साक्षात्कृत्य ततोऽन्यं स्वतन्त्रमपश्यतः स्वमपि तदात्मकतयैव पश्यतो रुद्रस्येदं वचनमित्याशयः। एवंजातीयानि वचनान्यपि श्रुतौ सन्तीत्याह—वामदेवादीनां हीत्यादिना। नन्वस्तु वामदेवादिवचसस्तथा गतिः, तावताऽस्यापि तत्समानन्यायेनैव भाव्यमिति कोऽयं नियम इत्यत्राह—स चायमित्यादिना। वाक्यशेषावगम्योऽयमाशय इति भावः। वाक्यशेषस्यार्थमाह—अस्यायमर्थ इति। नन्वयं चेद्व्याप्यः कथमस्याप्यन्तरे प्रवेशः, तत्राह–बुद्ध्येति। ननु बुद्ध्या वा कः प्रवेश इत्यतो भावमाह—न केवलमित्यादिना। इतिशब्दस्य सोऽन्तरादन्तरमित्यनेनैकवाक्यतामभिप्रेत्य व्याचष्टे—यद्वेति। इतिशब्देनेति। रुद्रवचनसमाप्तिज्ञापकेनेति भावः।

पूर्वसङ्गतिपूर्वकं वर्णयिष्यमाणं सङ्गृह्य कारिकयाऽऽह—प्रसङ्गादिति। ननु सर्वाविर्भावकारणतया

जन्मकर्माणि मे नृप ! । अनुक्रमन्तो नैवान्तं गच्छन्ति परमर्षयः ॥" इति मुचुकुन्दं प्रति भगवद्वाक्याच्च । "बहूनि सन्ति नामानि रूपाणि च सुतस्य ते । गुणकर्मानुरूपाणि तान्यहं वेद नो जनाः ॥" इति नन्दं प्रति गर्गवाक्याच्च । एवंभूतः स

श्रूयते तैत्तरीयोपनिषदि नारायणानुवाके—"पतिं विश्वस्यात्मेश्वरं शाश्वतं शिवमच्युतम् । नारायणं महाज्ञेयं विश्वात्मानं परायणम् ॥ नारायणः परं ब्रह्म तत्त्वं नारायणः परः । नारायणः परो ज्योतिरात्मा नारायणः परः ॥ यच्च किञ्चिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥" महोपनिषदि—"नारायणः परं ब्रह्म तत्त्वं नारायणः परः । नारायणः परो ज्योतिरात्मा नारायणः परः ॥" सुबालोपनिषदि—"एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः चक्षुश्च द्रष्टव्यं च नारायणः" "किं तदासीन्नैवेह किञ्चनाग्र आसीदमूलमनाधारमिमाः प्रजाः प्रजायन्ते दिव्यो देव एको नारायणः" इति । नच नारायणे तथात्वस्य श्रूयमाणत्वेऽपि न कृष्णे तथेति शङ्क्यम्, अर्थैक्यात् । तथाच स्कान्दे वासुदेवमाहात्म्ये—"तत्राथ कृष्णं भगवन्तमैक्षन्नारायणं निर्गुणमाश्रितं सः । सर्वज्ञमीशं पुरुषोत्तमं च यं वासुदेवं प्रवदन्ति सात्त्वताः ॥ यं केचिदाहुः परमात्मसंज्ञं केचित्परं ब्रह्म परात्परं च । जय श्रीकृष्ण ! भगवन्नारायण ! जगत्प्रभो ! । वासुदेवाखिलावास ! सदैकान्तिकवल्लभ ! ॥ अत्याश्रयोऽर्चनीयाङ्घ्रे राधिकाकमलादिभिः । त्वमेवात्यन्तिकं श्रेयोऽभीप्सतां परमा गतिः ॥ नित्यानामात्मनां नित्य आत्मा चेतनचेतनः । क्षराक्षरेभ्यश्च परस्त्वं ब्रह्म परमं हरे ! ॥" इति । अतएव विष्णुपुराणे प्रह्लादचरिते—"स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसुस्थितः ॥" इति स्मर्यते । तथा भागवते च—"आरिराधयिषुः कृष्णम्" इति पृथुचरिते । "दूतानां यमकृष्णयोः" इत्यजामिलचरिते । "कृष्णार्चनप्रभवा नो जहाति" इति भरताख्याने । "कृष्णग्रहगृहीतात्मा" इति च प्रह्लादचरिते । तदिदमुक्तं भवति—य एव सर्वान्तरः पुरुषोत्तमो नारायणः परं ब्रह्मेति त्रय्यन्ते श्रूयते स एव कृष्णविष्णुवासुदेवादिशब्दैः स्मृतिषु स्मर्यत इति । तस्मात्कृष्णः परं ब्रह्मेत्येतत्त्रय्यन्तसम्मतम् । प्रमाणं स्मृतयोऽप्यत्र प्राक् प्रसङ्गादुदाहृताः ॥ तत्त्वं जिज्ञासमानानां सात्त्वेनैवार्थनिश्चयः । गृह्णतामर्थदार्ढ्याय वचनान्यपराण्यपि ॥ तथाहि—"कृष्ण एव हि लोकानामुत्पत्तिरपि चाव्ययः । कृष्णस्य हि कृते सर्वमिदं विश्वं चराचरम् ॥" "परं ब्रह्म परं धाम पवित्रं परमं भवान् ।" "अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा । मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय ॥" "अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः । अहमादिश्च मध्यं च भूतानामन्त एव च ॥" "एवमेषोऽसुराणां च सुराणामपि सर्वशः । भयाभयकरः कृष्णः सर्वलोकेश्वरेश्वरः ॥" इत्यादीनि । सिद्धं तावच्छ्रीकृष्णः परं ब्रह्मेति ।

---

प्रतीयमानं परं ब्रह्म न रुद्रः, नापि कृष्णः, इत्याशङ्कायां सः श्रीकृष्णः परं ब्रह्मेत्येवतत्समर्थ्यते इत्याह—अथ कृष्णः परं ब्रह्मेत्येतदद्य निरूप्यत इति । अर्थैक्यादिति । तत्र तत्र परब्रह्मतया श्रूयमाणो नारायणः कृष्ण एव नान्य इति भावः । तत्र प्रमाणमाह—तथाच स्कान्द इति ।

ईशः–परमेश्वरः श्रीकृष्ण एव ज्ञेयो न त्वन्यः। "येषां गृहानावसतीति साक्षाद्गूढं

---

अथ पदार्थं पर्यालोचयामः—प्रधाने परिशुद्धात्मन्यक्षरे च ब्रह्मशब्दप्रयोगात्तद्व्यावृत्तये परं ब्रह्मेत्युक्तिः। स्वरूपतो गुणतश्च यस्मिन्ननवधि बृहत्त्वं स एव परं ब्रह्म। स च श्रीकृष्ण एव। कृष्णो ह्यानन्दमयः। "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः" इति निरुक्तसिद्धोऽयमर्थः। यश्च निरवधिकानन्दः स च गुणतो महानेव। अयं च ब्रह्मशब्दः प्रवृत्तिनिमित्तपौष्कल्यात्कृष्ण एव मुख्यवृत्तो भगवच्छब्दवदिति व्यञ्जयन्नाह—भगवानिति। निरस्तनिखिलदोषत्वकल्याणगुणाकरत्वोभयलक्षणोपेतो हि भगवच्छब्दो मुख्यार्थः। स्मरति च पराशरः—"शुद्धे महाविभूत्याख्ये परे ब्रह्मणि शब्द्यते। मैत्रेय! भगवच्छब्दः सर्वकारणकारणे॥" इति प्रक्रम्य। "तत्र पूज्यपदार्थोक्तिपरिभाषासमन्वितः। शब्दोऽयं नोपचारेण ह्यन्यत्र ह्युपचारतः॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः। भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः" इति। अनेन ज्ञानाद्यनन्तकल्याणगुणयोगहेयप्रत्यनीकत्वोभयं हि प्रवृत्तिनिमित्तमवगम्यते। अन्यत्रास्य शब्दस्योपचारे निमित्तमुच्यते—"उत्पत्तिं प्रलयं चे"ति पूर्वश्लोकेन। इत्थं च ईदृशप्रवृत्तिनिमित्तं च वासुदेव एवेत्यभिप्रेत्याह—"एवमेष महाशब्दो मैत्रय! भगवानिति। परमब्रह्मभूतस्य वासुदेवस्य नान्यगः" इति। तथाच भगवान्वासुदेवः श्रीकृष्णः परं ब्रह्मेति सिद्धम्। सूत्रकारोऽपि परस्य

---

परिसमाप्य प्रक्रान्तं प्रस्तुतार्थदार्ढ्याय मूलमवशिष्टं व्याचक्षाण आह—अथेति। तत्र परशब्दस्य प्रयोजनमाह—प्रधान इत्यादिना। ब्रह्मशब्दप्रवृत्तिनिमित्तोपपादनमुखेन कृष्णादन्यस्मिन् ब्रह्मशब्दस्यानन्वयमाह—स्वरूपत इति। स एवेति। अनवधिबृहत्त्वं प्रवृत्तिनिमित्तमिति यावत्। बृहत्त्वमात्रं हि घटादिसाधारणम्, तदनवधित्वमसङ्कोचन्यायलब्धमिह प्रवृत्तिनिमित्तकोटावन्वेति। अनवधित्वं च स्वरूपत इव स्वभावतोऽपि तद्योग एव। अत एवोक्तं—स्वरूपतः स्वभावतश्च यस्मिन्ननवधि बृहत्त्वमिति। अथ कृष्णशब्दार्थमाह—कृष्णो ह्यानन्दमय इति। एतेन–कृष्णशब्देन निर्देशोऽस्य परब्रह्मत्वे प्रधानं लिङ्गमिति सूचितं भवति। आनन्दवल्ल्यां हि "ब्रह्मविदाप्नोति परं" "सत्यं ज्ञानमनन्तं ब्रह्मे"ति यत्प्रस्तुतं, तद्विवेचनाय प्रवृत्तं वाक्यमानन्दमयत्वेन निरूपयति, तथाच तत्रत्यं श्रौतं वचनम्—"अन्योऽन्तर आत्मा आनन्दमयः" "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" "सैषाऽऽनन्दस्य मीमांसा भवति" इत्यादि। भगवच्छब्दस्य प्रयोजनमाह—अयं चेति। ननु किं प्रवृत्तिनिमित्तं भगवच्छब्दस्य, येनेदमिह निदर्शनीक्रियते तत्राह—निरस्तेत्यादि। इदमेवास्य प्रवृत्तिनिमित्तमित्यत्र किं प्रमाणं तदाह—स्मरति चेति शुद्धे–निरस्तनिखिलदोषे। महाविभूत्याख्ये–महती विभूतिः–या प्राकृता या चाप्राकृता, एतदुभयैश्वर्ययोगो यस्यायं तत एव तदाख्यः। तत्र पूज्येति। पूज्यतामात्रयोगेन परिभाषया वा शब्दोऽयमुपचारेणान्यत्र प्रवर्तते न तस्मिन्, किन्तु ज्ञानादिगुणषट्कपूर्त्यैव प्रवर्तत इति भावः। सूत्रकृतोऽप्यत्रैव हार्दमित्याह—सूत्रकारोऽपीति। अयं सूत्रार्थः—परस्य ब्रह्मणः सर्वान्तरस्य न स्थानतः–व्याप्यस्थानतः कश्चन कलङ्कः, उभयलिङ्गं हि सर्वत्र–सर्वत्र श्रुतिषु हेयप्रत्यनीकत्वकल्याणगुणाकरत्वोभयगुणविशिष्टं हि प्रतिपाद्यते। पुरुषोत्तम इति निर्देशस्य

---

[१] आनन्दमयत्वस्य कृष्णशब्दोपस्थाप्यत्वेनेत्यर्थः।

परं ब्रह्म मनुष्यलिङ्गम्" "स वा अयं ब्रह्म महद्भिर्मृग्यम्" "श्रुत्वा कृष्णं परं

ब्रह्मणो हेयप्रत्यनीकत्वकल्याणगुणाकरत्वं लिङ्गद्वयमाह—"न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र ही"ति। सोऽयं सूत्रार्थः सारितो भगवानित्यनेन विशेषणेन। "स एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष"इति मुक्तप्राप्यतया य उत्तमः पुरुषः श्रूयते स श्रीकृष्ण एवेति व्यञ्जयन्नाह—पुरुषोत्तम इति। उत्तमः पुरुषस्तु श्रीकृष्ण एव। तथाच स्मर्यते—"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः॥" इति। एतेन "रूढ्या तु कामं पुरुषोत्तमस्त्वि"ति वदन्परः परास्तः, प्रदर्शितस्मृत्याऽवयवार्थस्य ज्ञापनात्। नच समासानुपपत्तिः, षष्ठीसमाससम्भवात्। यद्यपि निर्धारणे तन्निषेधः। शेषे षष्ठ्यां तु स्यादेव समासः। स्मृतिस्तु निष्पन्नार्थज्ञापिका, नतु समासज्ञापिकापि। अस्तु वा अस्मादेव निर्देशाज्ज्ञापकात्पञ्चमीसमासोऽपि, "यस्मादधिक"मित्यादिसौत्रप्रयोगादशिष्टस्यापि परिग्रहत्वदिति केचित्। केचित्तु—उत्तमशब्दस्य शौण्डादिषु पाठाभावेऽपि "सप्तमी शौण्डै"रिति सूत्रे योगविभागमाश्रित्य सप्तमीसमासमाहुः। केचित्तु—पुरुषोत्तम इत्यत्र समानाधिकरणसमास एव, राजदन्तादित्वादुत्तमशब्दस्य परनिपात इत्याहुः। सोऽयं कृष्ण उपास्यः। अस्मदीयैरिति शेषः, मुमुक्षुभिरखिलैरित्येतत्। यद्वा—अत्र कर्तुरनिर्देशादसङ्कोचन्यायेनार्तो जिज्ञासुरर्थार्थी ज्ञानी वा सर्वैरेवाधिकारिभिरुपास्य इत्यर्थो ग्राह्यः। इष्टदेवो न इति। सेयं मानुपसमाधिः। कृष्णस्योपास्यत्वदार्ढ्याय आदेष्टुरात्मनो महत्त्वं ज्ञाप्यते

प्रयोजनमाह—स एवेत्यादिना। मुक्तप्राप्यत्वव्यञ्जनमस्य प्रयोजनं, मुक्तप्रतिपाद्यत्वश्रुतौ हि स उत्तमः पुरुषः, यो मुक्तैः प्राप्यत इति उत्तमपुरुषशब्देन निर्देशो दृश्यते, तत्प्रत्यभिज्ञापकश्चायं पुरुषोत्तमशब्द इति भावः। ननु "स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुष" इत्यतो योऽभिनिष्पद्यते स उत्तम इति बोध्यते। मैवम्। यत्परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिसम्पद्यते स उत्तम इति तदर्थः। इदं च मुक्तप्राप्यत्वानैकान्तपुरुषोत्तमत्वं श्रीकृष्ण एवेत्याह—उत्तमः पुरुषस्तु श्रीकृष्ण एवेति। तत्र प्रमाणमाह—तथा च स्मर्यत इति। ननु पुरुषोत्तम इत्यस्य चेदवयवार्थ आश्रीयते; कः समासः। निर्धारणे सप्तम्या न समासः, निषेधात्, नापि पुरुषाभ्यामुत्तम इति, उत्तमशब्देन पञ्चम्याः समासाविधानात्, इत्याशङ्कामभिप्रेत्याह—न चेति। शेष इति। ननु वचनं तु क्षरादप्युत्तमः, अक्षरादप्युत्तमः इत्यभिदधत्पञ्चमीं ज्ञापयतीति चेदाह—स्मृतिस्त्विति। पाणिनिनिर्देशस्येवास्यापि निर्देशस्य ज्ञापकत्वमाश्रित्याह—अस्तु वेति। लक्षणालीढालक्षणारहितः समासः श्रेष्ठ इत्यभिप्रायेणाह—केचिच्चिति। तत्पुरुषे हि पूर्वपदस्य लक्षणा, कर्मधारये तु पदयोः सामानाधिकरण्येन न लक्षणावसरः, अभेदसंसर्गेण पदयोर्मिथोऽन्वयात्। विना शेषपूरणक्लेशमर्थमाह—यद्वेति। आर्त्तिं परिहर्तुमर्थं वा कमपि वाञ्छन्नाश्रयेत यदि भगवन्तं स हीतरेभ्य इन्द्राद्युपासकेभ्यो गरीयान्; श्लाघते च भगवान्—"उदाराः सर्व एवैते" इति। ननु स श्रीकृष्णः परं ब्रह्म भगवान्पुरुषोत्तम इति कोऽयं परोक्षनिर्देशः। स श्रीकृष्णः परं ब्रह्म भवान् हि पुरुषोत्तम इत्यत्राह—सेयं मानुषेति। अवतरणानुगुणं वचनमिति

ब्रह्म" "एष वै भगवान्साक्षात्" "कृष्णस्तु भगवान्स्वयम्" "स वै किलायं पुरुषः पुरातनो य एक आसीदविशेष आत्मनी"त्यादिश्रीभागवतोक्तेः । एवंभूतानुभावः कोऽसौ कृष्ण इत्याशङ्क्य सर्वेषां प्रत्यभिज्ञानाय तद्विशेषणद्वयमुच्यते—

---

नः इति बहुवचनेन । संसारसागरनिमग्ननिखिलचेतनोद्दिधीर्षया भुवि कृतावतरणानां युष्मादृशमुनिजनसंसेव्यमानचरणनलिनानामस्माकमपि स इष्टदेवस्तदवश्यमुपास्य इत्याशयः ।

अत्र भगवान्पुरुषोत्तमः श्रीकृष्णः परं ब्रह्मेत्युक्त्या सगुणातीतं निर्गुणं निराकारं परं ब्रह्मेत्येतत्प्रतिक्षिप्तम्, तैः पदैः परब्रह्मणि कल्याणगुणदिव्याकारयोगस्य प्रतीतेः । गुणाकारनिषेधश्रुतयस्तु हेयगुणप्राकृताकारनिषेधपरा वेदितव्याः । अन्यथा तत्तद्विधायकश्रुतिभिर्विरोधात् । तथाच श्रुतयः—"यः सर्वज्ञः सर्ववित्" "तदैक्षत बहु स्यां प्रजायेयेति" "स ईक्षत लोकान्नु सृजा इति" "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" "तमीश्वराणां परमं महेश्वरं" "पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" "एष आत्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" "आनन्दं ब्रह्मणो विद्वान्" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" "अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽन्तर आकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं" "तस्मिन्कामाः समाहिताः" "वेदाहमेतं पुरुषं महान्तं आदित्यवर्णं तमसः परस्तात्" "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात्सर्व एव सुवर्णस्तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" "स एषोऽन्तर्हृदये आकाशस्तस्मिन्पुरुषो मनोमयोऽमृतो हिरण्मयः" "सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि" "मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्प आकाशात्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः" "परात्परं पुरुषमुपैति दिव्यम्" इत्याद्याः ।

---

यावत् । न इति बहुवचनस्वारस्यमाह—कृष्णस्येत्यादिना । अस्मच्छब्देन विवक्षितमर्थमाह—संसारेत्यादिना ।

भगवानित्यादिनिर्देशस्वारस्यसिद्धं भावमाह—अत्रेत्यादिना । भगवानित्यनेन कल्याणगुणयोगः, पुरुषोत्तम इत्यनेन दिव्याकारयोगश्च ज्ञाप्यते । कल्याणगुणदिव्याकारयोगप्रतिपादिकाः श्रुतीरुदाहरति—य इत्यादिना । तत्र "यः सर्वज्ञः" इत्यादयः "तस्मिन् कामाः समाहिताः" इत्यन्ताः कल्याणगुणप्रतिपादकाः । "वेदाहमेत"मित्याद्याः दिव्याकारप्रतिपादकाः । अथ यदिदमिति । अस्मिन् ब्रह्मपुरे—शरीरे । दहरं—सूक्ष्मम् । पुण्डरीकं—हृत्पुण्डरीकम् । दहर आकाशः—सर्वतः सूक्ष्मतम आकाशः, आ—समन्तात् काशमानः परमात्मा । तस्मिन्यदन्तस्तदन्वेष्टव्यम्—उपास्यमित्येतत् । किं तदन्तः? उच्यते—तस्मिन् कामाः समाहिताः—कामाः—कल्याणगुणाः । य एष इति । हिरण्मयः—उज्ज्वलः । हिरण्यश्मश्रुः—उज्ज्वलकेशः । कप्यासं पुण्डरीकम्—मर्कटपृष्ठवत् रक्तं पुण्डरीकं यथा, तथा यस्याक्षिणीति परे व्याचक्षते । आचार्यपादास्तु हीनोपमादोषकलुषितोऽयं पक्ष इति नाद्रियन्ते पक्षमिमम् । कं—उदकं पिबतीति सूर्यः, तेन आस्यते—विकास्यत इति कप्यासं, रविकरविकसितमित्येतत् । एतादृशं पुण्डरीकं यथाऽक्षिणीति व्याचक्षते । अथ प्रकारान्तराभ्यामर्थौ वेदार्थसङ्ग्रहे द्रष्टव्यः ।

यो नः–अस्माकमुपास्यः–अवश्योपासनीय इष्टदेवश्च स इति । अत्र विशेषोऽपि प्राङ्निरूपितः । यः साक्षाद्भगवान् क्षराक्षरपरः कृष्णः स एव स्वयं भक्तौ धर्मत आस भूरिकृपया श्रीस्वामिनारायणः । मानुष्यं भुवि नाटयन्निजजनाचार्यत्वधर्मे स्थितः कृष्णं प्राह परोक्षवश्च तु ततोऽन्यः सोऽस्ति यस्स स्वयम् ॥ १०८ ॥

---

तथाच पूर्वश्लोके सामान्यतः प्रस्तुतं सर्वेश्वरतत्त्वं श्रीकृष्ण एव, स एव च मुमुक्षूपास्यं परंब्रह्मेति प्रदर्शितं भवति । अत्रेदं बोध्यम्—सर्वाविर्भावकारणमित्यनेन परस्य ब्रह्मणो जगज्जन्मादिकारणत्वं लक्षणं व्यज्यते । उपास्य इत्यनेन मुमुक्षूपास्यत्वरूपं लक्षणं व्यज्यते । भगवच्छब्देन स्वतोऽपहतपाप्मत्वं स्वतः सत्यसङ्कल्पत्वं च लक्षणं व्यज्यते । पूर्वश्लोके सर्वकर्मफलप्रद इत्यनेन सर्वकर्मसमाराध्यत्वं सर्वकर्मफलप्रदत्वं चेति लक्षणद्वयं सङ्गृह्यते । स्वतन्त्र ईश इत्यनेन सर्वेश्वरत्वं लक्षणमुक्तं भवति । हृदये जीववज्जीवे योऽन्तर्यामितया स्थित इत्यनेन सर्वात्मत्वं सर्वाधारत्वं सर्वशेषित्वमित्यादीनि लक्षणानि व्यज्यन्ते । सर्वात्मत्वं च–स्वेतरस्वज्ञानेतरसकलद्रव्यशरीरकत्वम् । यद्यप्येष्वन्यतमस्यापि व्यावर्तकताऽस्त्येव तथापि नैकेन ब्रह्मस्वरूपप्रतिपत्तिमात्रेण ब्रह्मण ऐश्वर्यं साकल्येन ज्ञातं स्यादतः सर्वैरेव लक्षणैस्तत् ज्ञातव्यम् । एतावता श्लोकचतुष्टयेन यथानिर्दिष्टं तत्त्वत्रयं निरूपितम् । योऽन्तःस्थित्वाऽऽत्मवर्गं नियमयति यतः सर्वकामस्य सिद्धिर्यश्चाराध्यः समस्तैर्निगमनिगदितैः कर्मभिस्तत्तदात्मा । त्रय्यन्ते श्रूयमाणः परमखनिलयो यः परंब्रह्म कृष्णो विश्वाविर्भावहेतुः स जयतु भगवान्स्वामिनारायणोऽयम् ॥ १ ॥ या माया पुरुषं विमोह्य नयति स्वस्या वशे विभ्रमैर्यस्तस्या वशगोऽपि नैव विकरोत्यात्मा स्वयं चिद्वपुः । यद्ध्यानेन पुमान् समुत्तरति तां मायां विविश्वन्निमौ मायानिस्तरणाय मे स भवतु श्रीस्वामिनारायणः ॥ २ ॥ इति ॥ १०८ ॥

---

मूलस्य निर्गलितमाशयं श्रोतृजनमनस्यवस्थापनायाह—तथा चेत्यादि । अथ व्यङ्ग्यं भावमाह—अत्रेदं बोध्यमिति । जगज्जन्मादिकारणत्वादीनि प्रत्येकं लक्षणानि बोध्यानि । स्वेतरेति । स्वस्य स्वज्ञानस्य च सर्वशब्देन सङ्ग्रहेऽसम्भवः स्यादिति तद्व्यावृत्तये—स्वेतरेति, स्वज्ञानेतरेति च । मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च निबन्धनानि प्रथन्त इत्यभिप्रेत्य ग्रन्थमध्ये मूलवचनतात्पर्यसङ्ग्रहपूर्वकं मङ्गलमारचयति—योऽन्तरिति । तत्र पूर्वार्धो "हृदये जीवव"दितिश्लोकसङ्ग्रहरूपः । उत्तरार्धः "स श्रीकृष्ण" इतिश्लोकस्य सङ्ग्रहरूपः । या मायेति । अत्र प्रथमः पाद "त्रिगुणात्मे"त्यस्य सङ्ग्रहरूपः, द्वितीयः पादो "हृत्स्थोऽणुसूक्ष्म"इत्यस्य, तृतीयः पादः "हृदये जीववत्" "स श्रीकृष्ण" इत्यस्य च सङ्ग्रहरूपः । चतुर्थः स्वस्याशंसारूपः । इति ॥ १०८ ॥

स राधया युतो ज्ञेयो राधाकृष्ण इति प्रभुः ।
रुक्मिण्या रमयोपेतो लक्ष्मीनारायणः स हि ॥ १०९ ॥
ज्ञेयोऽर्जुनेन युक्तोऽसौ नरनारायणाभिधः ।
बलभद्रादियोगेन तत्तन्नामोच्यते स च ॥ ११० ॥
एते राधादयो भक्तास्तस्य स्युः पार्श्वतः क्वचित् ।
क्वचित्तदङ्गेऽतिस्नेहात्स तु ज्ञेयस्तदैकलः ॥ १११ ॥
अतश्चास्य स्वरूपेषु भेदो ज्ञेयो न सर्वथा ।
चतुरादिभुजत्वं तु द्विबाहोस्तस्य चैच्छिकम् ॥ ११२ ॥

एकस्यैव श्रीकृष्णस्य राधाकृष्णलक्ष्मीनारायणादिस्वरूपाणां परस्पराभेदमाह चतुर्भिः—स इति । सः–उक्तलक्षणः, प्रभवति–समर्थो भवतीति प्रभुः–ईश्वरः श्रीकृष्णः । राधया–श्रीवृषभानुनन्दिन्या युतः–सहवर्तमानः सन् । राधाकृष्ण इति नाम्ना ज्ञेयः । तथा–स हि, हीत्यवधारणे, श्रीकृष्ण एव । रुक्मिण्या–भीष्मकगृहे प्रादुर्भूतया श्रीरुक्मिणीसंज्ञया । रमया–लक्ष्म्या, "राघवत्वेऽभवत्सीता रुक्मिणी कृष्णजन्मनी"ति विष्णुपुराणोक्तेः । उपेतः–सहवर्तमानः सन् । लक्ष्मीनारायण इति नाम्ना ज्ञेयो नतु रूपान्तरमिति ।

ज्ञेय इति । असौ–श्रीकृष्ण एव । अर्जुनेन–मध्यमपाण्डवेन । युक्तः–

---

ननु कृष्णश्चेदुपास्यः, राधाकृष्णलक्ष्मीनारायणनरनारायणादीनामुपासनं कथं घटेत तत्राह—स राधयेति । यस्तु सर्वाविर्भावकारणं भगवान्पुरुषोत्तमः सेव्यतयोक्तः, स एव राधायोगेन राधाकृष्ण इति, रुक्मिण्या रमया योगाल्लक्ष्मीनारायण इति, अर्जुनयोगेन नरनारायण इति, बलरामयोगेन रामकृष्ण इति, तत्तद्योगेन तत्तन्नाम्ना विज्ञायते । वस्तुतो न स्वरूपे भेद इत्यर्थः। अयमाशयः—स हि पुरुषोत्तमः पूर्णषाड्गुण्यः प्रभुः राधायोगं पुरस्कृत्योपास्यमानः राधाकृष्णो विज्ञेयः, रुक्मिणीयोगं पुरस्कृत्योपास्यमानो लक्ष्मीनारायणो विज्ञेयः, रुक्मिणी हि श्रीरेवावतीर्णा, अर्जुनयोगं पुरस्कृत्योपास्यमानो नरनारायणो विज्ञेयः, बलरामयोगेन रामकृष्णो विज्ञेयः । तस्मात्तत्तद्विशेषणभेदेऽपि न विशेष्यस्वरूपे भिदेति नोपास्यवस्तुभेद इति । राधादयस्तु नित्य-

---

आदिशब्दाद्रामकृष्णादिपरिग्रहः । कथं घटेतेति । उपास्यो हि श्रीकृष्णः परब्रह्मभूतः पुरुषोत्तम उक्तः, स ह्यक्षरैकनिलयः, ये चेमे राधाकृष्णादयः, ते हि भिद्यन्ते स्थाननामविशेषणभेदादिति शङ्कितुराशयः । नोपास्यवस्तुभेद इति । यथा मनोमयत्वादिगुणभेदेनाक्ष्यादिस्थानभेदेन भिन्नभिन्नानि श्रूयमाणान्युपासनानि गुणाद्युपास्यतावच्छेदकभेदेऽप्युपास्यब्रह्मस्वरूपैक्येन ब्रह्मोपासनान्येव, तथेदम-

सहवर्तमानः सन् । नरेण–अर्जुनेन सहितो नारायणो नरनारायणः, स इत्य-भिधा–नाम यस्य स तथोक्तः। ज्ञेयः । "अर्जुने तु नरावेशः कृष्णो नारायणः स्वय"मिति भारतोक्तेः । "पूर्णकामावपि युवां नरनारायणावृषी" इति श्रीभागवतोक्तेश्च । स च–श्रीकृष्ण एव । बलभद्रादियोगेन–बलेन भद्रः–श्रेष्ठो बलभद्रः श्रीकृष्णाग्रजः श्रीरामः, स आदिर्येषां–सत्यभामादीनां नित्यसहचराणां, तेषां योगः–सहवर्तमानत्वं तेन । तत्तन्नाम यस्य स तथोक्तः, रामकृष्णः सत्याकृष्ण इत्यादिनामोच्यत इति । ज्ञेयमिति शेषः ।

राधादिसाहचर्यं सकलजनदृश्यादृश्यत्वाभ्यां द्वेधाऽऽह—एत इति । एते–भगवतः पार्श्ववर्तित्वेनोक्ताः । राधादयो भक्ताः–सेवकाः । क्वचित्समये । तस्य–श्रीकृष्णस्य । पार्श्वतः–पार्श्वभागे समीपे । स्युः–सर्वजनदृश्यास्तिष्ठन्तीत्यर्थः । तदा तु राधाकृष्णाद्यभिधानो भवतीति ज्ञेयम् । क्वचित्समये । अतिस्नेहात्–गाढानुरागवशात् । तस्य–श्रीकृष्णस्य, अङ्गं–हृदयादि, तस्मिन्नेव सायुज्येन स्युः । सर्वजनादृश्याः श्रीकृष्णमात्रदृश्या भवन्तीत्यर्थः । तदा–ऐक्यावस्थानसमये तु । सः–श्रीकृष्णः । एकलः–एक एव सर्वैर्दृश्येत, न तु राधादयः । तदा तु केवलं श्रीकृष्णनामाऽस्तीति ज्ञेयम् । अतो यत्र मन्दिरे एकैव श्रीकृष्णमूर्तिः स्यात्तत्रापि राधा-

---

मुक्ताः। एतेन–एतद्योगेन परस्य ब्रह्मणः कथमुपास्यता घटेतेति शङ्काया नावकाशः॥१०९–११०॥

प्रसङ्गाद्भगवतः कृष्णस्य राधादिनित्यमुक्तवर्गेण नित्ययोगं व्यञ्जयंस्तत्र विशेषमाह—एते राधादय इति । अयमाशयः—राधादयो हि यदा यदा भगवानवतरति तदा तदा सहैव तेनावतरन्तः क्वचिदवतरणे पार्श्वे सन्निहिता लक्ष्यन्ते क्वचित्तु तदङ्ग एव सन्निहिताः पृथङ् विज्ञायन्ते, तदा भगवानेको विज्ञायते, तत्र च निमित्तं भगवतोऽवतरतः सङ्कल्प एव, स्नेहातिशयाच्चैषामवकाशमङ्ग एव प्रयच्छति भगवानिति । राधादीनां परब्रह्मणः शेषभूतत्वाद्स्केत्युक्तिः । परे तु–अतिभूमिंगतेन स्नेहपूरेण निमग्नाः परे ब्रह्मणि स्वात्मनोऽप्यस्फूर्त्या पृथक्प्रतिपत्त्यनर्हास्तदा भवन्तीति तदैकल उच्यते इति प्राहुः। सम्प्रदायविदस्तु श्लोकत्रयमर्चापरतयाऽऽचक्षते ॥ १११ ॥

---

पीति भावः । एतद्योगेनेति । ननु मनोमयत्वादयो ब्रह्मगुणा इति तैस्तस्योपासनविधानं घटेत नाम, अतथाभूतै राधादिभिः कथं तस्योपासनमिति शङ्कितुराशयः । गुणानामिव नित्यमुक्तानामपि नित्यविभूतितया गुणत्वेनोपास्यता घटेतैवेति समाधानाशयः ॥ १०९ ॥ ११० ॥

तत्र–नित्ययोगे । क्वचिदित्यस्य क्वचित्समय इत्यभिप्रेत्य भावमाह—क्वचिदवतरण इति । पृथक् न विज्ञायन्त इति । एतेन नित्ययोगो ज्ञापितः । एकल उच्यत इति । राधादिभक्तस्येति यावत् । स्नेहातिशयेन तमेव पश्यतामात्मानमपश्यतामेव ततः पृथगप्रतिपत्त्या तदेकत्वदृष्टिः ॥ १११ ॥

द्विसेवकमण्डलसहित एव श्रीकृष्णो भावनीय इत्याशयः।

अत इति। अतश्च—यत एक एव श्रीकृष्णः स्वपार्श्ववर्तिसेवकभेदाद्राधाकृष्णादिनामोच्यते अत एव। अस्य—श्रीकृष्णस्य। स्वरूपेषु—प्रसिद्धमहामन्दिरस्थितेषु राधाकृष्णादिनामसु रूपेषु। सर्वथैव भेदो न ज्ञेयः। ननु—पार्श्ववर्तिसेवकभेदात्स्वरूपे भेदो मास्तु, द्विभुजचतुर्भुजाद्याकारभेदेन तु स सम्भवत्येवेत्यत आह—चतुरादीति। द्वौ बाहू—भुजौ यस्य तस्य, वस्तुतो द्विभुजस्य। तस्य—श्रीकृष्णस्य। चत्वार आदयो येषामष्टादीनां ते भुजा यस्य तस्य भावस्तत्त्वं, चतुर्भुजत्वमष्टभुजत्वं सहस्रभुजत्वं च यत्तत्तु। ऐच्छिकं—इच्छयैव प्राप्तमैच्छिकं ज्ञेयम्। अतो न तेनापि स्वरूपभेदः। मुचुकुन्दादिभ्यश्चतुर्भुजस्वरूपप्रदर्शनेन, अर्जुनादिभ्योऽष्टभुजसहस्रभुजस्वरूपप्रदर्शनेन च भक्तेच्छापूरकस्य योगमायेशस्य सत्यसङ्कल्पस्य च तस्य स्वेच्छैव नियामिकेति तत्त्वम्। स्वतो द्विभुजत्वे तु—"द्विभुजं मुरलीहस्त"मिति ब्रह्मवैवर्तं स्कान्दं च प्रमाणमवधेयम्॥ १०९॥ ॥ ११०॥ १११॥ ११२॥

राधादिविशेषणभेदेऽप्यभेदं प्रसाध्य, अथ चतुर्भुजत्वाष्टभुजत्वादिभेदेऽप्यभेदं समर्थयति—अतश्चेति। चतुरादिभुजत्वं तु द्विबाहोस्तस्य चैच्छिकम्, अतश्चास्य स्वरूपेषु भेदो ज्ञेयो न सर्वथेत्यन्वयः। अतश्च—चतुर्भुजत्वादिभेदादपीत्यर्थः। भेदेऽन्वयः। यद्वा—चतुरादिभुजत्वस्यैच्छिकत्वादित्यर्थः। न ज्ञेय इत्यत्रान्वयः। द्विबाहोस्तस्येत्युक्त्या सर्वदैव भगवानक्षरे धाम्नि द्विबाहुरिति व्यज्यते। तथाच स्कान्दे वासुदेवमाहात्म्ये—"अतिप्रशान्ताकृतिदर्शनीयं क्षराक्षरेभ्यश्च परं स्वतन्त्रम्। नैकाण्डसर्गस्थितिनाशलीलाविधायकापाङ्गनिरीक्षणं च॥ सुगन्धिसचन्दनचर्चिताङ्गं श्रीवत्सलक्ष्माङ्कितहृत्कपाटम्। निनादयन्तं मधुरं च वेणुं कृत्वा मुखाग्रेऽम्बुजचारुदोर्भ्याम्॥" इति॥ अत्र दोर्भ्यामिति द्विवचनेन द्विभुजत्वं सिद्धम्। अत एव तत्रैवोत्तरत्र भगवद्वचनं—"असावहमिह ब्रह्मन्नस्मिन्नक्षरधामनि। राधालक्ष्मीयुतो नित्यं वसामि स्वाश्रितैः सह॥ वासुदेवस्वरूपोऽहं सर्वकर्मफलप्रदः। अन्तर्यामितया वर्ते स्वतन्त्रः सर्वदेहिनाम्॥ वैकुण्ठाख्ये महाधाम्नि लक्ष्म्या सह चतुर्भुजः॥" इति। वैकुण्ठे चतुर्भुजो वसामीत्युक्तेः, अक्षरे स्थितस्य तस्य द्विभुजत्वं सिद्धम्। संहितायां च सुव्यक्तमवगम्यते—"दक्षिणांशश्च द्विभुजो गोपबालकरूपधृक्। नवीननीरदश्यामः शोभितः पीतवाससा॥ श्रीवंशवदनः श्रीमान्सस्मितः पद्मलोचनः। परं धाम परं ब्रह्मस्वरूपो निर्गुणः स्वयम्॥ परमात्मा च सर्वेषां भक्तानुग्रहविग्रहः। सोऽयं गोलोकनाथश्च राधेशः सकलेश्वरः॥ चतुर्भुजश्च वैकुण्ठे महालक्ष्मीपतिः स्वयम्॥" इति॥ ११२॥

भेदेऽन्वय इति। चतुरादिभुजत्वाद्यो भेदः शङ्क्यमानः स तु न ज्ञेय इति भावः। अन्वये भेदमभिप्रेत्यार्थान्तरमाह—यद्वेति॥ ११२॥

तस्यैव सर्वथा भक्तिः कर्तव्या मनुजैर्भुवि ।
निःश्रेयसकरं किञ्चित्ततोऽन्यन्नेति दृश्यताम् ॥ ११३ ॥

तस्यैवेति । भुवि मनुजैस्तस्यैव सर्वथा भक्तिः कर्तव्येत्यन्वयः । भुवीति सामान्येन विशेषो लक्ष्यते, भरतखण्डाख्ये भूभागे । तत्रैव नृजन्मनो देवप्रार्थितत्वात्—"यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् । तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्भजतां शं तनोती"ति । मनुजाः—मनुष्यास्तैः, तेषामेव भगवद्भक्तौ मुख्याधिकारात् । "पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन सम्पन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नोऽथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ" इत्यैतरेयारण्यकश्रुतेः । देवैश्चोक्तम्—"अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः । यैर्जन्म लब्धं नृषु भारताजिरे मुकुन्दसेवौपयिकं स्पृहा हि नः" इति । "येऽभ्यर्थितामपि च नो नृगतिं प्रपन्ना ज्ञानं च तत्त्वविषयं सहधर्म यत्र । नाराधनं भगवतो वितरन्त्यमुष्य संमोहिता विततया बत मायया ते" इति च । "एतावानेव लोकेऽस्मिन्पुंसां निःश्रेयसोदयः । तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिर"मिति भगवद्वाक्याच्च । तस्यैव—श्रीकृष्णस्यैव । एवकारो देवान्तरव्यवच्छेदार्थः । "नान्यत्र मद्भगवतः प्रधानपुरुषेश्वरात् । आत्मनः सर्वभूतानां भयं तीव्रं निवर्तते ॥" "प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन ताव"-दिति च भगवद्वचनात् । "वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः । एक एवेश्वरस्तस्य भगवान्विष्णुरव्यय" इति देववाक्याच्च । भक्तिः—श्रद्धया तत्कथाश्रवणकीर्तनादिलक्षणा सर्वथा कर्तव्या । "तस्मात्त्वं सर्वभावेन भजस्व परमेष्ठिनम् । तद्गुणाश्रयया भक्त्या भजनीयपदाम्बुज"मिति श्रीकपिलदेवोक्तेः । "एवं

---

एवं परमं पुरुषं निरूप्याथास्यैव भक्तिर्मोक्षायेत्याह—तस्यैवेति । यः पुरुषोत्तमो भगवान् कृष्णः सर्वाविर्भावकारणं प्रत्यपादि तस्यैव भक्तिः कार्या । कैः? । येऽधिकारिणो देवा मनुष्या वा तैः सर्वैः । मनुजैरित्युपलक्षकम् । देवानामपि ब्रह्मादीनां निःश्रेयसार्थित्वौचि-

---

ननु देवादीनामप्यधिकारे मनुजैरित्यसङ्गतम्, अत्राह—मनुजैरित्युपलक्षकमिति । ननु नाधिकारो देवानां मोक्षोपाये, नहि तेषां मोक्षाभ्यर्थना भवति, ते हि स्वर्गे सुखमनुभवन्ति, इत्यत आह—देवानाम

विमृश्य ऋषयो भगवत्यनन्ते सर्वात्मना विदधते खलु भावयोगम् । ते मे न दण्डमर्हन्त्यथ यद्यमीषां स्यात्पातकं तदपि हन्त्युरुगायवाद" इति धर्मराजोक्तेश्च । "तस्मादेकेन मनसा भगवान्सात्त्वतां पतिः । श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदे"ति सूतोक्तेश्च । सर्वथेति । कायवाङ्मनोभिरित्यर्थः । "मनसो वृत्तयो नः स्युः कृष्णपादाम्बुजाश्रयाः । वाचोऽभिधायिनीर्नाम्नां कायस्तत्प्रह्वणादिषु" ॥ "अहं हरे ! तव पादैकमूलदासानुदासो भविताऽस्मि भूयः । मनः स्मरेतासुपते-र्गुणानां गृणीत वाक्कर्म करोतु कायः ॥" "वाणी गुणानुकथने श्रवणौ कथायां हस्तौ च कर्मसु मनस्तव पादयोर्नः । स्मृत्यां शिरस्तव निवासजगत्प्रणामे दृष्टिः सतां दर्शनेऽस्तु भवत्तनूना"मिति भक्तजनवाक्यात् । यद्वा–सर्वथेति । नृदे-हस्य क्षणभङ्गुरत्वान्मृत्युक्षणस्यानियतत्वात्कार्यान्तरादरं परित्यज्यैवेत्यर्थः । उक्तं हि मोक्षधर्मेषु—"पुष्पाणीव विचिन्वन्तमन्यत्र गतमानसम् । वृकीवोरणमासाद्य मृत्युरादाय गच्छति ॥ पुष्पाणि–काम्यकर्मफलानि । अद्यैव कुरु यच्छ्रेयो मा त्वां कालोऽत्यगादयम् । अकृतेष्वेव कार्येषु मृत्युरादाय गच्छति ॥ श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम् । नहि प्रतीक्षते मृत्युः कृतमस्य न वा कृतम् ॥ को हि जानाति कस्याद्य मृत्युकालो भविष्यति । युवैव धर्मशीलः स्यादनित्यं खलु जीवित"मिति । श्रीभागवते च श्रीरुद्रःप्राह—"प्रमत्तमुच्चैरितिकृत्यचिन्तया प्रवृद्धलोभं विषयेषु लालसम् । त्वमप्रमत्तः सहसाऽभिपद्यसे क्षुल्लेलिहानोऽहिरिवा-खुमन्तक" इति । स्वयं भगवांश्चाह—"एतद्विद्वान्पुरा मृत्योरभवाय घटेत सः । अप्रमत्त इदं ज्ञात्वा मर्त्यमप्यर्थसिद्धिद"मिति । श्रीदत्तात्रेयश्चाह—"लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते मानुष्यमर्थदमनित्यमपीह धीरः । तूर्णं यतेत न पते-दनुमृत्यु यावन्निःश्रेयसाय विषयः खलु सर्वतः स्या"दिति । प्रह्लादश्चाह— "कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह । दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थद"-मिति । "ततो यतेत कुशलः क्षेमाय भयमाश्रितः । शरीरं पौरुषं यावन्न विपद्येत

---

स्यात् । तेऽपि हि तापत्रयाभिभूताः । आह च भगवान्—"न तदस्ति पृथिव्यां वा दिवि

---

पीति । तेऽपि हीति । भासा नाम सुकृतविशेषात्सदविशेषं, नतु गुणमयामिपक्षमतीत्य वर्तन्ते, तद्दुःखा-भिघातोऽवर्जनीय एव तेषामिति तभिकृत्यभ्यर्थना तेषामपि भवेदिति भावः । तेषामपि तापत्रयाभिभूतत्वे प्रमाणमाह—आह चेत्यादि । नन्वस्त्वर्थित्वम्, भयाप्यसामर्थ्यान्नाधिकारः । मैवम् । अस्मदादीनामिव

पुष्कल"मिति च । तदकरणे तु महानर्थप्राप्तिरुक्ता—"प्राप्ता नृजातिं त्विह ये च जन्तवो ज्ञानक्रियाद्रव्यकलापसम्भृताम् । न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यान्ति बन्धनम् ॥ लब्ध्वा जनो दुर्लभमत्र मानुषं कथञ्चिदव्यङ्गमयत्नतोऽनघ ! । पादारविन्दं न भजत्यसन्मतिर्गृहान्धकूपे पतितो यथा पशुः॥ यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम् । गृहेषु खगवत्सक्तस्तमारूढच्युतं विदुः ॥ देवदत्तमिमं लब्ध्वा नृलोकमजितेन्द्रियः । यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चकः ॥ स वञ्चितो बतात्मध्रुक् कृच्छ्रेण महता भुवि । लब्ध्वापवर्ग्यं मानुष्यं विषयेषु विषज्जते ॥ नृदेहमाद्यं सुलभं सुदुर्लभं प्लवं सुकल्पं गुरुकर्णधारम् । मयाऽनुकूलेन नभस्वतेरितं पुमान्भवाब्धिं न तरेत्स आत्महा ॥ त्वदनुपथं कुलायमिदमात्मसुहृत्प्रियवच्चरति तथोन्मुखे त्वयि हिते प्रिय आत्मनि च । न बत रमन्त्यहो असदुपासनयाऽऽत्महनो यदनुशया भ्रमन्त्युरुभये कुशरीरभृतः ॥" इत्यादिः ।

ततः—तस्या इति ततः । "पञ्चम्यास्तसि"लिति सर्वनाम्नस्तसिल् । भक्तेरन्यत्किञ्चिदपि साधनम् । निश्चितं श्रेयो निःश्रेयसं—मोक्षः कल्याणं वा, तत्करोतीति तथोक्तम् । नास्तीति दृश्यतां—भवद्भिर्ज्ञायताम् । "दानव्रततपोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते ॥" इत्यादिवाक्यादितरसाधनानां भक्तिहेतुत्वाद्भगवतः परम्परासम्बन्धो भक्तेस्तु साक्षात्सम्बन्ध इति तेभ्यो वैशिष्ट्यमुक्तमिति भावः । तदुक्तं श्रीकपिलदेवेन—"एतावानेव लोकेऽस्मिन्पुंसां निःश्रेयसोदयः । तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरम् ॥ न युज्यमानया भक्त्या भगवत्यखिलात्मनि । सदृशोऽस्ति शिवः पन्था योगिनां ब्रह्मसिद्धये ॥" इति । "भवान्भक्तिमता लभ्यो दुर्लभः सर्वदेहिना"मिति श्रीरुद्रोक्तेश्च । "दैवी

---

देवेषु वा पुनः । सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्रिभिर्गुणैः ॥" तस्यैवेत्येवकाराद्देवतान्तरव्यवच्छेदः । नहि भगवतः पुरुषोत्तमादन्यो निःश्रेयसोपायः स्यात् । तथाच विष्णुपुराणे ब्रह्मादीनां निःश्रेयसार्थिभिरनुपास्यत्वमुक्तं—"अन्ये तु पुरुषव्याघ्र चेतसो ये व्यपाश्रयाः । अशुद्धास्ते समस्तास्तु देवाद्याः कर्मयोनयः ॥" इति । वक्ष्यति च भगवानुत्तरत्र "न तु जीवा नृदेवाद्या" इति । भक्तिश्च तस्मिन्सर्वथा कार्या—सर्वैः प्रकारैः कार्या । येन तीव्रभक्तियोगेन

---

तेषामपि सामर्थ्यं कुतो न भक्तौ । ननु विग्रहरहिता हि देवाः कथं तेषामुपासनेऽधिकारः । नैवम् । तेषामपि तत्सम्भवात् । अयमर्थो भगवता बादरायणेन देवताधिकरणे समर्थितः । सर्वैः प्रकारैरिति । कायिकैर्वाचिकैश्च सम्भवद्भिः सर्वैः प्रकारैः । ते च स्तुतिनमस्कारादयः । येनेति हेतौ तृतीया । येन सर्व-

ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥" इति श्रीभगवद्गीतोक्तेश्च। श्रीप्रह्लादेन चोक्तम्—"मन्ये धनाभिजनरूपतपःश्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः। नाराधनाय हि भवन्ति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाये"ति। "प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बन"मिति च। भक्तिरहितानां तु निन्दा बहुधा श्रूयते—"दैवेन ते हतधियो भवतः प्रसङ्गात्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये। कुर्वन्ति कामसुखलेशलवाय दीना लोभाभिभूतमनसोऽकुशलानि शश्व"दिति ब्रह्मोक्तेः। "तानानयध्वमसतो विमुखान्मुकुन्दपादारविन्दमकरन्दरसादजस्रम्। निष्किञ्चनैः परमहंसकुलै रसज्ञैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णा"निति यमोक्तेश्च। "तान् शोच्यशोच्यानविदोऽनुशोचे हरेः कथायां विमुखानघेन। क्षिणोति देवो निमिषस्तु येषामायुर्वृथावादगतिस्मृतीना"मिति विदुरोक्तेश्च। "बिले बतोरुक्रमविक्रमान्ये न शृण्वतः कर्णपुटे नरस्ये"त्यादिशौनकोक्तेश्च। "न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः। माययाऽपहृतज्ञाना आसुरं भावमाश्रिता" इति श्रीभगवद्गीतोक्तेश्च। न चेयं भक्तिरहितानां गृहाद्यासक्तानामेव निन्दा, किन्तु भक्तिरहितवैदिककर्माद्यासक्तानामपीति ज्ञेयम्। तदुक्तं भगवता—"धर्मः सत्यदयोपेतो विद्या वा तपसान्विता। मद्भक्त्यापेतमात्मानं न सम्यक् प्रपुनाति ही"ति। नारदेन चोक्तम्—"तज्जन्म तानि कर्माणि तदायुस्तन्मनो वचः। नृणां येनेह विश्वात्मा सेव्यते हरिरीश्वरः ॥ किं जन्मभिस्त्रिभिर्वेह शौक्लसावित्रयाज्ञिकैः। कर्मभिर्वा त्रयीप्रोक्तैः पुंसोऽपि विबुधायुषा ॥ श्रुतेन तपसा वा किं वचोभिश्चित्तवृत्तिभिः। बुद्ध्या वा किं निपुणया बलेनेन्द्रियराधसा ॥ किं वा योगेन साङ्ख्येन न्यासस्वाध्याययोरपि। किं वा श्रेयोभिरन्यैश्च न यत्रात्मप्रदो हरि"रिति। भक्तिसहितानां तु वैदिककर्मादीनां प्राशस्त्यमुक्तं ब्रह्मणा—"पुंसामतो विविधकर्मभिरध्वराद्यैर्दानेन चोग्रतपसा व्रतचर्यया च। आराधनं भगवतस्तव

---

समाधित उपरतिसमयेऽपि कायवाङ्मनोवृत्तयस्तस्मिन्नेव सम्प्रणयाः प्रसरेयुस्तथा कार्या इत्याशयः। तथाच गीतायाम्—"सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः। नमस्यन्तश्च मां भक्त्या

---

प्रकारानुष्ठानेन हेतुना तीव्रो भक्तियोगः, तेन तीव्रभक्तियोगेनेत्यर्थः। ननु स्तुतिनमस्कारादयो न भक्तेः प्रकाराः, भक्तिर्हि मानसो व्यापारविशेषः परमानुरागलक्षणः, स्तुत्यादयस्तु वागादिव्यापाराः, तत्कथ-

सत्क्रियार्थो धर्मोऽर्पितः कर्हिचिद्ध्रियते न यत्रे"ति ॥ ११३ ॥

नित्ययुक्ता उपासते ।।" इति । यद्वा—सर्वथा—उपायत्वेन फलत्वेन च तस्मिन्नेव भक्तिः कार्या । आर्तो जिज्ञासुरर्थार्थी वा भगवति साधनत्वेन भक्तिं कुर्वन्नपि ततोऽन्यस्मिन्नेव फलत्वेन प्रीतिमधिकामातनोति साधनतः । निःश्रेयसार्थिना तु न तथा भाव्यम् । यत्फलमप्यस्य स एवेत्याशयः । ननु यदि तस्मिन्न भक्तिः का क्षतिरित्यत्राह—निःश्रेयसेति । नहि ततोऽन्यो निःश्रेयसोपाय इत्यर्थः । तथाच स्मर्यते—"भक्त्या लभ्यस्त्वनन्यया" "नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ।।" "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ! ।।" "मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ।।" "भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ।।" "भक्त्यैकलभ्यः पुरुषोत्तमोऽसौ" इति ॥ ११३ ॥

मेभिः प्रकारैर्भक्तेर्विधानम् । मैवम् । साध्यतया साधनतया च भक्तिप्रकारेपूपचारेण गणनया तदुपपत्तिः । अत एवास्वरसादाह—यद्वेति ॥ ११३ ॥

---

गुणिनां गुणवत्ताया ज्ञेयं ह्येतत्परं फलम् ।
कृष्णे भक्तिश्च सत्सङ्गोऽन्यथा यान्ति विदोऽप्यधः ॥११४॥

किञ्च—गुणिनामिति । गुणाः—बुद्ध्यादयः सन्त्येषामिति गुणिनस्तेषाम् । गुणवत्तायाः—गुणित्वस्य । एतदेव परं—उत्कृष्टं फलं ज्ञेयम् । एतत्किं तदाह—कृष्णे भक्तिस्तद्धेतुः सत्सङ्गश्चेति द्वयम् । उक्तं हि भगवतैव—"प्रायेण भक्तियोगेन सत्सङ्गेन विनोद्धव ! । नोपायो विद्यते सध्र्यङ् प्रायणं हि सतामहम् ॥ एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृत"मिति । नारदश्चाह—"इदं हि पुंसस्तपसः श्रुतस्य वा स्विष्टस्य सूक्तस्य च बुद्धिदत्तयोः । अविच्युतोऽर्थः कविभिर्निरूपितो यदुत्तमश्लोकगुणानुवर्णन"मिति ।

यतो निःश्रेयसाय भगवति भक्तिरेव साधनं, ततो न तां विनाऽन्यैर्गुणैर्ज्ञानविज्ञानादिभिरपि विशेषः, परन्त्वधःपतनमेवेत्याह—गुणिनां गुणवत्ताया इति । यद्यपि विप्रः, अथ च गुणी—श्रुतादिगुणपरिपूर्णः, परं कृष्णे तु विमुखः, तद्भक्त्याधायके सत्सङ्गे च, स तु—अधो

गुणिनां गुणवत्ताया इत्येतज्जातेरप्युपलक्षकमित्यभिप्रेत्याह—यद्यपि विप्र इति । जात्युत्कर्षाभिमतिर्हि जनिसमयमारभ्यैव निमित्तनिरपेक्षमुद्भवति । तदभिप्रेत्य यद्यपि विप्र इति प्रथमतो निर्देशः । श्रुतादिगुणपरिपूर्ण इति । यद्यपि भगवद्भक्तिविरहितं केवलं श्रुतादि न गुणः, गुणो ह्यतिशया-

सर्वे ते हि संसारगोचराः ॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥ तस्मात्तदमलं ब्रह्म निसर्गादेव बोधव"दित्यादिना "परस्य ब्रह्मणो विष्णोः स्वरूपं स्वासाधारणमेव शुभाश्रय इत्युक्त"मित्यादि । अत्र भक्तादीनां ध्येयत्वनिषेधोऽपि स्वातन्त्र्येणैव विवक्षितो न तु भगवत्परिचर्यारतत्वेनापि, सपरिकरस्यैव भगवतो ध्येयत्वादित्यन्यत्र विस्तरः ॥ ११५ ॥

---

भक्ताः–साध्यभक्तिनिष्ठा इत्यर्थः । चकारोऽत्रानुक्तसमुच्चये । अनेन मुक्तानामप्यनुपास्यत्वं सिद्धं, तेषां स्वतः शुद्धभावात् । तथा चोक्तं विष्णुपुराणे—"आब्रह्मस्तम्बपर्यन्ता जगदन्तर्व्यवस्थिताः । प्राणिनः कर्मजनितसंसारवशवर्तिनः ॥ यतस्ततो न ते ध्याने ध्यानिनामुपकारकाः । अविद्यान्तर्गताः सर्वे ते हि संसारगोचराः ॥ पश्चादुद्भूतबोधाश्च ध्याने नैवोपकारकाः । नैसर्गिको न वै बोधस्तेषामप्यन्यतो यतः ॥" इति । नित्यमुक्तादीनां भगवद्विशेषणतयोपास्यत्वं त्वप्रतिषिद्धं । गुणविशिष्टस्येव विभूतिविशिष्टस्य परस्य ब्रह्मण उपास्यत्वात् । अत एव सूत्रकृता—"उपासात्रैविध्या"दिति सूत्रे उपासनायां त्रैविध्यमुक्तं सङ्गच्छते ॥ ११५ ॥

---

च न कश्चिद्विशेष इत्यत आह—साध्यभक्तिनिष्ठा इत्यर्थ इति । ननु 'स राधया युतो ज्ञेय' इत्यादिना राधाया उपास्यकोटावनुप्रवेशाभ्यनुज्ञानमसङ्गतं स्यादत आह—नित्यमुक्तादीनामित्यादिना ॥ ११५ ॥

---

निजात्मानं ब्रह्मरूपं देहत्रयविलक्षणम् ।
विभाव्य तेन कर्तव्या भक्तिः कृष्णस्य सर्वथा ॥ ११६ ॥

निजात्मानमिति । निजश्चासावात्मा च निजात्मा–जीवस्तम् । देहानां–स्थूलसूक्ष्मकारणाख्यानां, त्रयं–त्रिकं, तस्माद्विलक्षणं–तत्प्रकाशकत्वेन भिन्नम् । उक्तं हि भगवता—"विलक्षणः स्थूलसूक्ष्माद्देहादात्मेक्षिता स्वदृक् । यथाग्निर्दारुणो दाह्याद्दाहकोऽन्यः प्रकाशकः ॥ निरोधोत्पत्त्यणुबृहन्नानात्वं तत्कृतान्गुणान् । अन्तःप्रविष्ट आधत्त एवं देहगुणान्परः ॥" इति । अत एव ब्रह्मरूपं

---

भक्तियोग आत्मावलोकनस्याङ्गतया तत्पूर्वकमेव भक्तियोगे यतितव्यमित्याह—निजात्मानमिति । अङ्गत्वं च तस्य तत्र "अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती"त्यादिश्रुतिसिद्धम् । उपासकेन निजात्मानं–स्वस्वरूपं, सत्यपि कर्मनिमित्तप्रकृति-

---

ननु ज्ञानयोगफलस्यात्मावलोकनस्य भक्तियोगाङ्गत्वं कुत अवगम्यते, अत आह—अङ्गत्वं च तस्येति । यद्यप्यनुभूयते पुरुषो देहधर्मा, तथाऽपि विवेके तु न तथाऽयमित्याह—सत्यपि कर्म-

विभाव्य—योगादिसाधनैः सम्यगनुभूय । तेन—ब्रह्मरूपात्मना । कृष्णस्य भक्तिः सदा कर्तव्या । एवंभूतब्रह्मनिष्ठज्ञानिभक्तस्य भगवता विशिष्टत्वेन प्रतिपादनादिति भावः । तथाहि श्रीभगवद्गीतायाम्—"चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन! । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ! ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् । आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥" "ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते परा"मित्यादि । श्रीभागवते च—"ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च सम्मतः । स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ॥" "ज्ञानी प्रियतमोऽतो मे ज्ञानेनासौ बिभर्ति माम्" "ज्ञानविज्ञानसम्पन्नो भज मां भक्तिभावतः" "परिनिष्ठितोऽपि नैर्गुण्ये उत्तमश्लोकलीलया । गृहीतचेता राजर्षे! आख्यानं यदधीतवान् ॥" "स्वसुखनिभृतचेतास्तद्व्युदस्तान्यभावोऽप्यजितरुचिरलीलाकृष्टसारस्तदीयम् । व्यतनुत कृपया यस्तत्त्वदीपं पुराणम्" "निष्किञ्चना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय" "आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ॥" इत्यादि । सर्वदेत्यभ्यासः सूचितः, तस्यैव परमपुरुषार्थसाधनत्वात् । "अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ।

---

सम्बन्धे, ज्ञानैकघनतया स्थूलात्सूक्ष्मात्कारणादपि शरीरादत्यन्तविलक्षणमक्षरस्वरूपं विभाव्य—योगाभ्यासबलेन केवलज्ञानैकाकारतया नित्यपरिशुद्धं ब्रह्मरूपं सम्यगवलोक्य, तेन—आत्मस्वरूपावलोकनेनोपलक्षितेन भक्तिः कार्या । भक्तियोगे यत्न आधेयः । अन्यथा तदसिद्धेरित्याशयः । यद्यपि यावत्प्रकृतिसम्बन्धस्तावदस्त्येव ज्ञानसङ्कोचः, "परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इति श्रुतेः । तथा चेदानीं न ब्रह्मरूपतासम्पत्तिः, तथाऽप्यौपाधिकत्वेन ज्ञानसङ्कोचस्य स्वतस्तत्स्वरूपताया अक्षतेः, तद्रूपतया तद्विचिन्तनेन भवेदेव तदवलोकनमिति

---

निमित्तप्रकृतिसम्बन्ध इति । एतेन बालोऽहं स्थविरोऽहमज्ञोऽहं दुःख्यहमित्यादिसर्वो व्यवहारः, अयो दहतीतिवद्गुणमयप्रकृतिसंसर्गतः समारोपितोऽविवेककृतः, स च संसर्गः कर्मणा निमित्तेन जात इत्यौपाधिका एव ते भेदाः, साहजिकं स्वरूपं त्वन्यदेवेति ज्ञापितं भवति । स्वाभाविकं रूपमाह—ज्ञानैकघनतयेति । उपलक्षितेनेति । उपासकेनेत्यनेन सम्बन्धः । मूले तेनेति इत्थम्भूतलक्षणे तृतीया । ननु साम्प्रदशाभाविनः स्वरूपस्येदानीं साधनानुष्ठानवेलायां कथं साक्षात्कार इत्याशङ्क्य परि-

परमं पुरुषं दिव्यं याति पार्थानुचिन्तय"न्निति भगवद्वाक्यात् ॥ ११६ ॥

---

भावः । तेनेति तृतीयार्थोऽभेदः, तद्रूपा भक्तिरित्यपरे । तत्फलकेति वा ॥ ११६ ॥

---

हरति—यद्यपीत्यादिना । तत्स्वरूपताया इति । केवलज्ञानैकाकारताया इत्यर्थः । तेनेतीति । विशेष्याध्याहारसापेक्षादित्थम्भूतलक्षणे तृतीयाश्रयणादयं पक्षो वर इत्याशयः । तत्फलकेति वेति । अस्मिन्पक्षे तृतीया हेतौ बोध्या । फलस्य च हेतुत्वविवक्षा बोध्या ॥ ११६ ॥

---

**श्रव्यः श्रीमद्भागवतदशमस्कन्ध आदरात् ।**
**प्रत्यहं वा सकृद्वर्षे वर्षे वाच्योऽथ पण्डितैः ॥ ११७ ॥**

श्रव्य इति । श्रीमद्भागवतस्य दशमस्कन्धः । 'प्रत्यहं–प्रतिदिनम् । आदरात्–श्रद्धयेत्यर्थः । अन्यथा स्वाभीष्टफलासिद्धेरिति भावः । "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ! न च तत्प्रेत्य नो इहे"ति भगवदुक्तेः । श्रव्यः–श्रोतव्यः । वेति पक्षान्तरे । प्रतिदिनं श्रवणाशक्तौ तु वर्षे वर्षे–प्रतिसंवत्सरम् । सकृत्–एकवारमपि । श्रव्यः । अथ पण्डितैः–पण्डा–बुद्धिः सञ्जाता येषां तैर्बुद्धिमद्भिः, गीर्वाणग्रन्थपाठसमर्थैस्त्वित्यर्थः । प्रत्यहं वाच्यः–

---

अथ भक्त्युन्मेषे परिकरविशेषमाह—श्रव्य इति । अन्वहमादरेण भगवत्प्रेमरसपरीवाहरूपो दशमस्कन्धो भागवतस्य श्रोतव्यः । या च भगवतोऽमानुषी लीला, यथाचिन्तितविधावृत्तादिविशेषमाश्रितेषु गोगोपादिषु परमः प्रणयः, यश्च परमभक्तानामक्रूरादीनां भगवति प्रेमरसः, तदिदमन्वहमनुश्रूयमाणं कस्य वा भगवति प्रेमरसं नोत्पादयेत् । अत्र पुराणान्तरेभ्यो भागवतस्योत्कर्षमभिप्रेत्य श्रीमत्त्वविशेषणम् । वेदार्थव्यक्तीकरणायावतीर्णेन व्यासेन विभक्तवेदेन विरचितभारताद्युपबृंहणेनाप्यतुष्टहृदयेन कृपणवत्सलेन सर्वेषामेव निःश्रेयसमाकाङ्क्षमाणेन नारदसंवादेन भागवतैकान्तधर्मनिरूपणाय प्रणीतं हि भागवतम् । तथाच वचनम्—"एवं प्रवृत्तस्य सदा भूतानां श्रेयसि द्विजाः । सर्वात्मकेनापि यदा नातुष्यद्धृदयं ततः ॥ नातिप्रसीदद्धृदयः सरस्वत्यास्तटे शुचौ । वितर्कयन्विविक्तस्थ इदं प्रोवाच धर्मवित् ॥ धृतव्रतेन हि मया छन्दांसि गुरवोऽग्नयः । मानिता निर्व्यलीकेन गृहीतं चानुशासनम् ॥ भारतव्यपदेशेन ह्याम्ना-

---

स्कन्धान्तरापेक्षया दशमस्कन्धस्य विशेषमाह—भगवत्प्रेमरसेति । तमेव प्रपञ्चयति—या चेत्यादिना । भागवते श्रीमत्त्वविशेषणस्य प्रयोजनमाह—अत्रेति । पुराणान्तरेभ्यो भागवतस्य विशेषमुपपादयति—वेदेत्यादिना । स्कन्धान्तरेभ्यो दशमस्कन्धस्य विशेषप्रदर्शनमिहात्यन्तापेक्षितमित्यभि-

वाचनीयः, यथाशक्त्यस्य पाठः कर्तव्य इत्यर्थः। अत्रापि वेति योजनीयम्। प्रत्यहं वाचनाशक्तौ तु वर्षे वर्षे सकृदपि वाच्य इति भावः। तच्छ्रवणकीर्तनयोः सकलानर्थनाशपूर्वकभगवद्धामप्राप्तिहेतुत्वादिति भावः। तदुक्तम्—"इत्थं परस्य निजवर्त्मरिरक्षयात्तलीलातनोस्तदनुरूपविडम्बनानि। कर्माणि कर्मकषणानि यदूत्तमस्य श्रूयादमुष्य पदयोरनुवृत्तिमिच्छन्॥ मर्त्यस्तयानुसवमेधितया मुकुन्दश्रीमत्कथाश्रवणकीर्तनचिन्तयैति। तद्धाम दुस्तरकृतान्तजवापवर्गं ग्रामाद्वनं क्षितिभुजोऽपि ययुर्यदर्थाः॥" "अशेषसंक्लेशशमं विधत्ते गुणानुवादश्रवणं मुरारेः" "शृण्वतां स्वकथां कृष्णः पुण्यश्रवणकीर्तनः। हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सताम्॥" "य एतद्देवदेवस्य विष्णोः कर्माणि जन्म च। कीर्तयेच्छ्रद्धया मर्त्यः सर्वपापैः प्रमुच्यते॥" "सङ्कीर्त्यमानो भगवाननन्तः श्रुतानुभावो व्यसनं

---

यार्थः प्रदर्शितः। दृश्यते यत्र धर्मादिः स्त्रीशूद्रादिभिरप्युत॥ अथापि बत मे दैह्यो ह्यात्मा चैवात्मना विभुः। असम्पन्न इवाभाति ब्रह्मवर्चस्यसत्तमः॥ किंवा भागवता धर्मा न प्रायेण निरूपिताः।" इत्यादि। श्रीमत्त्वं दशमस्कन्धे वा विशेषणं, स्कन्धान्तरापेक्षया श्रीकृष्णभक्तिगोचरभक्तिरसपौष्कल्ये दशमस्कन्धे उत्कर्षः। येषामनधिकारः पठने तान्प्रत्याह—श्रव्य इति। यदि प्रत्यहं तन्निषेवणे नावकाशस्तदा प्रत्यब्दमसकृत्तन्निषेवणं कार्यमित्याह—असकृदिति। वर्षे वर्षे असकृद्वा श्रव्य इत्यन्वयः। येषां त्वधिकारस्तान्प्रत्युच्यते—वाच्य इति। स्वयं पठितव्य इत्यर्थः। अथेति पक्षान्तरे। पठनाधिकारे सतीत्येतत्। के तेऽधिकारिणः? आह—पण्डितैरिति। पाण्डित्यमिह पठ्यमानवचनार्थविज्ञानसामर्थ्यरूपं बोध्यम्। वाच्य इत्यत्रापि प्रत्यहं वर्षे वर्षेऽसकृद्वेत्येतत्सम्बध्यते। सत्यवकाशे प्रत्यहमसत्यवकाशे तदा तदा वासकृत् श्रवणरूपं पठनरूपं वा यथाधिकारं दशमस्कन्धनिषेवणं कार्यम्। तेन कृष्णे भक्तिः समुन्मिषेदित्याशयः। यद्वा–पण्डितैरिति। ज्ञानिभिरित्यर्थः। ज्ञानिभिरपीति यावत्। अयमाशयः–सम्पन्नेऽप्यात्मपरमात्मविज्ञाने यावत्परमात्मनि विज्ञानं भक्तिरूपापन्नं न स्यात्, न तावन्निश्रेयससिद्धिः स्यात्। तल्लब्धविज्ञानेन परमात्मनि प्रीतिं कामयमानेन निषेव्योऽयं भक्तिरसप्रबन्धः। विज्ञानमात्रं तु उपदेशसाध्यं, प्रणयस्तु सतां सङ्गादीदृशप्रबन्धपरिशीलनादेवेति। यद्वा–ननु–श्रूयते नाम भक्तिसमुन्मेषहेतुरयं प्रत्यहमसकृद्वा प्रत्यब्दं यदि वक्ता स्यात्, तत्राह—वाच्योऽथ पण्डितैरिति। यथा युष्मान्प्रति श्रवणं विधीयते तथा पण्डितान्प्रति

---

प्रेत्य व्याचष्टे—दशमस्कन्धे वेति। वाच्योऽथ पण्डितैरिति वाक्यभेदं हृदि निधायाह—येषामनधिकार इति। वाक्यद्वयस्य समुदितं भावमाह—सत्यवकाश इत्यादिना। अथ वाच्य इत्येतावदेकं वाक्यम्, अथेति निर्देशादेव येषां पठनेऽधिकारस्तैर्वाच्य इत्यधिकारिसिद्धिरपि, पण्डितैरिति तु श्रवणे पठने च सम्बन्ध्यते। पण्डितैरपीत्येतदित्यभिप्रायेणाह—यद्वेति। भावमाह—अयमाशय इत्यादिना।

हि पुंसाम् । प्रविश्य चित्तं विधुनोत्यशेषं यथा तमोऽर्कोऽभ्रमिवातिवातः ॥” इत्यादि । विशेषस्तु श्रीमद्भागवतमाहात्म्यादवगन्तव्यः ॥ ११७ ॥

---

विधीयते प्रवचनमपि । ये पुनः ज्ञानिनः प्रवचनसमर्थास्तेषामीदृशभगवच्चरितवर्णनमेव कृत्यम्, अन्यथा तेषां विज्ञानं पन्नगफणामणिवदुद्वेजकं हेयं चेति भावः ॥ ११७ ॥

---

पण्डितान्प्रति विधीयते प्रवचनमपीति । एतेन स्वार्थनिरपेक्षं प्रवचनं पण्डितैः कर्तव्यमिति ज्ञापितं भवति ॥ ११७ ॥

---

## कारणीया पुरश्चर्या पुण्यस्थानेऽस्य शक्तितः ।
## विष्णुनामसहस्रादेश्चापि कार्येप्सितप्रदा ॥ ११८ ॥

कारणीयेति । पुण्यं—पुण्यकारणं स्थानं पुण्यस्थानं तस्मिन् भगवन्मन्दिरादौ पवित्रदेशे । तत्स्वरूपं च—“स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते । बिम्बं भगवतो यत्र सर्वमेतच्चराचरम् ॥ यत्र गङ्गादयो नद्यः” इत्यादि नारदेनोक्तम् । ईप्सितप्रदा—स्ववाञ्छितफलप्रदा । अस्य—श्रीमद्भागवतदशमस्कन्धस्य । पुरश्चर्या—अष्टोत्तरशतपारायणादिलक्षणं पुरश्चरणम् । शक्तितः—यथाशक्ति । कारणीया—ब्राह्मणद्वारा विधापनीया । शक्तितारतम्यं तु दक्षिणादानादौ ज्ञेयं न तु पारायणन्यूनत्वे । कार्या चेति । स्वस्य पाठसामर्थ्ये सति स्वयमेव कर्तव्येत्यर्थः । तथा—विष्णोर्नामानि विष्णुनामानि, तेषां सहस्रम्, विष्णुसहस्रनामाख्यं स्तोत्रमित्यर्थः, तदादिर्यस्य भगवच्छास्त्रस्य तस्य । आदिशब्देन श्रीमद्भागवतभगवद्गीताश्रीकृष्णा-

---

अन्वहं विहितं नामश्रवणादिकं दशमस्कन्धस्य भक्त्युन्मेषपरिकरतया, अथार्थकामनायामस्यैव पुरश्चरणं कार्यमित्याह—कारणीयेति । यद्यर्थे वाञ्छा, नान्यत्र यत्न आधेयः, भगवच्चरितानुवर्णनपरस्यास्य पुरश्चरणं कार्यतामस्य हि पुरश्चर्या वाञ्छितार्थदा । तथा विष्णुनामसहस्रादेरिति । आदिशब्दादष्टाक्षरपरिग्रहः । पुरश्चरणप्रकारश्चान्यत्र द्रष्टव्यः । पुरश्चरणस्य देशमाह—पुण्यस्थान इति । स्थानबलेन हि सिद्धिरविलम्बेन भवेत् । ननु—पुरश्चरणे जपहोमदक्षिणाब्राह्मणभोजनादिसापेक्षे महान्प्रयास इत्यत्राह—शक्तित इति । स्वस्वशक्त्यनुसारेण क्रियमाणं पुरश्चरणमस्य वाञ्छितार्थं साधयेदेवेत्याशयः । सेयं पुरश्चर्या सत्यधिकारे

---

मूलस्थमीप्सितेति पदं पर्यालोच्य वृत्तवर्तिष्यमाणयोरधिकारिभेदेन सङ्गतिमाह—अन्वहमित्यादिना । ननु कार्येत्यनादिश्य कारणीयेत्यादेशोऽसङ्गत इत्याशङ्कायामाह—सत्यधिकारे कार्येति । कार-

ष्टाक्षरमन्त्रादिग्रहणम्। पुरश्चर्या कारणीया कार्या च। दशमस्कन्धादीनां पुरश्चर्याविधिस्तु विधाननिधानात्सविस्तरमवगन्तव्यो विस्तरभयान्नात्र प्रपञ्चितः। तत्फलं तु "दशमस्कन्धमात्रस्य सकृदावर्तनादपि। द्विजः प्राप्नोति सुकृतं वेदपारायणोद्भव"मित्यादि शौनकोक्तमवधेयम्॥ ११८॥

---

स्वयं कार्या, असति कारयितव्या। यद्वा–कार्या, अर्थदानादिना प्रयोजयेच्चान्यान्। करणीयेति पाठे त्वविशेषः॥ ११८॥

---

णीयेति निर्देशः कार्यत्वस्योपलक्षक इत्यभिप्रायः। अधिकारतदभावपरतया भेदं त्यक्त्वैकाधिकारिकतया भावमाह—यद्वेति॥ ११८॥

---

दैव्यामापदि कष्टायां मानुष्यां वा गदादिषु।
यथा स्वपररक्षा स्यात्तथा वृत्यं न चान्यथा॥ ११९॥
देशकालवयोवित्तजातिशक्त्यनुसारतः।
आचारो व्यवहारश्च निष्कृतं चावधार्यताम्॥ १२०॥

दैव्यामिति। कष्टायां–कष्टं–कृच्छ्रं विद्यतेऽस्यामिति कष्टा। अर्श आद्यच्। दुःखरूपा तस्याम्। दैव्यां–देवसम्बन्धिन्याम्। आपदनमापत्, आपदनमनयेति वा। सम्पदादित्वात्क्विप्। तस्यां–अनावृष्टिग्रामदाहादिलक्षणायां विपत्तौ सत्याम्। तथा–मनुष्येभ्य आगता मानुषी तस्यां–राजकुलस्ववैरिदायादादिमनुष्यकृतायामापदि धनहरणादिलक्षणायां विपत्तौ वा सत्याम्। तथा–गदादिषु–गदः–रोगः स आदिर्येषां–शस्त्रक्षतादीनां दुःखहेतूनां तेषु च सत्सु। यथा–येन प्रकारेण। स्वश्च परे च स्वपरे, तेषां रक्षा–देहादिरक्षणम्। स्यात्तथा–तेनोपायेन। वृत्यं–

---

ननु शक्तित इति कथमुच्येत? यस्मै फलाय यत्साधनं यथा विहितं तत्तथैव कर्तव्यम्, अशक्तेन तु निवर्तितव्यमेव ततः, नहि पुरुषशक्त्यनुसारेण साधनस्वरूपं भिद्येतेत्याशङ्कायां शक्तेर्द्रव्यादिगौरवमपेक्षमाणो धर्मोऽशक्ते न तदपेक्षते, शक्त्यानुगुण्येनैव धर्मवैलक्षण्यं शास्त्रे-

---

तत इति। साधनात्। पुत्रकामेष्टिज्योतिष्टोमादयो हि धर्माः शक्तं प्रत्येकेन प्रकारेणाशक्तं प्रति लघीयसाऽपरेण प्रकारेणेति भेदमर्हन्ति, अशक्तैस्तु निवर्तितव्यमेव तत इति भावः। भिद्येतेति। सङ्कोचेऽङ्गलोपेन वैकल्यमेव स्यादिति भावः। सत्यं केचन नियतैकप्रकारा धर्माः, किन्तु न सर्वे,

वर्तनीयम् । न चान्यथा—अन्यप्रकारेण तु न वृत्तम् । धर्मशास्त्रेष्वापद्धर्माणां पृथगुक्तेः । तथाहि भारते मोक्षधर्मे—"अन्यो धर्मः समस्थस्य विषमस्थस्य चापर" इति । राजधर्मे च—"अन्यो धर्मः समर्थानामापत्स्वन्यश्च भारते"ति । अत एव भगवद्भक्त्यनुकूलनृदेहरक्षार्थमापदि परधर्माचरणमप्यनुज्ञातम्—"सीदन्विप्रो वणिग्वृत्त्या पण्यैरेवापदं तरेत् । खड्गेन वाऽपदाक्रान्तो न श्ववृत्त्या कदाचने"त्यादिभगवद्वाक्यात् । वसिष्ठश्चाह—"आत्मनो वा परस्यापि कार्यं रक्षणमापदः । परधर्मानृतास्पृश्यस्पर्शाद्यैरपि भूमिपे"ति । विस्तरो मिताक्षराया अवगन्तव्यः ॥ ११९ ॥

किञ्च—देशेति । आचारः—प्रातःस्नानादिः । व्यवहारः—ऋणादानादिश्च । निष्कृतं—प्रायश्चित्तं च । देशादीनां शक्त्यन्तानां द्वन्द्वः । तत्र देशो निरुपद्रवादिः, कालः सुभिक्षादिः, वयो बाल्यादि, वित्तं द्रव्यसम्पत्, जातिर्ब्राह्मणत्वादिः, शक्तिः शारीरबलम्, तासामनुसारः—अनुसरणं तस्मात् । देशादीननुसृत्यैव । अवधार्यतां—कर्तव्यतया निश्चीयताम् । धर्मशास्त्रेष्वपि बहुविधदेशकालाद्यनुसरणादेवाचारादिनिर्णये बहवः पक्षा दृश्यन्ते । तथाहि—कात्यायनसूत्रहरिहरभाष्य आह्निकप्रकरणे स्नानविधौ दशविधस्नानमुक्तम्—"नद्यादिजलेन स्नानं वारुणं मुख्यम्, तस्यासम्भवे प्रशस्तभस्मना सर्वाङ्गोद्धूलनमाग्नेयम्, गवां खुरोद्धूतरजसां ग्रहणं वायव्यम्, द्रुपदादिमन्त्रैः कुशाग्रेण मूर्धनि जलाभिषेको मान्त्रम्, आर्द्रेण वाससा सर्वशरीरमार्जनं कापिलम्, 'आपो हिष्ठा' इति मार्जनं ब्राह्मम्, तीर्थमृदालम्भनं पार्थिवम्, अद्भिरातपवर्षाभिर्दिव्यम्, मनसा श्रीवासुदेवस्मरणं मानसम्, शङ्खधृतेन विष्णुचरणामृतेन स्नानं वैष्णव"मिति । एतानि च देशकालाद्यनुसारेण यथासम्भवं विहितानीति ज्ञेयम् । एवमेव सन्ध्यावन्दनादौ सर्वत्राचारे निर्णयो बोध्यः । तथा व्यवहारप्रकरणेऽपि । तदुक्तं भास्करीये व्यव-

---

पूपदिष्टम् । अत एवाऽऽपदि धर्मोऽन्य इष्यते, देशादिवैलक्षण्येनाऽऽचारादिभेदश्चेत्याह—दैव्यामिति । स्वस्य—आत्मन इत्यर्थः । परस्य—आत्मनोऽन्यस्य, आत्मीयस्येत्येतत् । येन धर्मानुष्ठानेन आत्मात्मीयानां भरणं स्यात् तथाऽऽपदि वर्तितव्यं नान्यथेत्याशयः । तथाच मोक्ष-

---

इत्याशयेनाह—शक्ते इत्यादिना । द्रव्यादिगौरवमपेक्षमाणो धर्म इति । प्रायश्चित्तादिः । तथाऽऽपदि वर्तितव्यमिति । यथा ब्राह्मणेनापदि वृत्त्यलाभे क्षात्रेणेत्यादि बोध्यम् । स्वशब्देनैवात्मात्मीयत्वलाभा-

हारमयूखे बृहस्पतिना—"केवलं शास्त्रमाश्रित्य न कर्तव्यो हि निर्णयः । देशजातिकुलाचारान्प्राचीनान्पालयेन्नृप" इति । एवं प्रायश्चित्तनिर्णयेऽपि । तथा चाह वृद्धपराशरः—"स्त्रीणां च बालवृद्धानां क्षीणानां कुशरीरिणाम् । उपवासाद्यशक्तानां कर्तव्योऽनुग्रहश्च तैः ॥ ज्ञात्वा देशं च कालं च वयः सामर्थ्यमेव च । कर्तव्योऽनुग्रहः सद्भिर्मुनिभिः परिकीर्तितः ॥" इति । "अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरेऽपरे । अन्ये कलियुगे नृणां युगह्रासानुरूपतः ॥ कृते तु मानवा धर्मास्त्रेतायां गौतमोदिताः । द्वापरे शङ्खलिखिताः कलौ पाराशराः स्मृता" इति च । याज्ञवल्क्यश्चाह—"देशं कालं वयः शक्तिं पापं चावेक्ष्य यत्नतः । प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृति"रिति । अत्र मिताक्षरा—"यदुक्तं प्रायश्चित्तजातं वक्ष्यमाणं च तद्देशादिकमवेक्ष्य यथा कर्तुः प्राणविपत्तिर्न भवेत्तथा विषयविशेषे कल्पनीयम् । इतरथा प्रधाननिवृत्तिप्रसङ्गात् । तथा वक्ष्यति—"वायुभक्षो दिवा तिष्ठन् रात्रिं नीत्वाऽप्सु सूर्यदृ"गिति । तत्र यदि हिमवद्गिरिनिकटवर्तिनामुदवास उपदिश्यते अतिशीताकुलिते वा शिशिरादिकाले तदा प्राणवियोगो भवेदिति तद्देशकालपरिहारेणोदवासः कल्पनीयः ।" इति । एवं वयोविशेषादावपि ज्ञेयमिति दिक् ॥ १२० ॥

---

धर्मे—"अन्यो धर्मः समस्थस्य विषमस्थस्य चापरः" इति । स्वेषां परेषां च यथा रक्षा स्यात्तथेति वार्थः । अयं भावः—ब्राह्मणो हि बहुप्रजो वृत्तिकर्शितो दुर्भिक्षाकुले देशे निवसन् स्वधर्मे भैक्षे यतेत । तदा तमवलोक्यापरैर्वृत्त्यलाभेनाऽऽत्मात्मीयरक्षणेऽपि दुर्घटे 'ब्राह्मणोऽयं बहुप्रजो भिक्षतेऽस्मै देयमित्यस्माकं धर्मः, वयं त्वधुना दुर्भिक्षोपप्लुताः किं कुर्मः, तथापि देयम्' इति ये यतन्ते, तेऽपि क्लेशमाप्नुयुस्तस्मात्स्वस्य परस्य च यथा च रक्षा स्यात्तथाऽऽपद्धर्म एवाश्रयणीय इति । आपदनापद्भेदेन धर्मभेद इव देशकालवयोवित्तजातिशक्तिवैषम्येण आचारव्यवहारप्रायश्चित्तान्यपि भिन्नभिन्नानि शास्त्रदृष्टानि नाम, तद्युक्तमुक्तं शक्तित इति ॥ ११९–१२० ॥

---

स्परशब्दस्यास्वारस्यमित्यभिप्रेत्याह—स्वेषां परेषां चेति । ये यतन्त इति । आत्मात्मीयप्राणरक्षणमनादृत्येति यावत् । क्लेशमिति । प्राणापायक्लेशमित्यर्थः । रक्षा स्यादिति । प्राणधारणं स्यादित्यर्थः । आत्मात्मीयप्राणधारणोचितग्रासावशेषेण परं रक्षेदिति भावः ॥ ११९ ॥ १२० ॥

मतं विशिष्टाद्वैतं मे गोलोको धाम चेप्सितम्।
तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिश्च गम्यताम्॥ १२१॥

मतमिति। विशिष्टाद्वैतं मे मतं—सिद्धान्तः। द्वैताद्वैतशुद्धाद्वैतविशिष्टाद्वैतादीनि मतानि प्रसिद्धानि सन्ति, तत्र विशिष्टाद्वैताख्यं श्रीरामानुजाचार्यप्रवर्तितं मतं मे मतमस्तीति ज्ञेयम्। एतेन स्वसम्प्रदायस्य श्रीरामानुजसम्प्रदायमूलकत्वमपि सूचितमित्यपि ज्ञेयम्। तथा—गोलोको ममेप्सितं धामास्तीति

---

उक्तं प्रासङ्गिकम्, अथ मुक्तेः स्वरूपमाह—मतमिति। भक्तिफलभूतमुक्तिस्वरूपनिरूपणं हि प्रकृतेन सङ्गतम्, प्राक् हि भक्तिः प्रसक्ता निजात्मानमिति श्लोके। कृष्णसेवा मुक्तिश्च गम्यताम्—चस्त्वर्थे। पक्षान्तरव्यावृत्त्यर्थः। कृष्णस्य सेवा—परिचर्या मुक्तिः। देशविशेषं प्राप्तस्य परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पन्नस्य तत्रत्यस्य परमात्मनः कृष्णस्य परिचरणं मुक्तिरित्यर्थः। ननु—मुक्तावपि कोऽयं सेव्यसेवकभावः, श्रुतयो ह्यभेदमामनन्ति, तदभेदस्य तात्त्विकत्वं भेदस्यौपाधिकत्वं चाभ्युपगन्तव्यम्। तथा चोपाध्यपगमे परेण ब्रह्मणा सहाद्वैतमेव तात्त्विकं सिद्ध्यति। अत एव "ब्रह्म वेद ब्रह्मैव भवती"ति श्रुतिरपि सङ्गच्छते; इत्याशङ्कायामद्वैतश्रुतीनामाशयमाह—मतं विशिष्टाद्वैतं मे इति। तत्र तत्र श्रुत्यन्ते प्रतीयमानं ब्रह्मणोऽद्वैतं विशिष्टस्य तस्येति मे मतम्। विशिष्टमेव हि ब्रह्मेत्यर्थः। अयमाशयः—वियद्वायुस्तेजःसलिलमवनिश्चेति यदिदं विकाराणां या च प्रकृतिरपि यश्चेतनगणः। न चैषामेकं वा यदगुणतया स्यात्तनुतया प्रकारीभूयास्ते निखिलमपि यद्ब्रह्मण इदम्॥ तथाच स्वैकान्तैरखिलचिदचिद्धर्मनिचयैर्विशिष्टं ब्रह्मैकं भवति न च तत्त्वं तदधिकम्। अतो नाना नेति श्रुतिशिरसि जोघुष्यत इदं विशिष्टाद्वैतं तन्नहि गुणविभागं न सहते॥ रसादिषु विशेषेषु सत्स्वपि श्रूयते न किमु। आप एव पुराऽभूवन्नान्यत्किञ्चिदिति श्रुतौ॥ निषेधोऽयं न सहते स्वगुणानां भिदां किमु। समानधर्मिसत्तां तु न सहेतेदृशं वचः॥ लोकेऽपि देवदत्तोऽस्मिन् सद्मन्येकस्तु दृश्यते। इति व्यवहृतिर्मुख्या दृश्यमानेऽपि तद्गुणे॥ अभिज्ञो देवदत्तोऽयमेक एवात्र वर्तते।

---

अथेति। अनेन—प्रकृतेन सङ्गतिर्मुक्तिस्वरूपनिरूपणस्य सूच्यते। किं प्रकृतं का चास्य तेन सङ्गतिस्तदाह—भक्तीत्यादिना। तत्र ब्रह्मात्मना कृष्णसेवा मुक्तिरित्यन्तस्य भावमाह—देशविशेषमित्यादिना। ननु कीदृशं ब्रह्मणः स्वरूपं; यद्विशिष्टमेव ब्रह्मेत्युच्यते?, अत्र विशदयन्सुखावधारणाय श्लोकरूपेणाह—अयमाशय इत्यादिना। वियदित्यादि। इदं महदादीनां विकाराणामुपलक्षकम्। विकाराणामिति। वियदादीनामिति शेषः। या च प्रकृतिः—मूलप्रकृतिः। अपि यश्चेतनगणः—बद्धमुक्तनित्यभेदेन त्रिविधश्चेतनगणः। अगुणतयेति। ब्रह्मण इति सम्बध्यते। ब्रह्मणो यदविशेषणतया स्यात्तथाविधमेकमप्येषु नास्तीत्यर्थः। तत्र हेतुमाह—प्रकारीभूयेति। यत्—यस्मात्। स्वैकान्तैः—स्वासाधारणैः। चिदचिद्धर्मनिचयैः—चिदचित एव धर्मास्तेषां निचयैः। तदधिकम्—तस्माद्विशिष्टाद्ब्रह्मणोऽधिकम्। गुणविभागम्—गुणानां मिथो विभागम्, गुणगुणिनोर्विभागं च। विभागम्—

ज्ञेयम्। सर्वेषु वैकुण्ठश्वेतद्वीपादिषु भगवद्धामसु मध्ये गोलोकाख्यं यद्धामास्ति तन्ममेष्टमित्यर्थः। गोलोकस्वरूपं ब्रह्मवैवर्तपुराणस्थश्रीकृष्णजन्मखण्डात्स्कन्दपुराणस्थवासुदेवमाहात्म्याच्चावगन्तव्यम्। तथा–तत्र–गोलोके। ब्रह्मात्मना–ब्रह्मभावं प्रापितो य आत्मा तेन रूपेण। कृष्णस्य सेवा–परिचर्याचरणं यत्, सैवं

इति व्यवहृतिर्मुख्या देहे सत्यपि देहिनः॥ यद्येकमपि विद्येत ब्रह्मणस्त्वगुणात्मकम्। ब्रह्मैकं नास्ति नानेति व्याहन्येत वचस्तदा॥ शब्दादिभिर्विशेषैस्तु विशिष्टं वियदादिकम्। तथाविधैस्तु तत्त्वैस्तैर्विशिष्टमखिलात्मकम्॥ तत्त्वमेकं परं ब्रह्म श्रूयते श्रुतिमूर्धसु। विशिष्टस्यास्य तत्त्वस्य सजातीयान्यशून्यता॥ विशिष्टाद्वैतमेतत्तु विशेषणबहुत्वतः। न भज्यते युज्यते च भेदाभेदवचोऽधुना॥ एतदुक्तं भवति—ये त्वनादृत्य भेदवचनान्यखिलान्विशेषानविद्याकल्पितानाचक्षाणा गुणतोऽपि सद्वितीयतामसहमाना निर्विशेषमेकमभिमन्यन्ते, तेषामद्वैतश्रुतिनिर्वहणप्रकारेऽविद्यैवातिरिच्यत इति निदर्शितं प्राक्। विशिष्टैक्यमेव त्वद्वैतावबोधकश्रुतीनां भेदश्रुत्यनुगुणं हार्दम्। ब्रह्म ह्यखिलचिदचिद्विशिष्टमेकं तत्त्वम्। सत्ता च तेषां तद्विशेषणतयैव शब्दादीनामिव वियदादिविशेषणतया। आम्नायते चान्तर्यामिब्राह्मणेऽस्याखिलात्मता। गवाश्वादितत्तत्पिण्डविशेषमनुप्रविश्य चैतन्यशक्त्याऽवष्टभ्य तिष्ठतश्चेतनविशेषस्य तत्तत्तनुतया विशेषणतां यथाप्नोति, तथा चिदचिज्जातमशेषमाविश्य सर्वात्मना धारयतः परमचेतनस्य परस्य ब्रह्मणः सर्वमेव द्रव्यं तनुतया विशेषणं भवतीत्यनेकरूपमनेकप्रकारं परं ब्रह्मैकमेव सृष्टिस्थितिलयैर्विहरतीति न किञ्चिदिह ततो द्वितीयम्, नहि विशेषणसत्तामात्रेण सद्वितीयता, समानधर्म्यन्तरं हि द्वितीयं, तच्च नास्त्येवेति द्वैतनिषेधः स्वरस एव। समानधर्म्यन्तराभावमभिप्रेत्यैव लोकवेदयोरपि तथातथा प्रयोगाः शतशो लक्ष्यन्ते। ईदृशस्यैव ब्रह्मणः सर्गप्रतिसर्गयोर्विशेषणद्वारा नामरूपविभागतदभावयोः सम्भवादुपादानोपादेयभावो घटते। तथाच ब्रह्मैवोपादानमुपादेयं चेति सुस्थितम्। सूक्ष्मचिदचिद्विशिष्टवेषेणोपादानता स्थूलचिदचिद्विशिष्टवेषेण तूपादेयता। विशेषणानां विकारेऽपि ब्रह्मणो धर्मिस्वरूपस्याविकृतत्वाच्च न निर्विकारत्वश्रुत्युपमर्दः। एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा चोपपन्नतरा इति।

नन्वस्तु नाम परं ब्रह्म विशिष्टमस्तु च विशेष्यविशेषणयोः स्वरूपतः स्वभावतश्च भेदः, अस्तु च त्रिगुणविनिर्मुक्तिः। अथापि परिचरणं मुक्तिरिति तु न युक्तम्। नहि राजेव परिजनैः सेव्यमानः क्वचित्सन्निधेऽयं यः परमात्मा। अस्य हि स्वरूपं "सत्यं ज्ञानमनन्त"मिति श्रूयते। यश्च लोकः श्रूयतेऽर्चिरादिना प्राप्यः, स चार्वाचीनः, इत्याशङ्कायां सत्यज्ञानानन्तस्व-

स्वभाववैषम्यम्। न न सहते सहत–एव। श्लोकरूपेण सङ्क्षिप्तमर्थं तदाशयविवरणेन विशदयति—एतदुक्तं भवतीत्यादिना। चेतनविशेषस्य–जीवविशेषस्य। तत्तत्–गवाश्वादि। ननु सति विशेषणभेदे सद्वितीयतया कथमद्वैतं? तत्राह—नहीत्यादिना। तथातथेति। "आप एव पुराऽभूवन्नि"त्यादयः।

गोलोको धाम मे मतमित्येतदवतारयति—नन्वस्त्वित्यादिना। यः परमात्मेति। आत्मतया सर्वत्रानुप्रविश्य वर्तमानस्य राज्ञ इव देशविशेषे मूर्तीभूय स्थितिरनुपपन्नेति भावः। स्वरूपं चामूर्तमेव

मुक्तिः—ममेप्सिता मुक्तिः, न तु सालोक्यादिलक्षणेति चावगम्यतां—भवद्भिर्ज्ञायताम्। सालोक्यादिमुक्तिभ्यस्तस्या एवातिदुर्लभत्वादेकान्तिकभक्तवाञ्छितत्वादिति भावः। उक्तं हि श्रीभागवते—"सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत। दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः॥" "नैकात्मतां मे स्पृहयन्ति केचि-

---

रूपस्यैवास्य दिव्यविग्रहेण विराजमानस्य नित्यमुक्तानुभाव्यस्यास्ति देशविशेषः श्रुतिसम्प्रतिपन्न इत्याह—गोलोको धामेति। गोलोकः—निरतिशयदीप्तियुक्तोऽप्राकृतो लोकः। श्रूयते च—"यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि" इति। अयमर्थः—यत्र गावः-रश्मयः, भूरिशृङ्गाः-बहुशृङ्गाः, अत्यन्तोन्नतियुक्ताः, अयासः—अतिविस्तृताः। अत्राह—अत्र खलु लोके, उरुगायस्य-बहुभिर्नित्यसूरिभिरभिष्टुतस्य, वृष्णः कामानां वर्षितुः परमपुरुषस्य, तत्-मुक्तप्राप्यतया श्रुतिस्मृतिप्रसिद्धं, परमं पदं-सर्वोत्कृष्टं स्थानं, भूरि-अनन्तायामम्, अवभाति- सर्वदा स्वतः स्फुरतीति। अन्यत्रापि श्रूयते—"क्षयन्तमस्य रजसः पराके" प्रकृतेः परस्तादित्यर्थः। अनवरतमभिध्यमानो नित्यमुक्तैः परिजनैरिति च श्रूयते—"तद्विप्रासो विपन्यवो जागृवांसः समिन्धते। विष्णोर्यत्परमं पद"मिति। विष्णोः-व्यापनशीलस्य परमात्मनः, यत्परमं पदं-सर्वोत्कृष्टं स्थानं, तत्र समिन्धते, के? विप्रासः-मेधाविनः, जागृवांसः-अप्रस्खलितज्ञाना नित्यमुक्ताः, विपन्यवः-सदा स्तुतिशीला इत्यर्थः। पनपण स्तुतिव्यवहारयोरिति धातुः। "यत्र ऋषयः प्रथमजा ये पुराणा"इति च नित्यमुक्ता गम्यन्ते। स्मर्यते चायं स्थानविशेषः परस्य ब्रह्मणः—"क्रान्त्वा दशोत्तरगुणाः प्राप गोलोकमद्भुतम्। धाम तेजोमयं तद्धि प्राप्यमेकान्तिकैर्हरेः॥ तत्रैककालसम्भूतकोटिकोट्यर्कसन्निभम्। स न्यचष्ट महत्तेजो दिव्यं सिततरं मुने!॥ दिशश्च विदिशः सर्वा ऊर्ध्वाधो व्याप्नुवच्च यत्।" इति। उदाहृतश्रुत्यर्थे विप्रतिपन्नान्प्रत्युच्यते—मे मतमिति। आप्तसंवादो ह्यपाकरोत्यर्थे विप्रतिपत्तिम्। सर्वं सर्वदा साक्षात्कुर्वतः। श्रुतिप्रसिद्धस्य मम आप्ततमस्य मते सुपथे प्रवर्तमानानां श्रुत्यर्थे न विप्रतिपत्त्यवकाश इति भावः।

यद्यपि कृष्णसेवा समयविशेषे संसृतावपि लभ्यते नाम कैश्चित्, तथापि न सा मुक्तिः, किन्तु विशुद्धात्मस्वरूपप्राप्तिपूर्विकैव सा मुक्तिरित्याशयेनाह—तत्र ब्रह्मात्मनेति। ब्रह्मात्म-

---

श्रूयत इत्याह—अस्य हीति। सत्यज्ञानानन्तस्वरूपस्यैवास्य दिव्यविग्रहेण विराजमानस्येति। अस्य दिव्यविग्रहोऽपि ज्ञानमय एवेति नोक्तश्रुतिविरोध इति भावः। गोशब्दस्यार्थान्तरभ्रमं वारयति—निरतिशयेति। तत्र प्रमाणमाह—श्रूयते चेति। रश्मीनां शृङ्गासम्भवाद्भावमाह—अत्यन्तोन्नतियुक्ता इति। क्षयन्तम्-निवसन्तम्। श्रुतीरुदाहृत्य स्मृतीरुदाहरति—स्मर्यते चेति। आप्ततोपयोगिनं विशेषमसच्छब्दाभिप्रेतं विशदयति—सर्वमित्यादिना।

तत्र ब्रह्मात्मनेत्येतदवतारयति—यद्यपीत्यादिना। समयविशेष इति। यदा परित्राणाय साधूनामवनितलेऽवतरति तदा। कैश्चित्-सुकृतिभिः। ब्रह्मात्मनेतीत्थम्भूतलक्षणे तृतीयेत्यभिप्रेत्याह—

न्मत्पादसेवाभिरता मदीहाः” “सेवानुरक्तमनसामभवोऽपि फल्गुः” “मुक्तिस्तेषां नहि बहुमता नारसिंहापरैः किम्” “न पारमेष्ठ्यं न महेन्द्रधिष्ण्यं न सार्वभौमं न रसाधिपत्यम्। न योगसिद्धीरपुनर्भवं वा मय्यर्पितात्मेच्छति मद्विनाऽन्यत् ॥” “मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्का-

---

नोपलक्षितेन क्रियमाणा सेवा मुक्तिरित्यन्वयः । तत्र–देशविशेषे । अर्चिरादिना देशविशेषं प्राप्तस्यैव स्वरूपाविर्भावः । तथाच स्मर्यते—“अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः” इति भावः । ब्रह्मात्मना–आत्मशब्दः स्वरूपवाची, शुद्धात्मस्वरूपेणेत्यर्थः । यदपहतपाप्मत्वादिकं प्रजापतिवाक्योदितं तेनेति यावत् । “परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते” इति श्रुत्यर्थोऽनेन स्मारितः । आविर्भूतस्वरूपस्यास्याशरीरस्य कथं सेवारस इति तु नाशङ्कनीयम् । सम्पद्यते हि ब्राह्मी तनुः, स्वरूपाविर्भावस्तु न तद्विरोधी, किन्त्वनुगुण एव । भौतिके तु विरोधः । “सशरीरस्य न प्रियाप्रिययोरपहतिरस्ति” इति श्रुतिस्तु कर्मकृतशरीरसम्बन्धपरा । अन्ये तु कथमशरीरस्य सतः मुक्तस्य सेवा घटेतेत्यत आह—ब्रह्मात्मनेति । आत्मशब्दो देहपरः, ब्राह्मेण देहेनेत्यर्थः, इति व्याचक्षते । अन्ये तु–अस्ति गोलोकाख्योऽप्राकृतो देशविशेषः, अस्ति च तत्र धाम ब्रह्मात्मना, अक्षरं धामरूपमित्यर्थः । तत्र कृष्णसेवा मुक्तिरित्यन्वय इत्याहुः ।

ननु—सेवा कथं मुक्तिः, सेवकवृत्तिर्हि सा, आविर्भूतस्वरूपस्य तु न सा घटेत, नहि ज्ञानानन्दादिवदात्मनः सहजं सेवकत्वं, किन्तु पितृत्वपुत्रत्वादिवदागन्तुकम्, न चास्य पारतन्त्र्यमेव स्वरूपं, स्वरूपाविर्भावेऽपुरुषार्थान्वयप्रसङ्गात् । उच्यते । कथमपुरुषार्थान्वयः । दुःखान्वयादिति चेत्, कथं तदन्वयः । पारतन्त्र्यादिति चेत्, किं पारतन्त्र्यमित्येव दुःखं, उत तद्दुःखस्य द्वारमिति । न प्रथमः–नहि भार्यादयः पत्यादिपरतन्त्राः सर्वे सर्वदा दुःखिनः समुपल-

---

उपलक्षितेनेति । ब्रह्मात्मना सेवैहैव किं न स्यादित्यत्राह—अर्चिरादिनेति । तत्र प्रमाणमाह—तथाचेति । किं तत्स्वरूपं ? येनोपलक्ष्यते मुक्तः, तत्राह—यदिति । प्रजापतिनोपदिष्टं वाक्यं प्रजापतिवाक्यम्, इदं च छान्दोग्योपनिषदि श्रूयते—“अपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्प” इति । आविर्भूतस्वरूपस्येति । इदमशरीरत्वोपपादकं विशेषणम् । ब्राह्मीति । अप्राकृतीत्यर्थः । श्रुतिविरोधमाशङ्क्य परिहरति—सशरीरस्येत्यादिना । अन्ये त्विति । अस्यां योजनायां स्थानविशेषधामविशेषयोरन्तरं सूच्यते ।

परः शङ्कते—नन्वित्यादिना । आगन्तुकमिति । अपगतकर्मबन्धस्य परं ज्योतिरुपसम्पद्य स्वेन रूपेण निष्पन्नस्य कर्ममूलप्रकृतिसंसर्गोपाधिनिमित्तकोऽयं सेवकभावः कथं घटेतेति भावः । पारतन्त्र्यमेव स्वरूपमिति । पारतन्त्र्यं स्वरूप मेवेत्यन्वयः । यद्वा—एवकारेण स्वातन्त्र्यस्य स्वरूपत्वव्यवच्छेदः । पारतन्त्र्यं चेह परमात्मापेक्षया विवक्षितम् । समाधत्ते—उच्यत इत्यादिना । कथमपुरुषार्थान्वय इति । दुःखस्यैवापुरुषार्थतयाऽतद्रूपस्य पारतन्त्र्यस्यान्वयमात्रेण कथमपुरुषार्थान्वयप्रसङ्ग इति भावः । पारतन्त्र्यादिति चेदिति । पारतन्त्र्याद्धेतोरित्यर्थः । पारतन्त्र्यं किं साक्षाद्दुःखे साधनम् ? किं परम्परया, इति

लविद्रुतम् ॥" "न किञ्चित्साधवो धीरा भक्ता ह्येकान्तिनो मम । वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ॥" "मय्येकान्तमतिर्नान्यन्मत्तो वाञ्छति किञ्चन" "तं दुराराध्यमाराध्य सतामपि दुरापया । एकान्तभक्त्या को वाञ्छेत्पादमूलं विना बहिः" "एकान्तिनो यस्य न कञ्चनार्थं वाञ्छन्ति ये वै भगवत्प्रपन्नाः" "आराधनं

भ्यन्ते । द्वितीये द्वारता कथम् । परेच्छया प्रवृत्तिरवश्यंभाविनीति चेत्, परेच्छया चेदिष्टे प्रवृत्तिः सा कथं दुःखाय । ननु–परेच्छया प्रवर्तमानस्य इष्टे एव भवेत्प्रवृत्तिरिति कोऽयं नियमः । अनिष्टेऽपि हि यतितव्यं परतन्त्रेणानिच्छतापि । उच्यते—परेच्छयाऽनिष्टे प्रवृत्त्या-पाताद्धि दुःखमापाद्यते, परश्चेदिष्ट एव प्रेरयेत्र तदा दुःखावकाशः । गुणवान्पतिर्भार्यामिष्ट एव प्रेरयेत्, गुणवत्या भार्यायाः पत्यनुवर्तनमेव परमप्रयोजनं मन्वानायाः सर्व एव तस्यादेश इष्ट एव स्यादित्येतल्लोकसिद्धमपि । इह तु पतिः परमात्मा सत्यसङ्कल्पः, प्रियं ज्ञानिनं लब्ध्वा न चैनं संसारे पुनः पातयेत्, येन परेच्छयाऽनिच्छतापि संसारे निपतितव्यं स्यात्, येन दुःखान्वयः स्यात् । उक्तं च भगवता—"स च मम प्रियः, ज्ञानीत्वात्मैव मे मतम्" इति । प्रतिश्रुतं च—"मामुपेत्य तु कौन्तेय! पुनर्जन्मन विद्यते" इति । न चास्य समुच्छिन्नसर्वकर्म-बन्धस्याऽऽविर्भूतस्वस्वरूपस्य परमशेषिणः परस्य परब्रह्मणोऽनन्तकल्याणगुणमनुभवतस्तदनु-भवजनितप्रीतिकारिततच्चरणयुगलपरिचरणे न कश्चित्प्रकारोऽनिष्टः स्यात् । तत्पारतन्त्र्यं नेह कथमपि दुःखाय द्वारम् । किञ्च–स्वातन्त्र्यपारतन्त्र्ययोः स्वातन्त्र्ये कस्मात्ते पक्षपातः । स्वेच्छयैव प्रवृत्त्यर्हत्वादिति चेत्, को लाभस्तावता । अनर्थानन्वयः, न । स्वेच्छया प्रवृत्तः कीलोत्पाटी

विकल्प्य दूषयति—किमित्यादिना । इत्येवेति । इतिर्हेतुवचनः । एवकारः साक्षान्निरपेक्षसाधनत्व-ज्ञापकः । द्वारमिति । परम्परया साधनमित्यर्थः । नहीति । सत्यपि पारतन्त्र्ये दुःखानुपलम्भान्न दुःखे पारतन्त्र्यस्य साक्षाद्धेतुतेति भावः । द्वारता कथमिति । किं दुःखसाधनमुत्पाद्य द्वारं भवतीत्यर्थः । पारतन्त्र्येणानिच्छताऽपीति । सत्यपि प्रवृत्तिप्रतिरोधकेऽनिष्टसाधनताज्ञाने पारतन्त्र्यं स्वयमुत्तेजकीभूया-निष्टसाधने प्रवृत्तिमापादयतीति दुःखे द्वारं भवतीति भावः । परश्चेदिष्ट एव प्रेरयेदिति । प्रेर्यं तदिष्ट एव प्रेरयेदित्यर्थः । नन्विदमनुपपन्नमित्याशङ्कां लोकप्रसिद्ध्या परिहरति—गुणवानित्यादिना । सर्व एवेति । अन्यदृष्ट्याऽनिष्टावहोऽपीति भावः । लोकतोऽतिशयमाह—इह त्विति । तुशब्दाद्विशेषो व्यज्यते । विशेषमेवोपपादयति—पतिरित्यादिना । परमात्मेति । एतेनानुकूल्यं व्यज्यते, नहि स्वस्यात्मा स्वस्य प्रतिकूलो भवेत् । सत्यसङ्कल्प इति । मोचयाम्येनमिति कृते सङ्कल्पे पश्चात्कदापि पातयाम्येनमिति सङ्कल्पमसौ न कुर्यादिति व्यज्यते । परमात्मनः स्वभावपर्यालोचनेनोक्तम्, मुक्तस्वरूपपर्यालोचनेना-प्याह—प्रियं ज्ञानिनमिति । येन दुःखान्वय इति । संसृतेरेव दुःखमयत्वेन तत उत्तीर्णस्य न दुःखा-न्वयप्रसङ्ग इति भावः । ननु परिचरणमित्येवापुरुषार्थ इत्याशङ्कां परिहरन्नाह—न चास्येत्यादिना । आविर्भूतस्वस्वरूपस्येति । अस्येत्यनेन सम्बन्धः । परमशेषिण इति । एतेन–अपहतपाप्मत्वादि-वच्छेषत्वमप्यस्य स्वरूपमिति स्वरूपाविर्भावे शेषत्वाविर्भावात् स्वरूपानुरूपं शेषिणः परिचरणमानन्दायै-वेति गम्यते । एवं स्वपक्षं सम्प्रसाध्य परपक्षे दूषणमाह—किञ्चेति । कस्मात्ते पक्षपात इति । पार-

भगवत ईहमाना निराशिषः। ये तु नेच्छन्त्यपि परं ते स्वार्थकुशलाः स्मृताः॥" "अपवर्गमात्यन्तिकं परमपुरुषार्थमपि नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः" इत्यादि। अत एवोक्तमुद्धवेन—"को न्वीश ते पादसरोजभाजां सुदुर्लभोऽर्थेषु चतुर्ष्वपीह। तथापि नाहं प्रवृणोमि भूमन्भवत्पदाम्भोजनिषेवणोत्सुकः॥"

वानरः किं नानर्थं प्राप। सा प्रवृत्तिरविवेकेनेति चेत्, हन्त समायातमविवेकतः प्रवृत्तिरनर्थाय विवेकतस्तु साऽर्थायेति। तथाच सति स्वेच्छया वा स्वात्परेच्छया वा सा स्यात्तत्र कस्ते पक्षपातः। ननु–परः स्वार्थैकदृष्टिर्विवेकिनमप्यात्मनः परतन्त्रं परमनर्थे पातयेत्, स्वतन्त्रस्तु विवेकी स्वस्यानर्थं न सम्पादयेदिति चेत्, हन्त स्वार्थैकदृष्ट्या परानर्थमापादयन्परतोऽनर्थमात्मन आपादयतीति स्वातन्त्र्यमपि दुःखायैव। अन्ततः स्वस्याविवेकः स्वामिनो वा दौष्ट्यं दुःखायेति न स्वातन्त्र्यं न वा पारतन्त्र्यं स्वतः सुखाय दुःखाय वा। न चास्य मुक्तस्याविवेकगन्धो वा। न वा हेयप्रत्यनीकस्य कल्याणाकारस्य स्वामिनो दोषशङ्का वा। तत्परमात्मपारतन्त्र्यं स्वरूपानुबन्धि चेतनस्य न दोषायेति न मुक्तौ सेवायां किमप्यनौचित्यम्। अथ लोके सर्वेषामेव प्रद्वेषः पारतन्त्र्ये दृष्टः, स्वातन्त्र्ये तु स्वतो रुचिश्च। मैवम्। स्वामिदोषशङ्कया तथा विद्वेषः, गुणवत्तमताज्ञाने च तत्राप्यद्वेष एव लोकानाम्। न च "स स्वराड् भवती"ति श्रुत्या विरोधः परमात्मपारतन्त्र्ये, अकर्मवश्यतैव हि तया प्रतीयते। परेषां 'पारतन्त्र्यं तु दुःखायापि भवेत्क्वचित्। भगवत्पारतन्त्र्यं तु सुखायैव तु केवलम्॥ ईश्वरोऽहमहं भोगीत्यादिस्वातन्त्र्यमोहितः। भगवत्पारतन्त्र्येऽपि द्विष्यत्यसुरराडिव॥ दासोऽहं कोसलेन्द्रस्य रामस्याक्लिष्टकर्मणः। इत्येवं मोदते नित्यं हनूमानिव तत्त्ववित्॥ आविर्भूतस्वरूपाणां शेषत्वैकरतात्मनाम्। स्वामिनः परिचर्यातः स्वादु किं वान्यदिष्यते॥ शेषत्वं चात्मनां स्वरूपमित्युक्तं प्राक्।

यद्यप्यक्षरप्राप्तिमात्रं मुक्तिरिति व्यपदिश्यते क्वचित्, न तदेव परमप्राप्यं, ततोऽतिश-

तन्त्र्यस्य स्वतो यथा न दुःखरूपता तथा स्वातन्त्र्यस्य स्वतो न सुखरूपतेति स्वातन्त्र्ये कस्ते पक्षपात इति भावः। को लाभस्तावतेति। को गुण इति यावत्। अनर्थानन्वय इति। गुण इति शेषः। तथाच सतीति। विवेकाविवेकयोरेव गुणदोषमूलत्वे। स्यादिति। प्रवृत्तिरिति शेषः। तत्रेति। तयोरेकस्मिन्। ननु न वयं ब्रूमः स्वातन्त्र्यमात्रं गुणायेति, किन्तु सति विवेके स्वातन्त्र्यं गुणाय सत्यपि विवेके पारतन्त्र्यं न तथेति, अतश्च नः पारतन्त्र्ये प्रद्वेष इत्याशयेनाशङ्कते—नन्विति। स्वातन्त्र्यमपीति। विवेकसहितमपीति यावत्। ननु–नास्य विवेकः, यदयमात्मनः परतोऽनर्थमापादयति, तद्विवेके सति स्वातन्त्र्यं गुणायैवेत्यक्षतमिति चेत्, तर्हि तथाविधस्य विवेकिनः पारतन्त्र्यमपि नैव दोषमावहेत्। उपसंहरति—अन्तत इत्यादिना। लोकविरोधमाशङ्क्य परिहरति—अथेत्यादिना। श्रुतिविरोधमाशङ्क्य परिहरति—नचेत्यादिना। अत्राभियुक्तानां कारिकाः प्रमाणयन्नाह—परेषामित्यादिना। परेषाम्–प्राकृतपुरुषाणाम्। असुरराट्–हिरण्यासुरः।

सेवा मुक्तिरित्यतो गम्यमानं कैवल्यमात्रस्य साक्षान्मुक्तित्वनिरासं प्रकाशयन्नवतारयति—यद्य-

(१) सुखदुःखमूलत्वे।

इति । भगवताऽपीदृशी स्वसेवा परमैकान्तिकभक्तेभ्य एव दीयते न तु सकलेभ्योऽपि भक्तेभ्यः । तथा चाह श्रीशुकदेवः—"राजन्पतिर्गुरुरयं भवतां यदूनां

---

यितस्य परस्य ब्रह्मण एव परमप्राप्यत्वात् । श्रूयते च—"ब्रह्मविदाप्नोति परं" "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इत्याशयेनाह—सेवा च मुक्तिर्गम्यतामिति । चोऽवधारणार्थे । भिन्नक्रमेणान्वयः । जरामरणमोक्षमात्रेणाक्षरप्राप्तिरपि मुक्तिर्गण्यते नाम, सा तु न मुख्या मुक्तिः, किन्तु शेषिणः परमपुरुषस्य प्राप्तिः शेषतैकरसात्मस्वरूपसमुचिता । अत एव कैवल्यार्थिनो ज्ञानी प्रशस्यते "ज्ञानी त्वात्मैव मे मत"मिति । गणितश्च कैवल्यार्थी अर्वाचीनफलकाङ्क्षिभिः सह समकक्षायाम्—"उदाराः सर्व एवैते" इति । प्रस्तुतश्च कैवल्यार्थी चतुर्धा भक्तविभागे—"आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभे"ति । जिज्ञासुः—प्रकृतिवियुक्तात्मस्वरूपप्राप्तिकामः । ज्ञानमेवात्मनः स्वरूपमित्यात्मेच्छुर्जिज्ञासुरुच्यते । अयमेव च यथाभजनमक्षरस्वरूपं प्राप्तः केवल उच्यते । स्वात्मानन्दमात्रादस्य कैवल्यम् । यतोऽयं नाश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता, स्वयमक्षरस्वरूपे स्वात्मन्येव रमते, ततोऽयमुच्यते केवल इति । अथवा—प्राक्कार्यावस्थायां कारणावस्थायां च सर्वदाऽचिद्वस्तुसंश्लिष्टस्तत्संश्लेषजनिततापत्रयमसहमानोऽक्षरात्मस्वरूपमाकाङ्क्षमाणो भगवन्तमाश्रित्य तद्विश्लेषं लब्धवानत उच्यते केवल इति । यद्यपि परमपुरुषं प्राप्तानामप्यस्ति प्रकृतिविश्लेषः, तथापि न तेषां तावन्मात्रे पर्यवसानम्, अस्य तु तावन्मात्रे पर्यवसानमिति तेनैव स्वरूपनिरूपकेण केवलशब्दस्यास्मिन्नेवासाधारणी प्रवृत्तिः । नन्वक्षरं परमां गतिमाह भगवान्—"अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्" इति । तदितः प्राप्यं परं किमवशिष्यते । सत्यम् । अवधारय वाक्यशेषं यथा परमां गतिमाह । "यं प्राप्य न निवर्तन्ते" इति वाक्यशेषः । "तद्धाम

---

पीत्यादिना । अक्षरप्राप्तिमात्रमिति । "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ।" "यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः" इत्यादिवचनैः प्रतीयमानमक्षरप्राप्तिमात्रम् । ब्रह्मविदाप्नोति परम्—परं ब्रह्मेत्यक्षरं व्यावर्त्यते । अन्वयेन प्रतीकं गृह्णाति—सेवा चेति । अवधारणार्थे इति । अवधारणेनाक्षरप्राप्तिमात्रव्यवच्छेदः । अवधारणभावमाह—जरेत्यादि । परमपुरुषप्राप्तेरेव साक्षान्मुक्तित्वे हेतुरुच्यते—शेषतैकरसेति । अत एव—अमुख्यत्वादेव । ननु—"ज्ञानी त्वात्मैव मे मत"मित्येतेन सर्वं प्रशस्यते ज्ञानी, कैवल्यार्थिनोऽयमन्यस्ततोऽप्युत्कृष्ट इति कथमवगम्यत इत्यत आह—गणितश्चेत्यादिना । ननु "उदाराः सर्व एवैते" इत्यत्रैतच्छब्देन न कैवल्यार्थिनः परामर्श इत्याशङ्कायामाह—प्रस्तुतश्चेति । ननु कैवल्यार्थ्यवबोधकं पदं नेह विद्यत इत्यतो जिज्ञासुपदं व्याचष्टे—जिज्ञासुरिति । कथमस्यायमर्थ इत्यत आह—ज्ञानमेवेत्यादि । यथाभजनमिति । अक्षरात्मस्वरूपचिन्तनात्तत्क्रतुन्यायेनाक्षरप्राप्तिरित्यर्थः । नन्वस्य केवल इति संज्ञा कुत? इत्यत्राह—स्वात्मानन्देति । मात्रशब्दार्थं विशदयति—यतोऽयमित्यादिना । प्रकृतिवियोगमात्रमभिप्रेत्य वा केवलसंज्ञेत्याह—अथवेति । प्राक्—मुक्तितः । कैवल्यस्यापरत्वे परो विरोधमाशङ्कते—नन्विति । समाधत्ते—सत्यमित्यादिना । सत्यमित्यङ्गीकारे, परमां गतिमाहेत्यत्राभ्युपगमः, पराभिमते परमशब्दार्थेऽनभ्युपगमः । यथेति । येन प्रकारेण परमत्वं

दैवं प्रियः कुलपतिः क्व च किङ्करो वः। अस्त्वेवमङ्ग! भगवान् भजतां मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग"मिति। इयमेवैकान्तिकी गतिर्ब्रह्मप्राप्तिश्चोच्यत इत्यलं विस्तरेण।

परमं मम" इत्यप्याह। यस्येदं धाम तस्य हि तच्छेषभूतम्। अतः परमत्वमापेक्षिकमिति सिद्धम्। अपुनरावृत्तेस्तथोक्तिरित्येतत्। भगवद्रामानुजाचार्यास्तु तन्मम परमं धाम–परं नियमनस्थानमिति व्याचख्युः। समनन्तरमेव—"पुरुषः स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया" इति स्मर्यते च। अत्र तुशब्दो व्यनक्त्यक्षरात्पुरुषस्य भक्तिलभ्यस्योत्कर्षम्। पुरुषशब्दश्च पुरिशयत्वपूर्णत्वादिभिः स्वार्थैः। परशब्दश्च स्वस्वारस्यात्। तथा भक्तावनन्यत्वविशेषणं च। प्रतिश्रुतमुत्कर्षं समर्थयन्नाह च—"यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्" इति। सप्तमे—"मत्तः परतरं नान्यत्किञ्चिदस्ति धनञ्जय! मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव" इति यदुपवर्णितं परतरत्वं तदेवेह प्रत्यभिज्ञायते च। "यस्यान्तःस्थानी"ति विधृतिरुच्यते, "येन सर्वमिदं तत"मिति च व्याप्तिः। व्याप्य धारयितृत्वमुक्तं भवति। "सूत्रे मणिगणा इवे"त्यत्राप्येतदेव। अत एव—"योगिनामपि सर्वेषां मद्गतेनान्तरात्मना। श्रद्धावान् भजते यो मां स मे युक्ततमो मतः" इत्युपासकान्तरापेक्षया भगवदुपासकस्य श्रैष्ठ्यमुक्तं तत्रैव षष्ठे। उक्तं च द्वादशे—"एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः" इति पृष्टेन भगवता—"मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते। श्रद्धया परयोपेतास्ते मे युक्ततमा मताः॥ क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।

विवक्षितं स्वं प्रकारमित्यर्थः। धाम–आवासः। धामशब्दार्थस्वारस्यपर्यालोचनयैव शेषशेषिभावोऽवगम्यत इत्याशयेनाह—तच्छेषभूतमिति। ममेति षष्ठ्या सम्बन्धत्वेन शेषशेषिलक्षणसम्बन्धः शब्दतोऽप्यवगम्यत इति भावः। ननु परमत्वं किमपेक्ष्याभिहितमित्यत्राह—अपुनरावृत्तेरिति। भगवद्रामानुजाचार्यास्त्विति। अस्मिन्पक्षे धामशब्दार्थे भेदेऽपि शेषशेषिभावविवक्षांशे ऐक्यमस्तीति स्वाभिमतार्थे संवादरूपतयैतत्प्रदर्शनम्। स्वार्थैरिति। पुरि–शरीरे, सर्वप्राणिहृदयगुहासु शेते, पूरयति सर्वं वस्तुजातं स्वान्तर्यामिसत्तयेत्येवमादिव्युत्पत्त्या गम्या अर्थविशेषास्तैः। उत्कर्षं व्यनक्तीति पूर्वेण सम्बन्धः। भक्तावनन्यत्वविशेषणं चेति। कैवल्यार्थिनां हि भक्तिरीश्वरे भवन्ती अक्षरस्वरूपाविर्भावलक्षणफलाकाङ्क्षयाऽनुबद्धेति नानन्या, अतश्चाक्षरप्राप्तेः परमपुरुषप्राप्तेरुत्कर्षो गम्यते। प्रतिश्रुतम्–परशब्देन। ननु परशब्दो भिन्नपरो नोत्कर्षपर इत्याशङ्कां परिहरन्नाह—सप्तमे इत्यादिना। यदुपवर्णितं परतरत्वमिति। यादृगुपवर्णितमित्यर्थः। यल्लिङ्गकमिति यावत्। तदेवेह प्रत्यभिज्ञायत इति। परतरत्वे यल्लिङ्गं सप्तमे श्रूयते तस्येह प्रत्यभिज्ञानात्परशब्दस्योत्कर्षपरत्वमेव न्याय्यमिति भावः। किं तल्लिङ्गं यत्प्रत्यभिज्ञायते तदुपपादयति—यस्यान्तःस्थानीत्यादिना। व्याप्येति। अन्तः प्रविश्येत्येतत्। अत एव–अक्षरप्राप्तेः परमपुरुषप्राप्तेरुत्कृष्टत्वादेव। उपासकान्तरापेक्षया–अक्षरोपासकापेक्षया। तत्रैव षष्ठे–यत्रैवात्मस्वरूपावलोकनफलको योगः[2] प्रस्तुतस्तत्रैव षष्ठे। कण्ठरवेणा[1]ेतयोर्विशेषो बोध्यत

(१) पञ्चमी। (२) "सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनी"त्यादिना प्रस्तुतः।

ननु—"मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे । तदाऽमृतत्वं प्रतिपद्यमानो मयात्मभूयाय च कल्पते वै ॥" इति भगवद्वाक्यात् "विमुञ्चति यदा कामान्मानवो मनसि स्थितान् । तर्ह्येव पुण्डरीकाक्ष ! भगवत्त्वा-

---

अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः । अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् । भवामि नचिरात्पार्थ ! मय्यावेशितचेतसाम् ॥" इति । नन्वेवमस्मिन्सन्दर्भे कथमकथयत्—"ते प्राप्नुवन्ति मामेवे"ति । परितः प्रसारय दृष्टिम् । पञ्चदशे ह्यक्षरादुत्तमत्वं संसर्यते—"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः । यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः। अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥" इति "वेदैश्च सर्वैरहमेव वेद्य" इति । समनन्तरपूर्वश्लोके सकलवेदपरमतात्पर्यगोचरतया प्रस्तुतस्य स्वस्य क्षराक्षरातीतत्वमेभिः श्लोकैरुक्तं तत् कथमक्षरं परमप्राप्यं स्यात्; परमप्राप्यमेव हि श्रुतेः परमतात्पर्यगोचरम् । "अथ परा यया तदक्षरमधिगम्यते" इति परविद्यावेद्यतया प्रस्तुतमक्षरं तु परात्परं परमपुरुषतत्त्वमेव, परमात्मासाधारणधर्मैर्निरूपणात् । तदिदमदृश्यत्वाद्यधिकरणे च सुसमर्थितम् । नन्वास्तां पर्यटनमिह, मामिति निर्देशस्य का गतिः । अवधूय परितो दृष्टिं निर्विशेषमेवात्मतत्त्वमक्षरं परमां गतिमभिमन्यमानेन भवता वा मामिति निर्देशस्य का गतिः कल्प्यते । मामिति सगुणस्वरूपं हि स्वरसतः समुपस्थाप्यते, वस्तुतो निर्विशेषात्मतत्त्वमेव तदिति न क्षतिरिति चेदनीश्वरेण तथा प्रयुक्तस्यापि प्रामाणिकतापातः । ननु—अन्तर्यामीश्वरस्वरूपं निर्विशेषात्मतत्त्वस्वरूपस्य सन्निहितमिति तद्वाचिशब्देन तन्निर्देशः स्वारसिक एव, नातो लक्षणादोषः, साक्षाच्छब्दासम्बद्धे वस्तुनि सन्निहितार्थद्वारैव शब्दानां गतिर्न्याय्या, शाखाया इव साक्षादसम्बद्धायाश्चन्द्रे सान्निध्येन । हन्त शब्दागोचरं वस्तु चेति व्याहतं वचः । परास्ताः प्रागीदृशवादा इति नेह प्रपञ्च्यते । साक्षादसम्बद्धोऽपीश्वरावबोधकः शब्दः सान्नि-

---

इत्याह—उक्तं च द्वादशे इति । कथमकथयदिति । अक्षरप्राप्तेः परमपुरुषप्राप्त्यपेक्षयाऽपरत्वेऽस्मिन्सन्दर्भे कथं कथयेत् 'ते प्राप्नुवन्ति मामेवे'तीति भावः । पूर्वापरपर्यालोचनेन भावो नेयः, नत्वापातत इत्याशयेनाह—परित इति । नन्वक्षरं चेदपरं परविद्यागम्यत्वं श्रूयमाणं कथं घटेतेत्याशङ्कां परिहरन्नाह—अथेत्यादिना । नन्वस्मच्छब्देन निर्देशो विरुध्यत इत्याशङ्कते—नन्विति । प्रतिबन्ध्योत्तरयति—अवधूयेत्यादिना । सगुणस्वरूपं हीति । इदं हि परमेश्वरवचनं, स च सगुणः कल्पितः, असमच्छब्दस्तु वक्तृपरामर्शीति भावः । प्रामाणिकतापात इति । वस्तुतः स्वरूपैक्यस्याविशेषादिति भावः । ननु स्वरूपैक्यमविशिष्टं नाम, अथापि परमेश्वरस्वरूपेणातिशयितः सम्बन्धो निर्विशेषात्मतत्त्वस्येति तत्परामर्शिना शब्देन तस्यावबोधनमुपपन्नं नान्येनेत्याशङ्क्य परिहरति—न चेत्यादिना । साक्षादिति । न कोऽपि शब्दः साक्षादात्मतत्त्वं स्प्रष्टुमर्हति, अगोचरं ह्यात्मतत्त्वं, तदेवंविधस्यावबोधने कर्तव्येऽयमेव प्रकारः, यत्तत्सन्निहिते प्रवर्तमानेन तदवबोधनमिति भावः । तत्र लोकदृष्टान्तमाह—शाखाया इति । व्याहतमिति [ शब्दासम्बन्धत्वे तुच्छत्वैव स्यादिति भावः । प्रतिबन्द्या स्वपक्षसमर्थनं तु न भवेदित्यतः

य कल्पते ॥" इति श्रीनृसिंहं प्रति प्रह्लादवाक्याच्च सङ्क्षीणभगवदितरवासनानामेकान्तिकभक्तानां भगवद्रूपतैव परमा मुक्तिर्न तु तत्सेवेति प्रतीयत इति चेत् । न। नह्येकान्तिकभक्तोऽपि भगवानेव भवति, भगवांस्त्वेक एवेति श्रुतिस्मृतिपुराणा-

---

ध्यान्निर्विशेषमात्मतत्त्वमवबोधयतीत्येतावता किमायातं, गङ्गापदं साक्षात्तीरेऽसम्बद्धं स्वार्थसान्निध्यात्तीरं बोधयतीत्युक्ताविव लक्षणैव समापतति । किमनया प्रतिबन्द्या, मामित्येतत्सङ्गम्यताम् । अपहतपाप्मत्वादिगुणाष्टकतः समानधर्मिण्यक्षरे प्रवर्तमानं सङ्गच्छत एव, स्वार्थसधर्मिणि प्रवृत्तिः समुचिता नाम शब्दस्य, तत्सिद्धमक्षरप्राप्तिरपरेति । "विशेषो यस्मिन्न प्रणयरसभङ्गो यदुदये प्रमाणानां साक्षात्कथमपि गतिर्यत्र न भवेत् । यतो दूरे भक्तिः किल फलमिदं तस्य तु मुखे निमित्तं विज्ञाने यदि भवति भक्तिर्व्यवहृतेः ॥ १ ॥ अहो तत्त्वज्ञानां सरणिरियमन्यैव यदमी वदन्त्येवं प्राज्ञा वयमिव न तेऽव्यक्तमतयः ॥ अये नाथ श्रीमंस्तव चरणसेवारसधनान्महानन्दादन्यद्गमय ननु मासान्गमय तान् ॥ २ ॥ परं सर्वसात्त्वां पतिमखिललोकस्य च विदन् जरामृत्युत्रस्तस्तदपनयनैकान्तहृदयः । समानं ब्राह्मं तद्यदपहत-

---

स्वपक्षे गतिमाशङ्कापूर्वकमाह—**किमनयेत्यादिना** । परोपहासगर्भं कैवल्यनिरासं श्लोकरूपेणोपसंहरति—**विशेष इत्यादिना** । अयमर्थः—परपक्षानुवादोऽयम् । इदं किल फलम्—किलेत्यसम्भवो व्यज्यते । मन्यन्त इति यावत् । अविद्यानिवृत्तिः पुरुषार्थ इति वदता अविद्या चेन्न निवर्तेत का हानिरिति पृष्टे तिरोहितमात्मस्वरूपं न प्रकाशेत, तत्प्रकाशनाय तन्निवृत्तिरपेक्ष्यत इति वक्तव्यम्, तथाचान्ततः फलमात्मस्वरूपावबोध इत्युक्तं भवति, आत्मस्वरूपं चावबोधरूपमेवेति नात्मस्वरूपादतिरिक्तं किमपीत्यात्मैवाद्वितीयं फलं पर्यवस्यतीति । फलं चेदफलाद्विशेषवद्दृष्टम्, इदं तु निर्विशेषं कथं वा फलं मन्यन्त इत्युपहासगर्भमाह—**विशेषो यस्मिन्नेति** । प्रणयरसभङ्गो यदुदये—यस्य निर्विशेषात्मस्वरूपस्योदये—प्रकाशे । प्रणयरसस्य—ईशेशितव्यभोक्तृभोग्यादिविकल्पसमयेऽनुवर्तमानस्य भङ्गः—विलयः । भवतीति शेषः । ईदृशमपि फलं स्यादित्युपहासः । केनेदमवगम्यत इति पृष्टे प्रमाणागम्ये का प्रमाणचर्चेति प्रतिवदन् किं फलं साधयतीत्युपहासेनाह—**प्रमाणानामिति** । यतो दूरे भक्तिः—ज्ञानमेव तु साक्षादपवर्गसाधनम्, ज्ञानं च तन्निर्विशेषात्मापरोक्षलक्षणम्, तत्रोपासनानि द्वारभूतानि, तत्र भक्तिरुपकरोतीति वदतां हि निर्विशेषात्माविर्भावलक्षणफलतो व्यवहिता नाम नितरां भक्तिरिति भावः । यदि भवति भक्तिर्व्यवहृतेः—भक्तिरिति वाङ्मात्रं केवलं व्यवहारमात्रे, वस्तुतो न भक्तिरपि तथ्यभूता, हन्तैषां भक्तिमहिमेत्युपहासे । एवं भगवन्तं भक्तिं चान्ततो व्यलीकयन्तः सर्वप्रमाणागोचरमेव किमपि वस्त्विति व्याहृतं वदन्तः पुरुषार्थमपि दुर्निरूपमेव तर्कयन्तः प्रथमपदमधिरोढुं तत्त्वदर्शिनां परिषदि प्रवर्तन्त इत्युपहासं व्यञ्जयन्नाह—**अहो तत्त्वज्ञानामिति** । तत्त्वज्ञानाम्—तत्त्वदर्शिनाम् । अन्यैव—लोकशास्त्रविरुद्धैव । भक्तिरसिकेभ्यो विशेषमाह—**वयमिव न तेऽव्यक्तमतय इति** । अव्यक्ते—आत्मस्वरूपे, मतिः—अभिमतिर्येषाम् । अव्यक्ता मतिर्येषामिति वा । मन्दप्रज्ञा इत्येतत् । **मासान्गमय तानिति** । यदि स्यात्पराभिमतं परानेव तान्गमय, अस्माकं तु त्वत्परिचरणमहानन्द एवास्त्विति भक्तिरसिकता गम्यते । स्वसिद्धान्ताभिमतकेवलस्वरूपमाह—**परमिति** । तत्रैव—न परमात्मस्वरूपे । अनन्यप्रयोजनस्य

दिषु बहुधा प्रतिपादितत्वात् । किन्तु भगवत्प्रसादात्तत्समानैश्वर्यमेव प्राप्य तत्सेवानिरतो भवतीति सिद्धान्तः । आत्मभूयाय—मदैक्याय, मत्समानैश्वर्यायेति यावदिति, भगवत्त्वाय—तत्समानैश्वर्यायेति च श्रीधरस्वामिकृततद्व्याख्यानात् । "निरञ्जनः परमं साम्यमुपैती"त्यादिश्रुतेः । "इदं ज्ञानमुपाश्रित्य मम साधर्म्यमा-

पाप्मेति विदितं निजं दृष्ट्वा कश्चित्सपदि ननु तत्रैव रमते ॥ ३ ॥ भगवच्छेषतैकात्मस्वरूपैकरतिस्तु यः । नान्यस्मै स्पृहयेज्जातु शेषिसेवारसात्प्रियात् ॥४॥ गम्यताम्—अवधार्यताम् । बहवो जरामरणसन्त्रस्ता मुमुक्षवस्तन्निवृत्तिमात्रेण कृतकृत्यंमन्याः स्वात्मनि निरता अक्षरलाभमात्रमर्थयन्ते नाम । अक्षरानन्दोऽपि नाल्पानन्दः, नित्यो ह्ययम्, अतिशेते तु हैरण्यगर्भादीनानन्दान्, तत्परमात्मोपासनाङ्गतया प्रत्यगात्मचिन्तने प्रवृत्तस्य कदाचिद्भवेदप्यक्षरे स्वादः, इदमेव च प्रच्यवनपदं परब्रह्मसौधमधिरोहतः, तज्जागरूकैर्भाव्यमस्यचरणनलिनरसिकैरस्मिन्पदे इति भावः । आजानसिद्धमात्मनः परमात्मशेषत्वं शेषिणश्च स्वाभाविकानवधिकातिशयानन्दमखिलकल्याणगुणाकरतामविच्छिन्नतच्चरणनलिनसेवारसं च परमपुरुषार्थं विभावयता तदुचित एव साधने यतितव्यमप्रमत्तेनेति समुदिताशयः । समुचितसाधनं तु कृष्णे भक्तिरित्युक्तं प्राक् ।

अत्रेदं बोध्यम्—भक्तिः स्वरूपत एकाऽपि भावभेदेन साध्यसाधनभावमापन्ना भिद्यते । तत्र भगवत्प्राप्तये साधनतया परिगृह्यमाणा अहरहर्योगकालेऽनुष्ठीयमानध्यानयोगनिष्पाद्यपरिपाकविशेषा साधनभक्तिरुच्यते । इयं च कर्मयोगज्ञानयोगावपेक्षते । तदियं

स्वरूपमाह—भगवदिति । शेषिसेवारसात्—शेषिणः—परमात्मनः सेवारसात् । गम्यतामित्यनेन गम्यमानं भावमाह—बहव इत्यादिना । एतेन—गम्यतामिति निर्देशो व्यर्थः, उपदेशो हि श्रोतॄनवगमयत्येवार्थमिति शङ्का परास्ता । मुमुक्षायां हेतुरुच्यते—जरामरणसन्त्रस्ता इति । एतेनानन्दमयस्य परब्रह्मणो लाभे नोत्कण्ठेति व्यज्यते । कृतकृत्यंमन्यमानाः—भारापगमे सुखी संवृत्तोऽहमितिवत् । स्वात्मनि निरताः—प्रकृतिवियुक्तशुद्धात्मस्वरूपे निरताः, तदेकध्यानपराः । इदं चाक्षरलाभे—प्रकृतिवियुक्तशुद्धात्मस्वरूपलाभे हेतुकीर्तनपरम् । अर्थयन्ते नामेति । एतेनोक्तसेवारसलक्षणमोक्षार्थिनो विरला इत्युक्तं भवति । ये पुनः सेवारसलक्षणमोक्षार्थिनस्तेषामपि कदाचित्ततः प्रच्यवसम्भावनाऽस्तीत्यत आह—अक्षरानन्दोऽपीत्यादिना । अल्पत्वे निमित्तं कालतः परिच्छित्तिः, अनुत्कर्षश्च, तदुभयमक्षरानन्दे नेत्याह—नित्यो हीति । कालापरिच्छित्तिः, अतिशेते त्वित्यनुत्कर्षव्यावृत्तिः । ननु परमात्मोपासकस्य कः प्रसङ्ग आत्मचिन्तने इत्यत आह—परमात्मोपासनाङ्गतयेति । ननु प्रच्यवो हि सम्भाव्यते प्रायः, कथं तदुत्तरणमित्याशङ्कायामुपायं प्रदर्शयन्समुदिताशयमाह—आजानसिद्धमित्यादिना । विभावयतेति । एवं विभावनमन्वहं क्रियमाणमप्रच्यवसाधनमित्याशयः । तदुचित एव साधन इति । किं तत्साधनमित्यत आह—समुचितसाधनं त्विति ।

प्रासङ्गिकं भक्तौ विशेषं निरूपयति—अत्रेदमिति । अत्र—मुक्तिस्वरूपविवेचनप्रकरणे । इदं—भक्तिस्वरूपविवेचनम् । अनेन प्रसङ्गसङ्गतिर्ज्ञापिता । यथा अक्षराविर्भावलक्षणात्प्रकृतिबन्धविमोक्षात्कृष्णसेवालक्षणमोक्षोऽतिशयित इति विवेचनं तथा साधनभक्तेः साध्यभक्तिरतिशयितेति विवेचनं फलकोटाविवोपायकोटावप्यवश्यापेक्षितमिति भावः । स्वरूपत एकापीति । यथाऽग्निहोत्रस्य स्वरूपत

गताः” इत्यादिस्मृतेश्च । साम्यता चात्रालौकिकाणिमाद्यैश्वर्यब्रह्मयाथात्म्यानुभवभोगादिनैव न तु जगन्नियन्तृत्वादिनापीति ज्ञेयम् । “जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च” “भोगमात्रसाम्यलिङ्गाच्च” इति न्यायाभ्याम् । व्याख्यातौ चैतौ श्रीरामानुजाचार्यैः श्रीभाष्ये—“जगद्व्यापारः–निखिलचेतनाचेतनस्वरूपस्थितिप्र-

---

तदितिकर्तव्यताका । तयोरनिष्पत्तौ च नास्या निष्पत्तिः । या पुनः परमात्मैव स्वयंप्रयोजनत्वेनाश्रीयमाणा तद्भक्तिः सेयमुच्यते साध्यभक्तिरिति । इह तु न कर्मज्ञानयोरपेक्षा, भगवत एवोपायत्वात् । भगवदेकोपायनिष्ठा हि कामयन्ते भक्तिं परमप्रयोजनतया । भगवतः सिद्धस्योपायस्य न तदपेक्षा । भगवन्तमेवोपायतयाऽऽश्रितानामनन्यगतीनां कर्मयोगज्ञानयोगनिरपेक्षं भक्तिविशेषं परमप्रयोजनतया काङ्क्षितं स्वयं प्रयच्छतीति यावत् । तदेवं साध्यभक्तिनिष्ठानां न कदाचित्कैवल्यगर्तप्रस्खलनावसरः । ये पुनः साधनभूते भक्तियोगे प्रवृत्तास्तेषामङ्गभूतप्रत्यगात्मावलोकनफलकज्ञानयोगे प्रवृत्तानां सम्भाव्यते तदवसरः ।

प्रसङ्गादत्र साध्यभक्तेः प्रक्रिया निरूप्यते—इह जगति संसारचक्रे भ्राम्यमाणः पुरुषः केनापि भाग्यपरिपाकेन मानुषीं योनिमापन्नः, तत्रापि—“जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥” इत्युक्तप्रकारेण भगवत्कटाक्षलब्धपरमपुरु-

---

एकरूपस्यापि जीवनाधिकारकामनाधिकारभेदेन नित्याग्निहोत्रात्मना काम्याग्निहोत्रात्मना च विभेदस्तथेति भावः । तत्र साधनभक्तिस्वरूपमाह—तत्रेत्यादिना । ध्यानयोगनिष्पाद्यपरिपाकविशेषा–ध्यानयोगः–तैलधारावदविच्छिन्नं प्रीतिरूपं परमात्मनोऽनुस्मरणम्, तेन निष्पाद्यः परिपाकविशेषः–दर्शनसमानाकारताऽत्यर्थप्रीतिरूपता च, तथाविधः परिपाकविशेषो यस्याः सा साधनभक्तिः । वक्ष्यमाणसाध्यभक्तेरस्या वैलक्षण्यं प्रदर्शयति—इयं चेत्यादिना । चस्त्वर्थे । कर्मयोगज्ञानयोगावपेक्षत इति । फलसङ्गकर्तृत्वत्यागपूर्वकमन्तर्गतात्मज्ञानमीश्वराराधनबुद्ध्याऽहरहरनुष्ठीयमानं वर्णाश्रमोचितं कर्म कर्मयोगः । प्रकृतिविलक्षणज्ञानैकघनस्वात्मस्वरूपानुस्मरणमहरहर्योगकालेऽनुष्ठीयमानं ज्ञानयोगः । तदितिकर्तव्यताका–तौ–कर्मयोगज्ञानयोगौ इतिकर्तव्यता–अङ्गं यस्याः । कस्मादङ्गत्वमत आह—तयोरनिष्पत्तौ चेति । साध्यभक्तिस्वरूपमाह—या पुनरित्यादिना । तद्भक्तिः–तस्य–परमात्मनो भक्तिः । साधनभक्तेः साध्यभक्तौ विशेषमाह—इह त्विति । ननु कुतो नापेक्षा ? तत्राह—भगवत एवोपायत्वादिति । उपायस्य हीतिकर्तव्यतापेक्षा; न फलस्य, उपायत्वं तु भगवत एवाभिमतमेभिरिति भावः । तदिदमुपपादयति—भगवदेकेति । भगवानेवोपायो नान्य इति येषां निष्ठा ते हीत्यर्थः । परमप्रयोजनतयेति । परमात्मानमिवेति शेषः । भगवतः सिद्धस्येति । यैरयमुपायतया वृतः स हि न साध्यो नित्यसिद्धत्वात्, येन साधनशरीरनिष्पत्तये कर्मयोगादीनामपेक्षा स्यादित्यर्थः । ननु नित्यसिद्धस्योपायत्वे सर्वेषामेव कुतो न फललाभः, सर्वान्प्रत्येव नित्यसिद्धत्वादित्याशङ्कां परिहरन्भावमाह—भगवन्तमेवेति । उपायतयाऽऽश्रितानामिति । नित्यसिद्धस्याप्युपायस्याश्रयणं ह्यपेक्ष्यते नातोऽन्येषां फललाभप्रसङ्ग इति भावः । अनन्यगतीनामिति । एतेन–यदेषान्यत्राङ्गं कर्मयोगादि तद्विधुरतैवेह सिद्धोपायपरिग्रहेऽङ्गमिति कर्मादीनामपेक्षा विरुद्धैवेति गम्यते । साध्यभक्तौ साधनभक्तेर्विशेषान्तरं प्रदर्शयति—तदेवमित्यादिना । ज्ञानयोगस्य कर्तव्यतामसम्भावादिति भावः । मानुषीं योनिमिति । इदं शास्त्राधिकारयोग्यजन्मोपल-

वृत्तिभेदनियमनं, तद्वर्जं निरस्तनिखिलतिरोधानस्य निर्व्याजब्रह्मानुभवरूपं मुक्तस्यैश्वर्यम्। कुतः? प्रकरणात्—निखिलजगन्नियमनं हि परंब्रह्म प्रकृत्याऽऽम्नायते—"यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मे"ति। यद्येतन्निखिलजगन्नियमनं मुक्तानामपि

---

पार्थरुचिः, शास्त्रदृष्टेषु कर्मयोगज्ञानयोगभक्तियोगेषु अज्ञानाशक्त्यादिभिरनधिकारमात्मनः पर्यालोच्य स्वाभाविकशेषत्वरसिक्यानुगुणप्रपदनमार्गे भाग्यविशेषेण सञ्जातरुचिः, सदा स्वाम्याज्ञानुवर्तनैकशीलतया प्रतिकूलतो निवृत्तः, प्रवृत्तश्चानुकूलसङ्कल्पे महाविश्वासपूर्वकमात्मनः स्वामिनं सर्वज्ञं सर्वशक्तं सत्यसङ्कल्पं वात्सल्यादिसकलकल्याणगुणपरिपूर्णं परमपुरुषं भगवन्तं नारायणं शरणमुपगम्य तत्प्रसादतः प्राप्य तस्मिन्स्वयम्प्रयोजनभूतं भक्तिरसं कृतार्थः, तच्छेषत्वैकरसात्मस्वरूपानुसन्धानतो वर्णाश्रमोचितान्यपि कर्माणि स्वाम्याज्ञाकैङ्कर्यरूपाणि स्वयम्प्रयोजनबुद्ध्या कुर्वन्, शरण्यप्रसादतः प्रक्षीणप्रारब्धप्रभृतिसकलकर्मसङ्घातः, शरीरपातमात्रे कृतप्रतीक्षः, तच्छरीरपातसमनन्तरमेव नित्यमुक्तानुपक्तचरणनलिनं क्षराक्षरातीतं पुरुषोत्तमं प्राप्याविर्भूतस्वस्वरूपः, अविच्छिन्नतदीयकैङ्कर्यरूपसाम्राज्यरूपमुक्तिश्रियमनुभवतीति। सोऽयं मुक्तौ पन्थाः प्रपत्त्यादिशब्दैस्तत्र तत्र प्रतिपाद्यते। प्रपत्तिर्नाम—आश्रयणविशेषः। स चोपायतयाऽऽश्रयणम्। यदि निष्कृष्य निरूप्यते तदा—आत्मनः परित्राणे कामपि गतिमलभमानेन वात्सल्यादिगुणसागरस्य पुरुषोत्तमस्य सन्निधौ क्रियमाणा 'त्वमेवोपायभूतो भवे'ति प्रार्थना प्रपत्तिरित्युक्तं भवति। इयमेव शरणागतिरित्युच्यते। तथाच वचनम्—"अनन्यसाध्ये स्वाभीष्टे महाविश्वासपूर्वकम्। तदेकोपायतायाच्ञा प्रपत्तिः शरणागतिः॥" अत्र वचने प्रपत्तिः शरणागतिरिति पर्यायपाठः। तदेकोपायतायाञ्चेति प्रपत्तेः स्वरूपमुक्तम्। वचनान्तरं च—"अहमस्म्यपराधानामालयोऽकिञ्चनोऽगतिः। त्वमेवोपायभूतो मे भवेति प्रार्थनामतिः॥ शरणागतिरित्युक्ता सा देवेऽस्मिन्प्रयुज्यताम्॥" इति। तथाच प्रार्थनाविशेषः प्रपत्तिरित्युक्तं भवति। इदमत्र बोध्यम्—न केवलमुपायत्वयाञ्चया कृत-

---

क्षकम्। अज्ञानाशक्त्यादिभिरिति। ज्ञानशक्त्यादिसम्भावनायां तु नाधिकरः प्रपदन इति गम्यते। शेषत्वरसिक्यानुगुणप्रपदनमार्ग इति। शेषो हि परार्थः, तदेकशेषस्तु तदेकपरतन्त्रः, परमात्मैकशेषत्वस्वरूपमात्मनश्चेद्रहस्यं जानीयात् न प्रवर्तेत स्वयमर्थसाधनाय, अपि तु तमेव शरणमुपगच्छेदित्याशयः। प्रतिकूलतः—प्रतिषिद्धाचरणतः। अनुकूलसङ्कल्पे—विहितसङ्कल्पे। महाविश्वासः—रक्षिष्यतीति महाविश्वासः। नन्वेवं कृतार्थस्य वर्णाश्रमादिकर्मोच्छेदप्रसङ्ग इत्याशङ्कायामपगतोऽपि प्रकारान्तरेण प्राप्त इत्याशयेनाह—तच्छेषत्वैकरसेति। ननु विद्यया हि सर्वकर्मक्षयः श्रूयते; त्यक्तकर्मज्ञानोपायस्य कथं कर्मक्षय इत्यत्राह—शरण्यप्रसादत इति। अयं भावः—विद्याऽपि न साक्षात्कर्मनाशने समर्था, विद्यया प्रसन्नो भगवानेव नाशयति, तदिह सुघटं सर्वकर्मप्रणाशनमिति। प्रपत्त्यादीति। आदिशब्दात् शरणागत्यादिशब्दपरिग्रहः। प्रपत्तिशब्दस्य कथमस्मिन्नर्थे प्रवृत्तिस्तदुपपादयति—प्रपत्तिर्नामेत्यादिना। उपायतयाऽऽश्रयणमित्यस्य भावमाह—यदीत्यादिना। ननु शरणागतिशब्देन तत्र तत्र व्यवह्रियते सा किमन्येत्याह—इयमेवेति। प्रपत्तिशरणागतिशब्दयोः पर्यायतां ज्ञापयितुमाह—वचनान्तरं चेति। ननु

साधारणं स्यात्ततश्चेदं जगदीश्वरत्वरूपं ब्रह्मलक्षणं न सङ्गच्छते, असाधारणस्य हि लक्षणत्वम्। तथा "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत" "ब्रह्म वा इदमेकमेवाग्र आसीत् तदेकं सन्न व्यभ-

---

कृत्यता । किन्तूपायत्वप्रार्थनापूर्वं भरन्यासोऽप्यपेक्ष्यते । भरन्यासो नाम–समर्थोऽहमिदमनेन साधयामीति स्वातन्त्र्याभिमानेन स्वशिरस्यारोपितस्य भरस्य स्वस्याऽऽकिञ्चन्यादिकमनुसन्धाय 'त्वमेवोपायभूतो मे भवे'ति प्रार्थनापूर्वकं "तदहं तव पादपद्मयोरहमद्यैव मया समर्पित" इत्याद्युक्तरीत्या परस्मिन्नर्पणम्। अत एव शरणागतिस्वरूपनिरूपणाय प्रवृत्ते "गोप्तृत्ववरणं तथा। आत्मनिक्षेपकार्पण्ये षड्विधा शरणागति"रिति वचने आत्मनिक्षेपोऽपि गृहीतः । न्यास एव त्वात्मनिक्षेपः। "आत्मात्मीयभरन्यासो ह्यात्मनिक्षेप उच्यते" इति वचने व्यक्तम्। इत्थं च प्रपत्तेः प्रार्थनापूर्वकात्मनिक्षेपरूपत्वाद्विशेषणांशादरेण शरणागतिशब्दः, विशेष्यांशादरेण न्यासशब्दश्च प्रयुज्यते। सिद्धमेतावता प्रपत्तिन्यासशरणागतिशब्दानां पर्यायता। अत एव "निक्षेपापरपर्यायो न्यासः पञ्चाङ्गसंयुतः। प्रपत्तिं तां प्रयुञ्जीत स्वाङ्गैः पञ्चभिरावृताम्" इति स्मर्यते। अनेन वचनेनाङ्गसम्बन्धो विज्ञायते। विवेचयन्ति चाङ्गविशेषान्वचनानि—"आनुकूल्यस्य सङ्कल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः। प्रपत्तिरानुकूल्यस्य सङ्कल्पोऽप्रतिकूलता ॥ विश्वासो वरणं न्यासः कार्पण्यमिति षड्विधा।" इत्यादीनि । आनुकूल्यस्य सङ्कल्पः–योऽयमनेनोपायतयाऽऽश्रितस्तदनुवर्तने सङ्कल्पः। न ह्यगतिकस्य स्वशरणानुवर्तनादनुकूलमन्यदिह विद्यते। यमसौ शरणमुपयाति तस्य सेवायां रतेन भाव्यमित्युक्तं भवति। प्रातिकूल्यस्य वर्जनम्–तदनभिमततो निवृत्तिः । एतेन–भगवन्तं शरणं गच्छता भगवदाज्ञारूपशास्त्रदृष्टेषु निषेधतो निवृत्तेन विहितेषु यथायोग्यं कैङ्कर्यवृत्त्याऽन्वितेन च भाव्यमन्यथा तदाज्ञानुवर्तनासिद्ध्या प्रपत्तिभङ्गः स्यादिति सिद्धम् । रक्षिष्यतीति विश्वासः–स्वस्याघभूयस्त्वमभिलषितपरमपुरुषार्थगौरवं चानुस्मृत्य स्यान्नाम संशयः 'कथमयं मां रक्षे'दिति, एवं सत्युपायतश्च्यवेदयं, तदपेक्ष्यते महाविश्वासः 'अयं नः स्वामी वत्सलः परमोदारो रक्षिष्यत्येव मा'मिति । गोप्तृत्ववरणम्–त्वमेवोपायभूतो मे भवेति प्रार्थना, परमोदारोऽपि

---

वचने आत्मनिक्षेपशब्दः श्रूयते न तु न्यासशब्दः, अत आह—न्यास एव त्वात्मनिक्षेप इति । तत्र प्रमाणमाह— आत्मात्मीयेति। न्यासशरणागतिशब्दयोः पर्यायतां सङ्गमयति—इत्थं चेति। प्रपत्तिरानुकूल्यस्येति। प्रपत्तिः षड्विधेत्युत्तरेण सम्बन्धः। वचनार्थमाह—आनुकूल्यस्येत्यादिना । आनुकूल्यस्य प्रतिसम्बन्धिनमाह—योऽयमिति । नन्वनेनैव प्रतिसम्बन्धिना भाव्यमिति कोऽयं नियम इत्यत्राह—न ह्यगतिकस्येति । तदनभिमततः–योऽयमुपायतया वृतः सर्वेश्वरस्तस्य यदनभिमतं तस्मात्। ननु किं तस्यानभिमतमभिमतं वा यतो निवर्तेत यत्र प्रवर्तेत, तदाह—एतेनेति । यथायोग्यमिति । स्वाधिकारानुगुणम्, काम्यवर्जमित्येतत्। कैङ्कर्यवृत्त्येति । एतेन साधनत्वबुद्धिव्यवच्छेदः। ननु किं विश्वासेनेत्यत्राह—स्वस्येति। एवं सति–संशये सति । उपायतः–स्वीकृतात्सिद्धोपायात्। संशयो हि भगवतः सामर्थ्ये वा कृपायां वा न्यूनताबुद्ध्या भवति, तथा सति नानुग्रहोऽस्मिंस्तस्य भवेदिति भावः । ननु किं प्रार्थनया, उदारो भगवानप्रार्थित एव तत्तत्फलं तेभ्यस्तेभ्यः किमिति न प्रयच्छेदित्यत्राह—परमोदा-

वत् तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवक्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति" "आत्मा वा इदमेक एवाग्र आसीत् नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति स इमान् लोकानसृजत". "एको ह वै

---

परमपुरुषो यद्यसौ चेतनो न प्रार्थयेत कथमयं स्वयमेवोपायो भूत्वा परमपुरुषार्थं प्रयच्छेत्, यो यो यद्यत्कामयते तत्तद्वितरणे खलु सङ्कल्पो भगवतः, दातुश्चायमेव स्वभावः समुचितः, नहि किराती गुञ्जापुञ्जेनेव रत्नेन राजार्हेणापि तृप्यति, तस्यै तद्वितरणं दातुरनभिज्ञतामेव ज्ञापयेत्, तदवश्यमपेक्ष्यते प्रार्थना । अन्यथा लोकमर्यादाभङ्गश्च । अत एव वचनम्—"रक्षापेक्षां प्रतीक्षते" इति । आत्मनिक्षेपः–व्याख्यातोऽयम् । कार्पण्यम्–दैन्यम्, आकिञ्चन्यमिति यावत् । यावदुपायान्तरेष्वन्वयः स्यादस्य तावदस्योपायस्य सिद्धिर्न स्यात्, अकिञ्चनानामेव ह्ययं पन्थाः । "षड्विधा शरणागति"रिति शब्दाच्छरणागतौ प्रकारभेदः षोढेति न भ्रमितव्यम् । अङ्गाङ्गिभावो बोध्यः । आनुकूल्यसङ्कल्पाद्यङ्गपञ्चकयुक्तात्मनिक्षेपरूपा शरणागतिरिति । अत एव वचनम्—"कृतानुकूल्यसङ्कल्पः प्रातिकूल्यं विवर्जयन् । विश्वासशाली कृपणः प्रार्थयन्नक्षणं प्रति । आत्मानं निक्षिपति यत् विभ्रदेवस्य पादयोः सा प्रपत्ति"रिति । एवमेवम्भूतः सन्नात्मानं निक्षिपतीति यत्सा प्रपत्तिरिति निर्देशादङ्गाङ्गिभावो विज्ञायते । ननु–कथमयं चिरकालार्जितपुण्यपापसञ्चयः शास्त्रदृष्टतत्परिहरणोपायमननुष्ठाय प्रार्थनामात्रेण संसारसागरं समुत्तरतीति । शास्त्रदृष्टोपायानां फलसाधनत्वं वा कथमिति पर्यालोचनीयम्, नह्यनपेक्ष्य कञ्चित्सर्वज्ञं सर्वशक्तं फलदं स्वयमेव फलं साधयति, तेषामचेतनत्वेन तदसामर्थ्यात् । यश्चेहानुष्ठीयमान उपायोऽपूर्वं किञ्चिदुत्पाद्य तद्द्वारा पारलौकिकं फलं साधयतीति तु मीमांसकानां समयः । अयं च न त्रय्यन्तनिष्णातानामभिमतः, सर्वस्य परमपुरुषप्रीणनद्वारा हि

---

रोऽपीत्यादिना । ननु सर्वज्ञोऽयं तत्तदाशयमालक्ष्य तत्तत्प्रियं किमिति न प्रयच्छेदित्यत्राह—अन्यथेति । ननु किमाकिञ्चन्येनेत्यत्राह—यावदित्यादिना । षड्विधेत्यस्य भ्रमापनोदनपूर्वकं भावमाह—षड्विधेत्यादिना । तेषु कान्यङ्गान्यङ्गी क इत्यत्राह—आनुकूल्येति । नन्वन्यथा किं न स्यादित्यत्राह—अत एवेति । शङ्कते—नन्विति । तत्परिहरणोपायम्–कर्मज्ञानादि । प्रार्थनामात्रेणेति । प्रार्थना हीच्छाविशेषः, नहि यत्नानपेक्षेच्छामात्रं लोके साधनं दृष्टमिति भावः । सागरशब्देन साधनगौरवापेक्षा गम्यते । समाधत्ते—शास्त्रेत्यादिना । इह–अस्मिन्लोके । उपायः–ज्योतिष्टोमादिः । पारलौकिकं फलं–स्वर्गादि । मीमांसकानाम्–कर्ममीमांसकानाम् । अयमेषां भावः—कोऽयं नियमश्चेतनेन फलदेन भाव्यमिति, साधनानामयं स्वभावः, फलन्ति कालेनेति, न किं बीजं कालेनाङ्कुरीभवति, न किं दुग्धं कालेन दधि भवति, न किं शाल्यः कालेन फलन्ति, न किं कर्षणादि कालेन फलति, न किमौषधं कालेनानामयमादधाति, तदेवं दृष्टफलसाधनानामिवादृष्टफलसाधनानामप्ययमेव स्वभावः, न चाशक्यं कर्माशुनैव विनश्यत्कालान्तरीयफलाय कथं प्रभवेदिति । कल्पते हि कर्षणादि कालान्तरीयफलाय, ननु तत्र कर्षणाहितातिशयानि बीजादीनि सन्ति द्वारभूतानि चेदिहापि कर्मभिर्निष्पादितः पुरुषसम्बद्धोऽपूर्वलक्षणोऽतिशयोऽस्तीति नाशङ्कावकाश इति । त्रय्यन्तनिष्णातानामिति । एषामयमाशयः—न किमपि साधनं चेतनानधिष्ठितं फलाय प्रभवतीत्यन्यत्र प्रपञ्चितम् । यदप्यपूर्वं द्वारं कल्प्यते तत्प्रत्यक्षश्रुतिबाधितम्,

नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्निर्न सोमो न सूर्यः स एकाकी न रमेत तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि" इत्यादिषु "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरः" इत्यारभ्य "य आत्मनि तिष्ठन्" इत्यादिषु च निखिलजगन्नियमनं परमपुरुषं प्रकृत्यैव श्रूयते। असन्निहितत्वाच्च–

फले उपयोगस्तदभिमतः। तदिदं सूत्रकारेण—"फलमत उपपत्तेः" इति समर्थितम्। इत्थं च पुण्यं पापमिति नापूर्वं किञ्चित्, किन्तु भगवतः सङ्कल्पविशेष एव–एनमपराधिनमधो नयामि, एनं सुकृतिनमुन्नयामीति। तथा च कर्मयोगादीनां भगवतः प्रसादसम्पादने उपयोगः सिद्धः। उपायत्वं तु मुख्यं भगवति स्थितम्। तदयमेव मुख्योपायभूतस्तेन तेन कर्मयोगादिना प्रसदनोपायेन प्रसन्नः फलं प्रयच्छति। पुण्यपापयोरपगमश्च संसृतिसम्पादकसङ्कल्पाकरणमेव। यदा मुमुक्षुर्मुक्तिसाधनतया भगवदाज्ञप्तमनुतिष्ठति तदा भगवान् मोक्षायैव सङ्कल्पं करोति न त्वन्यथा। इयमेव पुण्यपापनिवृत्तिरुच्यते। यदाऽयं घनकरुणानिधिः श्रीनिधिरकिञ्चनमात्मैकशरणमवलोक्य प्रसन्नो भूत्वा निजपदं प्रयच्छति को वा दण्डेन वारयेत्तम्। तस्मादीदृशे सिद्धोपायवरणरूपे न क्षुद्रजनाशङ्कावकाशः। किञ्च–"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति गीतावचनेन प्रपदनस्य मायातरणोपायत्वं व्यक्तम्। तच्चोपपादयितव्यम्। कर्मयोगाद्युपायसम्पादकतया परम्परया तस्योपयोगस्तत्रोक्त इति चेत्। सत्यम्। तद्वा कथं, ईश्वरप्रसादद्वारा इति चेत्, तर्हि समर्थमन्ये तथा प्रसीदति चेत्, सर्वथाऽशक्ते उपायान्तररहिते भवदवानलतो भीतभीते आत्मैकशरणे कुतो न प्रसीदेत् कुतो वा न प्रयच्छेन्निजपदम्। स किमसमर्थः?

कर्मभिराराधितानां तत्तद्देवतानामेव प्रसन्नानां फलप्रदत्वश्रवणात्। श्रुतयश्च—"वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयती"त्याद्याः। वस्तुतो देवता अप्यस्वतन्त्राः परमात्मनः शरीरभूताः, न ते फलदानाय समर्थाः, अपि तु ब्रह्मात्मकत्वादेव तथा, तत्तदन्तर्यामी परमात्मैव तत्तच्छरीरद्वारेणाऽऽराधितस्तत्तदिष्टं प्रयच्छतीत्येतत्। अयमर्थः "चतुर्होतारो यत्र सम्पदं गच्छन्ति देवै"रिति श्रुत्या प्रतिपाद्यते। सर्वस्य परमात्मशरीरत्वमजानतां तत्तद्देवतानामेव फलप्रदत्वबुद्धिः, उपनिषद्भिस्तदर्थावधारणे च नं तद्भ्रमावकाश इति। अयमर्थः प्रागुपपादितः। नन्वस्ति पुण्येन पुण्यं लोकं पापेन पापमिति श्रौतो लौकिकश्च व्यवहार इत्यत्राह—इत्थं चेति। तथाच–सर्वेषामेवादृष्टफलसाधनानां परमपुरुषप्रीणनद्वारा फलसाधनत्वे स्थिते। कर्मयोगादीनाम्–अपवर्गसाधनानामपि। मुख्यम्–साक्षात्। तदेवं प्रसदनोपायत्वमात्रे साधनानां स्थिते आनुकूल्यादिविशिष्टप्रार्थनाविशेषस्य प्रसदनोपायता कुतो न स्यादित्याह—यदाऽयमित्यादिना। घनकरुणानिधिरिति प्रसादोपयुक्तगुण उच्यते। श्रीनिधिरिति पूर्वापराधविस्मरणोपयुक्तो गुणविशेष उच्यते। अकिञ्चनमात्मैकशरणमिति प्रसादपात्रतोपयुक्तो गुणविशेष उच्यते। प्रमाणप्रतिपन्नोऽयमर्थ इत्याह—किञ्चेति। अङ्गप्रपत्तिपरतया नयनमाशङ्कते—कर्मयोगाद्युपायेति। अभ्युपगम्य समाधत्ते—सत्यमिति। तथैवास्त्वित्यर्थः। समर्थमन्य इति। भगवाननुकूलो भवतु, अहं कालेन कर्मयोगज्ञानयोगभक्तियोगादिभिः साधनैरनुष्ठितैरपवर्गं साधयेयमिति सामर्थ्याभिमान उच्यते। तथेति। कर्मयोगाद्युत्पत्तिविरोधिपापनिर्हरणं यथा स्यात्तथा। परमात्मदास्यमेवात्मनां स्वरूपं परमात्मप्राप्तिलक्षणमेवापवर्गं परमात्मानं

न चैतेषु निखिलजगन्नियमनप्रसङ्गेषु मुक्तस्य सन्निधानमस्ति, येन जगद्व्यापारस्तस्यापि स्या"दिति । किञ्च—"ब्रह्मयाथात्म्यानुभवरूपभोगमात्रे मुक्तस्य ब्रह्मसाम्यप्रतिपादनाच्च लिङ्गाज्जगद्व्यापारवर्जमित्यवगम्यते "सोऽश्नुते सर्वान्कामान्सह

किंवा असर्वज्ञः? किंवा न वत्सलः? । ये पुनर्व्यवहारमात्राय सकलकल्याणगुणमीश्वरमभ्युपगम्य वस्तुस्थितौ तमवधूय निर्विशेषं ज्ञप्तिमात्रमातिष्ठन्ते तेषां साक्षान्मोक्षसाधनत्वं प्रपदने दुर्लभम् । सर्वज्ञादिसकलकल्याणगुणसागरं परात्परं सर्वशेषिणं त्र्यन्तगम्यं परब्रह्मभूतं पुरुषोत्तमं नारायणं स्वामिनमभ्युपगच्छतां तच्छरणागतेः किंवा दुर्लभम् । प्राचीकशच्च भगवांश्चरमश्लोकेन गीतायामिममनुत्तमं साक्षान्मुक्तिपथम् । तथाच वचनान्तराणि—"शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिताः । तेऽपि मृत्युमतिक्रम्य यान्ति तद्वैष्णवं पदम् ॥ अनन्तज्ञानशक्त्यादिकल्याणगुणसागरे । परे ब्रह्मणि लक्ष्मीशे मुख्योऽयं सर्वसिद्धिकृत् ॥ प्रशासितुरशेषाणामात्मनां परमात्मनः । नहि प्रसादनं विष्णोरन्यदात्मार्पणादृते ॥ अहमस्मि तवैवेति प्रपन्नाय सकृत्स्वयम् । देवो नारायणः श्रीमान् ददात्यभयमुत्सुकः ॥" इत्यादीनि । अर्थश्च स्फुटः । श्रुतावपीदं श्रूयते—"यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" "न्यासमेषां तपसामतिरिक्तमाहु" रिति ।

अथ साधनान्तरतो विशेषोऽत्र दृश्यते । तत्र सर्वाधिकारित्वमेको विशेषः । मोक्षसाधनतया वेदान्तोदिते ब्रह्मोपासने त्रैवर्णिकानामेवाधिकारो नान्येषामित्यपशूद्राधिकरणे समर्थितं नाम । अस्यां तु नाधिकारिनियमः । तथाच वचनम्—"प्राप्तुमिच्छन्परां सिद्धिं जनः सर्वो ह्यकिञ्चनः । श्रद्धया परया युक्तो हरिं शरणमाश्रयेत् ॥ ब्रह्मक्षत्रविशः शूद्राः स्त्रियश्चान्तरजास्तथा । सर्व एव प्रपद्येरन्सर्वधातारमच्युतम् ॥" "न जातिभेदं न कुलं न लिङ्गं न गुणं क्रियाः । न देशकालौ नावस्थां योगो ह्ययमपेक्षते ॥" इति । इमानि च वचनानि "केनोपायेन भगवन्निह सर्वेऽपि जन्तवः । प्राप्नुयुः परमां सिद्धिं सद्यो विगतकल्मषाः ॥" इति प्रश्नस्य प्रतिवचनरूपाणि । तदेभिर्वचनैः सर्वाधिकारता सिद्धा । अनुष्ठानमपि—न किं द्रौपदी शरणागतिमकरोद्वसनापहरणापदि, यद्यपि न मुक्तयेऽकारि, तथापि फलवैलक्षण्यमात्रमुपायस्तु स एव । एवं ग्राहाभिभूतो गजेन्द्रस्तिर्यग्जातीयोऽपि शरणागत्याऽलभताभीष्ट-

चानन्तकल्याणगुणसागरमिच्छतां प्रार्थनामात्ररूपेणानेन प्रपदनेन कथमपवर्गलक्षणमहाफलप्राप्तिरित्याशङ्का सुतरां नोचितेति ज्ञापयन्नाह—ये पुनरित्यादिना । नास्माभिरुत्प्रेक्षितोऽयं पन्थाः, किन्तु भगवता प्रकाशित इत्याह—प्राचीकशचेति । नहि प्रसादनमिति । उत्तममिति शेषः । ननु सर्वमिदेवार्थं दृष्ट इत्यत्राह—श्रुतावपीति ।

साधनान्तरतः प्रपदनस्योत्कर्षं निरूपयन्नाह—अथेत्यादिना । तत्र—विशेषेषु । न जातिभेदं—न जातिविशेषम् । ब्राह्मणेनैव भाव्यं नान्येनेत्यादिसङ्कोचो नेत्येतत् । न कुलम्—न कुलविशेषः । एवमुत्तरत्रापि । लिङ्गम्—वर्णाश्रमादेः । अवस्था—वार्धकादि । नन्विमानि वचनानि नापवर्गसाधनपराणि, अपि त्वल्पफलसाधनभूतप्रपदनपराणीत्याशङ्कां परिहरन्नाह—इमानि चेति । परमां सिद्धिम्—अपव-

ब्रह्मणा विपश्चिता" इति। अतो मुक्तस्य परमपुरुषसाम्यं सत्यसङ्कल्पत्वं च परमपुरुषासाधारणनिखिलजगन्नियमनश्रुत्यानुगुण्येन वर्णनीयमिति जगद्व्यापारवर्जमेव मुक्तैश्वर्य"मिति। यद्यप्यपहतपाप्मत्वादिः सत्यसङ्कल्पत्वपर्यन्तः श्रुतिप्रसिद्धो गुण-

मिति सुप्रसिद्धम्। राक्षसपुङ्गवो विभीषणश्च। इत्थं च वचनतोऽनुष्ठानतश्च सिद्धं सर्वाधिकारत्वम्। अथ स्वरूपपर्यालोचनायामपि सर्वेषामधिकारः सिध्यति, कस्याप्यसामर्थ्याभावात्। इह हि परिगृह्यमाण उपायः सर्वेश्वरः, स च सर्वेषां समः, तत्परिग्रहणमपि प्रार्थनामात्रं, तत्र तु चैतन्यमात्रमपेक्षते। यच्च कार्पण्यमाकिञ्चन्यानुसन्धानं तत्तु गत्यन्तरानर्हाणां सुगमं, तस्मादस्त्येवात्र सर्वेषामधिकारः। किञ्चानया प्रपत्त्या तत्तदभिलषितसिद्धिसम्भवात्सर्वफलसाधारण्यमस्योपायस्य, उपायान्तराणां तु न तथा, तस्मादभिलषिताखिलार्थदत्वमपरो विशेषः। एवं प्रपदननिष्ठस्य न साधनान्तरापेक्षा। कर्मयोगादिसाधनान्तरनिष्ठस्य चैतदपेक्षाऽस्ति। उक्तं च गीतायाम्—"मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इति। अन्यथा भगवन्मायायाः प्रबलत्वेन परःशतं क्रियमाणेनापीन्द्रियनिग्रहोपायेन तदसिद्धेः। उक्तं चोपनिषदि—"इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसश्च परा बुद्धिर्बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः॥" इति। इन्द्रियाणि वशीकार्याणि नाम, अर्थेषु सन्निकृष्टेष्विन्द्रियवशीकरणं न भवेत्, तद्वशीकार्यत्वे इन्द्रियेभ्योऽर्थाः पराः–प्रधानाः, अर्थानां वशीकरणं प्रथमं कार्यमिति यावत्। अर्थानां वशीकरणं नाम दूरीकरणम्। मनस्यवशीकृतेऽर्थवशीकरणेनापि फलं न, तस्मादवश्यं वशीकार्यं मनः, तन्मनो वशीकार्यत्वेऽर्थेभ्योऽपि प्रधानम्, एवं "मनसश्च परा बुद्धिरि"त्येवंक्रमेणोत्तरोत्तरं वशीकार्यत्वे प्रधानं कथयन्ती सती, अन्ते पुरुषः पर इति वशीकार्यत्वे परमपुरुषस्य प्राधान्यमाहेयं श्रुतिः। परमपुरुषस्य वशीकरणं प्रपदनमेव। तथा चानया श्रुत्या परमपुरुषप्रपदनं विनेन्द्रियजयो न भवेदित्युक्तं भवति। तस्मात्साधनान्तरनिष्ठानामेतदपेक्षत्वमस्याश्चेतरनिरपेक्षत्वमिति च विशेषः। तथाच वचनमपि—"अनेनैव हि कर्माद्या योगाः सिध्यन्ति योगिनाम्। सिद्धिर्न तद्व्यपेक्षास्य तस्मादेनं परं विदुः॥" इति। न केवलमुपायान्तरनिरपेक्षता, किन्तु ब्रह्मास्त्रशणवल्कलन्यायेनोपायान्तरासहिष्णुत्वमपि बोध्यम्। शणवल्कलबन्धनेन ब्रह्मास्त्रमहिमेवोपायान्तरसङ्गे सति प्रपदनमहिमाऽपगच्छेदिति यावत्। यावद्द्रौपदी, एते

गैम्। वचनानुष्ठानैः सर्वाधिकारमुपपाद्य, उपपत्त्या च सर्वाधिकारमुपपादयति—अथेति। सच सर्वेषां सम इति। आश्रयणीयत्व इति शेषः। "समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रिय"इति हि भगवतो वचनम्। विशेषान्तरमाह—किञ्चेति। विशेषान्तरमाह—एवमिति। साधनान्तरस्य प्रपदनापेक्षा न केवलं स्मृत्या प्रतिपाद्यते, किन्तु श्रुत्याऽपीत्याह—उक्तं चोपनिषदीति। श्रुतेरर्थमाह—इन्द्रियाणीत्यादिना। नन्वनया श्रुत्या वशीकार्यत्वे प्राधान्यं परमपुरुषस्योक्तमित्यस्तु; वशीकरणोपायस्तु नोक्त इत्यत्राह—परमपुरुषस्येति। अर्थसिद्धमेतदिति भावः। अत्रार्थे स्मृतीरुदाहरति—तथा च वचनमपीति। उपायान्तरासहिष्णुत्वं विशेषान्तरमाह—न केवलमित्यादिना। ब्रह्मास्त्रश-

गणो मुक्तस्याप्याविर्भूतो वर्ण्यते, तथापि तस्य तथाविधत्वमेव परमपुरुषायत्तं तत्स्थितिश्च, तस्माद्भगवत्प्रसादलब्धदिव्यैश्वर्याणां मुक्तानामपि नित्यनिखिलैश्वर्यप-

मम पतयो महारथा लोकैकवीराः इमे चासत्पक्षपातिनो भीष्मप्रभृतयो गुरुजनाः इति तेषु दत्तदृष्टिरासीत्, यावत्स्वमानरक्षणे स्वयं प्रयत्नमकरोत्, गजेन्द्रोऽपि स्वबले स्वीयबले च धृतादर आसीत्, तावत्तयोर्न क्लेशो निवृत्तः, किन्तु समधिको मानप्राणभङ्गान्तः क्लेश एव समुपनतः। यदा चावधृत्याखिलमात्मात्मीयवर्गमकिञ्चित्करं परित्यज्य स्वप्रयत्नमपि तमेव सर्वरक्षकमाश्रितवात्सल्यजलधिं पुरुषोत्तमं शरणमगच्छतां तदा तयोः सपदि समजनि शोकसागरसमुत्तरणम्। तस्मादीदृशे सिद्धोपायपरिग्रहे साधनान्तरानन्वय एवाङ्गतयापेक्ष्यते। तत्सिद्धमुपायान्तरासहिष्णुत्वम्। अयमपरो विशेषः—उपायान्तरं ह्याशरीरपातं कर्तव्यम्। उक्तं च सूत्रकृता—"आप्रयाणात्तत्रापि दृष्ट"मिति। तदप्यसकृदावृत्तिरूपं, ध्यानयोगस्य स्वरूपं हि तैलधारावदविच्छिन्नमसकृदनुसरणम्, ईदृशं ध्यानं प्रत्यहं योगसमुचिते कालेऽनुष्ठेयमिति सूत्रकृदाशयः। इदं च प्रपदनं सकृदेव कार्यं, तावतैव प्रपदनस्वरूपसिद्धेः। वचनं च—"आर्तानामाशुफलदा सकृदेव कृता ह्यसौ। दृप्तानामपि जन्तूनां देहान्तरनिवारिणी॥" "सकृदेव प्रपन्नाय तवास्मीति च याचते"इति। अयमन्यो विशेषः—साधनान्तरेऽन्तिमस्मरणापेक्षाऽस्ति। तथाच गीतायाम्—"अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्। यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥" इति। विवृतं चैतद्भगवता भाष्यकृता-इदमपि त्रयाणां साधारणमिति। इह तु न तदपेक्षा, यदयं न्यस्तभरः, नानेन स्मर्तव्यं किञ्चित्, स एव तु स्मरति। तथाच भगवतो वचनम्—"स्थिरे मनसि सुस्वस्थे शरीरे सति यो नरः। धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामजम्॥ ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम्। अहं स्मरामि मद्भक्तं नयामि परमां गतिम्॥" इति। अन्यश्चायं विशेषः—प्रारब्धकर्मणामप्यनेन नाशः। तथाच

णवल्कलन्यायेनेत्यस्य भावमाह-शृणेति। विशेषमिमं प्रत्यक्षेण सङ्गमयति—यावद्द्रौपदीत्यादिना। विशेषान्तरमाह—अयमपर इति। आप्रयाणात्तत्रापि हि दृष्टम्—तच्चोपासनमाप्रयाणात्-आमरणात्; मरणपर्यन्तमनुवर्तनीयम्। तत्रापि-उपासनोद्योगादारभ्यामरणं मध्ये यः कालस्तत्रापि, उपासनं दृष्टम्, "स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यत"इति। आप्रयाणं कर्तव्यतयाऽसकृद्योगमुक्त्वा, उपासनस्वरूपपर्यालोचनायामेकदिने क्रियमाणस्याप्यसकृद्भावोऽस्तीत्याह—तदप्यसकृदावृत्तिरूपमिति। उपासनं स्वरूपतोऽप्यसकृदावृत्तिरूपमित्यर्थः। तदुपपादयति—ध्यानयोगस्येति। तथाच सूत्रम्—"आवृत्तिरसकृदुपदेशा"दिति। आर्तानामिति। आर्तो दृप्त इति प्रपन्ने द्वैविध्यं बोध्यम्, क्षणमात्रशरीरसम्बन्धमसहमानस्तत्क्षण एव भगवत्प्राप्तिमाकाङ्क्षमाणस्त्वराविशेषवान्प्रपन्न आर्त उच्यते। अभ्युपगतप्रारब्धफलमेतच्छरीरपातसमयं प्रतीक्षमाणः प्रपन्नो दृप्तप्रपन्न उच्यते। तयोर्मध्ये आर्तानामाशु फलदा—शरणागत्यनुक्षणमेव। दृप्तानां तु देहान्तरनिवारिणी—एतद्देहावसान एव मुक्तिदा। सकृदेवेति। "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम"ेति वाक्यशेषः। विशेषान्तरमाह—अयमन्य इति। भाष्यकृतेति। भगवद्रामानुजाचार्यैः। अपरं विशेषमाह—अन्यश्चायमिति।

रिपूर्णस्य निरस्तसाम्याधिकसम्भावनस्य श्रीमन्नारायणस्य सेवनमेव परमं फलमिति सर्वमनवद्यम् ॥ १२१ ॥

---

वचनम्—"साध्यभक्तिस्तु सा हन्त्री प्रारब्धस्यापि भूयसी" इति । "आर्तानामाशु फलदा" "दृप्तानामपि जन्तूनां देहान्तरनिवारिणी" इति । आर्तदृप्तभेदेन द्विविधयोः प्रपन्नयोर्मध्ये आर्तविषये प्रपदनानुष्ठानसमनन्तरक्षण एव मोक्षदा, दृप्तानां विषये तु शरीरान्तरसम्बन्धापादकप्रारब्धनाशनेन तच्छरीरावसान एव मोक्षदेति श्लोकाशयः । अन्यश्च विशेषः—साधनान्तरनिष्ठस्य साध्योपायभूते स्वाश्रिते ध्यानयोगे तेन प्रसाद्यमाने परमपुरुषे चोपायत्वबुद्धियोगोऽस्ति, प्रपत्तिनिष्ठस्य तु सिद्धोपाये एकत्रैव, प्रपदनस्यानुपायत्वात् । उपायत्वमिच्छद्भिरपि प्रपदनस्वरूपपर्यालोचनायां तदनुष्ठानवेलायां तस्मिन्नुपायत्वबुद्धिर्नोचितेति तद्बुद्धियोगो निषिध्यते । तथाच वचनम्—"त्वय्येव त्वदुपायधीरपिहितस्वोपायभावाऽस्तु मे"इति। अपिहितस्वोपायभावेति पदे दृष्टिर्दीयताम् । क्रियमाणायामस्यां प्रपत्तावुपायत्वबुद्धिर्मे माभूदिति हि तदाशयः । शेषिणः परतन्त्रत्वमात्मनो रक्षमिच्छता । सेयं समुचिता सेव्या प्रपत्तिः सर्वकामधुक् ॥ इति ॥ १२१ ॥

---

प्रारब्धस्यापीति । उपासनेन तु साधनान्तरेण सञ्चितस्यैव क्षयो न प्रारब्धस्य । तथा च सूत्रम्—"अनारब्धकार्ये एव तु पूर्वे तदवधे"रिति । शरणागतेस्तु प्रारब्धनाशकत्वमपीति विशेषः । अत्रेदं बोध्यम्—अभ्युपगतप्रारब्धमनभ्युपगतप्रारब्धं चेति प्रारब्धे द्वैविध्यम्, तत्र वर्तमानशरीरमभ्युपगतप्रारब्धकृतम्, आगाम्यनभ्युपगतप्रारब्धकृतम्, तयोरनभ्युपगतप्रारब्धस्य हन्त्री दृप्तविषये, प्रारब्धमात्रनाशिकाऽऽर्तविषय इति विभागः । विशेषान्तरमाह—अन्यश्च विशेष इति । ननु तत्र ध्यानयोग इवेह प्रपदनेऽप्युपायत्वबुद्धिसम्भवादयं विशेषो नोपपद्यत इत्याह—प्रपदनस्यानुपायत्वादिति । इच्छद्भिरिति । वेदान्ताचार्यैः । तथा च वचनमिति । वेदान्ताचार्याणामेव । इदं च वचनं भगवन्तमभिमुखीकृत्य प्रवर्तते । शरणागतिस्वरूपं कारिकयोपसंहरति—शेषिण इति ॥ १२१ ॥

---

एते साधारणा धर्माः पुंसां स्त्रीणां च सर्वतः ।
मदाश्रितानां कथिता विशेषानथ कीर्तये ॥ १२२ ॥

सामान्यधर्मानुपसंहरन्विशेषधर्मकथनं प्रतिजानीते—एत इति । मदाश्रितानां—मम शिष्याणाम् । सर्वतः पुंसां स्त्रीणां चेति—सर्वेषां पुरुषाणां सर्वासां स्त्रीणां चेत्यर्थः । एते—अहिंसादयो धर्माः । साधारणाः—सामान्याः । "साधारणं

---

आश्रितानां हिततममादेष्टुं प्रवृत्तो भगवान् गृहस्थो वा, वर्णी वा, साधुर्वा, आचार्यपदे

---

गृहपतिष्यमाणयोः सङ्गतिमाह—आश्रितानामित्यादिना । एतेनावसरः सङ्गतिर्गम्यते । धर्मो

तु सामान्य"मित्यमरः । कथिताः । एतत्पालने सर्वेषामपि यथोचितमधिकार इत्यर्थः । अथ—अनन्तरम् । विशेषान्—असाधारणान्, धर्मान् । कीर्तये—कथयामि । कीर्तनक्रियाफलस्य शिष्यगामित्वेऽपि सद्धर्मपालननिष्ठादर्शनजनितानन्दरूपफलस्यात्मगामित्वात् 'णिचश्चे'त्यात्मनेपदम् ॥ १२२ ॥

प्रतिष्ठितो वा स्वाश्रिजचरणारविन्दाश्रितानां सर्वेषामेवैतेषामविशेषेणादरणीयानहिंसाप्रभृतीन्सत्त्वविज्ञानपर्यन्तानर्थानेतावताऽऽदिश्याथ विशेषतस्तैस्तैरवधारणीयानर्थानादिशन्वृत्तोपसंहरणपूर्वकं वर्तिष्यमाणं प्रतिजानीते—एत इति । त्याग्यत्यागिगुरुशिष्यविभागमन्तरेण मदाश्रितानां सर्वेषां पुंसां सर्वासां स्त्रीणां च साधारणा एते धर्माः कथिताः । अथ विशेषांस्तत्तदसाधारणान्कीर्तये ॥ १२२ ॥

हि साधारणोऽसाधारणश्चेति द्विविधः, तत्र साधारणे निरूपितेऽसाधारणस्य ह्यवसरः ॥ १२२ ॥

---

मज्ज्येष्ठावरजभ्रातृसुताभ्यां तु कदाचन ।
स्वासन्नसम्बन्धहीना नोपदेश्या हि योषितः ॥ १२३ ॥
न स्प्रष्टव्याश्च ताः क्वापि भाषणीयाश्च ता नहि ।
क्रौर्यं कार्यं न कस्मिंश्चिन्न्यासो रक्ष्यो न कस्यचित् ॥१२४॥

तत्रादितः सकलस्वाश्रितजनगुरुत्वे स्थापितयोः स्वभ्रातृजयोर्विशेषधर्मानाह—मज्ज्येष्ठेति दशभिः । मम ज्येष्ठावरजयोः—अग्रजकनिष्ठयोर्भ्रात्रो रामप्रता-

तत्र प्रथममाचार्यस्य विशेषधर्मानाह—मज्ज्येष्ठेति । आचार्यः स्वधर्मनिष्ठो हि शिष्यान्धर्मे स्थापयितुं प्रभवेत्; तद्युक्तमादावाचार्यपदमधितस्थुषोर्विशेषावबोधनम् । मज्ज्येष्ठावरजभ्रातृसुताभ्याम्—मम यो ज्येष्ठभ्राता यश्च कनिष्ठभ्राता तयोः सुताभ्यामित्यर्थः । तुशब्देन श्रीमदौद्धवसम्प्रदायप्रवर्तकाचार्यत्वरूपं वैलक्षण्यमुच्यते । स्वस्य—आसन्नसम्बन्धा यास्ताभ्योऽन्या योषितः कदाचन नोपदेश्याः—चार्थकेऽपि नोपदेश्याः । रहसि वा सदसि वा न कदाचनेति वा तदाशयः । हिरत्रावधारणे, नैवोपदेश्या इत्यर्थः, निषेधदार्ढ्यायैतदुक्तिः । नन्वाचार्यस्य ब्रह्मनिष्ठस्य भवदावदह्यमानचेतनतापोपशान्तये प्रवर्तमानस्यार्तेषूपदेश्यजनेषु लिङ्गभेदो न

आदावेवाचार्यधर्मावबोधने निमित्तमाह—आचार्यः स्वधर्मनिष्ठो हीति । स्मर्यते च—"आचिनोति हि शास्त्रार्थानाचारे स्थापयत्यपी"ति । धर्मानुष्ठानतदनुष्ठापनयोस्तज्ज्ञानायत्ततया प्रथममेतदवबोधनाय प्रवृत्तिरिति भावः । समासान्तरभ्रमं वारयन्नाह—मम य इत्यादि । शङ्कते—नन्विति । ब्रह्मनिष्ठस्येति । अनेन विषयैरभिभाव्यत्वप्रसङ्गो नेति ज्ञाप्यते । भवदावेति । अवश्यमुप-

पेच्छारामयोः, सुतौ–अयोध्याप्रसादरघुवीराख्यौ पुत्रौ ताभ्यां तु । कदाचन–क्वापि । स्वासन्नसम्बन्धहीनाः–स्वयोः–आत्मनोः, आसन्नसम्बन्धः–निकटसम्बन्धः, तेन हीनाः–रहिताः, दूरसम्बन्धा असम्बन्धाश्चेत्यर्थः । आसन्नसम्बन्धो धर्मोपदेशाज्ज्ञेयः । यन्मरणे स्वस्याशौचं भवेत्स इति तत्सामान्यलक्षणम् । योषितः–स्त्रियः । नोपदेश्याः–ताभ्यः श्रीकृष्णमन्त्रोपदेशो न कर्तव्य इत्यर्थः । स्वासन्न-

---

विक्षोभाय, तत्कुतोऽयं निषेधः । मैवम् । कालस्वभावं विषयस्वभावं च पर्यालोचयता इयमेव मर्यादा प्रतिष्ठापयितव्या । कलिर्हि विषमः, विषयश्चायमत्यन्तं विक्षोभकः । "नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान्" "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः" । तद्युक्तोऽयं निषेधः । अन्यथाऽऽचार्यपदे वर्तमानानां शिष्यभावमापन्नैः पुम्भिरिव शिष्यभावमापन्नाभिः स्त्रीभिरपि समधिकतरः समावेशः स्यात् । स च प्रमादाय कदाचिद्भवेत् । विमलमनसो ब्रह्मनिष्ठा देशिका उपदेश्यपदेऽपि योषितो यदा परिहरेयुस्तदाऽन्ये मनुष्याः शिक्षिताः स्युः । इदमेव चास्य निषेधस्य मुख्यं प्रयोजनम् । स्वासन्नसम्बन्धहीनानां योषितां स्पर्शसम्भाषणे न कार्ये इत्याह—न स्प्रष्टव्याश्च ताः क्वापि भाषणीयाश्च ता नहीति । यद्यप्युपदेशनिषेधेनैव स्पर्शसम्भाषणे दूरतो निरस्ते, तदनवसरोऽयं निषेधः, तथापि पाठक्रमादर्थक्रमस्य प्राबल्यात्स्वासन्नसम्बन्धहीना योषितो न स्प्रष्टव्याः क्वापि ता न भाषणीयाः, किंबहुना–ता नोपदेश्याश्चेत्यन्वयो बोध्यः ।

विना शत्रुमित्रविभागं सर्वत्र दया कार्येत्याह—क्रौर्यमिति । कस्मिंश्चित्–द्विषत्यपि । क्रौर्यं–निर्दयत्वम् । न कार्यम् । स्वस्य प्रतिकूलाचरणे प्रवृत्तस्यापि दुःखे समुपस्थिते तस्मिन्करुणां कुर्वता भाव्यमित्याशयः । उक्तं च गीतायाम्—"अद्वेष्टा सर्वभूतानां मैत्रः करुण एव चे"ति । दया कार्यैव सर्वत्रेत्यनुक्त्वा क्रौर्यं कार्यं न कस्मिंश्चिदित्युक्तिः शत्रौ कदाचिन्निर्दयत्वं प्रसजेत्

---

देशस्य कर्तव्यता ज्ञाप्यते । कः कालस्वभावे विषयस्वभावे वा विशेषः, यद्ब्रह्मविदोऽपि विक्षोभावसरः स्यात्तत्राह—कलिर्हीति । नन्वत्यन्तसान्निध्यं तासां जातु विक्षोभमावहेत्, न पुनरुपदेशमात्रपर्याप्तं सान्निध्यमित्यत्राह—अन्यथेति । समावेशः स्यादिति । शुश्रूषायाः शिष्यधर्मत्वेन तत्प्रसङ्गेन तत्प्रसङ्ग इति भावः । निमित्तान्तरमाह—विमलेत्यादि । इदमेव चेति । एतेन–आचार्येण हि ब्रह्मदर्शिना भाव्यम्, न केवलं ब्रह्मवादिना, नहि वदन्ब्रह्म स्वस्य वा परस्य वा भवतापोपशमनाय प्रभवेत्, श्रूयते च ब्रह्मविज्ञानमपि परोक्षभूतमपरा विद्येति, परविद्याऽलाभान्नारदस्यानुशोकश्च श्रूयते, ब्रह्मदर्शिनश्चेन्द्रियैरभिभवः सूर्यस्य तमसेवानुपपन्नः, तत् इन्द्रियक्षोभसम्भावनया निषेधोऽनुचित इति शङ्का परास्ता । न स्प्रष्टव्याश्चेत्यस्य श्लोकार्धस्यानवतरणमाशङ्क्य परिहरति—यद्यपीत्यादिना ।

द्विषत्यपीति । क्रौर्यस्य प्रसङ्गो हि तत्रैव, अप्रसक्तस्य तु निषेधो न घटते, परसन्तापकव्यापाररूपक्रौर्यस्य प्रतिषेधः क्रौर्यविरहमात्रे पर्यवसन्नो दयाक्रौर्योभयविरहरूपौदासीन्यस्थितिं गमयेत्,

---

१ परसङ्गिजीवनतः ।

सम्बन्धिनीभ्यस्तु कर्तव्यः। मन्त्रदीक्षाग्रहणार्थमागताभ्य इतरस्त्रीभ्यस्तु स्वोपदिष्टस्वकीयस्त्रीद्वारैवोपदेशः कारणीयो न तु स्वेन कर्तव्य इत्यभिप्रायः। तद्धेतुस्तूपदेश्योपदिष्टस्त्रीप्रसङ्गाद्गुरोः स्वधर्मभ्रंशस्य बहुत्र दर्शनात्, "मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत्। बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥ नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान्। सुतामपि रहो जह्यादन्यदा यावदर्थकृत्॥ स्त्रीपुंप्रसङ्ग एतादृक् सर्वत्र त्रासमावहः। अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः॥" इत्यादिशास्त्रदर्शनाच्च श्रीधर्मदेवेनैवेयं मर्यादा स्थापितेति सैवास्मदीयैः पालनीयेति॥ १२३॥

नेति। ताभ्यां भ्रातृजाभ्यामिति सम्बध्यते। ताः—अनासन्नसम्बन्धाः स्त्रियः। कापि न स्प्रष्टव्याः—तासां स्पर्शो न कर्तव्य इत्यर्थः। तथा ताः—स्त्रियः,

---

तत्सुतरामनुचितमित्येतदर्थदार्ढ्याय। यद्यप्ययमादेशो मुमुक्षुजनसामान्यमधिकृत्य कर्तव्यः। तथापि शिष्यजनविमोक्षणाय प्रवृत्ते आचार्यपदमधितस्थुष्यत्यन्तमपेक्ष्यत इत्यवश्यमवधार्योऽयमंश इति ज्ञापनाय विशिष्योक्तिः। अन्यच्च—दया हि समर्थे विद्यमाना परदुःखापाकरणाय कल्पते, असमर्थे तु सत्तया आश्रयं पुरुषं गुणिनं केवलमातनोति, तद्यथा यथा सामर्थ्यं समधिकं तथा तथा परस्य महत्फलं, तत्समर्थः पुरुषो विशेषतः शिक्षणीयो नाम दयालुना भाव्यमिति। इत्थं चाचार्यपदं योऽधितिष्ठति स तु विशेषतो बोधयितव्य इममर्थम्, यस्याचार्यस्य दयया दुर्निवारं संसृतिदुःखमपगच्छेत्। यथायथाच परस्य दुःखमधिकं तथातथा दयाप्रवाहेण समधिकेनैव भाव्यम्। किं वा संसृतिदुःखादधिकं दुःखम्, तन्निराकरणादन्यद्दयायाः किं वा फलम्। तदिदमभिसन्धाय गुणान्तरेषु सत्स्वप्यस्य विशिष्य निर्देशः। एतेन—अपकारिणमपि भवदावाग्निज्वालावलीढमालक्ष्य ततस्तन्मोचने यतमानेन भाव्यं देशिकपदमधितिष्ठतेत्युक्तं भवति। इह विधीयमानं दयालुत्वं दैवीं सम्पदमभिजातस्य येऽन्ये गुणा वर्णितास्तेषां सर्वेषामुपलक्षकम्। तथा चोक्ता गुणाः—"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्। तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता॥" इति।

---

तत्प्रतिक्षेपायाह—क्रौर्यं—निर्दयत्वमिति। साधारणस्यास्यासाधारणे गणनाया अनौचित्यमाशङ्क्य परिहरति—यद्यपीत्यादिना। भयम्—दुःखहेतुदर्शनजं दुःखम्। सत्त्वसंशुद्धिः—सत्त्वस्य अन्तःकरणस्य संशुद्धिः। ज्ञानयोगव्यवस्थितिः—ज्ञानयोगनिष्ठा। स्वाध्यायः—वेदाभ्यासनिष्ठा। तपः—कृच्छ्रचान्द्रायणादि। आर्जवम्—करणत्रयस्य। त्यागः—भोगैकशेषद्रव्यत्यागः। शान्तिः—बहिरिन्द्रियाणाम्। अलोलुप्त्वम्—विषयरागराहित्यम्। मार्दवम्—अकाठिन्यम्, साधुजनसंश्लेषार्हता। ह्रीः—अकार्यकरणे। अचापलम्—सन्निहितेऽपि विषये। तेजः—दुर्जनैरनभिभवनीयता। धृतिः—आपत्स्वपि।

न भाषणीयाः–ताभिः सह धर्मोपदेशनिमित्तं व्यावहारिककार्यनिमित्तं च संभाषणमपि न कर्तव्यमित्यर्थः। सर्वथा तत्प्रसङ्गः परिहर्तव्य इति तात्पर्यम्। हीति प्रसिद्धौ। "गुरवः स्त्रीप्रसङ्गेन रसलौल्येन चानघ!। महान्तोऽपि विनश्यन्ति वित्तलोभेन च द्रुत"मिति विष्णुधर्मोक्तेः। चकाराद्धर्मवंश्यैरन्यैरपि स्त्रीणां स्पर्शसंभाषणादि न कार्यम्। तथा–ताभ्यां कस्मिंश्चिदपि प्राणिनि क्रौर्यं–निर्दयत्वं न कार्यम्, "गुरवो हि दयालव" इति स्मृतिबाधापत्तेः। तथा–ताभ्यां कस्यचित्–स्वज्ञातेरज्ञातेर्वा कस्यापि पुरुषस्य, न्यासः–न्यस्यते इति न्यासः, यः कोऽपि निःक्षेपपदार्थः। कर्मणि घञ्। स न रक्ष्यः–स्वगृहे न स्थाप्य इत्यर्थः। कलहमूलत्वात्तस्येति भावः॥ १२४॥

दयाप्रसङ्गान्निक्षेपरक्षणादावभ्युपगम्यमाने कदाचिदात्मचिन्तनोपदेशादेर्विक्षेपः प्रसजेदित्याचार्यस्य ततो निवृत्तिरेवोचितेत्यभिप्रयन्नाह–न्यासो रक्ष्यो न कस्यचिदिति। कस्यचित्–बन्धोरबन्धोर्वा समर्थस्यासमर्थस्य वा। यद्वा–अल्पस्यानल्पस्य वा द्रव्यस्येत्यर्थः। चोराद्युपद्रवतो भीतभीतेन धनकनकादि न्यासरूपेण स्थाप्यमानं दयमानमानसेनापि नाङ्गीकार्यमाचार्यके पदे तिष्ठता। तथा सति हि तद्रक्षणव्यापृतिभूयस्ता प्रसजेत्, रागद्वेषलोभादिभूयिष्ठे कलौ तादृशी प्रवृत्तिः प्रायः व्यवहारपद एव पर्यवसेच। तथाच तत्त्वहितपुरुषार्थोपदेशादिनिजधर्मे विक्षेपः प्रसजेदित्याशयः॥ १२३॥ १२४॥

न्यासो रक्ष्यो न कस्यचिदित्येतत्प्रकृतेन न सङ्गतमित्याशङ्कां परिहरन्नाह–दयाप्रसङ्गादिति। प्रतिभूत्वं न कस्यापीत्युत्तरस्यापीयमेव सङ्गतिर्बोध्या। चोरादीति। एतेन साधारणस्याप्यस्यासाधारणप्रकरण उपदेशः कुत इति शङ्का परास्ता॥ १२३ १२४॥

---

**प्रतिभूत्वं न कस्यापि कार्यं च व्यावहारिके।**
**भिक्षयाऽऽपद्यतिक्रम्या न तु कार्यमृणं क्वचित्॥ १२५॥**

किञ्च प्रतिभूत्वमिति। ताभ्यां व्यावहारिके–क्रयविक्रयदानादानादिसकलव्यवहारकार्ये। कस्यापि–स्वकीयस्य परकीयस्य वा पुंसः। प्रतिभूत्वं–प्रति–

प्रतिभूत्वमिति। प्रातिभाव्येऽपीदृश एव दोषस्तत्तदपि न कार्यमिति भावः। ऋणस्य मनोविक्षोभे प्रबलहेतुतया तत्सर्वथा परिहरणीयमित्युच्यते। भिक्षयेति। न तु कार्यं–नैव

प्रसङ्गादिहानर्थतो निवर्तनमुपदिशति मूले–प्रतिभूत्वमित्यादि। चकारः प्रतिभूत्वं चेति पूर्वेण सम्बध्यते। उक्तसमुच्चये। न्यासरक्षणस्येव प्रतिभूत्वस्यापि मूलं दयेति तदनन्तरमस्य प्रसङ्गः। मूले–

प्रतिनिधिर्भवतीति प्रतिभूः, तस्य भावस्तत्त्वं—लग्नकत्वं, तत् न कार्यम् । निष्कारणभूरिक्लेशापत्तेरिति भावः । तथा—क्वचित्—दैववशात्स्वकीयधनधान्याद्यपहाराद्यापत्काले । भिक्षया—ब्राह्मणस्य विहितया नित्ययाच्ञारूपया वृत्त्यैव । आपत्—आपत्कालः । अतिक्रम्या—निर्गमनीया । ऋणं—उत्तमर्णाद्धनग्रहणं, तत्तु न कार्यम् । तस्यातिदुःखहेतुत्वादिति भावः । "नाधमर्ण्यसमं दुःखं गृहिणामिह किञ्चने"ति स्कान्दोक्तेः । अत एवोक्तं भारतीयारण्यपर्वणि—"पञ्चमेऽहनि षष्ठे वा शाकं पचति यो गृहे । अनृणी चाप्रवासी च स वारिचर! मोदते ॥" इति । विदुरनीत्यां चोक्तम्—"आरोग्यमानृण्यमविप्रवासः सद्भिर्मनुष्यैः सह सम्प्रयोगः । स्वप्रत्यया वृत्तिरभीतिवासः षड् जीवलोकस्य सुखानि राज"न्निति । दैवयोगादृणापाकरणं विनैव देहपाते तु महत्येवानर्थापत्तिः स्यात् । तदुक्तं कृत्यचिन्तामणौ—"अग्निहोत्री तपस्वी च ऋणवान्म्रियते यदि । अग्निहोत्रं तपश्चैव सर्वं तद्धनिनो भवेत् ॥ ऋणं ये न प्रयच्छन्ति प्रमादादनुपायतः । धनदातुस्तदीयं स्यात्पुण्यं चात्र पुराऽर्जित"मिति । तस्मात्सर्वथा क्वचिदपि कस्यापि ऋणं न कार्यमिति तात्पर्यम् । एतच्च सर्वसाधारणमेव, भ्रातृजौ प्रत्युक्तिस्तु तयोरत्यावश्यकत्वबोधार्थं तद्द्वारा तच्छिष्यबोधनार्थं चेत्यवधेयम् ॥ १२५ ॥

---

कार्यमित्यर्थः । यद्वा—ऋणं तु न कार्यमित्यन्वयः । तुशब्देन ऋणगतं मनोविक्षोभहेतुत्वे प्राबल्यरूपं वैलक्षण्यमुच्यते । शिष्यार्पितधनधान्यादिसमृद्ध्याऽऽत्मात्मीयवर्गं पुष्णत आचार्यस्य यदि कदाचित्ततश्च्युतिस्तदा स्ववर्णोचितया भिक्षावृत्त्यैवाऽऽत्मात्मीयभरणं न्याय्यं, न तु ऋणादानेन, तद्ध्युभयत्रानर्थाय । यो हि—ऋणपीडितः, स तु सर्वदाऽस्वस्थहृदयो नात्मक्षेमाय प्रभवेत् । तदृणं कदापि न कार्यमिति भावः । अनेन श्लोकेन शिष्यार्पितधनधान्यतो जीवनं कार्यमिति व्यज्यते ॥ १२५ ॥

---

व्यावहारिक इति । एतेन मुमुक्षूनाश्रितान्प्रति सकलदुःखप्रशमने यत्प्रतिभूत्वं तस्याप्रतिषेधः सिद्धः । इदमेव ह्याचार्यस्य व्रतम् । प्रसिद्धार्थापरित्यागेनाह—यद्वेति भाष्ये ॥ १२५ ॥

---

**स्वशिष्यार्पितधान्यस्य कर्तव्यो विक्रयो न च।**
**जीर्णं दत्वा नवीनं तु ग्राह्यं तन्नैष विक्रयः॥ १२६॥**

किञ्च–स्वेति। ताभ्याम्। स्वस्य शिष्याः स्वशिष्यास्तैरर्पितं च तद्धान्यं च व्रीह्यादि तस्य। स्वकुटुम्बपरिवारपोषणपर्याप्त्यधिकस्यापीति भावः। विक्रयणं विक्रयः–विपणनम्, स न कर्तव्यः। "नित्यं भूमिव्रीहियवाजाश्वर्षभधेन्वनड्हश्चैक" इति वैश्यवृत्त्या जीवतोऽपि ब्राह्मणस्यापणनीयद्रव्येषु गौतमस्मरणात्। भारते राजधर्मे चोक्तम्—"अजोऽग्निर्वरुणो मेषः सूर्योऽश्वः पृथिवी विराट्। धनुर्यज्ञश्च सोमश्च न विक्रेयाः कदाचने"ति। विराट्–अन्नम्। अजादीनां विक्रयेऽग्न्यादयो देवता एव विक्रीताः स्युरिति तट्टीका। भूरिकुटुम्बपरिवारयोस्तयोः क्वाप्याकस्मिकदुर्भिक्षाद्यापदि धान्याभावेन दुर्दशापत्तेः, सति धान्यसङ्ग्रहे तु दुर्भिक्षादावपि साधुब्राह्मणभिक्षुकरङ्कजीवानां पोषणेन परमधर्मसम्भवाच्च स न कर्तव्य इति भावः। क्वचित्प्रतिप्रसवमाह—जीर्णमिति। जीर्णं–गतवर्षसञ्चितं, जन्तूद्भवादिना चिरं रक्षितुमशक्यमित्यर्थः। धान्यं दत्वा–विक्रीयेत्यर्थः। नवीनं धान्यं तु ग्राह्यं–क्रेतव्यम्। यद्वा–धान्यं दत्वा तत्समं धान्यमेव ग्रहीतव्यमित्यर्थः। एष विक्रयो न भवतीति ज्ञेयम्, विक्रयजन्यदोषाभावात्, प्रत्युत तेन गृहस्थधर्मरक्षणसम्भवाच्च। "सर्वे विनिमया युक्ता लाभलोभो न तूचित"इति स्मृतेः॥१२६॥

---

शिष्यार्पितधनधान्यक्षये जीविका पूर्वश्लोकेन निरूपिता, शिष्यार्पितधान्याधिक्ये कर्तव्यमाह—स्वेति। स्वशिष्यार्पितधान्यस्य, दत्तभुक्तावशिष्टस्येति शेषः। दत्तभुक्तावशिष्टस्य कालेन जीर्णतां यास्यतो विक्रयणं हि प्रसजेत्, अतस्तन्निषेधः क्रियते। क्रयस्य लोभमूलत्वाद्वैश्यस्य हि सा वृत्तिः। ब्राह्मणमात्रस्य तु निषिद्धा। ननु जीर्यमाणं क्रमशः कथमुपयोज्यं तत्राह—जीर्णं दत्वेति। एषः–विनिमयः, न विक्रयः, विक्रये यो दोषस्तस्य नापादकः। अत एव विक्रयानर्हाणां तिलादीनां विनिमयोऽनुमतो मन्वादिभिः। अतिथ्यभ्यागतसाधुसंरक्षणैकप्रवृत्तेनाचार्येण तद्रक्षणाय क्रियमाणोऽयं विनिमयो न दोषायेति तु तत्त्वम्॥ १२६॥

---

दत्तभुक्तावशिष्टस्येति। एतेन विना दानभोगौ विक्रयणं लोभैकमूलमधर्मतया सुदूरपरिहर्तव्यमिति गम्यते। तत्राप्यात्मोपभोगात्प्राधान्यं दानस्येति व्यज्यते, प्रथमं दत्तशब्दग्रहणात्। विनिमयविक्रययोः स्वरूपभेदस्य स्वतःसिद्धतया तदुपपादनमप्रयोजकमित्यतो भावमाह—विक्रये यो दोषस्तस्य नापादक इति। ननु तिलादीनां धान्यविशेषाणां विनिमयोऽनुमतो नाम, नान्येषामित्याशङ्कामपनुदन्नाह—अतिथ्यभ्यागतेति॥ १२६॥

भाद्रशुक्लचतुर्थ्यां च कार्यं विघ्नेशपूजनम् ।
इषकृष्णचतुर्दश्यां कार्यार्चा च हनूमतः ॥ १२७ ॥

किञ्च—भाद्रेति । भाद्रः—भाद्रपदमासस्तस्य शुक्लः—शुक्लपक्षस्तस्य या चतुर्थी—सिद्धिविनायकचतुर्थीति प्रसिद्धा तिथिस्तस्याम् । विघ्नेशस्य—विघ्नराजस्य श्रीगणपतेः, पूजनं कार्यं—मृण्मयीं तन्मूर्तिं विधाय सिन्दूरदूर्वाङ्कुरमोदकनिवेदनादिभिस्तत्पूजनं कर्तव्यमित्यर्थः । न चात्र देवतान्तरपूजनेनान्याश्रयदोषापत्तिरिति वाच्यम्, तस्य श्रीकृष्णांशावतारत्वादिति प्रागेवोक्तम् । भाद्रपदशुक्लचतुर्थ्यां श्रीगणपतिपूजनमुक्तं भविष्योत्तरे—"चतुर्थ्यां भाद्रशुक्लायां हैमीं वा मृण्मयीमपि । प्रतिमां गणनाथस्य भक्त्या सम्पूजयेत्सुधीः ॥ प्रातः शुक्लैस्तिलैः स्नात्वा मध्याह्ने पूजयेच्च तम् । दूर्वायुग्मैर्मोदकाद्यैर्निजवित्तानुसारतः ॥ एवं यः पूजयेत्तस्य सङ्कष्टं लीयतेऽखिलम् । न विघ्नं जायते क्वापि वाञ्छितं प्राप्नुयात्फल"मिति । चतुर्थीनिर्णयस्तु—"चतुर्थी गणनाथस्य मातृविद्धा प्रशस्यते । पूर्वा दिनद्वये व्याप्तावव्याप्तौ चाभिजित्क्षणे । परेऽह्न्येव तु मध्याह्नव्याप्तौ ग्राह्या परैव से"ति वार्षिकव्रतोत्सवविधावुक्तो ज्ञेयः ।

तथा—इषकृष्णचतुर्दश्यां—इषः—आश्विनमासस्तस्य कृष्णः—कृष्णपक्षस्तस्य

---

अथ नैमित्तिकं देवताविशेषपूजनं विदधाति—भाद्रेति । कालविशेषोऽत्र निमित्तम् । कृष्णैकाश्रयेण किमप्यकामयमानेनापि प्राप्ते भाद्रपदशुक्लचतुर्थीरूपे निमित्ते यथाविधि तस्य पूजा कार्येतीममर्थं सर्वान् शिक्षयितुं साधारणोऽप्ययमर्थ आचार्यकर्तव्यप्रकरणेऽभिहितः । आचार्यबोधनेनान्ये हि सुदृढं बोधिताः स्युः । ननु—कृष्णैकाश्रयाणां किं देवतान्तरार्चया । सत्यम् । न साक्षादर्च्यता विधीयते, सर्वत्र देवतासु परमात्मा पुरुषोत्तमः कृष्ण एव साक्षादर्च्यः, तमेव तच्छरीरकं तत्तन्निमित्तयोगेऽर्च्यं विदधति वचनानि । अन्यथा मुमुक्षूणां कृष्णैकपराणां सूर्याद्याराधनपराणां कर्मणामनपेक्षणादनौचित्याच्च सन्ध्यावन्दनादिसर्वकर्मलोपप्रसङ्गः । तत्तच्छरीरकपरमात्मन एवाराध्यत्वादुक्तनिमित्तयोगे गणपतेः परमात्मशरीरत्वेन पूज्यता कृष्णैकपरायणानां मुमुक्षूणामपि समुचितैव । तथाच नैमित्तिकान्तरवदिदमप्यनुष्ठेयं विधानादिति

---

अथेति । अनेन प्रासङ्गिकानन्तर्यमवगम्यते । व्यावहारिकं हि प्रासङ्गिकम् । उपदिष्टं नाम तत् । अथ धर्मसाधनं ह्युच्यते । ननु साधारणस्यासाधारणप्रकरणे कथमुपदेश इति शङ्कां परिहरन्नाह—कृष्णैकाश्रयेणेत्यादिना । शङ्कते—नन्विति । कृष्णैकाश्रयाणाम्—कृष्ण एक एवाश्रय उपेय उपायश्च येषाम् । समाधत्ते—सत्यमिति । साक्षादर्च्यः—प्राधान्येनेत्यर्थः । विधानादिति । सन्ध्यादिविधानस्ये-

चतुर्दशी–नरकचतुर्दशीति प्रसिद्धा तिथिस्तस्याम्। हनूमतश्च–श्रीरामदूतत्वेन प्रसिद्धस्य चिरजीविनो भगवदेकान्तिकभक्तवरिष्ठस्येत्यर्थः। अर्चा–तैलसिन्दूरार्कपुष्पादिभिरर्चनम्। कार्या–कर्तव्या। महावीरस्य तस्यार्चनेन भगवदधिकप्रीत्युदयादिति भावः। उक्तं हि भगवता श्रीरामचन्द्रेणैव—"ये त्वां संपूजयिष्यन्ति ह्यूर्जे यमतिथौ नराः। न ते यास्यन्ति नरकान्भविष्यन्ति च मत्प्रियाः॥" इति। इयं चतुर्दशी सङ्गवकालव्यापिनी ग्राह्या। इदं च देवद्वयार्चनं सकलगृहस्थसाधारणं बोध्यम्॥ १२७॥

---

भावः। तदीयत्वेन तस्याराधनं नानुचितमिति वा भावः। केचित्तु–नेदं विधिपरं वचनं, किन्तु कृष्णैकान्तभक्तैर्मुमुक्षुभिर्न विनायकचतुर्थ्या व्रतं कार्यमित्याशङ्कायां तन्निवृत्तये इदं वचनम्। "हुतायां वपायां दीक्षितस्यान्नमश्नीया"दित्यत्रेवाभ्यनुज्ञामात्रे तात्पर्यं, तदीयत्वाच्च तदर्चनाभ्यनुज्ञेत्याहुः। आश्विनकृष्णचतुर्दश्यां हनूमतः पूजा कार्या। कार्तिककृष्णचतुर्दश्यां हनुमज्जन्मप्रतिपादकवचनानां पूर्णिमान्तमासाभिप्रायकता बोध्या॥ १२७॥

---

वैतद्विधानस्यापि शास्त्रीयविधानत्वाविशेषादिति भावः। आराध्यतावच्छेदकानुप्रवेशेन समाहितम्, अथाराध्यतामेव सङ्गमयति—तदीयत्वेनेति। पक्षान्तरमाह—केचित्त्विति॥ १२७॥

---

**मदाश्रितानां सर्वेषां धर्मरक्षणहेतवे।**
**गुरुत्वे स्थापिताभ्यां च ताभ्यां दीक्ष्या मुमुक्षवः॥ १२८॥**

मदाश्रितानामिति। मम आश्रिता मदाश्रिता ये पुरुषाः स्त्रियश्च तेषाम्। सर्वेषाम्। धर्मरक्षणहेतवे–धर्मस्य–स्वस्वविहितस्य भक्तिसहितस्य धर्मस्य रक्षणमेव हेतुस्तस्मै–तदर्थमेव। गुरुत्वे–तेषामाचार्यत्वे। स्थापिताभ्याम्। ताभ्यां–भ्रातृजा-

---

आचार्यपदे स्थापिताभ्यामाभ्यां मुमुक्षवो दीक्ष्या इत्यादिशति—मदाश्रितानामिति। एतेनाभ्यामनुमतसद्वृत्ताभ्यामप्यनादृत्याचार्यभावमनुपदिष्टमुमुक्षुजनाभ्यामसदाज्ञोल्लङ्घनजनितः प्रत्यवायो भोक्तव्य एव भवेदित्युक्तं भवति। चस्त्वर्थे। ताभ्यां तु मुमुक्षवो दीक्ष्या इत्यर्थः। वैलक्षण्यं च दीक्षादानेऽधिकारसम्पत्तिरेव। तामेवाधिकारसम्पत्तिं स्फुटयति—गुरुत्व इति।

---

दीक्ष्या इत्यत्र विधिप्रत्ययस्य स्वारस्यमाह—एतेनेत्यादिना। विधयो हि कामनामधिकृत्य प्रवृत्ता नातिलङ्घनदोषावहाः, अनधिकृत्य कामनां प्रवृत्ता अतिलङ्घने दोषमावहन्ति, अयं तु विधिः कामनामनधिकृत्य प्रवृत्त इत्यतिलङ्घने दोषमावहेदिति भावः। प्राप्तविज्ञानाभ्यामिति। एतेनाचार्यकौ-

भ्यास् । मुमुक्षवः—स्वशरणागताः संसृतिमोक्षेप्सवश्चातुर्वर्ण्यपुरुषाः । दीक्ष्याः—दीक्षितव्याः, श्रीकृष्णमन्त्रदीक्षादानेनानुगृहीतव्याः । "ब्राह्मणान्क्षत्रियान्वैश्यान्सच्छूद्रांस्तस्त्रियोऽपि च । विष्णुभक्तिरतीन्साधून्दीक्षयेद्विधिना गुरु"रिति पञ्चरात्रोक्तेः॥१२८॥

मया ह्येतौ गुरुत्वे स्थापितौ; तस्मात्सविज्ञानाभ्यामाभ्यां मदादेशादिदं कर्तव्यमित्युक्तं भवति । एतेन-न केवलं विद्यासम्पत्त्या परमरहस्यभूतस्य मन्त्रविशेषस्य परब्रह्मविद्यारूपस्योपदेष्टृतायां विना गुर्वाज्ञामर्हौ भवेदिति व्यज्यते । कस्मै प्रयोजनाय गुरुत्वे स्थापितौ? तत्राह—मदाश्रितानामिति । ये मदाश्रितास्तेषां योऽसाधारणः पारमैकान्तिकधर्मः, तस्य यद्रक्षणं-प्रतिकूलनिरसनानुकूलापादनाभ्यां पोषणमित्येतत्, तदुभयं चोपदेशादिना, तदेव हेतुः, तस्मै । प्रयोजनमत्र हेतुत्वेन विवक्षितम् । रक्षणप्रयोजनायेत्येतत् । पारमैकान्तिकधर्मपरिरक्षणाय गुरुपदे प्रतिष्ठिताभ्यामाभ्यां मुमुक्षवो मन्त्रविशेषोपदेशेन मोक्षयितव्या इत्युक्तं भवति । मुमुक्षव इति निर्देशाद्दीक्षाग्रहणे मुमुक्षैवाधिकारः, न वर्णवैलक्षण्यमिति व्यज्यते । तथाच वचनम्—"ब्राह्मणान्क्षत्रियान्वैश्यान्सच्छूद्रांश्च मुमुक्षतः । विष्णुभक्तिरतीन्साधून्दीक्षयेद्विधिना गुरुः" इति ॥ १२८ ॥

पथिकविज्ञानसम्पादने यत्न अस्येय इत्युक्तं भवति । एतेन—गुरुत्वे स्थापितत्वरूपाधिकारनिरूपणेन । ननूपदेशो ह्याचार्यकार्यम्, तत्तस्य कथं तत्र हेतुतेत्यत आह—प्रयोजनमत्रेति ॥ १२८ ॥

## यथाधिकारं संस्थाप्याः स्वे स्वे धर्मे निजाश्रिताः ।
## मान्याः सन्तश्च कर्तव्यः सच्छास्त्राभ्यास आदरात् ॥१२९॥

यथेति । किञ्च—ताभ्याम् । निजाः—स्वकीयाश्च ते आश्रिताश्च—शिष्यास्ते । स्वे स्वे—स्वकीये स्वकीये । वीप्सायां द्विर्भावः । धर्मे—पृथक्पृथग्विहितस्वधर्मे । यथाधिकारं—तत्तदधिकारमनतिक्रम्य । संस्थाप्याः—सम्यक् असाङ्कर्येण स्थापनीयाः। अन्यथा शिष्यपातकानां गुरौ सङ्क्रमणादिति भावः । "राजा प्रजानां शमलं याति धर्ममशिक्षयन् । आचार्यो निजशिष्याणां स्त्रीणां तत्पतयस्तथे"ति शङ्खस्मृतेः ।

किञ्च—ताभ्याम् । सन्तः—श्रीकृष्णभक्ताः साधुपुरुषाः । मान्याः—यथोचितं

आचार्येण शिष्या यथाधिकारं स्वस्वधर्मे नियोज्या इत्याह—यथाधिकारमिति । निजाश्रिताः—आत्मीया आश्रिताः, मुमुक्षया आत्मानमाश्रिता इति यावत् । यथाधिकारं

निजाश्रिता इत्यत्र कर्मधारयमभिप्रेत्य व्याचष्टे—आत्मीया आश्रिता इति । अन्यापेक्षयाऽऽश्रितत्वभ्रमं व्यावर्तयन्भावमाह—मुमुक्षयाऽऽत्मानमाश्रिता इति । मुमुक्षयेति प्रकरणसिद्धम् । यद्यपि

१ अन्यं पुरुषमपेक्ष्य, अन्यत्फलमुद्दिश्य च ।

पूजनीयाः । सदर्चनस्य सकलसुखहेतुत्वादिति भावः । "यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् । तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥" इति मुण्डकोपनिषच्छ्रुतेः । अन्यथा तु भगवदर्चनमपि न पूर्णफलदमित्युक्तं श्रीभागवते—"यस्यात्मबुद्धिः कुणपे त्रिधातुके स्वधीः कलत्रादिषु भौम इज्यधीः । यत्तीर्थबुद्धिः सलिले न कर्हिचिज्जनेष्वभिज्ञेषु स एव गोखरः ॥" "तस्माद्ब्रह्मऋषीनेतान्ब्रह्मन् सच्छ्रद्धयाऽर्चय । एवं चेदर्चितोऽस्म्यद्धा नान्यथा भूरिभूतिभिः॥" "अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥" "नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विने"त्यादि ।

तथा–ताभ्यां, सच्छास्त्राणां–प्रागुक्तानां वेदादीनां, अभ्यासः–परिशीलनम् । स च चतुर्धा–अध्ययनं चिन्तनं घोषणं पावनं चेति । तत्राध्ययनं तु गुरुशुश्रूषादिनैव सिद्ध्यति न त्वन्यथा । "अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रय" इति विदुरेण गुर्वशुश्रूषादेर्विद्याशत्रुत्वोक्तेः । "यथा खनन्खनित्रेण नरो वार्यधिगच्छति । तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छती"ति मनुनापि गुरुशुश्रूषया विद्याधिगमहेतुत्वोक्तेश्च । "गुरुशुश्रूषया विद्या प्रचुरेण धनेन वा । अथवा विद्यया प्राप्या प्राक्संस्कारादराच्च वे"ति कल्पलतोक्तेश्च । अन्यत्त्रयं त्वादरसाध्यम् । तदेवाह—आदरात्कर्तव्य इति । अभ्यासं विना

---

स्वे स्वे धर्मे संस्थाप्याः । मुमुक्षाऽस्तीत्येतावता न सर्वे ज्ञानयोगे योजयितव्याः, यो भक्तियोगेऽसमर्थः स ज्ञानयोगे योजयितव्यः, यश्च ज्ञानयोगेऽप्यसमर्थः स तु कर्मयोग एव योजयितव्यस्तस्मादधिकारानुगुण्येन मुमुक्षवः स्वस्वसमुचिते धर्मे–कर्मयोगे ज्ञानयोगे भक्तियोगे वा स्थापयितव्या इत्यर्थः । उच्यते च भक्तियोगादावनधिकारिणः कर्मयोगेऽधिकारः—"अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते । ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥"

---

निजमात्मानमाश्रिता इति तत्पुरुषाश्रयणेनायमर्थः शब्दतः साक्षादेवावगम्येत । अथापि निजशब्दस्यात्मीय एव प्रसिद्धिप्राचुर्यात्कर्मधारय एवादृतः । वरीयांश्च तत्पुरुषापेक्षया लक्षणारहितः कर्मधारयः । ननु मुमुक्षुषु किमधिकारवैविध्यं येन यथाऽधिकारमित्युच्येतेत्याशङ्कां परिहरन्भावमाह—मुमुक्षाऽस्तीत्येतावतेति । स्वे स्वे इत्यस्य भावमाह—स्वस्वसमुचित इति । स्वशब्दप्रवृत्तिनिमित्तं स्वीयत्वम्, तचेह स्वेनोपादातुमर्हत्वमिति भावः । धर्म इत्यस्यार्थमाह—कर्मयोग इत्यादि । एषामपि चोदनाचोदितार्थत्वविशेषाद्धर्मपदप्रवृत्तिनिमित्तयोगाद्धर्मशब्देन ग्रहणं नानुपपन्नम् । अथैतदित्यादि । अयं वचनार्थः—मद्योगं–मदनन्यभक्तियोगं प्रयोजनतयाऽऽश्रितः सन् । एतदपि–भक्ति-

विद्यास्फूर्त्यभावादादरेणैव स कर्तव्यः । तदभावहेतुः प्रमादस्तु त्याज्य एवेति यावत् । "आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसती"ति स्मृतेः । अत एवालस्यादीनां दोषत्वं चाह विदुरः—"आलस्यं मदमोहौ च चापलं गोष्ठिरेव च । स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च ॥ एते वै सप्त दोषास्तु सदा विद्यार्थिनां मता" इति । आलस्यत्यागपूर्वकमभ्यासे शारीरदुःखं तु विद्यार्थिभिर्नानुसन्धेयमित्यपि स एवाह—"सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् । सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुख"मिति । चिन्तनघोषणरूपोऽभ्यासश्चापररात्र एव कर्तव्यः, तत्र बुद्धिप्रकाशसत्त्वात् । "विद्यार्थिनां दिवानिद्रा बुद्धिजाड्यकरी मता । निशान्तयामघोषस्तु प्रज्ञास्फूर्तिप्रदो मतः ॥" इति स्मृतेः । अपररात्रेऽधीत्य निद्रा न कार्येत्युक्तं च मनुना—"निशान्ते न परिश्रान्तो ब्रह्माधीत्य पुनः स्वपे"दिति । गौतमेन चोक्तम्—"न चापररात्रमधीत्य पुनः स्वपे"दिति । अभ्यासकाले विघ्नान्यप्युक्तानि संस्कारमयूखे नारदेन—"द्यूतं पुस्तकशुश्रूषा नाटिकासक्तिरेव च । स्त्रियस्तन्द्रा च निद्रा च विद्याविघ्नकराणि षट् ॥ अहेरिव गणाद्भीतः सौहित्यान्मरणादिव । राक्षसीभ्य इव स्त्रीभ्यः स विद्यामधिगच्छती" ति । अत्र निद्रा तु "सन्ध्याद्वये निशः पूर्वापरयोर्यामयोस्तथा । दिवा च वर्जनीयैव निद्रा सुकृतिभिर्नरै"रिति स्मृत्युक्ता वर्ज्या, न तु सर्वथैव निद्रात्यागो विवक्षित इति भास्कराचार्या आहुः । विद्याभ्यासनिषेधकालश्चोक्तस्तेनैव—"विद्याभ्यासो न

---

इति । एतदाशयस्तु भाष्यतोऽवगन्तव्यः । श्रूयते च—"एवं त्वयि नान्यथेतोऽस्ति" इति । यद्वा—मुमुक्षुत्वाविशेषेऽपि शरणागतिनिष्ठत्वाविशेषेऽपि वर्णाश्रमाधिकारानुरोधेन स्वे स्वे धर्मे नित्यनैमित्तिकादौ संस्थाप्याः । आश्रमाङ्गतया वर्णाङ्गतया वा विहितः प्राप्तानां कर्मणां स्वाभिलषितमोक्षेऽनुपायत्वेऽपि स्वेनोपायतया वृते सिद्धोपायस्वरूपे ज्ञानयोगादाविवानुपकारकत्वे-

---

योगाङ्कुरभूतमुक्तं मत्कर्मापि कर्तुं चेदसमर्थः, सर्वकर्मफलत्यागं ज्ञानयोगोपकारकं कुरु, असत्यधिकारे क्रियमाणादभ्यासात्—भक्तियोगाभ्यासात् । ज्ञानम्—आत्मापरोक्षलक्षणं श्रेयः, ततोऽप्यनिष्पन्नात् ध्यानम्—आत्मस्वरूपचिन्तनाभ्यासः श्रेयः, ततोऽप्यशक्यात् कर्मफलत्याग एव श्रेयान् । असत्यधिकारे समुन्नतपर्वारोहणप्रयत्नो नोचितः । स्वानुरूपे प्रथमे पर्वणि पदन्यास एव श्रेष्ठः । तथा सति क्रमशः शान्तिः, ततश्च ध्यानयोगे सामर्थ्यम्, ततश्च ज्ञानसिद्धिः, ततो भक्तियोगेऽधिकारः, ततश्च तस्य सिद्धिरिति । धर्मशब्दस्य प्रसिद्धिप्राचुर्यानुरोधेन भावमाह—यद्वेति । शरणागतिनिष्ठत्वाविशे-

कर्तव्यो निशो मध्यमयामयोः । अनध्यायेषु सर्वेषु धर्मशास्त्रोदितेषु चे"ति । अत्र कर्तव्य इति विध्यर्थतव्यता ब्राह्मणत्वात्सच्छास्त्राभ्यासस्यावश्यकत्वमपि गम्यते । "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्चे"ति श्रुतेः । "तपो विद्या च विप्राणां निःश्रेयसकरे उभे"इति श्रीभागवतोक्तेश्च । "पूर्वे वयसि सच्छास्त्रं यथाकालं यथामति । अध्येतव्यं हि विप्रेण पतितः सोऽन्यथा भवे"दिति स्मृतेश्च । वेदाद्यध्ययनं विना तु ब्राह्मणस्यान्धत्वमेवेत्युक्तं दानखण्डे—"श्रुतिस्मृती उभे नेत्रे ब्राह्मणस्य प्रकीर्तिते । एकया रहितः काणो द्वाभ्यां त्वन्धः स वै मतः ॥" इति । कामन्दकश्चाह—"गावः पश्यन्ति गन्धेन वेदैः पश्यन्ति वाडवाः । चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥"इति । "ब्राह्मणाः शास्त्रचक्षुष" इति च । विदुरश्चाह—"अष्टौ गुणाः पुरुषं दीपयन्ति प्रज्ञा च कौल्यं च दमः श्रुतं च । पराक्रमश्चाबहुभाषिता च दानं यथाशक्ति कृतज्ञता चे"ति । विद्याभ्यासं विना ब्राह्मण्यमेव न सिद्ध्यतीत्युक्तं स्कान्दे काशीखण्डे—"यथा दारुमयो हस्ती यथा

---

ऽपि वर्णाश्रमविभागनिरपेक्षोपायविशेषनिष्ठेनापि लोकसङ्ग्रहार्थमवश्यमुपादेयताऽपरिहार्यैव । तथा चोक्तम्—"लोकसङ्ग्रहमेवापि संपश्यन्कर्तुमर्हसि" इति । अस्मिन्वर्णेऽस्मिन्नाश्रमे सतेदं कार्यमिति भगवदाज्ञायाः केनाप्यनुल्लङ्घनीयत्वाच्च । उल्लङ्घने भगवदप्रीतिप्रसङ्गात् । तथाच भगवतो वचनम्—"आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न संशयः" "लङ्घयन् शूलमारोहे"-त्यादि । नहि शेषिणः शासनं शेषभूतोऽतिक्रमेत, तस्मादाचार्येणानुष्ठानोपदेशादिना स्वे स्वे धर्मे शिष्याः संस्थाप्या इति भावः । सन्तस्तु मान्याः–"अस्ति ब्रह्मेति चेत् वेद सन्तमेनं ततो विदु"रिति श्रुतेर्ब्रह्मविज्ञानसम्पन्ना अत्र सच्छब्देन निर्दिश्यन्ते । आचार्यपदमधितिष्ठताऽपि ते मान्या इत्यर्थः । कर्तव्यः सच्छास्त्राभ्यास आदरात्–शास्त्रपरिशीलनं प्रेम्णा कार्यम् । अयं भावः—विद्या द्विविधा–एका परा, एका अपरा । ब्रह्मापरोक्षरूपा परा, अपरा तु तत्परोक्षरूपा साङ्गसोपबृंहणवेदरूपसच्छास्त्रजन्या । तत्रापरोक्षे परोक्षस्योपकारकताऽस्ति । तदेवमुपकार्योपकारकभावसम्पन्नविद्याद्वयमध्येऽपरोक्षविद्यानिष्ठेनाप्याचार्येण समाधित उपरतेन तदुपकारकपरोक्षविद्यापरिशीलनमेव प्रेम्णा कार्यं, न त्वनुपयुक्ते व्यवहारे प्रवेशः समुचितः, अन्यथा

---

पेऽपीति । इदं च निजाश्रितशब्देन व्यज्यत इति भावः । विधितः प्राप्तानां कर्मणामिति । अवश्यमुपादेयतेत्युत्तरेण सम्बध्यते । असत्यप्यर्थेऽनर्थनिवृत्तयेऽवश्यमनुष्ठेयं वर्णाश्रमाङ्गभूतं कर्मेत्याह—अस्मिन्निति । अनर्थश्च परमात्मनोऽप्रीतिप्रसङ्गः । तत्र प्रमाणमाह—तथा चेति । सन्त इत्यस्यार्थविशेषमाह—अस्तीत्यादिना । प्रेम्णेत्यादरशब्दार्थः । नन्वाचार्येण भगवत्परायणेन भाव्यम्, किं शास्त्रैरित्यतो भावमाह—अयं भाव इति । ननु शास्त्रजन्यया परोक्षया किं प्रयोजनमत आह—तत्रेति । अयं वि-

कृत्तिमयो मृगः । तथा विप्रोऽनधीयानस्त्रयोऽमी नामधारकाः ॥" इति । तस्मात्सर्वार्थसाधनः सच्छास्त्राभ्यासोऽवश्यं कर्तव्य इति तात्पर्यम् ॥ १२९ ॥

चित्तविक्षेपप्रसङ्गादिति । एतेन सर्वसाधारणस्य सच्छास्त्राभ्यासस्याचार्यं प्रति विशिष्योपदेशः कुत इति शङ्का परास्ता ॥ १२९ ॥

द्याविभागः उपकार्योपकारकभावः सर्वोऽपि मुण्डके—"द्वे विद्ये वेदितव्ये" इत्यादिना श्रूयते ॥१२९॥

---

## मया प्रतिष्ठापितानां मन्दिरेषु महत्सु च ।
## लक्ष्मीनारायणादीनां सेवा कार्या यथाविधि ॥ १३० ॥

मयेति । ताभ्याम् । महत्सु—शिखरबन्धेषु । चकारादल्पेषु हरिमन्दिराख्येषु च । मन्दिरेषु—प्रासादेषु । मया—स्वेनैव । प्रतिष्ठाप्यन्ते स्मेति प्रतिष्ठापितानि तेषाम्, यथाविधिकृतप्रतिष्ठानाम् । लक्ष्मीनारायण आदिर्येषाम् । भगवत्स्वरूपाणामिति शेषः । आदिशब्दान्नरनारायणादिग्रहणम् । लक्ष्मीनारायणस्य मुख्यत्वेन निर्देशस्तु पत्रिकालेखनसमये तत्सन्निधौ स्वस्यावस्थानादिति ज्ञेयं, नतु तावतेतरस्वरूपाणां गौणत्वं शङ्क्यं, सर्वेषामपि भगवत्स्वरूपाणामभेदस्य स्वेनैव प्राक् प्रतिपादितत्वात् । तेषां सेवा—प्रेम्णा परिचर्या । यथाविधि—श्रीविठ्ठलेशोक्तविधिमनतिक्रम्य । कार्या—परिचारकबाहुल्येऽपि भगवत्सेवा तु स्वयमेव कर्तव्या । "आदरः परिचर्यायां सर्वाङ्गैरभिवन्दनम् । गृहशुश्रूषणं मह्यं दासवद्यदमायये"ति भगवता स्वभक्तधर्मोक्तेः । अत एव श्रीरुक्मिण्यादीनामपि तथाविधैव सेवोक्ता—"दासीशता अपि विभोर्विदधुः स्म दास्य"मिति ॥ १३० ॥

अथात्मना प्रतिष्ठापितानां लक्ष्मीनारायणादीनां यथाविधि पूजादिकं विधेयमित्यादिशति—मयेति । मयेत्युक्त्या तत्सेवामाचरति स्वस्यात्यन्तं प्रीतिर्व्यज्यते । चोऽवधारणे । मयैव प्रतिष्ठापितानामित्यन्वयः । जगदुद्धरणायावतीर्णेन पुरुषोत्तमेन मयेत्यर्थः । चः पादपूरणे वा मन्दिरस्य महत्त्वं च भगवन्निर्मितत्वात्, भगवन्मन्दिरत्वाच्च । यथाविधि—विधिमनतिक्रम्य, स्वेच्छया न कदापि कर्तव्यमित्यर्थः । आदिशब्दान्नरनारायणपरिग्रहः ॥ १३० ॥

मयेति निर्देशस्य स्वारस्यमाह—मयेत्युक्त्येति । एवार्थकेन तुशब्देनेतरव्यवच्छेदाद्व्यज्यमानं भावमाह—जगदिति । विनाऽवधारणं मयेति निर्देशमात्रेणाप्ययं भावो व्यज्येतैवेत्याशयेनाह—पादपूरणे वेति । आयामादिना महत्त्वमप्रयोजकमिति ज्ञापयन्महत्त्वमुपपादयति—मन्दिरस्येति ॥१३०॥

---

**भगवन्मन्दिरं प्राप्तो योऽन्नार्थी कोपि मानवः ।**
**आदरात्स तु सम्भाव्यो दानेनान्नस्य शक्तितः ॥ १३१ ॥**

भगवदिति । यः कोऽपि—ज्ञातोऽज्ञातो वा । मानवः—मनुष्यः । अन्नार्थी—बुभुक्षुः सन् । भगवन्मन्दिरं प्राप्तो भवेत् । स तु । शक्तितः—यथाशक्ति । अन्नस्य दानेन आदरात्सम्भाव्यः । तस्मै यथोचितं पक्वमपक्वं वाऽन्नं देयमित्यर्थः । "स्वदेशे परदेशे वा ह्यतिथिं नोपवासये"दित्यत्रिस्मृतेः । अन्नमित्युदकस्याप्युपलक्षणं, तयोः साहचर्यात् । तथा चोक्तमादित्यपुराणे—"अन्नदानं प्रशंसन्ति विद्वांसो वेदवादिनः । अन्नमेव यतः प्राणाः प्राणदानसमं हि तत् । तस्मादहरहर्देयमन्नमेव विचक्षणैः । अपरीक्ष्यैव सर्वेभ्य इति स्वायंभुवोऽब्रवीत् । प्रीतो विरिञ्चिरन्नेन प्रीतश्च कमलापतिः । प्रीतश्च भगवान् शम्भुरन्नेनैव शचीपतिः । तस्माद्विशिष्टं तद्देयमाहुर्वेदविदो बुधाः । जलदानमपि प्रोक्तमन्नदानेन वै समम् । जीवनं सर्वभूतानां जलमेव द्विजोत्तमाः !" इति । तत्फलं प्रोक्तं स्कान्दे—"जाम्बूनदमयं दिव्यं विमानं सूर्यसन्निभम् । दिव्याप्सरोभिः सङ्कीर्णमन्नदो

---

भगवन्मन्दिरमागतो बुभुक्षया क्लिश्यमानोऽन्नदानादिना सम्भाव्य इत्याह—भगवन्मन्दिरमिति । भगवन्मन्दिरं प्राप्तो यः कोऽपि मानवोऽन्नार्थी चेत्—बुभुक्षितश्चेद् स त्वन्नदानेन सम्भाव्य इत्यर्थः । अयं भावः—यः कश्चिदतिथिर्गृहानागतो बुभुक्षितो गृहस्थेनान्नदानेन सत्कार्यः, अन्यथा महापराधापत्तेः । श्रूयते—"वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् । तस्यैतां शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ आशाप्रतीक्षे सङ्गतं सूनृतं चेष्टापूर्ते पुत्रपशूंश्च सर्वान् । एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे ॥" इति । सामान्यतो बुभुक्षितायान्नदानं प्रशस्यते च—"अन्नदानं प्रशंसन्ति विद्वांसो वेदवादिनः । अन्नमेव यतः प्राणाः प्राणदानं समं हि तत् ॥ तस्मादहरहर्देयमन्नमेव विचक्षणैः । अपरीक्ष्यैव सर्वेभ्य इति स्वायम्भुवोऽब्रवीत् ॥" इति । तदेवं बुभुक्षितेऽतिथावन्यस्मिन्वा सामान्यतोऽन्नदानस्यावश्यकर्तव्यत्वे सिद्धे यस्तु भगवद्दर्शनार्थं मन्दिरमागत्य बुभुक्षाकुलोऽन्नार्थी भवेत्तस्मै यथाशक्त्यन्नं यदि न दीयेत तदा मन्दिरस्वामिनो महाननर्थः स्यात्, तन्मन्दिरस्वामिनाऽऽचार्येणेदमवश्यं कर्तव्यमिति । एतेन—गृहस्थमात्रसाधारणस्यान्नदानस्य विशेषत आचार्ये किमर्थं उपदेश इति शङ्का

---

बुभुक्षितोऽपि कश्चिन्न याचेतान्नम् मानात्, तथाविधोऽपि बुभुक्षामालक्ष्यान्नेन सम्भाव्य इति ज्ञापयन् व्याचष्टे—बुभुक्षितश्चेदिति । बुभुक्षैव निमित्तं, न तत्कार्या याच्ञेति भावः । आशा—लब्धस्यानुभवेच्छा, प्रतीक्षा—अलब्धस्य लिप्सा, सङ्गतम्—सत्सङ्गतिः, सत्सङ्गजन्यसुकृतमित्येतत्, साध्ये साधननिर्देशः । एवमुत्तरत्रापि । वृङ्क्ते—नाशयतीत्येतत् । सामान्यत इति । अतिथ्यभ्यागतविभागं विना, वर्णविभागं विनेत्यर्थः । भगवन्मन्दिरं प्राप्त इत्यस्य विशेषमाह—तदेवमिति । कोऽपीत्यस्य

लभते फलम् । अन्नदानात्परं दानं विद्यते नेह किञ्चन । अन्नाद्भूतानि जायन्ते जीवन्ति च न संशयः । जीवदानात्परं दानं न किञ्चिदिह विद्यते । अन्नाज्जीवति त्रैलोक्यमन्नस्यैव हि तत्फलम् । अन्ने लोकाः प्रतिष्ठन्ति लोकदानस्य तत्फलम् । तस्मादन्नसमं दानं न भूतं न भविष्यती"ति । अन्नदानमाहात्म्यं भारतीयानुशासनिकपर्वणः सविस्तरमवगन्तव्यम् ॥ १३१ ॥

परास्ता । यः कोऽपि–ज्ञातोऽज्ञातो वा ब्राह्मणो वाऽन्यो वा । आदरात्–न त्वनादरेण । शक्तितः–शक्तिमनतिक्रम्य, शक्तितोऽन्यूनं च । अन्नार्थी सन्भगवन्मन्दिरमागतो यः कोऽपि मानव इति वा योजना । यः कोऽपि–भगवदभिमुखोऽनभिमुखो वा भगवन्मन्दिरं प्रविष्ट इत्येतावता स त्वादरात्सम्भाव्यः । अयं भावः—इह हि कलौ पाखण्डोपहते प्रायो जना भगवदर्चाविमुखा भगवन्मन्दिरवार्तामपि न सहन्ते, तदेवंविधे, अन्नापेक्षया वा यः कश्चिन्मन्दिरप्रवेशमात्रमनुमन्यते स हि परमकृपालुभिराचार्यैरादरणीयः । सर्वत्र दया ह्याचार्यलक्षणम् । सोऽप्यन्नदानादिना सम्भावितो भगवदन्नवैभवेनोद्रिक्तसत्त्वो भगवदभिमुखो मुमुक्षुश्च भवेत् । तदाऽऽचार्येण दयालुना संसृतिसागरनिमग्नजन्तुसमुद्धरणैकाकाङ्क्षिणा येन केनापि प्रकारेण भगवन्मन्दिरमागतः सम्भाव्यो न तिरस्कार्य इति ॥ १३१ ॥

भावमाह—यः कोऽपीति । शक्तितोऽन्यूनं चेति । एतेन बहुषु बुभुक्षितेषु समवेतेषु सत्यामपि शक्तौ कतिपयजनबुभुक्षोपशमनमात्रेण विधिरनुलङ्घित इति भ्रमो व्यावर्त्यते । अर्थविशेषं गमयन्योजनान्तरमाह—अन्नार्थी सन्निति । अस्मिन्नन्वये गम्यमर्थविशेषमाह—अयं भाव इति ॥ १३१ ॥

---

**संस्थाप्य विप्रं विद्वांसं पाठशालां विधाप्य च ।**
**प्रवर्तनीया सद्विद्या भुवि यत्सुकृतं महत् ॥ १३२ ॥**

किञ्च–संस्थाप्येति । ताभ्याम् । पाठशालां–विद्यार्थिनिवासोचितं मठम् । विधाप्य–कारयित्वा । विद्वांसं–सच्छास्त्राभिज्ञम् । विप्रम् । संस्थाप्य–यथोचितवृत्तिदानपूर्वकमावास्य । भुवि सद्विद्या प्रवर्तनीया । यत्–यतः सद्विद्याप्रवर्तनात् । महत्–भूरि सुकृतं–पुण्यं भवति । अन्धस्य चक्षुर्दानवदिति भावः । उक्तं हि दानहेमाद्रौ गारुडे—"उपाध्यायस्य यो वृत्तिं दत्वाऽध्यापयति द्विजान् । किं न दत्तं

अथान्नदानादधिकं विद्यादानं कार्यमित्याह—संस्थाप्येति । पाठशालां विधायाध्यापकपदे विप्रं विद्वांसं संस्थाप्य सद्विद्या–साङ्गा सोपबृंहणा वेदविद्या भुवि प्रवर्तनीया । यया विद्यया विदुषः सत्ता सा सद्विद्योच्यते, तादृशी च त्रय्येव, सैव ह्यनादिनिधना यथावत्पुरु-

सद्विद्याशब्दं व्याचष्टे—साङ्गा सोपबृंहणा वेदविद्येति । तस्या एव तदर्थत्वे उपपत्तिमाह—ययेत्यादि । सत्ता च पुरुषार्थयोगेन, अन्यथा जीवन्नप्यसत्कल्प एवेति भावः । अनादिनिधनेति ।

भवेत्तेन धर्मकामार्थदर्शितम् ॥ छात्राणां भोजनं तैलं वस्त्रं भिक्षामथापि वा । दत्वा प्राप्नोति पुरुषः सर्वकामान्न संशयः ॥" इति । वह्निपुराणे च—"यो वृत्तिं पठमानानां करोत्यनुदिनं नृप ! । स यज्ञफलमाप्नोति दीपाच्छादनभोजनै"रिति ॥१३२॥

पार्थं तत्साधनान्यवगमयति, तत्परिकरतयैव चान्येषां सच्छास्त्रता । तदस्या विद्यायाः प्रवर्तनं हि महत्सुकृतम्–सुकृतसाधनम् । अन्नेन हि जीवनमात्रं, विद्यया तु समुज्जीवनं, धर्माचरणेन पारलौकिकश्रेयःप्राप्तेः । अविजानन्पुरुषः कथमात्मनः श्रेयः कर्तुं प्रभवेत् ॥ १३२ ॥

अनेन कर्तृपुरुषबुद्धिदोषप्रसङ्गाभावो गम्यते । सुकृतमिति । साधने साध्योपचार इत्याशयेन व्याचष्टे—सुकृतसाधनमिति । महत्त्वमुपपादयति—अन्नेन हीत्यादिना ॥ १३२ ॥

---

**अथैतयोस्तु भार्याभ्यामाज्ञया पत्युरात्मनः ।**
**कृष्णमन्त्रोपदेशश्च कर्तव्यः स्त्रीभ्य एव हि ॥ १३३ ॥**

स्वभ्रातृजयोर्विशेषधर्मानुक्त्वा तत्स्त्रियोस्तानाह—अथेति द्वाभ्याम् । अथेति भिन्नोपक्रमे । एतयोः–अयोध्याप्रसादरघुवीरयोः । भार्याभ्यां–सुनन्दाविरजासंज्ञाभ्यां पत्नीभ्याम् । आत्मनः–स्वस्य । पत्युः–भर्तुः । आज्ञया । स्त्रीभ्यः–स्वशरणागतयोषिद्भ्यः । एवकारः पुरुषव्यवच्छेदार्थः । कृष्णमन्त्रस्याष्टाक्षरस्योपदेशः । कर्तव्यः । चात्सुवासिनीनां विधवानां च धर्मा यथोचितमुपदेष्टव्याः । हीति पादपूरणे ।

ननु—"गृह्णीयाद्वैष्णवाद्गुरो"रित्यादिवाक्येषु दीक्षान्तर्गतमन्त्रोपदेशस्य गुरोरेवाधिकारस्मरणात्कथमत्र स्त्रीभ्य उपदेशाज्ञाऽऽचार्यपत्न्योरिति चेत् । अत्रोच्यते—"अर्धो वा एष आत्मनो यत्पत्नी जायापती अग्निमादधीयातां तस्मात्सनोऽर्धं पत्न्यास्ते । मम व्रते ते हृदयं दधामि मम चित्तमनु चित्तं तेऽस्तु । मम वाचमेकमना जुषस्व प्रजापतिष्ट्वा नियुनक्तु मह्यम् । ओं प्राणैस्ते प्राणान् सन्दधामि ओं अस्थिभिरस्थीनि ओं मांसैर्मांसानि ओं त्वचा त्वच"मित्यादिश्रुतिस्मृतिगृह्येषु तयोरेकाङ्गतयैककार्यकारकत्वाभिधानादाचार्यपत्नीकृते मन्त्रोपदेशे आचार्यकर्तृकत्वावगमान्नैष दोषः । अन्यथा समक्षं पुरुषेभ्य आचार्यपत्न्युपदेशकर्तृत्वे स्त्रीभ्य आचार्योपदेशकर्तृत्वे च "नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् ।

अथाचार्यपत्न्याः कर्तव्यमादिशति—अथेति । आचार्यपदे स्थितयोरनयोराज्ञया एतत्पत्नीभ्यां स्त्रीभ्यः कृष्णमन्त्रोपदेशः कार्यः । आज्ञयेत्युक्तेः स्वातन्त्र्येण मन्त्रोपदेशादावनधि-

कृष्णमन्त्रोपदेश इति । अनेन शरणागतिपरस्यास्य मन्त्रान्तरवत्सङ्कुचिताधिकारकता नेति व्य-

स्त्रीपुंप्रसङ्ग एतादृक् सर्वत्र त्रासमावहः ॥" इत्यादिस्मृतिवाक्येभ्य आचार्यपत्न्या अन्यपुरुषप्रसङ्गेन गुरोरन्यस्त्रीप्रसङ्गेन च तयोरवश्यं भ्रष्टत्वापत्तिरतः स्वस्वाम्यनुज्ञयाऽऽचार्यपत्नीभ्यां स्त्रीजनमात्रोपदेशविधाने आचार्याभ्यां स्वोपदिष्टस्वपत्नीद्वारा स्त्रीजनमात्रोपदेशविधाने च न काचित्क्षतिः। तथासति सर्वशास्त्रतात्पर्याविरोधमवधार्य श्रीधर्मदेवेन निबद्धा मर्यादा पालिता स्यादिति सर्वमनवद्यम्। स्वातन्त्र्येणोपदेशस्तु न कर्तव्यः, "धर्मोपदेशं या नारी दानं तीर्थं व्रतानि च। करोति निष्फलं तद्वै विनाज्ञां पत्युरात्मन"इति पराशरवचनात्॥ १३३ ॥

कारो ज्ञापितः । आचार्येणानुपदेश्यतयाऽभिहितानामासन्नसम्बन्धहीनानां स्त्रीणां समुज्जीवनायाऽऽचार्याज्ञयोपदेशप्राप्तस्य मन्त्रस्य प्रदाने न काऽपि क्षतिः ॥ १३३ ॥

ज्यते । सत्याचार्ये उपदेष्टरि किमिति तत्पत्न्या अयमधिकारो दीयत इत्यत्राह—आचार्येणेत्यादि॥१३३॥

---

**स्वासन्नसम्बन्धहीना नरास्ताभ्यां तु कर्हिचित् ।**
**न स्प्रष्टव्या न भाष्याश्च तेभ्यो दर्श्यं मुखं न च ॥१३४॥**

स्वासन्नेति। स्वस्य—आत्मनः, आसन्नसम्बन्धः—समीपसम्बन्धस्तेन हीनाः—रहिताः, दूरसम्बन्धाः सम्बन्धरहिताश्चान्ये। नराः—पुरुषाः। ताभ्याम्। कर्हिचित्—क्वापि। न स्प्रष्टव्याः—बुद्धिपूर्वकं तत्स्पर्शो न कर्तव्यः। तुश्चार्थे। तथा न भाष्याः—तैः सह सम्भाषणमपि न कर्तव्यमित्यर्थः। तेभ्यः। मुखं—वदनमपि। न दर्श्यं—न दर्शनीयम्। तद्दर्शनकाले परिवृत्य स्थेयमवगुण्ठनेन वा मुखमाच्छादनीयमित्यर्थः। युक्तमेवैतद्गुरुस्त्रीणाम्। अन्यथा दर्शननमनादिक्रियार्थागतपुंप्रसङ्गस्य दुर्निवार्यत्वात्तत्सम्भवे स्वधर्मस्थितिभङ्गापत्तेरिति भावः। "भ्रश्यति स्वेतरेषां वै नारी पुंसां प्रसङ्गतः। पतिव्रता सुशीलाऽपि तस्मात्तं प्रयता त्यजे"दिति मनुस्मृतेः। चकारादेर्मवंश्याभिरन्याभिरपि स्त्रीभिः पुंसां स्पर्शसम्भाषणादि न कार्यम् ॥ १३४ ॥

अथ ताभ्यां व्यवहितदेहसम्बन्धानां पुंसामङ्गस्पर्शादि परिहरणीयमित्याह—स्वेति। कर्हिचित्—अशङ्कितेऽपि निमित्ते। न भाष्याः—कुशलानुयोगादिष्वपि न सम्भाष्याः। तेषां दृष्टिपथान्मुखं परिहरणीयमित्याह—तेभ्यो दर्श्यं मुखं न चेति। चोऽवधारणे। नैव दर्श्यमित्यर्थः। यद्यपि स्त्रीमात्रसाधारणोऽयमुपदेशस्तथाप्याचार्याण्या विशेषतोऽयमर्थोऽवधेय इत्यभिप्रेत्य विशिष्योक्तिः ॥ १३४ ॥

ननु साधारणस्यास्यासाधारणप्रकरण उपदेश
त्यादिना ॥ १३४ ॥

**गृहाख्याश्रमिणो ये स्युः पुरुषा मदुपाश्रिताः।**
**स्वासन्नसम्बन्धहीना न स्पृश्या विधवाश्च तैः॥ १३५॥**

अथ गृहस्थानां विशेषधर्मानाह विंशत्या—गृहाख्येति। मदुपाश्रिताः—मम शिष्याः। ये गृहाख्याश्रमिणः—गृहाख्यो द्वितीय आश्रमो विद्यते येषां ते। पुरुषाः—पुमांसः। स्युः। तैः। स्वासन्नसम्बन्धहीनाः—यासां मरणाशौचं न भवेत्ताद्दशदूरसम्बन्धवत्यः सम्बन्धहीनाश्च। विधवाः—मृतभर्तृकाः स्त्रियः। न स्पृश्याः। तत्स्पर्शस्यात्यमङ्गलत्वादिति भावः। "अमङ्गलानां सर्वेषां विधवा ह्यत्यमङ्गलम्। अतस्तां न स्पृशेद्धीमान्स्वसम्बन्धिस्त्रियं विने"ति स्कान्देऽगस्त्युक्तेः। "आशिषो विधवास्त्रीणां ज्ञेया आशीविषोपमाः। प्रयाणकाले तद्दीक्षा मरणायैव निश्चित"मित्यपि तत्रैवोक्तम्। चकारोऽनुक्तोपहासादिसकलतत्प्रसङ्गनिषेधसमुच्चयार्थः॥१३५॥

अथ गृहस्थान्निजशिष्यादिशति—गृहस्थेति। मदुपाश्रिताः—मदाश्रयणोन्मुखा मामाश्रिता वा ये गृहस्थास्तैरासन्नसम्बन्धहीना विधवाश्च न स्पृश्याः। चकारात्सधवानां समुच्चयः। विधवा वा सधवाः स्त्रियो न स्पृश्याः, या व्यवहितसम्बन्धाः। तासां स्पर्शमात्रेणापि कदाचिच्चित्तविक्षोभसम्भवेन धर्मलोपप्रसङ्गात्। विधवाप्रसङ्गस्य विशेषतः पातित्यावहत्वेन कण्ठरवेण तासां निर्देशः। विधवायाः स्वरूपतोऽस्पृश्यत्वं विशेषमभिप्रेत्य तथा तासां निर्देशः। तथाच वचनम्—"अमङ्गलानां सर्वेषां विधवा ह्यत्यमङ्गलम्। अतस्ता न स्पृशेद्धीमान्स्वसम्बन्धिस्त्रियं विने"तीत्यपरे॥ १३५॥

औन्मुख्यस्याप्याश्रयणत्वविवक्षया कर्तृत्वस्य चौन्मुख्यसाधारणस्य विवक्षया व्याचष्टे—मदाश्रयणोन्मुखा मामाश्रिता वेति। वाशब्दोऽप्यर्थे। नन्वेवं त्यागनिमित्तेऽविशिष्टे विधवा इति किं विशेषनिर्देशेन, स्वासन्नसम्बन्धहीना इति सामान्यनिर्देशेनैवार्थसिद्धेरित्यत आह—विधवेति। स्वासन्नसम्बन्धहीना न स्पृश्या विधवाश्च न स्पृश्या इति वाक्यभेदेन व्याचक्षाणानां मतमाह—विधवाया इति। स्वरूपत इति। स्वासन्नसम्बन्धत्वलक्षणनिमित्तनिरपेक्षम्॥ १३५॥

---

**मात्रा स्वस्रा दुहित्रा वा विजने तु वयःस्थया।**
**अनापदि न तैः स्थेयं कार्यं दानं न योषितः॥ १३६॥**

किञ्च—मात्रेति। वयःस्थया—वयः—यौवनं, तत्र तिष्ठतीति वयःस्था तया,

अथासन्नसम्बन्धाभिर्मात्रादिभिरपि विजने वासो न कार्य इत्याह—मात्रेति। वयःस्थया—युवत्या मात्रा स्वस्रा दुहित्रा वा रहसि न स्थेयम्। अनापदि—आवश्यकादन्यस्मिन्प्रसङ्ग

अनापदीत्येतद्व्याचष्टे—आवश्यकादन्यस्मिन्निति। आपत्पदं प्रकृते आवश्यकपरमिति भावः।

युवत्या । "वयः पक्षिणि बाल्यादौ वयो यौवनमात्रके" इति विश्वः । मात्रा-निजजनन्या, स्वस्रा-स्वभगिन्या, दुहित्रा-स्वपुत्र्यापि सह । विजने-रहःस्थाने । तैः-पुरुषैः । अनापदि-आपत्कालादन्यत्र । न स्थेयम् । गत्यन्तराभावे तु देशकालानुसारेण यावत्प्रयोजनं स्थातव्यमित्यर्थः । एकान्तस्थलाभावेऽपि युवतिदर्शनस्य शृङ्गाररसोद्दीपकविभावत्वादेकान्ते तु मनःक्षोभावश्यसम्भवाद्विद्वद्भिर्विवेकिभिरपि तत्र न तत्प्रसङ्गः कर्तव्य इति भावः । उक्तं हि श्रीभागवते—"नन्वग्निः प्रमदा नाम घृतकुम्भसमः पुमान् । सुतामपि रहो जह्यादन्यदा यावदर्थकृ"दिति । "मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षती"ति च । स्कान्दे काशीखण्डे चोक्तम्—"न मात्रा न दुहित्रा वा न स्वस्रैकान्तशीलता । बलवन्तीन्द्रियाण्यत्र मोहयन्त्यपि कोविदा"निति । तथा-तैः । योषितः-स्वभार्यायाः । दानं न कार्यं-याचतेऽपि कस्मैचित्सा न देयेत्यर्थः । तस्याः पातिव्रत्यभङ्गस्यातिपातकत्वादिति भावः । तथा चोक्तं दानमयूखे स्कान्दे—"आपत्स्वपि न देयानि नव वस्तूनि सर्वथा । अन्वये सति सर्वस्वं दारांश्च शरणागतान् । न्यासाधी कुलवृत्तिं च निःक्षेपं स्त्रीधनं सुतम् । यो ददाति स मूढात्मा प्रायश्चित्तैर्विशुद्ध्यती"ति ॥ १३६ ॥

---

इति यावत् । इन्द्रियाणि प्रमाथीनि हरेयुः प्रसभं मन इति भावः । तथा चोक्तम् "मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत् । बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥" इति । विविक्तासनः-विविक्तदेशस्थितिरित्यर्थः । अविविक्तासन इति । पाठे तु सङ्कीर्णासन इत्यर्थः । अथापद्यपि यन्न कार्यं तदाह—कार्यं दानं न योषित इति भार्या ह्यापद्यपि स्वेन रक्ष्या न सा दानार्हा । तथाच वचनम्—"आपत्स्वपि न देयानि नव वस्तूनि सर्वथा । अन्वये सति सर्वस्वं दारांश्च शरणागतान् ॥ न्यासाधी कुलवृत्तिं च निक्षेपं स्त्रीधनं सुतम् ।" "अन्वाहितं याचितकमाधिः साधारणं च यत् ॥ निक्षेपः पुत्रदारांश्च सर्वस्वं चान्वये सति । आपत्स्वपि च कष्टासु वर्तमानेन देहिना ॥ अदेयान्याहुराचार्या यच्चान्यस्मै प्रतिश्रुतम् ।" "स्वकुटुम्बाविरोधेन देयं दारसुतादृते । नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥" इति । अयं च योषिद्दाननिषेधः स्मर्यमाणसर्वस्वदानादिनिषेधस्याप्युपलक्षकः ॥ १३६ ॥

---

एतेन-अन्नपानादिव्यवहारस्य मात्रादिभिरवर्जनीयतया विजनेऽपि तत्प्रसक्त्या तन्निषेधोऽनुपपन्न इति शङ्का परास्ता । अथापद्यपीति । अनेन-अनापदीत्यस्य सम्बन्धो व्यावर्त्यते । नन्वन्येषामप्यदेयत्वे वक्तव्ये योषिन्मात्रस्यादेयत्वनिरूपणमसङ्गतमित्याशङ्कां परिहरन्नाह—अयं चेति ॥ १३६ ॥

**प्रसङ्गो व्यवहारेण यस्याः केनापि भूपतेः।**
**भवेत्तस्याः स्त्रियाः कार्यः प्रसङ्गो नैव सर्वथा॥ १३७॥**

प्रसङ्ग इति। तैरिति सर्वत्र सम्बध्यते। यस्याः स्त्रियाः। केनापि– ज्ञातेनाज्ञातेन वा येन केनापि। व्यवहारेण हेतुना। भूपतेः–नृपस्य। प्रसङ्गः–अन्तःपुरे तत्समीपगमनादिलक्षणः सम्बन्धो भवेत्। तस्याः स्त्रियाः। प्रसङ्गः–तत्समीपस्थितिसम्भाषणादिलक्षणः सम्बन्धस्तु। सर्वथा नैव कार्यः। "राज्ञीदाराऽथवा यस्याः स्वातन्त्र्येण च योषितः। राज्ञा प्रसङ्गो दूत्या वा तया व्यवहरेन्न त्वि"ति राजधर्मटीकायां स्मृतेः॥ १३७॥

यस्या वागालापमात्रेणाप्यनर्थ इहैव प्रबलतरः प्राणनाशपर्यन्त आपतेत्तया सहापद्यपि सम्भाषणादिप्रसङ्गो न कार्य इत्याह—प्रसङ्ग इति। उभयतोऽनर्थायेत्यस्य विशिष्यादेशः। यस्याः स्त्रियः केनापि व्यवहारेण योग्येनायोग्येन वा, अवरोधजनानुबन्धेनान्तःपुरपरिचारिणीभवेन वा, भूपतेः प्रसङ्गः–अन्तःपुरप्रवेशादिलक्षणो भवेत्। तस्याः प्रसङ्गः–पुनः पुनराभाषणादिरूपः। सर्वथा– आपत्तावपि। तदेकहितेच्छयाऽपि न कार्यः। कदाचिद्राजनिग्रहापातादिति भावः॥ १३७॥

इहैवेति। आपद्यप्यसम्भाषणीयत्वे निमित्तमेतत्। अनापद्यसम्भाषणीयत्वे निमित्तं परतोऽनर्थावहत्वमनेन व्यज्यते। केनापीत्यस्यार्थमाह—योग्येनायोग्येन वेति। अर्थान्तरमाह—अवरोधेति। अवरोधजनस्य–अन्तःपुरस्थस्य, अनुबन्धः–शारीरः सम्बन्धः। प्रसङ्गशब्दार्थमाह—अन्तःपुरप्रवेशादीति। सर्वथेत्यस्यार्थमाह—आपत्तावपीति। आपत्तिप्रतिसम्बन्धित्वं तस्याममभिप्रेत्य भावमाह—तदेकहितेति। स्वस्यापत्तावपीति तु स्फुटम्॥ १३७॥

---

**अन्नाद्यैः शक्तितोऽभ्यर्च्यो ह्यतिथिस्तैर्गृहागतः।**
**दैवं पित्र्यं यथाशक्ति कर्तव्यं च यथोचितम्॥ १३८॥**

अन्नाद्यैरिति। तैः–गृहस्थैः। गृहागतः–स्वगृहं प्राप्तः। अतिथिः– न विद्यते तिथिर्द्वादश्यादिर्नियता यस्येत्यतिथिः, यः कश्चिदन्नार्थीत्यर्थः। नियततिथिस्त्वभ्यागतः। अतिथिशब्दो भिक्षुकमात्रोपलक्षकः। तानाह स्कन्दः—

अथातिथिसत्कारः कार्य इत्याह—अन्नाद्यैरिति। गृहागतः–ग्रामान्तराद्गृहमागत इत्यर्थः। एतेन नैकग्रामीणोऽतिथिरिति व्यज्यते। तथाच वचनम्—"नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा। उपस्थितं गृहे विद्याद्भार्या यत्राग्नयोऽपि वा॥" इति। अतिथिः–व्याख्यातश्चायं शब्दः कुल्लूकभट्टेन—"अनित्यावस्थानान्न विद्यते द्वितीया तिथिर्यस्येत्यतिथिरुच्यत" इति। तथाच

गृहागत इत्यस्यार्थमाह—ग्रामान्तरादिति। इदं च विवक्षासिद्धम्। एतद्विवक्षायां यो विशेषस्तमाह—एतेनेति। अतिथिशब्दमाप्तसंवादेन व्याचष्टे—व्याख्यातश्चायमिति। प्रवृत्तिनिमित्तान्तर-

"अध्वगः क्षीणवृत्तिश्च विद्यार्थी गुरुपोषकः । यतिश्च ब्रह्मचारी च षडेते धर्मभिक्षुकाः ॥" इति । शक्तितः—यथाशक्ति । अन्नाद्यैः—अन्नोदकादिभिः । अभ्यर्च्यः—अभिवादनपूर्वकं सन्तोषणीय इत्यर्थः । "गोदानेन च यत्पुण्यं पात्राय विधिपूर्वकम् । सत्कृत्य भिक्षवे भिक्षां दत्त्वा तत्फलमाप्नुया"दिति काशीखण्डोक्तेः । "येनार्चितोऽतिथिः प्रीत्या तेन सम्प्रीणितो हरि"रिति पराशरस्मृतेश्च । श्रीभागवते चोक्तम्—"अधना अपि ते धन्याः साधवो गृहमेधिनः । यद्गृहा ह्यर्हवर्याम्बुतृणभूमीश्वरावराः ॥ व्यालालयद्रुमा वै तेऽप्यरिक्ताखिलसम्पदः । यद्गृहास्तीर्थपादीयमादतीर्थविवर्जिताः ॥" इति । "गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि । यदि निर्यान्ति ते नूनं फेरुराजगृहोपमाः ॥" इति च । तदनादरे तु निरयपातोऽप्युक्तस्तत्रैव—"यस्त्विह वा अतिथीनभ्यागतान्वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य चापि निरये पापदृष्टेरक्षिणी वज्रतुण्डा गृध्राः कङ्कवटादयः प्रसह्योरुबलादुत्पाटयन्ती"ति । "अनर्चितोऽतिथिर्गेहाद्भग्नाशो यस्य गच्छति । आजन्मसञ्चितात्पुण्यात्क्षणात्स हि बहिर्भवेत् ॥" "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ । तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरे"दित्यादिस्मृतिभ्यश्च । हीत्युक्तप्रसिद्धं द्योतयति । शान्तिपर्वण्यापद्धर्मेषु तु शत्रोरप्यातिथ्यं

---

मानवं वचनम्—"एकरात्रं तु निवसन्नतिथिर्ब्राह्मणः स्मृतः" इति । तथा पाराशरश्च—"नैकग्रामीणमतिथिं न गृह्णीत कदाचन । अनित्यमागतो यस्मात्तस्मादतिथिरुच्यते ॥ दूराच्चोपागतं श्रान्तं वैश्वदेव उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः ॥ इष्टो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा । सम्प्राप्तो वैश्वदेवान्ते सोऽतिथिः स्वर्गसङ्क्रमः ॥" इति । मन्वादियुगादिप्रभृतयो येषामागमने निमित्तं तेऽभ्यागता अतथाभूतोऽतिथिरिति वा तदर्थः । तथाच वचनम्—"तिथिः पर्वोत्सवाः सर्वे त्यक्ता येन महात्मना । सोऽतिथिः सर्वभूतानां शेषानभ्यागतान्विदुः ॥" इति । व्याख्यातं चैतन्माधवाचार्येण—मन्वादियुगादिप्रभृतिषु तिथिविशेषेषु द्रव्यलाभमुद्दिश्य येऽभ्यागच्छन्ति तेऽभ्यागताः । तादृशं तिथिविशेषमनपेक्ष्य यदा कदाचित् क्षुधादिपीडया वा समागतोऽतिथिः । एवं चैकग्रामः प्रतिनियतेषु तिथिविशेषेषु समागच्छतीति नासावतिथिः । यस्तु ग्रामादकस्मादसङ्केतितो बुभुक्षुः समागच्छति सोऽनित्यमागतः स एवातिथित्वेन सङ्गृह्यते नेतर इति । एवम्भूतोऽतिथिरन्नाद्यैः शक्तितोऽर्च्यः । आदिशब्दात्स्वागतादीनां सङ्ग्रहः । तथाच वचनम्—"अतिथिं तत्र सम्प्राप्तं पूजयेत्स्वागतादिना । अर्घ्यासनप्रदानेन पादप्रक्षालनेन च ॥ श्रद्धया चान्नदानेन प्रियप्रश्नोत्तरेण च । गच्छतश्चानुयानेन

---

माह—मन्वादियुगादीति । तत्र प्रमाणमाह—तथा चेति । यतिब्रह्मचारिणोरतिथ्यभ्यागतकोटावसमा-

कर्तव्यमित्युक्तम्—"अरावप्युचितं कार्यमातिथ्यं गृहमागते। छेत्तुमप्यागते छायां नोपसंहरति द्रुमः ॥" इति।

किञ्च–तैः। दैवं–देवानामिदं दैवम्, 'तस्येदमि'त्यण्, ब्रह्मादिदेवतातर्पणं वैश्वदेवादिकं च कर्म। पित्र्यं–पितरो देवता अस्येति पित्र्यम्, पितृतर्पणं श्राद्धादिकं च कर्म। यथाशक्ति–स्वशक्त्यनुसारेण। यथोचितं–यथाधिकारम्। जीवत्पितुरेतावदुचितं मृतपितुरेतावदुचितं, तथा स्वास्थ्य एतावदस्वास्थ्य एतावदिति च व्यवस्थां धर्मशास्त्रादवगत्य यथार्हं कर्तव्यमित्यर्थः। "दैवं पित्र्यं यथावित्तं यो नाचरति मूढधीः। क्षीणपुण्यः पतत्येव रौरवे स न संशयः ॥" इति स्मृतेः। अत्र गृहस्थशूद्राणां दैवपित्र्यकर्मणी तु तेषां वेदमन्त्रानधिकारान्नाममन्त्रेण विहिते इति निर्णीतं शूद्रकमलाकरादौ। श्राद्धे तु विशेषमाह वृद्धपराशरः—"आमान्नेन तु शूद्रस्य तूष्णीं च द्विजपूजनम्। श्राद्धं कृत्वा च निर्वाप्य सजातीन् भोजयेदथे"ति। अनुपनीतद्विजकुमारस्त्रीशूद्रादेस्तूत्तरीयेणैव सव्यापसव्ये ज्ञेये इति निर्णयकमलाकरः। शूद्रेण श्राद्धदिने स्वगृहे ब्राह्मणैः पाकं कारयित्वा ब्राह्मणभोजनं न कार्यं, श्रद्धया द्विगुणमामान्नमेव देयम्। तथा चाहतुर्विष्णूशनसौ—"न पक्वं भोजयेच्छ्राद्धे सच्छूद्रोऽपि कदाचन। भोजने प्रत्यवायी स्यान्न च तस्य फलं लभे"दिति। सुमन्तुश्चाह—"सदा चैव तु शूद्राणामामश्राद्धं विधीयते" इति। "आमान्नं द्विगुणं देयं हिरण्यं च चतुर्गुण"मिति च। शूद्रस्य श्राद्धीयामान्न-

---

प्रीतिमुत्पादयेत् गृही ॥" इति। अतिथेरसत्करणे च महाननर्थः स्मर्यते—"अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते। पितरस्तस्य नश्यन्ति दश वर्षाणि पञ्च च ॥ काष्ठभारसहस्रेण घृतकुम्भशतेन च। अतिथिर्यस्य भग्नाशस्तस्य होमो निरर्थकः ॥ साङ्गोपाङ्गांस्तथा वेदान्पठतीह दिने दिने। न चातिथिं पूजयति वृथा स पठति द्विजः ॥ पाकयज्ञैर्महायज्ञैः सोमसंस्थाभिरेव च। ये यजन्ति न चार्चन्ति गृहेष्वतिथिमागतम् ॥ तेषां यशोऽभिकामानां दत्तमिष्टं च यद्भवेत्। वृथा भवति तत्सर्वमाशया हतया हते ॥ अतिथिर्यस्य भग्नाशो गृहस्थस्य तु गच्छति। तस्मात्सुकृतमादाय दुष्कृतं तु प्रयच्छति ॥ वैश्वदेवान्तिके प्राप्तमतिथिं यो न पूजयेत्। स चाण्डालत्वमाप्नोति सद्य एव न संशयः ॥" इति। अतिथिर्भोजयितव्य इत्ययं विधिर्ब्रह्मचारिप्रभृतयो गृहागता भोजयितव्या इत्यस्याप्युपलक्षकः। तथाच स्मर्यते—"यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ। तयोरन्नमदत्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥ दद्याच्च भिक्षात्रितयं परिव्रा-

---

वेशात्तयोर्भैक्ष्यस्यादाने पातित्यप्रसङ्गात्तदवबोधनस्येह प्रसङ्गमभिप्रेत्याह—अतिथिर्भोजयितव्य इत्यय-

ग्रहणे तु कुटुम्बिब्राह्मणस्य न दोष इत्युक्तं धर्मप्रदीपे षड्त्रिंशन्मते—"आमं शूद्रस्य यत्किञ्चिच्छ्राद्धिकं प्रतिगृह्यते । तत्सर्वं भोजनायालं नित्ये नैमित्तिके न चे"ति । शुद्धितत्त्वेऽङ्गिराश्चाह—"शूद्राद्धिप्रगृहेष्वन्नं प्रविष्टं तु सदा शुची"ति । पराशरश्चाह—"तावद्भवति शूद्रान्नं यावन्न स्पृशते द्विजः । सम्प्रोक्षयित्वा गृह्णीयाच्छूद्रान्नं गृहमागत" मिति ॥ १३८ ॥

ब्रह्मचारिणाम् । इच्छया च ततो दद्याद्विभवे सत्यवारितम् ॥" इति । अतिथितो विशेषश्चात्र स्मर्यते—"वैश्वदेवे तु सम्प्राप्ते भिक्षुके गृहमागते । उद्धृत्य वैश्वदेवार्थं भिक्षुकं तु विसर्जयेत् ॥ वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहितुम् । नहि भिक्षुकृतान्दोषान्वैश्वदेवो व्यपोहति ॥" इति । दैवं पित्र्यं च यथाधिकारं यथाविधि शक्तितः कार्यमित्याह—दैव्यं पित्र्यं यथाशक्तीति । यच्च देवानां प्रीणनाय पितॄणां प्रीणनाय विहितं तद्यथोचितं स्वाधिकारानुगुणं यथाशक्ति कार्यमित्यर्थः ॥ १३८ ॥

मिति । अत्र-अन्नदानविषये ॥ १३८ ॥

---

**यावज्जीवं च शुश्रूषा कार्या मातुः पितुर्गुरोः ।**
**रोगार्तस्य मनुष्यस्य यथाशक्ति च मामकैः ॥ १३९ ॥**

यावज्जीवमिति । मामकैः—मदाश्रितैस्तैर्गृहस्थैः । मातुः—स्वजनन्या अपरमातुश्च । पितुः—स्वजनकस्य । गुरोः—स्वाचार्यस्य च । शुश्रूषा—परिचर्या । यावज्जीव्यते तावदिति यावज्जीवं, जीवितावधीत्यर्थः । यथाशक्ति । कार्या—कर्तव्या । तथा चाह मनुः—"यं मातापितरौ क्लेशं सहेते सम्भवे नृणाम् । न तस्य निष्कृतिः शक्या वक्तुं वर्षशतैरपि ॥ तयोर्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा ।

अथ मातृपित्रादिशुश्रूषा कार्येत्याह—यावज्जीवमिति । मातुः पितुर्गुरोश्च शुश्रूषां यावज्जीवं कुर्यात् स्मर्यते च मातुर्गौरवम्—"मासान्दशोदरस्थं या धृत्वा शूलैः समाकुला । ततोऽपि विविधैर्दुःखैः प्रसूयेत विमूर्छिता ॥ प्राणैरपि प्रियान्पुत्रान्मन्यते सुतवत्सला । कस्तस्या निष्कृतिं कर्तुं शक्तो वर्षशतैरपि ॥" इति । उत्तरोत्तरमुत्कर्षोऽत्र बोध्यः । तथाच स्मर्यते—"तयोरपि पिता श्रेयान्बीजप्राधान्यदर्शनात्" इति । निषेकादिसमस्तसंस्कारकरणपूर्वकसावित्र्युपदेशाच्च पितुर्मात्रपेक्षया गौरवम् । ततोऽपि गरीयस्त्वा ब्रह्मविद्याप्रदे गुरौ, "उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता । ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम् ॥" इति वचनात् ।

पूर्वार्धोत्तरार्धयोर्भिन्नवाक्यत्वं ज्ञापयन्नाह—मातुरित्यादि । यावज्जीवमित्यस्यानन्वयादेकवाक्यता हि न घटते । मामकैरित्यस्यानर्थ्याच्च । शुश्रूषानिमित्तं गौरवं दर्शयति—स्मर्यते चेति । अत्र–

तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ एषां त्रयाणां शुश्रूषा परमं तप उच्यते। त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥" इति । श्रीभागवते भगवांश्चाह— "सर्वार्थसम्भवो देहो जनितः पोषितो यतः । न तयोर्याति निर्वेशं पित्रोर्मर्त्यः शतायुषा ॥ यस्तयोरात्मजः कल्प आत्मना च धनेन च । वृत्तिं न दद्यात्तं प्रेत्य स्वमांसं खादयन्ति हि ॥ मातरं पितरं वृद्धं भार्यां साध्वीं सुतं शिशुम् । गुरुं विप्रं प्रपन्नं च कल्पोऽबिभ्रच्छ्वसन्मृतः ॥" इति । "पुत्राणां हि परो धर्मः पितृशुश्रूषणं सता"मिति देवाश्चाहुः । स्कान्दे चोक्तम्—"पित्रोर्गुरोश्च शुश्रूषा कर्तव्या श्रद्धयाऽन्वहम् । यथाशक्ति न तां कुर्याद्यः स यास्यति रौरव"मिति । एतदभिप्रायेणैव मातापितृविरोधिनः पुत्रस्य याज्ञवल्कीयव्यवहाराध्यायमिताक्षरायां नारदेन दायभागोऽपि निषिद्धः—"पितृद्विट् पतितः षण्ढो यश्च स्यादौपपातिकः । औरसा अपि नैतेंऽशं लभेरन् क्षेत्रजाः कुतः ॥" इति । तथा–रोगेणार्तः–पीडितस्तस्य च मनुष्यस्य । यथाशक्ति शुश्रूषा कार्या । रोगशब्दः शस्त्रक्षतादेरप्युपलक्षणम् । "रोगाग्निशस्त्राघातेस्य प्राणिनो दययाऽन्वहम् । कार्या सेवा यथाशक्ति भैषज्यान्नोदकादिभि"रिति पराशरस्मृतेः । रोगार्तसेवाया गोदानसमत्वं चाह याज्ञवल्क्यः—"श्रान्तसंवाहनं रोगिपरिचर्या सुरार्चनम् । पादशौचं द्विजोच्छिष्टमार्जनं गोप्रदानव"दिति ॥ १३९ ॥

---

एतेषां त्रयाणां शुश्रूषाया अवश्यकर्तव्यतामाह मनुः—"तयो र्नित्यं प्रियं कुर्यादाचार्यस्य च सर्वदा । तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ तेषां त्रयाणां शुश्रूषा परमं तप उच्यते । न तैरभ्यननुज्ञातो धर्ममन्यं समाचरेत् ॥ त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः । पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः ॥ गुरुराहवनीयस्तु साग्नित्रेता गरीयसी । त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान्विजयेद्गृही ॥ दीप्यमानः स्ववपुषा देववद्दिवि मोदते । इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ॥ गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते । सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ॥ अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥" इति । एतेषां शुश्रूषायामधिकारो जीवनम् । जीवता तेषां शुश्रूषा कार्येति यावत् । रोगार्तस्य तु शुश्रूषा मामकैः सर्वैरेव यथाशक्ति कार्या । मामकैः–मुमुक्षुभिः, त्यक्तगृहैरपीत्येतत् ॥ १३९ ॥

---

मातुः पितुर्गुरोरिति निर्देशे । ब्रह्मविद्या–ब्रह्म वेदः, सैव विद्या, ब्रह्मणः–परब्रह्मणो वा विद्या । यावज्जीवमित्यस्य भावमाह—एतेषामिति । चकारस्य त्वर्थतां व्यवहितान्वयं चाभिप्रेत्याह—रोगार्तस्य त्विति । रोगार्तस्य शुश्रूषायाः सर्वसाधारण्यान्मामकैरिति विशेषोक्तिरसङ्गतेत्याशङ्कां परिहरन्नाह—त्यक्तगृहैरपीत्येतदिति ॥ १३९ ॥

**यथाशक्त्युद्यमः कार्यो निजवर्णाश्रमोचितः ।**
**मुष्कच्छेदो न कर्तव्यो वृषस्य कृषिवृत्तिभिः ॥ १४० ॥**

यथाशक्तीति । तैरित्यन्वेति । निजस्य वर्णस्याश्रमस्य चोचितः । तत्र वर्णो ब्राह्मणादिः, आश्रमस्तु गृहाश्रम एक एव, तदनुरूपः । उद्यमः—उद्यमनमुद्यमः, स्वस्ववृत्त्यनुसारेण वित्ताद्युपार्जनोद्योगः । यथाशक्ति—स्वकीयसामर्थ्यमनतिक्रम्यैव । कार्यः, न तु स्वाधिकबलपुरुषान्तरतुल्यः स्वन्यूनबलपुरुषान्तरतुल्यो वेत्यर्थः । अन्यथा जनोपहासमानभङ्गमनोविषादादिना प्राणत्यागावधिव्यथोत्पत्तेरिति भावः । "वयोबुद्ध्यर्थवाग्वेषश्रुताभिजनकर्मणाम् । आचरेत्सदृशीं वृत्तिमजिह्मामशठां तथेति" याज्ञवल्क्योक्तेः । "यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते । नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् । आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥"इति विदुरोक्तेश्च । "कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा । नाचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत् । सञ्चिन्त्य मनसा राजन् विदित्वा शक्यमात्मनः । करोति यः शुभं कर्म स वै भद्राणि पश्यती"ति पराशरगीतोक्तेश्च । लघुचाणक्येन चोक्तम्—"अनुचितकर्मारम्भः स्वजनविरोधो बलीयसि स्पर्धा । प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारी"ति । उद्यमशब्देनात्र केवलं व्यावहारिक ऐहिकसुखावह उद्योग एव न विवक्षितः, किन्तु देहान्ते सुखदः पारलौकिकोऽपि । तदुक्तं विदुरनीतौ—"दिवसेनैव

---

अथैहलौकिकं हितं निरूपयन्नादौ गृहस्थेन जीवनार्थं वर्णाश्रमसमुचित उद्यमः कार्य इत्याह—यथाशक्तीति । निजो यो वर्णो यश्चाश्रमस्तदुचित उद्यमः कार्यः । यद्यपि वर्णभेदेन वृत्तिभेदादस्त्युद्यमे भेदः, तदपेक्ष्यते वर्णोचित इति, गृहस्थादन्यत्रार्जनस्याप्रसक्तेर्वृत्त्यर्थ उद्यमो गृहस्थस्यैकस्यैवेत्याश्रमोचित इति व्यर्थम् । तथाप्याश्रमान्तरोपकारकमतिथ्यभ्यागतसपर्यासमुचितं गृहस्थाश्रमं प्रविष्टानामुद्यम एव समुचित इति ज्ञापनायाश्रमोचित इति । याजनाध्यापनप्रतिग्रहेषु वृत्त्यर्थेषु यस्य यत्र शक्तिस्तेन तत्र यतितव्यमित्यभिप्रायेणाह—यथाशक्तीति । वर्णान्तरवृत्तिष्वपि शक्तिभेदो बोध्यः । वृत्तिप्रसङ्गात्कापिपरान्प्रत्यादिश्यते—

---

अथ—पारलौकिकहितनिरूपणानन्तरम् । उद्यमशब्दो न यत्नसामान्यपरः, तस्योपदेशमन्तरेणैव प्राप्तेः, यतिप्रभृतीनां भिक्षाकाले भिक्षाटनार्थयत्नस्य सहजतया यथाशक्त्युद्यमः कार्य इत्युपदेशविशेषस्यानन्वयाच्च, तदत्रोद्यमशब्दोऽन्नवस्त्राद्यर्जनोपयोग्युद्यमपर इत्यभिप्रेत्य शङ्कते—यद्यपीत्यादिना । एतेन यतीनामपि भिक्षाटनोद्योगोऽस्त्येवेति नेयमाशङ्का घटते इत्याशङ्काऽपास्ता । उद्यम एव समुचित

तत्कुर्याद्येन रात्रौ सुखं वसेत्। अष्टमासैश्च तत्कुर्याद्येन वर्षाः सुखं वसेत्। पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत्। यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसे"दिति । तथा–कृषिवृत्तिभिः–कृषिरूपा वृत्तिर्येषां तैः, वैश्यवृत्त्या जीवद्भिर्ब्राह्मणैरितरवर्णैश्च । वृषस्य–बलीवर्दस्य । मुष्कच्छेदः–वृषणकर्तनम् । न कर्तव्यः । "स्थिराङ्गं नीरुजं तृप्तं साण्डं षण्ढत्ववर्जितम्। अधृष्यं सबलप्राणमनड्वाहं तु वाहये"दिति वृद्धपराशरस्मृतेः ॥ १४० ॥

---

मुष्केति । अधुना लोके विधिनिषेधावतिक्रम्य स्वार्थैकपरा बहवः कर्षुका बलीवर्दानां मुष्कच्छेदं कारयन्ति तथा न कार्यम्, तथासति बीजोपमर्दने महतः प्रत्यवायस्यापत्तेः, "स्थिराङ्गं नीरुजं तृप्तं साण्डं षण्ढत्ववर्जितम्। अधृष्यं सबलप्राणमनड्वाहं तु वाहयेत् ॥" इति स्मरणाच्चेति भावः ॥ १४० ॥

---

इति। अनुद्यमो दोषायेति भावः। आश्रमोचित इतीति। आश्रमस्य–गृहस्थाश्रमस्य, उचितः–अपेक्षित इत्येतत्। गृहस्थप्रकरणादयमाश्रमशब्दो गृहस्थाश्रमपर इति भावः ॥ १४० ॥

---

**यथाशक्ति यथाकालं सङ्ग्रहोऽन्नधनस्य तैः ।**
**यावद्व्ययं च कर्तव्यः पशुमद्भिस्तृणस्य च ॥ १४१ ॥**

यथाशक्तीति । तैः । यावान्–यत्परिमाणो व्ययस्तावानिति यावद्व्ययम् । 'यावदवधारणे' इत्यव्ययीभावः । प्रतिवर्षं स्वस्य यावान्व्ययो भवेत्तत्परिमाण इत्यर्थः । अन्नेन सहितं धनमन्नधनम्, अन्नं शाल्यादि, धनं रूप्यमुद्रादि, तस्य । सङ्ग्रहः–सञ्चयः । यथाशक्ति–स्वसामर्थ्यानुसारेण । यथाकालं–तत्तत्समय एवेत्यर्थः । यस्मिन्काले यदन्नं खलेषु विक्रीयेत तस्मिन्काले तदन्नस्य सङ्ग्रहः कर्तव्यः, अन्यथा तन्महार्घत्वे भूरिव्ययसम्भवादिति भावः । एवं धनमपि लाभकाल इति ज्ञेयम् । तथा–पशुमद्भिः–येषां गृहे पशवः स्युस्तैः ।

---

कृषिवृत्तिप्रसङ्गाद्वैश्यैर्धनसञ्चयो यथाव्ययं कार्य इत्याह—यथाशक्ति यथाकालमिति। तैः–कृषिवृत्तिभिः। अन्नधनस्य–अन्नरूपस्य धनस्य, अन्नस्य–सुवर्णादिधनस्य चेति वा। कृषिगो-

---

तच्छब्दस्य व्यवहितादव्यवहितपरामर्शितैव समुचितेत्यभिप्रेत्याह—वैश्यैरिति। कृषिवृत्तिभिरिति

तृणस्य—पशुभक्षणोचिततृणादेरित्यर्थः। सङ्ग्रहश्च कर्तव्यः। अत्रापि यथाकालमिति सम्बध्यते। एतच्च गृहस्थानां दृष्टफलमेवेति न प्रमाणापेक्षा॥ १४१॥

रक्षवाणिज्येषु गोरक्षाप्रधाना ये तैस्तृणसङ्ग्रहः कार्य इत्याह—पशुमद्भिस्तृणस्य चेति॥१४१॥

ह्यव्यवहितपूर्वं वचनम्, कृषिवृत्तयश्च वैश्याः। एतेन ब्राह्मणेष्वस्य विधेरनन्वयेन कुशूलकुम्भीधान्यादीनां यायावराणां स्मर्यमाणं प्राशस्त्यं सुरक्षितम्॥ १४१॥

---

गवादीनां पशूनां च तृणतोयादिभिर्यदि।
सम्भावनं भवेत्स्वेन रक्ष्यास्ते तर्हि नान्यथा॥ १४२॥

गवादीनामिति। गाव आदयो येषां तेषाम्। पशूनां—गवाश्वमहिष्यादीनाम्। चकाराच्छुकादीनां पक्षिणां च। तृणतोयादिभिः—तृणशब्दोऽत्र तत्तदुचितान्नमात्रोपलक्षकः, यथा बालानां पयोमात्रम्, मास्यादीनां पयः किञ्चित्पिष्टान्नं च, इतरेषां भक्षणोचितं यवसम्, पक्षिणामन्नकणाश्चेत्यादि यथासम्भवमन्नं ज्ञेयम्,

अथ सामान्यतो गृहस्थान्प्रत्याह—गवादीनामिति। ते गवाद्याः पशवः रक्ष्याः। गृहस्थैरिति शेषः। प्रशस्यन्ते च गावः—"अनादेयतृणं भुक्त्वा स्रवन्त्यनुदिनं पयः। तुष्टिकृद्देवतादीनां पूज्या गावः कथं न ताः॥ हरन्ति स्पर्शनात्पापं पयसा पोषयन्ति याः। प्रापयन्ति दिवं दत्ताः पूज्या गावः कथं न ताः॥ यच्छफाहतभूमेस्तु उद्यतः पांसुसञ्चयः। शोधयेत्पुरुषस्यैनो वन्द्या गावः कथं न ताः॥ शकृन्मूत्रं हि यस्यास्तु पीतं हरति पातकम्। किमपूज्यं हि तस्या गोरिति पाराशरोऽब्रवीत्॥ कुतस्तेषां हि पापानि येषां गृहमलङ्कृतम्। सततं बालवत्साभिर्गोभिः स्त्रीभिरिव स्वयम्॥ ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधा कृतम्। एकत्र मन्त्रास्तिष्ठन्ति हविरेकत्र तिष्ठति॥ गोभिर्यज्ञाः प्रवर्तन्ते गोभिर्देवाः प्रतिष्ठिताः। उत्पादयन्ति सस्यानि मर्दयन्ति वहन्ति च॥ आनयन्ति दवीयस्यमुष्णः को वाऽधिको भुवि॥ स्कन्धेन दूराच्च वहन्ति भारमन्नादिकानां न च भक्षयन्ति। स्वीयेन जीवेन परस्य जीवं रक्षन्ति पुष्णन्ति विवर्धयन्ति॥ उक्षा गौर्वेधसा सृष्टा तस्य ह्युत्पादनाय च। तैरुत्पादितसस्येन सर्वमेतद्धि धार्यते॥" इति। एवं प्रशस्यमानानां गवां रक्षणं ह्युभयतः श्रेयसे। उक्तं च—"यश्चैतान्पालयेद्यत्नाद्वर्धयेच्चैव यत्नतः। जगन्ति तेषां सर्वाणि साक्षात्स्युः पालितानि च॥ यावद्गोपालने पुण्यमुक्तं पूर्वं मनीषिभिः। उक्ष्णोऽपि पालने तेषां पुण्यं दशगुणं भवेत्॥ जगदेतद्धृतं सर्वमनड्वद्भिश्चराचरम्॥ वृष एव ह्यतो रक्ष्यः पालनीयस्तु सर्वदा॥ धर्मोऽयं भूतले साक्षाद्ब्रह्मणा हितकारिणा। त्रैलोक्यधारणायालमन्नानां च प्रसूतये॥ बन्धनं पालनं रक्षां द्विजः कुर्याद्गृही

अथ—पशुमतां तृणसङ्ग्रहोपदेशानन्तरम्, एतेन सङ्गतिरस्य श्लोकस्य दर्शिता भवति। तृणसङ्ग्रहो-

तोयं–उदकम्, यथाकालमुदकपानम्, ते आदिभूते येषां तत्स्थानादीनां तैः । सम्भावनं–प्रतिदिनं यथाकालं सन्तोषणम् । यदि स्वेन भवेत्तर्हि ते पशवो रक्ष्याः । स्वगृहेष्विति शेषः । अन्यथा–तत्सम्भावनाशक्तौ तु । न रक्ष्याः–स्वगृहे न स्थापनीयाः, अन्यस्मै पालकाय देयाः । "क्षुधातृषातीव्रदंशविषमस्थानसीदताम् । पशूनामेव निःश्वासैर्ऋद्धिः सर्वा विनश्यति ॥ तृषिताः पशवो बद्धाः कन्या चापि रजस्वला । देवताश्च सनिर्माल्या घ्नन्ति पुण्यं पुरा कृत"मित्याद्यनर्थस्मरणात् । पशुसम्भावनप्रकारो, वृद्धपराशरस्मृतेरवगन्तव्यः ॥ १४२ ॥

---

गवाम् ॥" इति । आदिशब्दादश्वमहिषादयः । ननु–किं रक्ष्या इति सर्वान्प्रत्यविशेषेणायं नियमस्तत्राह–गवादीनां पशूनां तृणतोयादिभिः सम्भावनं यदि स्वेन भवेदिति । सति रक्षणसामर्थ्ये रक्ष्या इत्यर्थः । अयं विधिः समर्थं प्रति नासमर्थं प्रतीति यावत् । तदेतद्विशदयति–नान्यथेति । अयं रक्षणविधिरसमर्थे न प्रवर्तते इत्येतावन्मात्रं न, निषिध्यते च । तत्सङ्ग्रहोऽसमर्थेन क्रियमाण इति भावः । अयमर्थो हि गां लोभेन परिगृह्णन् अशक्तश्च तृणाद्यर्जने क्षुत्पिपासाकुलां गृहे वासयन्नवश्यं निपतिष्यति निरये । तथा चोक्तम्–"क्षुधातृषातीव्रदंशविषमस्थानसीदताम् । पशूनामेव निःश्वासै ऋद्धिः सर्वा विनश्यति ॥ तृषिताः पशवो बद्धाः कन्या चापि रजस्वला । देवताश्च सनिर्माल्या घ्नन्ति पुण्यं पुराकृतम् ॥" इति ॥ १४२ ॥

---

पदेशेन पशुसंरक्षणं हि प्रसक्तम् । अन्वयक्रमेण प्रतीकं गृह्णाति–गवादीनां पशूनामिति ॥ १४२ ॥

---

## ससाक्ष्यमन्तरा लेखं पुत्रमित्रादिनाऽपि च ।
## भूवित्तदानादानाभ्यां व्यवहार्यं न कर्हिचित् ॥ १४३ ॥

ससाक्ष्यमिति । तैः । साक्षिणां कर्म साक्ष्यं–पृथक् स्वहस्ताक्षरन्यासस्तेन सहितं ससाक्ष्यम् । लेखं–लेख्यम् । अन्तरेत्यव्ययं विनार्थे । पुत्रश्च मित्रं च ते आदी यस्य स्वजनस्य तेन सहापि । भूः–क्षेत्रगृहादिभूमिश्च, वित्तं–हिरण्यरू-

---

पुत्रो मित्रमन्यो वा यः कोऽप्याप्तः, तेन सहापि ऋणदानादानादिव्यवहारो लेखपूर्वक एव कार्य इत्याह–ससाक्ष्यमिति । लेखश्च साक्ष्यशून्यश्चेद्विवादे न प्रमाणपदमर्हेदिति ससाक्ष्यमित्युक्तम् । साक्षिणः कर्म साक्ष्यं, तेन सहितं, साक्षिहस्ताक्षरविन्याससमेतमित्यर्थः । लेखमन्तरा–लेखं विना, भूवित्तदानादानाभ्यां–भुवः–क्षेत्रादेः, वित्तस्य च, ये दानादाने–क्रेतुरुत्तमर्णाद्वाऽपेक्षितं वित्तं गृहीत्वा तदायत्तीकरणं क्षेत्रादेर्दानं, आदानं–स्वामिनोऽपेक्षितं

---

दानादानशब्दयोर्दानप्रतिग्रहयोरेव मुख्यवृत्ततया तत्परताभ्रमं व्यावर्तयन्व्याचष्टे–भूवित्तेत्या-

प्यादि द्रव्यं च, तयोर्दानादाने ताभ्यां कृत्वा । दानं-अधमर्णायार्पणम् । आदानं-उत्तमर्णाद्ग्रहणम् । कर्हिचित्-क्वापि । न व्यवहार्यं-व्यवहारो न कर्तव्यः । आदौ लेखं कारयित्वा पश्चाद्भूम्यादिदानादाने कर्तव्ये इत्यर्थः । साक्षिलक्षणमाह याज्ञवल्क्यः—"तपस्विनो दानशीलाः कुलीनाः सत्यवादिनः । धर्मप्रधाना ऋजवः पुत्रवन्तो धनान्विताः । त्र्यवराः साक्षिणो ज्ञेयाः श्रौतस्मार्तक्रियापराः । यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः" इति । यथाजाति-मूर्धावसिक्तानां मूर्धावसिक्ता इत्यादि । यथावर्णं-ब्राह्मणानां ब्राह्मणा इत्यादि । लेखलक्षणमपि स एवाह—"यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् । लेख्यं तु साक्षिमत्कार्यं तस्मिन् धनिकपूर्वकम् ॥" निष्णातः-व्यवसितः । धनिकः-उत्तमर्णस्तन्नामलेखनं पूर्वं यस्मिंस्तथाभूतं लेख्यम् । "समामासतदर्धाहर्नामजातिस्वगोत्रकैः । सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥" समाः-संवत्सरः । "समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत् । मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम् ॥ साक्षिणोऽपि स्वहस्तेन पितृनामकपूर्वकम् । अत्राहममुकः साक्षी लिखेयुरिति ते पृथक् ॥ अलिपिज्ञ ऋणी यः स्यात्स्वमतं स तु लेखयेत् । साक्षी वा साक्षिणान्येन सर्वसाक्षिसमीपतः ॥" इति । तल्लेखकलक्षणं चाह लघुचाणक्यः—"मेधावी वाक्पटुर्धीरो लघुहस्तः स्फुटाक्षरः । राजनीतिप्रवीणश्च भवेल्लेख्यस्य लेखकः ॥" इति ॥ १४३ ॥

---

वित्तं दत्त्वा क्षेत्रादेः स्वायत्तीकरणम्, वित्तस्य दानं ऋणतया, आदानमपि तथा, ताभ्यां व्यवहारो न कर्हिचित्कार्यः । पुत्रो मित्रं वा स्वात्मप्रणयमात्रेण विना लेखं ऋणदानादिव्यवहारः कदापि न कार्यः । विषयाणां ह्ययं स्वभावः, यद्रहसि सन्निहितो विवेकिनमपि विमोहयेदिति, कनकं तु विषयेषु प्रबलतरं, तद्गृहाश्रममधिवसताऽपि यथाचोदितं तेन सह क्रियमाणो व्यवहारो नानर्थाय, अपदेन क्रियमाणस्तु पुत्रभावादिनिबन्धनमार्जवमपहरेदेवेति भावः । साक्षिलेखलक्षणं त्वन्यतोऽवगन्तव्यम् ॥ १४३ ॥

---

दिना । ताभ्यामिति । इदं दायविभागस्याप्युपलक्षकम् । कदापि न कार्य इति । अत्र निमित्तमाह—विषयाणामित्यादिना । अन्यतः-तत्तत्परतया प्रवृत्ताभ्यः स्मृतिभ्यः ॥ १४३ ॥

---

कार्ये वैवाहिके स्वस्यान्यस्य वाऽर्प्यधनस्य तु।
भाषाबन्धो न कर्तव्यः ससाक्ष्यं लेखमन्तरा ॥ १४४ ॥

कार्य इति। स्वस्य वाऽन्यस्य। वैवाहिके–विवाहसम्बन्धिनि, कार्ये च सति। तुशब्दश्चार्थे। अर्प्यं–कन्यादानकालेऽर्पणीयं च तद्धनं–पारिबर्हाख्यं द्रव्यं च तस्य। ससाक्ष्यं लेखं–उक्तलक्षणं लेख्यम्। अन्तरा–विना। भाषाबन्धः–केवलं वाङ्मात्रेण प्रतिज्ञा। न कर्तव्यः। अत्राप्यादौ ससाक्ष्यं लेखं कारयित्वा पश्चाद्विवाहनिश्चयः कर्तव्यः, अन्यथा परस्परं भूरितरकलहो भवेदिति हि प्रसिद्धिः ॥१४४॥

---

यच्चोद्वाहसमये कन्यायै वराय वा वस्त्रभूषादिनिमित्ते भूरि धनमर्प्यते तत्रापि ससाक्ष्यो लेखो विधेय इत्याह—कार्ये इति। स्वस्यान्यस्य वा वैवाहिके–विवाहसम्बन्धिनि कार्ये, पारिबर्हादिनिमित्त इत्येतत्। यद्भूरि धनमर्प्यं कन्यायै वराय वा तत्र ससाक्ष्यं लेखं विना भाषाबन्धः–एतावद्धनं कन्याया वरस्य वा पारिबर्हद्रव्यरूपं एतैर्दत्तं मम वशेऽस्तीति वाङ्मात्रेण निबन्धो न कर्तव्यः, किन्तु ससाक्ष्यो लेखः कार्यः। अन्यथा कदाचिद्दायविभागप्रसङ्गेऽविज्ञानेन लोभेन वाऽविभाज्यस्योद्वाहिकस्य विभागप्रसङ्गात्। केचित्तु स्वस्य परस्य वा विवाहप्रसङ्गे पूर्वं कन्यार्थं वरार्थं वा पारिबर्हमेतावद्दास्यामि दापयामीति वा प्रतिश्रुत्य विवाहं कारयन्ति, पश्चात्तु प्रतिश्रुतं लोभेन क्लेशेन वा न प्रयच्छन्ति ततश्च महान्क्लेशः समापतति, तत्तादृशेऽप्यर्थे ससाक्ष्यो लेखः कार्य इत्याह—कार्ये वैवाहिके इति ॥ १४४ ॥

---

अर्प्यम्–अर्प्यत इत्येतत्। कन्यायै वराय चेति। चतुर्थ्या संप्रदानत्वबोधनेन शुल्कव्यावृत्तिः, तस्याधर्मत्वेनाप्रसङ्गात्, लोभात्प्रसङ्गे तु क्रयेऽन्तर्भावात्पूर्वश्लोकेनैव सङ्ग्रहात्। पूर्वमिति। विवाहात्पूर्वमित्यर्थः ॥ १४४ ॥

---

आयद्रव्यानुसारेण व्ययः कार्यो हि सर्वदा।
अन्यथा तु महद्दुःखं भवेदित्यवधार्यताम् ॥ १४५ ॥

आयेति। द्रव्यस्य आयः–लाभ आयद्रव्यम्, राजदन्तादित्वात्परत्वम्, तस्यानुसारः–अनुसन्धानं तेन। सर्वदा। व्ययः–व्यवहारे द्रव्यविनियोगः। कार्यः। स्वस्य द्रव्यागमानुरूपो व्ययः कर्तव्यो न तु वित्तशाठ्यमृणं वा।

---

अथायानुगुण्येन व्ययः कार्य इत्याह—आयेति। हिरवधारणे। आयद्रव्यानुसारेणैव व्ययः कार्यः। अन्यथा–व्ययाधिक्ये। अपरिहार्यर्णप्रसङ्गादामरणान्तक्लेशापत्तेः, मरणेऽपि

---

महत्त्वं त्रेधाऽभिमेत्य व्याचष्टे–आमरणान्तेत्यादिना। प्रत्यवायापत्तेश्चेति। ऋणापरिशोधने

अन्यथा—द्रव्यागममननुसन्धाय यथेष्टव्ययाचरणे तु । महद्दुःखं—यस्य यद्द्रव्यमानीतं स्यात्तस्य तत्प्रतिपादने तन्मूल्यार्पणे वाऽकृते तत्कृतोपद्रवो दुःसह एव भवेदिति । अवधार्यतां—भवद्भिर्ज्ञायताम् । तस्माद्गृहस्थैरायापेक्षया किञ्चिन्न्यून एव व्ययः कर्तव्य इति भावः । हीति संशयोऽत्र न कार्य इत्यर्थः । तथा चाह वृद्धचाणक्यः—"इदमेव परं दाक्ष्यमायादल्पतरो व्यय" इति । "आगमे यस्य चत्वारि निर्गमे पञ्च वापि षट् । स विस्तृतव्ययो नूनं धर्मभ्रष्टो भवेद्ध्रुव"मिति च । कामन्दकनीतिशास्त्रे चोक्तम्—"यतस्ततं उपानीय व्ययं कुर्वन्ति भूरि ये । धनिकोपद्रवे जाते विषमश्नन्ति ते ततः ॥" इति ॥ १४५ ॥

---

सन्ततौ दुःखानुवृत्तेः, प्रत्यवायापत्तेश्चेति भावः ॥ १४५ ॥

---

पारलौकिकदुःखापत्तेरित्येतत् । अयमुपदेशो ब्राह्मणेषु शालीनेषु बोध्यः ॥ १४५ ॥

---

द्रव्यस्याऽऽयो भवेद्यावान् व्ययो वा व्यावहारिके ।
तौ संस्मृत्य स्वयं लेख्यौ स्वक्षरैः प्रतिवासरम् ॥ १४६ ॥

द्रव्यस्येति । व्यावहारिके—स्वस्य सकलेऽपि व्यवहारकार्ये । द्रव्यस्य—रौप्यकादिधनादेः । यावान्—यत्परिमाणः, आयः—आगमः । व्ययः—निर्गमो वा यत्परिमाणो भवेत् । तौ—तावन्तावायव्ययौ । प्रतिवासरं—तत्तद्दिन इत्यर्थः । संस्मृत्य—सम्यक् स्मृत्वा । सुष्ठु—शोभनानि अक्षराणि—वर्णास्तैः । स्वयं—स्वहस्तेनैव लेख्यौ, अन्यथा धूर्तबाधापत्तेरिति भावः । "न यस्य लेखो लेखो वा भवेत्सन्दिग्धवर्णकः । धूर्ताः कृतकलेखास्तं बाधित्वा गृह्णते धन"मिति राजधर्मटीकायां नीतिशास्त्रोक्तेः ॥ १४६ ॥

निजवृत्त्युद्यमप्राप्तधनधान्यादितश्च तैः ।
अर्प्यो दशांशः कृष्णाय विंशोंऽशस्त्विह दुर्बलैः ॥ १४७॥

निजेति । तैः । निजा—स्वकीयेत्यर्थः, वृत्तिः—याजनादिरूपा जीविकावृत्तिः, वर्त्तते—जीव्यतेऽनयेति वृत्तिः, तथा—उद्यमः—स्वस्वधर्माविरोधेन विशेषधनप्राप्त्यर्थं क्रियमाणो व्यापारश्च, ताभ्यां प्राप्तं यद्धनधान्यादि, तत्र धनं रूप्यमुद्रिकादि, धान्यं व्रीह्यादि, आदिशब्दात्कार्पासादिग्रहणम्, तस्मादिति पञ्चम्यर्थे तसिः । चकारस्तृणादिसमुच्चयार्थः । दशांशः—दशमोंऽशो दशांशः, दशमो भाग इत्यर्थः । 'सङ्ख्याशब्दस्य वृत्तिविषये पूरणार्थत्वं त्रिभागादिव'दिति कैयटोक्तेः । अत एव माघः प्रायुङ्क्त—"यं समेत्य च ललाटलेखया बिभ्रतः सपदि शम्भुविभ्रमम् । चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवात्त्रिलोचन"मिति । श्रीहर्षश्च—"त्रिभागलोभार्तिमसौ बिभर्ती"ति । 'त्रिदिवादवातर' इत्यस्य व्याख्याने तृतीया द्यौस्त्रिदिव इति मल्लिनाथश्चाह सर्वङ्कषायाम् । कृष्णाय । अर्प्यः—अर्पणीयः, स्वेष्टदेवालयं गत्वा निवेदनीय इत्यर्थः । इह—लोके । दुर्बलैः—अल्पवृत्त्युद्यमभूरिव्ययैः पुरुषैस्तु । विंशः—विंशतेः सङ्ख्यापूरको विंशः विंशतितमः । अंशः—भागः । अर्प्यः । अन्यथा द्रव्यशुद्ध्यभावादिति भावः । "सर्वभूतात्मभूताय कृष्णायानन्यदर्शिने । देयं शान्ताय पूर्णाय दत्तस्याऽऽनन्त्यमिच्छते"ति श्रीभागवतोक्तेः । जीविकावृत्तिरुक्ता याज्ञवल्क्येन—"इज्याध्ययनदानानि वैश्यस्य क्षत्रियस्य च । प्रतिग्रहोऽधिको विप्रे याजनाध्यापने तथा ॥ प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम् । कुसीदं कृषिवाणिज्यं पशुपाल्यं विशः स्मृतम् ॥ शूद्रस्य द्विजशुश्रूषा तयाऽजीवन्वणिग्भवेत् । शिल्पैर्नानाविधैर्जीवेद्द्विजातिहितमाचर"न्निति । शूद्रस्य वृत्त्यन्तराण्यप्याह देवलः—"शूद्रधर्मो द्विजातिशुश्रूषा पापवर्जनं कलमादिपोषणं पशुपालनभारोद्वहनपण्यव्यवहारचित्रकर्मनृत्तगीतवेणुवीणामुरजमृदङ्ग-

एवं सावधानेन समुचितया वृत्त्या सम्पाद्यमाने द्रव्ये धर्मार्थमेकदेशस्य पृथक्कर्तव्यत्वे "तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् । भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥" इति सामान्यतः शास्त्रतोऽवगम्यमाने स्वाभिमतं विशेषमाह—निजेति । स्वस्ववृत्त्या धनादिलाभोऽप्य-

सावधानेनेति । पुरुषेणेति शेषः । अवधानमिह आयाधिकव्ययपरिहरणोपयोगि बोध्यम् । धर्मार्थमिति सामान्यनिर्देशमभिप्रेत्याह—सामान्यत इति । विशेषमिति । कृष्णायेति विंश इति च

वादनादीनी"ति । मोक्षधर्मेषु चोक्तम्—"अगर्हितेन कर्मणा धनान्यादाय स्वाध्यायोपलब्धप्रकर्षेण वा ब्रह्मर्षिनिर्मितेन वा अद्रिसारगतेन वा हव्यकव्यनियमाभ्यासदैवतप्रसादोपलब्धेन वा धनेन गृहस्थो गार्हस्थ्यं वर्तये"दिति । ब्रह्मर्षिनिर्मितेन—याज्ञवल्क्याद्युक्तयाजनाध्यापनादिलक्षणेन । अद्रिसाराः—मणिदिव्यौषधिस्वर्णाद्याकरास्तेभ्यो गतेन—प्राप्तेन । स्वर्णादिद्रव्यस्य शुद्धिस्तु दानादेवेत्युक्तं श्रीभागवते—"कालेन स्नानशौचाभ्यां संस्कारैस्तपसेज्यया । शुध्यन्ति दानैः सन्तुष्ट्या द्रव्याण्यात्माऽऽत्मविद्यये"ति[1] । "धनं शुध्यति दानेने"ति शुद्धिविवेकोक्तेश्च । दानं च पात्रायैव कर्तव्यम् । तदुक्तं दानखण्डे—"पात्रे द्रव्यार्पणं कार्य"मित्यादि । पात्रं च मुख्यत्वेन श्रीकृष्ण एवेत्युक्तं श्रीमद्भागवते नारदेन—"पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः । हरिरेवैक उर्वीश ! यन्मयं वै चराचरम् ॥ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु । राजन् ! यदग्रपूजायां मतः पात्रतयाऽच्युतः ॥" इति । ततो भगवद्भक्तब्राह्मणाश्च पात्रमित्यपि तत्रैवोक्तम्—"पुरुषेष्वपि राजेन्द्र ! सुपात्रं ब्राह्मणं विदुः । तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनु"मिति । देयद्रव्यपरिमाणं मुख्यत्वेन तूक्तं दानमयूखे—तस्माच्चिभागं वित्तस्य जीवनाय प्रकल्पयेत् । भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥" इति । तदर्थं हेमाद्रिराह—"सर्वस्य वित्तस्य भागपञ्चकं कृत्वा भागत्रयं जीवनार्थं भागद्वयं धर्मार्थं कल्पये"दिति । तृतीयं भागं त्रिभागमिति तु भास्कराचार्यादेर्मतम् । कृपणाशक्तविषये तूक्तं भारते—"एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृताः ॥" इति । गोपदं वित्तमात्रोपल-

लक्षणम् । ...

निजवृत्त्युद्यमप्राप्तेत्युक्तिः । निजवृत्त्यनुगुणेनोद्यलसानामनुद्यमानां दुर्लभ इत्येतद्व्यञ्जयितुं निजवृत्त्युद्यमप्राप्तेत्युक्तिः । निजवृत्त्यनुगुणेनोद्यमेन लब्धं धनं धान्यमन्यद्वा गवादि तत्र दशमोंऽशः कृष्णाय देयः । दुर्बलैः—असमृद्धैः । विंशो भागो देयः । यागदानतपोहोमादिकं सर्वमेव कर्म यत्प्रसादद्वारा श्रेयःसाधनं भवति । उक्तं च—"भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥ ये त्वन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम् ॥ मयैव विहितान्हि तान् ॥" इति । तस्मात्स कृष्णस्य यदर्पणं ततोऽन्यत्किं धर्मेषु गरीय इति

बलशब्दस्य शरीरबलपरविशेषः । निजवृत्त्युद्यमप्राप्तेत्यस्य विशेषणस्य वैयर्थ्यं परिहरति—स्वस्वेति । ननु स्मर्यते धर्मार्थमिति, कथमुच्यते विशेषतः कृष्णायेतीत्याश्रमं व्यावर्तयति—असमृद्धैरिति ।

[1] कालेन भूम्यादि । स्नानेन देहादि । शौचेन अमेध्यलिप्तादि । संस्कारैर्गर्भादि । तपसा इन्द्रियाणि । इज्यया ब्राह्मणाः । दानैर्द्रव्याणि । सन्तुष्ट्या मनः । आत्मा आत्मविद्यया ।

क्षणमिति हेमाद्रिः। तत्राप्यशक्तविषय आह वृद्धपराशरः—"राज्ञो दत्वा च षड्भागं देवतानां च विंशकम्। त्रयस्त्रिंशं च विप्राणां कृषिकर्ता न लिप्यते॥" इति। अत्रापि कृषिरित्युपलक्षणम्। एवंकरणाभावे त्वशुचिद्रव्योपसेवनजनितबुद्धिजाड्यादिना भक्तिधर्मज्ञानतिरोभावावश्यम्भावाद्दुःखनिवृत्तिर्न स्यादेवेति तात्पर्यम्॥ १४७॥

भावः। उक्तं च भागवते—"पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः। हरिरेवैक उर्वीश! यन्मयं वै चराचरम्॥" इति। दशम इति भागविशेषावधारणं चान्यत्र क्वचिद्विहितमनुस्रृत्य। तथाच भारते—"एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती। शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृताः॥" इति। अशक्ते विशेषमाह वृद्धपराशरः—"राज्ञो दत्त्वा च षड्भागं देवतानां च विंशक"मिति॥ १४७॥

आह—यागदानेति। तस्यास्त्वेत्युत्तरेण सम्बन्धः॥ १४७॥

---

**एकादशीमुखानां च व्रतानां निजशक्तितः।**
**उद्यापनं यथाशास्त्रं कर्तव्यं चिन्तितार्थदम्॥ १४८॥**

एकादशीति। तैः। एकादशी मुखं—आदिर्येषां तेषाम्। व्रतानाम्। चकारो लक्षदीपलक्षप्रदक्षिणालक्षनमस्कारमन्त्रपुरश्चरणादिसमुच्चयार्थः। चिन्तितार्थदं—स्वाभीष्टफलप्रदम्। उद्यापनं—व्रतार्कव्रतराजादिग्रन्थप्रसिद्धं गोसुवर्णादिदानहोमब्राह्मणभोजनैः सह सर्वतोभद्रादिमण्डले स्वेष्टदेवमहापूजालक्षणं कर्म। यथाशास्त्रं—तद्विधानशास्त्रमनतिक्रम्य। निजशक्तितः—यथाशक्ति। कर्तव्यम्। अन्यथा तत्तद्व्रतसम्पूर्णफलाप्राप्तेरिति भावः। तदुक्तं नन्दिपुराणे—"आदौ मध्येऽथवाऽप्यन्ते व्रतस्योद्यापनं चरेत्। उद्यापनं विना यत्तु तद्व्रतं न फलप्रदम्।

फलविशेषार्थिभिर्व्रतविशेषादिकमनुष्ठेयं व्रतादौ व्रतान्ते वा यथाविध्युद्यापनं कार्यमित्याह—एकादशीति। एकादशीशब्देनैकादशीव्रतं लक्ष्यते। तत्प्रभृतिकानां व्रतानामुद्यापनं कार्यम्। तद्धि चिन्तितार्थदं—व्रतेनाभिलषितो योऽर्थस्तत्प्रदम्। एतेन—व्रतस्योद्यापनहीनस्य निष्फलत्वं व्यज्यते। सिद्धश्चानयोरङ्गाङ्गिभावश्च। तथाच वचनम्—"आदौ मध्येऽथवाप्यन्ते व्रतस्योद्यापनं भवेत्। उद्यापनं विना यत्तु तद्व्रतं न फलप्रदम्॥" इति। अत्रोद्यापनांशे विधिः शाब्दः, व्रते स्वार्थो बोध्यः, अप्राप्तत्वेन साङ्गे विधेरपेक्षितत्वात्।

ननु विनाऽङ्गिविधानमङ्गविधानमनुपपन्नम्, अङ्गिनां वा व्रतानां विधेः कुतः प्राप्तिरित्याशङ्कां परिहरन्नवतारयति—फलेति। फलकामनया विधेः प्राप्तिर्ज्ञापिता भवति। चिन्तितार्थदमित्यङ्गविशेषणा-

यत्र चोद्यापनं नोक्तं व्रतानुगुणतश्चरेत् । महापूजां भगवतः कुर्याद्विप्रांश्च भोजयेत् । गां चैव काञ्चनं दद्याद्व्रतस्य परिपूर्तये ॥" इति ॥ १४८ ॥

यद्यप्येकादशीव्रतं नित्यप्राप्तं तथापि नित्याग्निहोत्रकाम्याग्निहोत्रयोरिवात्र भेदो बोध्यः ॥ १४८ ॥

दैवत्सिद्धिः । अङ्गिफलं ह्यङ्ग उपचर्यते । नन्वङ्गिनि विधावनवगमकं नेत्यत्राह—व्रते त्विति । नन्वेकादशीव्रतस्य कामकाधिकारे कथं गणनेत्यशङ्कामनूद्य परिहरति—यद्यपीत्यादिना ॥ १४८ ॥

---

कर्तव्यं कारणीयं वा श्रावणे मासि सर्वथा ।
बिल्वपत्रादिभिः प्रीत्या श्रीमहादेवपूजनम् ॥ १४९ ॥

कर्तव्यमिति । तैः । श्रावणे मासि । बिल्वपत्रमादिर्येषां तैः । उपचारैरिति शेषः । श्रीमहादेवपूजनम् । प्रीत्या—सादरम् । सर्वथा—अवश्यमेव । कर्तव्यं—स्वयं कार्यम् । वा—अथवा, स्वेषामानुकूल्याभावे । कारणीयं—ब्राह्मणद्वारा विधापनीयम् । एतदुक्तं शिवपुराणे—"श्रावणे मासि यो भक्त्या करोति शिवपूजनम् । महाभिषेकविधिना बिल्वपत्रैश्च कोमलैः ॥ अप्राप्यं तस्य नास्त्येव किञ्चिदत्र परत्र च । कारयेद्ब्राह्मणैर्वापि न तु शून्यं नयेदिम"मिति । पाद्मे चोक्तम्—"कार्तिके कमलैर्विष्णुः पूज्यो वा तुलसीदलैः । शङ्करो बिल्वपत्रैश्च श्रावणे मासि मानवैः ॥ प्रतिपत्रं नाममन्त्रं पठन्भक्त्या समर्चयेत् । यो नरः स लभेतैव भुक्तिं मुक्तिं च निश्चित"मिति । विशेषस्तु श्रावणमाहात्म्ये द्रष्टव्यः । अशक्तौ त्वाहोपमन्युः—"नियमेन नभोमासे प्रदोषे शिवदर्शनम् । यः कुर्यात्सोऽपि पूजायाः प्राप्नुयात्फलमीप्सित"मिति ॥ १४९ ॥

कामनाप्रसङ्गादुच्यते—कर्तव्यमिति । सति कामनाविशेषे श्रावणे मासि सर्वथा बिल्वपत्रादिभिर्महादेवस्य पूजा कार्या । सर्वथा—सर्वैः प्रकारैः, ये ये प्रकाराः पूजायामुक्तास्तैः सर्वैरिति यावत्, साङ्गं पूजा कार्येत्येतत् । स्वयं कर्तुमक्षमः कारयेद्वा । पूजनस्य प्रीणनव्यापारत्वाद्विना प्रणयं क्रियमाणस्य पत्रपुष्पार्पणस्य पूजात्वासिद्धिरित्येतत्स्फुटयितुं प्रीत्येत्युक्तम् ॥ १४९ ॥

अनन्तरश्लोकमवतारयति—कामनेति । कामनाप्रसङ्गात्—कामनाधिकारप्रसङ्गात् । अर्थसिद्धं शेषं पूरयन्नन्वयमाह—सति कामनाविशेष इति । एतेनोपरागश्राद्धादिवन्नैमित्तिकत्वं नेति गम्यते । सर्वथेत्यस्य नित्यतावगमकत्वभ्रमं वारयन्व्याचष्टे—सर्वैः प्रकारैरिति । भावमाह—ये ये इति ॥ १४९ ॥

---

**स्वाचार्यान्न ऋणं ग्राह्यं श्रीकृष्णस्य च मन्दिरात् ।**
**ताभ्यां स्वव्यवहारार्थं पात्रभूषांशुकादि च ॥ १५० ॥**

स्वाचार्यादिति । तैः । स्वेषामाचार्यः–गुरुस्तस्मात्सकाशात् । तथा–श्रीकृष्णस्य मन्दिराच्च । ऋणं न ग्राह्यम् । "प्राणापदं विना नैव ऋणं कार्यं हि कस्यचित् । देवद्रव्यं गुरुद्रव्यं विषवद्दूरतस्त्यजे"दित्यङ्गिरोवाक्यात् । किञ्च–स्वेषां व्यवहारः–विवाहादिकार्यं तदर्थम् । पात्राणि–धातुभाण्डानि पृथुस्थालकटाहादीनि च, भूषाः–कुण्डलाद्यलङ्काराश्च, अंशुकानि वस्त्राणि च, तान्यादयो यस्य–वाहनादेर्द्रव्यस्य तत्सर्वं व्यस्तं समस्तं वा । ताभ्यां–स्वाचार्यश्रीकृष्णमन्दिराभ्यां सकाशात् । न ग्राह्यम् । तस्यापि ऋणतुल्यत्वादिति भावः । चकारादिष्टकादिग्रहणम् । तथा चाह प्रायश्चित्तमयूखे यमः—"इष्टकाकाष्ठाश्मलोहान् देवालयगतान् गृही । गृह्णीयान्नात्मगेहार्थं गृह्णन् प्राप्नोति यातनाः ॥ देवताया गुरोश्चैव ब्राह्मणस्य तपस्विनः । वस्त्रपात्रधनान्नादि गृही स्वार्थं न चाददेत् ॥ परिचर्यारतानां तु तदादानं न दोषकृत् । प्रसह्य तैः प्रदत्तं तु गृह्णतोऽन्यस्य नाघकृत् ॥" इति । प्रदत्तं–अपुनर्ग्रहणाय दत्तम् ॥ १५० ॥

---

अथ सिंहावलोकनन्यायेन परिशीलयन्नाह—स्वाचार्यादिति । स्वस्य य आचार्यस्ततः, कृष्णस्य मन्दिराच्च । ऋणं न ग्राह्यं, कदाचिदपरिहृतस्यात्यनर्थावहत्वात् । वचनं च—"प्राणापदं विना नैव ऋणं कार्यं हि कस्यचित् । देवद्रव्यं गुरुद्रव्यं विषवद्दूरतस्त्यजेत् ॥" इति । प्रसङ्गादाह–स्वोपभोगाय पात्रभूषांशुकाद्यपि ततो न ग्राह्यमिति । तथाच वचनम्—"इष्टकाकाष्ठाश्मलोहान्देवालयगतान्गृही । गृह्णीयान्नात्मगेहार्थं गृह्णन्प्राप्नोति यातनाः ॥ देवताया गुरोश्चैव ब्राह्मणस्य तपस्विनः । वस्त्रपात्रधनान्नादि गृही स्वार्थं न चाददेत् ॥" इति ॥ १५० ॥

---

अव्यवहितेन सङ्गत्यभावादाह—सिंहावलोकनन्यायेनेति । एतेन व्यवहितपूर्वेण भूवित्तदानादानाभ्यामित्यनेन सङ्गतिर्ज्ञाप्यते । अग्राह्यत्वे निमित्तमाह—कदाचिदिति । अत्यनर्थेति । पारलौकिकदुःखमनर्थः, स चासन्तत्यनुवर्तमानत्वादत्यन्तः । दूरतस्त्यजेदिति । आपद्यपि देवद्रव्याद्गुरुद्रव्याच्च ऋणं न ग्राह्यमिति यावत् । प्रसङ्गात्–ऋणप्रसङ्गात् ॥ १५० ॥

**श्रीकृष्णगुरुसाधूनां दर्शनार्थं गतौ पथि ।**
**तत्स्थानेषु च न ग्राह्यं परान्नं निजपुण्यहृत् ॥ १५१ ॥**

श्रीकृष्णेति । श्रीकृष्णश्च, गुरुः–आचार्यश्च, साधवः–साधुगुणसम्पन्नभागवताश्च, तेषाम् । दर्शनार्थम् । गतौ–गमने । क्रियमाणायामिति शेषः । पथि–मार्गे । तथा–तत्स्थानेषु–तेषां श्रीकृष्णादीनां स्थानेषु च । निजपुण्यहृत् परान्नं न ग्राह्यम्–स्वकीयमेवान्नं भक्ष्यं, न तु परस्य तद्ग्राह्यम् । अत्र परान्नत्वं भैक्षेतरान्नस्य ज्ञेयम्, तस्य तु परान्नत्वाभावो वक्ष्यते । निजपुण्यहृदिति हेतुगर्भं विशेषणम् । "यस्यान्नमश्नन् पुरुषस्तीर्थक्षेत्रव्रतानि च । यज्ञं जपं तपो वापि कुर्यात्तस्यैव तत्फल"मिति स्मृतेः ॥ १५१ ॥

भगवद्भागवताचार्यचरणसमीपमुपगच्छता गृहस्थेन पथि तत्सन्निधौ वा परान्नं परिहरणीयमित्याह—श्रीकृष्णेति । गतौ–गमने प्रसक्ते सतीत्यर्थः । निजपुण्यहृदिति हेतुगर्भं विशेषणम् । पुण्यलिप्सया भगवद्भागवतसन्दर्शनार्थं प्रवृत्तस्य पुण्यं सेव्यमानं परान्नमपहरेदिति भावः । "यस्यान्नमश्नन्पुरुषस्तीर्थक्षेत्रव्रतानि च । यज्ञं जपं तपो वापि कुर्यात्तस्यैव तत्फलम् ॥" इति वचनादिति भावः । इदं च स्वान्नेन क्षेत्रादियात्रां कर्तुं यः शक्तस्तमधिकृत्य । अशक्तस्य भगवद्भागवतदर्शनोत्कण्ठैव सर्वफलावहा सर्वदोषप्रशमनी चेति नास्य परान्नाशनतः फले वान्यत्र वा प्रच्युतिर्लेशतोऽपि । इदं च बोध्यम्—यस्य भगवद्भागवतदर्शनतः पुण्यमभिलषितं तस्यायं नियमः । यस्य तु तद्दर्शनमेव फलमभिमतं तस्य तु नायं नियमः । अभिलषिते हि फलविशेषे तस्यान्यत्र सङ्क्रमः परिहरणीयः, स्वस्य वा तल्लाभः सम्पाद्यः । परान्नरतिस्त्वनेनापि त्याज्या, पापस्य परिहरणीयत्वात्, परान्नरतिस्तु प्रत्यवायाय भवेत् ॥ १५१ ॥

गुरोर्भगवन्मन्दिराद्याग्राह्यमुक्तम्, अथ सामान्यतः परस्मादग्राह्यमाह मूले—श्रीकृष्णेति । वचनादिति । नन्वेवं सत्यगतिरेव निर्धनस्य श्रीकृष्णगुरुसाधुसन्दर्शनसमुत्कण्ठाव्याप्तहृदयस्येत्याशङ्कां परिहरन्नाह—इदं चेति । निजपुण्यहृदिति पदस्य स्वारस्यं हृदि निधाय प्रकारान्तरेणाधिकारिभेदमाह—इदं च बोध्यमिति । अनेनापि–निष्कामेनापि ॥ १५१ ॥

---

**प्रतिज्ञातं धनं देयं यत्स्यात्तत्कर्मकारिणे ।**
**न गोप्यमृणशुद्ध्यादि व्यवहार्यं न दुर्जनैः ॥ १५२ ॥**

प्रतिज्ञातमिति । कर्मकारिणे–कर्म–स्वोक्तं कार्यं करोतीत्येवंशीलः कर्म-

अथासद्व्यवहारोऽसद्भिर्व्यवहारश्च न कार्य इत्याह—प्रतिज्ञातमिति । प्रतिश्रुताप्रदानादिकं ह्यसद्व्यवहारः, येन भृत्येन यत्कर्म कृतं तत्र प्रतिश्रुतं वेतनमप्रयच्छन्स्वामी परतः प्रत्यवायी

प्रतिज्ञातं धनं देयम्, न गोप्यमृणशुद्ध्यादीति वाक्यद्वयमेकार्थतया सङ्गमयति—असद्व्यवहार

कारी तस्मै। त्वमस्माकमिदं कार्यं कुरु तुभ्यमेतावद्धनं दास्यामीत्यादौ प्रतिज्ञाय येन प्रयोज्यकर्त्रा कर्म कारितं तस्मै इत्यर्थः। यत्–यत्परिमाणमित्यर्थः। धनं प्रतिज्ञातं–प्रतिश्रुतं स्यात्। तत्–तावद्धनम्। देयम्। अन्यथा क्लेशिततदन्तःकरणसन्तापाग्निना स्वकीयसर्वस्वनाशापत्तेरिति भावः। "भृत्याय वेतनं दद्यात्कर्मस्वामी यथाक्रमम्। आदौ मध्येऽवसाने वा कर्मणो यद्विनिश्चित"मिति मिताक्षरायां नारदोक्तेः। "कच्चित्कृतं विजानीषे कर्तारं च प्रशंससि। सतां मध्ये महाराज! सत्करोषि च पूजय"न्निति भारते नारदोक्तेश्च। "प्रतिश्रुत्य ददामीति यः पुमान्न ददाति तत्। स तत्पापेन सन्तप्तो निर्वृतिं नैव गच्छती"ति गारुडोक्तेश्च।

तथा–ऋणस्य–उत्तमर्णाद्गृहीतस्य धनस्य, शुद्धिः–प्रतिदानं ऋणशुद्धिः, सा आदिर्यस्य–स्वान्वयख्यात्यादेस्तत्। न गोप्यं–साक्षिप्रत्यक्षमेव वाच्यं न तु गोपनीयम्। "ऋणशुद्धिः स्वान्वयश्च गोपनीयौ न धीमते"ति पराशरोक्तेः। काशीखण्डे चोक्तम्—"नवैतानि प्रकाश्यानि रहःपापमकुत्सितम्। प्रायोग्यमृणशुद्धिश्च स्वान्वयः क्रयविक्रयौ॥ कन्यादानं गुणोत्कर्षौ नान्यत्केनापि कुत्रचि"दिति। ऋणशुद्धौ विशेषमाह याज्ञवल्क्यः—"दत्तर्णं पाटयेल्लेख्यं शुद्धौ वाऽन्यत्तु कारयेत्। साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिक"मिति। यदि स्वेन स्वपित्रादिना वा कृतमतं लेख्यं देशान्तरादौ स्थितं स्यान्नष्टं वा स्यात्तदा त्वधमर्णः शुद्धिकाले साक्षिमदन्यल्लेख्यं कारयेदित्यर्थः।

तथा–दुर्जनैः–पापकर्माचारैर्भगवद्विमुखैश्च जनैः सह। न व्यवहार्यं–व्यवहारो न कर्तव्यः। "न पापिभिर्व्यवहरेद्भगवद्विमुखैस्तथा। दाम्भिकैश्च खलैः क्वापि न च क्षणिकबुद्धिभि"रिति व्यवहारसमुच्चयोक्तेः। अर्थात्सद्भिस्तु व्यवहार्यमेव॥१५२॥

---

स्यादिह च वेतनानपाकर्माख्ये विवादपदे राज्ञा दण्ड्यः स्यात्। तस्मादयमसद्व्यवहारो न कार्य इति भावः। अत्र विशेषास्तत्तत्स्मृतितोऽवगन्तव्याः। ऋणशुद्ध्यादि–उत्तमर्णाद्गृहीतस्य धनस्य प्रत्यर्पणमृणशुद्धिः, तदादि न गोप्यम् तथाच वचनम्—"ऋणशुद्धिः स्वान्वयश्च गोपनीयौ न धीमता" इति। येषां सङ्गेनासद्व्यवहारावकाशः स्यात्तैर्दुर्जनैर्व्यवहारः सहासनसहालापादिरूपो न कार्यः। तथाच वचनम्—"न पापिभिर्व्यवहरेद्भगवद्विमुखैस्तथा। दाम्भिकैश्च खलैः क्वापि न च क्षणिकबुद्धिभिः॥" इति॥ १५२॥

---

इति। असन्–असाधुः, व्यवहारः। तत्र पूर्वस्योभयतोऽनर्थत्वेनासाधुत्वम्, उत्तरस्येहानर्थत्वेनासाधुत्वम्॥ १५२॥

दुष्कालस्य रिपूणां वा नृपस्योपद्रवेण वा ।
लज्जाधनप्राणनाशः प्राप्तः स्याद्यत्र सर्वथा ॥ १५३ ॥
मूलदेशोऽपि स स्वेषां सद्य एव विचक्षणैः ।
त्याज्यो मदाश्रितैः स्थेयं गत्वा देशान्तरं सुखम् ॥१५४॥

दुष्कालस्येति युग्मम् । दुष्टः कालः–दुर्भिक्षसमयस्तस्य । उपद्रवेण–तत्कृत पीडनेन । वा–अथवा । रिपूणां–स्वशत्रूणामुपद्रवेण । वा नृपस्य–स्वग्रामाधिपतेरुपद्रवेण । सर्वत्र कर्तरि षष्ठ्यः । यत्र–देशे । सर्वथा–सर्वप्रकारेणापि । लज्जा–लौकिकी त्रपा च, धनं–स्वसम्पादितं द्रव्यं च, प्राणाश्च, तेषां नाशः । प्राप्तः स्यात् । मूलदेश इति । सः स्वेषां मूलदेशः–वंशपरम्परागतस्थानभूतोऽपि । विचक्षणैः–बुद्धिमद्भिः । "प्राज्ञो मेधादिमान् विद्वानभिरूपो विचक्षण" इति धनञ्जयनिघण्टुः । मदाश्रितैः–गृहस्थपुरुषैः । त्याज्यः, न तु तत्र स्थेयम् । "नाधार्मिके वसेद्ग्रामे न व्याधिबहुले भृशम् । सोपद्रवेऽतिपाषण्डे नोपसृष्टेऽन्त्यजैर्जनै"रिति मनुस्मृतेः । "दुःखितास्तु त्रयो यान्ति सिंहाः सत्पुरुषा गजाः । त्रयः स्थानं न मुञ्चन्ति काकाः कापुरुषा मृगाः ॥" इति वृद्धचाणक्योक्तनीतिशास्त्राच्च । अन्यो देशो देशान्तरम्, मयूरव्यंसकादित्वात्समासः, तत् । गत्वा सुखं यथा भवति तथा स्थेयम् । तत्राप्युपद्रवे सोऽपि देशस्त्याज्य इत्यर्थः । "स देशो यत्र जीव्यते" इति न्यायात् ॥१५३॥१५४॥

---

स्वदेशोऽपि दुःखमूलं त्याज्य इत्याह—दुष्कालस्येति । यत्र देशे दुर्भिक्षोपद्रवेण शत्रूणामुपद्रवेण नृपस्योपद्रवेण वा लज्जादिभङ्गः प्रसजेत्स त्याज्यः । दुष्कालाद्युपद्रवेषूत्तरोत्तरं प्राबल्यं बोध्यम् । कालोपद्रवस्त्वल्पेन कालेन निवर्तेत । शत्रूपद्रवस्त्वामरणमनुवर्तेत । कालकौटिल्याच्छत्रुकौटिल्याच्च न प्राणनाशो नियतः, राजकौटिल्ये तु प्राणात्ययो नियतः । लज्जा—चित्तवृत्तिविशेषः, येनानुचिताचरणतो निवर्तते जनः परदर्शनानिष्टशङ्कया, तस्या नाशो भङ्गः, अयं मानभङ्गस्याप्युपलक्षकः । मूलदेशोऽपि–पितृपितामहाद्यन्वयानुगतोऽपि । सर्वथा त्याज्यः–सवासनं त्याज्यः । विचक्षणैः—अनेन नो दुःखं प्रसजेत्, अनेन नः सुखमिति पुरत एव विवेचनकुशला विचक्षणाः । यस्मिन्सुखं स एव स्वदेश इत्यभिप्रायेणाह—स्थेयं गत्वा देशान्तरं सुखमिति । तथा चार्थशास्त्रम्—"दुःखिता हि त्रयो यान्ति सिंहाः सत्पुरुषा गजाः । त्रयः स्थानं न मुञ्चन्ति काकाः कापुरुषा मृगाः" इति ॥ १५३–१५४ ॥

---

लज्जादिभङ्ग इति । तत्र यथाक्रममेकैकस्यादेकैकनाशः, एकद्वित्रिनाशः, यथासम्भवं वा नाशो बोध्यः । मूलदेशोऽपीति । अपिनाऽनापद्यत्याज्यत्वं गम्यते । देशस्य मूलत्वं व्याचष्टे—पितृपितामहेति । विचक्षणशब्दार्थमाह—अनेनेति ॥ १५३ ॥ १५४ ॥

आढ्यैस्तु गृहिभिः कार्या अहिंसा वैष्णवा मखाः।
तीर्थेषु पर्वसु तथा भोज्या विप्राश्च साधवः॥ १५५॥

धनिकगृहस्थानां विशेषमाह—आढ्यैरिति द्वाभ्याम्। आध्यायन्ति वित्तार्थिनो यांस्ते आढ्याः–धनिनस्तैः। "आतः" इति कः। पृषोदरादिः। गृहं–भार्या विद्यते येषां तैर्गृहिभिः–गृहस्थैस्तु। अहिंसाः–प्राणिघातरहिताः। वैष्णवाः–विष्णुदेवताकाः। मखाः–यज्ञाः। कार्याः–कर्तव्याः। "अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः। यच्छ्रद्धयाऽऽप्तवित्तेन शुक्लेनेज्येत पूरुषः॥" इति महर्षिवाक्यात्। अहिंसयज्ञाचरणरीतिर्भारतीयमोक्षधर्मेपूपरिचरवसुक्रियमाणाश्वमेधयज्ञाख्याने द्रष्टव्या।

---

ये चाढ्यास्तैः कर्तव्यं धनस्य सद्व्ययमाह—आढ्यैस्त्विति। धनस्य हि फलं धर्मः, उक्तं च—"धनं च धर्मैकफलं यतोऽसे"ति। धर्मश्च विष्णोः प्रीणनान्नान्योऽधिकः। अयं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च। तदाढ्यैर्वैष्णवा मखाः कार्याः। स हि प्रसन्नः सर्वान्पुरुषार्थान्प्रयच्छेत्। ये चान्ये देवा इज्यन्ते न ते फलं परिमितमपि स्वतो वितरितुं प्रभवन्ति। अत एवोक्तम्—"लभते च ततः कामान्मयैव विहितान् हि तान्" इति। एवं च सति साक्षादस्यैवाराधनं समुचितमिति युक्तमुक्तं गृहिभिर्वैष्णवा मखा इत्यविशेषेण। अहिंसाव्रतमाश्रितान्प्रत्युपदिष्टं स्मारयन्नाह—अहिंसा इति। पशुविशसनाद्यघटिता इत्यर्थः। अस्यैव सर्वोत्कृष्टत्वात्। उत्कर्षश्चास्य प्राक् निरूपितः। उपरिचरवसुना चैवंविध एव यागोऽनुष्ठितः, भगवान्यज्ञभुक्साक्षादागत्य तदेकदृश्यः स्वं भागं जग्राह। तथाच महाभारते—"सम्भूताः सर्वसम्भारास्तस्मिन्राजन्महाक्रतौ। न तत्र पशुघातोऽभूत्स राजैवं स्थितोऽभवत्॥ अहिंस्रः शुचिरक्षुद्रो निराशीः कर्मसंस्तुतः। आरण्यकपदोद्भूता भागास्तत्रोपकल्पिताः॥

---

ये चेति। चस्त्वर्थे। नन्वाढ्या नाम, धनं च तेषामुपभोगायेति किमादिश्यते कार्या मखा इति, तत्राह—धनस्य हि फलं धर्म इति। ननु धर्मो नानाविधः, तत्र यथेच्छं यः कश्चित्कार्यो नाम, तदयं नियमः कः वैष्णवा मखाः, इत्यत्राह—धर्मश्चेति। तत्र प्रमाणमाह—अयं हीति। ननु वैष्णवेन मखेन कथं देवान्तरप्रीतिः, कथं वा देवान्तरसाध्यं फलमनेन सिध्येदित्याशङ्कायामुक्तप्रमाणवचनार्थं स्फुटयन्नाह—स हीति। प्रभुशब्दार्थः प्रदर्शितः। अविशेषेणेति। कामनाविशेषकृतमधिकारिविभेदमनादृत्य गृहिभिरिति सामान्येनोक्तमित्यर्थः। अस्मादेव सर्वकामसम्पत्तेरिति भावः। यज्ञे पश्वालम्भे हिंसात्वस्यैवासम्भवात्सम्भवे वा तुलस्यपचयादावपि सम्भवात्तात्पर्यार्थमाह—पशुविशसनाद्यघटिता इति। प्राक्–देवतापित्र्ययागार्थमिति श्लोकव्याख्यानावसरे। अयमेव भगवदेकपरायणसमुचित इति ज्ञापयन्नाह—उपरिचरेति। काले–पुण्यकाले, देशे–पुण्यदेशे। साधव इत्यस्य विप्रेषु विशेषणत्वभ्रमं

---

१ अनर्थोदर्को व्यापारो हिंसा, यज्ञीयपशोश्च नानर्थप्रसङ्गः, स्वर्गीयशरीरत्वप्राप्तेरित्यसम्भवादित्युक्तम्। दुःखाधायकत्वमात्रस्य हिंसात्वमभिप्रेत्योच्यते—सम्भवे वेति।

तथा–तीर्थानि–महर्षिस्थापितभगवदालयादीनि पुण्यक्षेत्राणि, पुराणप्रसिद्ध-महानद्यादिरूपाणि च तेषु । तथा पर्वसु–अमावास्यारविसङ्क्रमणव्यतीपातादिषु । विप्राः–ब्राह्मणाः । साधवश्च–पूर्वोक्तसाधुगुणसम्पन्ना भगवद्भक्ताश्च । भोज्याः–नानाविधभक्ष्यभोज्यादिभिः सन्तर्पणीयाः । तस्य यज्ञेभ्योऽपि भगवत्प्रीतिहेतुत्वे-नाधिकफलत्वादिति भावः । तथा चोक्तं भगवता वैकुण्ठनाथेनैव—"नाहं तथाऽद्मि यजमानहविर्वितानेश्च्योतद्धृतप्लुतमदन् हुतभुङ्मुखेन । यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकै"रिति । पृथुना चोक्तम्—"अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः । न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगु"रिति । नारदेनाप्युक्तम्—"नह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् । इज्यते हविषा राजन् ! यथा विप्रमुखे हुतै"रिति ॥ १५५ ॥

---

प्रीतस्ततोऽस्य भगवान् देवदेवः पुरातनः । साक्षाच्च दर्शयामास सोऽदृश्योऽन्येन केनचित् ॥ स्वयं भागमुपाघ्राय पुरोडाशं गृहीतवान् ॥" इति । भगवतः स्वाराधनरूपाद्यागादप्यत्यन्ता-भिमतं धर्ममाह—तीर्थेषु पर्वसु तथेति । इदं हि भगवतो वचः—"नाहं तथाद्मि यज-मानहविर्विताने श्च्योतद्धृतप्लुतमदन्हुतभुङ्मुखेन । यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥" इति । पृथोश्चेदं वचः—"अश्नात्यनन्तः खलु तत्त्वकोविदैः श्रद्धाहुतं यन्मुख इज्यनामभिः । न वै तथा चेतनया बहिष्कृते हुताशने पारमहंस्यपर्यगुः ॥" इति । तस्मात्काले देशे विप्रा भोज्याः । ये च भगवदेकान्तभक्ता ब्रह्मात्मभावनया त्यक्तस्व-परभेदाः सर्वसुहृदः साधवस्तेऽपि भोज्याः, विप्राः साधवश्चेति पृथङ्निर्देशात् । ये च परमात्मैकरतिरहिता अपि विप्रलक्षणलक्षिताः, ये पुनर्जन्मतो विप्रत्वविधुरा अपि परमात्मैक-परायणास्तेषां सर्वेषां सङ्ग्रहः । साधवो भोज्या विप्राश्च भोज्या इति वान्वयः । चकारोऽन्वाच-यसमुच्चये । परमात्मैकपरायणस्यातथाभूतस्य विप्रलक्षणसम्पन्नस्य च समावेशे पूर्वस्य प्राधान्यमनेन व्यज्यते । तथेति समुच्चये ॥ १५५ ॥

---

व्यावर्तयन्व्याचष्टे—ये चेति । तत्र हेतुमाह—विप्राः साधवश्चेतीति । चकारात्पार्थक्यप्रतिपत्तिः । ननु साधव इत्येव पर्याप्तं विप्रा इति व्यर्थो निर्देश इति शङ्कां वारयन्नाह—ये चेत्यादिना । केवलविप्राणां परमात्मैकरतीनां च भोज्यत्वेऽविशेषप्रतिपत्तिं वारयन्नन्वयान्तरमाह—साधवो भोज्या विप्राश्च भोज्या इति वेति । अस्मिन्पक्षेऽभिमतमर्थमाह—चकारोऽन्वाचयसमुच्चये इति । समुच्चय इति । वैष्णवमतैः सह विप्रसाधूनां भोज्यतायाः ॥ १५५ ॥

**महोत्सवा भगवतः कर्तव्या मन्दिरेषु तैः ।**
**देयानि पात्रविप्रेभ्यो दानानि विविधानि च ॥ १५६ ॥**

महोत्सवा इति । किञ्च–तैः । भगवतः–श्रीकृष्णस्य । मन्दिरेषु । महोत्सवाः–महान्तो गीतवादित्रनृत्यमहाभिषेकमहानैवेद्याद्युपेता उत्सवाः–एकादशीजन्माष्टम्यादौ श्रीकृष्णपूजाभगवद्भक्तसन्तर्पणादिलक्षणाः कर्तव्याः । तथा–पात्राणि च ते विप्राश्च तेभ्यः । विविधानि–बहुप्रकाराणि । एकैकस्यापि दानस्यानेके भेदा दानखण्डादावुक्ताः सन्ति, यथैकस्य गोदानस्य स्वर्णधेनुतिलधेनुकपिलोभयतोमुख्यादयः । एवमन्यत्रापि ज्ञेयम् । दानानि–दीयन्त इति दानानि गोभूमिहिरण्यादीनि । कर्मणि ल्युट् । देयानि–दातव्यानि । चकारः साधुभ्यो यथोचितवस्त्रादिदानसमुच्चयार्थः ।

---

किञ्च–तैर्भगवन्मन्दिरे भगवतो महोत्सवाः कर्तव्याः । नित्यनैमित्तिकादिभेदेन महोत्सवस्य बहुत्वं ज्ञेयम् । पात्रेभ्यो विप्रेभ्यो दानानि देयानि । दानं तु कलियुगे प्रशस्तम् । तथाच वचनानि–"तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ तपोधर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् । द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः ॥" इति । विप्र इति निर्देशात्प्रतिग्रहार्हता सूच्यते । पात्रेति विशेषणाद्विप्रेष्वपि केषाञ्चिदेव पात्रता, अपात्रार्पणस्यानर्थता च व्यज्यते । पात्रविवेके च वचनानि–"न विद्यया केवलया तपसा वाऽपि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तितम् ॥ स्वाध्यायवान्नियमवांस्तपस्वी ध्यानविच्च यः । क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते ॥ ये क्षान्तदान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः । प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः ॥ विद्यावन्तश्च ये विप्रा सुव्रताश्च तपस्विनः । सत्यसंयमसंयुक्ता ध्यानयुक्ता जितेन्द्रियाः ॥ पुनन्ति दर्शनं प्राप्ताः किं पुनः सङ्गतिं गताः । तेषां दत्त्वा च सम्भोज्यं प्राप्नुयुः परमां गतिम् ॥ दत्त्वा द्विजाय शुद्धाय दाता याति शुभां गतिम् । स्वाध्यायवन्तो ये विप्रा विद्यावन्तो जितेन्द्रियाः ॥ सत्यसंयमयुक्ताश्च तेभ्यो दद्याद्द्विजोत्तमाः । श्रोत्रियाय कुलीनाय विनीताय तपस्विने ॥ व्रतस्थाय दरिद्राय प्रदेयं शक्तिपूर्वकम् । श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः ॥ यद्दानं दीयते तस्मै तद्दानं शुभकारकम् । क्षान्तिः स्पृहा दया सत्यं दानं शीलं तपः श्रुतम् ॥ एतदष्टाङ्गमुद्दिष्टं परमं पात्रलक्षणम् ॥ स्वाध्यायाढ्यं योनिमन्तं प्रशान्तं वैतानस्थं पापभीरुं बहुज्ञम् । स्त्रीषु क्षान्तं धार्मिकं गोशरण्यं व्रतैः क्रान्तं तादृशं पात्रमाहुः ॥ विद्यायुक्तो धर्मशीलः प्रशान्तः क्षान्तो दान्तः सत्यवादी कृतज्ञः । वृत्तिग्लानो गोहितो गोशरण्यो दाता यज्वा

---

तैः–आढ्यैः । नित्यनैमित्तिकादीति । नैमित्तिकम्–एकादशीपूर्णिमादिनिमित्तकम्, आदिशब्दात्कामनानिमित्तकस्य परिग्रहः । पात्रेभ्यो विप्रेभ्य इति । मिथोविशेष्यविशेषणभावः । पात्रेभ्य इत्येतावन्मात्रस्य विप्रेभ्य इत्येतावन्मात्रस्य वाऽनुक्तौ निमित्तमाह–विप्र इतीत्यादिना । अयं च

"कलियुगे गृहस्थानां दानस्य मुख्यधर्मत्वमाह वृद्धपराशरः—"तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥" इति । बृहस्पतिश्चाह—"तपो धर्मः कृतयुगे ज्ञानं त्रेतायुगे स्मृतम् । द्वापरे चाध्वराः प्रोक्ताः कलौ दानं दया दमः ॥" इति । अत्रार्थे शतपथश्रुतिश्च—"तदेतद्त्रयं शिक्षेद्दमं दानं दया"मिति । पात्रलक्षणमाह याज्ञवल्क्यः—"न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्तित"मिति । यमश्चाह—"स्वाध्यायवान्नियमवांस्तपस्वी ध्यानविच्च यः । क्षान्तो दान्तः सत्यवादी विप्रः पात्रमिहोच्यते ॥" इति । "गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् । नापात्रे विदुषा किञ्चिदात्मनः श्रेय इच्छते"ति च । पात्रलक्षणविस्तरो दानहेमाद्रौ द्रष्टव्यः । अन्नोदकदाने तु पात्रपरीक्षा न कर्तव्या । तदुक्तं भगवद्भास्करे व्यासेन—"अन्नाच्छा-

---

ब्राह्मणः पात्रमाहुः ॥ साङ्गांस्तु चतुरो वेदान् योऽधीते वै द्विजर्षभः । षड्भ्योऽनिवृत्तः कर्मभ्यस्तं पात्रमृषयो विदुः ॥ किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् । पात्राणामपि तत्पात्रं शूद्रान्नं यस्य नोदरे ॥ किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् । आगमिष्यति यत्पात्रं तत्पात्रं तारयिष्यति ॥ ब्रह्मचारी भवेत्पात्रं पात्रं वेदस्य पारगः । पात्राणामुत्तमं पात्रं शूद्रान्नं यस्य नोदरे ॥ किञ्चिद्वेदमयं पात्रं किञ्चित्पात्रं तपोमयम् । असङ्कीर्णं च यत्पात्रं तत्पात्रं तारयिष्यति ॥ एवमन्वयविद्याभ्यां वृत्तेन च समुच्छ्रिताः । त्रिशुक्ला नाम विप्रेन्द्राः पूज्यन्ते सवनादिषु ॥ प्रतिग्रहसमर्थोऽपि कृत्वा विप्रो यथाविधि । निस्तारयति दातारमात्मानं च स्वतेजसा ॥ अशक्यं च द्विजेन्द्राणां नास्ति व्रतवतामिति । योक्तव्यो हव्यकव्येषु त्रिशुक्लो ब्राह्मणो द्विजैः ॥ पात्रस्य हि विशेषेण श्रद्दधानस्तथैव च । अल्पं वा बहु वा प्रेत्य दानस्य प्राप्यते फलम् ॥ शतमब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । सहस्रगुणमाचार्ये अनन्तं वेदपारगे ॥ शतमब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे । प्राधीते शतसाहस्रमनन्तं वेदपारगे ॥ शूद्रे समगुणं दानं वैश्ये तु द्विगुणं स्मृतम् । क्षत्रिये त्रिगुणं प्राहुः षड्गुणं ब्राह्मणे स्मृतम् ॥ श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः । आत्मज्ञे शतसाहस्रमनन्तमग्निहोत्रिणि ॥ अमानुषे समं दानं गोषु ज्ञेयं फलं तथा । द्विगुणं च तदेवोक्तं तथा त्रैवर्णसङ्करे ॥ शूद्रे चतुर्गुणं प्रोक्तं विशि चाष्टगुणं भवेत् । क्षत्रिये षोडशगुणं ब्रह्मबन्धौ तदेव तु ॥ द्वात्रिंशमं समं दानं वेदाध्ययनतत्परे । शतघ्नं तद्विनिर्दिष्टं प्राधीते लक्षसम्मितम् ॥ अनन्तं च तदेवोक्तं ब्राह्मणे वेदपारगे । वेदेन्धनसमृद्धेषु हुतं विप्रमुखाग्निषु ॥ सन्तारयति दातारं महतः किल्बिषादपि । हृतस्वा हृतदाराश्च ये विप्रा देशसंप्लवे ॥ अथार्थमभिगच्छन्ति तेषु दत्तं महाफलम् ॥ चारित्रनियता राजन् ये कृशाः कृशवृत्तयः ॥ अर्थिनश्चोपगच्छन्ति तेषु दत्तं महाफलम् ॥ अभ्युत्क्रान्ताः स्वधर्मेषु पाखण्डसमयेषु च ॥ कृशप्राणाः कृशाहारास्तेषु दत्तं महाफलम् ॥ तपस्विनस्तपोनिष्ठास्तथा भैक्षचराश्च ये ॥ अर्थिनः किञ्चिदिच्छन्ति तेषां दत्तं महाफलम् ॥ अक्रोधना धर्मपराः

दनदानेषु पात्रं नैव विचारयेत् । अन्नस्य क्षुधितः पात्रं विवस्त्रो वसनस्य चे"ति । एतद्भिन्नं दानं त्वपात्रे दत्तं तामसमेव भवतीत्याह भगवानेव—"अदेशकाले यद्दानमपात्रेभ्यश्च दीयते । असत्कृतमवज्ञातं तत्तामसमुदाहृत"मिति । तत्फलोपभोगस्तु तिर्यग्योनिप्राप्तावेवेत्युक्तं विष्णुधर्मोत्तरे—"तामसानां फलं भुङ्क्ते तिर्यक्त्वे मानवः किले"ति । पात्रासन्निधाने तूक्तं भास्कराचार्येण—"मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । दाता तत्फलमाप्नोति प्रतिग्राही न दोषभा"गिति । ततः कालान्तरे तत्समागमे तद्देयं तद्गृहे वा प्रेषणीयम् ।

---

शान्ताः शमदमे रताः ॥ तादृशाः साधवो विप्रास्तेभ्यो दत्तं महाफलम् ॥ सन्निकृष्टमधीयानं ब्राह्मणं यो व्यतिक्रमेत् । भोजने चैव दाने च दहत्यासप्तमं कुलम् ॥ यस्य चैव गृहे मूर्खो दूरे चापि बहुश्रुतः । बहुश्रुताय दातव्यं नास्ति मूर्खे व्यतिक्रमः ॥ ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते । ज्वलन्तमग्निमुत्सृज्य नहि भस्मनि हूयते ॥ यदि स्यादधिको विप्रो दूरे वृत्तादिभिर्युतः । तस्मै यत्नेन दातव्यमतिक्रम्यापि सन्निधिम् ॥ यद्दत्तं वेदविद्विप्रे यद्दत्तं ब्रह्मचारिणि ॥ तपोनिधेस्तु यद्दत्तं कारुण्येन च यत्सदा ॥ तत्सर्वमक्षयं दानं वैमानेन कृतं तु यत् । दत्त्वा नृपतिभीतानामृणिनां च तथा धनम् ॥ तस्करेभ्यश्च भीतानां फलमक्षयमश्नुते ॥ विपक्षतां तथा दत्तं व्यसनं तर्तुमिच्छताम् ॥ दुःखान्वितानां दीनानामक्षयं परिकीर्तितम् ॥ विवाहमेखलाबन्धप्रतिष्ठादिषु कर्मसु । आपन्नेषु च यद्दत्तमक्षयं तदुदाहृतम् । दीनान्धकृपणानां च वाग्विहीनेषु यत्तथा । विकलेषु तथान्येषु जडे वामनपङ्गुषु । रोगार्तेषु च यद्दत्तं तत्स्याद्बहुफलं धनम् ॥" इत्यादीनि । अपात्राणि चोदाहृतानि—"गोरक्षकान्वाणिजकांस्तथा कारुकुशीलवान् । प्रेष्यान्वार्धुषिकांश्चैव विप्रान् शूद्रवदाचरेत् ॥ ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः । द्विजत्वमभिकाङ्क्षन्ति तांश्च शूद्रवदाचरेत् ॥ उदक्योऽन्वासते येषां ये च केचिदनग्नयः । कुलं वाऽश्रोत्रियं येषां सर्वे ते शूद्रधर्मिणः ॥ न दानं यशसे दद्यान्न भयान्नोपकारिणि । न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चयः ॥ यस्तु प्रेष्यान्द्विजान्मूढो योजयेद्धव्यकव्ययोः । न भवेत्तत्फलं तस्य वैदिकीयं तथा श्रुतिः ॥ अव्रतानाममन्त्राणां जातिमात्रोपजीविनाम् । नैषां प्रतिग्रहो देयो न शिला तारयेच्छिलाम् ॥ अपविद्धाग्निहोत्रस्य गुरोर्विप्रियकारिणः । द्रविणं नैव दातव्यं सततं पापकर्मणः ॥ न प्रतिग्रहमर्हन्ति वृषलाध्यापका द्विजाः । शूद्रस्याध्यापनाद्विप्रः पतत्यत्र न संशयः ॥ राजधानी यथा शून्या यथा कूपश्च निर्जलः । यथा हुतमनग्नौ च तथा दत्तं द्विजेऽनृचे ॥ यथा काष्ठमयो हस्ती यथा चर्ममयो मृगः । यश्च विप्रोऽनधीयानस्त्रयस्ते नामधारकाः ॥ विद्वद्भोज्यान्यविद्वांसो येषु राष्ट्रेषु भुञ्जते । अप्यनावृष्टिमिच्छन्ति महद्वा जायते भयम् ॥ नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते । रोदित्यन्नं दीयमानं किं मया दुष्कृतं कृतम् ॥ शौचहीनास्तु ये विप्रा न च यज्ञोपवीतिनः । हुतं दत्तं तपस्तेषां नश्यत्येव न संशयः ॥ ऊषरे वापितं बीजं यच्च भस्मनि हूयते । क्रियाहीनेषु यद्दत्तं, त्रिषु नाशो विधीयते ॥ प्रस्तरे पतितं बीजं भिन्नभाण्डे च दोहनम् । भस्मन्यपि हुतं द्रव्यं तद्वद्दानमसाधुषु ॥ पात्रभूतो हि यो विप्रः

काशीखण्डे विशेष उक्तः—"पात्रमित्रविनीतेषु दीनानाथोपकारिषु । मातापितृगुरुष्वेतन्नवके दत्तमक्षयम् ॥ निष्फलं नवसूत्सृष्टं चाटचारणतस्करे । कुवैद्ये कितवे धूर्ते शठे मल्ले च बन्दिनी"ति । बृहत्पराशरस्मृतौ च—"पण्यस्थानेषु यद्दत्तं वृथादानं प्रकीर्तितम् । आरूढपतिते चैव अन्यायोपार्जितं च यत् ॥ व्यर्थमब्राह्मणे दानं पतिते तस्करे तथा । गुरोरप्रीतिजनके कृतघ्ने ग्रामयाजके ॥ ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ । वेदविक्रायणे चैव यस्य चोपपतिर्गृहे ॥ स्त्रीजिते चैव यद्दत्तं व्यालग्राहे तथैव च । परिचारके च यद्दत्तं वृथा दानानि षोडश ॥" इति । देयद्रव्यलक्षणमुक्तं भविष्यत्पुराणे—"यद्यदिष्टं भवेत्स्वस्य न्यायप्राप्तं च यद्भवेत् । तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ॥" इति । महाभारते च—"विशेषतो महाराज ! स्वस्य न्यायार्जितस्य च । श्रद्धया विधिवत्पात्रे दत्तस्यान्तो न विद्यते ॥" इति । तत्र याज्ञवल्क्यो विशेषमाह—"स्वकुटुम्बाविरोधेन देयं दारसुतादृते । नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुत"मिति । अन्वये—सन्तानविस्तारे । कुटुम्बाविरोधस्तु व्याख्यातो बृहस्पतिना—"कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते । मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवे"दिति । भक्तं—अन्नम् । वसनं—वस्त्रम् । यावता द्रव्येण कुटुम्बस्य वस्त्रमन्नं च सम्पद्यते तदतिरिक्तं देयं न तु कुटुम्बं क्लेशयित्वेत्यर्थः । क्वचिदस्यापवादमाह व्यासः—

---

प्रतिगृह्य प्रतिग्रहम् । असत्सु विनियुञ्जीत तस्य देयं न किञ्चन ॥ सञ्चयं कुरुते यश्च प्रतिगृह्य समन्ततः । धर्मार्थं नोपयुङ्क्ते यो न तं तस्करमर्चयेत् ॥ विधिहीने तथाऽपात्रे यो ददाति प्रतिग्रहम् । न केवलं हि तद्याति शेषमप्यस्य नश्यति ॥ न वार्यपि प्रयच्छेत नास्तिके हैतुकेऽपि वा । न पाखण्डिषु सर्वेषु नावेदविदि धर्मवित् ॥ न वार्यपि प्रयच्छेत वैडालव्रतिके द्विजे । न बकव्रतिके पापे नावेदविदि धर्मवित् ॥ त्रिष्वप्येतेषु दत्तं हि विधिनोपार्जितं धनम् ॥ दातुर्भवत्यनर्थाय परत्रादातुरेव च ॥ नेष्टं देवलके दत्तमप्रतिष्ठं च वार्द्धुषौ । यच्च वाणिजके दत्तं न च तत्प्रेत्य नो इह ॥ धूर्ते बन्दिनि मल्ले च कुवैद्ये कितवे शठे । चाटचारणचौरेभ्यो दत्तं भवति निष्फलम् ॥ गुरवेऽनृतवक्त्रे च स्तेनाय पतिताय च । कृतघ्नाय च यद्दत्तं सर्वदा ब्रह्मविद्विषे ॥ याजकाय च सर्वस्य वृषलीपतये तथा । परिचाराय भृत्याय सर्वस्य पिशुनाय च । इत्येतानि च राजेन्द्र ! वृथा दानानि षोडश । परस्थाने वृथा दानं सदोषं परिकीर्तितम् ॥ आरूढपतिते चैव अन्यायात्तैर्धनैश्च यत् । व्यर्थं ह्यब्राह्मणे दानं पतिते तस्करे तथा । गुरौ चाप्रीतिजनके कृतघ्ने ग्रामयाजके । वेदविक्रायके चैव यस्य चोपपतिर्गृहे । स्त्रीभिर्जितेषु यद्दत्तं व्यालग्राहे तथैव च । ब्रह्मबन्धौ च यद्दत्तं यद्दत्तं वृषलीपतौ । परिचारके च यद्दत्तं वृथादानानि षोडश"

"कुटुम्बं पीडयित्वाऽपि ब्राह्मणाय महात्मने । दातव्यं भिक्षवे त्वन्नमात्मनो भूतिमिच्छते"ति । यत्यतिथ्यादिविषयमेतत् । अदेयमाह–दानखण्डे दक्षः–"सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् । अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥ आपत्स्वपि न देयानि नव वस्तूनि पण्डितै"रिति । सामान्यं–अनेकस्वामिकम् । याचितं–स्वव्यवहारार्थं कस्यचिद्याचित्वाऽऽनीतवस्त्रालङ्कारादि । न्यासः–गृहस्वामिने त्वदर्शयित्वा तत्परोक्षमेव गृहस्वामिनेऽर्पणीयमिति गृहजनहस्ते स्थापितं द्रव्यम् । आधिः–बन्धकद्रव्यम् । दाराः–स्वभार्या । तद्धनं–दारधनम् । अन्वाहितं–यदेकस्य हस्ते निहितं तेनाप्यनु–पश्चादन्यस्य हस्ते गृहस्वामिने देहीति विहितं तदन्वाहितम् । निक्षेपः–गृहस्वामिसमक्षं गणयित्वाऽगणयित्वा वा स्थापितं द्रव्यम् । तथा–"परिभुक्तमवज्ञातमपर्याप्तमसंस्कृतम् । अन्यायोपार्जितं यच्च तददेयं प्रचक्षते ॥" इति । परिभुक्तं–कृतोपभोगं वस्त्रादि । अवज्ञातं–अवज्ञया दत्तम् । अपर्याप्तं–स्वकार्याक्षमं जरद्गवादि । तथा–"सुवर्णं रजतं ताम्रं यतिभ्यो यः प्रयच्छति । न तत्फलमवाप्नोति तत्रैव परिवर्तते ॥" परिवर्तः–विपर्ययः, धर्मविपरीतमधर्मं जनयतीत्यर्थः । "यतीनां काञ्चनं दत्त्वा दातापि नरकं

---

इत्यादीनि । क्षुधितायान्नदाने च नायं पात्रापात्रविवेकोऽपेक्ष्यते । तथा चोक्तम्–"अन्नाच्छादनदानेषु पात्रं नैव विचारयेत् । अन्नस्य क्षुधितः पात्रं विवस्त्रो वसनस्य च ॥" इति । तदवश्यापेक्षितोऽन्यत्र समन्त्रकेषु गवादिदानेषु पात्रापात्रविवेक इति सुष्ठूक्तं पात्रविप्रेभ्य इति । यथा च दानं पात्रसापेक्षं तथा देयद्रव्यविशेषसापेक्षं च । तथाच वचनम्–"यद्यदिष्टं विशिष्टं च न्यायप्राप्तं च यद्भवेत् । तत्तद्गुणवते देयमित्येतद्दानलक्षणम् ॥ शुभोपात्तेन यत्किञ्चित्करोति लघुना नरः । अनन्तं फलमाप्नोति मुद्गलोऽपि यथा पुरा ॥ यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे । तत्तद्गुणवते देयं तदेवाक्षय्यमिच्छता ॥ विशेषतो महाराज! तस्य न्यायार्जितस्य च । श्रद्धया विधिवत्पात्रे दत्तस्यान्तो न विद्यते ॥ शुक्लेन वित्तेन कृतं पुण्यं बहुफलं भवेत् । शबलं मध्यमफलं कृष्णं हीनधनं फलम् ॥ शुक्लवित्तेन यो धर्मं प्रकुर्याच्छ्रद्धयाऽन्वितः । तीर्थे पात्रं समासाद्य देवत्वे तत्समश्नुते ॥ राजसेन च भावेन वित्तेन शबलेन च । दद्याद्दानमतिथिभ्यो मानुषत्वे तदश्नुते ॥ तमोवृत्तस्तु यो दद्यात्कृष्णवित्तेन मानवः । तिर्यक्त्वे तत्फलं प्रेत्य समश्नाति नराधमः ॥ स्वकुटुम्बाविरोधेन देयं दारसुतादृते । नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥ कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते । मध्वास्वादो विषं पश्चाद्दातुर्धर्मोऽन्यथा भवेत् ॥ सर्वस्वं गृहवर्जं तु कुटुम्बभरणाधिकम् । यच्च द्रव्यं स्वकं देयमदेयं

---

पात्रनिर्देशोऽन्नाच्छादनदानव्यतिरिक्तविषय इति ज्ञापयन्नाह–क्षुधितायेत्यादिना । पात्रविशेषनिर्देशो

व्रजे"दिति स्मृतेः । देवलश्चाह—"पक्वमन्नं गृहस्थस्य वानप्रस्थस्य गोरसः । वित्तं च भिक्षावृत्तिभ्यो न देयं पुण्यमिच्छते"ति । वित्तं–भिक्षातिरिक्तं धनम् ।

प्रतिग्रहीतुर्विशेषश्चोक्तो दानधर्मेषु—"विद्यातपोभ्यां हीनेन नैव ग्राह्यः प्रतिग्रहः । विद्वान्विनाशयेद्दोषं प्रतिग्रहभवं किल ॥ प्रतिग्रहेण विप्राणां ब्रह्मतेजो विनश्यति । सीदत्कुटुम्बो गृह्णीयात्सन्नरात्सत्प्रतिग्रह"मिति । दानमयूखे व्यासश्चाह—"अजिनं मृतशय्यां च मेषीं चोभयतोमुखीम् । कुरुक्षेत्रे च गृह्णानो न भूयः पुरुषो भवेत् ॥ लोहं तिलाश्च महिषी तैलं लवणमेव च । तिलधेनुर्मणिश्चैव घोराः सप्त प्रतिग्रहाः ॥" इति । दानखण्डे ब्रह्मपुराणे चोक्तम्—"प्रवाहमवधिं कृत्वा यावद्धस्तचतुष्टयम् । न तत्र प्रतिगृह्णीयात्प्राणैः कण्ठगतैरपी"ति । याज्ञवल्क्यश्चाह—"प्रतिग्रहे सूनिचक्रिध्वजिवेश्यानराधिपाः । दुष्टा दशगुणं पूर्वात्पूर्वादेते यथाक्रम"मिति । सूनी–प्राणिहिंसापरः, चक्री–तैलिकः, ध्वजी–सुरादिविक्रयीति मिताक्षरा । अत्र नराधिपः शास्त्रीयमर्यादातिक्रमी ज्ञेयः । "न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः" इति स्मृतेरिति भास्कराचार्य आह । अयाचिताहृतं दानं तु राज्ञोऽपि ग्राह्यमित्युक्तं मिताक्षरायां स्मृत्यन्तरे—"अयाचिताहृतं ग्राह्यमपि दुष्कृतकर्मणः । अन्यत्र कुलटापण्ढपतितेभ्यस्तथा द्विषः ॥" इति । अज्ञानादापद्वशाद्वा-

---

स्याददतोऽन्यथा ॥ सप्तरात्राद्गृहक्षेत्राद् यद्यत्क्षेत्रं प्रचीयते । पित्रा वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥ तस्मात्त्रिभागं वित्तस्य जीवनाय प्रकल्पयेत् । भागद्वयं तु धर्मार्थमनित्यं जीवितं यतः ॥ एकां गां दशगुर्दद्याद्दश दद्याच्च गोशती । शतं सहस्रगुर्दद्यात्सर्वे समफलाः स्मृताः ॥" इति । दानेऽयोग्यान्युदाहृतानि—"अन्यायाधिगतां दत्त्वा सकलां पृथिवीमपि । श्रद्धावर्जमपात्राय न कांचिद्भूतिमाप्नुयात् ॥ अन्यायोपागतं द्रव्यं गृहीत्वा यो ह्यपण्डितः । धर्माभिकाङ्क्षी यजते न धर्मफलमश्नुते ॥ पापेन कर्मणा विप्रो धनं लब्ध्वा निरंशकः । रागमोहान्वितस्वान्तः कलुषां योनिमाप्नुयात् ॥ अर्थसञ्चयबुद्धिर्हि लोभमोहवशं गतः । उद्वेजयति भूतानि हिंसया पापचेतनः ॥ एवं लब्ध्वा धनं लोभाद्यजते यो ददाति च । स पापकर्मणा तेन न विन्दति परां गतिम् ॥ देवद्रव्यं गुरुद्रव्यं द्रव्यं चण्डेश्वरस्य च । त्रिविधं पतनं दृष्टं दानलङ्घनभक्षणात् ॥ अपहृत्य परस्यार्थं दानं यस्तु प्रयच्छति । स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥ परिभुक्तमवज्ञातमपर्याप्तमसंस्कृतम् । यः प्रयच्छति विप्रेभ्यस्तद्भस्मन्यवतिष्ठते ॥ वेदविक्रयनिर्दिष्टं स्त्रीषु यच्चार्जितं धनम् । अदेयं पितृदेवेभ्यो यच्च क्लीबादुपागतम् ॥ सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् । अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥ आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः । यो ददाति च मूढात्मा प्रायश्चित्तीयते नरः ॥

ऽसत्प्रतिग्रहे तु प्रायश्चित्तमुक्तं प्रायश्चित्तमयूखे मनुना—"जपित्वा त्रीणि सावित्र्याः सहस्राणि समाहितः। मासं गोष्ठे पयः पीत्वा मुच्यतेऽसत्प्रतिग्रहा"दिति ॥१५६॥

कस्मैचिद्याचमानाय दत्तं धर्माय यद्भवेत्। पश्चाच्च न तथा तत्स्यान्न देयं तस्य तद्भवेत् ॥ बहुभ्यो न प्रदेयानि गौर्गृहं शयनं स्त्रियः। विभक्तदक्षिणा ह्येते दातारं तारयन्ति हि ॥ न व्यङ्गां रोहिणीं वन्ध्यां न कृपां मृतवत्सकाम्। न वामनां वेहतं च दद्याद्विप्राय गां नरः ॥ विवत्सां रोगिणीं रूक्षां स्थविरां शृङ्गभीषणाम्। क्षीणक्षीरशरीराङ्गां दत्त्वा दोषमवाप्नुयात् ॥" इत्यादिभिः। एषां दानानां वैविध्यं च दाननिमित्तभेदेन देयद्रव्यभेदेन च बोध्यम्। पूर्वश्लोकात्तीर्थेषु पर्वस्वित्यनुषज्यते, एतेन कालदेशवैलक्षण्याद्दानस्याधिकफलत्वं व्यज्यते ॥ १५६ ॥

देयद्रव्यविशेषस्याप्युपलक्षक इत्यभिप्रेत्याह—यथा चेति। दानेषु वैविध्यमुपपादयति—एषामिति। अनुषङ्गप्रयोजनमाह—एतेनेति ॥ १५६ ॥

---

मदाश्रितैर्नृपैर्धर्मशास्त्रमाश्रित्य चाखिलाः।
प्रजाः स्वाः पुत्रवत्पाल्या धर्मः स्थाप्यो धरातले ॥ १५७ ॥

राजधर्ममाह—मदाश्रितैरिति द्वाभ्याम्। मदाश्रितैः—मामुपाश्रितैः। नृपैः—अभिषेकादिगुणविशिष्टैः क्षत्रियैः। चकारस्त्वर्थे। धर्मशास्त्रं—याज्ञवल्क्यस्मृत्यादिधर्मशास्त्रोक्तां राजनीतिम्। आश्रित्य—तदनुसृत्यैवेत्यर्थः। स्वाः—स्वकीयाः। अखिलाः—समग्राः। प्रजाः—जनाः। पुत्रवत्—स्वस्य पुत्रा इव। पाल्याः—पालनीयाः। तथा—धरातले—स्वदेशे सर्वत्र। धर्मः—यथाधिकारं वर्णाश्रमविहितः सदाचारलक्षणः। स्थाप्यः—अधर्मप्रवृत्ता जनाः सम्यक् शिक्षयित्वा धर्ममर्यादायां

सामान्यतो गृहस्थधर्ममुक्त्वा राज्ञो विशेषधर्ममाह—मदाश्रितैरिति। विशिष्यावश्यमुपदेश्यस्तु राजधर्मः, राजधर्ममूलत्वाल्लोकसंस्थायाः। तथाच वचनम्—"यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो यथा। नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ तत्र चेत्संप्रमुह्येत धर्मे राजर्षिसेविते। लोकस्य संस्था न भवेत्सर्वं च व्याकुलीभवेत् ॥" इति। मदाश्रितैः—मदाश्रयणमाकाङ्क्षमाणैर्नृपैर्यथाशास्त्रं प्रजापालनाद्यवश्यं कार्यम्। स्वधर्ममनुपालयतामेव हि सिद्धिरात्मनोऽपि।

सङ्गतिमाह—सामान्यत इति। ननु को विशेषो राजधर्मनिरूपणे, वर्णधर्मता तु समान्यत्रापीत्यत्राह—विशिष्येति। मदाश्रितैरित्यस्य वैयर्थ्यं परिहरन्नर्थमाह—मदाश्रयणमाकाङ्क्षमाणैरिति। मुमुक्षुभिरित्येतत्। एतेन सत्यामपि मुमुक्षायां स्वधर्मस्तु न त्याज्य इति ज्ञाप्यते। निमित्तमत्राह—स्वधर्ममनुपालयतामेवेति। नास्मदाश्रयणसिद्धिः—अस्मदाश्रयणलक्षणा सिद्धिः, अस्मदाश्रयणतः सिद्धि-

स्थापनीया इति यावत् । तदुक्तं श्रीभागवते—"य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् । प्रजानां शमलं भुङ्क्ते भगं च स्वं जहाति सः ॥" इति । धर्मस्थापनफलं चोक्तं तत्रैव—"यस्य राष्ट्रे पुरे चैव भगवान्यज्ञपूरुषः । इज्यते स्वेन धर्मेण जनैर्वर्णाश्रमान्वितैः ॥ तस्य राज्ञो महाराज ! भगवान् भूतभावनः । सम्प्रसीदति विश्वात्मा तिष्ठतो निजशासने ॥" इति । धर्मस्थापनं च तत्तद्देशकालाद्यनुसारेणैवेत्यपि ज्ञेयम् । "यस्मिन्देशे य आचारो व्यवहारः कुलस्थितिः । तथैव परिपाल्योऽसौ यदा वशमुपागतः ॥" इति वृद्धयाज्ञवल्क्योक्तेः । सामान्यतो राजलक्षणमाह याज्ञवल्क्यः—"महोत्साहः[1] स्थूललक्ष्यः कृतज्ञो वृद्धसेवकः । विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥ अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुपस्तथा । धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥ स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च । विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः ॥" इति । राजधर्मेषु

उक्तं च—"स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति । तत्स्वधर्मं प्रजापालनादिकं परित्यजतां नासदाश्रयणसिद्धिरिति भावः । प्रजाः पाल्याः-प्रजापालनं हि राज्ञः परो धर्मः, एतच्छेषभूताश्चान्ये राजधर्माः । अत एव स्मर्यते—"तद्राज्ये राज्यकामानां नान्यो धर्मः सनातनः । ऋते रक्षां न विस्पष्टां रक्षा लोकस्य धारिणी ॥ षडेतान्पुरुषाञ्जह्याद्भिन्नां नावमिवार्णवे । अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् । ग्रामकामं च गोपालं वनकामं च नापितम् ॥ एतत्ते राजधर्माणां नवनीतं युधिष्ठिर । परिनिष्ठितकार्यस्तु नृपतिः परिपालनात् ॥" "राज्ञः प्रजापालनमेव धर्मः ।" "क्षत्रियस्य परो धर्मः प्रजानामेव पालनम् । एष एव परो धर्मो यद्राजा रक्षति प्रजाः ॥" इति । परिपालनं च प्रजानां पुत्राणामिव कार्यमित्याह—पुत्रवत्पाल्या इति । तथाच वचनम्—"पुत्रतुल्यं प्रजानां

रिति वा । उभयत्रापि सिद्धिर्मोक्षलक्षणा बोध्या । ननु सत्स्वन्येषु राजधर्मेषु प्रजाः स्वाः पुत्रवत्पाल्या इति विशेषनिर्देशस्य किं निमित्तमित्यत्राह—प्रजापालनं हीति । पुत्राणामिवेति । एतेन प्रजानामि-

१ पुरुषार्थसाधनकर्मारम्भाध्यवसाय उत्साहः, महानुत्साहो यस्यासौ महोत्साहः । स्थूललक्ष्यः-बहुदेयार्थदर्शी । परकृतोपकारापकारौ न विस्मरतीति कृतज्ञः । तपोज्ञानादिवृद्धानां सेवकः । विनयेन युक्तः विनीतः । सत्त्वसम्पन्नः-सम्पदापदोर्हर्षविषादरहितः । कुलीनः-मातृतः पितृतश्चाभिजनवान् । सत्यवाक्-सत्यवचनशीलः । शुचिः-बाह्याभ्यन्तरशौचयुक्तः । अवश्यकार्याणां कर्मणामारम्भे प्रारब्धानां च समापने यो न विलम्बतेऽसावदीर्घसूत्रः । स्मृतिमान्-अधिगतार्थाविस्मरणशीलः । अक्षुद्रः-असद्गुणद्वेषी । अपरुषः-परदोषाकीर्तनः । धार्मिकः-वर्णाश्रमधर्मान्वितः । अव्यसनः-मृगयाद्यष्टादशव्यसनरहितः । प्राज्ञः-गम्भीरार्थावधारणक्षमः । शूरः-निर्भयः । रहस्यवित्-गोपनीयार्थगोपनचतुरः । स्वरन्ध्रगोप्ता-स्वस्य सप्तसु राज्याङ्गेषु यत्परप्रवेशद्वारशैथिल्यं तत्स्वरन्ध्रं तस्य गोप्ता-प्रच्छादयिता । आन्वीक्षिक्यां-आत्मविद्यायाम् । दण्डनीत्यां-अर्थयोगक्षेमोपयोगिन्याम् । वार्तायां-कृषिवाणिज्यपशुपालनरूपायां धनोपचयहेतुभूतायाम् । त्रय्यां-ऋग्यजुःसामरूप्याम् । विनीतः-तत्तदभिज्ञैः प्रावीण्यं नीतः ।

भीष्मश्चाह—"चरेद्धर्मानकटुको मुञ्चेत्स्नेहं न चास्तिकः । अनृशंसश्चरेदर्थं चरेत्काममनुद्धतः ॥ प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः । दाता नापात्रवर्षी स्यात्प्रगल्भः स्यादनिष्ठुरः ॥ सन्दधीत न चानार्यैर्विगृह्णीयान्न बन्धुभिः । नाभक्तं चारयेच्चारं कुर्यात्कार्यमपीडया ॥ अर्थं ब्रूयान्न चासत्सु गुणान् ब्रूयान्न चात्मनः । आदद्यान्न च साधुभ्यो नासत्पुरुषमाश्रयेत् ॥ नापरीक्ष्य नयेद्दण्डं नच मन्त्रं प्रकाशयेत् । विसृजेन्न च लुब्धेभ्यो विश्वसेन्नापकारिषु ॥ अनीर्षुर्गुप्तदारः स्याच्चोक्षः स्यादघृणी नृपः । स्त्रियः सेवेत नात्यर्थं मृष्टं भुञ्जीत नाहितम् ॥ अस्तब्धः पूजयन्मान्यान्गुरून्सेवेदमायया । अर्चेद्देवानदम्भेन श्रियमिच्छेदकुत्सिताम् ॥ सेवेत प्रणयं हित्वा दक्षः स्यान्न त्वकालवित् । सान्त्वयेन्न च मोक्षाय अनुगृह्णन्न चाक्षिपेत् ॥ प्रहरेन्न त्वविज्ञाय हत्वा शत्रून्न शोचयेत् । क्रोधं कुर्यान्न चाकस्मान्मृदुः स्यान्नापकारिषु ॥" इति । योगीश्वरश्चाह—"ब्राह्मणेषु क्षमी स्निग्धेष्वजिह्मः क्रोधनोऽरिषु । स्याद्राजा भृत्यवर्गेषु प्रजासु च यथा पिता ॥ पुण्यात्षड्भागमादत्ते न्यायेन परिपालयन् । सर्वदानाधिकं यस्मात्प्रजानां परिपालनम् ॥

च दुःखितानां च रक्षणम्" इति । आह च भीष्मः—"भवितव्यं सदा राज्ञा गर्भिणीसहधर्मिणा । कारणं च महाराज ! शृणु येनेदमिष्यते ॥ यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् । गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम् । वर्तितव्यं कुरुश्रेष्ठ ! सदा धर्मानुवर्तिना । स्वं प्रियं तु परित्यज्य यद्यल्लोकहितं भवेत् ॥" इति । पालनं च–अनिष्टनिवारणेष्टप्रापणोभयलक्षणम् । तत्र चोराद्युपद्रवनिवारणं प्रथमं, पात्रानुगुण्येन वृत्त्याधानं द्वितीयं, तदिदमुभयं राज्ञः कार्यम् । तथा चोक्तम्—"यथोद्धरति निर्दाता कक्षं धान्यं च रक्षति । तथा रक्षेन्नृपो राष्ट्रं हन्याच्च परिपन्थिनः ॥" इति । निर्दाता हि धान्यमुचितजीवनयोगापादनेन रक्षति । इदमप्युक्तम्—"नास्य कृत्यतमं किञ्चिदन्यद्दस्युनिवारणात् । श्रुतवृत्ते विदित्वाऽस्य वृत्तिं धर्म्यां प्रकल्पयेत् । संरक्षेत्सर्वतश्चैनं पिता पुत्रमिवौरसम्" इति । चोऽवधारणे । पाल्या एव । अन्यथाऽनर्थः स्यादिति भावः । तथा चोक्तम्—"विक्रोशन्त्यो यस्य राष्ट्रात् ह्रियन्ते दस्युभिः प्रजाः । सम्पश्यतः सभृत्यस्य मृतः स न तु जीवति ॥ मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया । सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥" इति । धरातले–स्वदेश इत्येतत् । धर्मः–

ष्टानिष्टे एवात्मनोऽपीष्टानिष्टतया भाव्ये इति व्यज्यते । सहधर्मिणा–समानेन । पालनं व्याचष्टे—पालनं चेति । वृत्त्याधानम्–जीवनाधानम् । निर्दाता–लवनकर्ता । कक्षं–धान्योपमर्दकं तृणम् । चकारस्य समुच्चयार्थत्वेऽपेक्षितानभिधानानपेक्षिताभिधानप्रसङ्गादर्थविशेषमाह—चोऽवधारण इति । व्यवहितेन

१ अकटुकः–रागद्वेषहीनः । चोक्षः–शुद्धः । हित्वा–धारयित्वा ।

चाटतस्करदुर्वृत्तमहासाहसिकादिभिः । पीड्यमानाः प्रजा रक्षेत्कायस्थैश्च विशेषतः ॥ अरक्ष्यमाणाः कुर्वन्ति यत्किञ्चित्किल्बिषं प्रजाः । तस्मात्तु नृपतेरर्धं यस्माद्गृह्णात्यसौ करान् ॥ साधून्संमानयेद्राजा विपरीतांस्तु पातयेत् । सदानमानसत्कारान् श्रोत्रियान्वासयेत्सदा ॥ प्रजापीडनसन्तापात्समुद्भूतो हुताशनः । राज्ञः श्रियं कुलं प्राणान्नादग्ध्वा विनिवर्तते ॥" इति । राजधर्मे तूक्तम्—"एवमेव प्रजाः सर्वा राजानमभिसंश्रिताः । राष्ट्रे चरन्ति यं धर्मं राज्ञा साध्वभिरक्षिताः ॥ चतुर्थं तस्य धर्मस्य राजा भागं तु विन्दती"ति । श्रीभागवते च राज्ञः प्रजापालनमेव मुख्यो धर्म इत्युक्तम्—"श्रेयः प्रजापालनमेव राज्ञो यत्सांपराये सुकृतात्षष्ठमंशम् । हर्तान्यथा हृतपुण्यः प्रजानामरक्षिता करहारोऽघमत्ति ॥" "एष राज्ञां परो धर्मो ह्यार्तानामार्तिनिग्रहः" "राज्ञो हि परमो धर्मः स्वधर्मस्थानुपालनम्" "अहं दण्डधरो राजा प्रजानामिह योजितः । रक्षिता वृत्तिदः स्वेषु सेतुषु स्थापिता पृथ"गित्यादिना । दण्डधारणेऽपि राज्ञा मनुष्यघाते महानेव विचारः कर्तव्यः, मनुष्यदेहनाशस्य सर्वार्थनाशत्वोक्तेः । अत एवोक्तं मोक्षधर्मेषु—"यदा पुरोहितं वध्याः पर्येयुः शरणैषिणः । करिष्यामः पुनर्ब्रह्मन्न पापमिति वादिनः ॥ तदा विसर्गमर्हाः स्युरितीदं धातृशासन"मित्यादि ।

तत्तद्वर्णाश्रमधर्मः । स्थाप्यः–यथा प्रजाः स्वधर्मान्नातिलङ्घेरंस्तथा प्रयास्या इत्यर्थः । तथा चोक्तम्—"चातुर्वर्ण्यस्य धर्माश्च रक्षितव्या महीक्षिता । धर्मसङ्कररक्षा च राज्ञां धर्मः सनातनः ॥ स्वेषु धर्मेष्ववस्थाप्य प्रजाः सर्वा महीपतिः । धर्मेण सर्वकृत्यानि शमनिष्ठानि कारयेत् ॥ य उद्धरेत्करं राजा प्रजा धर्मेष्वशिक्षयन् । प्रजानां शमलं भुङ्क्ते भगं च स्वं जहाति सः ॥" इति । छान्दोग्ये स्वीयद्रव्यस्य स्वामिदोषाभावेन प्रतिग्रहार्हतां ज्ञापयितुं प्रवृत्तस्याश्वपतेर्वचनं श्रूयते—"न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ॥" इति । अत्र नानाहिताग्निरित्यादिनिर्देशात्स्वस्वधर्मे प्रजा वर्तयता स्वस्यादुष्टत्वं हि ज्ञाप्यते । अन्यथा तु दुष्टत्वमनेन सिद्धम् । धर्मे स्थाप्याश्च ता इत्यनुक्त्वा धर्मः स्थाप्यो धरातल इत्युक्तेः प्रजाधर्मे वर्तयता स्वयं च धर्मे तिष्ठता भाव्यमिति व्यज्यते । प्रजाः पाल्या इत्युक्त्वाऽनुपदमस्योक्तेः रक्षता नृपेण निजधर्मो नोल्लङ्घनीय इति व्यज्यते । एतेन यथोदितषष्ठां-

सम्बन्धमभिप्रेत्य व्याचष्टे—पाल्या एवेति । धर्मशब्दस्य विवक्षितमर्थमाह—तत्तदिति । एतेन सामान्यधर्ममात्रपरताभ्रमो व्यावर्त्यते । सामान्यधर्मस्थापनमार्थम् । धर्मसङ्कररक्षेति । धर्मसङ्करात्पापाद्दे-

१ चाटाः–प्रतारकाः, विश्वास्य ये परधनमपहरन्ति । २ तस्कराः–प्रच्छन्नापहारिणः । ३ दुर्वृत्ताः—ऐन्द्रजालिककितवादयः । ४ महासाहसिकाः–प्रसह्यापहारिणः । ५ क

युद्धे त्वाह याज्ञवल्क्यः—"तवाहंवादिनं क्लीबं निर्हेतिं परसङ्गतम्। न हन्याद्विनिवृत्तं च युद्धप्रेक्षणकादिकं"मिति। अत्रादिशब्दाद्धश्वमसारथिं कृताञ्जलिं प्रकीर्णकेशं पराङ्मुखं वृक्षारूढमुपविष्टं पानीयं पिबन्तं भुञ्जानमवर्माणं सूतं दूतं गां ब्राह्मणं करेणुं वाजिनं सारथिं राजानं च न राजा हन्या"दिति शङ्खगौतमादिस्मृत्युक्तविशेषसङ्ग्रहः। युद्धं च सर्वथा गत्यन्तराभाव एवेति सकलनीतिज्ञसमयः। "एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता। बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजक"मिति वैदुरिकात्। अत एव मनुनाऽपि धिग्दण्डवाग्दण्डधनदण्डानन्तरमेव वधदण्ड उक्तः। धर्मस्थापनार्थं दुष्टदण्डनं तु युक्तमेव। तथाहि छान्दोग्येऽश्वपतिनृपवाक्यं श्रूयते—"न मे स्तेनो जनपदे न कदर्यो न मद्यपः। नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतः" इति। "अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा। नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वका"दिति कामन्दकनीतिशास्त्राच्च। क्वचिद्दण्डनिषेधोऽप्युक्तः श्रीभागवते—"तस्मिन्दधे दममहं तव वीरपत्नि! योऽन्यत्र भूसुरकुलात्कृतकिल्बिषस्तम्। पश्ये न वीतभयमुन्मुदितं त्रिलोक्यामन्यत्र वै मुररिपोरितरत्र दासा"दिति। "सर्वत्रास्खलितादेशः सप्तद्वीपैकदण्डधृत्। अन्यत्र ब्राह्मणकुलादन्यत्राच्युतगोत्रतः॥" इति च। "मा जातु तेजः प्रभवेन्महर्द्धिभिस्तितिक्षया तपसा विद्यया च। देदीप्यमानेऽजितदेवतानां कुले स्वयं राजकुलाद्द्विजाना"मिति च। एवं हि धर्मनिष्ठराजप्रतापबलात्कलिकालबलमपि निवर्तत इत्युक्तं भारते—"कालस्य कारणं राजा कालो वा राजकारणम्। इति ते संशयो माभूद्राजा कालस्य कारण"मिति। "राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे

---

शग्रहणेनैव प्रजापालनं कार्यमिति सूचितं भवति। तथाच वचनम्—"कामक्रोधौ पुरस्कृत्य योऽर्थं राजाऽनुतिष्ठति। न स धर्मं न चाप्यर्थं प्रतिगृह्णाति बालिशः॥ मास्म लुब्धांश्च मूर्खांश्च कामार्थे च प्रयूयुजः। अलुब्धान्बुद्धिसम्पन्नान्सर्वकर्मसु योजयेत्॥ मूर्खो ह्यधिकृतोऽर्थेषु कार्याणामविशारदः। प्रजाः क्लिश्नात्ययोगेन कामक्रोधसमन्वितः॥ बलिषष्ठेन शुल्केन दण्डेनाथापराधिनाम्। शास्त्रानीतेन लिप्सेथा वेतनेन धनागमम्॥ दापयित्वा करं धर्म्यं राष्ट्रं नीत्वा यथाविधि। तथैतं कल्पयेद्राजा योगक्षेममतन्द्रितः॥ गोपायितारं दातारं धर्मयुक्तमतन्द्रितम्। अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः॥ मास्म लोभेनाधर्मेण लिप्सेथास्त्वं धनागमम्। धर्मार्थावध्रुवौ तस्य योगशास्त्रपरो भवेत्॥ अर्थशास्त्रपरो राजा धर्मार्थौ नाधिगच्छति। अस्थाने चास्य तद्वित्तं

समाः। प्रजास्तमनुवर्तन्ते यथा राजा तथा प्रजा" इति वृद्धचाणक्योक्तेश्च ॥१५७॥

---

सर्वमेव विनश्यति ॥ अर्थमूलोऽपि हिंसां च कुरुते स्वयमात्मनः। करैरशास्त्रदृष्टैश्च मोहात्सम्पीडयन्प्रजाः ॥ एवं धर्मेण वृत्तेन प्रजास्त्वं परिपालय" इत्यादि ॥ १५७ ॥

---

त्यर्थः। व्यङ्ग्यार्थावाह—धर्मे स्थाप्याश्च ता इत्यादिना ॥ १५७ ॥

---

**राज्याङ्गोपायषड्वर्गा ज्ञेयास्तीर्थानि चाञ्जसा।**
**व्यवहारविदः सभ्या दण्ड्यादण्ड्याश्च लक्षणैः ॥ १५८ ॥**

राज्याङ्गेति। राज्यस्याङ्गानि–स्वाम्यमात्यादीनि च, उपायाः–सामादयश्च, षड्वर्गः–सन्धिविग्रहादिश्च ते। अञ्जसा–तत्त्वतः। ज्ञेयाः। तीर्थानि–चारनियोगस्थानानि मन्त्र्यादीनि चाञ्जसा ज्ञेयानि। तथा–व्यवहारान्–ऋणादानादीन्विदन्तीति तथोक्ताः। सभायां साधवः सभ्याः–सभासदश्च। लक्षणैरञ्जसा ज्ञेयाः। तथा दण्डितुमर्हा दण्ड्याः, न दण्ड्या अदण्ड्याः, ते च ते च। तेऽपि लक्षणैरञ्जसा ज्ञेयाः। अत्र भारतादिवाक्यानि सङ्गृह्यन्ते—"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च। राज्याङ्गानि प्रकृतयस्तद्द्रोग्धारं तु शिक्षयेत् ॥" "उपायांश्चतुरः साम भेदं दानं च निग्रहम्। यथोचितं प्रयुञ्जीत पञ्चमं चाप्युपेक्षणम् ॥" "सन्धिविग्रहयानानि द्वैधीभावः समाश्रयः। स्थानं चेत्यस्ति षड्वर्गः कुर्यात्तन्निश्चयं नृपः ॥" "मन्त्री पुरोहितश्चैव युवराजश्चभूपतिः। पञ्चमो राष्ट्रपालश्च षष्ठोऽन्तर्वंशि-

---

एवं प्रजारक्षणैकधर्मेणावश्यं ज्ञातव्यानर्थानाह—राज्याङ्गेति। यानि राज्यस्याङ्गानि स्वाम्यमात्यादीनि, ये च सामादय उपायाः, यश्च सन्धिविग्रहादिः षड्वर्गः, एते तत्त्वतो ज्ञातव्याः। "अञ्जसा तत्त्वमूर्तयो"रिति च विश्वः। मन्त्रिपुरोहितप्रभृतीन्यष्टादशतीर्थानि च तत्त्वतो ज्ञातव्यानि। ये च ऋणादानाद्यष्टादशव्यवहाराभिज्ञाः सभ्यास्तेऽपि लक्षणतो

---

अञ्जसेत्यस्यार्थस्तत्त्वत इति। तत्र प्रमाणमाह—अञ्जसा तत्त्वेति। तत्त्वतो ज्ञातव्यानीति।

---

१ स्वामी–महोत्साह इत्याद्युक्तलक्षणो महीपतिः। अमात्याः–मन्त्रिपुरोहितादयः। सुहृदः–सहजप्राकृतकृत्रिमाः। कोशः–सुवर्णादिद्रव्यराशिः। राष्ट्रं–ब्राह्मणादिप्रजाः। दुर्गं–धन्वदुर्गादि। बलं–हस्त्यश्वरथपत्तिलक्षणं चतुरङ्गम्। प्रकृतयः–मूलकारणानि। २ साम–प्रियभाषणम्। भेदः–सामन्तादीनां परस्परस्य वैरोत्पादनेन भेदनम्। दानं सुवर्णादेः। निग्रहः–दण्ड उपांशुप्रकाशाभ्यां धनापहारादिवधपर्यन्तोऽपचारः। ३ सन्धिः–व्यवस्थाकरणम्। विग्रहः–अपकारः। यानं–परं प्रति यात्रा। द्वैधीभावः–स्वबलस्य द्विधाकरणम्। समाश्रयः–बलवदाश्रयणम्। स्थानं–आसनं, उपेक्षेति यावत्। ४ राष्ट्रपालः–दौवारिकः। अन्तर्वंशिकः–अन्तःपुराधिकृतः। द्रव्यसञ्चयकृत्–कोषाध्यक्षः। प्रदेष्टा–प्राड्विवाककर्महो व्यवहारप्रदेष्टा। कार्यनिर्माणकृत्–कार्यनिर्माणान्ते तत्कर्तृणां वेतनदाता। दण्डपालः–दुष्टानां दण्डनाधिकारी।

कस्तथा ॥ कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा । कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः सभाध्यक्षो दण्डपालस्त्रिपञ्चमः । पोडशो दुर्गपालश्च तथा राष्ट्रस्य पालकः । अटवीपालकश्चेति तीर्थान्यष्टादशैव हि ॥ चारान्नियोजयेत्तीर्थेष्वात्मनश्च परस्य च । मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम् ॥" "व्यवहारपदान्यत्र ज्ञेयान्यष्टादशैव हि । ऋणादानं च निःक्षेपस्तथैवास्वामिविक्रयः ॥ सम्भूय च समुत्थानं दत्तस्यानपकर्म च । संविद्व्यतिक्रमः सीमाविवादः स्तेयसाहसम् ॥ क्रयविक्रयानुशयो विवादः स्वामिपालयोः । अशुश्रूषाऽभ्युपेत्याथ पारुष्ये दण्डवाचिके ॥ स्त्रीसङ्ग्रहो वेतनस्या-

---

ज्ञातव्याः । एते सभ्यस्थानार्हा एते नेत्यादि विविच्य ज्ञातव्यमिति यावत् । ये च दण्डार्हा ये च दण्डानर्हास्तेऽपि लक्षणतो ज्ञातव्याः । तत्राङ्गानि–स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि

---

अङ्गसेत्यस्योभयत्र सम्बन्धोऽभिप्रेतः । लक्षणतो ज्ञातव्या इति । लक्षणतो ज्ञातव्यतामेव विशदयति—

---

१ ऋणादानं–तच्च सप्तविधम्–ईदृशमृणं देयं, ईदृशमदेयं, अनेनाधिकारिणा देयं, अस्मिन्समये देयं, अनेन प्रकारेण देयमित्यधमर्णे पञ्चविधम् । उत्तमर्णे दानविधिरादानविधिश्चेति द्विविधमिति । एतच्च नारदेन स्पष्टीकृतं—"ऋणं देयमदेयं च येन यत्र यथा च यत् । दानग्रहणधर्माश्च ऋणादानमिति स्मृत"मिति । २ निक्षेपः–स्वयं गणयित्वा अन्यहस्ते मुद्रितद्रव्यस्य रक्षणार्थं विश्वासादारोपणम् । ३ अस्वामिविक्रयः–तस्य च लक्षणं नारदेनोक्तं—"निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा । विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥" इति । ४ संभूय समुत्थानम् । सर्वे वयमिदं कुर्म इत्युक्तिपूर्वं मिलित्वोद्यमः । ५ दत्तस्यानपकर्म–विहिताविहितमार्गद्वयाश्रयतया दत्तानपकर्म दत्ताप्रदानिकमिति लब्धाभिधानद्वयं दानाख्यं व्यवहारपदम् । तत्स्वरूपं च नारदेनोक्तम्—"दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति । दत्ताप्रदानिकं नाम व्यवहारपदं हि त"दिति । असम्यक्–अविहितमार्गाश्रयेण द्रव्यं दत्वा पुनरादातुमिच्छति यस्मिन्विवादपदे तद्दत्ताप्रदानिकम् । विहितमार्गाश्रयत्वेन तत्प्रतिपक्षभूतं तदेव व्यवहारपदं दत्तानपकर्मेत्यर्थादुक्तं भवति । ६ संविद्व्यतिक्रमः–राजादिकृतसङ्केतोल्लङ्घनम् । ७ सीमाविवादः–ग्रामद्वयसंबन्धिनोः क्षेत्रसीम्नोर्मर्यादाया विवादः । ८ स्तेयं–तच्च नारदेनोक्तम्—"उपायैर्विविधैरेषां छलयित्वापकर्षणम् । सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥" इति । साहसं–राजदण्डं जनाक्रोशं चोल्लङ्घ्य राजपुरुषेतरजनसमक्षं यत्किञ्चित्परद्रव्यहरणमारणपरदारप्रधर्षणादिकं क्रियते तत्सर्वं साहसमिति साहसलक्षणम् । ९ क्रयविक्रयानुशयः–तत्स्वरूपं नारदेनोक्तं—"क्रीत्वा मूल्येन यः पण्यं केता न बहु मन्यते । क्रीतानुशय इत्येतद्विवादपदमुच्यते" । एवं विक्रीतानुशयश्च । १० परसस्यविनाशकारिमहिष्यादिस्वामिपशुपालयोर्विवादः स्वामिपालविवादः । ११ अभ्युपेत्याशुश्रूषा–अहं शुश्रूषां करिष्यामि इत्यङ्गीकृत्य तदकरणम् । तत्स्वरूपं नारदेनोक्तं—"अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते । अशुश्रूषाभ्युपेत्यैतद्विवादपदमुच्यते ॥" इति । १२ दण्डपारुष्यं–तत्स्वरूपं नारदेनोक्तम्—"परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः । भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥" इति । १३ वाक्पारुष्यं–तल्लक्षणं नारदेनोक्तं—"देशजातिकुलादीनामाक्रोशं न्यङ्गसंयुतम् । यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥" इति । १४ स्त्रीसङ्ग्रहः–प्रथमसाहसादिदण्डप्राप्त्यर्थं त्रेधा । तत्स्वरूपं व्यासेन विवृतम्—"त्रिविधं तत्समाख्यातं प्रथमं मध्यमोत्तमम् । अदेशकालभाषाभिर्विजने च परस्त्रियाः ॥ कटाक्षावेक्षणं हास्यं प्रथमं साहसं स्मृतम् । प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ॥ प्रलोभनं चान्नपानैर्मध्यमं साहसं स्मृतम् । सहासनं विविक्तेषु परस्परमुपाश्रयः ॥ केशाकेशिग्रहं चैव सम्यक् सङ्ग्रहणं स्मृतम् ॥" इति । १५ वेतनादानम्–तत्स्वरूपं नारदेनोक्तम्—"भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः । वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥" इति ।

दानं द्यूत[16]समाह्वयः । दायभाग[17]श्च स्त्रीपुंस[18]धर्मश्चाष्टादशेति हि ॥" "श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥" "त्यक्तस्वधर्मः पापण्डी सद्द्रोही दुर्बलार्दनः । उल्लङ्घितस्वमर्यादः स राज्ञो दण्डमर्हति ॥" अदण्ड्या ब्राह्मणा राज्ञो दुर्बलास्त्यागिनस्तथा । विष्ण्वादिदेवभक्त्यङ्कास्तपस्वी पितरौ गुरु"रिति । एतेषामवान्तरभेदा लक्षणानि च नीतिशास्त्रादवगन्तव्यानि, विस्तरभयादिह न प्रपञ्च्यन्ते ।

चकाराद्ग्राह्याग्राह्यशुल्कादिग्रहणम् । "शुल्कस्तु घट्टादिदेयमि"ति हैमः । घट्टो नदीतटस्थानम् । आदिशब्दाद्गुल्मप्रतोल्यादिग्रहणम् । तत्र दीयत इति घट्टादिदे-

---

षट् । तदुक्तम्—"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानि प्रकृतय" इति । उपायाः—सामदानभेददण्डाश्चत्वारः । तदुक्तम्—"उपायांश्चतुरः साम भेदं दानं च निग्रहम् । यथोचितं प्रयुञ्जीते"ति । सन्धिर्विग्रहो यानं द्वैधीभावः समाश्रयः स्थानं चेति षड्वर्गः । तदुक्तम्—"सन्धिविग्रहयानानि द्वैधीभावःसमाश्रयः । स्थानं चेत्यस्ति षड्वर्गः कुर्यात्तन्निश्चयं नृपः" इति । तीर्थानि—मन्त्रिपुरोहितादयोऽष्टादश चारनियोगस्थानानि । तदुक्तम्—"मन्त्री पुरोहितश्चैव युवराजश्चभूपतिः । पञ्चमो राष्ट्रपालश्च षष्ठोऽन्तर्वंशिकस्तथा ॥ कारागाराधिकारी च द्रव्यसञ्चयकृत्तथा । कृत्याकृत्येषु चार्थानां नवमो विनियोजकः ॥ प्रदेष्टा नगराध्यक्षः कार्यनिर्माणकृत्तथा । धर्माध्यक्षः समाध्यक्षो दण्डपालस्त्रिपञ्चमः ॥ षोडशो दुर्गपालश्च तथा राष्ट्रस्य पालकः । अटवीपालकश्चेति तीर्थान्यष्टादशैव हि ॥ चारान्नियोजयेत्तीर्थेष्वात्मनश्च परस्य च । मन्त्रिणं युवराजं च हित्वा स्वेषु पुरोहितम् ॥" इति । व्यवहाराश्च—ऋणादानं, निक्षेपः, अस्वामिविक्रयः, सम्भूयसमुत्थानं, दत्तानपाकर्म, संविद्व्यतिक्रमः, सीमाविवादः, स्तेयं, साहसं, च क्रीतानुशयः, स्वामिपालयोर्विवादः, वाक्पारुष्यं, दण्डपारुष्यं, स्त्रीसङ्ग्रहः, वेतनादानं, द्यूतसमाह्वयः, दायभागः, स्त्रीपुंधर्मः इति अष्टादश । तदुक्तं मनुना—"तेषामाद्यमृणादानं निक्षेपोऽस्वामिविक्रयः । सम्भूय च समुत्थानं दत्तस्यानपकर्म च ॥ वेतनस्यैव चादानं संविदश्च व्यतिक्रमः । क्रयविक्रयानुशयो विवादः स्वामिपालयोः ॥ सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके । स्तेयं च साहसं चैव स्त्रीसङ्ग्रहणमेव च ॥ स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च ।" इति ।

---

१६ द्यूतसमाह्वयं-द्यूतं च समाह्वयश्च द्यूतसमाह्वयम् । तत्स्वरूपं नारदेनाभिहितम्—"अक्षबध्रशलाकाद्यैर्देवनं जिह्मकारितम् । पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयम् ॥" बध्रः—चर्मपट्टिका । मनुना चोक्तम्—"अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते । प्राणिभिः क्रियमाणस्तु स विज्ञेयः समाह्वयः ॥" इति । १७ दायभाग।—तल्लक्षणमुक्तं नारदेन—"विभागोऽर्थस्य पित्र्यस्य तनयैर्यस्तु कल्प्यते । दायभाग इति प्रोक्तं व्यवहारपदं बुधैः ॥" इति । १८ "स्त्रीभिर्भर्तृवचः कार्यमेष धर्मो परः स्त्रियाः ।" "लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः । यस्मात्तस्मात्स्त्रियः सेव्याः कर्तव्याश्च सुरक्षिताः" इति । एतद्धर्माकरणे यद्यपि स्त्रीपुंसयोः परस्परमर्थिप्रत्यर्थितया नृपसमक्षं व्यवहारो निषिद्धस्तथापि प्रत्यक्षेण कर्णपरंपरया वा विदिते तयोः परस्पराविचारे दण्डादिना दम्पती निजधर्ममार्गे राज्ञा स्थापनीयौ, इति स्त्रीपुंसधर्माख्यं व्यवहारपदम् ।

यमिति तट्टीका । घट्टगुल्मप्रतोल्यादौ प्रवेश्यनिःसार्यद्रव्येभ्यो राजग्राह्यो भागोऽत्र शुल्कः । तस्य कचिदग्राह्यत्वमुक्तं मिताक्षरायां स्मृत्यन्तरे—"न कूटकार्षापणकेऽस्ति शुल्कं न शिल्पवृत्तौ न शिशौ न दूते । न भैक्षलब्धे न हृतावशेषे न श्रोत्रिये प्रव्रजिते न दैवे ॥" इति । कूटकार्षापणके–स्वर्णाभासेऽल्पमूल्ये पित्तलादिनिर्मितेऽलङ्कारादौ । दैवे–देवकार्यार्थद्रव्ये ॥ १५८ ॥

---

तत्तदसाधारणलक्षणं त्वन्यतोऽवगन्तव्यम् । सभ्यानां लक्षणं चोक्तम्—"श्रुताध्ययनसम्पन्ना धर्मज्ञाः सत्यवादिनः । राज्ञा सभासदाः कार्या रिपौ मित्रे च ये समाः ॥" इति । दण्ड्याद्ण्ड्यविभागश्च—"त्यक्तस्वधर्मः पाखण्डी सद्द्रोही दुर्बलार्दनः । उल्लङ्घितस्वमर्यादः स राज्ञो दण्डमर्हति ॥ अदण्ड्या ब्राह्मणा राज्ञा दुर्बलास्त्यागिनस्तथा । विष्ण्वादिदेवभक्त्यङ्कास्तपस्वी पितरौ गुरुः ॥" इति ॥ १५८ ॥

---

एते इत्यादिना । अङ्गादीनि प्रमाणतो विविच्य निरूपयति—तत्राङ्गानीत्यादिना ॥ १५८ ॥

---

**सभर्तृकाभिर्नारीभिः सेव्यः स्वपतिरीशवत् ।**
**अन्धो रोगी दरिद्रो वा षण्ढो वाच्यं न दुर्वचः ॥ १५९ ॥**

पतिवत्नीनां स्त्रीणां विशेषधर्मानाह—सभर्तृकाभिरिति चतुर्भिः । सह भर्त्रा वर्तमानाः सभर्तृकाः–जीवद्भर्तृकास्ताभिर्नारीभिः । अन्धो रोगी दरिद्रः षण्ढोऽपि स्वपतिरीशवत्सेव्य इत्यन्वयः । स्वभर्तृसेवनमेव तासां मुख्यो धर्मः । भर्ता च दैववशाद्यद्यन्धः–नेत्रहीनः । वा–अथवा । रोगी–रोगः–प्रमेहादिदीर्घामयो

---

अथ गृहस्थप्रसङ्गात्स्त्रीणां धर्मं कथयन्नादौ स्त्रीणां पतिसेवैव परो धर्म इत्याह—सभर्तृकाभिरिति । पतिरन्धो रोगी दरिद्रः षण्ढो वा यथाकथञ्चिद्वर्तमानोऽपीश्वरवत्सेव्यः । यथेश्वरः सेव्यमानः सकलपुरुषार्थदस्तथाऽयमपीति निश्चित्यानाकलय्याऽऽन्ध्यादिकं महता प्रेम्णा समये समये समुचितया सपर्यया सेव्य इत्याशयः । तथाच स्मर्यते—"नगरस्थो वनस्थो वा शुभो वा यदि वाऽशुभः । यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः ॥ दुःशीलः कामवृत्तो वा धनैर्वा परिवर्जितः । स्त्रीणामार्यस्वभावानां परमं दैवतं पतिः ॥ क्लीबं वा दुरवस्थं वा व्याधितं वृद्धमेव वा । सुस्थितं दुःस्थितं वापि पतिमेकं न लङ्घयेत् ॥ मितं ददाति हि पिता मितं भ्राता मितं सुतः । अमितस्य हि दातारं भर्तारं पूजयेत्सदा ॥ भर्ता देवो गुरुर्भर्ता धर्मतीर्थव्रतानि च । तस्मात्सर्वं परित्यज्य पतिमेकं समर्चयेत् ॥ तीर्थस्नानार्थिनी नारी पतिपादोदकं

---

परो धर्मः–सकलपुरुषार्थसाधनत्वात् । ईश्वरवत्सेव्य इत्यस्य भावमाह—यथेत्यादिना ।

विद्यते यस्यासौ रोगी। वा दरिद्रः-निर्धनः। षण्ढः-नपुंसकः। तादृशोऽपि स्वपतिरीशवत्-ईश्वर इव सेव्यः। "या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा। हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते॥" इति श्रीभागवते नारदोक्तेः। "भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया। तद्बन्धूनां च कल्याण्यः! प्रजानां चानुपोषणम्॥ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा। पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी॥" इति भगवदुक्तेश्च। "पतिरेव हि नारीणां दैवतं परमं स्मृत"मिति कश्यपश्चाह। तथा दुर्वचः-दुष्टं-परुषं प्रतिकूलं वा वचो दुर्वचः। न वाच्यं-न भाषणीयम्। भर्त्राद्यनुकूलमेव वक्तव्यमित्यर्थः। "स्त्रीभिर्भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः। आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः॥" इति याज्ञवल्क्योक्तेः। नारदश्चाह—"स्त्रीणां च पतिदेवानां तच्छुश्रूषाऽनुकूलता। तद्बन्धुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम्॥ संमार्जनोपलेपाभ्यां गृहमण्डलवर्तनैः। स्वयं च मण्डिता नित्यं परिमृष्टपरिच्छदे"त्यादि॥ १५९॥

---

पिबेत्। शङ्करादपि विष्णोर्वा पतिरेकोऽधिकः स्त्रियाः॥ या पतिं हरिभावेन भजेत् श्रीरिव तत्परा। हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते॥ भर्तुः शुश्रूषणं स्त्रीणां परो धर्मो ह्यमायया। तद्बन्धूनां च कल्याण्यः प्रजानां चानुपोषणम्॥ दुःशीलो दुर्भगो वृद्धो जडो रोग्यधनोऽपि वा। पतिः स्त्रीभिर्न हातव्यो लोकेप्सुभिरपातकी॥" इति। तदेवं सेव्यस्य प्रतिकूलं वचो न कदापि वक्तव्यमित्याह—वाच्यं न दुर्वच इति। इदं च सर्वप्रकारेण तदनुवर्तनस्य ज्ञापकम्। तदुक्तम्—"या हुङ्कृत्य प्रियं ब्रूते सा मूका जायते खलु। आक्रुष्टाऽपि न चाक्रोशेत्ताडिताऽपि प्रसीदति॥ आहूता गृहकार्याणि त्यक्त्वा गच्छति सत्वरम्। न चिरं तिष्ठते द्वारि न द्वारमुपसेवते॥ प्रतीक्षमाणावसरं यथाकालोचितं हि यत्। तदुपस्थापयेत्सर्वमनुद्विग्नाऽतिहृष्टवत्॥ महाप्रसाद इत्युक्त्वा पतिदत्तं प्रतीच्छति" इति। इयं च पतिसेवा न तत्प्रीतिसापेक्षा, किन्तु तज्जीवितमात्रनिमित्तेत्येतज्ज्ञापयितुं सभर्तृकाभिरित्युक्तम्॥ १५९॥

---

नन्वीश्वरवत्सेव्यतयोपदिष्टे न दुर्वचःप्रसङ्गः, येन तन्निषेधाय वाच्यं न दुर्वच इत्युपदेशोऽपेक्ष्येतेत्यतो भावमाह—इदं चेति। यद्वा-इदमुपलक्षकमित्याह—इदं चेति। ननु सभर्तृकाभिरिति निर्देशो व्यर्थः, नारीभिः पतिः सेव्य इत्यनेनैवार्थसिद्धेः, अभर्तृकास्वस्याप्रसङ्गात्, इत्याशङ्कां परिहरन्नाह—इयं चेत्यादिना। तत्प्रीतिसापेक्षा-तत्प्रीतिलक्षणफलसापेक्षा॥ १५९॥

रूपयौवनयुक्तस्य गुणिनोऽन्यनरस्य तु ।
प्रसङ्गो नैव कर्तव्यस्ताभिः साहजिकोऽपि च ॥ १६० ॥

रूपेति । किञ्च–ताभिः–स्त्रीभिः । रूपं–शरीरसौन्दर्यम्, यौवनं–तारुण्यं च, ताभ्यां युक्तस्य । तथा गुणिनः–विद्याकलाधर्मादियुक्तस्यापि । अन्यनरस्य–स्वभर्तृभिन्नपुरुषस्य तु । साहजिकः–सहजं भवः कार्यान्तरवशादनिच्छयाऽपि प्राप्तः । प्रसङ्गः–पुनः पुनस्तदीक्षणतत्सम्भाषणतत्सहस्थित्यादिलक्षणः प्रकृष्टः सङ्गः । न कर्तव्यः । "सहसाऽपि प्रसङ्गेन यूनां योषिद्विनश्यति । अपि साध्वी समाचारा यथाहि युवतेः पुमा"नित्यानुशासनिके पर्वणि श्रीशङ्करोक्तेः । अपिशब्दो बुद्धिपूर्वकमिच्छया परपुरुषसङ्गं दूरत एव निराकरोति । पतिव्रताधर्मविस्तरो ब्रह्मवैवर्तपुराणादेरवगन्तव्यः । चकारात्स्वतन्त्रस्थित्याद्यपि न कर्तव्यम् । "पिता रक्षति कौमारे भर्ता रक्षति यौवने । वार्धके पुत्रपौत्राद्या नास्ति स्त्रीणां स्वतन्त्रते"ति

---

सत्यपि समुचिते निमित्ते कुशलानुयोगादौ रूपयौवनसम्पन्नेन सहासकृदालापादिरूपः प्रसङ्गो न कार्यः, स यद्यपि गुणी स्यादित्याह—रूपयौवनेति । रूपम्–सौन्दर्यम् । सत्यपि यौवनस्य चित्तविक्षेपहेतुत्वे रूपसहकृतस्य तस्य विशेषतस्तद्धेतुतया रूपयौवनयुक्तस्येत्युक्तिः । गुणिनश्च–दयाद्यात्मगुणोपेतस्यापीत्यर्थः, विहिताविहितविवेकादिमतोऽपीत्यर्थः । भावतोऽदुष्टस्यापीत्येतत् । एवंविधस्यान्यनरस्य प्रसङ्गो न कार्यस्ताभिः । प्रसङ्गः–प्रकृष्टः सङ्गः, असकृदालापादिरूपः । स च साहजिकोऽपि न कार्यः, साहजिकोऽपि–अकारणप्राप्तोऽपि । अकामकृत इत्येतत् । निषेधदार्ढ्यायैवकारः । तथाच वचनम्—"सहसाऽपि प्रसङ्गेन यूनां योषिद्विनश्यति । अपि साध्वी समाचारा यथा हि युवतेः पुमान् ॥" इति । अन्यनरस्य त्वित्यत्र तुशब्देन पतिव्यतिरिक्तपुरुषनिष्ठं रूपयौवनयोर्दोषतापादकत्वरूपं वैलक्षण्यमुच्यते । स्त्रीणां हि पत्यू रूपयौवने गुणः, अनुकूलत्वात् । पुरुषान्तरगते तु ते दोष एव, प्रतिकूल-

---

सत्यपि समुचिते निमित्ते कुशलानुयोगादाविति । इदं च प्रसङ्गसम्भवे ज्ञापकं, अन्यथा निषेधायोगात् । विशेषतस्तद्धेतुतयेति । एतेन रूपहीनस्यापि पुनः प्रसङ्गस्त्याज्य इत्युक्तं भवति । अन्यनरप्रसङ्गस्य त्याज्यतायां रूपयौवनयोगस्येव गुणस्यापि निमित्तताऽवगम्येतेति तद्व्यावृत्तये चकारपूरणेनार्थमाह—गुणिनश्चेति । कार्यमात्रस्य कारणेन विनाऽनुदयाद्भावमाह—अकामकृत इत्येतदिति । ननु रूपयौवनयोर्गुणयोर्दोषतापादनं कथं घटेतेत्यत्राह—स्त्रीणां हीत्यादिना । अनुकूलत्वप्रतिकूलत्वलक्षणभेदाद्गुणदोषव्यवस्था, तदेकमेव वस्तु कस्यचिदनुकूलं कस्यचित्प्रतिकूलं च भवतीत्येकस्यापि प्रतिसम्बन्धिपुरुषभेदेनानुकूलत्वप्रतिकूलत्वे नानुपपन्ने इति भावः । एकस्यैवेदृश-

पराशरस्मृतेः। "सधवा विधवा वा स्त्री या स्वतन्त्रतया चरेत्। सा ग्रामसूकरीतुल्या धर्मभ्रष्टा भवेत्किले"ति माधवोक्तेश्च ॥ १६० ॥

त्वात्। नहि वस्तुतस्त्रिगुणं किमपि नियतगुणदोषव्यवस्थं, तत्प्रलोभनद्वारा स्त्रीणामनर्थावहत्वात्पुरुषान्तरगतयोस्तयोस्ता अपेक्ष्य दोषतैव ॥ १६० ॥

वैषम्ये हेतुमुपपादयन्नाह—नहि वस्तुत इति। त्रिगुणमिति। इदं च विशेषणं—वस्तुसामान्यस्य गुणमयस्य सुखदुःखमोहात्मकतया काले किञ्चिदपेक्ष्य स्वस्वभावभूतसुखदुःखाद्यन्यतमावभासकतया भवत्यनुकूलता प्रतिकूलता वेति निमित्तभेदं ज्ञापयति। न नियतगुणदोषव्यवस्थम्—गुणानामुन्मेषवैचित्र्यात् ॥ १६० ॥

---

नरेक्ष्यनाभ्यूरुकुचाऽनुत्तरीया च नो भवेत्।
साध्वी स्त्री न च भण्डेक्षा न निर्लज्जादिसङ्गिनी ॥१६१॥

नरेक्ष्येति। साध्वी—शीलसदाचारादिसाधुगुणयुक्ता। स्त्रीति जात्यभिप्रायेणैकवचनम्। नरैः—पुरुषैः, ईक्ष्यं—सम्यगनावृतत्वाद्दृश्यं नाभ्यूरुकुचं यस्याः, नाभिश्च ऊरू च कुचौ चेति प्राण्यङ्गत्वाद्द्वन्द्व एकवद्भावे नपुंसकम्, तथाभूता न भवेत्। तथा—न विद्यते उत्तरीयं—संव्यानापरपर्यायमुपरिवस्त्रं यस्यास्तथाभूता च न भवेत्। सर्वदोत्तरीयवस्त्रं धारयेदित्यर्थः। भण्डेक्षा—भण्डन्ते—परिहासयन्ति प्रेक्षकजनानिति भण्डाः नानाविधवेषधराः पारिहासिकास्तानीक्षत इति तथाभूता न भवेत्। तथा—निर्गता लज्जा यस्याः सा निर्लज्जा गणिका तत्सदृशी वाऽन्यस्त्री सा आदिर्यासां धूर्तादीनां तासां सङ्गोऽस्या अस्तीति तथाभूता च न स्यात्।

साध्वीनां लज्जैव परं भूषणं तच्युतिर्येन स्यात्तत्सर्वथा परिहरणीयमित्यभिप्रयन्नाह—नरेक्ष्येति। नाभ्यादयोऽवयवाः परदृष्टिपथात्परिहरणीयाः। अविगणय्य पुरुषवर्गमवधूय च गोप्यागोप्यावयवविवेकं पथि पर्यटनं ह्यसाध्वीनामनपत्रपं चरितम्। लज्जैव तु साध्वीनां परं भूषणम्। तत्ताभिर्न तथा वर्तितव्यम्। नाप्यनुत्तरीयया भाव्यं—विनोत्तरीयं विजनादन्यत्र वर्तनमपि ह्यनुचितं साध्वीनामपत्रपैकभूषणानाम्। ये चोपहासोपजीविनो हास्यरसैकपोषकान्वेषानुपधार्य सदसि प्रविश्य हासयन्ति जनांस्तान्भण्डान्नेक्षेत। तदीक्षणमात्रेण

न तथा वर्तितव्यम्—नरेक्ष्यनाभ्यूरुकुचाभिर्न भाव्यम्। नच भण्डेक्षेत्यस्य भावमाह—ये चेत्यादिना। कुतो नेक्षेत, तत्राह—तदीक्षणमात्रेणेति। उच्चैर्हसितस्यासमाधेयत्वात्—दुर्निवार-

"पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया । सेह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गति"मिति याज्ञवल्क्योक्तेः । स्वाचारा–सु शोभन आचारो यस्याः सा तथोक्ता । शोभनश्चाचारो दर्शितो मिताक्षरायां शङ्खेन—"अनुक्ता गृहान्न निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यान्न स्तनौ निवृतौ कुर्यान्न हसेदपावृतं न भर्तारं तद्बन्धून्वा द्विष्यान्न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलाभिः सहैकत्र तिष्ठेत्संसर्गेण हि चारित्रं दुष्यती"ति । तस्माद्दुःसङ्गं सर्वथा परिहरेदिति तात्पर्यम् । भारतेऽप्युक्तम्—"पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् । स्वप्नोऽन्यगेहवासश्च स्त्रीणां वै दूषणानि ष"डिति । स्वप्नः–दिवानिद्राऽतिनिद्रा वा ।

अत्र साध्वी भवेदिति विध्यर्थे पृथग्वाक्ये त्वयमर्थः—स्त्री नरेक्ष्यनाभ्यूरुकुचादिर्न भवेत्, किन्तु साध्वी–पतिव्रता भवेत् । तल्लक्षणमाह हारीतः—"आर्ताऽऽर्ते मुदिते हृष्टा प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ सा स्त्री ज्ञेया पतिव्रते"ति । "मृते भर्तरि या नारी समारोहेद्धुताशनम् । साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥" इति च । अत्रानुमरणं तु मुमुक्षारहिताया ब्रह्मचर्यपालनाशक्तायाः केवलमनित्यतुच्छसुखस्वर्गकामुकायाः स्त्रिया विहितमिति ज्ञेयम् । अन्यथा व्यभिचारादिदुष्कर्मणा कुलत्रयाधःपातापत्तेरिति भावः । "मृते भर्तरि या जीवेद्ब्रह्मचर्यविवर्जिता । पातयेत्स्वैरिणी सा तु निरये स्वकुलत्रय"मिति वृद्धगर्गोक्तेः । अतो भर्तरि मृते ब्रह्मचर्यपालनाशक्ताया हुताशनप्रवेश एव युक्तः । तथा च मनुः—"ब्रह्मचर्यं चरेत्साध्वी प्रविशेद्वा हुताशन"मिति । "मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वे"ति विष्णुस्मृतेश्च । यत्तु ब्रह्मवैवर्तम्—"कलौ नान्या गतिः स्त्रीणां सहानुगमनादृत" इति, तद्ब्रह्मचर्यपालनाशक्तस्त्रीपरमिति निर्णयसिन्धुः । अतश्च मोक्षमनिच्छन्त्या अनित्याल्पसुखरूपस्वर्गार्थिन्या अनुगमनं युक्त-

---

प्रसजत उच्चैर्हसितस्यासमाधेयत्वात् । तादृशो हासो ह्यनुचितस्तथाविधानां कुलवधूनाम् । महाकविश्चाह—"स्मितं कुलनतभ्रुवामधर एव विश्राम्यति" इति । परिभाषणार्थाद्भडिधातोरन्तर्भावितण्यर्थात्पचाद्यचि निष्पन्नो भण्डशब्दः । परिहासः सनिन्दोपालम्भश्च परिभाषण-

---

त्वात् । तत्प्रसङ्गे का हानिरित्यत्राह—तादृशो हासो हीति । भण्डशब्दनिर्वचनपूर्वकं शब्दार्थ-

मिताचाराध्यायमिताक्षरा च । स्वर्गप्राप्तिस्तु तदर्थिन्या अग्निप्रवेशं विनापि ब्रह्मचर्यपालनमात्रादपि भवतीति निर्णयसिन्धौ काशीखण्ड उक्तम्—"पत्यौ मृतेऽपि या योषिद्वैधव्यं पालयेत्क्वचित् । सा पुनः प्राप्य भर्तारं स्वर्गलोकं समश्नुते" ॥ इति । विस्तरो मिताक्षरादिभ्योऽवगन्तव्यः ॥ १६१ ॥

मित्युक्तं सिद्धान्तकौमुद्याम् । इत्थं च भण्डन्ते—हासयन्ति जनानिति भण्डाः, तानीक्षते इति भण्डेक्षा तथा न स्यादितिशब्दार्थः । याश्च निर्लज्जास्तासां सङ्गो न कार्यः, चारित्रलोपप्रसङ्गात् । अत्र वचनम्—"अनुक्ता गृहान्न निर्गच्छेन्नानुत्तरीया न त्वरितं व्रजेन्न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धवैद्येभ्यो न नाभिं दर्शयेदागुल्फाद्वासः परिदध्यात् न स्तनौ विवृतौ कुर्यात् न हसेदपावृतं न भर्तारं तद्बन्धून्वा द्विष्यान्न गणिकाधूर्ताभिसारिणीप्रव्रजिताप्रेक्षणिकामायामूलकुहककारिकादुःशीलाभिः सहैकत्र तिष्ठेत्संसर्गेण हि चारित्रं दुष्यती"ति ॥ १६१ ॥

माह—परीत्यादिना । परपुरुषप्रसङ्गप्रतिषेधादेव निर्लज्जपुरुषप्रसङ्गप्रतिषेधस्य प्राप्तत्वात्स्त्रीलिङ्गमाश्रित्य व्याचष्टे—याश्चेति ॥ १६१ ॥

---

## भूषासदंशुकधृतिः परगेहोपवेशनम् ।
## त्याज्यं हास्यादि च स्त्रीभिः पत्यौ देशान्तरं गते ॥१६२॥

प्रोषितभर्तृकाणां विशेषमाह—भूषेति । पत्यौ—स्वभर्तरि । अन्यो देशो देशान्तरमिति मयूरव्यंसकादिः, तत् । गते सति । स्त्रीभिः—सभर्तृकाभिः । भूषा—हैमाद्यलङ्कारैः स्वाङ्गशोभाकरणमित्यर्थः । त्याज्यमिति लिङ्गविपरिणामेनात्रान्वेतव्यम् । त्याज्या—न कर्तव्येत्यर्थः । एकपक्षे तु धृतिपदेन सम्बन्धः । सदंशुकानि—सन्ति—शोभनानि बहुमूल्यानि च तान्यंशुकानि—वस्त्राणि च सदंशुकानि, तेषां धृतिः—धारणम् । त्याज्येति सम्बन्धः । तथा—परस्य गेहं—गृहं तस्मिन्नुपवेशनं—स्थितिश्च त्याज्यम् । तथा—हास्यं—अट्टहासस्तदादिर्यस्य समाजदर्शनादेस्तत्त्याज्यम् ।

प्रोषितभर्तृकाणां धर्ममाह—भूषेति । भूष्यते अनयेति भूषा—अलङ्करणं, कङ्कणताटङ्कादिमाङ्गल्यचिह्नादन्यदङ्गशोभैकशेषमलङ्करणम् । पत्यौ देशान्तरं गते न धार्यमित्यर्थः । शरीराच्छादनैकफलकादन्यच्छोभाधायकं वासो न धार्यमित्याह—सदंशुकेति । तथा परगेहोपवेशनं त्याज्यम् । हास्यादि च त्याज्यम् । हास्यं—उपहासवचनम् । इदं हि हर्षसमयोचितम् ।

इह भूषाशब्दस्य माङ्गल्यचिह्नभूतकङ्कणादिव्यतिरिक्तपरत्वं स्वरसतो गमयन्नवयवार्थमाह—भूष्यतेऽनयेति भूषेति । अस्याशयमाह—अङ्गशोभैकशेषमिति । सदंशुकेत्यत्र सच्छब्देन विव-

तथा चाह याज्ञवल्क्यः—"क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृके"ति ॥ १६२ ॥

आदिशब्दादुत्सवदर्शनादेः सङ्ग्रहः । अत्र वचनम्—"क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम् । हास्यं परगृहे यानं त्यजेत्प्रोषितभर्तृका ॥" इति ॥ १६२ ॥

क्षितमर्थमाह—शरीरेति । हास्यस्य त्याज्यत्वे निमित्तमाह—इदं हीति । प्रोषितभर्तृकाणां हर्षप्रसङ्गानौचित्यात् ॥ १६२ ॥

विधवाभिस्तु योषाभिः सेव्यः पतिधिया हरिः ।
आज्ञायां पितृपुत्रादेर्वृत्यं स्वातन्त्र्यतो न तु ॥ १६३ ॥

मृतभर्तृकस्त्रीणां विशेषधर्मानाह—विधवाभिरिति दशभिः । विगतः—मृतो धवः—पतिर्यासां ताभिः । योषाभिः—स्त्रीभिस्तु । हरिः—श्रीकृष्णोऽर्चास्वरूपः । पतिधिया—अयमेव मत्स्वामीति बुध्या । सेव्यः—यथाशक्त्याराधनीयः । "विष्णोस्तु सेवनं कार्यं पतिबुध्या न चान्यथे"ति शूद्रकमलाकरे मदनपारिजाते च विधवाधर्मेषु स्कान्दोक्तेः । पित्रा सहितः पुत्रः स आदिर्यस्य भ्रात्रादेस्तस्य । आज्ञायां—निदेशे । वृत्यं—वर्तितव्यम् । वर्त्यमिति पाठे णिजन्तत्वं ज्ञेयम् । स्वातन्त्र्यतः—स्वतन्त्रतया तु, न वृत्यम् । उक्तं हि याज्ञवल्क्येनैवाचाराध्याये—"रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्धके । अभावे ज्ञातयस्तेषां स्वातन्त्र्यं न क्वचित्स्त्रियाः ॥ पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः । हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा

अथ विधवानां धर्ममाह—विधवाभिरित्यादिना । जीवति धवे स एव सेव्यः स्त्रीभिरीश्वरवत्, मृते तु तस्मिन्नीश्वर एव निरुपाधिकः स्वामी सेव्यस्ताभिरित्याह—विधवाभिस्त्विति । तुशब्देन सधवातो वैलक्षण्यमुच्यते । पतिधिया–पतिः–स्वामी, तद्धिया, हरिः सेव्यः । अयं भावः—वस्तुतः सर्वेश्वरो हरिरेव सर्वेषां निरुपाधिकः पतिः, अन्यत्र पतित्वमौपाधिकं, जीवति धवे स एव तथा सेव्य इति स्त्रीणां धर्मः । तस्मिन्विगते च वस्तुतः स्वामी हरिरेव सेव्यः स्वामिभावेनेति । यद्वा–पतिधिया–यः पतिः स्वस्य भर्ता आसीत्तद्बुद्ध्या, हरिः सेव्यः । अयं भावः—यावज्जीवं स्त्रीणामयमेव धर्मो यत्पत्युः सेवनं, तत्र जीवति साक्षा-

तुशब्दगम्यं वैलक्षण्यं ज्ञापयन्नवतारयति—जीवतीति । हरौ पतिबुद्धेराहार्यत्वं व्यावर्तयन्नाह—अयं भाव इति । तथा–स्वामित्वेन । नन्वसति वस्तुगत्या स्वामित्वे औपाधिकं तदवलम्ब्योपासनमयोग्यमित्याशङ्कां परिहरन्नाह—स्त्रीणां धर्म इति । शास्त्रविहितोऽयं धर्म इति भावः । पति-

भवे"दिति। विज्ञानेश्वरश्चैतद्व्याचख्यौ—"पाणिग्रहणात्प्राक् पिता कन्यामकार्यकरणाद्रक्षेत्। तत ऊर्ध्वं विन्नां—परिणीतां भर्ता। तदभावे पुत्राः। वृद्धभावे च। तेषामुक्तानामभावे ज्ञातयः। तदभावे राजा। पक्षद्वयावसाने तु "राजा भर्ता प्रभुः स्त्रिया" इति स्मृतेः। अतः कचिदपि स्त्रीणां नैव स्वातन्त्र्यम्। किञ्च भर्त्रा विना—भर्तृरहिता पित्रादिभिः रहिता वा न स्या"दिति। मनुश्चाह—"बालया वा युवत्या वा वृद्धया वापि योषिता। न स्वातन्त्र्येण कर्तव्यं किञ्चित्कार्यं गृहेष्वपि॥ पित्रा भर्त्रा सुतेनापि नेच्छेद्विरहमात्मनः। एषां हि विरहेण स्त्री गर्हिता स्यात्कुलद्वये॥" इति॥ १६३॥

पत्सेवनं मृते च तस्मिंस्तद्बुद्ध्या हरेः सेवनमिति। तदेवं यावज्जीवं पतिसेवनं स्वधर्म इति तन्निष्ठा परम्परया निःश्रेयसाय स्यादेव। सत्यां कामनायां पतिलोकावाप्तिश्च फलं स्मर्यते—"विष्णोस्तु पूजनं कार्यं पतिबुद्ध्या न चान्यथा। पतिमेव सदा ध्यायेद्विष्णुरूपधरं परम्॥ एवं धर्मसमायुक्ता विधवा वा पतिव्रता। पतिलोकानवाप्नोति न भवेत्क्वापि दुःखिता॥" इति। केचित्तु—पतिधियेत्युपलक्षणे तृतीया, पत्येकावलम्बिन्या धियोपलक्षिताभिः, तदनुसरणशीलाभिरित्येवत्, हरिः सेव्य इति व्याचक्षते। हरेः सेवा च यथाधिकारं बोध्या। मृतेऽपि पत्यौ परतन्त्राभिरेव भाव्यमित्याह—आज्ञायामिति। पित्रादिपरतन्त्रयैव भाव्यं विधवया न तु स्वतन्त्रया। आह च मनुः—"बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने। पुत्राणां भर्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम्॥ पित्रा भ्रात्रा सुतैर्वापि नेच्छेद्विरहमात्मनः। एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले॥" इति। याज्ञवल्क्यश्च—"अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः" इति॥१६३॥

देववानां व्रतमनुसृत्याह—यद्वेति। प्रथमपक्षे साक्षान्निःश्रेयसायास्ति प्रसङ्गः, इह तु परम्परयैवेति प्रथमः पक्ष एव वरीयानिति प्रतिभाति। यावज्जीवम्—पत्युरात्मनो वा यावज्जीवितम्। पतिधिया हरिः सेव्य इत्यनेन प्रसक्तं प्रव्रज्याप्रसङ्गं परिहरति मूले—आज्ञायामिति॥ १६३॥

---

**स्वासन्नसम्बन्धहीना नराः स्पृश्या न कर्हिचित्।**
**तरुणैस्तैश्च तारुण्ये भाव्यं नावश्यकं विना॥ १६४॥**

स्वासन्नेति। किञ्च—स्वासामासन्नसम्बन्धः—पितृभ्रातृसुतादिलक्षणो निकटसम्बन्धस्तेन हीनाः। नराः—स्वज्ञातिपुरुषा अपि। ताभिर्विधवास्त्रीभिः। कर्हि-

अकामतोऽपि सम्मर्दादिना निमित्तेन सम्भाव्यमानः पुरुषान्तरस्पर्शः परिहरणीय इत्याह—स्वेति। भ्रात्राद्यासन्नसम्बन्धिभ्यो येऽन्ये ते न स्पृश्याः। तै रक्ष्यमाणानामासां भाव-

चित्–क्वापि कार्ये। न स्पृश्याः–बुद्धिपूर्वकं तत्स्पर्शो न कर्तव्यः। तथा ताभिः। तारुण्ये सति–स्वासां यौवनावस्थायां वर्तमानायां सत्यामित्यर्थः। तरुणैः–युवभिस्तैर्दूरसम्बन्धिभिरसम्बन्धिभिश्च नरैः, सह। आवश्यकं–पुरुषैरेवावश्यसाध्यं कार्यं, विना न भाष्यं–भाषणमपि न कर्तव्यम्। एतच्च समीक्षणादेरप्युपलक्षणम्। "ब्राह्मणो विधवा नारी सूत्रवस्त्रं च मृण्मयम्। स्पर्शेन छायया दृष्ट्या व्रजत्यशुचितां द्रुत"मित्याचारसारोक्तेः। स्पर्शादीनां यथासम्भवं योजनम्। अत्रायमाशयः—भर्तरि मृते ब्रह्मचर्यपालनशक्तानां तथा गर्भिणीबालापत्यादीनामेव ब्रह्मचर्यपालनाद्यर्थं जीवनमनुज्ञातं शास्त्रेण। ब्रह्मचर्यं च यथा ब्रह्मचारिणां पुरुषाणां स्त्रीकथाश्रवणनिरीक्षणादिना नश्यति, तथा स्त्रीणामपि पुरुषगुणागुणकथावार्ताश्रवणनिरीक्षणादिना नश्यति, तन्नाशे च महत्येव स्वार्थध्वंसापत्तिरिति न ताभिः परपुरुषस्पर्शादिकं कार्यमिति। "विधवा कामवश्यतः परपुंवीक्षणादिना। ब्रह्मचर्यच्युता याति निरयान्स्वकुलैस्त्रिभि"रिति स्मृत्यर्थसारोक्तेः। "मनसाऽपि हि दुष्टेन याऽन्यं भावयति प्रियम्। सा गच्छेन्नरकं घोरं तेनैवाघेन निश्चित"मिति वृद्धपराशरोक्तेश्च। अत एवाह शूद्रकमलाकरे मनुः—"कामं तु क्षपयेदङ्गं पुष्पमूलफलोदकैः। न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु। आसीताऽऽमरणात्क्षान्ता नियता ब्रह्मचारिणी"ति। तत्रैव यमश्च—"अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम्। दिवंगतानि विप्राणामकृत्वा कुलसन्ततिम्॥ मृते भर्तरि या

---

पूते यादृच्छिके तत्स्पर्शेऽदोषात्। कर्हिचिन्न स्पृश्याः–सत्यपि सम्मर्दादिनिमित्ते न स्पृश्याः। विधवाभिरित्यनुषज्यते। ननु कथमकाममूलो यादृच्छिकस्पर्शो दूषणाय ?। किमयमस्पृश्यस्पर्शः ?। सत्यं विधवानां तु तथैव। तथाच वचनम्—"ब्राह्मणो विधवानारी सूत्रवस्त्रं च मृण्मयम्। स्पर्शेन छायया दृष्ट्या व्रजत्यशुचितां द्रुतम्॥" इति। वस्तुतस्तु—"मृते भर्तरि या नारी ब्रह्मचर्यव्यवस्थिता। स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः॥" इत्यादिना विहितस्य ब्रह्मचर्यस्य यादृच्छिकोऽपि पुनः पुनः समापतन्पुरुषान्तरस्पर्शः कदाचिच्चित्तविक्षोभाय भवेदित्यस्पृश्यत्वोक्तिः। भाषणमपि तरुणैः सह न कार्यमित्याह—तरुणैरिति। तैः–स्वासन्नसम्ब-

---

तैः–भ्रात्रादिभिः। तत्स्पर्शे–तेषामासन्नसम्बन्धहीनानां स्पर्शे। किमयमस्पृश्यस्पर्श इति। किंशब्दः प्रतिक्षेपे। स्वतोऽदूषकस्य स्पर्शमात्रस्य प्रतिक्षेपोऽयुक्त इति भावः। तथैवेति। आसन्नसम्बन्धहीनपुरुषान्तरस्पर्शोऽस्पृश्यस्पर्शवत्स्वतो दूषक एवेति भावः। तत्र प्रमाणमाह—तथाचेति। स्पृश्यजातीयस्पर्शस्य स्वतोऽस्पृश्यजातीयस्पर्शवद्दूषकत्वमनुपपन्नमित्यस्वरसादाह—वस्तुतस्त्विति। भाषणमपि तरुणैः सह न कार्यमित्याहेति। यद्यपि पूर्वं रूपयौवनेति श्लोके पुरुषान्तरप्रसङ्गप्र-

नारी ब्रह्मचर्ये व्यवस्थिता । स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥" इति। अत्र स्वासन्नसम्बन्धिपुरुषस्पर्शादौ दोषाभावकथनं तु तेषां तदकार्यप्रवृत्तिरक्षणहेतुत्वविवक्षयैवेति ज्ञेयम्। तथा चाह पराशरः—"चेष्टाचारित्रचित्तानि देवा नैव विदुः स्त्रियाः। किं पुनर्मनुजा लोके कामोपहतचेतसः ॥ तस्मात्ताः सर्वथा रक्ष्याः सर्वोपायैर्नृभिः सदा। श्वशुरैर्देवराद्यैश्च पितृभ्रात्रादिभिस्तथा ॥" इति। "अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम् । विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे ॥" इति मनुस्मृतेश्च। स्वैः—सम्बन्धिभिः। आपत्काले निर्वाहार्थमुक्तमावश्यकं विनेति। आवश्यकेऽनन्यसाध्ये कार्ये तु स्पर्शभाषणादौ न दोषः। यथा स्वशरीररक्षणं स्वधर्मरक्षणं च भवेत्तथा वर्तितव्यमित्यर्थः ॥१६४॥

न्धहीनैरित्यर्थः सहेत्यध्याहारः। स्वयं वृद्धा चेन्न हानिरित्यभिप्रेत्याह—तारुण्ये सतीति। स्वसा इति शेषः। आवश्यकं विना न भाष्यं, यावदावश्यकं तावत्तु भाषेत नाधिकमित्यर्थः। एतदुक्तं भवति—अकृते भाषणे आत्मनः परस्य वा धर्माविरुद्धकार्यातिपातो यदि स्यात्तदा यूनाऽपि सह समुचितं भाषणं क्रियतां नाम, येन तत्परिहारः स्यात्, न तु तव ग्रामः कः, गृहं क, कलत्रं क, कति ते पुत्राः, इत्यादिवृथावादः कार्य इति ॥ १६४ ॥

तिषेवेनैवास्यास्पर्थस्य सिद्धिर्भवति नाम। अथापि देहसम्बन्धोऽपवादनिमित्तं भवेदिति शङ्कापरिहारायेहास्य प्रसक्तिः । सभर्तृकाप्रकरणाभर्तृकाप्रकरणभेदाद्वा । अत्राप्यपवादं ज्ञापयन्नाह—आवश्यकं विनेति। भावमाह—एतदुक्तं भवतीति ॥ १६४ ॥

---

**स्तनंधयस्य नुः स्पर्शे न दोषोऽस्ति पशोरिव ।**
**आवश्यके च वृद्धस्य स्पर्शे तेन च भाषणे ॥ १६५ ॥**

स्तनंधयस्येति। ताभिरिति सम्बध्यते। स्तनं धयति—पिबतीति स्तनंधय-

उक्तेऽर्थेऽपवादमाह—स्तनंधयस्येति । स्तनंधयः—स्तन्यपानार्हे वयसि वर्तमानः, सत्यसति बान्धव्ये न किशोरस्यास्पृश्यता। तत्र हेतुं व्यनक्ति—पशोरिवेति । भावदोषाप्रसक्तेरिति भावः। वृद्धस्य जराभिभूतस्य स्पर्शे न दोषः, असति धर्माविरुद्धकार्यातिपाते तु तत्स्पर्शोऽपि दोषायेति ज्ञापयन्नाह—आवश्यक इति । बालस्य ह्यप्रज्ञातलिङ्गविभेदस्यैचिछ-

उक्तेऽर्थे—नराः स्पृश्या न कर्हिचिदित्यस्मिन्नर्थे । ननु बालोऽनभिव्यक्तपुंशक्तिः, वृद्धस्तु विलीनपुंशक्तिरित्यकार्यकरे पुंस्त्वे द्वयोरविशिष्टे, आवश्यके च वृद्धस्येति निमित्तविशेषसापेक्षं स्पर्शाभ्यनुज्ञानं वृद्धमात्रे कुत इत्याशङ्कां परिहरन्भावमाह—बालस्य हीति । पूर्वश्लोकेन विरोधा-

स्तस्य, बाल्यावस्थायां वर्तमानस्य। नुः-यस्य कस्यचिन्नरस्य। स्पर्शे सति तु। पशोः-गोवत्सादेः स्पर्श इव दोषो नास्तीति। ज्ञेयमिति शेषः। उभयोरज्ञत्वसाम्यादिति भावः। तथा-आवश्यके कार्ये सति। वृद्धस्य-चत्वारिंशद्वर्षोर्ध्ववयसः पुरुषस्य। कलौ तादृशस्यैव प्रायशो जीर्णत्वदर्शनात्। तस्य स्पर्शे तेन सह भाषणे च दोषो नास्तीति ज्ञेयम्। विधवानां पुरुषस्पर्शादिकं हि कामविकारजनकत्वाज्जनापवादभयाच्च शास्त्रे निषिद्धं तत्तु बालवृद्धयोर्न सम्भवतीत्येतदनुज्ञातमिति प्रतिभाति। चकारान्मार्गगमनादिसङ्ग्रहः। "आश्रित्य यौवनं सर्वे विकाराः कामसम्भवाः। तिष्ठन्त्यतोऽत्र नियमाः पाल्याः स्त्रीभिश्च पूरुषै"रिति स्कान्दोक्तेः ॥ १६५ ॥

---

कोऽपि स्पर्शो न दोषाय। वृद्धस्य तु जराभिभूतस्याप्यनासन्नसम्बन्धस्यासत्यावश्यके स्पर्शो दोषाय, स ह्यनुसर्यमाणलिङ्गवैषम्य इति बालवृद्धस्पर्शयोरदूष्यत्वे विशेषः सारितः। तेन च भाषणे-आवश्यक इत्येतदत्राप्यन्वेति। असत्यावश्यकेऽनासन्नसम्बन्धेन तेन सहापि भाषणं नोचितमिति यावत्। एतेन-पूर्वश्लोके तरुणैस्तैश्च तारुण्ये इत्यनेन वृद्धैस्तैः सह विनावश्यकं भाषणं न दोषायेति तदाभाति तस्यायमपवादः सिद्धः। एतेन-पूर्वश्लोके विनाप्यावश्यकं वृद्धैः सह भाषणेऽभ्यनुज्ञासिद्धेरिह तैः सह भाषणाभ्यनुज्ञानं पुनरुक्तम्, असत्यावश्यके तन्निषेधज्ञापनं विरुद्धं चेति शङ्का परास्ता। यद्यप्येवं सति पूर्वश्लोके तरुणैस्तारुण्य इति विशेषनिर्देशोऽनर्थः, तैरिति सामान्यनिर्देशमात्रं समुचितम्। तथापि तरुणैस्तारुण्ये विनावश्यं भाषणस्यात्यन्तानर्थावहत्वज्ञापनाय विशिष्य निर्देशः ॥ १६५ ॥

---

शङ्कां वारयति—एतेनेति। समुचितमिति। तेन च भाषण इत्यस्याप्यर्थस्य तेनैव क्रोडीकारसम्भवेनेह पुनरुत्कीर्तनानपेक्षणेन लाघवादिति भावः ॥ १६५ ॥

---

विद्याऽनासन्नसम्बन्धात्ताभिः पाठ्या न काऽपि नुः।
व्रतोपवासैः कर्तव्यो मुहुर्देहदमस्तथा ॥ १६६ ॥

विद्येति। किञ्च-ताभिः-विधवास्त्रीभिः। अनासन्नसम्बन्धात्-समीपसम्ब-

---

नन्वभ्यनुज्ञातं नाम आवश्यके सति पुम्भिर्भाषणं, तद्विज्ञानग्रहणं पुरुषान्तरादपि समुचितं, विज्ञानं हि निःश्रेयसे, तदर्थं तैः सहालापोऽपि समुचित इत्यत्राह—विद्येति। विद्याऽत्र पौराणिकं विज्ञानं, तदवबोधकभाषाप्रबन्धो वा। कापि-निःश्रेयसोपयोगिन्यपि। आसन्न-

---

पौराणिकं विज्ञानमिति। स्त्रीणां ब्रह्मविद्यायामनधिकारात्। अनासन्नसम्बन्धादित्यस्याशयमाह—

न्धरहितात् । नुः–पुरुषस्य सकाशात् । काऽपि–कांचिदपि । विद्या । न पाठ्या–न पठनीया । तत्प्रसङ्गस्य परिणामे विरसत्वादिति भावः । तासां भगवद्गुणपद्याध्ययनेच्छा चेत्तदा स्वपितृभ्रात्रादिसम्बन्धिजनसमीपेऽध्ययनं कार्यं नान्यत्रेति तात्पर्यम् । तथा–ताभिः । व्रतानि–एकादश्यादीनि धारणापारणादीनि नैमित्तिकानि च, उपवासाः–कचिदबुध्योत्पन्नपुंस्पर्शादिदोषप्रायश्चित्तार्थान्युपोषणानि, तैश्च तैश्च करणैः । मुहुः–पुनः । देहस्य दमः–दमनं कर्तव्यः । स चोक्तो निर्णयसिन्धौ मदनरत्ने च स्कान्दे—"विधवाकबरीबन्धो भर्तृबन्धाय जायते । शिरसो वपनं कार्यं जटा धार्याऽथवा तथा ॥ एकाहारः सदा कार्यो न द्वितीयो विनाऽऽपदम् । मासोपवासं सा कुर्याच्चान्द्रायणमथापि वा ॥ पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम् । नैवाङ्गोद्वर्तनं कार्यं स्त्रिया विधवया क्वचित् ॥ सुगन्धिद्रव्यसम्भोगो नैव कार्यस्तया पुनः । नाधिरोहेदनड्वाहं प्राणैः कण्ठगतैरपि ॥ कञ्चुकं न परीदध्याद्वासो न विकृतं वसेत् । वैशाखे कार्तिके माघे विशेषनियमांश्चरेत् ॥ चातुर्मास्येऽधिके मासे विशेषेण व्रतानि से"ति । तस्याश्चैकादशीव्रताकरणे दोषमाह नारदीये—"एकादश्यां विना रण्डा यतिश्च सुमहामते ! । पच्यते ह्यन्धतामिस्रे यावदाभूतसम्प्लव"मिति । "विधवा या भवेन्नारी भुञ्जीतैकादशीदिने । तस्यास्तु सुकृतं नश्येद्ब्रह्महत्या दिने दिने ॥" इति कात्यायनश्च ॥ १६६ ॥

---

सम्बन्धेभ्यो भ्रात्रादिभ्य एव साऽधिगन्तव्या- नान्यत इति भावः । अथ ताभिर्व्रतोपवासादिभिर्देहस्य दमः कार्य इत्याह—व्रतोपवासैरिति । व्रतैरुपवासैश्चेत्यर्थः । व्रतानि–एकभुक्तशीतोदकस्नानानभ्यञ्जनभूशयनादिव्रतानि । उपवासाः–मासोपवासपक्षोपवासादयः । उक्तं च—"एकाहारः सदा कार्यो न द्वितीयो विनाऽऽपदम् । मासोपवासं सा कुर्याच्चान्द्रायणमथापि वा ॥" इति । मनुश्च—"कामं तु क्षपयेद्देहम्" इति । यद्वा–व्रतोपवासैः–व्रतनिमित्तोपवासैरित्यर्थः । व्रतं एकादशीव्रतादि, उपवासाश्च–एतदतिरिक्तनिमित्तका वा बोध्याः ॥ १६६ ॥

---

आसन्नेति । व्रतानामुपवासा इति षष्ठीतत्पुरुषभ्रमं व्यावर्तयति—व्रतैरुपवासैश्चेत्यर्थ इति । व्रतान्याह—एकभुक्तेति । उपवासानाह—मासेति । यद्वेति । अत्र षष्ठीतत्पुरुषो बोध्यः । निमित्तनिमित्तिभावलक्षणः सम्बन्धः षष्ठ्याऽवगम्यते ॥ १६६ ॥

## धनं च धर्मकार्येऽपि स्वनिर्वाहोपयोगि यत् ।
## देयं ताभिर्न तत्क्वापि देयं चेदधिकं तदा ॥ १६७॥

धनमिति । किञ्च–ताभिः–विधवास्त्रीभिः । 'यत्स्वनिर्वाहोपयोगि–स्वकीयदेहनिर्वाहमात्रसाधनम् । धनं–वित्तम् । भवेदिति शेषः । तत्तु धर्मकार्ये–धर्मसम्बन्धिकार्यनिमित्तमपि । क्वापि–कदाचिदपि । न देयं–न व्ययितव्यम् । तद्दाने हि स्वनिर्वाहार्थमन्यशुश्रूषादिप्रवृत्तौ स्वधर्मनाशावश्यंभावापत्तेरिति भावः । ननु तर्हि विधवाभिर्धर्मकार्ये सर्वथा धनं न देयमित्याशङ्क्याह—अधिकमिति । स्वनिर्वाहपर्याप्तधनादधिकं धनं चेत्तदा तु तत् धर्मकार्यार्थं देयमेव । अन्यथा वित्तशाठ्येनाधर्मसङ्क्रमापत्तेरिति भावः ।

ननु—"त्रय एवाधना राजन् ! भार्या दासस्तथा सुतः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धन"मिति विदुरोक्तेः स्त्रीणां कुतो धनमिति चेन्न । स्त्रीभिर्लब्धस्य धनस्य रक्षण एव तद्भर्तृणामधिकारो न तु स्वेच्छया व्ययेऽपि । "धर्मकार्येऽपि न ग्राह्यं पुरुषैः स्त्रीधनं क्वचि"दिति स्मृतेः । भर्तृमरणानन्तरं तु ता एव तद्रक्षिकाः । तच्च षड्विधमाह मनुः—"अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि । भ्रातृमातृपतिप्राप्तं षड्विधं स्त्रीधनं स्मृत"मिति । अध्यग्न्यादेर्लक्षणमाह–कात्यायनः—"विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ । तदध्यग्निकृतं

---

यदि धनं स्याद्बहुभिरपि व्रतोपवासैर्न दमो देहस्य भवेत्, धनोष्मा हि प्रबलः, तद्धनं प्रभूतं चेन्न ताभिस्तद्रक्ष्यं, देहयात्राशेषभूतं तु रक्ष्यम्, अन्यथा वृत्तिकार्श्ये परसेवाप्रसङ्गे धर्मलोपप्रसङ्गादित्यभिप्रायेणाह—धनं चेति । चस्त्वर्थे । यत्स्वनिर्वाहोपयोगि देहयात्राशेषभूतं तत्तु धनं धर्मकार्येऽपि न देयम् । यद्यपि धनस्य फलं धर्म एव, "धनं च धर्मैकफल"मित्युक्तेः । तथापि तदर्थमपि न देयं ताभिः । देहयात्रोपयुक्तादधिकं चेत्तदा तत्क्वापि देयम् । बन्धुभ्यो दीयतां अन्येभ्यो वा धर्मार्थं दीयतां न तद्रक्ष्यम् । यद्वा–चो ह्यर्थः । धनं हि धर्मकार्यं । धनस्य धर्मः प्रयोजनमित्येतत् । प्रसिद्धमिति यावत् । अपि–एवमपि, यत्स्वनिर्वाहोपयोगि

---

अन्यथा–अरक्षणे, देहयात्रामात्रपर्याप्तस्यापि व्ययीकरणे इत्येतत् । धर्मलोपप्रसङ्गादिति । नारीणां हि परसेवया धर्मलोपप्रसङ्गो भवेदेवेति भावः । यत् स्वनिर्वाहोपयोगि तत्तु धनं धर्मकार्येऽपि न देयमित्यन्वयोऽभिप्रेतः । निर्वाहोपयोगीत्यस्य भावमाह—देहयात्राशेषभूतमिति । न देयं ताभिरिति । वृत्त्यर्थं परसेवाप्रसङ्गे धर्मलोपप्रसङ्गादिति भावः । क्वापीत्यस्य भावमाह—बन्धुभ्य इति । न तद्रक्ष्यमिति । पात्रविशेषमनुक्त्वा क्वापीत्युक्त्याऽनादरो व्यज्यते, ततश्च त्यागमात्रे तात्पर्यमिति भावः ।

सद्भिः स्त्रीधनं परिकीर्तितम् ॥ यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् । अध्यावहनिकं नाम स्त्रीधनं तदुदाहृतम् ॥ प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा । पादवन्दनकं चैव प्रीतिदत्तं तदुच्यते ॥" इति । तस्य च सम्बन्धिपुरुषाग्राह्यत्वमाह याज्ञवल्क्यः—"जीवन्तीनां तु तासां ये हरेयुर्बान्धवा धनम् । तान् शिष्याच्चौरदण्डेन धार्मिकः पृथिवीपतिः ॥ पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् । न तं भजेरन्दायादा भजमानाः पतन्त्यधः ॥" इति ॥ १६७ ॥

तत्ताभिः क्वापि न देयं, तथा सति वृत्तिकार्श्ये परसेवाप्रसङ्गे धर्मलोपप्रसङ्गात् । यदा त्वधिकं देयं धर्मार्थमित्यनुपज्यते । देयमिति च नियमविधिः । यच्च धनं स्वनिर्वाहोपयोगि तत्ताभिः क्वापि धर्मकार्ये न देयमिति वान्वयः । क्वापि धर्मकार्ये-इष्टापूर्तादौ क्वापि धर्मे इत्यर्थः ॥ १६७ ॥

प्रकारान्तरेणान्वयार्थावाह—यद्वेति । अस्मिन्पक्षे धनं च धर्मकार्ये, अपि स्वनिर्वाहोपयोगि यत्तत्क्वापि न देयम्, अधिकं चेद्देयमिति वाक्यत्रयं बोध्यम् । देयमिति नाभ्यनुज्ञामात्रम्, धनाधिक्येन दमाद्यसम्भवात्, नाप्यपूर्वविधिः, कामतः सम्भवात्, तदाह—नियमविधिरिति । पक्षेऽप्राप्तमदानं निरस्यते ॥ १६७ ॥

---

कार्यश्च सकृदाहारस्ताभिः स्वापस्तु भूतले ।
मैथुनासक्तयोर्वीक्षा क्वापि कार्या न देहिनोः ॥ १६८ ॥

कार्य इति । किञ्च—ताभिः । आहारः—भोजनम् । सकृत्—एकवारमेव । कार्यः—कर्तव्यः । व्रतोपवासाहवर्जमिति ज्ञेयम् । स्वापः—निद्रा तु । भुवस्तलं—अधरभागः, पृष्ठमिति यावत्, तस्मिन् । कार्यः—प्रतिदिनं विधेयः, न तु पर्यङ्कादौ । तदुक्तं स्कान्दे विधवाधर्मे—"त्यजेच्च सकलान्भोगान्स्यात्सकृन्मितभुक्तथा । न दिवा शयनं कुर्यान्न खट्वायामनापदी"ति । तथा—मैथुने आसक्तयोः—प्रवृत्तयोः । देहिनोः—प्राणिनोरपि । क्वापि कदाचिदपि । वीक्षा—विशेषेण बुद्धिपूर्वकमीक्षणम् । न कार्या—नैव कर्तव्या । तद्वीक्षणस्य सद्यो मनःक्षोभहेतुतया

देहदमार्थं कर्तव्येषु व्रतेषु किञ्चिन्निरूप्यते—कार्यश्चेति । ताभिः सकृदाहारः कार्यः, सकृत्-दिवा भुञ्जीत । न रात्राविति यावत् । भूतले स्वापः कार्यः । तुशब्दोऽवधारणार्थः । भूतल एव नान्यत्र खट्वादिषु । तथाच वचनम्—"पर्यङ्कशायिनी नारी विधवा पातयेत्पतिम्"

रागप्राप्तं भोजनं सकृदेवेति नियम्यते—सकृदाहारः कार्य इति । परिसङ्ख्याविधिरयम् । विना दिवाभोजनं सकृद्रात्रौ क्रियमाणं भोजनमभ्यनुज्ञातं स्यादित्यतः सकृत्पदं व्याचष्टे—सकृत्-दिवेति । भावमाह—न रात्राविति यावदिति । तुशब्दस्यावधारणार्थस्योत्तरेणान्वयमभिप्रेत्याह—भूतल एवेति ।

स्वब्रह्मचर्यभङ्गापत्तेरिति भावः । तदुक्तं स्कान्दे विधवाधर्मे—"नेक्षेत मिथुनीभूतं बुध्या पश्चाद्यपि क्वचि"दिति ॥ १६८ ॥

इति । इदमन्येषां देहदमाधायकानां व्रतानामुपलक्षकम् । तिर्यग्योनिगतयोरपि मैथुने प्रवृत्तिर्दृष्टिपथात्परिहार्येत्याह—मैथुनासक्तयोरिति । मैथुने प्रवृत्तयोर्देहिनोः–तिर्यग्योनिगतयोरपीत्यर्थः । वीक्षा कापि न कार्या । तथाच वचनम्—"नेक्षेत मिथुनीभूतं बुद्ध्या पश्चाद्यपि क्वचित्" इति ॥ १६८ ॥

कार्यश्चेत्यापो भूतल एवेति नियम्यते । देहिनोरित्यस्य वैयर्थ्यं परिहरन्व्याचष्टे—तिर्यग्योनिगतयोरपीति ॥ १६८ ॥

---

**वेषो न धार्यस्ताभिश्च सुवासिन्याः स्त्रियास्तथा ।**
**न्यासिन्या वीतरागाया विकृतश्च न कर्हिचित् ॥ १६९ ॥**

वेष इति । किञ्च–ताभिः । सुवासिन्याः–सभर्तृकायाः स्त्रियाः सम्बन्धी, तत्सदृश इत्यर्थः । वेषो न धार्यः । तथा न्यासिन्याः–सन्न्यासिवत्काषायवस्त्रं परिधाय भ्रमन्त्याः स्त्रियाः सम्बन्धी च वेषो न धार्यः । तथा वीतरागायाः–वीतरागिशब्दवाच्यश्रीरामभक्तपुरुषवद्वेषं धृत्वा भ्रमन्त्याः स्त्रियाः सम्बन्धी च वेषो न धार्यः । तथा कर्हिचित्–क्वापि । विकृतः–निजदेशकुलाचारविरुद्धो वेषश्च न धार्यः । अत्र प्रमाणवाक्यानि प्राग्लिखितस्मृत्यन्तर्गतान्यवगन्तव्यानि ॥ १६९ ॥

वैधव्यविप्रतीपो वेषो न धार्य इत्याह—वेषो न धार्य इति । सुवासिनीशब्दोऽत्र जीवद्भर्तृकामात्रपरः । तासां वेषः–कङ्कणकर्णपत्रकुङ्कुमधारणादिरूपः । स त्याज्यः । वैधव्ये सत्यपि न काषायादि परिदध्यादित्याह—न्यासिन्या इति । या पुनर्वीतरागा गृहं त्यक्त्वा सन्न्यासिनी भवति तस्या यो वेषः काषायपरिधानादिः स न धार्यः । सन्न्यासे स्त्रीणामधिकारोऽस्ति नास्तीत्यन्यदेतत् । कलावुल्लङ्घितशास्त्रमर्यादे लोकतः प्रसिद्धेरयं निषेधः । यश्च स्वकुलाचारविरुद्धो वेषः स च विकृतो न धार्यः कदापीत्याह—विकृतश्च न कर्हिचिदिति ॥ १६९ ॥

वैधव्यविप्रतीप इति । इदं पूर्वार्धस्यावतरणम् । वैधव्ये सत्यपीति । इदं तृतीयपादस्यावतरणम् । ननु न्यासिन्या वेषो न धार्य इत्युक्त्या स्त्रीणामपि प्रव्रज्यायामधिकारोऽस्तीति व्यज्यते, अन्यथा न्यासिन्या इति निर्देशोऽसङ्गतः स्यादित्याशङ्कां परिहरन्नाह—सन्न्यासे स्त्रीणामिति । लोकतः प्रसिद्धेरिति । प्रतिषेधे प्रसिद्धिमात्रमपेक्ष्यते, सा चेत्र शास्त्रतः, लोकतस्त्वस्ति, अधिकारतदभावनिर्धारणं तु नेह प्रकृतमन्यतोऽवगम्यतामिति भावः ॥ १६९ ॥

सङ्गो न गर्भपातिन्याः स्पर्शः कार्यश्च योषितः।
शृङ्गारवार्ता न नृणां कार्याः श्रव्या न वै क्वचित् ॥१७०॥
निजसम्बन्धिभिरपि तारुण्ये तरुणैर्नरैः।
साकं रहसि न स्थेयं ताभिरापदमन्तरा ॥ १७१ ॥
न होलाखेलनं कार्यं न भूषादेश्च धारणम्।
न धातुसूत्रयुक्सूक्ष्मवस्त्रादेरपि कर्हिचित् ॥ १७२ ॥

सङ्ग इति। किञ्च–ताभिः। गर्भं पातयत्यौषधादिभिरित्येवंशीला गर्भपातिनी तस्याः। योषितः–स्त्रियाश्च। सङ्गो न कर्तव्यः। तथा तस्याः स्पर्शश्च न कार्यः। तत्सङ्गस्य व्यभिचारहेतुत्वात्तत्स्पर्शस्य सांसर्गिकपापहेतुत्वाच्चेति भावः। तथा नृणां–पुरुषाणां सम्बन्धिन्यः शृङ्गारवार्ताः–शृङ्गारो रसविशेषः सुरतं वा, तस्य वार्ताः–स्त्रीणां समीपेऽनुकीर्तनरूपा गोष्ठ्यः। क्वचित् न कार्याः। तथा ताः न श्रव्याश्च, तच्छ्रवणमपि न कर्तव्यम्। तत्कीर्तने तच्छ्रवणे वा मनःक्षोभसम्भवाद्ब्रह्मचर्यभङ्गापत्तेरिति भावः। अत्र प्रागुक्ता शङ्खस्मृतिरेव प्रमाणम् ॥ १७० ॥

निजेति। ताभिः। तारुण्ये–स्वतरुणावस्थायां। तरुणैः–यौवनावस्थायां वर्तमानैः। निजसम्बन्धिभिः–स्वासन्नसम्बन्धिभिः। नरैः–पुम्भिः पितृभ्रात्रादिभिः। साकं–सहापि। रहसि–निर्जनस्थाने तु। आपदं–आपत्कालम्। अन्तरा–विना। न स्थेयम्। "तारुण्येन जगज्जेतुं वातेनेद्ध इवानलः। शक्नोति सहसा कामो दुर्निवार्यो हि साधनैः॥ अतो न विजने स्थेयं तरुण्या तरुणेन च। अपि मात्रा सुतेनापि सत्यं वदति जैमिनिः॥" इति स्मृतेः ॥ १७१ ॥

---

यतो ब्रह्मचर्यविभ्रंशशङ्का तदखिलं परिहरणीयमित्याह—सङ्ग इत्यादिना। गर्भपातनशीलानामसतीनां सङ्गः सुदूरे परिहरणीयः, अकामतोऽपि तत्स्पर्शोऽशुचिरिति परिहरणीयो नाम। पतिता हि स्पर्शमात्रेणापि दूषयन्ति। यानि पुनः शृङ्गारचरितानि तानि न कीर्तनीयानि नापि श्रोतव्यानि। नृणामिति स्त्रीणामप्युपलक्षकम्। अनपगते तारुण्ये स्वासन्नसम्बन्धिभिः सहापि रहसि न स्थेयमन्यत्रापदः। तथाच वचनम्—"तारुण्येन जगज्जेतुं वातेनेद्ध इवानलः। शक्नोति सहसा कामो दुर्निवार्यो हि साधनैः॥ अतो न विजने स्थेयं तरुण्या

---

स्पर्शस्य परिहरणीयत्वे हेतुमाह—पतिता हीति। शृङ्गारवार्तामात्रस्य विक्षोभकत्वेऽविशिष्टे नृणामिति विशेषनिर्देशोऽनुचित इत्याशङ्कां परिहरन्नाह—स्त्रीणामप्युपलक्षकमिति। पौनरुक्त्यमाशङ्क्य

नेति । ताभिरित्याकृष्यते । होलायां–होलिकायां निमित्तभूतायां, खेलनं–परस्परं रङ्गगुलालप्रक्षेपादिभिः क्रीडनम् । न कार्यम् । तथा भूपादेः–भूपा हैमाद्यलङ्काराः, आदिशब्देन कुङ्कुमकज्जलादिसौभाग्यद्रव्यग्रहणं, तस्य धारणं च न कार्यम् । कर्हिचिदिति सर्वत्र सम्बध्यते । तथा धातवः–सुवर्णादयस्तेषां सूत्राणि–तन्तवस्तैर्युज्यत इति तथोक्तं यत्सूक्ष्मवस्त्रं कार्पासं कौशेयादि च, तदादिर्यस्य शङ्खवलयादेस्तस्य धारणं च न कर्तव्यम्, तस्य सधवास्त्रीविषयत्वात् । प्रमाणं तु प्रागेवोक्तम् ॥ १७२ ॥

तरुणेन च । अपि मात्रा सुतेनापि सत्यं वदति जैमिनिः ॥" इति । यदपि होलाखेलनं, तदर्थं सूक्ष्माम्बराणां सौवर्णादिसूत्रसङ्ग्रथनशोभिनां धारणं केयूरकङ्कणमेखलाद्याभूषणधारणं तदिदमखिलं त्याज्यं, सर्वेषामेषां चित्तविक्षोभहेतुतया ब्रह्मचर्यविभ्रंशापादकत्वात् । यद्यपि 'वेषो न धार्यस्ताभिश्च सुवासिन्याः स्त्रियास्तथे'त्यनेनैव भूषादिधारणनिषेधे प्राप्ते न भूषादेश्च धारणमिति पुनरुक्तं नाम । तथापि होलाखेलनशेषतया प्रसक्तस्यायं निषेधो दार्ढ्यायेति न क्षतिः ॥ १७० ॥ १७१ ॥ १७२ ॥

परिहरति—यद्यपीत्यादिना । सधवात्वलिङ्गभूतभूषाविशेषव्यतिरिक्तावलम्बितया वाऽपौनरुक्त्यं बोध्यम् ॥ १७० ॥ १७१ ॥ १७२ ॥

---

सधवाविधवाभिश्च न स्नातव्यं निरम्बरम् ।
स्वरजोदर्शनं स्त्रीभिर्गोपनीयं न सर्वथा ॥ १७३ ॥
मनुष्यं चांशुकादीनि नारी क्वापि रजस्वला ।
दिनत्रयं स्पृशेन्नैव स्नात्वा तुर्येऽह्नि सा स्पृशेत् ॥ १७४ ॥

उभयविधस्त्रीणां साधारणधर्मानाह—सधवेति द्वाभ्याम् । सधवाः–सभर्तृकाश्च, विधवाः–विभर्तृकाश्च, ताभिः स्त्रीभिः । निरम्बरं–निर्गतमम्बरं–वस्त्रं यस्मिन्कर्मणि यथा तथा, नग्नमित्यर्थः । न स्नातव्यं–स्नानं न कार्यम् । वरुणदेवताहेलनसम्भवादिति भावः । "यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलन"मिति भगवदुक्तेः । एतच्च पुरुषाणामपि निषिद्धमिति ज्ञेयं, न्यायसाम्यात् । "नग्नस्नानं नग्नशय्या मनुजानां विगर्हित"मिति सुव्रतोक्तेः । "गोखरोष्ट्रं न रोहेच्च न गच्छेच्च दिवा स्त्रियम् । स्नानं चङ्क्रमणं स्वप्नं दिग्वासा न समाचरे"दिति

सामान्यतः । स्त्रियोऽधिकृत्याह—सधवेति । सभर्तृकाभिरभर्तृकाभिर्वा नारीभि-

वसिष्ठस्मृतेश्च । "दिवा तु मैथुनं कृत्वा नग्नः स्नात्वा तथाम्भसि । नग्नां परस्त्रियं दृष्ट्वा दिनमेकमभोजन"मिति शङ्खस्मृतेश्च ।

तथा—सर्वाभिरपि स्त्रीभिः । स्वरजोदर्शनं—इन्द्रब्रह्महत्यातुरीयांशग्रहणात्प्रतिमासं जायमानं स्वासां रजोदर्शनम् । सर्वथा न गोपनीयम् । जाते तस्मिन् गृहकार्ये न प्रवर्तितव्यमित्यर्थः । तत्संसर्गेणान्येषामपि ब्रह्महत्यांशसम्बन्धापत्तेरिति भावः । तदुक्तं श्रीभागवते—"शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः । रजोरूपेण तास्वंहो मासि मासि प्रदृश्यते" इति । गृहभाण्डादिस्पर्शदोषजनितभूयेनर्थापत्तिस्तु लोकशास्त्रप्रसिद्धऋषिपञ्चमीव्रतकथायां द्रष्टव्या ॥ १७३ ॥

किञ्च—मनुष्यमिति । रजोऽस्या अस्तीति रजस्वला । मनुष्यं न स्पृशेत् । पश्वादिस्पर्शे तु न दोषः । तथा—अंशुकं—वस्त्रमादिर्येषां मृद्भाण्डादीनां तानि । क्वापि—कदाचिदपि । दिनत्रयं—त्रीण्यहोरात्राणि । दिनशब्दोऽत्र "दशाहं शावमाशौच"मित्यादिवदहोरात्रपरः । अत्यन्तसंयोगे द्वितीया । नैव स्पृशेत्—बुद्धिपूर्वकं तत्स्पर्शं नैव कुर्यात् । सा—रजस्वला । तुर्ये—चतुर्णां सङ्ख्यापूरणं तुर्यं तस्मिन् । अह्नि—दिवसे । स्नात्वा—स्वस्पृष्टवासःप्रक्षालनपूर्वकं शिरःस्नानं कृत्वा । स्पृशेत् । गृहभाण्डादीति शेषः । "प्रथमेऽहनि चण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यती"ति भविष्योत्तरोक्तेः । रजस्वलाधर्मश्चोक्तो विष्णुधर्मोत्तरे—"आहारं गोरसानां च पुष्पालङ्कारधारणम् । अञ्जनं कुङ्कुमं गन्धं पीठं शय्याधिरोहणम् । अग्निसंस्पर्शनं चैव वर्जयेत्सा दिनत्रय"मिति । दक्षश्चाह—"अभ्यङ्गं वर्जयेत्सा च प्रवासं दन्तधावनम् । न कुर्यात्सा-तवा स्नानं ताम्बूलाशं दिवास्वपि" मिति । अत्रैतावान्विशेषः—रात्रौ रजोदर्शने रात्रिं त्रिभागां कृत्वा आद्यभागद्वये चेत्पूर्वं दिनं ग्राह्यं, परतस्तूत्तरमिति मिताक्षरायाम् । यत्तु "प्रागर्धरात्रात्प्राग्वा सूर्योदयात्पूर्वं दिन"मिति स्मृत्यन्तरं तत्र देशाचाराद्व्यवस्थेति निर्णयसिन्धुः । तथा—सप्तदशदिनमध्ये पुना रजोदर्शने स्नानमात्रम्, अष्टादशे एकरात्रम्, ऊनविंशे द्व्यहः, विंशतिप्रभृतिषु त्रिरात्रमि-

नग्नीभूय न स्नातव्यम् । स्मर्यते च—"परनिपाते न स्नानमाचरेत् न नग्नः" "न तीर्थे ह्याकुले स्नायान्नासज्जनसमाश्रिते । दर्भहीनोऽन्यचित्तस्तु न नग्नो न शिरो विना । नग्नस्नानं नग्नशय्या मनुजानां विगर्हितम्" इति । यद्यपीह स्मर्यते पुरुषानधिकृत्य । तथापि न्यायसाम्याद्दिवसनस्नान-

स्यपि तत एव ज्ञेयम् । तथा रजस्वलाया रजस्वलान्तरस्पर्शेऽकामतः स्नानं कामतस्तूपवासः पञ्चगव्याशनं चेत्यपि तत्रैवोक्तम् । पराशरस्मृतौ तु "उदक्या ब्राह्मणी स्पृष्टा क्षत्रियाण्याप्युदक्यया । अर्धकृच्छ्रं चरेत्पूर्वा तदर्धमपरा चरे"दित्यादिविशेष उक्तः । अन्यासां स्त्रीणां पुरुषाणां च रजस्वलास्पर्शे सचैलं स्नानमुक्तं गौतमेन—"पतितचण्डालसूतिकोदक्याशवतत्स्पृष्टिस्पर्शने क्षुरकर्मणि मैथुने कटधूमाघ्राणादौ च सचैलमुदकोपस्पर्शनाच्छुध्ये"दिति । रजास्वलायाः स्नानदिने ज्वराद्यार्तौ तु निर्णयसिन्धावुशना आह—"ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा ॥ चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥ दश द्वादशकृत्वा वा आचामेच्च पुनः पुनः । अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा ॥" इति । इयं च शुद्धिरीतिरातुरमात्रेऽपि ज्ञेयेति पराशरः । रजोदर्शनानन्तरं दिनत्रयमध्ये व्रतोपवासप्राप्तौ तूक्तं मदनपारिजाते मात्स्ये—"अन्तरा तु रजोयोगे पूजामन्येन कारयेत्। उपवासं स्वयं कुर्याद्व्रताहेषु रजस्वले"ति । आपत्काले त्वाह पराशरः—"विवाहोत्सवयज्ञेषु दुर्भिक्षे देशविप्लवे । पलायने रणेऽरण्ये सोपवासेन शुध्यती"ति ॥ १७४ ॥

---

निषेधः स्त्रीणां साधारणो बोध्यः । विवसनस्नानतो व्रतलोपश्चोक्तो भागवते—"यूयं विवस्त्रा यदपो धृतव्रता व्यगाहतैतत्तदु देवहेलनम्" इति । रजोदर्शननिमित्ताशौचस्य न कदाप्यपह्नवः कार्य इत्याह—स्वेति । स्वस्या यद्रजो मासि मासि तस्य दर्शनं सर्वथा न गोपनीयम्–महत्यामप्यापदि न गोपनीयम् । रजस्वलायाः दिनत्रयमस्पृश्यत्वं चतुर्थेऽहनि शुद्धिं चाह—मनुष्यमिति । रजस्वला नारी दिनत्रयं मनुष्यमंशुकादीनि च न स्पृशेत् । आदिशब्दाद्भाण्डादिपरिग्रहः । रजस्वला हि दिनत्रयमस्पृश्या स्मर्यते—"प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी । तृतीये रजकी प्रोक्ते"ति । चतुर्थेऽहनि स्नाता शुध्यति, तत्र तदाऽस्पृश्यत्वदोष इत्याह—स्नात्वेति । तथाच वचनम्—"चतुर्थेऽहनि शुध्यति" "स्नाता रजस्वला या तु चतुर्थेऽहनि ध्यति" इति ॥ १७३ ॥ १७४ ॥

---

सर्वधैलस्य भावमाह—महत्यामप्यापदीति ॥ १७३ ॥ १७४ ॥

**नैष्ठिकव्रतवन्तो ये वर्णिनो मदुपाश्रयाः।**
**तैः स्पृश्या न स्त्रियो भाष्या न न वीक्ष्याश्च ता धिया ॥१७५॥**

ब्रह्मचारिणां विशेषधर्मानाह—नैष्ठिकेत्यादिभिस्त्रयोदशभिः। मदुपाश्रयाः—मच्छिष्याः। ये। निष्ठा—देहान्तो विद्यतेऽवधित्वेन यस्य तन्नैष्ठिकं, तच्च तद्व्रतं—ऊर्ध्वमन्थित्वलक्षणो नियमः, तदस्त्येषामिति नैष्ठिकव्रतवन्तः, यावज्जीवमूर्ध्वरेतसः। वर्णः—प्रशस्तिर्विद्यते येषामिति वर्णिनो ब्रह्मचारिणः। "वर्णाद्ब्रह्मचारिणी"-तीनिप्रत्ययः। "वर्णो द्विजादिशुक्लादियशोगुणकथासु च। स्तुतौ ना न स्त्रियां भेदरूपाक्षरविलेपन" इति मेदिनी। "अष्टविधमैथुनाभावजन्ययशः प्रशस्ति"रिति घण्टापथे मल्लिनाथः। अष्टविधमैथुनस्वरूपमुक्तमग्निपुराणे—"श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। सङ्कल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च॥ एतन्मैथुन-मष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षण"मिति। तैः। स्त्रियः—मानुष्यः सर्वा अपि। धिया—बुद्धिपूर्वकम्। न स्पृश्याः। तथा ताः—स्त्रियः। न भाष्याः—ताभिः सह भाषणमपि न कर्तव्यम्। धियेति सर्वत्रान्वेति। तथा ताः न वीक्ष्याश्च—विशेषेण कामभावान्नेक्षणीयाः। "स्त्रीणां निरीक्षणं स्पर्श संलापक्ष्वे-लनादिकम्। प्राणिनो मिथुनीभूतानगृहस्थोऽग्रतस्त्यजे"दिति श्रीभागवतोक्तेः।

नन्वत्र स्त्रिय इति सामान्यतः सकलस्त्रीस्पर्शादिनिषेधे "मातुः समातु-र्गुर्व्यादेः स्पर्शदोषो न वर्णिन" इत्यादिस्मृतिभिर्विरोध इति चेन्न। तासामुपकुर्वा-णकविषयत्वात्। यद्वा—स्वमात्रादिमरणे भ्रात्रन्तराभावे सन्निधौ वर्तमानानां नैष्ठि-कानामपि तद्दाहादौ स्पर्शदोषाभावबोधनं तद्विषय इति। "ब्रह्मचारी न कुर्वीत

---

अथ नैष्ठिकानां नियमानाह—नैष्ठिकेति। यद्यपि कलौ दीर्घकालं ब्रह्मचर्यं निषिद्धं नाम। तथापि निषिद्धस्यापि संन्यासस्यापवादवचनेनैतदभ्यनुज्ञानस्यापि ज्ञापनादुभयत्रोर्ध्वरे-तस्त्वनियमसाम्यात्। वस्तुतो भगवत्सन्निधौ तु न कलेः पराक्रमः। निष्ठा—देहान्तोऽवधित्वेन यस्यास्ति तन्नैष्ठिकं व्रतं, तच्चोर्ध्वरेतस्त्वलक्षणम्, इदं हि व्रतं सर्वतः प्रशस्तं येषां ते नैष्ठिकव्र-तवन्तः। एतेन—कथमत्र मत्वर्थीयः प्रत्ययो न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थ-प्रत्यायक इति निषेधादित्यपास्तम्। प्राशस्त्यस्य बहुव्रीहितः प्रत्यायनासम्भवात्। अनित्यश्चायं

---

कलौ नैष्ठिकब्रह्मचर्यनिषेधमाशङ्क्य परिहृति—यद्यपीत्यादिना। ज्ञापनादिति न्यायसाम्यमेवो-पपादयति—उभयत्रेति। कलावपि विशेषमपवादमभिप्रेत्याह—भगवत्सन्निधाविति। प्रकटं पुरुषो-त्तममभिप्रेत्यैतत्। नैष्ठिकशब्दार्थमाह—निष्ठेति। एतेनेति। प्राशस्त्यार्थविवक्षणेन। कथमत्रेति। नैष्ठिकं व्रतं येषामिति बहुव्रीहितो विवक्षितार्थलाभान्मतुप्प्रत्ययानुपपत्तिरिति शङ्कितुराशयः। वर्णिन

शववाहादिकाः क्रियाः। स्नेहात्कस्यापि चेत्कुर्यात्पुनःसंस्कारमर्हती"ति त्रिंशच्छ्लोकीटीकायां देवलः। एतत्पित्राद्यतिरिक्तविषयमिति निर्णयसिन्धुः। तथा चाह मनुः—"आचार्यं स्वमुपाध्यायं मातरं पितरं गुरुम्। निर्हृत्यापि व्रती प्रेतं न व्रतेन वियुज्यते॥" इति। "मातापित्रोरुपाध्यायाचार्ययोरौर्ध्वदैहिकम्। कुर्वन्मातामहस्यापि व्रती न भ्रश्यते व्रता"दिति कालादर्शाच्च। यदा तु स्वगुरोरपि भार्याया अभिवादनकालेऽपि चरणस्पर्शोऽपि निषिद्धस्तदा किं पुनरितराङ्गनाङ्गस्पर्शो वक्तव्यम्। तथा चोक्तं स्कान्दकाशीखण्डे—"नाभिवाद्या गुरोः पत्नी स्पृष्ट्वाऽङ्घ्री ब्रह्मचारिणा। स्वभावश्चञ्चलः स्त्रीणां दोषः पुंसामतः स्मृतः॥ प्रमदासु प्रमाद्यन्ति क्वचिन्नैव विपश्चितः। विद्वांसमप्यविद्वांसं यतस्ता धर्षयन्त्यलम्॥" इति। वीक्षणादौ तु पुराणप्रसिद्धाम्बरीषतनयाकरमात्रदर्शनेन कामव्याकुलयोर्नारदपर्वतयोर्ब्रह्मचारिणोरपि मर्कटास्योपलब्ध्यादिरिव महानर्थप्राप्तिरित्यवसेयमिति दिक्॥ १७५॥

---

निषेधः। अनुव्रत इति भाष्यप्रयोगाज्ज्ञापकात्। नैष्ठिकं च व्रतमष्टाङ्गविधमैथुनाभावलक्षणमिति स्फुटयन्नाह—वर्णिन इति। वर्णः–अष्टाङ्गविधमैथुनाभावव्रतजन्ययशोलक्षणा प्रशस्तिर्येषां ते वर्णिनः। वर्णशब्दो यशस्यपि वर्तते। "वर्णाद्ब्रह्मचारिणी"तीनिप्रत्ययः। मदुपाश्रयाः–अहमेवोपाश्रय उपायतया उपेयतया च येषाम्। मुमुक्षव इत्येतत्। मुमुक्षया नैष्ठिकब्रह्मचर्यं ये चरन्तीत्युक्तं भवति। श्रूयते च ब्रह्मचर्यस्य मोक्षोपयोगिता—"यदिच्छन्तो ब्रह्मचर्यं चरन्ति" इति। तैः स्त्रियो न स्पृश्याः। एतेषामस्पृश्या नाम ताः। सम्मर्दे सत्यकामतो जायमानोऽपि स्पर्शः परिहरणीय इति यावत्। स्त्रिय इति सामान्यनिर्देशादासन्नानासन्नसम्बन्धभेदविचारोऽत्रानुपयुक्त इति व्यज्यते। नैष्ठिकस्य मुमुक्षोः स्त्रीस्पर्शमात्रस्य दूषणापादकत्वादिति भावः। नापि भाष्याः–यद्यप्यभ्यनुज्ञायते नाम भाषणं "यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु चे"ति वचनात्। तथापि नाल्पेऽर्थे तदभ्यनुज्ञा, अपि तु प्राणत्राणरूप एवेति भगवदाशयः। अत एव वक्ष्यति प्राणापद्यीत्यादिना। उपकुर्वाणस्यैवेयमभ्यनुज्ञेति न शङ्कावकाशोऽपि। न च वीक्ष्याः–पथि प्रसर्पतोऽनन्धस्य पुरतः समायान्ती स्त्री नयनपथे पतेदेव; तदुच्यते—धियेति। पथि यदि पतेत् स्त्री निमीलये नाम सहसा नयने, न तु केयमिति मतिपूर्वकं पुनरवलोकनीयेति भावः। अन्यथा कदाचिन्मनोविक्षोभप्रसक्त्या व्रतविलोपापत्तेरिति भावः॥१७५॥

---

इति निर्देशस्य प्रयोजनमाह—नैष्ठिकं चेति। स्फुटयन्निति। विशदयन्। अवबोधनमुपपादयति—वर्ण इति। षष्ठीतत्पुरुषभ्रमं व्यावर्तयन्व्याचष्टे—अहमेवेत्यादिना। उपायतया भवत्यर्थार्थिनामपि भगवदाश्रयणमतस्तद्व्यावर्तनायाह—उपेयतया चेति। उपायतयेत्यनेन च साधनान्तरनिष्ठा व्यावर्त्यन्ते। स्त्रीणां स्पर्शो न कार्य इत्यनुक्त्वा न स्पृश्या इत्युक्तेः स्वारस्यमाह—सम्मर्दे सतीति। अभ्यनुज्ञावचनविरोधमाशङ्क्य परिहरति—यद्यपीत्यादिना। पक्षान्तरेण समाधत्ते—उपकुर्वाणस्यैवेति। धियेत्यस्य प्रयोजननिरूपणपूर्वकं भावमाह—पथि प्रसर्पत इत्यादिना भाव इत्यन्तेन॥ १७५॥

---

१ अर्द्धार्थप्रलयस्तारसम्।

तासां वार्ता न कर्तव्या न श्रव्याश्च कदाचन।
तत्पादचारस्थानेषु न च स्नानादिकाः क्रियाः॥ १७६॥

किञ्च–तासामिति। तैरित्यन्वेति। कदाचन–क्वापि। तासां–स्त्रीणाम्। वार्ता–गुणागुणवर्णनलक्षणाश्च। न कर्तव्याः। "वर्जयेत्प्रमदागाथामगृहस्थो बृहद्व्रतः। इन्द्रियाणि प्रमाथीनि हरन्त्यपि यतेर्मनः॥" इति नारदोक्तेः। तथा ताः केनचित्क्रियमाणा न श्रव्या अपि। "योषितां न कथा श्रव्ये"त्यादिमोक्षधर्मोक्तेः। वार्ता इति कामशास्त्रस्याप्युपलक्षणम्। तथा चोक्तं मोक्षधर्मेष्वेव— "कामो बन्धनमेवैकं नान्यदस्तीह बन्धनम्। कामबन्धनमुक्तो हि ब्रह्मभूयाय कल्पते॥ एवं यो वेद कामस्य केवलस्य निवर्तनम्। बन्धत्वं कामशास्त्रस्य स दुःखान्यतिवर्तते॥" इति। तथा–तत्पादचारस्थानेषु–तासां स्त्रीणां पादचारः– मुहुर्गमनागमने येषु तेषु स्थानेषु च। स्नानादिकाः क्रियाः न कर्तव्याः। आदि-शब्दो मलमूत्रोत्सर्गादिक्रियान्तरसङ्ग्रहणार्थः। तत्स्थानेष्वपि स्त्रीस्मरणापत्तेः सर्वथा स्त्रीप्रसङ्गः परिहार्य इत्याशयः॥ १७६॥

---

एवं स्त्रीणां वीक्षणभाषणादिकमपरोक्षव्यापारं प्रतिषिध्य परोक्षमपि तद्वार्ताश्रवणादि प्रतिषेधति—तासामिति। मनोविक्षोभे द्वयोरविशेषात्स्त्रीविषयिणीं वार्तां न कुर्यात् नापि शृणुयात्। किं बहुना–तत्पादमूललग्ननूपुरध्वनिमात्रमपि न श्रोतव्यमित्यभिप्रयन्नाह— तत्पादचारेति। यस्मिन्स्थाने तासां पादचारस्तासकृत्प्रसङ्गस्तत्र स्थाने वैदिकं लौकिकं वा कर्म किमपि न कर्तव्यं, हठादसकृदापतन्तः श्रवणपथे स्वयमनर्था ध्वनिमात्रभूता अपि तत्पादनूपुरशब्दाः कथमपि तासां सम्बन्धमात्रेण कार्यान्तरप्रसक्तस्यापि मनः क्षोभयेयुरेवेति भावः। एतेन साक्षात्तत्प्रवृत्तिपराणां वचनानामश्रोतव्यत्वे किमु वक्तव्यमिति व्यज्यते॥ १७६॥

---

द्वयोः–श्रवणकीर्तनयोः। पूर्वार्धोपष्टम्भकतामुत्तरार्धस्याभिप्रेत्य व्याचष्टे—किं बहुनेति॥१७६॥

**देवताप्रतिमां हित्वा लेख्या काष्ठादिजाऽपि वा ।**
**न योषित्प्रतिमा स्पृश्या न वीक्ष्या बुद्धिपूर्वकम् ॥१७७॥**

देवतेति । तैः । देवतायाः—लक्ष्म्यादेः, प्रतिमा—मूर्तिस्ताम् । हित्वा—त्यक्त्वा, तदितरेत्यर्थः । लेखनं लेखस्तेन निर्वृता लेख्या—चित्रमयी । वा—अथवा । काष्ठादिजा—काष्ठं—दारु तदादिर्येषां धातुपाषाणादीनां तेभ्यो जाता, तन्मयीत्यर्थः । योषित्प्रतिमा—स्त्रीप्रतिकृतिः । बुद्धिः—ज्ञानं पूर्वा यस्मिन्कर्मणि यथा तथा, ज्ञात्वेत्यर्थः । न स्पृश्या न च वीक्ष्याऽपि । "आलेख्यामपि नो वीक्षेत्स्त्रियं रागेण कुत्रचि"दित्यादि नारदपञ्चरात्रोक्तेः । "पदाऽपि युवतिं भिक्षुर्न स्पृशेद्दारवीमपी"ति श्रीभागवतोक्तेश्च ॥ १७७ ॥

---

प्रतिमाया अपि स्त्रीरूपाया वीक्षणादि त्याज्यमित्याह—देवताप्रतिमामिति । अत्र रागपूर्वकमित्यनुक्त्वा बुद्धिपूर्वकमित्युक्तेर्विना योषिति रागं शिल्पनैपुणावलोकनपरतयाऽपि न योषित्प्रतिमा वीक्ष्या इति ज्ञाप्यते । ननु राधादिदेवताप्रतिमाया अप्यवीक्ष्यत्वप्रसङ्ग इत्यत आह—देवताप्रतिमां हित्वेति ॥ १७७ ॥

---

बुद्धिपूर्वकमित्यस्य भावमाह—अत्रेति ॥ १७७ ॥

---

**न स्त्रीप्रतिकृतिः कार्या न स्पृश्यं योषितोंऽशुकम् ।**
**न वीक्ष्यं मैथुनपरं प्राणिमात्रं च तैर्धिया ॥ १७८ ॥**

नेति । तैः—वर्णिभिः । स्त्रीप्रतिकृतिः—स्त्रियाः प्रतिमा । न कार्या—स्वयं न निर्मातव्या । अत्रापि देवताप्रतिमां हित्वेति ज्ञेयम् । तथा—योषितः—स्त्रियाः । अंशुकं—तत्परिहितं वस्त्रं च । धिया—बुद्धिपूर्वकम् । न स्पृश्यम् । अत्र वस्त्रनिषेधो धौतार्द्रधौतशुष्कनवीनापरिहितवस्त्रेतरवस्त्रविषय इति धर्मोपदेशादेरवगन्त-

---

स्वयं स्त्रीप्रतिमां न कुर्यादित्याह—न स्त्रीति । स्त्रीप्रतिकृतिः—स्त्रीप्रतिमा, न कार्या । यद्यप्ययं निषेधो योषित्प्रतिमावीक्षणादिनिषेधेनैव सिद्धः । तथापि दार्ढ्यायोक्तिः । अत्रापि देवताप्रतिमां हित्वेत्यनुषज्यते । यदपि ताभिः परिधृतं वसनं न तत्स्पृश्यमित्याह—न स्पृश्यमिति । तत्स्पर्शस्याशुचित्वापादकत्वाद्विषयानुषङ्गहेतुत्वाच । बुद्धिपूर्वकमित्यनुषज्यते । मानुष्यस्तत्प्रति-

---

पौनरुक्त्यमाशङ्क्य परिहरति—यद्यप्ययमिति । देवताप्रतिमाया अप्यकार्यत्वप्रसङ्गं परिहरन्नाह—देवताप्रतिमां हित्वेत्यनुषज्यत इति । अबुद्धिपूर्वकतत्स्पर्शप्रसङ्गेऽदोषमभिप्रेत्याह—बुद्धिपूर्वकमि-

व्यम् । तथा—मैथुनपरं—ग्राम्यधर्मप्रसक्तम् । प्राणिमात्रं—पशुपक्ष्याद्यपि । धिया न वीक्ष्यं—सादरं नेक्षणीयम् । प्रागुक्तश्रीभागवतवाक्यात् ॥ १७८ ॥

---

कृतयश्चानवलोकनीया इत्युक्तम् । अथ प्राणिमात्रे मैथुनमनवलोकनीयमित्याह—न वीक्ष्यमिति तैः—ब्रह्मचर्यव्रतनिष्ठैः, धिया न वीक्ष्यं—धिया तद्वीक्षणं हि रागकलङ्कोदयाय ॥ १७८ ॥

---

त्सनुपज्यत इति । पूर्वश्लोकतः समाकर्षादेतच्छ्लोकस्थस्य धियेत्यस्य सम्बन्धः समुचितः । वृत्तेनावलोकनप्रतिषेधेन सङ्गतिमाह—मानुष्य इति ॥ १७८ ॥

---

**न स्पृश्यो नेक्षणीयश्च नारीवेषधरः पुमान् ।**
**न कार्यं स्त्रीः समुद्दिश्य भगवद्गुणकीर्तनम् ॥ १७९ ॥**

न स्पृश्य इति । तैरिति सम्बध्यते । धरतीति धरः, पचाद्यच्, नार्याः—सधवाया विधवाया वा स्त्रियाः, वेषः—नेपथ्यं नारीवेषस्तस्य धरः—धर्ता । पुमान्—पुरुषो भ्रूकुंसोऽन्यो वा तादृशः कश्चित् । न स्पृश्यो न चेक्षणीयोऽपि । तद्दर्शनादेरपि स्त्रीभावस्फूर्तिहेतुत्वादिति भावः । तथा—स्त्रीः समुद्दिश्य, किञ्चिद्दूरस्थाः स्त्रियोऽपि शृण्वन्त्वित्याशयेन पुरुषान्प्रत्यपीत्यर्थः । भगवतो गुणानां कीर्तनम् । न कार्यम् । तथाविधकीर्तने हि मनसि स्त्रीस्मरणसम्भवे स्वनैष्ठिकव्रतदूषणापत्तेरिति भावः ॥ १७९ ॥

---

अर्थतः प्रतिषिद्धमपि शब्दतः प्रतिषिध्यते दार्ढ्याय—न स्पृश्य इति । धियेत्येतदनुपज्यते । यत्तु—भगवद्गुणकीर्तनं पवित्राणां पवित्रं तन्मङ्गलानां च मङ्गलम् । तथापि तत्स्त्रीः समुद्दिश्य तैर्न कार्यमित्याह—न कार्यमिति । प्रमदा ह्यग्निशिखेवाकामतः स्पृश्यमाना न किं दहति सा । अयं शुद्धभावेन प्रवृत्तोऽपि ताः शुद्धभावेन शृण्वन्त्योऽपि विषयेन्द्रियस्वभावयोरनपोह्यत्वाद्येन केनापि प्रकारेण सति सान्निध्ये भवेदेव विकृतिः । तथा चावधृतब्रह्मचर्यव्रतभङ्गः स्यादेव । अत एव स्मर्यते—"बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।" "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥" इति । स्त्रीः समुद्दिश्येति सामान्यतो निर्देशाद्दृष्टिपथे वा स्युरन्यत्र वा न ता उद्दिश्य कीर्तयेत्, मिथःस्नेहानुषङ्गस्यावश्यं सम्भवादिति व्यज्यते ॥ १७९ ॥

---

पौनरुक्त्यशङ्कां परिहरन्नवतारयति—अर्थत इति । स्त्रीणामभाष्यत्वनिरूपणात्, स्त्रीप्रतिमानामप्यवीक्ष्यत्वनिरूपणाच्च लिङ्गादिति भावः । अनुपज्यत इति । धिया न स्पृश्यो नेक्षणीयश्चेति सम्बन्धो बोध्यः । भगवद्गुणकीर्तनस्य सर्वपावनस्य स्त्रीः समुद्दिश्य करणे कोऽनर्थ इत्यत आह—प्रमदा हीत्यादिना । स्त्री विलोक्येत्यनुक्त्वा स्त्रीः समुद्दिश्येत्युक्तेः स्वारस्यमाह—स्त्रीः समुद्दिश्येति ॥१७९॥

**देवताप्रतिमां हित्वा लेख्या काष्ठादिजाऽपि वा ।**
**न योषित्प्रतिमा स्पृश्या न वीक्ष्या बुद्धिपूर्वकम् ॥१७७॥**

देवतेति । तैः । देवतायाः—लक्ष्म्यादेः, प्रतिमा—मूर्तिस्ताम् । हित्वा—त्यक्त्वा, तदितरेत्यर्थः । लेखनं लेखस्तेन निर्वृता लेख्या—चित्रमयी । वा—अथवा । काष्ठादिजा—काष्ठं—दारु तदादिर्येषां धातुपाषाणादीनां तेभ्यो जाता, तन्मयीत्यर्थः । योषित्प्रतिमा—स्त्रीप्रतिकृतिः । बुद्धिः—ज्ञानं पूर्वा यस्मिन्कर्मणि यथा तथा, ज्ञात्वेत्यर्थः । न स्पृश्या न च वीक्ष्याऽपि । "आलेख्यामपि नो वीक्षेत्स्त्रियं रागेण कुत्रचि"दित्यादि नारदपञ्चरात्रोक्तेः । "पदाऽपि युवतिं भिक्षुर्न स्पृशेद्दारवीमपी"ति श्रीभागवतोक्तेश्च ॥ १७७ ॥

---

प्रतिमाया अपि स्त्रीरूपाया वीक्षणादि त्याज्यमित्याह—देवताप्रतिमामिति । अत्र रागपूर्वकमित्यनुक्त्वा बुद्धिपूर्वकमित्युक्तेर्विना योषिति रागं शिल्पनैपुणावलोकनपरतयाऽपि न योषित्प्रतिमा वीक्ष्या इति ज्ञाप्यते । ननु राधादिदेवताप्रतिमाया अप्यवीक्ष्यत्वप्रसङ्ग इत्यत आह—देवताप्रतिमां हित्वेति ॥ १७७ ॥

---

बुद्धिपूर्वकमित्यस्य भावमाह—अत्रेति ॥ १७७ ॥

---

**न स्त्रीप्रतिकृतिः कार्या न स्पृश्यं योषितोंऽशुकम् ।**
**न वीक्ष्यं मैथुनपरं प्राणिमात्रं च तैर्धिया ॥ १७८ ॥**

नेति । तैः—वर्णिभिः । स्त्रीप्रतिकृतिः—स्त्रियाः प्रतिमा । न कार्या—स्वयं न निर्मातव्या । अत्रापि देवताप्रतिमां हित्वेति ज्ञेयम् । तथा—योषितः—स्त्रियाः । अंशुकं—तत्परिहितं वस्त्रं च । धिया—बुद्धिपूर्वकम् । न स्पृश्यम् । अत्र वस्त्रनिषेधो धौतार्द्रधौतशुष्कनवीनापरिहितवस्त्रेतरवस्त्रविषय इति धर्मोपदेशादेरवगन्त-

---

स्वयं स्त्रीप्रतिमां न कुर्यादित्याह—न स्त्रीति । स्त्रीप्रतिकृतिः—स्त्रीप्रतिमा, न कार्या । यद्यप्ययं निषेधो योषित्प्रतिमावीक्षणादिनिषेधेनैव सिद्धः । तथापि दार्ढ्यायोक्तिः । अत्रापि देवताप्रतिमां हित्वेत्यनुषज्यते । यदपि ताभिः परिधृतं वसनं न तत्स्पृश्यमित्याह—न स्पृश्यमिति । तत्स्पर्शस्याशुचित्वापादकत्वाद्विषयानुषङ्गहेतुत्वाच्च । बुद्धिपूर्वकमित्यनुषज्यते । मानुष्यस्तत्प्रति-

---

पौनरुक्त्यमाशङ्क्य परिहरति—यद्यप्ययमिति । देवताप्रतिमाया अप्यकार्यत्वप्रसङ्गं परिहरन्नाह—देवताप्रतिमां हित्वेत्यनुषज्यत इति । अबुद्धिपूर्वकतत्स्पर्शप्रसङ्गेऽदोषमभिप्रेत्याह—बुद्धिपूर्वकमि-

व्यम् । तथा—मैथुनपरं—ग्राम्यधर्मप्रसक्तम् । प्राणिमात्रं—पशुपक्ष्याद्यपि । धिया न वीक्ष्यं—सादरं नेक्षणीयम् । प्रागुक्तश्रीभागवतवाक्यात् ॥ १७८ ॥

कृतयश्चानवलोकनीया इत्युक्तम् । अथ प्राणिमात्रे मैथुनमनवलोकनीयमित्याह—न वीक्ष्यमिति तैः—ब्रह्मचर्यव्रतनिष्ठैः, धिया न वीक्ष्यं—धिया तद्वीक्षणं हि रागकलङ्कोदयाय ॥ १७८ ॥

त्यनुपज्यत इति । पूर्वश्लोकतः समाकर्षादेतच्छ्लोकस्थस्य धियेत्यस्य सम्बन्धः समुचितः । वृत्तेनावलोकनप्रतिषेधेन सङ्गतिमाह—मानुष्य इति ॥ १७८ ॥

---

न स्पृश्यो नेक्षणीयश्च नारीवेषधरः पुमान् ।
न कार्यं स्त्रीः समुद्दिश्य भगवद्गुणकीर्तनम् ॥ १७९ ॥

न स्पृश्य इति । तैरिति सम्बध्यते । धरतीति धरः, पचाद्यच्, नार्याः—सधवाया विधवाया वा स्त्रियाः, वेषः—नेपथ्यं नारीवेषस्तस्य धरः—धर्ता । पुमान्—पुरुषो भ्रूकुंसोऽन्यो वा तादृशः कश्चित् । न स्पृश्यो न चेक्षणीयोऽपि । तद्दर्शनादेरपि स्त्रीभावस्फूर्तिहेतुत्वादिति भावः । तथा—स्त्रीः समुद्दिश्य, किञ्चिद्दूरस्थाः स्त्रियोऽपि शृण्वन्त्वित्याशयेन पुरुषान्प्रत्यपीत्यर्थः । भगवतो गुणानां कीर्तनम् । न कार्यम् । तथाविधकीर्तने हि मनसि स्त्रीस्मरणसम्भवे स्वनैष्ठिकव्रतदूषणापत्तेरिति भावः ॥ १७९ ॥

अर्थतः प्रतिषिद्धमपि शब्दतः प्रतिषिध्यते दार्ढ्याय—न स्पृश्य इति । धियेत्येतदनुषज्यते । यत्तु—भगवद्गुणकीर्तनं पवित्राणां पवित्रं तन्मङ्गलानां च मङ्गलम् । तथापि तत्स्त्रीः समुद्दिश्य तैर्न कार्यमित्याह—न कार्यमिति । प्रमदा ह्यग्निशिखेवाकामतः स्पृश्यमाना न किं दहति सा । अयं शुद्धभावेन प्रवृत्तोऽपि ताः शुद्धभावेन शृण्वन्त्योऽपि विषयेन्द्रियस्वभावयोरनपोह्यत्वाद्येन केनापि प्रकारेण सति सान्निध्ये भवेदेव विकृतिः । तथा चावधृतब्रह्मचर्यव्रतभङ्गः स्यादेव । अत एव स्मर्यते—"बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ।" "इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥" इति । स्त्रीः समुद्दिश्येति सामान्यतो निर्देशाद्दृष्टिपथे वा स्युरन्यत्र वा न ता उद्दिश्य कीर्तयेत्, मिथःस्नेहानुषङ्गस्यावश्यं सम्भवादिति व्यज्यते ॥ १७९ ॥

पौनरुक्त्यशङ्कां परिहरन्नवतारयति—अर्थत इति । स्त्रीणामभाष्यत्वनिरूपणात्, स्त्रीप्रतिमानामप्यवीक्ष्यत्वनिरूपणाच्च लिङ्गादिति भावः । अनुषज्यत इति । धिया न स्पृश्यो नेक्षणीयश्चेति सम्बन्धो बोध्यः । भगवद्गुणकीर्तनस्य सर्वपावनस्य स्त्रीः समुद्दिश्य करणे कोऽनर्थ इत्यत आह—प्रमदा हीत्यादिना । स्त्री विलोक्येत्यनुक्त्वा स्त्रीः समुद्दिश्येत्युक्तेः स्वारस्यमाह—स्त्रीः समुद्दिश्येति ॥ १७९ ॥

ब्रह्मचर्यव्रतत्यागपरं वाक्यं गुरोरपि ।
तैर्न मान्यं सदा स्थेयं धीरैस्तुष्टैरमानिभिः ॥ १८० ॥

"अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः । हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ॥" "सर्वथा पालनीयैव शिष्यैराज्ञा गुरोरिहे"त्यादिस्मृतिबलात्स्वब्रह्मचर्यव्रतभङ्गकृत्स्वगुरोरपि वाक्यं न मान्यमित्याह—ब्रह्मचर्येति । ब्रह्मचर्याख्यं व्रतं ब्रह्मचर्यव्रतम् । तल्लक्षणमुक्तं लैङ्गे—"मैथुनस्याप्रवृत्तिर्हि मनोवाक्कायकर्मणा । ब्रह्मचर्यमिति प्रोक्तं यतीनां ब्रह्मचारिणाम् । इह वैखानसानां च विदाराणां विशेषत"इति । तस्य त्यागः परः—उत्तमो विषयो यस्य तत् । स्वगुरोरपि वाक्यम् । तैः—वर्णिभिः । न मान्यं—न ग्राह्यम् । ब्रह्मवाक्यं सनकादिभिरिवेति भावः । गुरुवाक्यपालनबोधकस्मृतीनां व्रतोपवासादौ रोगप्रवासाद्यापदि सावकाशत्वान्न तद्बलेन बृहद्व्रतभङ्गः कर्तव्यः । तदुक्तं श्रीभागवते—"सनकं च सनन्दं च सनातनमथात्मभूः । सनत्कुमारं च मुनीन्निष्क्रियानूर्ध्वरेतसः ॥ तान् बभाषे स्वभूः पुत्रान्प्रजाः सृजत पुत्रकाः । तन्नैच्छन्मोक्षधर्माणो वासुदेवपरायणाः ॥" इति । स्कान्दे चोक्तम्—"प्रजाः सृजत चेत्यूचे तांस्तदा ते तु तद्वचः । न जगृहुर्नैष्ठिकेन्द्रास्तेभ्यश्चुक्रोध विश्वसृ"डिति । ब्रह्मचर्यस्यैव ब्रह्मप्राप्तिहेतुभूतसकलसाधनेषु मुख्यतमत्वादिति भावः । तथाहि छान्दोग्ये श्रूयते—"तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति । अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दत इति । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् । ब्रह्म-

---

यद्यप्यनुलङ्घनीयशासना नाम गुरवस्तथापि मनःशोधनायान्येन वा केनापि निमित्तेन यदि ते ब्रूयुः 'किं ते ब्रह्मचर्ये सङ्कल्पेन गृहमाविश दारान्गृहाणागृहीतदारस्य, ऋणादमुक्तस्य कः परो लोकः, "सर्वान्लोकाननृणोऽनुसञ्चरती"ति हि ब्राह्मणं, स्मृतिरपि–"ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत् । अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥" इति, तदनादरणीयं नाम गुरोरपि वचस्तैः, येषामूर्ध्वरेतस्त्वे सङ्कल्पो मुमुक्षया स्यात् । ऋणवचनं त्वविर-

---

भाववर्णनपूर्वकमवतारयति—यद्यपीत्यादिना । अस्यादेशस्य विशेषमितरेभ्योऽभिप्रेत्यायमादौ विस्तरः । तथापीत्यन्तं गुरोरपीति निर्देशस्याशयः । विज्ञाततत्त्वानां हितपराणां ब्रह्मचर्यव्रतप्रतिषेधे प्रवृत्तिः कथं स्यादिति शङ्कां परिहरन्नाह—मनःशोधनायेति । प्रतिषेधोऽपि गुरूणामनुल्लङ्घितधर्ममार्ग इत्येतत्प्रदर्शयति–किं त इत्यादिना । एतेन–उल्लङ्घितधर्ममार्गस्य वचनस्य गुरुष्वसम्भवात्प्रतिषेधो गुरूणामनुपपन्न इत्याशङ्का परास्ता । वचनविरोधं परिहरति—ऋणवचनं त्विति । मुख्यार्थे बाधमभिप्रेत्य

चर्येण ह्येवेष्ट्वाऽऽत्मानमनुविन्दत"इत्यादि । तथा—"एतत्तद्यदाहुरेकशतं ह वै वर्षाणि मघवान्प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाचे"त्यादि च । मोक्षधर्मेषु चोक्तम्—"यदिदं ब्रह्मणो रूपं ब्रह्मचर्यमिति स्मृतम् । परं तत्सर्वधर्मेभ्यस्तेन याति परां गति"मित्यादि । सनत्सुजातीये च—"नैतद्ब्रह्म त्वरमाणेन लभ्यं यन्मां पृच्छन्नतिहृष्यस्यतीव । बुद्धौ विलीने मनसि प्रचिन्त्या विद्या हि सा ब्रह्मचर्येण लभ्ये"ति । श्रीमद्भगवद्गीतासु च—"यदिच्छन्तो ब्रह्मचर्यं चरन्ती"त्यादि । पाद्मे सृष्टिखण्डे च—"ब्रह्मयोनौ प्रसूतस्य ब्राह्मणस्यात्मवर्तिनः । ब्रह्मचर्यं सुचरितं ब्रह्मणापि सुरालये ॥ ब्रह्मचर्याद्ब्राह्मणस्य ब्राह्मणत्वं विधीयते । एवमाहुः परे लोके ब्रह्मचर्यविदो जनाः ॥ ब्रह्मचर्ये स्थितो धर्मो ब्रह्मचर्ये स्थितं तपः । ये स्थिता ब्रह्मचर्ये तु ब्राह्मणास्ते दिवि स्थिताः ॥ नास्ति योगं विना सिद्धिर्नास्ति सिद्धिं विना यशः । यशस्तपो विना नास्ति ब्रह्मचर्यात्परं न तत् ॥ यो निगृह्येन्द्रियग्रामं भूतग्रामं च पञ्चकम् । ब्रह्मचर्यं समाधत्ते किमतः परमं तपः ॥" इत्यादि । अत्र ब्रह्मचर्यत्यागशब्देन स्त्र्यङ्गसङ्गो विशेषेण विवक्षितः, तस्यैवावकीर्णित्वदोषावहत्वेन सर्वथाननुष्ठेयत्वात् । अवकीर्णिनो हि प्रायश्चित्तगौरवं स्मर्यते । तथा चाह याज्ञवल्क्यः—"अवकीर्णी भवेद्गत्वा ब्रह्मचारी तु योषितम् । गर्दभं पशुमालभ्य नैर्ऋतं स विशुध्यती"ति । चरमधातोर्विसर्गोऽवकीर्णं तदस्यास्तीत्यवकीर्णी, नैर्ऋतं—निर्ऋतिदेवताकमिति मिताक्षरा । वसिष्ठश्चाह—"ब्रह्मचारी चेत्स्त्रियमुपेयादमावास्यायां रात्रावरण्ये चतुष्पथे लौकिकेऽग्नौ रक्षोदैवतं काणं गर्दभं पशु-

---

क्तविषयम् । अत एव श्रूयते—"एतद्ध स्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक" इति । सनकादयो हि प्रजासृष्टये समादिष्टाः स्वयम्भुवा प्रत्याचख्युस्तदादेशम् । तन्मुमुक्षुणाऽष्टाङ्गविधमैथुनाभावलक्षणब्रह्मचर्ये यः सङ्कल्पः स गुरुवचनेनापि न त्याज्य इत्यभिप्रायेणाह—ब्रह्मचर्येति । ब्रह्मचर्यस्याष्टाङ्गविधमैथुनाभावलक्षणस्य यद्व्रतं—नियमविशेषः, तस्य त्यागः—अस्वीकरणं, त्यागशब्दोऽत्रास्वीकारपरः, तत्परं वाक्यं गुरोरपि—जन्मना विद्यया वा गुरोरपि । तैः—मुमुक्षयोर्ध्वरेतस्त्वे कृतसङ्कल्पैः । न मान्यम्—नादरणीयम् । विषयधियां हि विनिर्दिष्टोऽन्यः पन्थाः । श्रूयते च ब्रह्मचर्यस्य

---

लक्ष्यार्थमाह त्यागशब्दस्य—अस्वीकरणमिति । वक्ष्यति बाधं स्वयमेव परव्याख्यानानावरणप्रसङ्गे । अन्यः पन्थाः—सर्वान्लोकाननृणोऽनुसञ्चरतीत्यादिना प्रदर्शितः । ब्रह्मचर्यस्य ततोऽत्यन्तवैलक्षण्यं परमपुरुषार्थसाधनत्वलक्षणातिशयं प्रमाणतोऽवगमयति—श्रूयते चेत्यादिना । त्यागशब्दस्य मुख्यार्थो-

मालभेत नैर्ऋतं वा चरुं निर्वपे"दिति । गौतमश्चाह—"तस्याजिनमूर्ध्ववालं परिधाय लोहितपात्रः सप्त गृहान्भैक्षं चरेत्कर्माचक्षाणः संवत्सरं वैश्यायामवकीर्णो द्वे वर्षे क्षत्रियायां ब्राह्मण्यां त्रीणि वर्षाणी"ति । अत्र वसिष्ठस्मृतौ गर्दभयाग-नैर्ऋतचरुनिर्वपणयोर्विकल्पो व्यवस्थित इति ज्ञेयम् । राजसतामसप्रकृतीनां गर्द-भयागः, सत्त्वप्रकृतीनां नैर्ऋतचरुनिर्वपणमिति शिष्टा आहुः । वस्तुतस्त्वहिं-साधर्मस्य मुख्यत्वात्कलौ तु नैर्ऋतचरुनिर्वपणमेव युक्तम् । विशेषो मिताक्षरा-देरवगन्तव्यः । एवमवकीर्णिनः प्रायश्चित्तगौरवस्मरणात्स्वगुरुवचनोल्लङ्घनेनापि चरमधातुनिग्रहलक्षणब्रह्मचर्यव्रतपालनमेव युक्तमिति निष्कर्षार्थः । कृत्यचिन्तामणौ गोभिलसूत्रे ब्रह्मचारिणः प्रैषोपदेशा अप्येवमेव भवन्ति । तथाहि—"आचार्या-धीनो भवान्यत्राधर्माचरणात्, क्रोधानृते वर्जय, मैथुनं वर्जय, उपरिशय्यां वर्जय, क्षुरकृत्यं वर्जय, मधुमांसे वर्जय, गोयुक्तारोहणं वर्जये"त्यादयः । इदं चावकी-र्णिप्रायश्चित्तं गुरुदारतत्समव्यतिरिक्तागम्यागमनविषयम्, तत्र तु गुरुतरप्रायश्चि-त्तस्य दर्शितत्वात् । न च लघुनाऽवकीर्णिव्रतेन द्वादशवर्षापनोद्यमहापातकदो-षनिर्हरणमुचितम् । न च ब्रह्मचारित्वोपाधिकं लघुप्रायश्चित्तविधानमिति युक्तम् । आश्रमान्तराणां द्वैगुण्यादिवृद्धेः प्रतिपादितत्वादिति मिताक्षरायामुक्तम् । स्त्रीसंयोगं विनापि करमन्थादिना रेतसः प्रयत्नोत्सर्गे दिवास्वप्ने वोत्सर्गे च नैर्ऋतयागमात्र-मुक्तं प्रायश्चित्तमयूखे मिताक्षरायां च वसिष्ठेन—"एतदेव रेतसः प्रयत्नो-त्सर्गे दिवास्वप्ने चे"ति । रात्रौ स्वप्ने रेतस उत्सर्गे तु मनुविष्णू आहतुः—

निःश्रेयससाधनता—"अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया । विद्ययाऽऽत्मानमन्विष्यादित्य-मभिजयन्ते ॥" "येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् । तेषामसौ विरजो ब्रह्मलोकः" "तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति" इति । स्तूयते च तद्ब्रह्मचर्यम्—"अथ यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दते । अथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येण ह्येवेष्ट्वाऽऽत्मा-नमनुविन्दते । अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते । अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत्, ब्रह्मचर्येण ह्यात्मानमनुविद्य मनुते । अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत्, एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानु-विन्दते । अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत्" इति । केचित्तु—त्यागशब्दो मुख्यार्थ

श्रयणपक्षमनूद्य प्रतिक्षिपति—केचिदित्यादिना । अयमुपदेशः किमुपकुर्वाणमधिकृत्य प्रवर्तते, उत

"स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः । स्नात्वा जपेत्स गायत्रीं नैष्ठिकोऽहरुपावसे"दिति । कामतस्तु त्रिरात्रमुपवास इति ज्ञेयम् । अयं च नैर्ऋतयागो गृहिणामप्येकादश्यादौ चान्द्रायणादौ च व्रते यज्ञदीक्षायां चातिदिष्टब्रह्मचर्ये रेतःस्कन्दन उक्तो मिताक्षरादावेवमेव व्रतान्तरेष्वपीत्यादिना । स्त्रीसङ्गं विनापि प्रयत्नाद्रेतउत्सर्गे तु मिताक्षरायां यम आह—"गृहस्थः कामतः कुर्याद्रेतसः स्कन्दनं भुवि । सहस्रं तु जपेद्देव्याः प्राणायामैस्त्रिभिः सहे"ति ।

किञ्च—तैः—वर्णिभिः । सदा—सर्वस्मिन्काल इति सर्वदा । धीरैः—धैर्ययुक्तैः । स्थेयं—भवितव्यमित्यर्थः । "विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीरा"इत्यभियुक्तोक्तेः । तुष्टैः—यदृच्छालब्धभैक्षादिभिः सन्तुष्टैः स्थेयं, न तु रसलौल्यादिना धनिकार्जवादि कर्तव्यमित्यर्थः । तथा चोक्तं श्रीभागवते—"यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते"इत्यादि । "असन्तुष्टा द्विजा नष्टा"इति नीतिशास्त्राच्च । तथा—मानः—अभिमानो विद्यते येषामिति मानिनः, न मानिनोऽमानिनस्तैस्तथाभूतैः स्थेयम् । निर्मानत्वस्य भगवत्पदप्राप्तिसाधनेष्वग्रगण्यत्वात् । तथा च श्रीभगवद्गीतायाम्—"निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनि-

---

एव, परिगृहीतस्य ब्रह्मचर्यव्रतस्य परित्यागपरं वाक्यं गुरोरपि न मान्यमिति व्याचक्षते । इदं तु नातीव रमणीयम्, इह हि नैष्ठिकस्य प्रसङ्गो न तूपकुर्वाणस्य । नैष्ठिकस्तु ब्रह्मचर्यव्रतं परित्यजन्पतेदेवाश्रमतः । तत्र च पातित्येन प्रायश्चित्तमपि । तथाच स्मर्यते—"आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते द्विजः । प्रायश्चित्तं न पश्यामि येन शुध्येत्स आत्महा ॥" इति । अवकीर्णिप्रायश्चित्तवचनं तूपकुर्वाणविषयम् । सूत्रकारश्चाह—"न चाधिकारिकमपि पतनानुमानात्तदयोगा"दिति । तदीदृशे पातित्ये गुरोरुपदेशस्तु सम्भावनापदं नार्हति । तदेवं ब्रह्मचर्ये प्रवृत्तैः सदा धीरैर्भाव्यम् । "इन्द्रियाणि प्रमाथीनि हरेयुः प्रसभं मनः" परितः प्रसर्पमानेष्वप्येषु यो हि न विकरोति स एव धीरः । तथा चोक्तम्—"विकारहेतौ सति विक्रियन्ते येषां न चेतांसि त एव धीराः" इति । स्थिरचित्तैर्भाव्यमित्येतत् । असति सन्तोषे मनःस्थैर्यं न स्यादत आह—सदा तुष्टैः स्थेयमिति । ये पुनरिन्द्रियप्रीणने प्रवृत्तास्तेषां तदसम्भवे शोकावकाशः स्यात्कदाचित्, यः पुनस्तन्निग्रहे प्रवृत्तः, न तस्य किमपि विषादस्थानं, विषयालाभस्तु

---

नैष्ठिकमिति विकल्प्य दूषयति, तत्र प्रथमे दूषणमाह—इदं त्विति । द्वितीये दूषणमाह—नैष्ठिकस्त्विति । धीरशब्दस्याशयमाह—इन्द्रियाणीत्यादिना । तुष्टैरित्येतत्प्रयोजनज्ञापनपूर्वकमवतारयति—असतीति । सदेत्यर्थसिद्धम् । नन्वलाभे विषयाणां स्यादेव शोकः तत्कथमसन्तुष्टैः स्थातुं शक्येतेत्य-

वृत्तकामाः। द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं त"दिति। विदुरनीतौ त्वभिमानस्य सर्वस्वापहारित्वमुक्तम्—"जरा रूपं हरते धैर्यमाशा मृत्युः प्राणान् धर्मचर्यामसूया। क्रोधः श्रियं शीलमनार्यसेवा ह्रियं कामः सर्वमेवाभिमान"इति ॥ १८० ॥

स्वाभिलषितनिग्रहानुकूलः। यः पुनः प्रीणनीयः स्वात्मा, स च स्वात्मनैव, स तु नित्यः सर्वदा सन्निहित एव, तदात्मनिष्ठायां प्रवृत्तैर्नैष्ठिकैः सन्तुष्टैरेव भाव्यमिति भावः। यावन्नापगच्छेद्देहाभिमानस्तावदिन्द्रियप्रीणनादुपरतिरपि न भवेदेव, अत आह—अमानिभिरिति। अपेतदेहात्माभिमानैर्भाव्यमित्यर्थः। अमानिभिः–गर्वरहितैः स्थेयमिति वाऽर्थः। आत्मात्मीयभ्रमस्त्याज्य इत्युक्तं भवति। गर्वोऽपि ह्याभिजात्यादिप्रयुक्त आत्मात्मीयभ्रममूलकः ॥१८०॥

त्राह—ये पुनरित्यादिना। सन्तुष्टैरेव भाव्यमिति न शोकावसर एषामिति भावः। अमानिभिरिरित्येतत्प्रयोजनज्ञापनपूर्वकमवतारयति—यावदित्यादिना। अर्थान्तरमाह—गर्वरहितैरिति। अर्थद्वयानुगतं भावमाह—आत्मात्मीयेति ॥ १८० ॥

स्वातिनैकट्यमायान्ती प्रसभं वनिता तु या।
निवारणीया साऽऽभाष्य तिरस्कृत्यापि वा द्रुतम् ॥१८१॥

क्वचिन्महापदि स्त्रीसंभाषणस्पर्शादौ दोषाभावमाह—स्वेति द्वाभ्याम्। या वनिता–स्वस्मिन् जातानुरागाऽनुदितरागा वा स्त्री। प्रसभं–बलात्कारेण। क्रियाविशेषणमेतत्। निकटमेव नैकट्यं, अत्यन्तं नैकट्यमतिनैकट्यं, स्वस्यातिनैकट्यं स्वातिनैकट्यं–स्वातिसमीपदेशम्। आयान्ती–आगच्छती। भवेदिति शेषः। सा तु स्त्री। आभाष्य–त्वमितो दूरं गच्छेत्यादि सम्भाषणं कृत्वा। एतावदुक्तेऽप्यनिर्गच्छन्ती चेत्तदा तिरस्कृत्यापि–परुषभाषणेन भर्त्सनं कृत्वापि। वाशब्दश्चकारार्थः, तेन जनाक्रोशादेः समुच्चयः। द्रुतं–शीघ्रम्। निवारणीया–निष्कास-

ननु–अस्पृश्याः स्त्रिय इत्युक्तं नाम, यथाऽऽदेशं परिह्रियते च तदङ्गस्पर्शः, यदि पथि बलात्कापि वनिता समीपतरदेश एव स्वस्याभिमुखमाव्रजेत्, असंत्यपसरणावसरे का गतिस्तदेत्यत्राह—स्वेति। प्रायः स्त्रियः स्वयमपसरेयुः पुरुषानभिमुखानुपलभ्य, लज्जा हि स्वाभाविकी तासाम्। या तु वनिताऽतथाभूता पथि समापतन्ती दूरादेव भगवन्नामोच्चारणहस्तचेष्टादिभिर्लिङ्गैर्बोध्यमानाऽपि प्रसभं बलात्स्वस्यातिनिकटदेशमागच्छेत्। अतिनिकटेत्यनेनापसरणानवसरो व्यज्यते। सा परित्यज्याप्यभाषणनियमं तिष्ठ दूरे, अपसरान्यत, इत्युक्त्वा भर्त्सना-

नीया, न तु तत्स्पर्शः कार्यः। तस्याष्टमब्रह्मचर्यखण्डनहेतुत्वादित्याशयः। "आत्मनः सर्वथा येन स्याद्दृढव्रतरक्षणम्। योगं तमेव कुर्वीत प्रयत्नेन पुमान्सुधी"रिति वायवीयोक्तेः। आपद्धर्मानुष्ठानानन्तरं सर्वत्रापि यथोचितप्रायश्चित्तं विधायैव ततः स्वमुख्यधर्मे स्थेयमिति सर्वस्मृतिसिद्धान्तः॥ १८१॥

दिना तिरस्कृत्यापि द्रुतं निवारणीयैव। वाकार एवार्थे। अङ्गस्पर्शो यथा न भवेत्तथा सपदि निवार्येत्याशयः॥ १८१॥

निवारणीयैवेति। ननु कस्यायमवधारणार्थ इत्यत आह—वाकार एवार्थ इति। एतेन विकल्पार्थत्वभ्रमोऽपास्तः। तथा सत्यपिशब्दार्थानन्वयात्। भर्त्सनाद्यपर्यवसाय्याभाषणमात्रस्य निवारणेऽनुपयोगात्॥ १८१॥

---

**प्राणापद्युपपन्नायां स्त्रीणां स्वेषां च वा क्वचित्।**
**तदा स्पृष्ट्वाऽपि तद्रक्षा कार्या सम्भाष्य ताश्च वा॥१८२॥**

प्राणापदीति। क्वचित्—गृहदाहजलाप्लवनशृङ्गिदंष्ट्र्याक्रमणमहारोगादौ। स्त्रीणां वा स्वेषां—आत्मनां च। प्राणापदि—प्राणानामापत्—आपत्तिकालस्तस्याम्। उपपन्नायां—प्राप्तायां सत्याम्। तदा—तस्मिन्नेव काले। ताः—स्त्रीः। स्पृष्ट्वा—तासां स्पर्शं कृत्वापि। तद्रक्षा—तासां प्राणापदं प्राप्तानां स्त्रीणां तथाभूतानां स्वेषां च रक्षा—रक्षणम्। कार्या—कर्तव्या। वा—अथवा। ताः—स्त्रीः। सम्भाष्य—ताभिः सह संभाषणं कृत्वा च, तत्र स्त्रीणामापदि "अत्रागाधं जलं भवति मा गच्छे"त्यादि, स्वेषामापदि "अत्र नद्यां कियज्जलं भवति, ब्रुडन्तं मां निष्कासये"त्यादि च देशकालोचितं यथोपयुक्तं च भाषणं कृत्वा। तद्रक्षा कार्या। "जीवन्नरो भद्रशतानि पश्यती"ति न्यायादिति भावः। स्त्रीस्पर्शादिजन्यस्वव्रतभङ्गदोषस्यैकाहोपवासाद्यल्पप्रायश्चित्तापनोद्यत्वान्म्रियमाणप्राण्युपेक्षणजन्यदोषस्य महापातकत्वाच्च कृपयैव यथा-

यदुक्तमसम्भाष्यत्वमस्पृश्यत्वं च तत्रापवादमाह—प्राणापद्युपपन्नायामिति। तद्रक्षा ताश्च ते च, ते, तेषां रक्षा। प्रसक्ते प्राणसंशये स्त्रियोऽसम्भाष्या अस्पृश्या इति नायं नियमः। यदि काचिदज्ञानात् ग्राहाकुलं ह्रदमाविशेदवगाहनाय उत्तरसरंसस्तूर्णं नो चेद्ग्राहा ग्रसेयुरित्याभाष्य रक्ष्या नाम सा। एवमगाधे जलाशये निमज्जन्तीमशरणां समुद्धरेद्धस्तावलम्बादि-

मूले—सम्भाष्य स्पृष्ट्वाऽपि वेत्यन्वयो बोध्यः। सम्भाषणेनापि परित्राणासम्भवे एव स्पर्शस्य प्रस-

वृत्तकामाः। द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं त”दिति। विदुरनीतौ त्वभिमानस्य सर्वस्वापहारित्वमुक्तम्—“जरा रूपं हरते धैर्यमाशा मृत्युः प्राणान् धर्मचर्यामसूया। क्रोधः श्रियं शीलमनार्यसेवा ह्रियं कामः सर्वमेवाभिमान”इति ॥ १८० ॥

---

स्वाभिलषितनिग्रहानुकूलः। यः पुनः प्रीणनीयः स्वात्मा, स च स्वात्मनैव, स तु नित्यः सर्वदा सन्निहित एव, तदात्मनिष्ठायां प्रवृत्तैर्नैष्ठिकैः सन्तुष्टैरेव भाव्यमिति भावः। यावन्नापगच्छेद्देहाभिमानस्तावदिन्द्रियप्रीणनादुपरतिरपि न भवेदेव, अत आह—अमानिभिरिति। अपेतदेहात्माभिमानैर्भाव्यमित्यर्थः। अमानिभिः—गर्वरहितैः स्थेयमिति वाऽर्थः। आत्मात्मीयभ्रमस्त्याज्य इत्युक्तं भवति। गर्वोऽपि ह्याभिजात्यादिप्रयुक्त आत्मात्मीयभ्रममूलकः ॥१८०॥

---

आह—ये पुनरित्यादिना। सन्तुष्टैरेव भाव्यमिति न शोकावसर एषामिति भावः। अमानिभिरित्येतत्प्रयोजनज्ञापनपूर्वकमवतारयति—यावदित्यादिना। अर्थान्तरमाह—गर्वरहितैरिति। अर्थद्वयानुगतं भावमाह—आत्मात्मीयेति ॥ १८० ॥

---

स्वातिनैकट्यमायान्ती प्रसभं वनिता तु या।
निवारणीया साऽऽभाष्य तिरस्कृत्यापि वा द्रुतम् ॥१८१॥

क्वचिन्महापदि स्त्रीसंभाषणस्पर्शादौ दोषाभावमाह—स्वेति द्वाभ्याम्। या वनिता—स्वस्मिन् जातानुरागाऽनुदितरागा वा स्त्री। प्रसभं—बलात्कारेण। क्रियाविशेषणमेतत्। निकटमेव नैकट्यं, अत्यन्तं नैकट्यमतिनैकट्यं, स्वस्यातिनैकट्यं स्वातिनैकट्यं—स्वातिसमीपदेशम्। आयान्ती—आगच्छती। भवेदिति शेषः। सा तु स्त्री। आभाष्य—त्वमितो दूरं गच्छेत्यादि सम्भाषणं कृत्वा। एतावदुक्तेऽप्यनिर्गच्छन्ती चेत्तदा तिरस्कृत्यापि—परुषभाषणेन भर्त्सनं कृत्वापि। वाशब्दश्चकारार्थः, तेन जनाक्रोशादेः समुच्चयः। द्रुतं—शीघ्रम्। निवारणीया—निष्कास-

---

ननु—अस्पृश्याः स्त्रिय इत्युक्तं नाम, यथाऽऽदेशं परिह्रियते च तदङ्गस्पर्शः, यदि पथि बलात्कापि वनिता समीपतरदेश एव स्वस्याभिमुखमाव्रजेत्, अशक्यापसरणावसरे का गतिस्तदेत्यत्राह—स्वेति। प्रायः स्त्रियः स्वयमपसरेयुः पुरुषानभिमुखानुपलभ्य, लज्जा हि स्वाभाविकी तासाम्। या तु वनिताऽतथाभूता पथि समापतन्ती दूरादेव भगवन्नामोच्चारणहस्तचेष्टादिभिर्लिङ्गैर्बोध्यमानाऽपि प्रसभं बलात्स्वस्यातिनिकटदेशमागच्छेत्। अतिनिकटेत्यनेनापसरणानवसरो व्यज्यते। सा परित्यज्याप्यभाषणनियमं तिष्ठ दूरे, अपसरान्यत, इत्युक्त्वा भर्त्सना-

नीया, न तु तत्स्पर्शः कार्यः। तस्याष्टमब्रह्मचर्यखण्डनहेतुत्वादित्याशयः। "आत्मनः सर्वथा येन स्याद्दृढव्रतरक्षणम्। योगं तमेव कुर्वीत प्रयत्नेन पुमान्सुधी"रिति वायवीयोक्तेः। आपद्धर्मानुष्ठानानन्तरं सर्वत्रापि यथोचितप्रायश्चित्तं विधायैव ततः स्वमुख्यधर्मे स्थेयमिति सर्वस्मृतिसिद्धान्तः ॥ १८१ ॥

दिना तिरस्कृत्यापि द्रुतं निवारणीयैव। वाकार एवार्थे। अङ्गस्पर्शो यथा न भवेत्तथा सपदि निवार्येत्याशयः ॥ १८१ ॥

निवारणीयैवेति। ननु कस्यायमवधारणार्थ इत्यत आह—वाकार एवार्थ इति। एतेन विकल्पार्थत्वभ्रमोऽपास्तः। तथा सत्यपिशब्दार्थानन्वयात्। भर्त्सनाद्यपर्यवसाय्याभाषणमात्रस्य निवारणेऽनुपयोगात् ॥ १८१ ॥

---

**प्राणापद्युपपन्नायां स्त्रीणां स्वेषां च वा क्वचित्।**
**तदा स्पृष्ट्वाऽपि तद्रक्षा कार्या संभाष्य ताश्च वा ॥१८२॥**

प्राणापदीति। क्वचित्—गृहदाहजलाप्लवनशृङ्गिदंष्ट्र्याक्रमणमहारोगादौ। स्त्रीणां वा स्वेषां—आत्मनां च। प्राणापदि—प्राणानामापत्—आपत्तिकालस्तस्याम्। उपपन्नायां—प्राप्तायां सत्याम्। तदा—तस्मिन्नेव काले। ताः—स्त्रीः। स्पृष्ट्वा—तासां स्पर्शं कृत्वापि। तद्रक्षा—तासां प्राणापदं प्राप्तानां स्त्रीणां तथाभूतानां स्वेषां च रक्षा—रक्षणम्। कार्या—कर्तव्या। वा—अथवा। ताः—स्त्रीः। सम्भाष्य—ताभिः सह संभाषणं कृत्वा च, तत्र स्त्रीणामापदि "अत्रागाधं जलं भवति मा गच्छे"त्यादि, स्वेषामापदि "अत्र नद्यां कियज्जलं भवति, ब्रुडन्तं मां निष्कासये"त्यादि च देशकालोचितं यथोपयुक्तं च भाषणं कृत्वा। तद्रक्षा कार्या। "जीवन्नरो भद्रशतानि पश्यती"ति न्यायादिति भावः। स्त्रीस्पर्शादिजन्यस्वव्रतभङ्गदोषस्यैकाहोपवासाद्यल्पप्रायश्चित्तापनोद्यत्वान्म्रियमाणप्राण्युपेक्षणजन्यदोषस्य महापातकत्वाच्च कृपयैव यथा-

यदुक्तमसम्भाष्यत्वमस्पृश्यत्वं च तत्रापवादमाह—प्राणापद्युपपन्नायामिति। तद्रक्षा ताश्च ते च, ते, तेषां रक्षा। प्रसक्ते प्राणसंशये स्त्रियोऽसम्भाष्या अस्पृश्या इति नायं नियमः। यदि काचिदज्ञानात् ग्राहाकुलं ह्रदमाविशेदवगाहनाय उत्तरसरंसस्तूर्णं नो चेद्ग्राहा ग्रसेयुरित्याभाष्य रक्ष्या नाम सा। एवमगाधे जलाशये निमज्जन्तीमशरणां समुद्धरेद्धस्तावलम्बादि-

मूले—सम्भाष्य स्पृष्ट्वाऽपि वेत्यन्वयो बोध्यः। सम्भाषणेनापि परित्राणासम्भवे एव स्पर्शस्य प्रस-

शक्ति जीवसंरक्षणं कर्तव्यमिति तात्पर्यम्। अभयदानस्य परमधर्मत्वमुक्तं श्रीभागवते—"सर्वे वेदाश्च यज्ञाश्च तपो दानानि चानघ!। जीवाभयप्रदानस्य न कुर्वीरन्कलामपी"ति। तथा—"मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम्। यद्यसौ न निवर्तेत नापराधोऽस्ति देहिन"इति च। "धर्मः परो जीवरक्षा ह्यधर्मस्तद्विपर्ययः। यथाशक्ति ततो धर्मं साधयेत्पुरुषः सुधी"रिति यमस्मरणाच्च। दानखण्डे विष्णुधर्मोत्तरे चोक्तम्—"ग्राह्यं प्राणप्रदानं तु ह्यस्पृश्यादपि देहिनः। जीवन्सर्वमवाप्नोति जीवन्धर्मं करोति च। शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नत"इति। भारते च—"महतामपि यज्ञानां कालेन क्षीयते फलम्। भीताभयप्रदानस्य क्षय एव न विद्यते॥" इति। वह्निपुराणे च—"एकतः क्रतवः सर्वे समाप्तवरदक्षिणाः। एकतो भयभीतस्य प्राणिनः प्राणरक्षण"मिति॥ १८२॥

---

दानेनापि। एवं स्वयं महति जलाशये निपतितोऽलब्धनिस्तरणोपायः स्त्रियमप्याकृष्य तद्धस्तावलम्बादिना आत्मा रक्ष्यो नाम। प्राणान् रक्षन् हि धर्मानुष्ठाने प्रभवतीत्याशयः। स्मर्यते च—"ग्राह्यं प्राणप्रदानं तु ह्यस्पृश्यादपि देहिनः। जीवन्सर्वमवाप्नोति जीवन्धर्मं करोति च॥ शरीरं धर्मसर्वस्वं रक्षणीयं प्रयत्नतः। महतामपि यज्ञानां कालेन क्षीयते फलम्॥ भीताभयप्रदानस्य क्षय एव न विद्यते।" इति॥ १८२॥

---

ज्ञात्। इममन्वयमभिप्रेत्य भाष्ये प्रथमं आभाष्य रक्ष्या नाम सेति व्याख्याय पश्चाद्व्याख्यातं हस्तावलम्बादिदानेनापीति॥ १८२॥

त्वात् । मनुयाज्ञवल्क्यौ क्वचिदापदि तु ब्राह्मणस्यापि शस्त्रधारणमाहतुः—"शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते"इति । चकारो लकुटादिसमुच्चयार्थः । किञ्च, तैः । विकृतः—लोकशास्त्रगर्हितः, बीभत्स इति यावत् । वेषो न धार्यः । शास्त्रोक्तः साच्छादनकौपीनकटिसूत्रादिलक्षण एव धार्य इत्यर्थः । तदधारणे तु प्रायश्चित्तं स्मर्यते । तथाहि—"शौचाचमनसन्ध्यावन्दनाग्निकार्यराहित्यशूद्रादिस्पर्शसाच्छादनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनाधारणदिवास्वापछत्रपादुकास्त्रग्विधारणोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याद्यभिरतौ पाषण्डादिसम्भाषणादौ च प्रायश्चित्ति"रिति । तत्रैतेषामाचाराणामेकैकस्य व्यभिचारे एकरात्रोपोषणमिति क्रतुना सामान्यतः प्रायश्चित्तमुक्तम् । विशेषस्तु धर्मशास्त्रादवगन्तव्यः । तथा—तैः । रसना—रसनेन्द्रियम् । जेतव्या । तज्जयस्य सकलेन्द्रियजयमूलत्वादिति भावः । "तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् । न जयेद्रसनं यावज्जितं सर्वं जिते रसे"इति श्रीभागवतोक्तेः ॥ १८३ ॥

---

योग्यमित्यभिप्रेत्याह—न धार्यं चायुधं तथेति । शमोपघातप्रसङ्गादिति भावः । यश्च स्मृत्याचारगर्हितो वेषः स न धार्य इत्याह—वेषो न विकृतो धार्य इति । अन्यथा प्रायश्चित्तीयत्वापातादिति भावः । स्मर्यते च कौपीनकटिसूत्रादिलक्षणब्रह्मचर्यवेषप्रच्युतौ प्रायश्चित्तम्—"शौचाचमनसन्ध्यावन्दनाग्निकार्यराहित्यशूद्रादिस्पर्शनसाच्छादनकौपीनकटिसूत्रयज्ञोपवीतमेखलादण्डाजिनाधारणदिवास्वापछत्रपादुकास्त्रग्विधारणोद्वर्तनानुलेपनाञ्जनद्यूतनृत्यगीतवाद्याद्यभिरतौ पाखण्डादिसम्भाषणादौ च प्रायश्चित्ति"रिति । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥" इति निःश्रेयसोपयोगितया श्रूयमाणाया आहारशुद्धे रसनेन्द्रियजयं विना दुर्घटत्वाद्रसनेन्द्रियजयस्यावश्यापेक्षिततामभिप्रयन्नाह—जेतव्या रसना च तैरिति । चस्त्वर्थे । अनेन रसनेन्द्रियगतं वैलक्षण्यमुच्यते । रसनायामजितायामन्येषामिन्द्रियाणां जयो हि दुर्लभः, जितायां त्वस्यामन्यानि सुखेन जय्यानि । तथाच वचनम्—"तावज्जितेन्द्रियो न स्याद्विजितान्येन्द्रियः पुमान् । न जयेद्रसनं यावज्जितं सर्वं जिते रसे ॥" इति ॥ १८३ ॥

---

को वेषो विकृतो यो न धार्यस्तं स्मृत्युपन्यासमुखेन विशदयति—स्मर्यते चेत्यादिना । रसनाजयस्यावश्यकत्वे निमित्तं प्रमाणतो ज्ञापयन्नवतारयति—आहारेत्यादिना । सामान्यत इन्द्रियजयस्य विधानमकृत्वा रसनेतिविशेषनिर्देशस्य किं प्रयोजनमित्याशङ्कां परिहरन्नर्थमाह—चस्त्वर्थे इति । विशेषमेवोपपादयति—अनेनेत्यादिना ॥ १८३ ॥

**परिवेषणकर्त्री स्याद्यत्र स्त्री विप्रवेश्मनि ।**
**न गम्यं तत्र भिक्षार्थं गन्तव्यमितरत्र तु ॥ १८४ ॥**

परिवेषणेति । यत्र–यस्मिन् । विप्रस्य–ब्राह्मणस्य वेश्म–गृहं तस्मिन् । स्त्री जातिः, कन्या तरुणी वृद्धा वा नारी । परिवेषणं–भोजनपात्रे भोजनीयपदार्थार्पणं तस्य कर्त्री स्यात् । तत्र–विप्रगृहे । भिक्षार्थं–भोजनार्थम् । अत्र "याञ्चाभिक्षार्थनार्दने"त्यमरोक्तेर्याञ्चापरपर्यायेण भिक्षाशब्देन तत्प्राप्तान्नं तेन च तद्भोजनं लक्ष्यते । शक्यार्थमात्रस्वीकारे परिवेषणादिपदवैयर्थ्यापत्तेः । यद्वा— "भिक्षा सेवाप्रार्थनयोर्भृतौ भिक्षितवस्तुनी"त्यनेकार्थसङ्ग्रहोक्तेः कर्मणि घञि साक्षात्सम्बन्ध एवेति । न गम्यं–न गन्तव्यम् । तद्दर्शनात्स्वब्रह्मचर्यव्रतभङ्गापत्तेः । तद्वेश्मेति कर्मार्थितो ज्ञेयम् । इतरत्र तु–यत्र पुरुषः परिवेषणकर्ता भवेत्तत्र त्वित्यर्थः । गन्तव्यं–गत्वा तत्र भोजनं कर्तव्यमित्यर्थः । अत्र विप्रवेश्मग्रहणं भिक्षाचरणे तत्प्राधान्यद्योतनार्थं पक्वान्नभिक्षार्थं चेति ज्ञेयम् । "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ"इति स्मृतेः । याज्ञवल्क्यश्चाह—"ब्राह्मणेषु चरेद्भैक्ष्यमनिन्द्येष्वात्मवृत्तये"इति । अनिन्द्येषु–अभिशस्तपतितवैडालवृत्तिबकवृत्त्यादिव्यतिरिक्तेषु स्वधर्मनिरतेषु भैक्ष्यं चरेदिति मिताक्षरा । आहारशुद्धेः सत्त्वशुद्धिहेतुत्वादिति भावः । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्ष"इति छान्दोग्यश्रुतेः । मोक्षधर्मेषु चोक्तम्—"विधिज्ञेभ्यो द्विजातिभ्यो ग्राह्यमन्नं विशिष्यते । आहारनियमेनास्य पाप्मा शाम्यति राजसः । वैमनस्यं च विषये यान्त्यस्य करणानि चे"ति । श्रीभागवते च—"वानप्रस्थाश्रमपदेष्वभीक्ष्णं भैक्षमाचरेत् । संसिद्ध्यत्याश्वसंमोहः शुद्धसत्त्वः शिलांधसे"ति । आपत्काले त्वाह मेधातिथिः—"ब्राह्मणक्षत्रियविशां मेध्यान्नभैक्षमाचरेत् । आद्यस्यासम्भवे तत्र ह्यादद्दीतोत्तरोत्तरा"दिति "चातुर्वर्ण्यं चरेद्भैक्ष्य"मिति च मिताक्षरायामापत्कालनिर्वाहिका स्मृतिः । तत्रामान्नभिक्षा सर्वत्र कार्या, पक्वान्नभिक्षा तु स्वधर्मस्थब्राह्मणगृहेष्वेवेति व्यवस्था । क्षत्रवैश्यजातीनां ब्रह्मचारिणां तु स्वधर्मस्थस्वजातीयगृहे स्वोत्तमजातीयगृहे च पक्वान्नभिक्षाचरणमप्यदुष्टमित्यन्यत्र विस्तरः । भिक्षा च रसलौल्यादिनैकस्यैव गृहे बहुवारं न कार्या, मधुकरवृत्तेरेव मुख्यत्वेन विधानात् । एकगृहे भोजनं स्वोदरपूर्त्यवध्यामान्नादानं वाऽऽपत्काल-

विषयमित्यवसेयम् । तथा चाह याज्ञवल्क्यः—"ब्रह्मचर्ये स्थितो नैकस्यान्नमद्यादनापदी"ति । "एकस्यान्नमनापन्नो भिक्षुर्भुञ्जीत न क्वचि"दिति धर्मविवेकोक्तेश्च ।

ननु—"दिवा निद्रां परान्नं च पुनर्भुक्तिं व्रती त्यजे"दित्यङ्गिरःस्मृतेर्ब्रह्मचर्यव्रतवतोऽपि कथं भैक्षाचरणमुपदिश्यत इति चेन्न । भैक्षस्य परान्नत्वाभावात् । तदाहात्रिः—"सोमपानसमा भिक्षा भिक्षान्नं न प्रतिग्रहः । परान्नं नैव भिक्षा स्यान्न तस्याः परपाकता । भिक्षा माधुकरी नाम सर्वपापप्रणाशनी । भिक्षाहारो निराहारः प्रोच्यते भिक्षुको नरः ॥" इति । नक्तात्परश्चोपवास उपवासादयाचितम् । अयाचितात्परं भैक्षं तस्माद्भैक्षेण वर्तये"दिति विश्वेश्वरपद्धतौ स्मृतेश्च । "भिक्षान्नं श्रोत्रियान्नं च हुतशेषं च यद्धविः । आनखाच्छोधयेत्पापं तुषाग्निरिव काञ्चन"मिति वसिष्ठस्मृतेश्च । "नीली पट्टे जलं तक्रे गोशाला म्लेच्छमन्दिरे । भिक्षा माधुकरी चैव पवित्राणि युगे युगे ॥" इति व्यासस्मृतेश्च प्रत्यहं भिक्षाचरणमेव युक्तम् । अत एव तदनाचरणे प्रायश्चित्तमुक्तं प्रायश्चित्तमयूखादौ मन्वादिभिः—"अकृत्वा भैक्षचरणमसमिध्य च पावकम् । अनातुरः सप्तरात्रमवकीर्णिव्रतं चरे"दिति । तत्रैवाहाङ्गिराः—"अनापदि चरेद्यस्तु सिद्धां भिक्षां गृहे वसन् । दशरात्रं पिबेद्वज्रमापत्काले त्र्यहं द्विजः ॥" इति । वज्रं—वज्रकृच्छ्रोक्तं गोमूत्रयावकाहारमिति भगवद्भास्करः ॥ १८४ ॥

---

यद्यपि—"भिक्षाटनसमुद्योगात्प्राकेनापि निमन्त्रितम् । अयाचितं हि तद्भैक्षं भोक्तव्यं मनुरब्रवीत्" इति वचनेनानुमतं नामामन्त्रयितुर्गृहे भोजनम् । तथापि यदि परिवेषणं स्त्री कुर्यात्तदा तु न तत्र भोक्तव्यमित्याशयेनाह—परिवेषणेति । परिवेषणस्य—भोजनपात्रे भोजनीयद्रव्यार्पणस्य कर्त्री स्त्री स्यात्—युवतिर्वृद्धा वा तत्र भिक्षार्थं न गन्तव्यम् । यद्यपि विहितं नाम स्मृतिषु स्त्रीभ्यो भिक्षाग्रहणं, तथापि कलिबलकलुषितचेतसामिन्द्रियलौल्यमाशङ्क्य निषिध्यते नाम भगवता । अत्र विप्रग्रहणं भिक्षा तत्रैव कार्या न त्वन्यत्रेति नियमं व्यञ्जयितुम् । उक्तं च—"ब्राह्मणेषु चरेद्भैक्षमनिन्द्येष्वात्मवृत्तये"इति ॥ १८४ ॥

---

स्मृतिविरोधमाशङ्क्य परिहरति—यद्यपीत्यादिना ॥ १८४ ॥

**अभ्यासो वेदशास्त्राणां कार्यश्च गुरुसेवनम्।**
**वर्ज्यः स्त्रीणामिव स्त्रैणपुंसां सङ्गश्च तैः सदा॥ १८५॥**

अभ्यास इति। तैः। वेदाश्च शास्त्राणि च तेषाम्। तत्र वेदा ऋगादयश्चत्वारः, शास्त्राणि तु शिक्षादीनि वेदाङ्गानि साङ्ख्ययोगोत्तरमीमांसाख्यानि च, तेषाम्। अभ्यासः कार्यः। एतेषां सनातनत्वेन श्रेयोहेतुत्वात्। उक्तं हि भारते नरनारायणीयाख्याने—"साङ्ख्यं च योगं च सनातने द्वे वेदाश्च सर्वे निखिलेन राज"न्निति। वेदग्रहणेनैव वेदान्तस्योत्तरमीमांसाया अपि ग्रहणं वेदितव्यम्। श्रीभागवतादीनामुक्तस्वेष्टग्रन्थानां तन्मूलकत्वान्न पृथङ्निर्देशः। यद्वा—तेषां सामान्यधर्मेषूपदेशाद्ब्रह्मचारिणामपि तेऽभ्यसनीयत्वेन प्राप्ता एव। अत्र तु ब्रह्मचारिप्रकरणत्वात्तेषां साङ्गवेदाध्ययनं विशेषेण विधीयत इत्यपौनरुक्त्यम्। शास्त्रशब्देन वेदाङ्गान्येव गृह्यन्ते, "अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत" "स्वाध्यायोऽध्येतव्यः" "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येतव्यो ज्ञेयश्चे"त्यादिश्रुतिशासनात्। "द्वितीयं प्राप्यानुपूर्व्याज्जन्मोपनयनं द्विजः। वसेद्गुरुकुले दान्तो ब्रह्माधीयीत चाहूत"इति श्रीभागवतोक्तेश्च। तथा—तैः। गुरुसेवनं च कार्यम्। ब्रह्मचारिणां गुरुशुश्रूषैव मुख्यो धर्म इत्युक्तं भगवता—"भिक्षोर्धर्मः शमोऽहिंसा तप ईक्षा वनौकसः। गृहिणो भूतरक्षेज्या द्विजस्याचार्यसेवन"मिति। "शुश्रूषमाण आचार्यं सदोपासीत नीचवत्। यानशय्यासनस्थानैर्नातिदूरे कृताञ्जलि"रिति च। "ब्रह्मचारी गुरुकुले वसन्दान्तो गुरोर्हितम्। आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः॥

---

गुरुसेवायां वेदार्थपरिशीलने च प्रसक्तैर्भाव्यमेभिः, विषयलुब्धानां सङ्गस्तु न कदापि कार्य इत्याह—अभ्यास इति। तैर्गुरुसेवनं कार्यं, गुरुसेवा ह्येषां परो धर्मः। स्मर्यते च—"आसमाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम्। सङ्गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम्॥" इति। असति तु गुरुशुश्रूषावसरे वेदशास्त्राभ्यासः कार्यः। यथाक्रमं वान्वयः। वेदाः–पूर्वोत्तरभागभिन्नाः परब्रह्माराधनभूतकर्मप्रतिपादनपराः, आराध्यभूतपरब्रह्मस्वरूपतदुपासनप्रतिपादनपराश्च, तदुपबृंहणभूतानि स्मृतीतिहासादीनि शास्त्राणि, एषामभ्यासः–एतदर्थानां पुनः पुनरनुशीलनं कार्यम्। परिशील्यमानो हि वेदशास्त्रार्थः विक्षोभकाणामर्थान्तराणामव-

---

नैष्ठिकानां गुरुशुश्रूषणमेव परो धर्म इति ज्ञापयन्पाठक्रममनादृत्यार्थक्रमतो व्याचष्टे—तैर्गुरुसेवनमित्यादिना। वेदशास्त्राभ्यासगुरुसेवनयोरुभयोरेव तत्तदवसरे कर्तव्यतया साम्यमभिप्रेत्य व्याचष्टे—यथाक्रमं वेति। वेदशास्त्राभ्यासस्याप्यवश्यकर्तव्यत्वे निमित्तमाह—परिशील्यमानो हीत्यादिना।

छन्दांस्यधीयीत गुरोराहूतश्चेत्सुयन्त्रितः । उपक्रमेऽवसाने च चरणौ शिरसा नमे"-दिति नारदोक्तेश्च । "गुरुं चैवाप्युपासीते"त्यादि याज्ञवल्क्योक्तेश्च । तथा-तैः । स्त्रैणाः-स्त्रीलुब्धाश्च ते पुमांसश्च तेषाम् । सङ्गः-प्रसङ्गोऽपि । स्त्रीणां सङ्ग इव सदा वर्ज्यः । उक्तं हि श्रीकपिलदेवेन—"सत्यं शौचं दया मौनं बुद्धिर्ह्रीः श्रीर्यशः क्षमा । शमो दमो भगश्चेति यत्सङ्गाद्याति संक्षयम् । तेष्वशान्तेषु मूढेषु खण्डितात्मस्वसाधुषु । सङ्गं न कुर्याच्छोच्येषु योषित्क्रीडामृगेषु च । न तथाऽस्य भवेन्मोहो बन्धश्चान्यप्रसङ्गतः । योषित्सङ्गाद्यथा पुंसो यथा तत्सङ्गिसङ्गत"इति । विद्यादिगुणसम्पन्नोऽपि स्त्रैणश्चेत्तत्सङ्गोऽपि वर्ज्य एव, गुणानामकिञ्चित्करत्वात् । तदुक्तं श्रीभागवते ऐलगीते—"किं विद्यया किं तपसा किं त्यागेन श्रुतेन वा । किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनो हृतम् । तस्मात्सङ्गो न कर्तव्यः स्त्रीषु स्त्रैणेषु चेन्द्रियैः । विदुषां चाप्यविस्रब्धः षड्वर्गः किमु मादृशा"मिति । चकार-स्तद्वार्ताश्रवणकीर्तनादिसमुच्चयार्थः ॥ १८५ ॥

---

कार्श्यं चेतसि न प्रयच्छेत्, तत्त्वविज्ञानदार्ढ्यापादनद्वारा निःश्रेयसोपायानुष्ठान उपकारकश्च । वेदाख्यस्य शास्त्रस्याभ्यासः-अधीतस्य वेदस्य पुनः पुनः पठनम्, बहुवचनं च वेदानामानन्त्यादिति केचित् । तदेवं वैषयिकसङ्गप्रत्यनीकेन गुरुसेवनादिनैव कालो नेयः, वैषयिकसङ्गस्य तु न कदाप्यवकाशो देय इत्याह—वर्ज्य इति । स्त्रीणामिव तास्वासक्तानां सङ्गोऽपि सुतरां त्याज्यः । इदं च विषयलुब्धसङ्गमात्रत्यागस्योपलक्षकम् । केचित्तु-निष्ठान्तं व्रतविशेषमाविशद्भिर्विषयलोलुपानां सङ्गो दूरे त्याज्य इत्याह—वर्ज्य इति । स्त्रीशब्दोऽत्र विषयसामान्यस्योपलक्षकः । त्यक्तविषयसङ्गैरेभिः किं पारिव्रज्यमाश्रितैरिव त्यक्तैकनिकेतनैः स्वतन्त्रैर्भाव्यम् ? तत्राह—गुरुसेवनमिति । गुरुसेवनमेव कार्यं, यावच्छरीरपातं गुरोरधीनैरेव भाव्यमित्येतत् । ननु-गुरुपरायणैरेतैर्गुरुसेवातोऽन्यत्किमपि श्रेयसे कर्तव्यं न वा ? तत्राह—अभ्यासो वेदशास्त्राणामिति । अधीतानामनधीतानां वा वेदवदुपबृंहणानामभ्यासः-परिचयः कार्य इति व्याचक्षते ॥ १८५ ॥

---

केचिदित्यस्वारस्यं व्यज्यते, वेदाभ्यासमात्रस्य नातिप्रयोजनकत्वात् । केचित्त्वित्यादि । यद्यप्यस्मिन्व्याख्याने हेतुहेतुमद्भावेन वाक्यानामवतरणाच्चमत्कृतिविशेषः । अथापि पाठकमाद्युक्रम इत्यस्वारस्यं केचिदित्यनेन ज्ञाप्यते ॥ १८५ ॥

**चर्मवारि न वै पेयं जात्या विप्रेण केनचित्।**
**पलाण्डुलशुनाद्यं च तेन भक्ष्यं न सर्वथा॥ १८६॥**

द्विजस्य विशेषमाह—"चर्मेति। जात्या विप्रेण–द्विजातिमात्रेण। जातिग्रहणादनुपनीतस्याप्ययं नियमः सम्बध्यते। केनचित्–केनापि, आश्रमान्तरस्थेनापीत्यर्थः। चर्मवारि–चर्मसंस्पृष्टं वारि, चर्मकोशोद्धृतं वारीत्यर्थः। न पेयं–न पातव्यम्। वै इति निश्चये। नात्र संशयः। तथा चाह लघुहारीतः—"प्रपाजलं सीरघटस्य चैव द्रोणीजलं कोशविनिर्गतं च। पीत्वाऽवगाहेत जलं सवासा उपोषितः शुद्धिमवाप्नुयाच्चे"ति। सीरघटः–सीरवृक्षनिर्यासाधारपात्रम्। द्रोणी–नौका-

---

अथ परिसमाप्य गृहस्थब्रह्मचारिणोर्विशिष्यादेशं सामान्यतो द्विजैः परिहर्तव्यं कर्तव्यं चादिशति द्वाभ्याम्। अयं चादेश एतावद्विशिष्य प्रतिबोधितयोर्गृहस्थब्रह्मचारिणोः सामान्यतो बोधनायात्र प्रसक्तः। चर्मवारीति। चर्मपुटकेनोद्धृतं जलं न पेयम्। जातु–आपद्यपि न पेयम्। यद्यप्यापद्यनुमतं नाम, तथापि न साक्षात्तत्पानानुमतिः। भूमिगतस्यैव कलशोद्धृतस्य पानेऽनुमतेः। तथाच वचनम्—"आपद्गतो भूमिगताः पिबेच्चे"ति। यद्वा–जातु–तृषातिरेकेऽपि। केनचित्–केनापि, प्रथमाश्रमिणा वा द्वितीयाश्रमिणा वा केनापि। यद्वा–केनापि उदीच्येन वाऽवाच्येन वा केनापि। देशभेदेनाप्यत्र न वैषम्यमिति भावः। विप्रेण–द्विजातिमात्रस्योपलक्षकमेतत्[1]। जात्या विप्रेणेति पाठे विप्रजातीयेन केनापि न पेयमित्यर्थो भवति। यद्यप्ययमर्थो न घटते, उपनयनतः प्राक्कामचारकामवादकामभक्षत्वानामनुमतेरनुपनीतविप्रजातीयेऽस्य निषेधस्यानन्वयात्। तथापि ब्राह्मण्यानुगुणसत्यार्जवादिगुणविशेषोऽस्तु मा वा ब्राह्मणजातीयेन नैतत्पेयमित्येतावन्मात्रे तात्पर्यान्न क्षतिः। यश्च जात्या न विप्रः, वृत्ततो विप्रः, सत्यादिविप्रगुणलक्षितः शूद्र इत्येतत्, नायमस्य निषेधस्य गोचर इति व्यञ्जनाय वा जात्येति।

अथ कथमिदमुच्यते जात्या विप्र इति। नहि गवादाविवाकृतिविशेषो ब्राह्मणादौ दृश्यते, आकृतिव्यङ्ग्या हि जातिः, आकृतिरेव वा। ननु–नायं नियम आकृतिव्यङ्ग्या जाति-

---

विशेषप्रकरणे सामान्यप्रसङ्गनिमित्तमाह—अयं चेत्यादिना। प्रसङ्गाद्ब्राह्मणादिजातिभेदं निरूपयितुमारभते। तत्र परेषामाशङ्कामनुवदति—अथेत्यादिना। गवादाविवेति। महिषादिव्यावृत्तसास्नालाङ्गूलादिलक्षणाकृतिविशेषवन्न विप्रे क्षत्रियादिव्यावृत्ताकृतिभेदोऽस्तीत्यर्थः। आकृतिभेदाभावेऽपि जातिभेदः किं न स्यादित्यत्राह—आकृतिव्यङ्ग्या हि जातिरिति। या या जातिः सा साऽऽकृतिव्यङ्ग्येति व्याप्तेरित्यर्थः। तथाच व्यापकाभावाद्व्याप्याभाव इति भावः। आकृतिरेव वेति। इदं च संस्थानविशेषातिरेकजातिवादं प्रतिक्षिपतां सिद्धान्तिनां[2] मतमाश्रित्य। अत्र मीमांसकानां समाधानमनुवदति—नन्विति। एते च–आकृतिव्यतिरिक्तामेव जातिमनेकानुगतामभ्युपगम्य व्यञ्जकं चानियतमि-

---

१ मात्रशब्दः कृत्स्नार्थकः। २ विशिष्टाद्वैतसिद्धान्तिनाम्।

जलनिःसारणपात्रम् । कोशविनिर्गतं–कूपादेश्चर्मपुटनिःसारितमुदकम् । यस-

रिति, सति तद्भेदे तेन व्यज्येत, यत्र तु न तद्भेदः, अन्यदेव तत्र व्यञ्जकम् । तत्, ब्राह्मणादिष्वसत्यपि संस्थानभेदे प्रत्यक्षतो ब्राह्मणत्वादिजातिर्निराबाधैव । भवति चानुगता दृष्टिः–अयं गौरयं गौरितिवदयं ब्राह्मणोऽयं ब्राह्मण इति । दृष्टमात्रे तथाप्रतीत्यनुदयस्य मातापित्रोर्ब्राह्मणत्वज्ञानस्याभिव्यञ्जकस्याभावात्, न तु विषयाभावात् । तच्च मातापित्रोः प्रत्यक्षेण, अन्येषां तु आप्तोपदेशादिना । न च ब्राह्मण्यज्ञाने ब्राह्मण्यज्ञानापेक्षयाऽऽत्माश्रयः, ब्राह्मण्यजातेरेकत्वेऽप्युत्पादकगतत्वेन ज्ञायमानस्याभिव्यञ्जकता, उत्पाद्यगतत्वेन त्वभिव्यङ्ग्यता । न च मातापित्रोर्ब्राह्मणत्वज्ञाने तन्मातापित्रोर्ब्राह्मणत्वज्ञानं तन्मातापित्रोर्ब्राह्मणत्वज्ञानं तन्मातापित्रोरित्यनवस्थादोषः । संसारस्यानादित्वात् । न च गोर्गवि जाते गोत्ववद्ब्राह्मणाद्ब्राह्मण्यां जाते कुण्डे गोलके च ब्राह्मण्यं स्यादिति वाच्यम् । प्रत्यक्षेण तत्र तदसिद्धेः । न चान्यत्रेव तत्र कुतो न तत्प्रत्यक्षम् । अभिव्यञ्जकसापेक्षतायाः प्रागुक्तत्वात् । अभिव्यञ्जकं तु शिक्षितं "विवाहसंस्कृत

च्छन्ति, तदाह—नायमित्यादिना । अन्यदेवेति । तच्चोपरि स्पष्टीकरिष्यति । तत्–जातित्वाकृतिव्यङ्ग्यत्वयोर्व्याप्यव्यापकभावाभावेन । प्रत्यक्षत इति । प्रत्यक्षागोचरे खलु लिङ्गापेक्षा, घटपटादाविव ब्राह्मणक्षत्रियादावपि जातिभेदः प्रत्यक्षगम्य इत्याकृतिभेदाभावमात्रेण न तदसिद्धिरिति भावः । प्रत्यक्षमेवोपपादयति—भवति चेत्यादिना । अयं गौरयं गौरितिवदिति । अनुगतप्रत्यक्षगम्यमपि ब्राह्मण्यादि यदि जातिविशेषो न, तर्हि गोत्वादिकमपि जातिर्न स्यादिति भावः । ननु गवादिजातिभेदः प्रत्यक्षगम्यो नाम, न तथा ब्राह्मणादिभेदः । नह्यदृष्टपूर्वमज्ञातकुलादिकं पुरुषमवलोकयन्नयं ब्राह्मण इत्ययं क्षत्रिय इति वा निर्धारयति, गवाश्वादिकं त्वपरिचितपूर्वमप्यवलोकयन्सपद्यध्यवस्यति गौरयमश्वोऽयमितीत्याशङ्कायामाह—दृष्टमात्र इति । मातापित्रोर्ब्राह्मणत्वज्ञानस्येति । गवाश्वादिजातिभेदे आकृतिभेदो व्यञ्जकः, ब्राह्मणादिजातिभेदे त्वन्यदेवेदमभिव्यञ्जकमिति भावः । इदमभिप्रेत्यैव पूर्वमुक्तं यत्र तु न तद्भेदः, अन्यदेव तत्र व्यञ्जकमिति । न तु विषयाभावादिति । सत्यपि घटे आलोकाद्यभिव्यञ्जकाभावे यथा न प्रत्यक्षं तथेहापीति भावः । व्यञ्जकं तद्वा तत्र कुतो नेत्याशङ्कां सामग्र्यभावादिति परिहरंस्तत्र सामग्रीं प्रदर्शयति—तच्चेत्यादिना । आत्माश्रय इति । ज्ञप्तावात्माश्रय इत्यर्थः । स्वज्ञप्त्यधीनज्ञप्तिकत्वादिति भावः । उत्पाद्यगतत्वेनेति । ज्ञायमानस्येत्यनुषज्यते । तथाच विषयविभेदान्नोक्तदोष इति भावः । संसारस्यानादित्वादिति । अप्रामाणिकपदार्थधाराकल्पनं ह्यनवस्था, योऽयं हेतुहेतुमद्भावः प्रामाणिकः, तदनुगुणहेतुपरम्पराश्रयणेन कथमनवस्था, तथासति संसारेऽनादौ हेतुपरम्परानवस्थितेः सर्वस्यैवापलापप्रसङ्ग इति भावः । ननु ब्राह्मणत्वादिजातेर्गोत्वादिजातिवद्ध्यक्षत्वे गोत्वादिजातिवज्जनकमिथुनजातीयता नियमेन स्यादित्यभिप्रायेण शङ्कते—न चेत्यादिना । यदि स्यादुपलभ्येत, अनुपलम्भान्नेत्याशयेनाह—प्रत्यक्षेणेति । कुतोऽनुपलम्भ इत्याशङ्कते—न चान्यत्रेति । असत्यामुपलम्भसामग्र्यां कथमुपलम्भः स्यादित्याशयेन समाधत्ते—अभिव्यञ्जकेति । ननु मातापित्रोर्ब्राह्मण्यज्ञानं यदभिव्यञ्जकमुक्तं तदस्त्येव तत्रापीत्याशङ्कायामाह—अभिव्यञ्जकं त्विति । शिक्षितमिति । विवाहसंस्कृतसवर्णजनकमिथुनयोर्ब्राह्मण्यादिज्ञानमभिव्यञ्जकतयाऽभिप्रेतमित्यर्थः । ननूपलम्भसामग्र्यभावेन कथं तत्र तदभावनिर्धारणं, योग्यानुपलम्भे नहि तदव-

आह—"प्रपाखरण्ये घटके च सैरे द्रोण्यां जलं कोशगतास्तथाऽऽपः। ऋतेऽपि

विधिः स्मृत" इति वचनेन। अभिव्यञ्जकाभावेन तस्याः प्रत्यक्षासम्भवेऽपि सा किं नेष्यते ?। तत्र विना प्रमाणं वस्तु तु न सिध्यति क्वापि। न च यो यज्जातीयमिथुनादुत्पन्नः स तज्जातीय इति नियम एव प्रमाणम्। स्मरणनिरपेक्षं केवलं प्रत्यक्ष एव तस्य सावकाशत्वात्। अस्तु वा तयोरपि ब्राह्मणत्वम्, "विप्रास्तेषु विधिः स्मृत" इति वचनं तु तयोर्ब्राह्मणाधिकारविहितकर्मानधिकारमात्रपरम्। यच्च तयोरवान्तरसंज्ञाकरणं तत्तु कार्यविशेषविधानार्थम्। तस्माद्घटादिषु घटत्वादिवद्ब्राह्मणादिषु ब्राह्मणत्वजातिः प्रात्यक्षिकी निराबाधैवेति। नैतद्युक्तम्। नहि निपुणतरमीक्षणेऽपि रत्नेषु परीक्षकैरिव विशेषः कश्चिदुपलभ्यते ब्राह्मणादिषु पिण्डतत्संस्थानादृते, तद्ब्राह्मणत्वजातिः काचित्प्रत्यक्षगम्येत्येतदभिमतिविजृम्भितम्। मातापित्रोर्ब्राह्मणत्वज्ञानस्याभिव्यञ्जकत्ववर्णनमपि न साधीयः। नहि दीपादिनेव चक्षुषस्तेन कश्चिदनुग्रहोऽत्र, येन दीपादेरिव घटादावस्यात्राभिव्यञ्जकतोच्येत। नयनं हि समर्थमप्यन्धकारनिरोधादप्रभवत्सन्निहितग्रहणेऽनुगृह्यते दीपेन। न चेह तथा निरसनीयं किञ्चिदस्ति। नापि दर्पणादिनेवासन्निकृष्टस्य चक्षुषः सन्निकर्षः सम्पाद्यते। दर्पणप्रतिहतगतयो हि नयनरश्मयोऽर्थेन सम्बध्यन्ते। तत्कथञ्चिदपि चक्षुषोऽननुग्राहकस्यास्य का नामाभिव्यञ्जकता। करणानुग्राहकतेति चेत्। अस्तु। तदपि भवतः कल्पनयैव। सहस्रशो निरीक्षणेऽप्यनालक्षितविशेषे विशेषमध्यक्षमाकलय्य तदध्यक्षे

धारणमित्याशयेनाशङ्कते—**अभिव्यञ्जकाभावेनेति**। प्रमाणाधीना ह्यर्थसिद्धिः, असति तद्ग्राहकप्रमाणे तस्य कथं सिद्धिरित्याशयेन समाधत्ते—**तत्रेति**। नन्वसत्यपि प्रत्यक्षेऽनुमानं प्रमाणमस्तीत्याशयेनाशङ्कते—**नचेति**। समाधत्ते—**स्मरणेति**। अयं भावः—उपाधिदूषितमनुमानम्, उपाधिश्च विवाहितब्राह्मणमिथुनजन्यत्वम्, उपाधिग्राहकं चागममूलका स्मृतिः, आगमश्च प्रमाणान्तरतः प्रबल इति। ननु आगमोऽपि सामग्रीकार्यमन्यथाकर्तुं न शक्नोति, दृष्टा च सजातीयारम्भकता समानमिथुन इत्यत आह—**अस्तु वेति**। तयोरपि—कुण्डगोलयोरपि। उपसंहरति—**तस्मादिति**। तदेतन्मीमांसकमतं पूर्वपक्षी प्रतिक्षिपति—**नैतद्युक्तमिति**। प्रत्यक्षगम्या ब्राह्मण्यादिजातिरिति वादं प्रतिक्षिपति—**नहीति**। विशेषः—इतरव्यावृत्ताकारविशेषः। **पिण्डतत्संस्थानादृते** इति। स च मनुष्यमात्रसाधारण इति नावान्तरजातिसिद्धिरिति भावः। **काचिदिति**। संस्थानविशेषतोऽप्यत्यन्तभिन्ना काचिदित्यर्थः। इदं चाप्रामाणिकताज्ञापनाय। अभिव्यञ्जकतां पराभिमतां प्रतिक्षिपति—**मातेति**। चाक्षुषं प्रत्यभिव्यञ्जकतया प्रथितानां दीपदर्पणादीनामभिव्यञ्जकत्वमभिव्यक्तिविरोधिनिरसनद्वारेण, अभिव्यक्तिसामग्रीसंपादनद्वारेण वा दृष्टम्, एतदन्यतरस्वभावविधुरस्य कथमभिव्यञ्जकता घटेतेत्यभिप्रेत्याह—**नहीत्यादिना**। अस्य—मातापित्रोर्ब्राह्मण्यज्ञानस्य। अभिव्यञ्जकत्वं चाभिव्यक्तिकरणसहकारितारूपमित्यभिप्रेत्याह—**करणानुग्राहकतेति चेदिति**। सहकारितयेति यावत्। तत्सहकृतस्यैव चक्षुषस्तदभिव्यक्तिसाधनतया तदभिव्यञ्जकता तस्येति भावः। आकलय्य—अभिमत्य। सति सहकारिणि तदध्यक्षमसति तदनध्यक्षं चेति संकेत एव केवलं वः। नहि सर्वो लौकिकः पुरुषो विशेषं तमध्यक्षयति तत्रेति भावः। **उपहास्यमिति**। अप्रामाणिकार्यकल्पनं तदध्यक्षेऽप्रामाणिकाभिव्यञ्जककल्पनं

१ ब्राह्मण्ये साध्ये ब्राह्मणमिथुनजन्यत्वे हेताविति यावत्।

शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेच्चे"ति । "शुचि भूमिगतं तोयं यत्र लेपो न विद्यते"इति वृद्धचाणक्यश्चाह । आपत्काले तदेव जलं भूमिष्ठं पात्रान्तरेणोद्धृत्य पेयमिति प्रायश्चित्तमयूखे ।

तथा–तेन–विप्रेण । पलाण्डुश्च लशुनं च ते आद्ये–आदिभूते यस्य गृञ्ज-

सहकारिविशेषकल्पनं जात्यन्धस्य दर्शनपाटवायाञ्जनकल्पनमिवोपहास्यं हि । ननु–त्वमेव कथय गवादिजातेश्चाक्षुषत्वमविप्रतिपन्नम् । तत्र किं दृश्यते पिण्डसंस्थानातिरेकि या जातिर्मन्येत । एवमाकृतिर्हंस इति प्राक्केनाप्यप्रतिबोधितः पुरुषोऽदृष्टपूर्वं हंसं प्रथमतः पश्यंश्चक्षुर्ग्रहणयोग्यामपि हंसत्वादिजातिं नाध्यक्षयत्ययमेतज्जातीय इति, किन्तु धर्मिमात्रं साक्षात्करोति, अभिव्यञ्जकविशेषमनादृत्य तत्र तदनध्यक्षे किं कारणं पश्यसि । श्रूयताम्–न वयं संस्थानातिरेकेण तत्र जातिं काञ्चिदभिमन्महे, पिण्डे दृश्यमाने संस्थानं दृश्यत एव । अदृष्टपूर्वे वस्तुनि दृश्यमाने धर्मीव संस्थानरूपा जातिरपि तदानीं दृश्यत एव । न तत्राभिव्यञ्जकान्तरापेक्षा । एवमाकृतिर्हंस इत्याप्तोपदेशजन्यविज्ञानफलं त्वभिधाग्रहणमात्रम् । असति च तस्मिन्सा न गृह्यते, जातिस्तु गृह्यत एव । अत एव–एवमाकृतिर्हंस इति प्रागश्रुतवतोऽप्यदृष्टपूर्वेष्वपि बहुषु हंसेषु दृष्टेषु 'इमे केचन विजातीयाः पक्षिण' इति भवत्येवाध्यक्षं, नहि जात्यनध्यक्षे वैजात्योल्लेखः । केचनेत्यभिधाऽग्रहणमभिव्यज्यते । इयांस्तु विशेषः । प्रथमग्रहणे जातिर्गृह्यते जातित्वं तु न । द्वितीयग्रहणे तु तदपीति । तस्माद्गवादिजातिवद्ब्राह्मण्यादिजातिर्नाध्यक्षसिद्धा । ननु–'ब्राह्मणोऽयं ब्राह्मणोऽय'मित्यनुगतप्रत्यक्षस्य का गतिः ? । स्याच्चेदुपदेशावगतसङ्केतविशेषमेवावगाहते, नातोऽर्थान्तरम् । वस्तुतो नैकमध्यक्षं तत्, किन्तु ज्ञानद्वयम्, अयमिति धर्मिणोऽध्यक्षं, ब्राह्मण इति च शब्दावगतस्य सङ्केतविशेषस्य धर्मविशेषस्य वा स्मरणम् । किञ्च विश्वामित्रादावुक्ताभिव्यञ्जकाभावादसङ्गतिश्च । एतेन–तादृशविशिष्टोत्पत्तिरेव ब्राह्मण्यमित्यपि परास्तम् ।

अत्राहुः—सर्वत्र संस्थानमेव तु जातिः, संस्थानं चासाधारणो धर्मः, स च गवादिष्वव-

च साहसमिति भावः । त्वमेव कथयेति । ब्राह्मण्यस्याध्यक्षत्वमनिच्छता गोत्वजातेः कथमध्यक्षतोपपाद्यते, तदध्यक्षता तु सर्वसम्मतेत्याशयः । भवदभिमतां संस्थानविशेषातिरिक्तां जातिमेव वयमनध्यक्षां ब्रूमः; नतु जातिमात्रं, तदुपपद्यते गवादिजातेरध्यक्षतेत्याशयेनाह—तत्र किं दृश्यत इति । अभिव्यञ्जकविशेषनिरपेक्षजातिग्रहणानुपपत्तेर्जातिः संस्थानातिरिक्तैव भाव्यमित्यभिप्रायेणाशङ्कते—एवमाकृतिरित्यादिना । किं कारणं पश्यसीति । संस्थानमेव चेज्जातिस्तदनध्यक्षे कारणं त्वया दुरुपपादमिति भावः । समाधत्ते श्रूयतामिति । तदानीं दृश्यत एवेति । एवकारेण पराभिमतं जातेस्तदानीमप्रत्यक्षत्वं प्रतिक्षिप्यते । दृष्टमात्रे वस्तुनि धर्मिणीव जातावपि गृहीतायां कोऽयमनवधृतोंऽश आप्तोपदेशेनावगम्योऽस्ति, येनायं परं पृच्छति, 'कोऽय'मिति, इत्याशङ्कायामाह—एवमाकृतिर्हंस इत्याप्तेति । जातित्वं–अनेकानुगतत्वलक्षणं सौसादृश्यलक्षणं वा । स्याच्चेदिति । चेदिति निर्देशेन वस्तुतो न; यद्यभिमन्यते तदेति व्यज्यते । व्यङ्ग्यमेव विशदयति—वस्तुत इति ।

जातिसमर्थनप्रकारं केषाञ्चिदनुवदति—अत्रेति । संस्थानमेव त्विति । एवकारेण संस्थानातिरिक्तजातिवादो नास्माभिः क्रियत इति ज्ञाप्यते । आकृतिमात्रे संस्थानताभिमतिं वारयति—

नादेस्तत् । सर्वथा न भक्ष्यम् । तत्र दुर्गन्धिकन्दविशेषः पलाण्डुः, तद्विशेषो

यवसंश्लेषविशेषः, स चाध्यक्षः, नहि तं विना जातु पिण्डमात्रं दृश्यते, तदयं गौरयमश्व इति जातिविशेषोऽध्यक्षगम्य एव, ब्राह्मणत्वादिजातिस्तु नाध्यक्षयोग्या, यतः सा नावयवसंश्लेषविशेषरूपा, किन्तु प्रकृतिपरिणतेरसाधारणगुणविशेषरूपा । गुणविशेषश्च प्रचुरसत्त्वादि । तत्तु शरीरविशेषे । सत्त्वप्रचुरान्मातापितृशरीरादुत्पन्नं हि शरीरं सत्त्वप्रचुरमेव । तस्मात्सन्तानपारम्पर्येण शारीरगुणविशेषादव्याहतैव जातिव्यवस्था । अन्तःकरणगुणवैषम्यं त्वन्यदेव । तन्मूला च रागादिव्यवस्था । नच शरीरगुणवैषम्यानुगुण्यनियमोऽन्तःकरणगुणवैषम्ये, प्रयोजकभेदात् । इत्थं च वर्णभेदनिबन्धना विधिनिषेधा यथाव्यवस्थमुपपद्यन्ते । व्यवस्थितिश्च—"शूद्रयोनावहं जातो नातो वक्तुमहं क्षमः" इति वचनेन स्फुटमवगम्यते । वोढुरन्यस्मात्सवर्णात्सवर्णायामुत्पत्तिमात्रेण न तस्मिन्ननुलोमादिसङ्करजातीयता । अतस्तत्रापि सावर्ण्यमनपायम् । जारजत्वात्तेषां ब्राह्मणाधिकारककर्मण्यनर्हतामात्रम् । मास्तु वा तेषां तज्जातीयता, उत्पादकमिथुनयोः सत्यपि सत्त्वविशेषरूपे ब्राह्मण्ये व्यभिचरितरूपदुश्चरितजन्यपापविशेषादपत्ये गुणान्यथाभावसम्भवात् । भगवदाज्ञातिलङ्घनजनितो भगवन्निग्रह एव हि पापं, तत् सति भगवन्निग्रहेऽपत्यः शरीरे न कुतो गुणवैषम्यं स्यात्, नाख्यायते किंवा ऋषिशापमात्रेण त्रिशङ्कोः क्षत्रियस्य शरीरं सपदि चण्डालशरीरं जातमिति, किमु वक्तव्यं सर्वस्य प्रशासितुर्भगवत आज्ञातिलङ्घनेऽपत्यश-

संस्थानं चेति । स च क्वचिदाकृतिभेदः, क्वचित्तदतिरिक्तोऽपीति भेदमभिप्रेत्याह—स चेत्यादिना । ब्राह्मणत्वादिजातिस्त्विति । तुशब्दाद्गोत्वादितो वैषम्यं ज्ञाप्यते । नाध्यक्षयोग्येति । अध्यक्षायोग्यतया न तत्प्रत्यक्षं, नतु वस्त्वभावनिबन्धनम् । कुतोऽध्यक्षेऽयोग्यता ? आह—यत इत्यादिना । यदि शिरःपाण्यादिसंश्लेषवैचित्र्यं स्यात्तदा धर्मिणा सहाध्यक्षमवर्जनीयं स्यात्, तच्च नेत्याशङ्कापि स्यात्, अन्यदेव त्वतीन्द्रियं वैचित्र्यमिति भावः । प्रकृतिपरिणतेरिति । त्रिगुणप्रकृतिपरिणामरूपत्वादित्यर्थः । प्रचुरसत्त्वादीति । अयं भावः—त्रिगुणपरिणामरूपतया[1] शरीरस्य गुणानामुद्भवाभिभवभेदोऽवर्जनीय इति प्रचुरसत्त्वं केषुचित् प्रचुररजस्कत्वं केषुचित् रजोमिश्रतमस्कत्वं. केषुचित् प्रचुरतमस्कत्वं केषुचिदित्ययं गुणविभागोऽदृश्योऽवर्जनीयः सर्गक्रमादस्त्येवेति । स चायं भेदो जन्मविशेषानुबन्धीत्याह—सत्त्वप्रचुरादिति । ननु जन्मतः सत्त्वादिवैचित्र्योपपादनमसङ्गतम्, येन रागद्वेषासूयाक्रोधशान्तिहर्षाक्रोधादयो जन्मतो व्यभिचरिता लक्ष्यन्ते इत्याशङ्कां परिहरन्नाह—अन्तःकरणेति । प्रयोजकभेदादिति । पूर्वपूर्ववासनात्मकप्रयोजकभेदादित्यर्थः । अनुलोमादिसङ्करजातीयतेति । अनुलोमादिष्विव सङ्करजातीयता नेति भावः । "विन्नास्वेष विधिः स्मृत" इत्यादिवचनस्यावकाशमाह—जारजत्वादिति । वचनानां मुख्यार्थतां संरक्षन्नाह—मास्तु वेति । तज्जातीयमिथुनादुत्पन्नस्य तज्जातीयत्वं कुतो न स्यादित्यत्राह—उत्पादकेति । गुणान्यथाभावः सवर्णपुरुषान्तरसंसर्गमात्रेण कथं स्यात्, पापमित्यतः कथं बीजपरिवृत्तिकार्यमित्याशङ्कां पापस्वरूपनिरूपणेन परिहरति—भगवदिति । विश्वामित्रस्य ब्राह्मणत्वप्राप्तिस्मरणान्न जन्मभेदनिबन्धनः शारीरो वर्णभेदो घटेतेत्याशङ्कां परिहरन्नाह—

[1] भूतपञ्चकस्यापि परम्परया प्रकृतिपरिणतिरूपतया तत्परिणतिभूतस्य शरीरस्यापि त्रिगुणपरिणतिरूपत्वं बोध्यम् ।

लशुनम् । एतद्भक्षणे हि प्रायश्चित्तं स्मर्यते । तथाहि प्रायश्चित्तकाण्डे बृहस्पतिः—

रीरे गुणान्तरापत्तौ । एवमेव च विश्वामित्रस्य क्षत्रियस्यापि ब्रह्मणोऽनुग्रहात्सपदि शारीरगुणविशेषसम्पत्त्या ब्राह्मण्यसिद्धिः वह्न्यादिवदनियतैकनिमित्ता चेयं जातिः । अत एव योनिजायोनिजसाधारण्यं च । योनिजेष्वप्यार्षचरितेन न तदुपप्लवः । इयं च शारीरगुणविशेषरूपा जातिरप्रत्यक्षाऽस्मदादीनाम् । यच्च ब्राह्मणानामप्यात्मीये ब्राह्मण्ये संशयः श्रूयते—न चैतद्विद्मो ब्राह्मणा वयमब्राह्मणा वेति, सोऽप्यप्रत्यक्षत्वादेव सङ्गच्छते । अप्रत्यक्षामपि जातिं सन्तानविशेषप्रसूत्याऽवगत्य तत्तज्जातीयं व्यवहरन्ति प्रमाणपरतन्त्राः । ननु—सन्तानविशेषप्रसूतिर्दुरधिगमा, कामिनीमूलत्वात्, कामिनीचरितस्य च दुर्विज्ञेयत्वात् । सत्यम् । तावता किमाशङ्कसे—किं जातेरत्यन्तासम्भवम् ? सम्भवेऽपि सर्वथाऽपरिज्ञेयतां वा ? अस्मदादिभिर्विनिश्चेतुमशक्यत्वं वा ? । नाद्यः—सम्भवो हि प्रागुपपादितः, नहि दुर्ज्ञेयतामात्रेण वस्तुनोऽसद्भावः, सत्यां ज्ञानसामग्र्यां स्यात् ज्ञानं, असत्यां तु न, वस्तुसद्भावे त्वन्यदेव तन्त्रम् । न द्वितीयः—सुविज्ञेयो हि सर्वस्य सगुणभगवतो महर्षीणां च स विशेषः । न तृतीयः—अस्मदादीनामपि "सवर्णासु सवर्णेभ्यो जायन्ते हि सजातयः" इति शास्त्रतः सामान्यतो जानतामाप्तोपदेशादिना सति लिङ्ग-

एवमेव चेत्यादिना । नन्वेवं सति तत्तद्गुणप्राचुर्यलक्षणजातिविशेषे शारीरेऽस्मिन् मातापितृशरीरगततत्तद्गुणप्राचुर्यस्य प्रयोजकता नोपपद्यते; प्रदर्शितस्थले[1] व्यभिचारात्, इत्याशङ्कां परिहरन्नाह—वह्न्यादिवदिति । अयं भावः—कदाचित्तृणादिना कदाचिदरणिमथनतः कदाचिन्मणिकिरणसंयोगेन वह्नेरुत्पत्तिदर्शनात्तद्व्यवहितोत्तरवह्निं प्रति तत्तद्घटितसामग्र्या हेतुत्वस्वीकारेण विना मिथो व्यभिचारं यथा कार्यकारणभावः समर्थ्यते, तथेहापीति भावः । अत एव—अनियतैकसामग्रीकत्वादेव, मातापितृशरीरगतगुणविशेषनिरपेक्षमीश्वरानुग्रहादेरपि तत्तज्जातिसामग्रीत्वस्वीकारादेवेति यावत् । साधारण्यं चेति । अयोनिजेष्वपि धृष्टद्युम्नादिपु योनिजेष्विव क्षत्रियत्वं शारीरगुणविशेषलक्षणमुपपद्यत इति भावः । असमानक्षेत्रजे व्यासादौ ब्राह्मण्यजातिसम्भवमुपपादयति—योनिजेष्वपीति । आर्षचरितेनेति । तपःप्रभावेणेत्येतत् । न तदुपप्लवः—तस्याः शारीरगुणविशेषलक्षणजातेर्नोपप्लवो नानुत्पाद इति भावः । अस्मदादीनाम्—योगशक्तिविधुराणाम् । अप्रत्यक्षत्वमेव श्रुत्या द्रढयति—यच्चेत्यादिना । न चेत्यादिश्रुत्यर्थानुकरणमेतत् । महाभारतव्याख्याने नीलकण्ठेन ये वा के वा यजामहे इति ब्राह्मणविवरणं कृतं नाम । ननु लौकिकाः पुरुषाः कथमनध्यक्षां जातिं व्यवहरन्ति—अयमेतज्जातीयोऽयमेतज्जातीय इत्यत्राह—अप्रत्यक्षामिति । लिङ्गेन तदनुमानात्तद्व्यवहार इति भावः । लिङ्गस्य पक्षधर्मताग्रहो न सम्भवतीति शङ्कते—नन्विति । कामिनीचरितस्येति । स्त्रीणां कामगतिर्दुर्विज्ञेयेति सन्तानविशेषप्रसूतिर्दुर्विज्ञेयेति भावः । सत्यमिति । स्त्रीणां कामगतेर्दुर्विज्ञेयत्वेऽभ्युपगमः । जातिव्यवहारेऽप्रामाणिकत्वे त्वनभ्युपगमः । किं जातिव्यवहारस्याप्रामाणिकत्वं जातेर्वस्तुन एवाभावादाशङ्क्यते ? उत व्यवहारमूलस्य तद्विज्ञानस्यैवासम्भवादाशङ्क्यते ?, द्वितीये किं कस्यापि तज्ज्ञानं न घटत इति ? उतास्मदादीनां केषांचिन्न संभवतीति विकल्प्य परिहरति—किमित्यादिना । महर्षीणां च स विशेष इति । तथाच तैः क्रियमाणस्य जातिव्यवहारस्य प्रमामूलकत्वेन जातिव्यवहारमात्रस्याप्रामणिकत्वापादनं दुर्घटमिति भावः । आप्तोपदेशादिनेति । आप्तः—मातापित्रोस्तत्त्वतो जातिवित् । सति लिङ्गनिश्चय इति ।

१ प्रदर्शितस्थले—विश्वामित्रादौ ।

"लशुनं कवकं चैव पलाण्डुं गृञ्जनं तथा। चत्वार्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद्द्विज"

निश्चये तन्निश्चयसम्भवात्। असति लिङ्गे तद्विनिश्चयेन जायमानं तज्ज्ञानं भ्रमरूपमिति चेत्का नो हानिः। किं तावता जातिसद्भावे हानिः। ननु–अनादौ संसारे कामिनीषु प्रमादसम्भावनाया अवर्जनीयत्वान्न कस्यापि क्वचिदपि लिङ्गनिश्चयो भवेदिति चेत्, किं वा विरोधिलिङ्गनिश्चयोऽस्ति ?। एतदुक्तं भवति–असत्यप्युत्पत्तिविशेषरूपलिङ्गनिश्चये तत्सम्भावनया जातिसम्भावनया भवेदेव तत्तज्जातीयोचिता प्रवृत्तिः। सति हि विपरीतनिश्चये प्रवृत्त्युपरोधः। किञ्च यतो ब्राह्मण्यावधारणाय प्रवृत्ताः प्रथमं गोत्रं पृच्छन्ति। श्रूयते च प्रश्नः—"ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति तं होवाच किंगोत्रो नु सौम्ये"ति। अतश्च विज्ञायते जन्मविशेषसिद्धो जातिविशेष इति। यदि वृत्तविशेषलक्षणं तत्स्यात्, किमिति गोत्रप्रश्नः। उपनेतव्यस्य शिष्यस्याब्राह्मण्यशङ्कानिवारणाय ह्ययं प्रश्नः। जाबालोऽपि गुरोरात्मनि भवित्रीमब्राह्मण्यशङ्कामपनेतुं हि मातरं पृच्छति—"ब्रह्मचर्यं भवति विवत्स्यामि किंगोत्रो न्वहमस्मी" ति। अथ वृत्तविशेषलक्षणं ब्राह्मण्यं प्रतिपादयन्त्यः स्मृतयो व्याहन्येरन्। तथाच वचनानि—"सत्यं दानं क्षमा शीलमानृशंस्यं तपो घृणा। दृश्यन्ते यत्र नागेन्द्र! स ब्राह्मण इति स्मृतः॥ शूद्रे तु यद्भवेल्लक्ष्म द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥ यत्रैतल्लक्ष्यते सर्प! वृत्तं स ब्राह्मणः स्मृतः।" "जातकर्मादिभिर्यस्तु संस्कारैः संस्कृतः शुचिः॥ वेदाध्ययनसम्पन्नः षट्सु कर्मस्ववस्थितः। शौचाचारस्थितः सम्यग्विघसाशी गुरुप्रियः॥ नित्यव्रती सत्यपरः स वै ब्राह्मण उच्यते। सत्यं दानमथाद्रोह आनृशंस्यं तपो घृणा॥ तपश्च दृश्यते यत्र स ब्राह्मण इति स्मृतः॥ क्षत्रजं सेवते कर्म वेदाध्ययनसङ्गतः। दानादानरतिर्यस्तु स वै क्षत्रिय उच्यते॥ वाणिज्या पशुरक्षा च कृष्यादानरतिः शुचिः। वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः॥ सर्वभक्षरतिर्नित्यं सर्वकर्मकरोऽशुचिः। त्यक्तवेदस्त्वनाचारः स वै शूद्र इति स्मृतः॥ शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः॥" इति। मैवम्। अजगरयुधिष्ठिरसंवादे ह्यन्तःकरणसत्त्वोन्मेषनिबन्धने ब्राह्मण्ये युधिष्ठिरस्यादरो विज्ञायते, नतूक्तलक्षणब्राह्मण्ये

---

सन्ततिविशेषप्रसूतिरूपलिङ्गस्य निश्चये। ननु न सर्वे तत्तत्त्वविदः, अतत्त्वविदामुपदेशतो व्यवहारो हि दृष्ट इत्याशङ्कामनूद्य परिहरति—असति लिङ्गे तद्विनिश्चयेनेति। किं तावतेति। अनाप्तोपदेशतो वाऽविचार्यैव वा व्यवहरतां व्यवहारो भ्रान्तिमूलक इत्येतावता किं तद्व्यवहारमात्रस्याप्रामाणिकत्वमापतेत्, नहि जातिसद्भावे बाध इति भावः। तत्तज्जातिसमुचितप्रवृत्तिदौर्घट्यमाशङ्कते—नन्विति। अवर्जनीयत्वादिति। मिथुनचरितस्य रहस्यतया कामगतेरप्रतिरोधतया च प्रमादशङ्काया अवश्यंभावादिति भावः। कस्यापि–अयोगिनोऽस्मदादेरित्यर्थः। समाधत्ते—किं वेति। भावमाह—एतदुक्तं भवतीति। तत्रतत्र प्रवृत्तौ हि न तदवधारणमपेक्ष्यते, तद्विपरीताग्रहस्तत्सम्भावनामात्रं च, शङ्कयापि प्रवृत्तेरिति भावः। शारीरगुणविशेषलक्षणो जातिभेदोऽयं जन्मविशेषसापेक्ष इतीममर्थं श्रौतेन लिङ्गेन द्रढयति—किञ्चेत्यादिना। अब्राह्मण्येति। विपरीतलिङ्गावधारणं परिहर्तुमित्येतत्। स्मृतिविरोधमाशङ्कते—अथेति। परिहरति—मैवमिति। ननु–किमिदमुच्यतेऽन्तःकरणसत्त्वोन्मेषनिबन्धने ब्राह्मण्ये

इति । कवकं—राजसर्षपाख्यं शाकविशेषम् । गृञ्जनं—लशुनतुल्यः कन्दविशेषः,

अद्वेषः । अयमाशयः—आत्मा हि न स्वतो ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा, किन्तु ज्ञानैकघनः, तस्मिन्प्रकृतिविशेषसम्बन्धौपाधिकस्तद्व्यवहारः । तत्र शरीरसत्त्वोन्मेषेणेवान्तःकरणसत्त्वोन्मेषेणापि ब्राह्मणव्यवहारस्यौचित्यमभिप्रेत्य द्विविधे तस्मिन्शारीरस्य तस्यानियतहेतुकतया तज्ज्ञापकस्योत्पत्तिविशेषस्य दुर्लक्ष्यतया सूक्ष्मतामसति वृत्ते तस्य सतोऽप्यसत्प्रायतां चाकलय्य को ब्राह्मण इति पृष्टः आन्तःकरणब्राह्मण्यं स्फुटलिङ्गं निःश्रेयसोपयोगि जात्या ब्राह्मणस्याप्यपेक्षिततया प्रधानमाह—सत्यं दानमित्यादिना । जात्या विप्रे शूद्रे चाव्याप्त्यतिव्याप्तिशङ्कायां तयोरलक्ष्यत्वलक्ष्यत्वविवक्षया तां वारयति—शूद्रे त्वित्यनेन । अत्र च प्रकरणे जात्या ब्राह्मण्यमस्तीत्येतद्युधिष्ठिरेणानुमतं विज्ञायते । तथाच—"यदि ते वृत्ततो राजन्ब्राह्मणः प्रसमीक्षितः । वृथा जातिस्तदाऽऽयुष्मन्कृतिर्यावन्न विद्यते ।।" इति । अजगरेण पृष्टस्य युधिष्ठिरस्य वचनम्—"जातिरत्र महासर्प ! मनुष्यत्वे महामते ! । सङ्करात्सर्ववर्णानां दुष्परीक्ष्येति मे मतिः ।।" इति । अत्र दुष्परीक्ष्यत्वकथनेन तत्सत्ता व्यज्यते, इति । यद्वा-जात्या ब्राह्मणे वृत्तविशेषस्यावश्यकताज्ञापनार्थं तथोक्तिः । अयमाशयः—को ब्राह्मण इति पृष्टो युधिष्ठिरोऽसति वृत्तविशेषे जातिरूपं ब्राह्मण्यमसत्कल्पमिति ज्ञापयन्वृत्तविशेषयुक्तं ब्राह्मण्यमाह—सत्यमित्यादिना । ननु-वृत्तं व्यभिचरितं जातियोगस्तु नियतस्तत्राह—शूद्रे इति । अत्यल्पमिदमुच्यते जातिर्जातिरिति शूद्रजातीयोऽप्युक्तवृत्तयुक्तो न शूद्रः-न शूद्रसधर्मा, शूद्रान्तरवन्नानुपसेव्यः, किन्तु सोऽपि धर्मं जिज्ञासमानैरुपसेव्यः, ब्राह्मणजातीयोऽपि वृत्तविहीनो न ब्राह्मणः-ब्राह्मणत्वप्रयुक्तोत्कर्षशून्यः, शूद्रवदनादरणीयः । इदमेव वचनस्य हार्दम् । अन्यथा शूद्रो न शूद्रः ब्राह्मणो न ब्राह्मण इत्यस्य घटो न घट इत्यादेरिवाबोधकत्वप्रसङ्गात् । "तस्माद्यज्ञे वधोऽवधः" इत्यत्रावधशब्दस्य प्रत्यवायानावहत्वपरतेवेहापि न शूद्रो न ब्राह्मण इत्यनयोरुक्तार्थपरता न्याय्यैव । नञ ईषदर्थकतया वा सङ्गतिः । यदि वृत्तविशेषो न स्यात्तस्मिञ्जातिरूपं ब्राह्मण्यमत्यल्पं शूद्रे चेद्वृत्तविशेषः जात्या शूद्रत्वमत्यल्पमिति । "जातकर्मादिभिर्यस्त्वि"त्यादिवचनान्यपि वृत्तप्राधान्यपराणि । अत्रत्यस्य शूद्रे चैतदितिवचनस्याप्युक्तैव गतिः । एतदित्यनेन शौचाचारेत्यादिनोक्तं यथासम्भवं ग्राह्यमिति ।

अपरे तु ब्राह्मण्यादिकं न जातिविशेषः किन्तु वृत्तविशेषः । इयांस्तु तत्र विशेषः—

इति, शारीरो हि जातिभेदः समर्थितः, इत्याशङ्कां परिहरन्नाह—अयमाशय इति । असत्प्रायतामिति । इदं शारीरजात्यनादरणे लिङ्गम् । निःश्रेयसोपयोगीति । इदमान्तःकरणब्राह्मण्ये आदरे लिङ्गम् । यदेव वचनं जन्मना जातिविभागप्रतिषेधपरतया गृहीतं तदेव तदवगमकमित्याह—अत्र चेत्यादिना । यद्वेत्यादि । इदं च केषाञ्चिद्धार्दम् । ननु लक्षणादोष इत्यात्राह—इदमेवेति । अन्वयानुपपत्तिस्तात्पर्यानुपपत्तिर्वा हि लक्षणाबीजं, सति बीजे लक्षणा न दोषायेति भावः । विना लक्षणां निर्वहति—नञ इत्यादिना । वचनान्तराणां भावमाह—जातकर्मादिभिर्यस्त्विति ।

प्रकारान्तरेण ब्राह्मणादिभेदं समर्थयतां मतमाह—अपरे त्विति । वृत्तविशेष इति । हन्त वृत्त-

१ तस्य-जन्मना जातिविभागस्य ।

नतु गाजराख्य इति विज्ञानेश्वरः। श्वेतकन्दः पलाण्डुविशेषो गृञ्जनमिति व्याख्या-

---

संस्कारविशेषसहितो वृत्तविशेषो ब्राह्मणत्वं तथा क्षत्रियत्वं तथा वैश्यत्वं च, शूद्रत्वं च तद्वि-परीतवृत्तविशेषः, जातकर्मादिभिर्यस्त्वित्यादिवचनानुगुण्यात्। शूद्रकुलोत्पन्ने सति शौचादि-वृत्ते शूद्रलक्षणाभावादुच्यते न शूद्र इति। नैतावता ब्राह्मण इत्यापतति, ब्राह्मण्यस्य संस्कारग-र्भत्वेन तस्मिंस्तदभावात्। न च संस्कारे कः प्रतिरोधः। श्रुतिः प्रतिरुणद्धि। "अष्टवर्षं ब्राह्मण-मुपनयीते" ति ब्राह्मणशब्देन व्युत्पत्तिविशेषोऽधिकारिविशेषणमिष्यते। उपनयनसंस्कारसमन-न्तरभाविवृत्तविशेषस्य तदधिकारिविशेषणत्वानुपपत्तेः। ननु–कथमकस्मात्प्रतिरुन्ध्याच्छ्रुतिः। तां पृच्छ, सा हि स्वतो गतिः। वृत्तविशेषोपकारकसंस्कारोपयुक्तसत्त्वविशेषमभिप्रेत्य वा ब्रूते। तच्चोत्पत्तिविशेषलिङ्गगम्यम्। मूले जात्येत्येतदुत्पत्तिविशेषमात्रं लक्षयति। कुलविशेषे प्रसूत्या हि संस्कारेऽधिकारः। संस्कृतानां च विधिनिषेधवश्यतेत्येतद्व्यञ्जयितुं तदुक्तिरित्याहुः। अन्तत एतैरपि योनिविशेषस्य वर्णविशेषे प्रयोजकत्वमभ्युपगतं नाम। महाभाष्ये "तपः श्रुतं च योनि-श्चेत्येतद्ब्राह्मण्यकारण" मित्युदाहृतं चैतत्।

अपरे पुनर्न जन्मतः संस्कारतोऽध्ययनतो वा वर्णभेदः। किन्तु गुणवृत्तविभेदनिब-न्धनः। तथाच स्मर्यते–"पुरुषानुगता जातिर्ब्राह्मणत्वादिकास्ति चेत्। द्विवर्णजातिभेदेन प्रत्य-क्षार्थोपलक्षणात्॥ गोवर्गमध्यं च गतो यथाऽश्वो निर्धार्यते ज्ञैः सुविचक्षणत्वात्। मनुष्यभा-वादविशिष्यमाणस्तद्वद्द्विजः शूद्रगणान्न भिन्नः॥ मनुष्यजातेर्न परो विशेषो यः कल्पते सर्वन-

---

विशेषोऽन्यत्रापि दृष्ट इति स्मार्तो वर्णविभागोऽव्यवस्थितः स्यादित्यत्राह—इयांस्त्विति। तथेति। संस्कारविशेषसहितवृत्तविशेष इत्यर्थः। तद्विपरीतवृत्तविशेष इति। संस्कारराहित्यविशिष्टसर्वकर्मकर-त्वाद्यशुचिवृत्तविशेषः। कुतोऽयं विभागो विज्ञायते इत्यत्राह—जातकर्मादिभिरिति। पूर्वमुदाहृतान्ये-तानि वचनानि। "शूद्रे चैतद्भवेल्लक्ष्यं द्विजे तच्च न विद्यते। न वै शूद्रो भवेच्छूद्रो ब्राह्मणो न च ब्राह्मणः" इति वचनशेषस्य भावमाह—शूद्रकुलोत्पन्न इत्यादिना। शूद्रलक्षणघटकीभूतसर्वकरत्वाशुचित्वादिल-क्षणवृत्तविशेषाभावान्न शूद्रपदव्यवहारार्ह इति भावः। अव्यवस्थां परिहरति—नैतावतेति। एतेनास्य वचनस्य केवलवृत्तनिबन्धनवर्णविभागपरत्वं परास्तम्। ननु शूद्रकुलोत्पन्नस्य सति ब्राह्मण्यलक्षणवृत्त-विशेषे सम्पादिते च संस्कारे ब्राह्मण्यं स्यादेवेत्यभिप्रायेणाशङ्कते—नचेति। संस्कारे–संस्कारकरणे, शूद्रकुलोत्पन्नस्येति शेषः। उत्पत्तिविशेषोऽधिकारिविशेषणमिष्यत इति। ननु ब्राह्मणमुपनयीतेत्येव श्रूयते, केनेहोत्पत्तिविशेषस्याधिकारिविशेषणत्वावगमः, ब्राह्मणपदं च ब्राह्मण्यमात्रमवगमयति, न कुल-विशेषे उत्पत्तिम्, तस्य तत्र लक्षणाश्रयणं चानुचितमित्याशङ्कां परिहरति—उपनयनेति। समन-न्तरभावीति। "वेदाध्ययनसम्पन्नः षट्कर्मनिरतः शुचिः। शौचाचारस्थितः सम्यग्विघसाशी गुरु-प्रियः। नित्यव्रती सत्यपर" इत्युक्तव्रतविशेषलक्षणब्राह्मणस्यानुपनीतेऽष्टवर्षे बालकेऽसम्भवादिति भावः। अकस्मात्–विना निमित्तम्। अप्रयोजकं जन्मविशेषमधिकारिविशेषणतया श्रुतिर्वा कथं निर्दिशेदिति भावः। सा हि स्वतो गतिरिति। इदं समाधानं न विचारकहृदयङ्गममित्यभिप्रेत्याह—वृत्तविशेषेत्यादि। अस्मिन्पक्षे आप्तवचनं प्रमाणयति—महाभाष्य इत्यादिना।

वृत्तविशेषमात्रेण वर्णविभागं कथयतां मतमाह—अपरे पुनरिति। स्मर्यत इति। भविष्यदपु-

सुधा। "गन्धाकृतिरसैस्तुल्यो गृञ्जनस्तु पलाण्डुना। दीर्घनालाग्रपत्रत्वाद्भिद्यतेऽसौ पलाण्डुत"इति वैद्यचिन्तामणिः। सुश्रुतश्चाह—"लशुनो दीर्घपत्रश्च पिच्छगन्धो महौषधम्। फरणश्च पलाण्डुश्च लवतर्कोपवारिका। गृञ्जनं यवनेष्टश्च पलाण्डोर्दश

रानुयायी ॥ तस्माद्विप्रेषु जात्यादिसामग्रीप्रभवो न सः। तस्मान्न च विभेदोऽस्ति न बहिर्नान्तरात्मनि ॥ न सुखादौ न चैश्वर्ये नाज्ञायां नाभयेष्वपि। न वीर्ये नाकृतौ नाक्षे न व्यापारे न चायुषि ॥ नाङ्गे पुष्टे न दौर्बल्ये न स्थैर्ये नापि चापले। न प्रज्ञायां न वैराग्ये न धर्मे न पराक्रमे। न त्रिवर्गे न नैपुण्ये न रूपादौ न भेषजे। न स्त्रीगर्भे न गमने न देहमलसम्प्लवे ॥ नास्थिरन्ध्रे न च प्रेम्णि न प्रमाणे न लोमसु ॥ शूद्रब्राह्मणयोर्भेदो मृग्यमाणोऽपि यत्नतः। नेक्ष्यते सर्वधर्मेषु संहतैस्त्रिदशैरपि ॥ न ब्राह्मणाश्चन्द्रमरीचिशुभ्रा न क्षत्रियाः किंशुकपुष्पवर्णाः। न चेह वैश्या हरितालतुल्याः शूद्रा न चाङ्गारसमानवर्णाः ॥ पादप्रचारैस्तनुवर्णकेशैः सुखेन दुःखेन च शोणितेन। त्वङ्मांसमेदोऽस्थिरसैः समानचतुष्प्रभेदा हि कथं भवन्ति ॥ वर्णप्रमाणाकृतिगर्भवासवाग्बुद्धिकर्मेन्द्रियजीवितेषु। बलित्रिवर्गामयभेषजेषु न विद्यते जातिकृतो विशेषः ॥ स एक एवात्र पतिः प्रजानां कथं पुनर्जातिकृतः प्रभेदः। प्रमाणदृष्टान्तनयप्रवादैः परीक्ष्यमाणो विघटत्वमेति ॥ चत्वार एकस्य पितुः सुताश्च तेषां सुतानां खलु जातिरेका। एवं प्रजानां हि पितैक एव पित्रैकभावान्न च जातिभेदः ॥ फलान्यथोदुम्बरवृक्षजातेर्यथाग्रमध्यान्तभवानि यानि। वर्णाकृतिस्पर्शरसैः समानि तथैकता जातिरिति प्रचिन्त्या ॥ मूर्तिमत्त्वाच्च नाशित्वं नाशित्वाच्छेषभूतवत्। देहाधारे निविष्टानां ब्राह्मण्यं नैव कल्प्यते ॥ एकैकोऽवयवस्तेषां न ब्राह्मण्यं समश्नुते। न चानेकसमूहेऽपि सर्वथातिप्रसङ्गतः ॥ पृथिव्युदकवाय्वग्निपरिणामाविशेषतः। देहतः सर्वभूतानां ब्राह्मणत्वप्रसङ्गतः ॥ मृग्यमाणे प्रयत्नेन देहे तन्नोपलभ्यते ॥ *शूद्रां प्ररोचते विप्रो रागिणीं मैथुनं प्रति। सा कामदुःखविगमे गर्भं धत्ते समागमे ॥* कामं कामातुराभ्यस्तु रोचन्ते शूद्रमानवाः। मैथुनं प्रति ब्राह्मण्ये तेऽपि तासां सुखावहाः ॥ ये तु जात्यादिभिर्भिन्ना गवाश्वोष्ट्रमतङ्गजाः। ते विजातिषु नो गर्भं कुर्वतेऽपि सुखार्थिनः। अनड्वानेव गोरेव सुखं पुष्याति सङ्गमे ॥ घोटकाश्च रतिं सम्यक्कुर्वते वडवासु च। पतिं करभमेवाप्य करभी रमते मुदा ॥ गजमेव पतिं लब्ध्वा सुखं तिष्ठति हस्तिनी। तिर्यग्जातिस्त्रिया साकं कुर्वाणोऽपि हि मैथुनम् ॥ न तस्याः कुरुते गर्भं नरो नापि सुखासिकाम् ॥ तिरश्चा सह कुर्वाणा मैथुनं मनुजाङ्गना। नाधत्ते तत्कृतं गर्भं न युक्तं मैथुनं तयोः ॥ नैवं कश्चिद्विभागोऽस्ति मैथुने स्त्रीमनुष्ययोः। विद्वत्सदसि योऽप्याह संस्काराद्ब्राह्मणोऽभवत् ॥ न्यायज्ञैः स निराकार्यो वाक्यैर्न्यायानुसारिभिः। गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा। जातकर्म नामकर्म तथाऽन्नप्राशनं च वै। चूडोपनयनं चास्य व्रतादेशस्तथैव च। समावर्तनमप्यन्यत्पाणिग्रहणमेव च। इत्येवमादिसंस्कारविधानैर्ये तु संस्कृताः। त एव ब्राह्मणा येषां नैरन्तर्येण कामनाः। यस्माद्ब्राह्मणा जाता ब्राह्मणैः कृतसंस्कृतैः। नायुः शक्तिर्हि कान्त्यादिर्विशेषो विद्यते स्फुटः। तौ वा

राणे। "शिल्पं हि वेदाध्ययन"मित्यन्तानि वचनानि जन्मादिकृतवर्णभेदप्रतिषेधपराणि। "धूर्तं स्तुवं

जातय"इति। औषधे तु लशुनादेरदोष इत्याह सुमन्तुः—"एतान्येवातुरस्य भिषक्क्रियायामप्रतिषिद्धानी"ति। मतिपूर्वं कामतो भक्षणे तु सुरापानाख्यम-

ब्राह्मणगोत्रस्थौ—संस्कृतावुभौ। इष्टानिष्टाशयनाप्तिभ्यां न भिद्येते परस्परम्। ज्ञानाध्ययनमीमांसानियमेन्द्रियनिग्रहैः। विनासंस्कारयोगेऽपि पुंसः शूद्रान्न भिन्नता। संस्कारः क्रियमाणश्च न शूद्रे वा प्रवर्तते। संस्कृताङ्गश्च पापेभ्यो न पश्यति(न्वि?) निवर्तते॥ विलासिनीभुजङ्गादिजनवन्मदविह्वलाः। व्यामुह्यन्ति सदाचाराद्ब्राह्मणत्वात्पतन्ति च॥ संस्कृतोऽपि दुराचारो नरकं याति मानवः। निःसंस्कारः सदाचारो भवेद्विप्रोत्तमः सदा॥ मन्त्रपूतात्मसंस्कारयुक्तोऽपि प्लवते न तु। ब्राह्मण्यादविकल्पं च पश्चाद्दुश्चरितो नरः॥ सामर्थ्यात्पतनं तस्माद्ब्राह्मण्यान्मुच्यते ध्रुवम्। आचारमनुतिष्ठन्तो व्यासादिमुनिसत्तमाः॥ गर्भाधानादिसंस्कारकलापरहिताः स्फुटम्। विप्रोत्तमाः श्रियं प्राप्ताः सर्वलोकनमस्कृताः॥ बहवः कथ्यमाना ये कतिचित्तान्निबोधत। जातो व्यासस्तु कैवर्त्याः श्वपाक्यांश्च पराशरः॥ शुक्याः शुकः कणादाख्यस्तथोलूक्याः सुतोऽभवत्। मृगीजोऽथर्श्यशृङ्गोऽपि वसिष्ठो गणिकात्मजः॥ मन्दपालो मुनिश्रेष्ठो नाविकापत्यमुच्यते। माण्डव्यो मुनिराजस्तु माण्डूकीगर्भसम्भवः॥ बहवोऽन्येऽपि ये पूर्वं प्राप्ता ये पूर्ववद्द्विजाः। यच्चैतचारुचरितैरर्च्यमुच्चरितं वचः॥ लब्धसंस्कारदेहाश्च महापातकिनो नराः। यस्मान्निवर्तते ब्रह्म तस्मात्साङ्केतिकं विदुः॥ किञ्चान्यदपरं यूयं वेदमन्त्रविदो जनाः। प्रष्टव्याः कस्य संस्कारे विशेषमुपगच्छत॥ किं देहस्योत येनासौ निसर्गमलिनः स्थितः। शुक्रशोणितसम्भूतः शमलोद्भवकीटवत्॥ निषेकादिस्मशानान्तैर्विविधैर्विधिविस्तरैः। देहिनोऽतिशयं केचिदुपगच्छन्ति मानवाः॥ तेषां गूढमनःकायवाग्विदुष्टैस्तु चेष्टितैः। असंयतमनुष्याणां पक्षोऽयं दूष्यते मया॥ वैदिकाखिलसंस्कारसारभूता द्विजातयः। सर्वकार्यकरान्सर्वान्श्वपलानतिशेरते॥ चण्डकर्मा विकर्मस्थो ब्रह्महा गुरुतल्पगः। स्तेनो गोघ्नः सुरापायी परस्त्रीरमणप्रियः॥ मिथ्यावादी मदोन्मत्तो नास्तिको वेदनिन्दकः। ग्रामयाजकनिर्गन्धो बहुदोषो दुरासदः॥ निषिद्धाचारसंसेवी चोरश्चाटो मदोद्धतः। धूर्तो नटः शठः पापी सर्वाशी सर्वविक्रयी॥ वाङ्मनःकायजैर्दुष्टैर्हता ये ब्राह्मणाधमाः। ते न शुद्धिं व्रजन्तीह अपि यज्ञशतैरपि॥ शूद्राणां यान्यनिष्टानि सम्पद्यन्ते स्वभावतः। विप्राणामपि तान्येव निर्विघ्नानि भवन्ति हि॥ तस्मान्मन्त्रोऽग्निहोत्रं वा वेदाः पशुवधोऽपि वा। हेतवो नहि विप्रत्वे शूद्रैः शक्या क्रिया यथा॥ असेव्यसेवनैरन्यैः शूद्रविप्रादयः समाः। बुद्ध्या शक्त्या स्वभावेन धर्मैर्जात्यादिभिः श्रिया॥ कर्तव्यैः पुण्यपापाभ्यां शनैः सर्वशरीरगैः। बन्धनै रोधनैर्नानायातनोपायपीडितैः॥ दण्डैरदण्डकरणैर्विषादपरिवेदनैः। सात्त्विकैः प्रीतिधर्माद्यै राजसैश्चित्रचेष्टितैः॥ तामसैस्तापमोहाद्यैर्दूयमानाः पुनः पुनः। श्लेष्ममारुतपित्ताद्यैर्महाबीभत्सदर्शनैः॥ क्वचिद्वृत्तिनिवृत्तिभ्यामृतानृतहिताहितैः। अलङ्कारोपयोगेन मन्मथाद्यैर्विचेष्टितैः॥ धनलाभाशया नैकजन्तुसङ्घातपातनैः। अधिसिद्धिगतिं याति नानाविधमनोरथैः॥ आत्मस्नेहपरद्वेषस्वीकृतद्रव्यरक्षणैः। अतिक्षीबत्वसङ्क्षोभक्षुतक्षामक्षमाभयैः॥ यातनोपायपैशुन्यशून्यत्वोपशमैस्तथा। अप्रशस्तैरनुष्ठानैः समीपस्थापदः समाः॥

ब्राह्मणलक्षणं तु। हेयोपादेये"त्यादिवचनानि वृत्तकृतवर्णभेदपराणि। पराणीवेति। इवशब्देन तत्र हार्दं

हापापसमत्वमाह याज्ञवल्क्यः—"निषिद्धभक्षणं जैह्म्यमुत्कर्षे च वचोऽनृतम् । रजस्वलामुखास्वादः सुरापानसमानि ही"ति । अत्र मिताक्षरा—"निषिद्धं-

---

हिंसकाः प्राणिनः पापवितथालापभाषिणः । साधूनां भापकाः स्तेना निर्दयाः पारदारिकाः ॥ नीचकर्मसमाचाराः सर्वभक्षाः पिशाचवत् । दुष्कुलीना दुराचारा नृपाणामुपजीविनः ॥ विप्रकार्या विकर्मस्था धनिनो दुष्टचेतसः । लुब्धका हरिणान्हत्वा वासं कृत्वा यथा वने ॥ तथा खादन्ति पिशुना बहवश्च क्रियावशात् । वेदवादमधीयानाः प्राणिघाताभिसंशिनः ॥ पुष्णन्ति कपटैरर्थान्वेदविक्रयिणोऽधमाः । मायिनो मत्सरग्रस्ता लुब्धा मुग्धा मदोद्धताः ॥ चाटाः कार्पटिकाः क्रूराः कदर्याः कलहप्रियाः । वाचाटा दुष्टकुलटा अटन्तो भाटकैः सह ॥ भण्डमान्या भटाटोपैः सङ्क्रुद्धाः सुविलुण्ठकाः । पर्यटा भाटका जीवाः कण्टकश्लोकभाषिणः ॥ विक्रीणते ह्यविक्रेयमभक्ष्यद्रव्यभक्षिणः । शूद्रकर्मानुतिष्ठन्तो निस्त्रपास्ते नराधमाः ॥ सेवाध्यापनवाणिज्यकृष्याद्यारम्भलम्भिताः । गृह्णन्तः सम्पदो बाह्या द्रव्यधान्यधनादिकाः ॥ क्रोधाद्याभ्यन्तरान्दोषांस्तथा दुष्टमनोरथान् । अत्यजन्तो विशिष्टानां श्रेष्ठास्ते कचमर्दिनः ॥ नोपादेयानि वस्त्राणि नित्यमाददते द्विजाः । हापयन्ति न हेयानि कथं ते गुरवः क्षितौ ॥ वेदाध्ययनमप्येतद्ब्राह्मण्यं प्रतिपद्यते । विभवद्वैश्यराजन्यौ राक्षसा रावणादयः ॥ श्वादचण्डालदासाश्च लुब्धकाभीरधीवराः । येऽन्येऽपि वृपलाः केचित्तेऽपि वेदानधीयते ॥ शूद्रा देशान्तरं गत्वा ब्राह्मण्यं क्षत्रियं श्रिताः । व्यापाराकारभाषाद्यैर्विप्रतुल्यैः प्रकल्पितैः ॥ वेदानधीत्य वेदौ वा वेदं वाऽपि यथाक्रमम् । श्रोद्वहन्ति शुभां कन्यां शुद्धब्राह्मणजां नराः ॥ अपरिज्ञातशूद्रत्वाद्ब्राह्मण्यं यान्ति कामतः । तस्मान्न ज्ञायते भेदो वेदाध्यायक्रियाकृतः ॥ आचारहीनान्न पुनन्ति वेदा यद्यप्यधीताः सह षड्भिरङ्गैः । शिल्पं हि वेदाध्ययनं द्विजानां वृत्तं स्मृतं ब्राह्मणलक्षणं तु ॥ हेयोपादेयतत्त्वज्ञास्त्यक्तान्याययथागमाः । जितेन्द्रियमनोवाचः सदाचारपरायणाः ॥ नियमाचारवृत्तस्था हितान्वेषणतत्पराः । संसारमोचनोपायक्रियायुक्तमनोरथाः ॥ सम्यग्दर्शनसम्पन्नाः समाधिस्था हतक्रुधः । स्वाध्यायसक्तहृदयास्त्यक्तसङ्गा विमत्सराः ॥ विशोका विमदाः शान्ताः सर्वप्राणिहितैषिणः । सुखदुःखसमालोका विविक्तस्थानवासिनः ॥ व्रतोपयुक्तसर्वाङ्गा धार्मिकाः पापभीरवः । निर्ममा निरहङ्कारा दानशूरा दयापराः ॥ सत्यब्रह्मविदः शान्ताः सर्वशास्त्रेषु निष्ठिताः । सर्वलोकहितोपायप्रवृत्तेन स्वयम्भुवा ॥ ब्रह्मणा कृतमर्यादास्त एव ब्राह्मणाः स्मृताः । बृहत्त्वाद्भगवान्ब्रह्मा नाभेयास्तस्य ये जनाः ॥ भक्त्यासक्ताः प्रपन्नाश्च ब्राह्मणास्ते प्रकीर्तिताः । क्षत्रियास्तु क्षतत्राणाद्वैश्या वार्ताप्रवेशनात् ॥ ये तु श्रुतेर्द्रुतिं प्राप्ताः शूद्रास्तेनेह कीर्तिताः । क्षमा दमो दया दानं सत्यं शौचं धृतिर्घृणा । मार्दवार्जवसन्तोषानहङ्कारतपःशमाः ॥ धर्मो ज्ञानमपैशुन्यं ब्रह्मचर्यममूढता । ध्यानमास्तिक्यमद्वेषो वैराग्यं च शमात्मता ॥ पापभीरुत्वमस्तेयममात्सर्यमतृष्णता । नैःसङ्ग्यं गुरुशुश्रूषा मनोवाक्कायसंयमः ॥ य एवंभूतमाचारमनुतिष्ठन्ति मानवाः । ब्राह्मण्यं पुष्कलं तेषां नित्यमेव प्रवर्धते ॥ यत्र वा तत्र वर्णे वा उत्तमाधममध्यमाः । निवृत्तः पापकर्मभ्यो ब्राह्मणः

---

नेति व्यज्यते । तदेवोपपादयति—परमिति । तर्हि कुत्र हार्दं ? तदाह—किन्त्विति । इह प्राचां पक्ष

लशुनादिकं तस्य मतिपूर्वं भक्षणम्, जैह्म्यं—स्वगुरुविषये कपटाचरणम्, उत्कर्षे—राजकुलादावात्मश्लाघायामचतुर्वेदोऽपि चतुर्वेदोऽस्मीत्यनृतभाषण"मिति ॥ १८६ ॥

स विधीयते ॥ शूद्रोऽपि शीलसम्पन्नो ब्राह्मणादधिको भवेत् । ब्राह्मणो विगताचारः शूद्राद्धीनतरो भवेत् ॥" इत्याहुः ।

प्राञ्चस्तु-यद्यप्येतानि वचनानि जन्मविशेषनिबन्धनवर्णभेदप्रतिक्षेपपराणीव । परं न तत्प्रतिक्षेपे प्रवृत्तानि किन्तु ब्रह्मविज्ञानरूपब्राह्मण्येऽसति जन्मनिबन्धनविशेषोऽसत्कल्पः, यश्च तन्मात्रकृताभिजनमदः सर्वथा नरकायैव, यश्च अब्राह्मणकुले जातः स पुनरुक्तब्रह्मविज्ञानरूपब्राह्मण्यसम्पन्नश्चेज्जात्योत्तमैरपि परं धर्मं जिज्ञासमानैराश्रयणीय इति ज्ञापनाय प्रवृत्तानि प्रौढिवादरूपाणीत्याचक्षते । अबाधेन प्रमाणानि ये नयन्ति मिथो बुधाः । प्रमाणशरणाः प्राञ्चः प्रमातारस्तु ते मताः ॥ विस्तरस्त्वन्यत्र । पलाण्डुलशुनाद्यमिति । आद्यशब्दाद्गृञ्जनादिपरिग्रहः ॥ १८६ ॥

एव प्रामाणिक इति कारिकयोपसंहरति—अबाधेनेति ॥ १८६ ॥

---

**स्नानं सन्ध्यां च गायत्रीजपं श्रीविष्णुपूजनम् ।**
**अकृत्वा वैश्वदेवं च कर्तव्यं नैव भोजनम् ॥ १८७ ॥**

स्नानमिति । स्नानादीन्यकृत्वा भोजनं नैव कर्तव्यमिति सम्बन्धः । तत्र स्नानं वारुणमेव मुख्यम्, तच्च शक्तस्य शीतोदकेनैव, अशक्तस्य तूष्णोदकेने-

रागतः क्रियमाणं कलञ्जादिदुष्टद्रव्यभोजनं निषिद्धम् । अथाकृत्वा स्नानादि नित्यकर्म यथेच्छं क्रियमाणं भोजनं प्रतिषिध्यते—स्नानमिति । अस्नातस्य सन्ध्यादिसर्वकर्मानर्हत्वात्प्रथमतस्तस्य ग्रहणम् । तथाच वचनम्—"अस्नातश्च पुमान्नार्हो जपाग्निहवनादिषु । प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥ अस्नात्वा नाचरेत्कर्म जपहोमादि किञ्चन । लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ॥ अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः । स्रवत्येव दिवारात्रं प्रातःस्नानं विशोधनम् ॥ प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टफलं हि तत् । सर्वमर्हति शुद्धात्मा प्रातःस्नायी जपादिकम् ॥" इति । स्नानं तु षोढा—"नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् । क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्तितम् ॥" इति वचनात् । अत्र नित्यप्रकरणान्नित्यं स्नानं स्नानशब्देनोच्यते । तत्रच प्रातःस्नानस्य सर्वाश्रमसाधारण्येन नित्यता । "अस्नातस्तु पुमान्नार्हो जपाग्निहवनादिषु । प्रातःस्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥" इत्युक्तेः । मध्याह्नस्नानस्य चाश्रमविशेषापेक्षया नित्यता । "प्रातर्मध्याह्नयोः स्नानं वानप्रस्थगृ-

स्नानस्य प्रथमं ग्रहणे निमित्तमाह—अस्नातस्येति । स्नानविशेष एवात्र ग्राह्य इति ज्ञापयितुं स्नानं विभजते—स्नानं त्विति । किं तन्नित्यं स्नानं यदिह ग्राह्यमुच्यते तत्राह—तत्र चेति । अथाश्रमविशेषमधिकृत्य नित्यस्नानमाह—मध्याह्नेति । स्नाने विशेषमाह—स्नानं च समन्त्र-

त्युक्तं प्राक् । "स्नानमब्दैवतैर्मन्त्रै"रित्यादिस्मृतिभिः समन्त्रकमुक्तं तत्प्रातस्तु सङ्क्षेपेणैव कर्तव्यमन्यथा होमकालातिक्रमापत्तेः । "प्रातः सङ्क्षेपतः स्नानं मध्याह्ने तु सविस्तर"मिति कात्यायनोक्तेः। तत्र विशेषो नृसिंहपुराणे—"नद्यां स्रोतस्सु च स्नायात्प्रतिस्रोतःस्थितो द्विजः । तडागादिषु तोयेषु प्रत्यर्कं स्नानमाचारे"-दिति । तच्च सूर्यदर्शनात्प्रागेव कार्यम्। तदुक्तं स्कान्दे—"प्रातः प्रातस्तु यत्स्नानं सञ्जाते ह्यरुणोदये । प्राजापत्यसमं प्राहुस्तन्महाघविघातकृत् । उत्साहमेधासौभाग्यरूपसम्पत्प्रवर्तकम् । मनःप्रसन्नताहेतु प्रातःस्नानं प्रशस्यते ॥ नोपसर्पन्ति वै दुष्टाः प्रातःस्नायिजनं क्वचित् । दृष्टादृष्टफलं तस्मात्प्रातःस्नानं समाचरेत् ॥" इति ।

सन्ध्यां—सन्ध्याख्यां देवताम् । अत्राकृतवेलस्यानुपास्येलर्थः । सन्ध्याशब्दो हि योगरूढस्त्रिषु दृश्यते—"ब्राह्मणोऽहरहः सन्ध्यामुपासीते"ति श्रुतौ देवतायाम्, "ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयु"रिति स्मृतावुपासनायाम्, "प्रातःसन्ध्यां सनक्षत्रा"मिति स्मृतौ काले चेति। यथासम्भवं तद्योजना कर्तव्या। सन्ध्याख्ये काले सन्ध्याख्यां भगवच्छक्तिं सम्यग्ध्यायेदिति। तत्र सम्यग्ध्यायत इति सन्ध्येति देवतायाम्, सम्यग्ध्यानं सन्ध्येत्युपासनायाम्, सम्यग्ध्यायन्त्यस्यामिति सन्ध्येति काले,

---

हृस्ययोः । यतेस्त्रिषवणं प्रोक्तं सकृत्तु ब्रह्मचारिणः॥" इति वचनात् । नित्यस्येव नैमित्तिकस्यापि वा परिग्रहोऽस्तु, भोजननिषेधप्रकरणात् । उक्तं च नैमित्तिकस्य लक्षणम्—"चण्डालशवयूपांश्च स्पृष्ट्वा स्नातां रजस्वलाम् । स्नानार्हस्तु यदाप्नोति स्नानं नैमित्तिकं हि तत् ॥" इति । स्नानं च समन्त्रकमेव कार्यम्। उक्तं च—"मन्त्रपूतं जले स्नानं प्राहुः स्नानफलप्रदम् । न वृथा वारिमग्नानां यादसामिव तत्फलम् ॥ मत्स्यकच्छपमण्डूकास्तोये मग्ना दिवानिशम् । वसन्ति चैव ते स्नानान्नाप्नुवन्ति फलं क्वचित् ॥" इति । समन्त्रकं च स्नानं येषां मन्त्रेऽधिकारः, नान्येषाम् । उक्तं च—"ब्रह्मक्षत्रविशां चैव मन्त्रवत्स्नानमिष्यते । तूष्णीमेव तु शूद्रस्य स्त्रीणां च कुरुनन्दन ! ॥" इति । विस्तरोऽन्यत्र बोध्यः । सन्ध्या—"अहोरात्रस्य यः सन्धिः सूर्यनक्षत्रवर्जितः । सा तु सन्ध्या समाख्याता मुनिभिस्तत्त्वदर्शिभि"रित्युक्तः कालविशेषः सन्ध्या । तत्र कर्तव्यः क्रियाविशेषोऽत्र सन्ध्याशब्देन लक्ष्यते ।सन्धौ भवा वा क्रिया सन्ध्या । तथा च वचनम्—"उपास्ते सन्धिवेलायां निशाया दिवसस्य च । तामेव सन्ध्यां तस्मात्तु प्रवदन्ति मनीषिणः ॥" इति । सन्ध्याया अकरणे प्रत्यवायः स्मर्यते—"न तिष्ठति तु यः पूर्वां नोपास्ते

---

कर्मैवेति । अविशेषेण सर्वेषां समन्त्रके स्नाने प्राप्ते आह—समन्त्रकं चेति । सन्ध्याशब्दं व्याचष्टे—सन्ध्येत्यादिना । सति शक्यार्थसम्भवे लक्ष्यार्थाश्रयणमनुचितमित्यस्वरसादाह—सन्धौ भवा वेति । करणाकरणयोरर्थानर्थावहत्वोपपादनेन सन्ध्याया अवश्यकर्तव्यतां द्रढयति—सन्ध्याया अकरण इत्यादिना । गायत्रीजपशब्दार्थं व्याचष्टे—गायत्रीजपमित्यादिना । नित्यं चैतदिति ।

इति कर्मभावाधिकरणेषु व्युत्पत्तिः। दिनरात्र्योः सन्धिरेव सन्ध्येति वा कालार्थे। मध्याह्ने तु पूर्वाह्णापराह्णयोः सन्धिरस्तीति न सन्ध्यात्वमव्याप्तमिति ज्ञेयम्। अत एवोक्तमाचारखण्डे—"सन्ध्योपनयमारभ्य सायं प्रातश्च कालयोः। मध्याह्ने च प्रकर्तव्या यावत्प्राणस्य धारणम्। सन्ध्याकालस्तूदयात्प्राग्विप्रस्य द्विमुहूर्तकः। क्षत्रियस्य तदर्धं स्यात्तदर्धं स्याद्विशोऽप्युते"ति। आचारमयूखे धर्मसारे च—"उत्तमा तारकोपेता मध्यमा लुप्ततारका। अधमा सूर्यसहिता प्रातःसन्ध्या त्रिधा मता॥ उत्तमा सूर्यसहिता मध्यमा लुप्ततारका। अधमा तारकोपेता सायंसन्ध्या त्रिधा

यश्च पश्चिमाम्। स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः॥ सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु। सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता॥ जीवमानो भवेच्छूद्रो मृतः श्वा चोपजायते॥ उपतिष्ठन्ति वै सन्ध्यां ये न पूर्वां न पश्चिमाम्। व्रजन्ति ते दुरात्मानस्तामिस्रं नरकं नृप!॥ योऽन्यत्र कुरुते यत्नं धर्मे कार्ये द्विजोत्तमः। विहाय सन्ध्याप्रणतिं स याति नरकायुतम्॥" इति। प्रशस्यते च सन्ध्या—"सन्ध्यामुपासते ये तु सततं संशितव्रताः। विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम्॥ यदह्ना कुरुते पापं कर्मणा मनसा गिरा। आसीनः पश्चिमां सन्ध्यां प्राणायामैस्तु हन्ति तत्॥ यद्रात्र्या कुरुते पापं कर्मणा मनसा गिरा। पूर्वसन्ध्यामुपासीनः प्राणायामैर्व्यपोहति॥ ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः। प्रज्ञां यशश्च कीर्तिं च ब्रह्मवर्चसमेव च॥" इति। सन्ध्याप्रकारस्त्वन्यत्र द्रष्टव्यः। गायत्रीजपम्—सन्ध्याङ्गभूतोऽयं गायत्र्या जपः। आह च याज्ञवल्क्यः—"सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः। गायत्रीं शिरसा सार्धं जपेद्व्याहृतिपूर्विकाम्॥ प्रतिप्रणवसंयुक्तां त्रिरयं प्राणसंयमः। प्राणानायम्य सम्प्रोक्ष्य तृचेनाब्दैवतेन तु॥ जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्। सन्ध्यां प्राक् प्रातरेवं हि तिष्ठेदासूर्यदर्शनात्॥" इति। मनुरपि—"आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः। शुचौ देशे जपन् जप्यमुपासीत यथाविधि॥ पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति। पश्चिमां तु समासीनो मलं हन्ति दिवाकृतम्॥" इति। वाचिकोपांशुमानसभेदेन त्रैविध्यं जपस्य स्मर्यते—"त्रिविधो जपयज्ञः स्यात्तस्य भेदं निबोधत। वाचिकश्च उपांशुश्च मानसस्त्रिविधः स्मृतः॥" इति। विशेषस्त्वन्यतः। श्रीविष्णुपूजनम्—श्रीमतो विष्णोर्यथाविध्यर्चनम्। नित्यं चैतत्। आह च मनुः—"नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम्। देवताभ्यर्चनं चैव" इति। पराशरोऽपि—"सन्ध्या स्नानं जपो होमो देवतानां च पूजनम्।" इति। याज्ञवल्क्यश्चाह—"स्नात्वा देवान्पितॄंश्चैव तर्पयेदर्चयेत्तथा।" व्याख्यातं चैतत्—"हरिहरहिरण्यगर्भप्रभृतीनामन्यतमं यथावासनमाराधये"दिति विज्ञानेश्वरेण। "मोक्षमिच्छेज्जनार्दना"दिति वचनान्मुमुक्षुभिस्तु विष्णुरेव सेव्य इत्यभिप्रेत्य विष्णुपूजनमिति विशेषोक्तिः।

यद्यपि नित्येन स्नानादिना सह पाठान्नित्यता गम्यत एव, अथापि केषांचिदनित्यत्वशङ्काप्रसङ्गात्, तत्परिहाराय तथा व्याख्यातम्। तत्र प्रमाणान्याह—आह चेति। ननु सामान्यतः स्मर्यते नाम देवताभ्यर्चनमिति, कथमिह विशेषतो विष्णुपूजननित्याशङ्कायामाह—मोक्षमित्यादिना। वैश्वदे-

मता ॥ उत्तमा सङ्गवादूर्ध्वं मध्यमा कुतपात्परम् । अपराह्णेऽधमा-ज्ञेया मध्यसन्ध्या त्रिधा स्मृता ॥" इति । तद्विधिस्तु स्वस्वगृह्यसूत्रानुसारेण ज्ञेयः । "हस्ताभ्यां स्वस्तिकं कृत्वा प्रातस्तिष्ठेद्दिवाकरम् । मध्याह्ने तु ऋजू बाहू सायं मुकुलितौ करा"विति स्नानदीपिकायां कश्यपेनोपस्थाने विशेषश्चोक्तः । अर्घ्यदाने च कालविशेषमाह व्यासः—"कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम् । आदित्याभिमुखं तिष्ठंस्त्रिरूर्ध्वं सन्ध्ययोः क्षिपेत् । मध्याह्ने तु सकृदेव क्षेपणीयं द्विजातिभि"रिति । छन्दोगैस्तु सायंकालेऽर्घ्यदानमुपविश्य कार्यमिति कृत्यचिन्तामणौ स्थितम् । चकाराद्धोमकर्मग्रहणम् । "निरग्निना तु सूर्यप्रजापतिनामभ्यां दिवाऽग्निप्रजापतिनामभ्यां रात्रौ च सन्ध्यान्तेऽञ्जलिप्रक्षेपः कार्यः ।

जपनं जपः, गायत्र्याः—प्रसिद्धगायत्रीमन्त्रस्य जपस्तम् । तत्रोपनयनसंस्कारानन्तरं गायत्रीजपाधिकारः । वैष्णवदीक्षाग्रहणानन्तरमष्टाक्षरजपाधिकार इति ज्ञेयम् । गायत्रीजपविधिमाह हारीतः—"प्रणवव्याहृतियुतां गायत्रीं च जपेत्ततः । अष्टाधिकं सहस्रं वा शतं वा दश शक्तित" इति । अष्टाधिकमिति शतस्यापि विशेषणं ज्ञेयम् । वृद्धयाज्ञवल्क्यश्च—"तत्रैकप्रणवा ग्राह्या गृहस्थैर्जपकर्मणि । गृहस्थवच्च जप्तव्या सा चैव ब्रह्मचारिभिः । प्रातर्नाभौ करं धृत्वा मध्याह्ने हृदये तथा । सायं नासाग्र आसीत त्रिविधं जपलक्षण"मिति । अन्यत्प्रागुक्तम् ।

श्रीविष्णोः—शालग्रामस्वरूपस्य प्रतिमास्वरूपस्य वा पूजनं—नानाविधोपचारैः समग्रकमर्चनं च । उपचाराश्च चतुःषष्टिरष्टत्रिंशत्षोडश द्वादश दश पञ्च वेति पञ्चरात्रे पूजकशक्त्यनुसारेणोक्ताः सन्ति, तत्र स्वशक्त्यनुसारी पक्षो ग्राह्यः । तदुक्तमाचारचिन्तामणौ—"सपर्या विविधाः प्रोक्तास्तासामेकां समाश्रये"दिति । विशेषः प्रागेवोक्तः । "पञ्चकालं त्रिकालं वा श्रद्धया विष्णुमर्चयेत् । अशक्तस्त्वेककालं वा शुद्धभावेन शक्तित" इति हारीतश्चाह ।

वैश्वदेवमिति । पञ्च महायज्ञानित्यर्थः । तांश्चाह याज्ञवल्क्यः—"बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः । भूतपित्रमरब्रह्ममनुष्याणां महामखा" इति ।

---

उक्तं च नृसिंहपुराणे—"जलदेवान्नमस्कृत्य ततो गच्छेद्गृहं बुधः । पौरुषेण तु सूक्तेन ततो विष्णुं समर्चये"दिति । वैश्वदेवम्—अस्य च सर्वाश्रमसाधारण्याभावेऽपि यथासम्भवमन्वयो

---

चशब्दं व्याचष्टे—वैश्वदेवमिति । वैश्वदेवशब्दस्य भूतयज्ञपितृयज्ञव्यावृत्तं देवयज्ञमात्रसाधारणं

कात्यायनश्चाह—"अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजन"मिति। अध्यापनं–शिष्याणां पाठनं स्वयं चाध्ययनमपि। "ब्राह्मणो यत्स्वाध्यायमधीयीतैकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञः सन्तिष्ठत" इति श्रुतेः। चुल्ल्यादौ वैश्वदेवहोमनिषेधमाह वसिष्ठः—"न चुल्ल्यां नायसे पात्रे न भूमौ न च खर्परे। वैश्वदेवं प्रकुर्वीत कुण्डे वा स्थण्डिलेऽपि वे"ति।

एतान्यकृत्वा भोजनं न कार्यम्। "स्नानं सन्ध्या तर्पणादि जपहोमसुरार्चनम्। उपवासवता कार्यं सायंसन्ध्याहुतीर्विने"ति वाराहोक्तेः। अकरणे दोषमाह वृद्धपराशरः—"अस्नात्वाऽश्नन्मलं भुङ्क्ते अजप्त्वा पूयशोणितम्। अजुह्वंश्च कृमीन्कीटानददच्च शकृत्तथे"ति। तथा–"सन्ध्या येन न विज्ञाता ज्ञात्वा वा नह्युपासिता। स जीवन्नपि शूद्रः स्यान्महापातकसंयुतः॥ गायत्रीं यो न जानाति ज्ञात्वा तां न जपेच्च यः। स द्विजः शूद्र एवास्ति हव्यकव्यबहिष्कृत" इति च। "यो नार्चयति भक्तेशं स द्विजोऽत्र परत्र च। न सुखं प्राप्नुयात्किञ्चिद्भ्राम्यन्नीचासु योनिष्वि"ति च। स्कन्दश्चाह—"अकृत्वा वैश्वदेवं तु भुञ्जते ये द्विजाधमाः। इह लोकेऽन्नहीनाः स्युः काकयोनिं व्रजन्त्यथे"ति। चकाराद्बालादीनसम्भोज्य च, "यस्तु मुख्यो भवेद्यत्र स सम्भोज्य निजाश्रितान्। ततः स्वयं तु भुञ्जीत समानं तैरनापदी"ति स्कान्दात्। "बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः। सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजन"मिति याज्ञवल्क्यीयाच्च। पाकभेदस्तु न कार्यः। "अतिथीनां च सर्वेषां प्रेष्याणां स्वजनस्य च। सामान्यं भोजनं भृत्यैः पुरुषस्य प्रशस्यत" इति मोक्षधर्मोक्तेः। "गृहस्थः पाकभेदेन पात्रभेदेन मस्करी। नारी पुरुषभेदेन रौरवं नरकं व्रजे"दिति व्यासो-

बोध्यः। देवयज्ञे पितृयज्ञे भूतयज्ञे चास्ति विश्वेषां देवानामिज्यतयान्वयः, तद्विश्वेदेवा यत्र इज्यन्ते तद्वैश्वदैविकमित्यर्थपर्यालोचने त्रिष्वपि वैश्वदेवशब्दः प्रवर्तेत। तथापि विश्वेभ्यो देवेभ्यः स्वाहेति यत्र पठ्यते तत्रैतन्नाम मुख्यम्। तस्मात् वैश्वदेवमिति देवयज्ञ उच्यते। इदं चान्येषामुपलक्षकम्। अस्तु वा वैश्वदेवशब्देन त्रयाणां सङ्ग्रहः। अन्यस्योपलक्ष्यता। स्मर्यते च देवतार्चनानन्तरं वैश्वदेवस्य कर्तव्यता—"पौरुषेण तु सूक्तेन ततो विष्णुं समर्चयेत्। वैश्वदेवं ततः कुर्याद्बलिकर्म तथैव च॥ पञ्चमे च तथा भागे संविभागो यथार्हतः। पितृदेवमनुष्याणां कीटानां चोपदिश्यते॥ वैश्वदेवं प्रकुर्वीत स्वशाखाविहितं ततः। संस्कृतान्नैर्हि विविधैर्हविष्य-

प्रवृत्तिनिमित्तमतिप्रसङ्गवारणपूर्वकमाह—देवयज्ञे इत्यादिना। यज्ञान्तरस्याविधानान्न्यूनतां परिहरति—इदं चान्येषामिति। अन्यस्येति। मनुष्ययज्ञादेः। वैश्वदेवस्य देवतार्चनानन्तरकर्तव्यत्वे प्रमाण-

क्लेशः। भोजनं चापोशानपूर्वकं कार्यमन्यथा दोषसरणात्। तथाह संवर्तः— "अपोशानमकृत्वान्नं यो भुङ्क्तेऽनापदि द्विजः। भुञ्जानश्च यदा ब्रूयाद्गायत्र्यष्टशतं जपेदि"ति। अत्याहारस्तु न कर्तव्यः। अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम्। अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जये"दिति काशीखण्डोक्तेः। विदुरश्चाह— "मितं भुङ्क्ते संविभज्याश्रितेभ्यो मितं स्वपित्यमितं कर्म कृत्वा। ददात्यमित्रेष्वपि याचितः संस्तमात्मवन्तं प्रजहत्यनर्थाः॥ गुणाश्च षण्मितभुक्तं भजन्ते आरोग्यमायुश्च बलं सुखं च। अनाविलं चास्य भवत्यपत्यं न चैनमाद्यून इति क्षिपन्ती"ति। भोजनविधिविशेषस्तु स्मृतिग्रन्थेभ्योऽवसेयः। अकृत्वेत्यत्राशौचदिनवर्जमिति ज्ञेयम्। तत्रापि मानसं सन्ध्यादि कर्म तु भवत्येव। तथा चाह निर्णयसिन्धौ पुलस्त्यः—"सूतके मृतके चैव सन्ध्याकर्म समाचरेत्। मनसोच्चारयन्मन्त्रान्प्राणायाममृते द्विजः"॥ इति। यच्च विष्णुपुराण उक्तं—"सर्वकालमुपास्या तु सन्ध्यायाः पार्थिवेष्यते। अन्यत्र सूतकाशौचविभ्रमातुरभीरिते"ति। तत्पूर्णसन्ध्यापरम्। "अर्घ्यान्ता मानसी सन्ध्या कुशवारिविवर्जिते"ति शुद्धिदीपे च्यवनोक्तेः। पैठीनसीभरद्वाजौ तु समन्त्रकमर्घ्यदानमाहतुः—"सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्यं ध्यायन्नमस्कुर्यात्, गायत्रीं सम्यगुच्चार्य सूर्यायार्घ्यं निवेदये"दिति। देवपूजाऽपि मानसैव कार्या। वैश्वदेवस्य तु तावत्कालं लोप एवेति मिताक्षरादेरवगन्तव्यम्॥ १८७॥

व्यञ्जनान्वितैः॥" इति। स्मर्यते च पञ्चमहायज्ञानामवश्यानुष्ठेयत्वम्—"बलिकर्मस्वधाहोमस्वाध्यायातिथिसत्क्रियाः। भूतपित्रमरब्रह्ममनुष्याणां महामखाः॥ पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहः सदा। कण्डिनी पेषिणी चुल्ली जलकुम्भ उपस्करः॥ एतानि वाहयन्विप्रो वध्यते वै मुहुर्मुहुः। एतासां पावनार्थाय पञ्चयज्ञाः प्रकीर्तिताः॥ पञ्च सूना गृहस्थस्य चुल्लीपेषिण्युपस्करः। कण्डिनी चोदकुम्भश्च वध्यते यस्तु वाहयन्॥ तासां क्रमेण सर्वासां निष्कृत्यर्थं महर्षिभिः। पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम्॥ अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्। होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥ पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः। स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते॥ देवतातिथिभृत्यानां पितॄणामात्मनश्च यः। न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति॥" इति। एतानि स्नानादीनि नित्यानि कर्माण्यकृत्वा भोजनं नैव कार्यम्। स्मर्यते च तथाकरणे प्रत्यवायः—"अस्नात्वाऽश्नन्मलं भुङ्क्ते अजप्त्वापूयशोणितम्। अहुत्वा च कृमीन्कीटानदत्त्वा शकृत्तथा॥ यो मोहादथवाऽऽलस्यादकृत्वा देवतार्चनम्। भुङ्क्ते स याति नरकं सूकरेष्वपि जायते॥ अकृत्वा वैश्वदेवं तु भुञ्जन्ते ये द्विजाधमाः। इह लोकेऽन्नहीनाः स्युः काकयोनिं व्रजन्त्यथ॥" इति॥ १८७॥

माह—स्मर्यते चेति। पञ्चमहायज्ञानामवश्यानुष्ठेयत्वे प्रमाणमाह—स्मर्यते चेति। तथाकरणे—स्नानादिकमकृत्वा भोजनकरणे॥ १८७॥

**साधवो येऽथ तैः सर्वैर्नैष्ठिकब्रह्मचारिवत् ।**
**स्त्रीस्त्रैणसङ्गादि वर्ज्यं जेतव्याश्चान्तरारयः ॥ १८८ ॥**

साधूनां विशेषधर्मानाह नवभिः—साधव इति । अथेति भिन्नोपक्रमे । ये साधवः–साधुसंज्ञास्त्यागिनो मदाश्रिताः । स्युरिति शेषः । तैः सर्वैस्तु । नैष्ठिकब्रह्मचारिवत् । स्त्रीणां स्त्रैणानां च सङ्गः–बुद्धिपूर्वमीक्षणादिप्रसङ्गः, स आदिर्यस्य तत् कर्म वर्ज्यम् । आदिशब्दात्तैलाभ्यङ्गादिग्रहणम् । अन्यथा त्वधःपातापत्तेरिति भावः । "दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः । प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ॥ योषिद्धिरण्याभरणाम्बरादिद्रव्येषु मायारचितेषु मूढः । प्रलोभितात्मा ह्युपभोगबुद्ध्या पतङ्गवन्नश्यति नष्टदृष्टिः ॥ पदापि युवतिं भिक्षुर्न स्पृशेद्दारवीमपी"त्यादिश्रीदत्तात्रेयवाक्यात् । "न सम्भाषेत्स्त्रियं काञ्चित्पूर्वदृष्टां च न स्मरेत् । कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥ एतच्चतुष्टयं मोहात्स्त्रीणामाचरतो यतेः । चित्तं विक्रियतेऽवश्यं तद्विकारात्प्रणश्यती"ति मेधातिथिजाबालस्मृतेश्च । "योषितां च कथा न श्रव्ये"त्यादिमोक्षधर्मोक्तेश्च । "सङ्गं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिन्द्रियाणि । एकश्चरन् रहसि चित्तमनन्त ईशे युञ्जीत तद्व्रतिषु साधुषु चेत्प्रसङ्ग" इति सौभर्युक्तेश्च ॥

तथा–तैः । अन्तरे–अन्तःकरणे भवा आन्तरास्ते च तेऽरयः–शत्रवः कामादयश्च ते । जेतव्याः–त्यक्तव्या इत्यर्थः । तथा चाह श्रीभगवान्—"त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः । कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजे"दिति । कामस्तु विशेषेण जेतव्य इत्याह स एव—"काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ धूमेनाव्रियते वह्निर्यथादर्शो मलेन च । यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय ! दुष्पूरेणानलेन च ॥ इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते । एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ! । पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञा-

---

अथारम्भे निर्दिष्टान्साधून्विशिष्यादिशति—साधव इति । अथेति प्रकरणभेदज्ञापनाय । साधवः–नार्थमात्रेणास्य पदस्य प्रवृत्तिः, विशेषे परिभाषितमेतदादावेव । ये इति

---

साधुशब्दस्यावयवार्थमात्रपरतायामतिप्रसक्तेः प्रकृतानुपयोगाद्विवक्षितमर्थं स्मारयति—नार्थमात्रेणेति । अर्थमात्रं–साधुपदप्रवृत्तिनिमित्तं साधुताख्यगुणमात्रम् । तत्प्रसिद्ध्यभिप्राय इति । सा–

ननाशनम् ॥ इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥ एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना । जहि शत्रुं महाबाहो ! कामरूपं दुरासद"मिति । क्रोधलोभयोरपि विशेषेण हेयत्वमुक्तं श्रीभागवते–"संयच्छ रोषं भद्रं ते प्रतीपं श्रेयसां परम् । श्रुतेन भूयसा राजन्नगदेन यथामयम् ॥ येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशम् । न बुधस्तद्वशं गच्छेदिच्छन्नभयमात्मनः ॥" तथा–"कामस्यान्तं हि क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् । जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ पण्डिता बहवो राजन्बहुज्ञाः संशयच्छिदः । सदसस्पतयोऽप्येके असन्तोषात्पतन्त्यधः ॥ पुंसोऽयं संसृतेर्हेतुरसन्तोषोऽर्थकामयोः । यदृच्छयोपपन्नेन सन्तोषो मुक्तये स्मृतः ॥ यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः । लोभः स्वल्पोऽपि तान् हन्ति श्वित्रं रूपमिवेप्सित"मित्यादि च । लोभस्य तु सकलपापमूलत्वाद्धेयत्वं भारतीयापद्धर्मे सविस्तरमुक्तं वेदितव्यम् । अन्तरारिजयोपायाश्च श्रीभागवते नारदेनोक्ताः–"असङ्कल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् । अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ आन्वीक्षिक्या शोकमोहौ दम्भं महदुपासया । योगान्तरायान्मौनेन हिंसां कायाद्यनीहये"त्यादिभिः ॥ १८८ ॥

---

निर्देशस्तत्प्रसिद्धभिप्रायः । तैः सर्वैः नैष्ठिकब्रह्मचारिभिरिव स्त्रीणां स्त्रीसङ्गिनां च सङ्गस्त्याज्यः । अन्यथा मुमुक्षया परिगृहीतस्य ब्रह्मचर्यव्रतस्य मुक्त्युपायसिद्धौ मुख्योपकारकस्य भङ्गापत्तेः । स्त्रीस्त्रैणसङ्गस्य मुक्तिविरोधित्वं सुप्रसिद्धम् । ब्रह्मचारिप्रकरणे व्याख्यातं चैतत् । नैतावता कृतकृत्यता, विषयसङ्गमात्रं तु त्याज्यम् । अन्यथा तत्सङ्गेन ततो विलक्षणे आत्मस्वरूपे निष्ठाया असम्भवात् । तस्मात्कामः सर्वथा जेतव्यः । स ह्यान्तरः शत्रुरित्यभिप्रेत्याह—जेतव्याश्चान्तरारय इति । आन्तराः-आभ्यन्तराः, अरयः-कामस्तन्मूलाश्च क्रोधादयः । शब्दादयो बाह्याः शत्रवः इमे त्वान्तराः । अल्पमात्रावशिष्टोऽप्यान्तरोऽनर्थाय भूयसे । उक्तं च गीतायाम्—"काम एष क्रोध एष रजोगुणसमुद्भवः । महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च । यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा । कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥" इति ॥ १८८ ॥

---

पूर्वं या कृता साधुपरिभाषा तत्प्रसिद्धिः । तेषां लोकविदितता या प्रसिद्धिरिति वा । नैतावतेत्यादिना जेतव्याश्चान्तरारय इत्येतदवतारयति ॥ १८८ ॥

सर्वेन्द्रियाणि जेयानि रसना तु विशेषतः ।
न द्रव्यसङ्ग्रहः कार्यः कारणीयो न केनचित् ॥ १८९ ॥

सर्वेन्द्रियाणीति । तैरिति सर्वत्रान्वेतव्यम् । सर्वेन्द्रियाणि—ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि मनश्चेत्यर्थः। जेयानि—जेतव्यानि । "वाचं यच्छ मनो यच्छ प्राणं यच्छेन्द्रियाणि च । आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वने ॥" "वन्ध इन्द्रियविक्षेपो मोक्ष एषां च संयम" इति च श्रीभागवते भगवदुक्तेः। "इन्द्रियाण्येव सर्वाणि जेतव्यानि प्रयत्नतः । साधुना धर्मशीलेन भ्रश्यत्येवान्यथा पथः॥" इति वसिष्ठोक्तेश्च । "जितेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः । विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिते"ति श्रीभगवद्गीतायां भगवदुक्तेश्च । भारते च—"तपोमूलमिदं सर्वं यन्मां विप्रानुपृच्छसि । इन्द्रियाण्येव संयम्य तपो भवति नान्यथा ॥ इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ । निगृहीतविसृष्टानि स्वर्गाय नरकाय च ॥ इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् । सन्नियम्य तु तान्येव ततः सिद्धिमवाप्नुयात् ॥ षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति । न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥" इति । रसना—रसनेन्द्रियं तु विशेषतो जेया । तज्जयस्य सर्वेन्द्रियजलमूलत्वादिति भावः। "जितं सर्वं जिते रसे" इत्युक्तत्वात्। अन्यथा तु "औपस्थ्यजैह्वयकार्पण्याद्गृहपालायते जनः" "जिह्वयातिप्रमाथिन्या जनो रसविमोहितः । मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथे"त्युक्तानर्थापत्तिः स्यात् । अत एवौषधवदशनमाचरेदित्यारुणेयश्रुत्या रसास्वादो निषिध्यते । इन्द्रियनिग्रहाकरणे त्वनर्थापत्तिमाह भगवानेव—

---

अनादिवासनायन्त्रितमनस्कैः सहसा कामादयो जेतुमशक्या नाम, तदादाविन्द्रियाणां विषयमभिधावतामुपरोधः कार्यः । एवं यतमानस्य कालेन कामोपशान्तिः स्यात् । उक्तं च—"यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः । इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥" इत्यभिप्रेत्याह—सर्वेन्द्रियाणीति। श्रोत्रादीनि सर्वाणीन्द्रियाणि जेतव्यानि—तत्तद-

---

अनन्तरश्लोकमवतारयति—अनादीति । तस्य प्रज्ञा प्रतिष्ठितेति। क्रमशो विषयानभिषङ्गपरिपाकद्वारा प्रतिष्ठिता भवतीत्यर्थः । आन्तरारिजयस्य मनोजय एव पर्यवसानात्, तस्य पूर्वश्लोके विधानात्पुनरिह मनोजयस्य विधानं नातिप्रयोजनकमित्यतः सर्वशब्दस्य बाह्येन्द्रियसाकल्यपरतामभिप्रेत्याह—श्रोत्रादीनीति । इन्द्रियजयस्य सीमा सन्निहितेऽपि विषयेऽक्षोभः, स चानपगते कामे न

"ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते । सङ्गात्सञ्जायते कामः कामात्क्रोधोऽभिजायते ॥ क्रोधाद्भवति सम्मोहः सम्मोहात्स्मृतिविभ्रमः । स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यती"ति ।

किञ्च—तैः । द्रव्यस्य—नाणकस्य, येन तदुत्पत्तिः स्यात्तादृशनवीनवस्त्रपात्रादेर्वा सङ्ग्रहः—स्वसमीपे रक्षणम् । न कार्यः । केनचित्—अन्यपुरुषद्वारा । न कारणीयः—स्वार्थं न कारयितव्यश्च । सकलविषयसुखसम्पादनमूलत्वात्तस्येति भावः । धनप्रसङ्गोऽपि स्त्रीप्रसङ्गवत्सर्वथा परिहार्य इति तात्पर्यम् । सुवर्णस्य कलिनिवासस्थानत्वं च श्रीभागवते प्रसिद्धम् । अत एव परमहंसोपनिषदि श्रूयते—"यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं चेत्स ब्रह्महा भवेत् । यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत्स पौल्कसो भवेत् । यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं चेत्स आत्महा भवेत् । तस्माद्भिक्षुणा हिरण्यं न द्रष्टव्यं न स्प्रष्टव्यं न ग्राह्यं चे"ति । जीवन्मुक्तिविवेके स्मृतिश्च—"पतत्यसौ ध्रुवं भिक्षुर्यस्य भिक्षोर्द्वयं भवेत् । धीपूर्वो रेतउत्सर्गो द्रव्यसङ्ग्रह एव चे"ति ॥ १८९ ॥

---

र्थेभ्यः प्रतिसंहर्तव्यानि । यथा कूर्मो यतः कुतश्चिदुपश्रुत्य शब्दमात्रं सहसोपसंहरति सर्वाङ्गं, तथा सन्निहितमात्रे तत्तदर्थे तानि तानीन्द्रियाणि सहसोपसंहरेत्, यद्येकमपीन्द्रियं प्रसरेत् न कामोपशान्तिः स्यात्, न ज्ञाननिष्ठा सिध्येत् । उक्तं च मनुना—"इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् । तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम् ॥" इति भावः । तत्रापि रसना विशेषतो जेतव्या, सति रसनालौल्ये आहारशुद्धेरप्रसक्त्या सत्त्वशुद्धेरसंभवात् । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृति"रिति हि श्रूयते । जिगीषतेन्द्रियं देहयात्राशेषभूतं द्रव्यं न सङ्ग्राह्यमित्याह—न द्रव्येति । देहयात्राशेषभूतस्याप्यशनवसनोपयुक्तस्य द्रव्यस्य सङ्ग्रहः—श्वः किं भविष्यतीति चिन्तयेत्ततः सङ्ग्रहः स्वयं न कार्यः, अन्येन वा स्वार्थे न कारयितव्यः, श्वस्तनापेक्षा हि गृहस्थमात्रेभ्यनुज्ञाता, अश्वस्तन एव च तेषु श्रेष्ठः, किमु वक्तव्यं त्यागिनामित्याशयः ॥ १८९ ॥

---

सिद्ध्येत्, अपगते च तस्मिन्सिद्धः सः, तदेवम्भूतस्येन्द्रियजयकाष्ठाभूतस्य कामादिजयविधानानन्तरं विशिष्य विधानस्य नास्ति प्रसङ्ग इति तदुपकारकेन्द्रियजयारम्भविधानपरतामभिप्रेत्य व्याचष्टे—तत्तदर्थेभ्यः प्रतिसंहर्तव्यानीति । एवं प्रयतमानस्य हि कालेन सर्वकामोपरतिलक्षणेन्द्रियजयकाष्ठासिद्धिः । रसना तु विशेषत इत्यस्य विधानस्य प्रयोजनमाह—सतीत्यादिना । लोभकृतद्रव्यसङ्ग्रहस्यान्तरारिजयविधानादेव प्रतिषेध सिद्धेरप्रसक्तेस्तद्व्यतिरिक्तसम्भाव्यमानसङ्ग्रहप्रतिषेधपरतयाऽवतारयति—जिगीषतेति । त्यागिनामिति । क्षणभङ्गुरं देहमवधार्य निर्वेदेन गतागतैकपरिश्रमैकफलकेषु कर्मसु परित्यक्तदारादिसङ्ग्रहाणां श्वोभाविचिन्ता कथं घटेत कथं वा तदर्थं द्रव्यसङ्ग्रहो घटेतेति भावः ॥ १८९ ॥

न्यासो रक्ष्यो न कस्यापि धैर्यं त्याज्यं न कर्हिचित् ।
न प्रवेशयितव्या च स्वावासे स्त्री कदाचन ॥ १९० ॥

न्यास इति । तैः । कस्यापि–परिचितस्यापरिचितस्य वा पुरुषस्य । न्यासः—यत्किञ्चिन्निक्षेपवस्तु । न रक्ष्यः–अहं रक्षिष्यामीति प्रतिज्ञाय स्वसमीपे न स्थापयितव्य इत्यर्थः । तस्य स्वमनःक्षोभहेतुत्वाद्वृथा क्लेशहेतुत्वाच्चेति भावः । तथा तैः । कर्हिचित् देशकालवैषम्ये भिक्षाद्यप्राप्तौ वा । धैर्यं—निर्विकारता गुणः । न त्याज्यम् । देहप्रारब्धस्य बलिष्ठत्वादिति भावः । "धीरो धैर्यं न हापये"दिति स्मृतेः । तथा—तैः । स्वेषामावासः—निवासस्थानं तस्मिन् । स्त्री—नारी । कदाचन—क्वापि । न प्रवेशयितव्या । तत्प्रवेशे हि तद्दर्शनादिना स्वनियमभङ्गापत्तेः । एतत्प्रकरणे प्रायशः प्राग्लिखितसाधुलक्षणश्लोका एव प्रमाणत्वेनावगन्तव्याः ॥ १९० ॥

---

यद्यपि यथाकथञ्चित्सङ्गृह्यमाणं द्रव्यं ममताबुद्धियोगादनर्थाय स्यात्, यत्तु रक्ष्यमाणं न्यासरूपं परद्रव्यं तत्तु नानर्थाय किन्तु श्रेयसे, अयं हि परोपकार इत्यत्राह–न्यासेति । अत्यन्तोपकारकस्यापि न्यासो नैव स्वीकार्यः, गृहिणां ह्ययं धर्मो न त्यागिनाम् । एषां हि विलुप्येत मनसोऽवधानं, ततश्चात्मनिष्ठातः प्रच्युतिः स्यात्, तद्रक्षणापदेशेन तत्र स्नेहोऽभिवर्धेत, स चानर्थाय च । वर्षवातातपपीडिता विश्रान्तिमाकाङ्क्षमाणाऽपि वनिता न धर्माशंसया स्वावासं प्रवेशयितव्या, चित्तविक्षोभप्रसङ्गादित्यभिप्रेत्याह—न प्रवेशयितव्येति । आपद्यप्येतैः कृत्याकृत्यविवेचनतो न प्रच्यवितव्यमित्याह—धैर्यं त्याज्यं न कर्हिचिदिति । कर्हिचित्–आपद्यपि । धैर्यम्–अविकृतचित्तता, कर्तव्यांशापरित्याग इत्येतत् । आत्मनिष्ठायां प्रवृत्तैरेतैः देशकालवैगुण्ये प्रसक्तेऽपि यदवधृतं विषयवैमुख्यमात्मौन्मुख्यं च ततो न प्रमादितव्यमिति भावः ॥ १९० ॥

---

पूर्वोत्तरयोः सङ्गतिं प्रदर्शयन्नवतारयति—यद्यपीत्यादिना ।

अत्यन्तोपकारकस्यापीति कस्यापीत्यस्यार्थः । अरक्ष्यत्वे निमित्तमाह—गृहिणां हीत्यादिना । निषेधे प्रसङ्गं ज्ञापयन्व्याचष्टे—वर्षेत्यादिना । एतेन स्त्रीक्षणसङ्गस्य प्रागेव प्रतिषेधादेतत्प्रतिषेधस्य पुनरिह नावसर इति शङ्काऽपास्ता ॥ १९० ॥

**न च सङ्घं विना रात्रौ चलितव्यमनापदि ।**
**एकाकिभिर्न गन्तव्यं तथा क्वापि विनापदम् ॥ १९१ ॥**

न चेति । तैः । अनापदि–स्वस्थदशायां वर्तमानायां सत्याम् । रात्रौ । सङ्घं—जनसमुदायम् । विना । न चलितव्यं–ग्रामान्तरं प्रति न गन्तव्यम् । आपदि गमने तु न दोषः । तथा–तैः । क्वापि–स्थाने । एकाकिभिः—असहायैः सद्भिः । आपदं विना न गन्तव्यम् । सूर्यास्तमयानन्तरमध्वगमननिषेधमाह कृत्यचिन्तामणौ गौतमः—"सूर्यास्तमयकालान्नाध्वानं गच्छेन्नैको न वृषलैः सह न कासृत्या ग्रामं प्रविशे"दिति । कासृत्या–कुत्सितमार्गेण गुप्तमार्गेण वा ।

ननु–"वासे बहूनां कलहो भवेद्वार्ता द्वयोरपि । एक एव चरेत्तस्मात्कुमार्या इव कङ्कण" इति वाक्यात्त्यागिनामेकाकिनामेव विचरणं युक्तं, तत्कथं क्वापि न गन्तव्यमित्युच्यत इति चेत् । सत्यम् । कलहग्राम्यवार्ताहेतुत्वाद्दुर्जनसङ्ग एवात्र निषिद्धो न तु भगवद्भक्तसाधुसमागमोऽपि । तदुक्तं भगवता श्रीकपिलदेवेन–"प्रसङ्गमजरं पाशमात्मनः कवयो विदुः । स एव साधुषु कृतो मोक्षद्वारमपावृतम् ॥ मय्यनन्येन भावेन भक्तिं कुर्वन्ति ये दृढाम् । मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबान्धवाः ॥ मदाश्रयाः कथा मृष्टाः शृण्वन्ति कथयन्ति च । तपन्ति विविधास्तापा नैतान्मद्गतचेतसः ॥ त एते साधवः साध्वि ? सर्वसङ्गविवर्जिताः । सङ्गस्तेष्वथ ते प्रार्थ्यः सङ्गदोषहरा हि ते" ॥ इति । "नैकात्मतां मे स्पृहयन्ति केचिन्मत्पादसेवाभिरता मदीहाः । येऽन्योन्यतो भागवताः प्रसज्य सभाजयन्ते मम पौरुषाणी"ति च । एकादशस्कन्धे चोक्तम्—"सङ्गं न कुर्यादसतां शिश्नोदरतृपां क्वचित् ! तस्यानुगस्तमस्यन्धे पतत्यन्धानुगान्धवत् ॥ ततो दुःसङ्गमुत्सृज्य सत्सु सज्जेत बुद्धिमान् । सन्त एतस्य छिन्दन्ति मनोव्यासङ्गमुक्तिभिः ॥ सन्तोऽ-

---

कामवृत्तप्रसङ्गं परिहरन्नाह—न चेति । रात्रौ न चलितव्यं, स्वावासं परित्यज्य ग्रामनगरादिष्विति शेषः । कामवृत्तानां हि चरितमेतत्, यद्रात्रावभिसारिकादिसञ्चारसमुचितायां पथि पथि पर्यटनम् । चलतिना इतस्ततो भ्रमणं व्यज्यते । यदि तु गन्तव्यं बहुभिः सहेत्यभि-

---

चलनमात्रनिषेधोऽनुचित इति शेषं पूरयति—स्वावासं परित्यज्येति । कुतो न चलितव्यं ? तत्राह—कामवृत्तानां हीत्यादि । कामवृत्ताः–विषयलोलुपाः । पथिपथि पर्यटनमित्यर्थः कथं लभ्यत इत्यत आह—चलतिनेति । व्यज्यत इति । व्यञ्जनावृत्तिगम्योऽयमर्थ इति भावः । न चलितव्यं

नपेक्षा मच्चित्ताः प्रशान्ताः समदर्शिनः । निर्ममा निरहङ्कारा निर्द्वन्द्वा निष्परिग्रहा” इत्यादि । अत एवेदृशपरमहंसप्रवरस्य श्रीशुकदेवस्यापि साधुसमागमार्थं श्रीभागवताध्ययनं सङ्गच्छते । तथा चोक्तमुग्रश्रवसा—“हरेर्गुणाक्षिप्तमतिर्भगवान्बादरायणिः । अध्यगान्महदाख्यानं नित्यं विष्णुजनप्रिय” इति । अध्यगात्–अधीतवान् । विष्णुजनाः प्रिया यस्येति । व्याख्यानादिप्रसङ्गेन तत्सङ्गतिकाम इति भाव इति श्रीधरस्वामिनो व्याचख्युः । तस्मात्साधुभिरपि साधुसङ्गोऽवश्यमेव कर्तव्यः । “तुलयाम लवेनापी”त्यादिना तस्यातिदुर्लभत्वोक्तेश्च । यदा तु कचित्कालवैषम्यात्साधुसंयोगो न भवेत्तदा त्वसत्सङ्गापेक्षयैकाकिभिर्विचरितव्यमिति तत्त्वम् ॥ १९१ ॥

---

प्रेत्याह—सङ्गं विनेति । आपदि तु नायं नियम इत्याह—अनापदीति । तथा-एकाकिना–अद्वितीयेन । दिवसेऽपि न क्वापि गन्तव्यम्, तस्य शङ्कास्पदत्वादित्याशयः ॥ १९१ ॥

---

रात्रावित्येकोऽन्वयः, न चलितव्य सङ्ग विनाऽनापदीत्यपरः, तत्र प्रथमे व्यङ्ग्यार्थप्राधान्येन भाव उक्तः । वाच्यार्थमात्रमाश्रित्यापरस्य भावमाह—यदि तु गन्तव्यमित्यादिना । गन्तव्यमित्यनेन निर्निमित्तपर्यटनव्यावृत्तिर्गम्यते । वचन विहाय प्रकृतिमात्रस्यार्थमाह—एकाकिनेति ॥ १९१ ॥

---

## अनर्घ्यं चित्रितं वासः कुसुम्भाद्यैश्च रञ्जितम् ।
## न धार्यं च महावस्त्रं प्राप्तमन्येच्छयाऽपि तत् ॥ १९२ ॥

अनर्घ्यमिति । तैः । अन्येच्छया–परेच्छया प्राप्तमपि यत् वासः—वस्त्रम् । अनर्घ्यं भवेत्–अर्घं–मूल्यमर्हतीत्यर्घ्यं, अर्घ्यभिन्नमनर्घ्यं–अमूल्यं, बहुमूल्यमिति यावत् । सर्वजनापरिचितत्वाद्यन्मूल्यं कर्तुं न शक्येत तदनर्घ्यमित्युच्यते । तथा चित्राणि–विविधालेख्यानि सञ्जातान्यस्येति चित्रितं च यद्भवेत् । तथा कुसुम्भं–महारजनाख्यं रङ्गद्रव्यं तदाद्यं येषां तैः । रङ्गद्रव्यैरिति शेषः । आद्यशब्दान्नील्यादिग्रहणम् । रञ्जितं यद्वासो भवेत्तच्च । तथा यन्महावस्त्रं भवे-

---

यथा देहधारणैकशेषमन्नं भोज्यं तथा शरीराच्छादनैकशेषभूतं वसनं धार्यं न शोभादिप्रयोजनकं तद्धि राजसमित्याह—अनर्घ्यमिति । यद्बहुमूल्यं यच्च विचित्रितं यच्च रञ्जनद्रव्य-

---

रसना तु विशेषत इत्यनेन सङ्गतिमाह—यथेति । अय च निषेधस्यागिमात्रेऽन्वेति । एतेनायं

त्तच्च । अन्येच्छया प्राप्तमपीति सर्वत्र सम्बध्यते । न धार्यं—धारयितुमर्हं न भवतीत्यर्थः । क्वचिदाढ्यगृहस्थेन तथाभूतं वासो बलादर्पितं चेत्तत्सन्तोषार्थं तत्कालं तद्धृत्वा सद्य एवान्यस्मै अपुनर्ग्रहणाय देयं न तु मुहुर्धार्यं स्वसमीपे रक्षणीयं वेत्याशयः । "सहेमसूत्रं सूक्ष्मं च नानारङ्गं च चित्रयुक् । महाधनं च यद्वस्त्रमाल्यार्हं राजसं तु त"दिति धर्मप्रदीपे तस्य राजसत्वोक्तेस्त्यागिनां तद्धारणमयुक्तम् । तेषां हि कौपीनतदाच्छादनजीर्णवासःखण्डकन्थादिधारणविधानादित्यन्यत्र विस्तरः ॥ १९२ ॥

विशेषेण रञ्जितं एवमाद्युत्तमं वस्त्रं लब्धं परेच्छयाऽपि न धार्यम् । अत्र लब्धमित्यतः अयत्नोपनतमिति व्यज्यते ॥ १९२ ॥

प्रतिषेधो नैष्ठिकानधिकृत्य पूर्वं कुतो न कृत इति शङ्काऽपास्ता ॥ १९२ ॥

---

भिक्षां सभां विना नैव गन्तव्यं गृहिणो गृहम् ।
व्यर्थः कालो न नेतव्यो भक्तिं भगवतो विना ॥ १९३ ॥

भिक्षामिति । तैः । भिक्षां सभां च विना गृहिणः—गृहस्थस्य गृहं प्रति नैव गन्तव्यम् । भिक्षाशब्देन तदर्थकमटनं लक्ष्यते । सभाशब्दस्य सामाजिकपुरुषा इत्यर्थः । "सभा सामाजिके द्यूते गोष्ठीमन्दिरयोरपी"ति विश्वः । तेन च तत्कृतमाह्वानं लक्ष्यते । "आहारार्थं समीहेत युक्तं तत्प्राणधारण"मिति भगवद्वाक्यात् "यज्ञं गच्छेदनाहूत आहूतश्च सभां सुधी"रिति नीतिसारवाक्याच्चैतन्निमित्तद्वये गृहस्थगृहं प्रति गमने न दोषः, अन्यथा तु भवेदित्यर्थः । तत्र भिक्षाटने "गृहमुद्घाटितद्वारं व्रजित्वा गृहिणः शुचेः । अवीक्षमाणः स्त्रीर्याचेदुच्चैर्नामोच्चरन्हरे"रित्यादिविशेषोऽवगन्तव्यः । उच्चैरित्युक्तेर्गृहाद्बहिःस्थित एव याचेदिति गम्यते । सभागमनेऽपि तत्र यथाशास्त्रं न्याय्यमेव वक्तव्यं, न तु तूष्णीं स्थेयं न चाप्रमाणं

अथैतैर्गृहिणो गृहं प्रति न गन्तव्यमन्यत्र भिक्षानिमित्तात्साधुगोष्ठीनिमित्ताच्चेत्याह—भिक्षां विनेति । भिक्षां विना—भिक्षारूपं निमित्तं विना । सभां वा—गोष्ठीं वा । भगवद्गुणशुश्रूषया यदि गृहस्थो गोष्ठीं कारयेत्तदा तु गन्तव्यमिति भावः । अथ च सर्वः कालो भगवद्गुण-

भिक्षाहस्तेनैव गन्तव्यमिति विपरीतभ्रमव्यावृत्तये भिक्षां विनेत्येतद्व्याचष्टे—भिक्षारूपं निमित्तं विनेति ॥ १९३ ॥

किञ्चिद्वक्तव्यम्। "न सभां प्रविशेत्प्राज्ञः सभ्यदोषाननुस्मरन्। अब्रुवन्विब्रुवन्नज्ञो नरः किल्बिषमश्नुत" इति वचनात्। तथा–तैः। भगवतो भक्ति–श्रवणकीर्तनादिलक्षणां विना व्यर्थः–शून्यः कालः क्षणोऽपि न नेतव्यः। सर्वकालं यथाशक्ति या कापि भक्तिरेव कर्तव्या न त्वन्यदित्यर्थः। अत्र संमतिवाक्यानि प्रागेवात्मनिवेदिधर्मेषु लिखितानि वेदितव्यानि ॥ १९३ ॥

कीर्तनस्मरणपरिचरणादिभिर्नेयस्तैरित्याह—व्यर्थः काल इति। "यन्मुहूर्तं क्षणं वापि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिः सा च विक्रिये"ति हि स्मरति ॥१९३॥

---

पुमानेव भवेद्यत्र पक्वान्नपरिवेषणः।
ईक्षणादि भवेन्नैव यत्र स्त्रीणां च सर्वथा ॥ १९४ ॥
तत्र गृहिगृहे भोक्तुं गन्तव्यं साधुभिर्मम।
अन्यथाऽऽमान्नमर्थित्वा पाकः कार्यः स्वयं च तैः ॥१९५॥

भिक्षाचरणे विशेषमाह—पुमानिति द्वाभ्याम्। यत्र गृहिगृहे–गृहस्थवेश्मनि। पुमान्–पुरुष एव न तु स्त्री। पक्वं–रन्धितं च तदन्नं च तस्य परिवेषणः–परिवेषणकर्ता भवेत्। तथा यत्र स्त्रीणामीक्षणादि सर्वथा न भवेत्। आदिशब्दात्तच्छब्दश्रवणादिग्रहणम्। तत्रेत्युत्तरश्लोकेन सम्बन्धः ॥ १९४ ॥ तत्रेति। तत्र–तस्मिन् गृहिगृहे। भोक्तुम्। मम–मदीयैः साधुभिर्गन्तव्यम्। अन्यथा–उक्तानुकूल्याभावे तु। तैः। आमान्नं–अपक्वान्नम्। अर्थित्वा–माधुकरवृत्त्या याचित्वा। स्वयं–स्वहस्तेनैव। पाकः कार्यः। स्वस्थान इति ज्ञेयम्। चकारात्कचिद्ब्राह्मणेन कारयितव्यः। सर्वथा स्वनियमरक्षणं कार्यमिति तात्पर्यम्। यद्यपि त्यागिनां पाकाचरणमयुक्तं, तथापि वैष्णवानां भगवद्दास्यस्य मुख्यधर्मत्वाद्भगवदर्थं तदाचरणे न दोषः। स्वार्थं तु तन्न कर्तव्यं, "भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणा"दिति भगवद्वाक्यात्। इयं द्विविधा त्यागिवृत्तिः श्रीदत्ता-

पूर्वं गृहस्थेषु भिक्षणमुक्तं तत्र विशेषमाह—पुमानेवेति। व्यक्तमेतत्। स्त्रीणां मुहुरीक्षणं यत्र प्रसजेत्, दृष्टिपथे स्त्रीजनसञ्चारश्चेदधिक इत्येतत्। तत्र परिवेषको यद्यपि पुमान् स्यात्-

व्यक्तमेतत्–एतदर्थकं पुमानित्यादिपूर्वार्धवाक्यम्, रागप्राप्ततया नायमपूर्वविधिः,

त्रेयेणोक्ता—"गृहानहिंसन्नातिष्ठेद्वृत्तिं माधुकरीं मुनिः। भुङ्क्ते सर्वत्र दातॄणां दहन्प्रागुत्तराशुभ"मिति ॥ १९५ ॥

थापि तत्र न गन्तव्यमिति भावः। यदि च कचिद्ग्रामे तादृशं गृहिणो गृहं दुर्लभं तदा त्वामं भिक्षित्वा तत्पक्त्वा भुञ्ज्यादित्याह—अन्यथेति ॥ १९४ ॥ १९५ ॥

किन्तु ईदृश एव स्थाने नान्यत्रेति परिसङ्ख्याविधिरित्यवगमयन्नाह—तत्र न गन्तव्यमिति भाव इति ॥ १९४ ॥ १९५ ॥

---

**आर्षभो भरतः पूर्वं जडविप्रो यथा भुवि।**
**अवर्तताऽत्र परमहंसैर्वृत्त्यं तथैव तैः ॥ १९६ ॥**

आर्षभ इति। पूर्वं—प्रथमजन्मनि। आर्षभः—श्रीऋषभदेवपुत्रः, भरताख्यो राजर्षिः। आर्षभ इति विशेषणं भरताख्यराजान्तरव्यावृत्त्यर्थम्। जडविप्रः—जन्मान्तरे जडाख्यः विप्रः सन्। भुवि यथा अवर्तत। तथैव परमहंसैस्तैः साधुभिः। अत्र—लोके। वृत्त्यं—वर्तितव्यमिति सम्बन्धः। "परः स्यादुत्तमानात्मवैरिदूरेषु केवल" इति विश्वात् परा—अक्षयत्वात्सर्वोत्तमा मा—लक्ष्मीर्यस्य सः परमः, यद्वा—परान्—धर्मवैरिणो मिनाति—नाशयतीति परमः, स चासौ हंसः—विष्णुः परमहंसः, "हंसो विहङ्गभेदे स्यादर्के विष्णौ हयान्तरे" इति विश्वः। परमहंसशब्दस्यापि विष्णुवाचकत्वं "दुरवसितात्मगतये कुयोगिनां भिदा परमहंसाय" "नमः परमहंसाय पूर्णाय निभृतात्मने" इत्यादौ प्रसिद्धम्। स विद्यते उपास्यत्वेनैषामिति परमहंसास्तैर्वैष्णवैरित्यर्थः। अर्श आदिभ्योऽजित्यच्। यद्वा—"परमः स्यात्प्रधानाद्योरोङ्कारेऽपि तथोच्यत" इति महेश्वरोक्तेः परमः—सर्वथा प्रधानभूतो हंसः—विष्णुर्येषामिति परमहंसाः, विष्णुं विनाऽन्यत्सर्वमपि येषां गौणं

अर्थैस्तैरात्मनिष्ठातिरेकेण लोकदृष्ट्या जडैर्भाव्यमित्याह—आर्षभ इति। यस्तु परमभागवतो राजर्षिप्रवरो भरतो मृगशरीरमुत्सृज्य चरमशरीरतो विप्रत्वं गतो भगवदनुग्रहेणानुस्मृतपूर्वजन्मावलिरन्यजनसङ्गाच्छ्रशमुद्विजमानः प्राकृतैर्यथायथमभिभाष्यमाणोऽप्यनालक्षिततद्वचनविवेकस्तुल्यनिन्दास्तुतिस्तुल्यमानावमानोऽपगतकणपिण्याकमिष्टान्नादिविवेकोऽनालक्षितखण्डलकादिविभेदोऽनादृतजीवनमरणविशेषो लोकदृष्ट्या जड इति प्रथितोऽवर्तत तथा तैर्वर्तितव्य-

आत्मनिष्ठातिरेकेण—आत्मनिष्ठाविरहेण। प्राकृतैः—देहात्माभिमानिभिर्जनैः। शालिग्रामनगरे जडविप्र इति निर्देशोऽसङ्गत इत्यतस्तस्य भावमाह—लोकदृष्ट्या जड इति प्रथित इति। परमहंसै-

भवति तैः । हंसशब्दो विष्णुपर्यायः श्रीभागवतेऽपि बहुशो दृश्यते—"हंसाय तस्मै शुचिसद्मने नमः" "हंसाय दह्रनिलयाय निरीक्षकाय" "उपासते तपोनिष्ठा हंसं मां मुक्तकिल्बिषाः" "हंसः सुपर्णो वैकुण्ठः" "हंसे गुरौ मयि भक्त्यानुवृत्त्या" "हंसाय संयतगिरे निगमेश्वराय" "तत्रापि हंसं पुरुषम्" "महाहंसाय धीमही" त्यादौ । परमहंस इति प्रथमान्तपाठस्तु समञ्जस एव । परमहंसो जडविप्रो यथाऽवर्तत तथा तैर्वृत्त्यमिति । अस्मिन्पक्षे तथाशब्दस्य सादृश्यवाचकत्वाचेषामपि परमहंसत्वमुक्तं वेदितव्यम् । जडविप्रवर्तनं तु—"तत्रापि स्वजनसङ्गाच्च भृशमुद्विजमानो भगवतः कर्मबन्धविध्वंसनश्रवणस्मरणगुणविवरणं चरणारविन्दयुगलं मनसा विदध"दित्यादि श्रीभागवतपञ्चमस्कन्धोक्तं वेदितव्यम् । अत्र परमहंसा द्विविधा लोकशास्त्रयोः प्रसिद्धाः सन्ति—अलिङ्गा अवधूतलिङ्गाश्चेति । तत्राद्याः श्रीशुकादिवत्प्रायशो दिग्वाससः । तथा च जाबालोपनिषदि श्रूयते—"यथाजातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्सम्पन्नः शुद्धमानसः प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रमत्तो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठोऽशुभकर्मनिर्मूलनपरः सन्न्यासेन देहत्यागं करोति स परमहंसो नामे"ति । अन्ये तु श्रीभागवतादिप्रसिद्धजडभरतश्रीदामादिवदवधूतवेषाः । अवधूतस्य—जनैरवमतस्य पुरुषस्य वेष इव वेषो येषां ते तथोक्ताः । तेषां तु दरिद्रब्राह्मणवद्यज्ञोपवीतवल्कलजीर्णवस्त्रकन्थादिधारणमपि वर्ण्यते । "अन्तःपुरजनो दृष्ट्वा

मिति भावः । यावद्देहात्माभिमानो नापैत्यात्मनिष्ठा च न सिद्ध्यति तावदीदृशं चरितं न घटेत लेशतोऽपि, तदात्मनिष्ठैर्भूत्वेदृशे चरिते स्थेयमित्याह—परमहंसैरिति । परमः–प्रधानो हंसः–आत्मा येषां ते परमहंसाः आत्मनिष्ठाः । तथाभूतैः सद्भिस्तथा वर्तितव्यमित्यन्वयः । यद्यपि "साधवो येऽथ तैः सर्वै" रित्युपक्रम्याभिधानात्समनन्तरश्लोके "वर्णिभिः साधुभिश्चैत" रिति वक्ष्यमाणार्थस्योभयसाधारण्यज्ञानाच्चायमादेशो न वर्णिनामपेक्षित इति विज्ञायते । तथाप्यर्थस्वाभाव्यात्तत्साधारण्यं बोध्यम् । मुमुक्षुत्वाविशेषात् । समनन्तरश्लोके "वर्णिभि-

विरस्य विशेष्यसमर्पकत्वाश्रयणे आश्रमविशेषमात्रावबोधकतया मन्दप्रयोजनतया विधेयसमर्पकतैव समुचितेत्यभिप्रेत्य व्याचष्टे—यावद्देहेत्यादिना । नन्वस्यार्थस्यैव समनन्तरश्लोकार्थस्याप्यर्थस्वाभाव्याद्वर्णिसाधारण्ये सिद्धेऽपि वर्णिभिः साधुभिश्चेति निर्देशो व्यर्थ इत्याशङ्कां परिहरति—समनन्तरेति । तत्रे-

कृष्णेनामलकीर्तिना । विस्मितोऽभूदतिप्रीत्या अवधूतं सभाजितम् ॥ किमनेन कृतं पुण्यमवधूतेन भिक्षुणे"त्यादिवाक्यैः श्रीदाम्नोऽवधूतत्वमुक्तं वेदितव्यम् । जडभरतस्यापि तादृशो वेषः प्रतीयते—"कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबन्धुरिति संज्ञयाऽतज्ज्ञजनावमतो विचचार" "दैवेनोपसादितः स द्विजवर उपलब्धः" "यदा हि द्विजवरस्येषुमात्रावलोकानुगतेः" "द्विजवरवच आश्रुत्य" "कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः" "नमोऽवधूतद्विजबन्धुलिङ्गनिगूढनित्यानुभवाय तुभ्यम्" "ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ती"त्यादिवाक्येभ्यः, दिगम्बरस्य शिबिकावाहनार्थं ग्रहणानुपपत्तेश्च तस्य जीर्णवस्त्रधारणं सम्भाव्यते । "अलक्षितः स्वैरवधूतवेषो व्रतानि चेरे हरितोषणानी"त्यस्य व्याख्याने अवधूतवेषः—वल्कलादिधारीति श्रीधरस्वामिवाक्याच्च । उभयेषामपि भगवदुपासनं त्वावश्यकम् । "तस्मिन्ययौ परमहंसमहामुनीनामन्वेषणीयचरणौ चलयन्सहश्रीः" "अथात आनन्ददुघं पदाम्बुजं हंसाः श्रयेरन्नरविन्दलोचन" "भक्तिं परां परमहंसगतौ लभेत" "परमहंसपरमगुरवे" "परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान्" "ननाम पादाम्बुजमस्य विश्वसृड् यत्पारमहंस्येन यथाऽधिगम्यते" "भागवतपरमहंसदयितकथाम्" "किं वा भागवता धर्मा न प्रायेण निरूपिताः । प्रियाः परमहंसानां त एव ह्यच्युतप्रियाः" "तथा परमहंसानां मुनीनाममलात्मनाम् । भक्तियोगविधानार्थ"मित्यादिश्रीभागवतोक्तेश्च । किञ्च—भगवदुपासनवस्त्रधर्मादेः पालनमपि तेषामावश्यकमित्यपि ज्ञेयम् । तथा च भारते मोक्षधर्मेष्वाजगरस्वामिसदाचारवर्णनं स्मर्यते—"अचलितमतिरच्युतः स्वधर्मात्परिमितसंवरणः परावरज्ञः । अनियतशयनासनः प्रकृत्या दमनियमव्रतसत्यशौचयुक्तः ॥ विगतभयकषायलोभमोहो व्रतमिदमाजगरं शुचिश्च-

---

साधुभिश्चे"ति निर्देशस्तु निषेधस्योभयसाधारण्यस्फुटप्रतिपत्तये । नन्वेवं सति वर्णिनः साधूंश्चाधिकृत्य किमर्थः पृथगादेशः, तन्त्रेणैव तत्तदर्थाववोधनमुचितं नाम, न च तत्तदसाधारणविधिनिषेधौ विवक्षितौ, येन तन्त्रेणादेशो न घटेत । सत्यम् । भगवतः स्वातन्त्र्ये कः पर्यनु-

---

णैवेति । त्यागिभिरित्यनुगताधिकारनिर्देशेनैव । गृहस्थधर्मनिरूपणानन्तरं त्यागिनः सर्वानभिमुखीकृत्य समयोऽयमुपदेशः कुतो न प्रवृत्तः, वर्णिनोऽधिकृत्य कतिचन साधूनधिकृत्य कतिचन पृथक्किमिति विधीयन्ते, साधारणा ह्येत उपदेशा इति भावः । भगवतः स्वतन्त्रेच्छैव नियामिकेति समाधत्ते—सत्य-

रामी"ति । एवं द्विविधपरमहंसेषु भागवतपरमहंसस्य जडभरतस्य वृत्तिस्तैरनुसरणीयेत्युपदेशस्तस्याः स्वश्रेष्ठतां द्योतयतीति प्रतिभाति ॥ १९६ ॥

योगः, त्यागिमात्रसाधारणानेव कांश्चित्साधूनामुपलक्षकतामभिप्रेत्याकथयत्, कांश्चिच्च वर्णिनामुपलक्षकतामभिप्रेत्य साधूनधिकृत्याकथयत्, का नाम क्षतिरत्र ॥ १९६ ॥

मिति। का नाम क्षतिरत्रेति। यद्यर्थे विरोधः स्यात्तदा प्रतिविधेयं नाम, नेह तथेति नेदं दोषस्थानमिति भावः ॥ १९६ ॥

---

वर्णिभिः साधुभिश्चैतैर्वर्जनीयं प्रयत्नतः।
ताम्बूलस्याहिफेनस्य तमालादेश्च[1] भक्षणम् ॥ १९७ ॥

ब्रह्मचारिणां साधूनां च मिश्रधर्मानाह पङ्क्तिः—वर्णिभिरिति। वर्णिभिः—ब्रह्मचारिभिः। तथा—एतैः—प्रकृतैः साधुभिश्च। ताम्बूलस्य—नागवल्लीदलस्य। अहिफेनस्य—प्रसिद्धविषभेदद्रव्यस्य। तमालः—तमाखु इति प्रसिद्धौषधिः, स आदिर्यस्य महाजिह्वादेस्तस्य। भक्षणम्। प्रयत्नतः—सर्वथैव। वर्जनीयम्। "ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जये"दिति प्रचेतःस्मरणात्। "मधु मांसं मादकं च लशुनादि तथाऽशुचि। अशोधितं भूरिरसमिन्द्रियक्षोभकं तथा। भावदुष्टं क्रियादुष्टं विष्णवे चानिवेदितम्। धृतव्रतः पुमान् स्त्री वा भक्षयेन्न कदाचने"ति ब्रह्मवैवर्तोक्तेश्च ॥ १९७ ॥

अथैतैस्ताम्बूलभक्षणादि न कार्यमित्याह—वर्णिभिः साधुभिश्चैतैरिति। प्रयत्नत इत्यनेनात्र विषये न प्रमादितव्यमिति व्यज्यते। अहिफेनं–निर्यासविशेषः। अफीणिति भाषायां प्रसिद्धः। सर्पविष इव यस्मादसिन्नोऽयमत उच्यते—अहिफेनमिति। व्यसनिनः सेवन्ते नामैतत्। ताम्रकूटः–तमाकु इति भाषायां प्रसिद्धः। अस्य च भक्षणं न कार्यमित्यर्थः। स्मर्यते च—"ताम्बूलाभ्यञ्जनं चैव कांस्यपात्रे च भोजनम्। यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत्" इति ॥ १९७ ॥

प्रयत्नेन इति निर्देशस्वारस्यमाह—प्रयत्नत इत्यनेनेति। अहिफेनपदप्रवृत्तौ निमित्तमाह—सर्पविष इवेति। मादकत्वादेषां प्रतिषेधः ॥ १९७ ॥

---

[1] ताम्रकूटस्य भक्षणमिति पाठान्तरम्।

संस्कारेषु न भोक्तव्यं गर्भाधानमुखेषु तैः ।
प्रेतश्राद्धेषु सर्वेषु श्राद्धे च द्वादशाहिके ॥ १९८ ॥

संस्कारेष्विति । तैः–वर्णिसाधुभिः । गर्भाधानं मुखं–आदिर्येषां तेषु । संस्कारेषु । न भोक्तव्यं–संस्कारकर्मसाद्गुण्यसिद्ध्यर्थं क्रियमाणे ब्राह्मणभोजने स्वेषामामन्त्रणेऽपि तत्र भोजनं न कर्तव्यमित्यर्थः । तथा सर्वेषु प्रेतश्राद्धेषु–प्रेतोद्देशेन क्रियमाणेषु नवश्राद्धैकादशाहिकश्राद्धोनमासिकादिश्राद्धेषु, द्वादशाहिके–सपिण्डीकरणे श्राद्धे च न भोक्तव्यम् । "संस्कारेषु न भुञ्जीत प्रेतश्राद्धेषु च व्रती"ति मात्स्योक्तेः । एतद्भोजने प्रायश्चित्तानि निर्णयसिन्धुमिताक्षरादेरवगन्तव्यानि ॥ १९८ ॥

संस्कारायन्नं न भोक्तव्यमित्याह—संस्कारेष्विति । यद्यपि संस्काराद्यन्नभोजने गृहस्थस्यापि प्रायश्चित्तश्रवणान्निषेधस्यास्य गृहस्थसाधारणतापि । तथापि ब्रह्मचारिप्रभृतीनां तद्भक्षणे दोषाधिक्यमभिमेत्य विशिष्योक्तिः । तथाच प्रायश्चित्ताधिक्यं स्मर्यते—"मासिकादिषु योऽश्नीयादसमाप्तव्रतो द्विजः । त्रिरात्रमुपवासोऽस्य प्रायश्चित्तं विधीयते ॥" इति । गर्भाधानं मुखमादिर्येषां संस्काराणां सीमन्तोन्नयनादीनाम् । तत्साद्गुण्याय यदन्नं दीयते तन्न भोक्तव्यम् । स्मर्यते च प्रायश्चित्तं तदन्नभोजने—"ब्रह्मौदने च सोमे च सीमन्तोन्नयने तथा । जातश्राद्धे नवश्राद्धे द्विजश्चान्द्रायणं चरेत्" इति । प्रेतश्राद्धेषु–प्रेतमुद्दिश्य क्रियमाणेष्वेकादशाहिकश्राद्धादिषु । तथा द्वादशाहिके च । यद्यप्यस्ति प्रेतोद्देशकर्तृत्वं द्वादशाहश्राद्धे, तथापि न तन्मात्रतेति विशेषमादत्य पृथगुक्तिः । व्रतिषु च विशेषतोऽस्य निषेधः स्मर्यते—"संस्कारेषु न भुञ्जीत प्रेतश्राद्धेषु च व्रती" इति ॥ १९८ ॥

साधारणस्यास्य विशेषप्रकरण उपदेशोऽसङ्गत इत्याशङ्कामनूद्य परिहरति—यद्यपीत्यादिना । द्वादशाहश्राद्धस्य प्रेतश्राद्धत्वेन सङ्ग्रहमाशङ्क्य परिहरति—यद्यप्यस्तीत्यादिना ॥ १९८ ॥

---

दिवास्वापो न कर्तव्यो रोगाद्यापदमन्तरा ।
ग्राम्यवार्ता न कार्या च न श्रव्या बुद्धिपूर्वकम् ॥ १९९ ॥

दिवास्वाप इति । रोगो ज्वरादिरादिर्यस्याः । आदिशब्दादध्वश्रमादिग्रहणम् । आपदम् । अन्तरा–विना । दिवा–दिवसे, स्वापः–निद्रा । न कर्तव्यः । अवकीर्णित्वदोषापत्तेरिति भावः । अत एव प्रायश्चित्तमयूखेऽवकीर्णिप्रायश्चित्त-

अथ दिवास्वापादि न कार्यमित्याह—दिवास्वापो न कर्तव्य इति । यद्यपि दिवास्वापः सामान्यतो निषिद्धो नाम । तथाच वचनम्—"न दिवा प्रस्वपेज्जातु न पूर्वापररात्रिषु ।

प्रकरणे वसिष्ठ आह—“एतदेव रेतसः प्रयत्नोत्सर्गे दिवास्वप्न उत्सर्गे चे”ति । एतत्–नैर्ऋतयागादि। अत एवाह मोक्षधर्मेषु भीष्मः—“निष्कल्मषं ब्रह्मचर्यमिच्छता चरितुं दिवा। निद्रा सर्वात्मना त्याज्या स्वप्नदोषानवेक्षता ॥ स्वप्ने हि रजसा देही तमसा चाभिभूयते। देहान्तरमिवापन्नश्चरत्यनुचितक्रियाम् ॥” इत्यादि। सनत्कुमारसंहितायां चोक्तम्—“ब्रह्मचर्यव्रतं भ्रश्येद्व्रतिनो हि दिवाशयात् । अतस्तं नाचरेद्धीमान्नैष्ठिकस्तु विशेषत” इति । दिवानिद्रायाः पापरूपत्वं तत्प्रायश्चित्तं चोपपातकगणनायां प्रागेव निरूपितम् । पापस्य च सर्वथा वर्जनमेव युक्तम् । निर्णयसिन्धावत्रिस्तु तस्याः पतनहेतुत्वमप्याह—“मञ्चकः शुक्लवस्त्रं च स्त्रीकथालौल्यमेव च। दिवास्वापश्च यानं च यतीनां पतनानि षडि”ति । बन्धकत्वं चाह दक्षः—“आसनं पात्रलोभश्च सञ्चयः शिष्यसङ्ग्रहः । दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षडि”ति । विश्वेश्वरपद्धतौ क्रतुश्चाह—“बीजन्नं तैजसं पात्रं शुक्रोत्सर्गः सिताम्बरम् । निशान्नं च दिवास्वप्नं त्यागिनां पतनानि षडि”ति। एषां च गृहस्थैरपि वर्ज्यैव । तथा चाह भारते गृहस्थधर्मेषु व्यासः—“न दिवा प्रस्वपेज्जातु न पूर्वापररात्रिषु । न सन्ध्ययोरुभययोर्नानृतावाह्वयेत्स्त्रिय”मिति । नारदश्चाह—“नक्तंचर्यां दिवास्वप्नमालस्यं पैशुनं मदम् । अतियोगमयोगं च श्रेयोर्थी सर्वथा त्यजे”दिति । मदं–मादकवस्तु । अतियोगं–अत्याहारम् । अयोगं–अनाहारम् । आनुशासनिकपर्वणि चोक्तम्—“अनायुष्यं दिवास्वप्नं तथाऽभ्युदयशायिते”ति । स्कान्दे च—“आरोहणं गवां पृष्ठे प्रेतधूमं सरित्तरम्। बालातपं दिवास्वापं त्यजेद्दीर्घं जिजीविषु”रिति। सरित्तरम्–बाहुभ्यां नदीतरणम्। कपिलस्त्वाह—“स्वभावतो दिवास्वप्ने प्राजापत्यं चरेद्यति”रिति। वैद्यशास्त्रे माधवनिदाने च तस्य नानारोगहेतुत्वमप्युक्तम्—“दिवास्वप्नादिदोषैस्तु प्रतिश्यायश्च जायते । प्रतिश्यायादथो कासः कासात्सञ्जायते क्षय” इति । “व्यायामवर्जी

नक्तं चर्यां दिवास्वापमालस्यं पैशुनं मदम् ॥ अतियोगमयोगं च श्रेयोर्थी सर्वथा त्यजेत् । अनायुष्यं दिवास्वापम्” इति । तथापि प्रत्यवायाधिक्यमभिप्रेत्य विशेषत आदेशः । तथाच वचनम्—“स्वभावतो दिवास्वप्ने प्राजापत्यं चरेद्यतिः । निशान्नं च दिवास्वप्नं त्यागिनां पतनानि षट् ॥ मञ्चकः शुक्लवस्त्रं च स्त्रीकथालौल्यमेव च। दिवास्वापो वृथाजल्पो यतेर्बन्धकराणि षट् ॥ ब्रह्मचर्यव्रतं भ्रश्येद्व्रतिनो हि दिवाशयात् । अतस्तं नाचरेद्धीमान्नैष्ठिकस्तु

आशङ्का परिहरति—यद्यपीत्यादिना । ब्रह्मचर्यव्रतं भ्रश्येदिति । एतेन विशेषतस्त्या-

च दिवाशयी च विरुद्धभोजी लभते कुर्मींश्चे"ति च। "अतिव्यवायं लवणानि चाम्लं मृदं दिवास्वप्नमतीव तीक्ष्णम्। निषेवमाणस्य विदूष्य रक्तं दोषास्त्वचं पाण्डुरतां नयन्ती"त्यादि।

किञ्च—तैः। बुद्धिपूर्वकम्। ग्राम्यवार्ता—भगवत्तद्भक्तसम्बन्धेतरा व्यावहारिकी गोष्ठी। न कार्या न श्रव्या च। तस्या अधःपातहेतुत्वाद्युक्तं श्रीभागवते— "यत्र व्रजन्त्यघभिदो रचनानुवादाच्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः। यास्तु श्रुता हतभगैर्नृभिरात्तसारास्तांस्तान् क्षिपन्त्यशरणेषु तमस्सु हन्त!!॥ नूनं दैवेन निहता ये चाच्युतकथासुधाम्। हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुजः॥ ततोऽन्यथा किञ्चन यद्विवक्षतः पृथग्दृशस्तत्कृतरूपनामभिः। न कुत्रचित्क्वापि च दुःस्थिता मतिर्लभेत वाताहतनौरिवास्पदम्॥ ग्राम्यवार्ता न शृणुयाद्यतिर्वनचरः क्वचि"दित्यादि। "श्रवणं ग्राम्यवार्तायाः कीर्तनं चापि बन्धकृदि"ति विष्णुधर्मोक्तेश्च ॥ १९९ ॥

विशेषतः॥ निष्कलमषं ब्रह्मचर्यमिच्छता चरितुं दिवा। निद्रा सर्वात्मना त्याज्या सप्तदोषांश्च पश्यता॥" इति। रोगादौ सति च न दोष इत्याह—रोगाद्यापदमन्तरेति। ग्राम्यालापो न कार्यो नच श्रोतव्य इत्याह—ग्राम्यवार्ता न कर्तव्येति। ग्राम्याः—पामरास्तेषां वार्ता, तैः क्रियमाणा वार्तेत्यर्थः। पामरजनयोग्यो ज्ञानसम्बन्धरहितो लोकवादो न कर्तव्यः। पथि गच्छतः कर्णकुहरे विशेन्नाम कदाचित्तादृशं वचस्तथापि तद्बुद्धिपूर्वकं न श्रोतव्यमित्याह—बुद्धिपूर्वकमिति। तादृशवार्तासु शुश्रूषा नोचितेत्येतत्। "ग्राम्यवार्तां न शृणुयाद्यतिर्वनचरः कचित्" इति च स्मर्यते॥ १९९॥

गिनामयं दीवास्वापनिषेध आवश्यक इति सिद्धम्। बुद्धिपूर्वकमित्यस्य भावमाह—पथीति ॥१९९॥

---

**स्वप्यं न तैश्च खट्वायां विना रोगादिमापदम्।**
**निश्छद्म वर्तितव्यं च साधूनामग्रतः सदा॥ २००॥**

स्वप्यमिति। तैः। रोगादिमापदं विना। खट्वायां—पर्यङ्के। न स्वप्यं—न

अथ पर्यङ्के न तैः शयितव्यमित्युच्यते—स्वप्यं न तैरिति। तैः—साधुभिर्वर्णिभिश्च। खट्वायां न स्वप्यं—न शेतव्यम्। अथ करणत्रयैकरूप्यं विदधाति—निश्छद्मेति। निष्कपटं वर्तितव्यम्। करणत्रयेणाप्यविषमैर्भाव्यमिति यावत्। सदा साधुजनसन्निधौ वर्तितव्यमित्याह—

अग्रत एव स्थितौ को विशेष इत्याशङ्कामपनयन्भावमाह—सन्निधाविस्येतदिति। साधूनां

शयितव्यम् । आपदि तु न दोषः, धर्मस्य देहरक्षानुसारित्वात् । "खट्वायां शयनं ब्रह्मचर्याख्यव्रतभङ्गकृदि"ति स्मृतेः । तथा–तैः । साधूनां–उक्तलक्षणसम्पन्नानां भगवद्भक्तानाम् । अग्रतः–अग्रे । निर्गतं छद्म–दम्भो यस्मिन्कर्मणि यथा तथा । सदा–सर्वस्मिन्काले । वर्तितव्यम् । "सत्सु निष्कपटो भवेदि"ति नारदोक्तेः । "अनुजीविजनैः क्वापि छद्म कार्यं न राजनि । गुरौ शिष्यैर्धवे स्त्रीभिः सर्वैः सत्सु तथेश्वरे" इति सनत्कुमारोक्तेश्च ॥ २०० ॥

साधूनामिति । उक्तं च साधूनां लक्षणम्—"यथालब्धेऽपि सन्तुष्टः समचित्तो जितेन्द्रियः । हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः ॥ निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः । निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते ॥ लोभमोहमदक्रोधकामादिरहितः सुखी । कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः ॥" इति । एतादृशलक्षणलक्षिता भगवदेकान्तभक्ताः साधवः । एतेषामग्रतः सदा । वर्तितव्यमित्यस्य मध्यमणिन्यायेनात्राप्यन्वयः ॥ अग्रतः–सन्निधावित्येतत् । तेषां सन्निधौ हि हिततमलाभो नान्येषाम्, अन्यसङ्गस्तु संसरणायैव स्यादिति भावः । केचित्तु साधूनां पुरतोऽकपटैर्वर्तितव्यमिति योजयन्ति ॥ २०० ॥

सन्निधौ सदास्थितेः प्रयोजनमाह—तेषां हीति ॥ २०० ॥

---

गालिदानं ताडनं च कृतं कुमतिभिर्जनैः ।
क्षन्तव्यमेव सर्वेषां चिन्तनीयं हितं च तैः ॥ २०१ ॥

गालिदानमिति । तैः–वर्णिसाधुभिः । कुत्सिता मतिर्येषां ते कुमतयः–एकान्तिकभगवद्भक्तस्वरूपानभिज्ञास्तैः । जनैः–लोकैः, स्वकीयैः परकीयैर्वा मनुष्यैरित्यर्थः । कृतम् । गालिदानं–वाक्पारुष्येण स्वभर्त्सनम् । ताडनं–चपेटादिभिः प्रहारश्च । क्षन्तव्यं–सोढव्यमेव, न तु तदुपरि क्रोधः कर्तव्यः । साधुधर्मक्षतेरिति भावः । "क्षमाशीला हि साधव" इति वचनात् । तत्सहनस्य दुष्करत्वमाह श्रीशङ्करः—

परैः पीड्यमानोऽपि नाहितं चिन्तयेदित्याह—गालीति । गालिः–शापः, तस्य दानं–प्रयोगः, विना निमित्तं यत्तु शप्यते ताड्यते वा कुमतिभिः, सर्वं तत्सोढव्यमेव । नैतेऽपराधिनः, अस्माकमेव दुष्कृतं किञ्चित्, येनेदमापतितमिति स्वदोषपर्यालोचनया परैरविकृतचित्तैर्भाव्यं, नापकारचिन्ता कार्येत्येतत् । यस्तु न क्षमेत कथं स बन्धाद्विमुच्येत, बध्नाति हि क्रोध एनम् ।

ननु सति क्रोधनिमित्ते क्षमा कथं घटेतेत्यत्राह—नैत इति । सति विवेके न क्रोधे निमित्तं, स्वदु.खस्य स्वदोषैकमूलत्वात्, दोषश्चात्मनो दुष्कृत, परः पुरुषस्तु द्वारमात्रं स्वदुःखप्रमादाद्दिताभ्यभिघातवदिति भावः । क्षमाभावे का हानिरित्यत्राह—यस्तु न क्षमेतेति । एतेन मुमुक्षूणामियम-

"तथाऽरिभिर्न व्यथते शिलीमुखैः शेतेऽर्दिताङ्गो हृदयेन दूयता । स्वानां यथा वक्रधियां दुरुक्तिभिर्दिवानिशं तप्यति मर्मताडित" इति । भगवताप्युक्तम्— "न तथा तप्यते विद्धः पुमान्बाणैर्हि मर्मगैः । यथा तुदन्ति मर्मस्था ह्यसतां परुषेषवः ॥ बार्हस्पत्य ! न सोऽस्त्यत्र साधुर्वै दुर्जनेरितैः । दुरुक्तैर्भिन्नमात्मानं यः समाधातुमीश्वरः ॥" न सोऽस्त्यत्रेति तादृशसाधुदुर्लभत्वमुक्तम् । "क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽथवा । ताडितः सन्निरुद्धो वा वृत्त्या वा परिहापितः ॥ निष्ठितो मूत्रितो वाऽज्ञैर्बहुधैवं प्रकम्पितः । श्रेयस्कामः कृच्छ्रगत आत्मनाऽऽत्मानमुद्धरे"दिति । श्रीशुकदेवश्चाह—"सर्वे प्रयासा अभवन्विमोघाः कृताः कृता देवगणेषु दैत्यैः । कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥" "इति भागवतो देव्याः प्रतिशप्तुमलं तमः । मूर्ध्ना सञ्जगृहे शापमेतावत्साधुलक्षणम् ॥ गिरयो वर्षधाराभिर्हन्यमाना न विव्यथुः । अभिभूयमाना व्यसनैर्यथाऽधोक्षजचेतसः ॥ एतावान्साधुवादो हि तितिक्षेतेश्वरः स्वय"मिति । सूतश्चाह—"प्रायशः साधवो लोके परैर्द्वन्द्वेषु योजिताः । न व्यथन्ति न हृष्यन्ति यत आत्माऽगुणाश्रय" इति । एतच्च भगवदनन्यभक्तिबलैरेव कर्तुं शक्यते न तु सर्वैरपि । तथा चोक्तमुद्धवेन—"सुदुःसहमिमं मन्ये आत्मन्यसदतिक्रमम् । विदुषामपि विश्वात्मन्प्रकृतिर्हि बलीयसी । ऋते त्वद्धर्मनिरताञ्छान्तांस्ते चरणालया"निति । जीवन्मुक्तिविवेके त्वसन्मानस्य तपोवृद्धिहेतुत्वमुक्तम्—"असन्मानात्तपोवृद्धिः सन्मानात्तु तपःक्षय" इति स्मृतेः । नैष्कर्म्यसिद्धौ चोक्तम्—"वर्चस्के सपरिकरे दोषतश्चावधारिते । यदि दोषं वदेदस्मै किं तत्रोच्चरितुर्भवेत् ॥ तद्वत्स्थूले तथा सूक्ष्मे देहे त्यक्ते विवेकतः । यदि दोषं वदेत्ताभ्यां किं तत्र विदुषो भवेत् ॥" इति । अवमानसोढुरेव सुखमित्युक्तं मनुस्मृतौ—"सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते । सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यती"ति । परकृतस्वनिन्दायाः स्वानुग्रहरूपत्वं ज्ञानाङ्कुशे दर्शितम्—"मन्निन्दया यदि जनः परितोषमेति नन्वप्रयत्नसुलभोऽयमनुग्रहो मे ॥ श्रेयोऽर्थिनो हि पुरुषाः परतुष्टिहेतोर्दुःखार्जितान्यपि

---

सोढव्यमित्येतावन्न, उपकारिणो जनस्येव हितं चिन्त्यं च । इदं हि क्रोधोन्मूलनकार्यम् । सर्वे-

---

त्यन्तापेक्षितेत्युक्तं भवति । क्षन्तव्यमिति तु मुमुक्षापेक्षितोऽयमादेशः, किमधिकेन चिन्तनीयं हितं च , नैरित्यनेनेत्यत आह—इदं हि क्रोधेति । उपकारिणां हितं चिन्तनीयमित्येतन्नेह प्रकृतं नोपदेष्टव्यं च

धनानि परित्यजन्ति ॥ सततसुलभदैन्ये निःसुखे जीवलोके यदि मम परिवादात्प्रीतिमाप्नोति कश्चित् । परिवदतु यथेष्टं मत्समक्षं तिरो वा जगति हि बहुदुःखे दुर्लभः प्रीतियोगः ॥" इति । किञ्च–तैः सर्वेषां जनानां स्वशत्रूणामपि हितं–भद्रमेव चिन्तनीयं, न तु कस्याप्यशुभमिति । "समः सर्वोपकारक" इति साधुलक्षणविरोधात् ॥ २०१ ॥

पाम्–उपकारिणामपकारिणां चेत्यर्थः। उपकारिणां तु दृष्टान्तार्थं सङ्ग्रहः। एतेन सर्वशब्दप्रयोगः सार्थः ॥ २०१ ॥

तस्य स्वतः प्राप्तेरित्यत आह—उपकारिणां त्विति ॥ २०१ ॥

---

दूतकर्म न कर्तव्यं पैशुनं चारकर्म च ।
देहेऽहन्ता च ममता न कार्या स्वजनादिषु ॥ २०२ ॥

दूतकर्मेति । तैः । दूतस्य–सन्देशहरस्य कर्म दूतकर्म–अन्यवाचिकस्यान्यस्मै स्वमुखेन पत्रद्वारा वा निवेदनम् । न कर्तव्यम् । दूत्येति पाठे दूतस्य कर्म दूत्यम्, "दूतवणिग्भ्यां चे"ति यप्रत्ययः, तच्च तत्कर्म च । अस्मिन्पक्षे दूत्यशब्दे भागलक्षणा ज्ञेया, अन्यथा पुनरुक्तिदोषापत्तेः । तथा चाह वामनः—"विशिष्टवाचकानां शब्दानां विशेषणविशेष्यान्यतरसमवधाने सति विशेष्यविशेषणान्यतरमात्रपरता ग्राह्ये"ति । दूत्याख्यं कर्मेति वा । यद्वा–दूतस्येदं दूत्यं तच्च तत्कर्म चेति । तथा–पिशुनस्य–सूचकस्य कर्म पैशुनं, पररहस्यस्याप्यन्यस्मै प्रच्छन्नं निवेदनं पैशुनम्, तच्च न कर्तव्यम् । तथा–चारस्य–गूढपुरुषस्य कर्म–प्रच्छन्नं स्थित्वाऽन्यगुह्यवृत्तान्तनिवेदनं तदपि न कर्तव्यम् । तत्र दूतचारकर्मणोर्निःस्पृहत्वनिश्छद्मत्वगुणहानापत्तिः, पैशुने तु निर्दयत्वापत्तिः स्यात् । चकाराद्गृहस्थव्यवहारनिर्णयादिग्रहणम्, त्यागिनां तत्रानधिकारात् । तदुक्तं याज्ञवल्क्येन–"मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः । असम्बद्धकृतश्चैव व्यवहारो न

उक्तं नाम परेषां हितमाशंसनीयमिति । परहिताशंसया दूत्यं चारकर्म च न कार्यम्, लौकिकव्यवहारप्रसङ्गेनात्मनिष्ठाया उपघातापातात् । हिताशंसामात्रं तेषां धर्म उक्तः, न तु

उक्तं नामेति । एतेन चिन्तनीयं हितं च तैरित्यनेनास्य प्रसङ्ग इति सङ्गतिर्दर्शिता । चारकर्मेति । व्यवहितस्याप्यस्य सारूप्याद्दौत्यकर्मणा सह समुच्चित्यान्वयः कृतः । करणेऽनर्थ-

सिद्ध्यती"ति । असम्बद्धाः—त्यक्तगृहादिसम्बन्धा नैष्ठिकब्रह्मचारिवानप्रस्थादय इति मिताक्षरा।

तथा—तैः । देहे—स्वकलेवरे । अहमो भावोऽहन्ता । न कार्या—देहोऽहमित्यभिनिवेशस्त्याज्यः । आत्मनिष्ठाभ्यासेनेति शेषः । तथा स्वजनादिषु ममता—मदीया एत इति स्नेहभावश्च । न कार्या। आदिशब्दाद्वस्त्रपात्रादिपरिच्छदग्रहणम् । तेषां देहसम्बन्धित्वेनात्मसम्बन्धाभावादिति भावः । "स्नेहेन युक्तस्य न चास्ति मुक्तिरिति स्वयंभूर्भगवान् जगादे"ति । "स्नेहपाशसितः स्वेषु न स मोक्षाय कल्पते" इति च भारतोक्तेः । अहंममत्वयोरधःपातहेतुत्वमुक्तं भिक्षुगीतायाम्—"देहं मनोमात्रमिमं गृहीत्वा ममाहमित्यन्धधियो मनुष्याः । एषोऽहमन्योऽयमिति भ्रमेण दुरन्तपारे तमसि भ्रमन्ती"ति । तयोः पशुधर्मत्वं चाह युधिष्ठिरः—"न वै तेऽजित भक्तानां ममाहमिति माधव ! । त्वं तवेति च नानाधीः पशूनामिव वैकृते"ति । मनुश्चाह—"नायं मार्गो हि साधूनां हृषीकेशानुवर्तिनाम् । यदात्मानं पराग्गृह्य पशुवद्भूतवैशस"मिति । प्रह्लादश्चाह—"स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते । अन्य एष तथाऽन्योऽहमिति भेदगता सती"ति । अत एवोक्तं श्रीशुकेनापि—"त्वं तु राजन्मरिष्येति पशुबुद्धिमिमां जही"ति । अत एव तत्त्यागमाह प्रह्लादः—"अहंममेति दौर्जन्यं देहादौ मोहजं त्यजे"दिति । तद्रहितस्यैव भगवद्धामप्राप्तिरपि भवतीत्याह सौतिरुग्रश्रवाः—"त एतदधिगच्छन्ति विष्णोर्यत्परमं पदम् । अहंममेति दौर्जन्यं न येषां देहगेहज"मिति । तत्सहितस्य तु भग-

---

हिताधानाय लौकिकी प्रवृत्तिरपि, गृहस्थानां हीयं समुचिता । यदि हितमात्मलाभरूपं तदा तु तदुपधानाय तत्त्वोपदेशादिरूपा प्रवृत्तिः समुचिता नामेति भावः । चारः—प्रणिधिः । अपकुर्वतो हितमेवाशंसनीयमित्युक्तेः क पैशुनादेः प्रसङ्ग इत्यभिप्रेत्याह—पैशुनमिति । पिशुनः—कर्णेजपस्तस्य भावः पैशुनम् । परानर्थैकफलकस्य वचनस्य रहसि कथनं पैशुनम् । इदं तु सुतरां त्याज्यमिति भावः । अद्रोहप्रधाने त्यागधर्मे प्रतिष्ठितस्य पैशुनमत्यन्तानर्थायेति ज्ञापनाय साधारणस्याप्यस्येहोपदेशः । किं बहुनाऽऽदिष्टेन, संसृतिमूलभूतमेतद्द्वयं देहेऽहन्ताबुद्धिस्तदीये

---

माह—लौकिकेत्यादिना । नन्वेवं परेषां हिताधानमादिष्टं कथं घटेतेत्यत्राह—हिताशंसेति । हितविशेषस्य तु सम्पादनाय प्रवृत्तिर्मुमुक्षोरुचितेति विशेषमाह—यदीत्यादिना । ननु पैशुन्यं सर्वैस्त्याज्यं नाम, तत्साधारणस्यास्य प्रतिषेधस्यासाधारणप्रकरणे उपदेशोऽसङ्गत इत्याशङ्कां परिहरति—अद्रोहेत्यादिना । किं बहुनाऽऽदिष्टेनेति । एतेनान्तिमेऽस्मिन्नादेशे आदरो ज्ञापितः । अभिमाना-

वानपि दूरत एव भवतीत्युक्तं तत्त्वस्तुतौ—"यत्सानुबन्धेऽसति देहगेहे ममाहमित्यूढदुराग्रहाणाम् । पुंसां सुदूरं वसतोऽपि पुर्यां भजेम तत्ते भगवन्पदाब्ज"-मिति। "देहेऽहन्ता भवेद्यावन्ममता दैहिकेषु च। पुंसोऽज्ञस्य भवेत्तावन्नोपशाम्यति संसृति"रिति वसिष्ठश्चाह ।अत एवोक्तं ब्रह्मणापि—"येषां स एव भगवान् दययेदनन्तः सर्वात्मना श्रितपदो यदि निर्व्यलीकम् । ते दुस्तरामतितरन्ति च देवमायां नैषां ममाहमिति धीः श्वशृगालभक्ष्य" इति। विस्तरो भरताख्याने द्रष्टव्यः॥२०२॥

ममताबुद्धिश्चेति, यथेदं वासनयापि नानुवर्तेत तथा यतितव्यमित्याह—देहेऽहन्तेति । अहन्ता–आत्मबुद्धिः । स्वजनादिषु–आदिशब्दाद्गृहक्षेत्रादयः । यद्यपि स्वजनेषु स्वीयत्वबुद्धिर्न कार्येति व्याहतं वचः, न च स्वशब्देन देहस्य परामर्शो घटेत, नहि तच्छब्दपर्यायोऽयं येन प्रकृतपरामर्शिता स्यात्, समभिव्याहृतक्रियाकर्तर्येव तत्पदस्य व्युत्पत्तेः, वाक्यभेदान्न समभिव्याहृतक्रियान्वयित्वमपि । तथापि स्वजनत्वेन व्यवह्रियमाणेष्वित्यर्थात् न क्षतिः । अस्वेति वा पदच्छेदः । वस्तुतः स्वशब्दोऽत्र ज्ञातिपरः, तथाभूता जना इत्यर्थः । सर्यते चाहंममताभ्रमस्य बन्धकता—"देहेऽहंता भवेद्यावन्ममता दैहिकेषु च । पुंसोऽज्ञस्य भवेत्तावन्नोपशाम्यति संसृतिः ॥" इति ॥ २०२ ॥

र्थताभ्रमं व्यावर्तयन्व्याचष्टे—आत्मबुद्धिरिति । व्याहतं वच इति । घटोऽघट इतिवदपार्थकं वच इति भावः । ननु स्वशब्दोऽत्र देहपरः, देहसम्बन्धिषु जनेषु स्वीयत्वबुद्धिर्न कार्येत्यर्थादव्याहतं वच इत्यत आह—न चेत्यादिना । तर्हि स्वशब्दस्य किं प्रवृत्तिनिमित्तं तदाह—समभिव्याहृतेति । तत्पदस्य–स्वपदस्य । ननु क्रियाकर्तर्येवेति नायं नियमः, किन्तु समभिव्याहृतक्रियान्वयिसामान्ये स्वपदस्य शक्तिरुचिता, तथाच देहस्य क्रियान्वयित्वेन स्वशब्देन देहपरामर्शो भवेदित्याशङ्कां प्रतिक्षिपन्नाह—वाक्यभेदादिति ॥ २०२ ॥

---

इति सङ्क्षेपतो धर्माः सर्वेषां लिखिता मया ।
साम्प्रदायिकग्रन्थेभ्यो ज्ञेय एषां तु विस्तरः ॥ २०३ ॥

धर्मोपदेशमुपसंहरति—इतीति । इति–अनेन प्रकारेण । सर्वेषां–मदाश्रि-

कालदेशबुद्ध्यानुगुण्यं पर्यालोच्य सङ्क्षेपादिष्टं नामात्र। अन्यत्र तु विस्तृतमुपदिष्टम् । तत्सम्प्रदायतस्तत्त्वोऽवगम्यतामित्याह—इति सङ्क्षेपत इति । इति–उक्तप्रकारेण। सर्वेषां–नैष्ठिकादीनामाश्रितानां सर्वेषाम् । सङ्क्षेपतः–अनतिविस्तृतमित्येतत् । मया–भवभयपरिहरणायावतीर्णेन मया । लिखिताः–न केवलं वाचाऽऽदिष्टं, तस्य सर्वदेशकालव्यापित्वासम्भवेन देश-

कालदेशबुद्ध्यानुगुण्यम्–श्रोतॄणामिति शेषः । गदिता इत्यनुक्त्वा लिखिता इति निर्देशस्य स्वारस्यमाह—न केवलमित्यादिना । निबन्धेऽभिप्रदर्शिता इत्यनुक्त्वा लिखिता इति लिखधातोर्ग्रहणे

तानां जनानाम् । धर्माः—सदाचाराः । मया । सङ्क्षेपतः—समासात् । लिखिताः—अलिख्यन्त । एषां—धर्माणाम् । विस्तरः—विस्तारस्तु । सम्प्रदाये मता इष्टा विदिता वा साम्प्रदायिकास्ते च ते ग्रन्थाश्च तेभ्यः, अस्मत्सम्प्रदाये इष्टत्वेनाभिमतेभ्यः श्रीभागवतादिसच्छास्त्रेभ्यः सकाशात् । ज्ञेयः ॥ २०३ ॥

कालविप्रकृष्टानामुपकारकत्वासम्भवात्, किन्तु निबन्धनरूपेण प्रवर्तितमपि । यश्च निबन्धनलेखः सोऽप्यस्मदीयः । नातोऽत्र वः शङ्कावकाशः कश्चिदिति भावः । एषां विस्तरस्तु साम्प्रदायिकग्रन्थेभ्यो ज्ञातव्यः । ग्रन्थस्य साम्प्रदायिकत्वकथनेन तदर्थस्य सम्प्रदायप्राप्तत्वं तत्प्रबन्धानामपि सम्प्रदायगम्यत्वं ज्ञाप्यते । नहि गुरुपरम्परयानवधृतोऽर्थः फलाय । अत एव भगवान् गीतायामाह—"तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥" इति ॥ २०३ ॥

स्वारस्यमाह—यश्चेति । ग्रन्थे साम्प्रदायिकत्वविशेषणस्य फलमाह—ग्रन्थस्य साम्प्रदायिकत्वकथनेनेति ॥ २०३ ॥

---

**सच्छास्त्राणां समुद्धृत्य सर्वेषां सारमात्मना ।**
**पत्रीयं लिखिता नृणामभीष्टफलदायिनी ॥ २०४ ॥**

स्वलेखस्य समूलतामाह—सच्छास्त्राणामिति । मयेत्यन्वेति । सर्वेषां सच्छास्त्राणां सारं—रसम् । आत्मना—बुद्ध्या । समुद्धृत्य—बहिराकृष्य । नृणां—मनुष्याणाम् । अभीष्टं—स्वेप्सितं फलं ददातीत्येवंशीला अभीष्टफलदायिनी ॥२०४॥

आश्रितानामनाश्रितानां च विश्वासायाह—सदिति । नहि ममायमादेश इत्यतोऽन्यद्विश्वासायापेक्ष्यते आश्रितानाम् । यानि सच्छास्त्राणि प्रसिद्धानि श्रुतयस्तन्मूलकानि च तेषां सारभूतोऽर्थः समुपदिष्टोऽत्र । इयं नृणामभीष्टफलदायिनी । ये तु शास्त्रवश्यास्तेषां सर्वेषामभीष्टमियमुपसेव्यमाना वितरेत् ॥ २०४ ॥

आश्रितानामित्येतद्दृष्टान्तार्थम् । आश्रितानामिवानाश्रितानामपि विश्वासायाहेत्यर्थः । आश्रितानां विश्वासाय तु नेदं वचनमपेक्ष्यत इत्येतत् । तदेवोपपादयति—नहीत्यादिना ॥ २०४ ॥

---

इमामेव ततो नित्यमनुसृत्य ममाश्रितैः।
यतात्मभिर्वर्तितव्यं न तु स्वैरं कदाचन ॥ २०५ ॥

इमामिति। ततः–सर्वसच्छास्त्रसारत्वादभीष्टफलदत्वाच्च हेतोः। ममाश्रितैर्जनैः। यतः–नियमित आत्मा–मनो येषां तैस्तथाभूतैः सद्भिः। इमां–पत्रीम्। अनुसृत्य–एतदुक्तप्रकारेणैव। वर्तितव्यम्। कदाचन–क्वापि। स्वैरं–स्वच्छन्दं यथा तथा तु। न वर्तितव्यम् ॥ २०५ ॥

---

यतो भवभयनिर्हरणायावतीर्णेन मया प्रवर्तिता सच्छास्त्रसारसङ्ग्रहरूपा च ततः ममाश्रितैः सर्वैरन्वहमिमामनुसृत्यैव वर्तितव्यमवहितमनस्कैः कदाप्येनामुल्लङ्घ्य स्वेच्छया न वर्तेतेत्याह—इमामिति। इमामनुसृत्यैवेत्यन्वयः। यतात्मभिः–अवहितमनस्कैरित्यर्थः ॥ २०५ ॥

---

अवहितमनस्कैः–एतदादिष्टेषु धर्मेष्ववहितमनस्कैः ॥ २०५ ॥

---

वर्तिष्यन्ते य इत्थं हि पुरुषा योषितस्तथा।
ते धर्मादिचतुर्वर्गसिद्धिं प्राप्स्यन्ति निश्चितम् ॥ २०६ ॥

वर्तिष्यन्त इति। ये पुरुषास्तथा योषितश्च। इत्थं–मल्लिखितशिक्षापत्र्युक्तप्रकारेण। वर्तिष्यन्ते–स्वस्वधर्मान् पालयिष्यन्ति। ते पुरुषास्ताः स्त्रियश्च। धर्म आदिर्यस्य स चासौ चतुर्वर्गश्च—पुरुषार्थचतुष्टयं तस्य सिद्धिः–फलं ताम्। स्वेप्सितां धर्मसिद्धिमर्थसिद्धिं कामसिद्धिं मोक्षसिद्धिं च। निश्चितं यथा तथा। प्राप्स्यन्ति। यस्य यस्य धर्मादिषु यद्यदभीष्टं स स तत्तल्लप्स्यते इत्यर्थः ॥ २०६ ॥

---

ये पुनरिममस्मदादेशमनुसृत्य स्वे स्वे धर्मे वर्तेरंस्ते पुरुषा योषितो वा यथाभिलषितमपवर्गमान्तरालिकमन्यच्च धर्मादिफलं यथाभिलषितं वा चतुर्ष्वेकं प्राप्नुयुरित्याह—वर्तिष्यन्ते इति ॥ २०६ ॥

---

मूले–निश्चितमिति। इदं च भगवतः प्रतिज्ञावचनं संशयो मा भूदिति ॥ २०६ ॥

---

**नेत्थं य आचरिष्यन्ति ते त्वस्मत्सम्प्रदायतः।**
**वहिर्भूता इति ज्ञेयं स्त्रीपुंसैः साम्प्रदायिकैः॥ २०७॥**

विपक्षे दोषमाह—नेति। ये तु। इत्थं नाचरिष्यन्ति—मल्लिखितशिक्षापत्रीमतिक्रम्य स्वच्छन्दं वर्तिष्यन्ते। ते तु। अस्मत्सम्प्रदायतः। बहिर्भूताः—बहिष्कृता इति। साम्प्रदायिकैः—अस्मत्सम्प्रदाये वर्तमानैः। स्त्रियश्च पुमांसश्च स्त्रीपुंसास्तैः। ज्ञेयम्। अस्मदुक्तधर्मेषु ये वर्तेरंस्त एवास्मदीया न त्वन्ये इत्यस्मदीयैर्ज्ञातव्यम्॥२०७॥

ये पुनरिममादेशं नानुवर्तेरन् तान् अस्मद्गोष्ठीबहिष्ठान् जानतेत्याह—नेति। इत्थमुक्तेन प्रकारेण नाचरिष्यन्ति-इममादेशमुल्लङ्घ्य स्वेच्छया ये वर्तेरन्नित्यर्थः। ते अस्मत्सम्प्रदायतो वहिर्भूता इति ज्ञेयम्। गुरुपरम्पराप्राप्तः सदुपदेशः सम्प्रदायः। अस्मदीयात्सम्प्रदायाद्बहिर्भूताः-आस्माकीनस्य गुरुपरम्पराप्राप्तस्य सदुपदेशस्यानर्हा इत्यर्थः। अस्मदीयगोष्ठ्यां प्रवेशं नार्हन्तीति यावत्। कैर्ज्ञेयमित्यत्राह—साम्प्रदायिकैरिति। ये पुनरास्तिकाग्रेसरा अस्मत्सम्प्रदायनिष्ठास्तैः सर्वैर्ज्ञातव्यमसत्कपालहरीं परिहरतामेवादृशानां सङ्गस्य परिजिहीर्षयेत्येतत्॥ २०७॥

सम्प्रदायवहिर्भूतशब्दौ व्याचष्टे—गुरुपरम्परेत्यादिना॥ २०७॥

---

**शिक्षापत्र्याः प्रतिदिनं पाठोऽस्या मदुपाश्रितैः।**
**कर्तव्योऽनक्षरज्ञैस्तु श्रवणं कार्यमादरात्॥ २०८॥**
**वक्त्रभावे तु पूजैव कार्याऽस्याः प्रतिवासरम्।**
**मद्रूपमिति मद्वाणी मान्येयं परमादरात्॥ २०९॥**

शिक्षापत्र्या इति। मदुपाश्रितैः—मच्छिष्यैः। त्रैवर्णिकैरेवेति ज्ञेयम्। प्रतिदिनम्। अस्याः शिक्षापत्र्याः। पाठः—नियमेन पठनम्। कर्तव्यः। तत्रा-

अस्य निबन्धस्य केवलं पठनं श्रवणं वा श्रद्धया क्रियमाणं कल्याणाय स्यादित्यभिप्रेत्याह—शिक्षापत्र्या इति। अर्थग्रहणासमर्थैरन्वहं पठनं कार्यं, ये पुनरक्षरज्ञानविधुरास्तैः श्रवणं वा कार्यम्, पठनेऽप्यसामर्थ्ये पठितुश्चालाभेऽस्या अन्वहं सपर्यामात्रं वा कार्यम्। इदं बोध्यं—

अर्थग्रहणसमर्था ह्यन्वहमेतदर्थान्मनसि धारयन्तः समनुतिष्ठन्ति नामादेशानेवानिति तथाविधानां सर्वदा तदर्थावधारणमस्तीत्यभिप्रेत्यायं पठनादेशोऽर्थज्ञानासमर्थानधिकृत्येति व्याचष्टे—अर्थेति। अविशेषेण सर्वैरिति तु रमणीयम्। नन्वर्थावधारणमनुष्ठानद्वारेण फलाय भवेत्, शब्दराशिपठनं श्रवणं वा निरर्थकमित्यादिश्यत इत्यत आह—इदं बोध्यमित्यादिना। अस्मिन्नर्थे आप्तवचनं

प्यनक्षरज्ञैः-स्पष्टवर्णोच्चारणानभिज्ञैः । तुशब्दश्चार्थे । पाठानधिकारिभिः शूद्रैश्च । आदरात् -प्रीत्या । अस्याः श्रवणं कार्यम् ॥ २०८ ॥ वक्त्रभाव इति । श्रोतृभिरिति ज्ञेयम् । वक्तुः-वाचकस्याभावः-असान्निध्यं तस्मिन्सति तु । प्रतिवासरं-प्रतिदिनम् । अस्याः । पूजा-यथामिलितोपचारैरर्चनमेव। कार्या-कर्तव्या । तत्पूजाया अपि स्वपूजासमफलत्वमाह--मद्रूपमिति । इयं मद्वाणी-शिक्षापत्रीरूपा मदुक्तधर्मप्रकाशिकेत्यर्थः । मद्रूपं-ममैव मूर्तिरस्ति । इति-हेतोः, इति-ज्ञात्वेति वा । परमादरात्-महताऽऽदरेण । मान्या-पूजनीया । तयैवेप्सितफलावाप्तिर्भविष्यतीति भावः ॥ २०९ ॥

---

भगवदुक्तमर्थमननुतिष्ठतामपि श्रद्धामात्रं यदि स्यात्तया श्रद्धया भवेदेव नियमेनानुष्ठानपर्यन्ता प्रवृत्तिः क्रमशः, ततः स्यादेव तस्य निरवधिश्रेयोऽपि, तस्मात्पठनमात्रे श्रवणमात्रे सपर्यामात्रे वा श्रद्धान्वयात् श्रेयः सिद्ध्येदिति श्रवणादीनां विधानमिति । "ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥" इति श्लोकं व्याचक्षाणेन भगवता भाष्यकृता "ये चाननुतिष्ठन्तोऽप्यस्मिन् शास्त्रार्थे श्रद्दधाना भवन्ति तेऽपि मुच्यन्ते" इति हि भाषितम् ॥ अस्मदाश्रितैः सर्वैरेव मयि सन्निहित इव मदादेशरूपेऽस्मिन् लेखेऽत्यादरः कार्य इत्याह--मद्रूपमिति । ममेयं या वाणी-आदेशरूपा, ममैव रूपमित्याकलय्य परमादरान्मान्या । अस्यादरेण सत्कारमर्हति । इयं हि वाणी वक्तारं वाच्यं च मां सन्निहितमसन्निहितं च प्रकाशयति, अतो ममैवेदमपरं रूपं कालविप्रकर्षरहितमित्यवधार्यात्यादरः कार्य इति भावः ॥ २०८ ॥ २०९ ॥

---

प्रमाणयति--ये मे मतमित्यादिना । कथं शब्दसन्दर्भलक्षणस्य भगवद्रूपत्वमितिशङ्कां वारयन्नाह--इयं हीत्यादिना ॥ २०८ ॥ २०९ ॥

---

युक्ताय सम्पदा दैव्या दातव्येयं तु पत्रिका ।
आसुर्या सम्पदाऽऽढ्याय पुंसे देया न कर्हिचित् ॥२१०॥

युक्तायेति । इयं पत्रिका तु । दैव्या-देवानां-दैवसर्गोत्पन्नानां जीवानामियं दैवी, "द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च"ति भगवदुक्तेः, तया।

---

अथमर्थं आस्तिकाय देयो न नास्तिकायेत्याह--युक्तायेति । दैवी सम्पत्--"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः । दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥" इत्यादिनोक्ता । आसुरी सम्पत्तु--"असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम्" इत्यादिनोक्ता । आसुर्या सम्पदा युक्तो नास्तिकः । अन्यस्त्वास्तिकः । सदुपदेशस्य च न नास्तिकः पात्रम् । अत इदमुच्यते--आसुर्या

सम्पदा—सम्पत्त्या। युक्ताय—जुष्टाय। पुंसे—पुरुषाय। दातव्या। आसुराणां—आसुरसर्गोत्पन्नानामियमासुरी तया। सम्पदा। आढ्याय—सम्पन्नाय पुरुषाय तु। कर्हिचित्—क्वापि। न देया। अपात्रदानस्य फलवैपरीत्यावहत्वादिति भावः। दैवासुरसम्पदौ श्रीभगवद्गीतायामुक्ते—"अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः। दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम्॥ अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्। दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता। भवन्ति सम्पदं दैवीमभिजातस्य भारत!॥ दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च। अज्ञानं चाभिजातस्य पार्थ! सम्पदमासुरीम्॥ दैवी सम्पद्विमोक्षाय निबन्धायासुरी मते"ति॥ २१०॥

---

सम्पदा युक्ताय न देया दैव्या सम्पदा युक्ताय तु देयेति। शिक्षापत्री—एतत्प्रतिपाद्योऽर्थः। आह च भगवान्—"इदं ते नातपस्काय नाभक्ताय कदाचन। न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति॥" इति॥ २१०॥

---

दैवीं सम्पदं व्याचष्टे—दैवी सम्पदित्यादिना। आसुरीं व्याचष्टे—आसुरी सम्पच्चेति॥२१०॥

---

**विक्रमार्कशकस्याब्दे नेत्राष्टवसुभूमिते।**
**वसन्ताद्यदिने शिक्षापत्रीयं लिखिता शुभा॥ २११॥**

विक्रमेति। विक्रमार्कः—विक्रमादित्यनामा शकवर्ती राजा, तस्य शकः—धर्ममर्यादानिबन्धनकालस्तस्य। नेत्राष्टवसुभूमिते—नेत्रे इति द्वे, अष्ट, वसव इत्यष्टौ, भूरित्येकः, एषां द्वन्द्वः, नेत्रादौ निरूढलक्षणया सङ्ख्यारूपोऽर्थोऽवगम्यते, अङ्कानां वामतो गतिः, ताभिर्मिते—परिमिते। अष्टादशशताधिकद्व्यशीतितम इत्यर्थः। अब्दे—वर्तमानवर्षे। वसन्तस्य—वैष्णवेषु प्रसिद्धस्य वसन्तोत्सवस्य,

---

अखिलमङ्गलावहस्यास्य लेखस्यावतरणकालमाह—विक्रमार्केति। वसन्ताद्यदिने—वसन्तो रागविशेषः, अस्य गानयोग्यः कालो वसन्तशब्देनेह लक्ष्यते, तस्याद्यो दिनमः श्रीपञ्चमी। तथाच स्मर्यते—"श्रीपञ्चमीं समारभ्य यावत्स्याच्छयनं हरेः। तावद्वसन्तरागस्य गानमुक्तं मनीषिभिः" इति। श्रीपञ्चमी च—यस्यां पञ्चम्यां श्रियो व्रतमुक्तं सा। सा च माघशुक्लपञ्चमी। तथाच स्मर्यते—"चतुर्थी वरदा प्रोक्ता तत्र गौरी सुपूजिता। सौभाग्यमतुलं कुर्यात्पञ्चम्यां श्रीरपि

आद्यं–प्रथमं–दिनं तस्मिन्। वसन्तपञ्चमीति प्रसिद्धायां माघशुक्लपञ्चम्यामित्यर्थः। शुभा–सर्वजनहितावहा। इयं शिक्षापत्री लिखिताऽस्ति ॥ २११ ॥

श्रियम्" इति। विक्रमार्कशकस्य ब्यशीत्यधिकाष्टशतोत्तरसहस्रतमसंवत्सरे माघशुक्लपञ्चम्यामयं लेखः प्रवर्तित इति भावः ॥ २११ ॥

वसन्तशब्दस्य ऋतुविशेषपरताभ्रमं व्यावर्तयति—वसन्त इत्यादिना ॥ २११ ॥

---

**निजाश्रितानां सकलार्तिहन्ता सधर्मभक्तेरवनं विधाता।**
**दाता सुखानां मनसेप्सितानां तनोतु कृष्णोऽखिलमङ्गलं नः॥२१२॥**

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च काव्यानि प्रथन्त" इत्यभियुक्तवाक्यात्समाप्तौ मङ्गलमाचरति—निजाश्रितानामिति। निजाः–स्वकीया आश्रिताः–भक्तजनास्तेषाम्। सकलाः–समग्रा जन्ममरणाद्याः, आर्तयः–दुःखानि तासां हन्ता–नाशकर्ता। भगवतो भक्तार्तिहरत्वमुक्तं श्रीभागवते—"भूयो नमः सद्वृजिनच्छिदे" "नतोऽस्म्यहं तच्चरणं समीयुषां भवच्छिदं स्वस्त्ययनं सुमङ्गलम्" "शारीरा मानसा दिव्या वैयासे ये च मानुषाः। भौतिकाश्च कथं क्लेशा बाधन्ते हरिसंश्रयम्" "तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानाम्" "आपन्नलोकवृजिनोपशमोदयाद्य!" "प्रपन्नानां भयापहम्" "प्रणतक्लेशनाशाये"त्यादि। तदतिरिक्तस्य तु न तथात्वमित्यप्युक्तं तत्रैव—"नान्यत्तव पदाम्भोजात्पश्यामि शरणं नृणाम्। बिभ्यतां मृत्युसंसारादीश्वरस्यापवर्गिका"दिति। "मर्त्यो मृत्युव्यालभीतः पलायँल्लोकान्सर्वान्निर्भयं नाध्यगच्छत्। त्वत्पादाब्जं प्राप्य यदृच्छयाद्य स्वस्थः शेते मृत्युरस्मादपैती"ति च। धर्मेण–वेदविहितेन स्वधर्मेण सहिता सधर्मा, सा चासौ भक्तिश्च तस्याः। अवनं–रक्षणम्। विधाता–कर्ता। भगवतो धर्मभक्तिरक्षणकर्तृत्वं तु—"धर्मावनायोरुकृतावतारः" "इत्थं परस्य निजवर्त्मरिरक्षयात्तलीलातनो"रित्यादिनोक्तं वेदितव्यम्। मनसा ईप्सितानां–वाञ्छितानां सुखानां दाता च। निजाश्रितेभ्य इति ज्ञेयम्। तथा

मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते इति ख्यापयन्मङ्गलमातनोति—निजेति। इन्द्रादयोऽप्याश्रितानामार्तिं प्रशमयन्ति नाम, तथापि नाखिलां, स हि तक्षकस्याश्रि-

सकलशब्दस्वारस्यमाह—इन्द्रादयोऽपीत्यादिना। पाठक्रमादर्थक्रमस्य प्राबल्यमभिप्रेत्य व्यवहि-

चोक्तम्—"पुंसाममायिनां सम्यग्भजतां भाववर्धनः। श्रेयो दिशत्यभिमतं यद्धर्मादिषु देहिना"मिति । तथा—"तांस्तान्कामान्हरिर्दद्याद्यान्यान्कामयते जनः । आराधितो यथैवैष तथा पुंसां फलोदय" इति । तथा—"यं धर्मकामार्थविमुक्तिकामा भजन्त इष्टां गतिमाप्नुवन्ती"ति । तथा—"सर्वान्ददाति सुहृदो भजतोऽभिकामानात्मानमप्युपचयापचयौ न यस्ये"ति । तथा—"आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्यौर्भूरसाः सकलयोगगुणास्त्रिवर्गः । ज्ञानं च केवलमनन्त भवन्ति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशी"रित्यादि। एवंविधः कृष्णः। नः—अस्माकम्। अखिलमङ्गलं—सर्वकार्येषु मङ्गलम् । तनोतु—विस्तारयतु । प्रार्थनायां लोट् । "सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनं हरि"रिति स्मृतेस्तस्य मङ्गलमूर्तित्वादिति भावः ।

---

तस्य जनमेजयकृते यागे प्रसक्तामापत्तिमपाकर्तुं न प्राभवत् । शर्वोऽप्याश्रितस्य बाणासुरस्यार्तिमपाकर्तुं न प्राभवत् । पश्यत एव तस्य बाहुवनं छिन्नम् । किंबहुना—भवदाश्रितो दह्यमानानामार्तिं प्रशमयितुं न कश्चित्समर्थोऽस्मादत उच्यते—निजाश्रितानां सकलार्तिहन्तेति । नहि कश्चिद्भगवन्तमाश्रित्य आर्तोऽवसीदन्दृष्टः । पश्यत प्रह्लादपाण्डुतनयादीन् । यद्यदैहिकं पारलौकिकमन्यद्वा विश्वातिशायि सुखमभिलषितं तत्तदखिलमाश्रितेभ्यो वितरितुं समर्थो नान्यः कश्चिदित्याशयेनाह—दातेति । यदयं कृष्णः—आनन्दमयः, अस्याश्रयणेऽप्रतिहतं सुखं सिद्ध्येदेवेति भावः । आभ्यामनिष्टनिवारणे इष्टप्रापणे च भगवत एवोपायत्वं "फलमत उपपत्ते"रिति सूत्रकृता निरूपितमुक्तम् । ननु—अनुष्ठितेन कर्मणा ज्ञानेन च निरतिशयसुखरूपफलस्य सिद्धेः उपायत्वं कर्मादिषु मुख्यमिति भ्रमं व्यावर्तयति—सधर्मभक्तेरिति । यश्च कर्मयोगो ज्ञानयोगो भक्तियोगो वा सोऽप्येतत्प्रसादेनैव सिद्ध्यति। अयमेव च तेषां पोषकः, अन्यथा तत्सिद्धिर्न

---

तमपि प्रथमं योजयन्व्याचष्टे—यद्यदित्यादिना । अनिष्टनिवारणोक्तेः समनन्तरमिष्टप्रापणोक्तिर्हि सङ्गता । अथास्य निबन्धस्यार्थान् स्वरसतः सङ्गृह्णन् मङ्गलमातनोति—शिष्यानिति । यत्तदोर्नित्यसम्बन्धात् येनेति सिद्धम् । बोधयता येन निगदितं इत्यन्वयः । तत्र कृते परमतनिराकरणे परेषां क्षोभमाशङ्क्य परिहरति—ग्रन्थे इति । पदपङ्कजरेणुनेति । अनेन भगवच्चरणाश्रितेष्वन्यतमः कश्चिदिति गम्यते । आत्मनोऽनुरूपं च भगवद्दास्यं सर्वातिशायि व्यज्यते । पदरेणुरित्यनुक्त्वा पदपङ्कजरेणुरित्युक्तेरनेकमौलिधार्यत्वम्, माननीयत्वं च व्यज्यते । सौरभ्यातिशयात्पङ्कजरेणवो हि शिरसा धार्या भवन्ति । पदपङ्कजं च भगवतः सहजानन्दस्य—आनन्दमयस्य परमात्मनः, यदि नामानन्दमयस्य भगवतः पदपङ्कजरेणुः, स किं मङ्गलं नावहेत्, तदयमाश्रयणीयः सर्वैस्तत्त्वदर्शिभिः । व्याख्यानमपि नाधीतविद्याबलायत्तम्, किन्तु भगवत्प्रसादायत्तमित्याह—धिया तेनैव दत्तयेति । यद्यदत्र निबन्धे विशेषतो व्याहृतम्, तदात्मबुद्धिबलसमुत्प्रेक्षितं येन प्रमादसम्भावना स्यात्, किन्तु प्राचां प्रबन्धादाहृतमित्याह—प्राचामिति । ननु वृथायं प्रयासः, यतः एव निबन्धाः सन्तीत्यत्राह—परीक्षकाणामिति । यद्यपि रत्नाकरे सन्ति नाम रत्नानि, यावन्न तत आहृत्

इत्यर्थदीपिका टीका शिक्षापत्र्या यथामति ।
रचिताऽऽर्षप्रमाणाढ्या तया प्रीतोऽस्तु मे हरिः ॥ १ ॥
कल्याणमूर्तिरिह यो निजपादपद्मभक्तानुपादिशदुदारमुदारकीर्तिः ।
एकान्तिकं वृषमनादिगुरुः स ईशः सन्मङ्गलं दिशतु धर्मसुतः सदा नः ॥२॥
योऽक्षरे बृहति दिव्यविग्रहो यत्परं किमपि नेश्वरेश्वरः ।
यः स एव भुवि धर्मनन्दनो धर्ममेव जयतीह पोषयन् ॥ ३ ॥

इति श्रीभगवत्सहजानन्दस्वामिचरणकमलपरिचर्यापरायणविद्वद्वरयोगिवर्यश्रीशतानन्दमुनिविरचिता-श्रीशिक्षापत्रीव्याख्याऽर्थदीपिकाख्या परिसमाप्ता ॥ २१२ ॥

---

स्यादिति भावः। उक्तं च गीतायाम्—"तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥" इति । तस्मात् फले उपायत्वमस्यैव मुख्यं बोध्यम् ॥ २१२ ॥

शिष्यान् बोधयता हितं निगदितोऽहिंसादिधर्मो महान्,
कर्मज्ञानविरक्तिभक्तिघटिता या मुक्तिनिःश्रेणिका ।
तस्मात्तत्त्वमुदीरितं निगदिता जीवेशमायाभिदा
प्रोक्तो देशिकवर्णिसाधुगृहिणां धर्मः स मे स्याद्गतिः ॥ १ ॥
ग्रन्थेऽस्मिंस्तत्त्वसिद्ध्यै विमतनिरसनं तत्र तत्र प्रगल्भैः
सत्तर्कैर्व्यधायि श्रुतिशिखरसमारूढतत्त्वानुकूलैः ।
तच्चेन्मात्सर्यदोषाविलहृदयपथा दूषयेयुस्ततः किं
बोद्धारो निर्मलान्तःकरणसरणयः सन्ति सन्तो धरित्र्याम् ॥ २ ॥
इति श्रीसहजानन्दपदपङ्कजरेणुना ।
व्याख्यातं तद्वचोऽनेन धिया तेनैव दत्तया ॥ ३ ॥
प्राचां प्रबन्धान्परिशील्य भूम्ना ततस्ततो व्याहृतमत्र किञ्चित् ।
परीक्षकाणामभिनन्दनाय रत्नाकराद्रत्नमिवाहृतं स्यात् ॥ ४ ॥
क्वचन यदि कलङ्कः किं ततो यत्समन्ताद्गुरुवचनसुधाभिः सम्भृतोऽयं निबन्धः ।
अमृतमयमयूखः स्यात्कलङ्केन युक्तो ननु कलयति चित्ताह्लादनं दृष्टमात्रः ॥५॥
उदेति वागियं येन वाचा नाभ्युदितस्तु यः ।
सोऽयं स्ववचसां व्याख्यां स्वीकरोतु समर्पिताम् ॥ ६ ॥

इति श्रीभगवत्सहजानन्दस्वामिसुत-श्रीरघुवीराचार्यविरचितं भाष्यं समाप्तम् ॥

---

समुचितसन्निवेशेन घटयित्वा प्रसार्यन्ते कस्य तान्यानन्दाय स्युस्तथेमे गभीरार्था इति भावः ॥ २१२॥ विबुधहृदयधार्याण्यर्थरत्नानि यस्मिन् विमतितिमिरविलङ्घ्यास्तर्ककल्लोलमालाः । परममृतमनन्तं यत्र तद्ब्रह्मगम्यं व्यरचि विवृतिरेषा तस्य भाष्यार्णवस्य ॥ १ ॥ भाष्यस्यास्य गभीरस्य टीकेयं रचिता मया । भगवान्सहजानन्दः परमात्मा प्रसीदतु ॥ २ ॥

इति श्रीरघुवीराचार्यसुत-श्रीभगवत्प्रसादाचार्यविरचिता भाष्यटीका समाप्ता ॥

# श्रीशिक्षापत्रीश्लोकानां अकाराद्यनुक्रमणिका ।



श्रीस्वामिनारायणो जयति ।

# अस्मिन्निबन्धे प्रमाणतयोपात्तानां श्रुतिस्मृत्यादीनां वर्णक्रमेण नामानि ।

वेदाः

अथर्वसंहिता
ऋग्वेदसंहिता
ऋग्वेदे खिलम्
( ऋचि ) बाष्कलशाखा
ऐतरेयब्राह्मणम्
ऐतरेयारण्यकम्
गोपथब्राह्मणम्
तैत्तिरीयब्राह्मणम्
तैत्तिरीयसंहिता ( कृष्णयजुर्वेदः )
तैत्तिरीयारण्यकम्
दैवतब्राह्मणम् ( पाङ्गिब्राह्मणम् )
पुरुषसूक्तम्
पैङ्गिरहस्यम्
मैत्रायणीसंहिता
( यजुषि ) कठशाखा
शतपथब्राह्मणम्
शुक्लयजुर्वेदसंहिता
सामवेदसंहिता
( साम्नि ) मैत्रायणीशाखा

उपनिषदः

अथर्वशिखोपनिषत्
अथर्वशिरउपनिषत्
अद्वयतारकोपनिषत्
आत्मोपनिषत्
आरुणिकोपनिषत्
ईशावास्योपनिषत्
ऐतरेयोपनिषत्
कठोपनिषत्
कैवल्योपनिषत्
कौषितकीब्राह्मणोपनिषत्
गर्भोपनिषत्
गोपालपूर्वतापिन्युपनिषत्
छान्दोग्योपनिषत्
जाबालोपनिषत्
तैत्तिरीयोपनिषत्
नारायणोपनिषत्

नारायणोपनिषत्
( तैत्तिरीयारण्यके नारायणानुवाकः )
नृसिंहोत्तरतापिन्युपनिषत्
परमहंसोपनिषत्
प्रश्नोपनिषत्
बृहदारण्यकोपनिषत्
महोपनिषत्
माण्डूक्योपनिषत्
मुण्डकोपनिषत्
मैत्रायण्युपनिषत्
वासुदेवोपनिषत्
श्वेताश्वतरोपनिषत्
सुबालोपनिषत्
जैमिनीयन्यायमालाविस्तरः
तन्त्रवार्तिकम्
पाराशर्यविजयः
पूर्वमीमांसासूत्रम्
शाबरभाष्यम्
बोधायनवृत्तिः
ब्रह्मसूत्रम्
ब्रह्मसूत्ररामानुजभाष्यम्
ब्रह्मसूत्रशाङ्करभाष्यम्
भामती ( शाङ्करभाष्यव्याख्या )
रामानुजगीताभाष्यम्
शाङ्करगीताभाष्यम्
आपस्तम्बश्रौतसूत्रम्
कात्यायनसूत्रहरिहरभाष्यम्
गृह्यपरिशिष्टम्
गृह्यसङ्ग्रहः
गोभिलसूत्रम्
पारस्करगृह्यसूत्रम्
भरद्वाजसूत्रम्
योगसूत्रम्
योगसूत्रभाष्यम्
( व्यासदेवकृतम् )
योगसूत्रभाष्यव्याख्या
( वाचस्पतिमिश्रकृता )
पञ्चशिखः

साङ्ख्यसूत्रम्
साङ्ख्यकारिका
शाण्डिल्यसूत्रम्
गौतमसूत्रभाष्यम्
( वात्स्यायनप्रणीतम् )
विष्णुसहस्रनामभाष्यम्
( भगवद्गुणदर्पणाख्यम् )
( भट्टपराशरविरचितम् )
विष्णुसहस्रनामनिरुक्तिः

स्मृतयः

अग्निस्मृतिः
अङ्गिरःस्मृतिः
अत्रिस्मृतिः
अनन्तभट्टः
आपस्तम्बस्मृतिः
आश्वलायनस्मृतिः
उशनस्स्मृतिः
कात्यायनस्मृतिः
क्रतुः
गोभिलस्मृतिः
चतुर्विंशतिमतम्
च्यवनः
जमदग्निस्मृतिः
जातूकर्ण्यस्मृतिः
जाबालस्मृतिः
दक्षस्मृतिः
देवलस्मृतिः
धौम्यः
नारदस्मृतिः
पराशरस्मृतिः
पराशरस्मृतिः ( उत्तरकाण्डः )
पुलस्त्यस्मृतिः
पैठीनसिस्मृतिः
प्रचेतस्स्मृतिः
प्रजापतिस्मृतिः
बृहद्यमस्मृतिः
बृहस्पतिस्मृतिः
भृगुः

१ शि. प्रमाणाकर.

